तस्माद्राशित्रयकल्पनाऽसमञ्जसा" इत्यन्तेन भाष्यसन्दर्भेण तदीया कल्पना निराकुर्वन्तो दूषणमध्ये "तस्माच्छ्रुत्यर्थकल्पनाऽकुशला. सर्वे एवोपनिषदर्थमन्यथा कुर्वन्ति । तथाऽपि वेदार्थश्चेत्स्यात्कामं भवतु न मे द्वेष"इति समुद्घोषयन्ति । इयं च भाष्यसूक्तिः भाष्यकाराणां पारमार्थिकमौपनिषदत्वं विशदयतितमाम् ।

**पौर्वापर्यपरिशीलनेनाविरोधेनैव वेदार्थवर्णनम्**—अपि च श्रुतीनां पौर्वापर्यपरिशीलनेन श्रुतिवचोभिः बोधितमर्थं गुरुपरम्परानुसारेण निर्धारयति । यथा उत्पत्तिप्रकरणे'ऽग्नेः विस्फुलिङ्गा'इति दृष्टान्तवचनेन परमात्मनः अंशः जीवात्मेति अंशवादिना पक्षनिराकरणाय श्रुतेः विज्ञानात्मन एकत्व-प्रतिपादनायेति श्रुतितात्पर्यं समुपवर्णयन्ति । अन्ते च निर्धारयन्ति यत्पूर्वापरालोचनेन परमात्मैक्य प्रत्ययदृढीकरणाय इति । तथाहि—"अग्नेर्हि विस्फुलिङ्गोऽग्निरेवेत्येकत्वप्रत्ययार्हो दृष्टो लोके । तथा चांशोंऽशिनैकत्वप्रत्ययार्हः । तत्रैवं सति विज्ञानात्मनः परमात्मविकारांशत्ववाचकाः शब्दाः परमात्मै-कत्वप्रत्ययाधित्सवः । उपक्रमोपसंहाराभ्यां च । सर्वासु हि उपनिषत्सु पूर्वमेकत्वं प्रतिज्ञाय दृष्टान्तैर्हेतु-भिश्च परमात्मनो विकारांशादित्वं जगतः प्रतिपाद्य पुनरेकत्वमुपसंहरति । तस्मादुपक्रमोपसंहारा-भ्यामर्थो निश्चीयते परमात्मैकत्वप्रत्ययद्रढिम्ने उत्पत्तिस्थितिलयप्रतिपादकानि वाक्यानीति" । सम्भव-त्येकवाक्यत्वे वाक्यभेदस्तु नेष्यत इति । "तद्धि ह्येकवाक्ययोगे च सम्भवत्युत्पत्त्यादिवाक्यानां वाक्यान्तर-त्वकल्पनाया न प्रमाणमस्ती"ति ।

**स्वाभिहितेऽर्थे द्रविडाचार्यसम्मतिकथनम्**—'अत्र च सम्प्रदायविद आख्यायिकां सम्प्रचक्षते'—इत्यादिना (पृ ४६६) द्रविडाचार्यप्रतिपादितया साम्प्रदायिकाख्यायिकया व्याधशूलत्वाभिमानिन राज-प्रत्ययस्य आत्मनः ब्रह्मप्रत्ययस्य द्रढीकरणायैव दृष्टान्तश्रुतीनामुपष्टम्भितं दरीदृश्यते ।

**विनयेनैवार्थविवेचनसरणिः**—किं च विरुद्धत्वेन भासमानानामर्थविशेषनिर्णयाय भगवत्पादानां विनयपूर्विकैव वाक्यार्थविचारप्रवृत्तिः दृश्यते । यथा श्रुतिस्मृतिवाक्यानि शतश उपलभ्यन्ते इतरेतर-विरुद्धानि । आचारश्च तद्विदाम् । विप्रतिपत्तिश्च शास्त्रार्थप्रतिपत्तीनां बहुविदामपि । अतो न शक्यते शास्त्रार्थः मन्दबुद्धिभिर्विवेकेन प्रतिपत्तुम् । परिनिष्ठितशास्त्रन्यायबुद्धिभिरेव एषां वाक्यानां विषयविभागः शक्यतेऽवधारयितुम् । तस्मादेषां विषयविभागज्ञापनाय यथा बुद्धिसामर्थ्यं विचारयिष्याम इत्यनेनाव-गम्यते । उपनिषदर्थनिर्धारणे सम्प्रदायक्रमागतेषु गुरुषु तेषां श्रद्धा न युक्तिषु । नैतावतावगन्तव्यं सुधीभिः । श्रुत्यविरुद्धानां तर्काणां प्रतिपादने महानादरो दृश्यते । यथा चिन्तयसि च त्वं न निर्णेष्यसि किं न निर्णेतव्यमिति वेदवचनं न । कथं तर्हि बहुप्रतिपक्षत्वात् एकत्वादित्वमेको वेदार्थपरत्वात् । बहवो हि भेदवादिनः वेदबाह्यत्वात्प्रतिपक्षाः । अतो ममाशङ्का न निर्णेष्यसीति एतामेव स्वस्तेन यन्मामेकयोगिनमनेकयोगिबहुप्रतिपक्षमात्थ अतो जेष्यामि सर्वानारभे च चिन्तामिति ।

किं च वेदशास्त्रादीनां स्वीययुक्तिबलेनैवार्थं साधयतां तार्किकाणां यथाभूतशास्त्रार्थावधारणं न सम्भवतीति उपपादयन्ति । यथा तार्किकैस्तु परित्यक्तागमबलैः अस्ति नास्ति कर्ता अकर्तेत्यादि बहुविरुद्धतर्कयद्भिः आविष्कृता शास्त्रार्थमर्यादा तेनायनिश्चयो दुर्लभः । ये तु वेदशास्त्रानुसारिणः शान्तदर्पा तेषां प्रत्यक्षविषयेष्विव निश्चितश्शास्त्रार्थः देवादिविषय इति । एवमेव यदाऽपि मत किञ्चिद्वस्तुपरिकल्प्य ये श्रुतिर्व्याचक्षते तद्व्याख्यानं सर्वथोपेक्षणीयमित्युपदिशन्ति भगवत्पादाः । यथा ये तु अतोऽन्यथा आत्मवस्तुपरिकल्प्य बन्धमोक्षादिशास्त्रमर्थवादमापादयन्ति ते उत्सहन्ते खेऽपि शाकुन पदं द्रष्टुं खं वा मुष्टिनाऽऽक्रष्टुं चर्मवद्वेष्टितुम् । वयं च तत्कर्तुमशक्ताः सर्वदा सममेकरसमद्वितीयमज प्रतिपादयितुं प्रवर्तामहे इति ।

परमतनिराकरणेऽपि भगवत्पादानां पक्षपातराहित्यम्—भगवत्पादा औपनिषदं राद्धान्तं प्रतिपादयन्तः तत्प्रतिपक्षभूतानां परपक्षाणामपि निरासाञ्चक्रुः । तन्निराकरणे अयमेव हेतुर्यद्वैदिकश्रेयोमार्गपरिपन्थित्वम् । अत एव चतुर्थे विविधसौगतमतानां प्रदर्शनपूर्वकं तेषां निरासोपक्रमे—"सर्वा एता कल्पना बुद्धिविज्ञानावभासवस्य व्यतिरिक्तस्याऽऽत्मज्योतिषोऽपह्नववादस्य श्रेयोमार्गस्य प्रतिपक्षभूता वैदिकस्य । तत्र येषां बाह्योऽर्थोऽस्ति तान्प्रत्युच्यते तावत्"—इत्यनेन च समुद्धरणेनेदमवगम्यते यदौपनिषदसिद्धान्तविरोधिनां चार्वाकसौगतावान्तरमतविशेषाणामभेदेन तर्कबलेन निरासः एवाभिमत इति । एवं वेदबाह्यमतनिराकरणे स्वयूथ्यानां सन्निकृष्टानामौपनिषदमन्यमानानां पक्षविध्वंसनेन च सर्वोपनिषदर्थप्रकाशकत्वं बृहदारण्यकोपनिषदः साधु संजाघटीति । अपि च भगवत्पादानां परपक्षदूषणमपि न व्यसनितया परद्वेषपरवशादपि अपि तु औपनिषदसिद्धान्तावधारणपर्यवसायि । अत एव शारीरकभाष्ये तर्कपादापरनाम्नि द्वितीयचरणे समाधिरे यत्परपक्षनिराकरणं परद्वेषकरं वीतरागाणां मुमुक्षूणां न कर्तव्यमित्याशङ्क्य वेदार्थतत्त्वनिर्णयोपयोगित्वेन तस्य कर्तव्यत्वं व्यवस्थापितम् । तथा च भाष्यम्—

"ननु मुमुक्षूणां मोक्षसाधनत्वेन सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तम् । किं परपक्षनिराकरणेन परद्वेषकरणेन । बाढमेवं । तथापि महाजनपरिगृहीतानि महान्ति सांख्यादितन्त्राणि सम्यग्दर्शनोपदेशेन प्रवृत्तान्युपलभ्य भवेत् केषाञ्चित् मन्दमतीनां एतान्यपि सम्यग्दर्शनायोपादेयानि इत्यपेक्षा । तथा युक्तिगाढत्वसम्भवेन सर्वज्ञभाषितत्वाच्च श्रद्धा सतेषु इत्यतः तदासारतोपपादनाय प्रयत्यत" इति ।

अस्य च भाष्यसन्दर्भस्य व्याख्यानाय प्रवृत्तो भामतीपतिवाचस्पतिमिश्रः कथयति । वीतरागकथाया अपि परपक्षदूषणगर्भता निर्णयफलकत्वेन हेतुना यथा तत्त्वनिर्णयावसाना वीतरागकथा । न च परपक्षदूषणमन्तरेण तत्त्वनिर्णयः शक्यः कर्तुमिति तत्त्वनिर्णयाय वीतरागेणापि परपक्षो दूष्यते । न तु परपक्षतया इति न वीतरागकथाऽव्याहतिरिति । अपि चैकस्यैवात्मनः अज्ञनायाद्यतीतत्वं तद्वत्त्वं चेति विरुद्धधर्मसम्बन्धः कथं सगच्छतामिति शङ्कायां परिहारप्रसङ्गे भगवत्पादाः प्रतिपादयन्ति । न हि परमार्थावधारणनिष्ठायां वस्त्वन्तरास्तित्वं प्रतिपद्यामहे । "एकमेवाद्वितीयम्" इत्यादिश्रुतेः । नामरूपव्यवहारकाले त्वविवेकिनां क्रियाकारकफलादिव्यवहारो नास्तीति न प्रतिषिध्यते । तस्माज्ज्ञानाज्ञाने अपेक्ष्य सर्वां अपि व्यवहाराः शास्त्रीया लौकिकाश्च न विरुध्यन्ते । अतो न कश्चन विरोधशङ्कालेशोऽपि । सर्ववादिनामपि अपरिहार्यः परमार्थसव्यवहारकृतो व्यवहार इति ।

आत्मज्ञानस्य फलमानन्दरूपत्ववर्णनञ्च परस्परविरुद्धधर्मवत्त्वशङ्कापरिहारो—प्रागमोपपत्तिभ्यां सिद्धान्तं प्रतिपाद्य तदनन्तरं शोकमोहादिनिवृत्तिश्च प्रत्यक्षं फलं ब्रह्मात्मैकत्वविज्ञानस्येति श्रयोचामेति वदन्तो विद्वदनुभवमपि प्रमाणयन्ति भाष्यकाराः । तत्र तत्र च ज्ञानकर्मसमुच्चयस्य न मुक्तिहेतुत्वं किन्तु सन्याससहितात्मज्ञानादिति पक्षः च भुज्युब्राह्मणव्याख्यानावसरेषु बृहदारण्यकभाष्ये तात्पर्येण सोपपत्तिकं व्यवस्थापयन्ति । अयं च विषयः ईशोपनिषद्भाष्योपसंहारे मुण्डकोपनिषद्भूमिकायां तैत्तिरीयोपनिषद्विवरणे छान्दोग्योपनिषदारम्भे गीताभाष्ये च तत्र तत्र कञ्चन प्रसङ्गमापाद्य ज्ञानकर्मसमुच्चयवादं पराकुर्वन्ति । जीवब्रह्मैक्यसाक्षात्कार एव साधनमिति च समर्थयन्ति । 'त्यागेनैकेऽमृतत्वमानशुः' रिति श्रुतिः । अस्यामेवोपनिषदि समुच्चयवादनिरासावसरे "केचिद्वावदूका श्रुत्युक्तविशेषार्थानभिज्ञा सन्तः पुत्रादिसाधनानां मोक्षार्थतां वदन्ति । तेषां मुखापिधानं श्रुत्येदं कृतं जाया मे स्यादित्यादि

पाङ्क्तं काम्यं कर्मेत्युपक्रमेण पुत्रादीनां च साध्यविशेषविनियोगोपसंहारेण च । तस्मादेषश्रुतिरविद्वद्विषया न परमात्मविद्विषयेति सिद्धम्" (पृ ३८८)।

"केचित्तु ब्रह्मविदोऽप्येषणासंबन्धं वर्णयन्ति तैर्बृहदारण्यकं न श्रुतम् । व्यासवाक्यं च·········
तैर्न श्रुतम्—

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः" ॥ इति ।

पुत्रप्रतिवचनरूपमत्र केचिद्गृहस्थाः भिक्षाटनादिभयात् परिभवाच्च तृष्यमाणाः सूक्ष्मदृष्टितां दर्शयन्ति । भगवत्पादास्तु कर्मणः प्राधान्येन मोक्षहेतुत्वं निरस्यन्तः ज्ञानोत्पत्तये यज्ञादीनि कर्माण्यारादुपकारकाणि अवश्यमनुष्ठेयानि । जन्मान्तरकर्मानुष्ठेयत्वमेव ब्रह्मचर्यम् । एवं शुद्धचित्तः तत्रैव आश्रमे स्थितः संन्यासाश्रमं स्वीकुर्यादन्यथा कर्माण्यनुष्ठेयान्येव चित्तशुद्धये इति निरूपयन्ति । तथा च भगवत्पादाः इमे श्रुतियुक्त्यनुभवैः प्रसन्नपदगम्भीरेणारत्नुदेन वाक्यजालेन बृहदारण्यकोपनिषदः परमतात्पर्यनिर्णायकं भाष्यमकार्षुः । किं बहुना "तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विदुः" इति श्रुतिवाक्यव्याख्यानावसरे तस्मान्मुमुक्षुः देवताराधनपरः श्रद्धाभक्तिपरः विद्याप्राप्तिं प्रति ।

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इत्यस्य मन्त्रस्य व्याख्या—अयं मन्त्रः भगवत्पादैः ज्ञानकर्मसमुच्चयपरतया व्याख्यातः । तथा च भगवत्पादीयभाष्यम् "विद्याञ्चाऽविद्याञ्च देवताकर्म देवताज्ञानं कर्म चेत्यर्थः । यस्तदेतदुभयं सहैकेन पुरुषेणानुष्ठेयं वेद तस्यैवं समुच्चयकारिण एव, एकपुरुषार्थसंबन्धः क्रमेण स्यादित्युच्यते । अविद्यया कर्मणाऽग्निहोत्रादिना मृत्युं स्वाभाविकं कर्म ज्ञानं च मृत्युशब्दवाच्यमुभयं तीर्त्वा अतिक्रम्य विद्यया देवताज्ञानेनाऽमृतं देवतात्मभावमश्नुते प्राप्नोति । तद्ध्यमृतमुच्यते यद्देवतात्मभावगमनमिति" । वाचस्पतिमिश्राभिमतोऽर्थं इत्यमलानन्दयतिना कल्पतरौ प्रादर्शि । तथाहि—विद्या वृत्तिम्, अविद्याञ्च कार्यकरणभावेन सहितं यो वेद स अविद्योपादानत्वेन सह तन्मय्या वृत्त्या तदुपादानं मृत्युमविद्यां तीर्त्वा स्वरूपभूतविद्योपलक्षितममृतमश्नुत इति । अर्थात् अविद्योपादानया ब्रह्माऽस्मिवृत्त्या अविद्यातरणेनाऽमृतत्वं प्राप्नोतीति ।

अस्य मन्त्रस्य वार्तिकोक्तोऽर्थः—वार्तिककारैस्तु अयं मन्त्रः इत्थं व्याख्यातस्तथाहि—यः विद्या शास्त्रीयं कर्म अविद्या स्वाभाविकं कर्म चोभयं सह निवर्त्यनिवर्तकभावेन सहितं वेद स अविद्यया शास्त्रीयकर्मणा मृत्युं स्वाभाविकं कर्म तीर्त्वाऽतिक्रम्य विद्यया अद्वैततत्त्वविद्ययाऽश्नुते इति । एवं भगवत्पादैः अभेद्येन तर्कजातेन परपक्षान्निराकृत्य अद्वैतसिद्धान्तप्रतिपादकाः सर्वे पदार्थाः कणेहत्य विवेचिता बृहदारण्यकभाष्ये इति । भगवत्पादीयं भाष्यं परिशीलयता करबदरसमानं समस्तमपि प्रमेयजातमवगम्यत इति । विदितवेदितव्यानां पुरस्तान्न किञ्चिद्वक्तव्यमवशिष्यत इति ।

वार्तिककान्ता ब्रह्मविद्या—तत्र भवान् वार्तिककारः बृहदारण्यकोपनिषद्भाष्ये उक्तानुक्तदुरुक्तचिन्तनात्मकं वार्तिकं प्रणिनाय । तत्र च भगवत्पादीयभाष्यस्य तात्पर्यवर्णनमुखेन दुरुक्तचिन्तनमपि कृतं दृश्यते । तथाहि—यथा द्वितीयब्राह्मणे सृष्टिं प्रतिपादयन्तः भाष्यकारा एवं भाष्यमभाषिषत यत्तेजोवन्नानां सृष्टिं वर्णयन्तः शाखान्तरीयवाक्यस्योपसंहारम् । अर्थात् एकवाक्यतामङ्गीकृत्य वर्णनी-

यमित्यभिधाय सृष्टिक्रमस्य ब्रह्मात्मैकत्वप्रतिपादने तात्पर्यं सृष्टिस्तु न विवक्षितेत्युक्तम्। तथा च भाष्यम्—"तस्य प्रजापतेरर्चत पूजयत आपो रसात्मिका पूजाङ्गभूता अजायन्तोत्पन्ना। अत्राऽऽकाशप्रभृतीनां त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्यं श्रुत्यन्तरसामर्थ्याद्विकल्पासम्भवाच्च सृष्टिक्रमस्य"। अत्र वार्तिककाराविवक्षितमिदं भाष्यकारीयमतं विज्ञाननिष्ठत्वादुपनिषदाम्। तथा च वार्तिके—"विद्योत्पत्तिप्रधानत्वात्सृष्टिर्वा न विवक्ष्यते। तथा च प्रतिवेदान्तं सृष्टिर्नानाविधेष्यते" ॥ (वा १ २ १४६) इति।

एवमेव पुत्रेणायं लोकः जय्यः कर्मणा पितृलोकः विद्यया देवलोकेति। अत्र एवकारं सर्वत्र वाक्ये संयोज्य भगवत्पादा व्याचक्षते। परन्तु वार्तिककार इदं व्याख्यानं नानुमेने। अपि त्विदं निरस्य प्रकारान्तरेण व्याख्याञ्चकार। यथा—'विद्यया देवलोकाप्तिः श्रुतत्वादेव कारणात्। नैवकाराभिसम्बन्धादेवेत्यत्र न सगतिः"। (वा १ ५ २५६) इति। 'पुत्रस्यैवावधृतय एवकारो भवेदयम्। पितृदेवलोकसम्प्राप्तिः श्रुतेहान्यैश्च साधने ॥ व्याख्यानमिदमेवात्र विशेषं दोषवत्परम्। इदमेव ततो ग्राह्यं न तु यद्दोषवन्मतमिति" ॥ वा २८० २८१ ॥ प्रकृतसंस्करणे ३७७ पृष्ठेऽयं विषयः क्रोडपत्रकारैः सविस्तरमुपपादि। विशेषस्तु तत्रैव द्रष्टव्यः।

'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" (बृ उ ३ ५ १)इत्यत्र ब्राह्मणशब्दश्रवणाद्ब्राह्मणस्यैव सन्यासेऽधिकार इति भाष्यकाराः प्रतिपादयामासुः। वार्तिककारस्तु 'ब्रह्मचर्यादेव प्रव्रजेदि त्यादिसन्यासविधायकश्रुतौ ब्राह्मणादिवर्णत्रयसाधारण्येन प्रवृत्तत्वात् सामान्यश्रुतेश्चात्र ब्राह्मणग्रहणं विशेषसंकोचककल्पकत्वात्। ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहादिति विशेषस्मृत्यगृहीतत्वासम्भवात्। अत्र ब्राह्मणग्रहणं क्षत्रियवैश्ययोरुपलक्षणार्थम्। स ब्राह्मण बृहदारण्यकोपनिषदि ३११ पृ इति उत्तरत्र वक्ष्यमाणफलावस्थब्राह्मणाभिप्रायकं वा इति वर्णयन्ति। परन्तु भाष्यानुसारेण व्याख्यां विधाय इदमसंगतमित्याक्षिप्य समर्थयन्तः स्वकीयपक्षमुपस्थापयन्ति यथा—

'त्रयाणामविशेषेण सन्यासः श्रूयते श्रुतौ।
यदोपलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा ॥
एवं चेद्ब्राह्मणोक्तिः स्यादध्वस्ताविग्रगृहीतये।
स ब्राह्मण इति स्पष्टं श्रुतिरन्ते च वक्ष्यति' ॥ (वा ३ ५ ७८, ८२)

एवं कहोलब्राह्मणेऽपि त्रयाणामपि वर्णानां श्रुतौ सन्यासदर्शनात् ब्राह्मणस्यैव सन्यास इति श्रुत्या विरुध्यते इति च प्रतिपादयन्ति। किंच वार्तिककाराणामयमभिप्रायः प्रतीयते यत् पूर्वोत्तरपक्षाभ्यां सन्यासतद्धर्मविधिनिरूपणं निष्फलमिति। यथोक्तं वार्तिके—

'सत्सु प्रत्यक्षविधिषु यथोक्तष्वफलः श्रमः।
भिक्षाचर्यं चरन्तीतिविध्यर्थं क्रियते महान् ॥
तिष्ठासेदिति चात्रापि प्रत्यक्षः श्रूयते विधिः।
तस्मिन्सति वृथा कस्माज्जनोऽयं परिखिद्यते" ॥(३ ५ १६५ १६६) इति।

एवं 'स एष नेति नेत्यात्मा' (बृ उ ३ ९ २६) इत्यादिवाक्यं न याज्ञवल्क्यस्य अपितु ततो निर्गत्य भगवत्या स्वतन्त्राया श्रुतेर्वचनमिति भगवत्पादीयं व्याख्यानम्। वार्तिककारस्तु भाष्यकारीयं व्याख्यानं यथावदुपपाद्य तदनन्तरमेतद्वाक्यं याज्ञवल्क्यस्य प्रश्नान्तर्गतम्। तथा वाक्यस्य विच्छेदे इति

शब्दादीनामन्यतमस्याभावात् वाक्यविच्छेदं विनैव पूर्ववाक्येणैकवाक्यतयैव व्याख्यानमुचितमिति।

"स एष नेति नेत्याद्यः प्रश्नो वाऽयं समीक्ष्यताम्।
मध्ये वाक्यच्छिदोऽभावादितिशब्दस्य पूर्ववत्" ॥(वा.३.६.१०४)॥ इति।

एवमेव चतुर्थस्य तृतीयब्राह्मणोपक्रमे "जनकं वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्ये" (बृ. उ. ४. ३.१) इति। इदं च भाष्यरीत्या एतेन संवदिष्य इति योजनया जनकेन सह संवादायैव याज्ञवल्क्यो जगामेति व्याख्यानं प्रदर्श्य भाष्योक्तव्याख्याया असाधुत्वमभिधाय स्वीयव्याख्यानस्य साधुत्वं निरूपयन्ति। यथा वार्तिके—

"राजैव पूर्वं पप्रच्छ एतस्मादवगम्यते स्फुमा।
लिङ्गाद्व्याख्योत्तरा पूर्वा न साध्वीत्यप्रमाणतः" ॥ ४.३.१३ ॥ इति।

एवमेव "य एष विज्ञानमयः पुरुष" इति श्रुतिव्याख्यानावसरे भगवत्पादैः पुरि शयनात्पुरुष इति व्युत्पत्तिः प्रादर्शि। वार्तिककारस्तु पूरयन्पुरुष इति व्युत्पत्तिं वर्णयन्ति। यथा वार्तिके—

"पूरयन्पुरुषः प्रत्यक्सर्पादीन्रशना यथा।
व्युत्पत्तिरियमेवात्र तात्पर्यस्य समीक्षणात्" ॥ २. १. १६२ ॥

एवमेव याज्ञवल्क्यमैत्रेयीसंवादरूपे मैत्रेयीब्राह्मणे "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः" इति मन्त्रव्याख्यानावसरे भगवत्पादैः इतिहासपुराणादिकं वैदिकमेव ग्राह्यमित्युक्तम्। ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः चतुर्विधं मन्त्रजातम्। इतिहास इति उर्वशीपुरूरवसोस्संवादादिः। उर्वशी हाप्सरा इत्यादिब्राह्मणमेव ग्राह्यम्। पुराणम्—असद्वा इदमग्र आसीदित्यादि। अत्र वार्तिककारैः इदं निरस्य प्रसिद्धस्यैव इतिहासपुराणादेः ग्रहणमित्युक्तम्। तत्र भाष्यानुसारेण यदृग्वेदः इत्यादि व्याख्यायार्थान्तरमाह—इतिहासादिशब्दैः अष्टविधब्राह्मणस्य ग्रहणं न बाधकाभावे लोकप्रसिद्धेरपि अनतिक्रमणीयात्। तस्मात्प्रसिद्धानामेव इतिहासपुराणानां ग्रहणमिति। यथा प्रसिद्धमितिहासपुराणादपि गृह्यते। लोकप्रसिद्धिमुलघयतीति न्याय्योऽन्यथाग्रहः। अन्नत्यो विशेषः श्रोडपत्रतोऽवगन्तव्य.।

वार्तिककारापसिद्धान्तानां संग्रहः—श्रीमद्बादरायणशङ्करसुरेश्वरकृतमर्यादे अद्वैतवेदान्तदर्शने वार्तिककारीयत्वेन प्रसिद्धाः इमे सिद्धान्ताः जिज्ञासूनाम्। अस्त्येयसत्ता सुखबोधाय स्थालीपुलाकन्यायेन केचन अधस्तात् प्रदर्श्यन्ते। यथा—

१. श्रवणे परिसंख्याविधिः।

२. शब्दार्थसंबन्धरूपशक्तिग्रहस्याभावेऽपि सुप्तस्य शब्दश्रवणात् प्रबोधवत्तत्त्वमसीति महावाक्याद्बोधो भवति। "अगृहीत्वैव संबन्धमभिधानाभिधेययोः। हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः"। इति।

३. जीवविषये आभासवादः।

४. आत्मेत्येवोपासीत अभ्युपेत्यवादो नियमविधिरिति भाष्यम्।

५. संन्यासे त्रयाणामधिकारः।

६. भर्तृप्रपञ्चाभिमतस्य परिणामवादस्य विवर्तवादपरतया व्याख्यानम्।

७. सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति न सौषुप्तकालीनस्मरणं किन्त्वनुभव इति।

८ प्रतिबिम्बस्य मिथ्यात्वमिति आभासवादिनो वार्तिककार इति बिन्दुटीकयोरुल्लेख इति।

एतेषामेव वार्तिककाराभिमताना सिद्धान्ताना सिद्धान्तलेशसग्रहादौ विस्तरेण तत्तत्स्थलानि चाधस्तादुद्ध्रियन्ते। तथाहि—

'आत्मा वाऽरे द्रष्टव्य श्रोतव्य" इति श्रवणविधि' विचारप्रसङ्गे अप्पय्यदीक्षितै परिसख्याविधि वार्तिककाराणामिति शास्त्र सिद्धान्तलेशसग्रहे प्रस्तावे निरूपयन्ति। प्रतिबिम्बस्य मिथ्यात्वमित्याभासवादिन वार्तिककारा इति सिद्धान्तबिन्दौ न्यायरत्नावल्याञ्च प्रथमश्लोकव्याख्याने।

ब्रह्मज्ञानार्थं वेदान्तश्रवण प्रवृत्तस्य चिकित्साज्ञानार्थं चरकसुश्रुतादिश्रवणे प्रवृत्तस्येव मध्ये व्यापारान्तरेऽपि प्रवृत्ति प्रसज्यत इति तन्निवृत्तिफलक "श्रोतव्य' इति परिसख्याविधिरिति वार्तिकमतमिति सिद्धान्तलेशसग्रहे दीक्षितेन्द्रा प्रतिपादयन्ति। यथा 'ब्रह्मसस्थोऽमृतत्वमेति' (छा उ २ २३ १) इति छान्दोग्ये अनन्यव्यापारत्वस्य मुक्त्युपायत्वावधारणात् सम्पूर्वस्य तिष्ठते समाप्तिवाचितया ब्रह्मसस्थाशब्दिताया ब्रह्मणि समाप्तेरनन्यव्यापाररूपत्वात्। "तमेवैक जानथ अन्या वाचो विमुञ्चथ" इत्याथर्वण,कण्ठत एव व्यापारान्तरप्रतिषधाच्च। "आसुप्तेरामृते काल नयेद्वेदान्तचिन्तया" इत्यादिस्मृतेश्च। न च ब्रह्मज्ञानानुपयोगिनो व्यापारान्तरस्य एकस्मिन् साध्ये श्रवणेन सह समुच्चित्य प्राप्त्यभावान्न तन्निवृत्त्यर्थं परिसख्याविधिर्युज्यत इति वाच्यम्। 'सहकार्यन्तरविधि' (उ मी ३ ४ १४ ४७) इत्यादिसूत्र 'यस्मात् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति, तस्मान्नियमविधि' इति तद्भाष्ये च कृतश्रवणस्य शाब्दज्ञानमात्रात कृतकृत्यता मन्वानस्य अविद्यानिवर्तकसाक्षात्कारापयोगिनि निदिध्यासने प्रवृत्तिर्न स्यादिति अतत्साधनपक्षप्राप्तिमात्रेण निदिध्यासने नियमविधेरभ्युपगतया तन्न्यायेनाऽसाधनस्य समुच्चित्य प्राप्तावपि तन्निवृत्तिफलकस्य परिसख्याविधे सभवादिति।

'नियम परिसख्या वा विध्यर्थोऽत्र भवेद्यत।
अनारमादर्शनेनैव परात्मानमुपास्महे' ॥ (नै सि १ ८८) इति

वार्तिकवचनानुसारिण केचिदाहु। अस्य वार्तिकस्य अपूर्वविधित्व न सभवतीति कृष्णालकार। चित्सुखीय व्याख्यान द्रष्टव्य जिज्ञासुभि।

सुप्तोत्थितस्य पुरुषस्य सुखमहमस्वाप्स न किञ्चिदवेदिषमिति ज्ञानमनुभवात्मकमिति। उक्त हि अध्यारोपापवादप्रक्रियाया वार्तिके—

'न सुषुप्तगविज्ञान नाज्ञासिषमिति स्मृति।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक्" ॥ १ ४ ३०० ॥

इद च वार्तिकमानन्दगिरिणा इत्थ व्याख्यात शास्त्रप्रकाशिकायाम। "उत्थितस्य नावेदिषमिति परामर्श स्वापकालीनाज्ञानविषयकादाचित्कानुभवोपनायको नेत्यत्र हेतुमाह—कालादीति। आत्मनो देशकालव्यवधानाभावात्तद्गताज्ञानस्यापि न तत्सबन्धस्तथा च नाज्ञासिषमित्यज्ञान पूर्वकालश्च साक्षिण्यध्यस्तौ तत्रैव दृश्येते' इति। ब्रह्मानन्दगौडस्तु न्यायरत्नावल्या न किञ्चिदवेदिषमित्याकाराज्ञानस्य जाग्रत्कालीनस्य स्मृतित्व न स्यादिति वाच्य तस्य तन्मतेऽनुभवस्य स्वीकारादिति। शब्दार्थसबन्ध ज्ञान विनापि सुषुप्तस्य शब्दश्रवणात् प्रबोधवत पदार्थबोधस्सभवति। यथोक्त वार्तिके—

"अगृहीत्वैव संबन्धमभिधानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥ १. ४. ८६१ ॥ इति ।

जीवात्मविषये आभासवादः सम्प्रदाये प्रसिद्धः । अपरे तु न प्रतिबिम्बः नाप्यवच्छिन्नो जीवः । किन्तु कौन्तेयस्यैव राधेयत्ववदविकृतस्य ब्रह्मण एव अविद्याजीवभावः । व्याधकुलसंवर्धितराजकुमारदृष्टान्तेन 'ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते' इति बृहदारण्यकभाष्ये प्रतिपादनात् ।

"राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
तथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः" ॥ इति वार्तिकोक्तेश्च ।

संन्यासे त्रयाणां वर्णानामधिकारः—शास्त्रसिद्धान्तलेशसंग्रहे वार्तिकमतं यथा वर्णितं तद्यथा—अत्र केचित् 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' इत्याद्यविशेषश्रुत्या—

"ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहात् ।
त्रयाणामपि वर्णानाममी चत्वार आश्रमाः" ॥

इति स्मृत्यनुगृहीततया क्षत्रियवैश्ययोरपि सन्यासाधिकारसिद्धेः श्रुत्यन्तरेषु ब्राह्मणग्रहणं त्रयाणामुपलक्षणम् । अत एव वार्तिकेऽपि 'अधिकारिविशेषस्य' इति श्लोकेन भाष्याभिप्रायमुक्त्वा—

"त्रयाणामविशेषेण सन्यासः श्रूयते श्रुतौ ।
यदोपलक्षणार्थं स्यात् ब्राह्मणग्रहणं तदा" ॥

इत्यनन्तरश्लोकेन स्वमते क्षत्रियवैश्ययोरपि संन्यासाधिकारो दर्शित इति । तयोः श्रवणाद्यनुष्ठानसिद्धिं समर्थयन्ते ।

"अन्ये तु ब्राह्मणस्यैव संन्यासो बहुधा श्रुतेः ।
देवादिवदसंन्यासश्रवणं क्षत्रवैश्ययोः" ॥

अन्ये तु अनेकेषु संन्यासविधिवाक्येषु ब्राह्मणग्रहणात् उदाहृत्य जाबालश्रुतौ संन्यासविधिवाक्ये ब्राह्मणग्रहणाभावेऽपि श्रुत्यन्तरसिद्धं ब्राह्मणाधिकारमेव सिद्धं कृत्वा 'सन्यासावस्थायामयज्ञोपवीती कथं ब्राह्मणः' इति ब्राह्मणपरामर्शाच्च ब्राह्मणस्यैव सन्यासाधिकारः । विरोधाधिकरणन्यायेन (पूर्वमीमांसा १. ३. २) श्रुत्यविरुद्धस्यैव स्मृत्यर्थस्य सग्राह्यत्वात् । यत्तु संन्यासस्य सर्वाधिकारित्वेन वार्तिकवचनं तत् विद्वत्सन्यासविषयं न तु आतुरविविदिषासन्यासे भाष्याभिप्रायविरुद्धसर्वाधिकारप्रतिपादनपरम् ।

"सर्वाधिकारविच्छेदि विज्ञानं चेदुपेयते ।
कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात्" ॥

इत्यनन्तरश्लोकेन ब्रह्मज्ञानोदयानन्तरं जीवन्मुक्तिकाले विद्वत्सन्यास एवाधिकारनियमनिराकरणात् । एवं च ब्राह्मणानामेव श्रवणाद्यनुष्ठाने सन्यासोऽङ्गक्षत्रियवैश्ययोस्तन्निरपेक्षः श्रवणाद्यधिकार इति तयोः श्रवणाद्यनुष्ठाननिर्वाहः ।

अस्यामुपनिषदि प्रतिपादनीयानि रोचकानि बहूनि कथानकानि यैरात्मतत्त्वं बहूक्तत्वोऽपि पथ्यं वदितव्यमिति न्यायेन सुविशदमुपवर्णितम् । तेषां निरूपणे भूमिकाकलेवरविवृद्धिभयात् द्वित्राणि कथानकानि संक्षेपेण स्थालीपुलाकन्यायेन प्रदर्श्यन्ते ।

मूर्तामूर्तब्राह्मणार्थस्य संक्षेपः—अथात्र विषयपरिशुद्धिः । "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे"ति ब्रह्मणो रूपद्वयं प्रस्तुत्य "तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चेति" वाक्येन पृथिव्यप्तेजोरूप भूतत्रयात्मकं रूपं ब्रह्मणो मूर्तमिति निरूप्य तत्कार्यत्वेनादित्यमण्डलं प्रतिपादितम् । "तस्यैतस्य मूर्तस्य .........एष रसो य एष तपती"ति वाक्यसन्दर्भेण ।

अत्रेयमाशङ्का जायते यद्यपि आदित्यमण्डलं पञ्चीकृतपञ्चभूतात्मकं भवति । तथापि त्रयाणामपि भूतानामतिस्पष्टत्वसाम्येन भूतत्रयकार्यत्वमादित्यमण्डलस्य प्रदर्शितमिति ज्ञेयम् । "अथामूर्तं वायुश्चान्तरिक्षं चे"ति भूतत्रयममूर्तत्वेन निरूप्य तत्कार्यत्वेन चादित्यमण्डलस्थान्तर्वर्ती पुरुषस्समाम्नात. । "तस्यैतस्यामूर्तस्य............एष रसो य एष एतस्मिन्मण्डले पुरुष" इति । अत्रेदं बोध्यम्—यद्यपि आदित्यमण्डलान्तर्वर्ती पुरुषः चेतनः न साक्षाद्भूतकार्यं तथापि तच्छरीरस्य भूतकार्यत्वात्तदभेदोपचारेण सोऽपि भूतकार्यत्वेन निरूप्यते । यद्यपि तच्छरीरमपि भूतकार्यं तथाप्यस्पष्टत्वसाम्यात् वाय्वाकाशकार्यत्वमुक्तमिति ध्येयम् । एवमुक्तं मूर्तामूर्तप्रपञ्चमित्यधिदैवतमिति । देवतासम्बन्धित्वेनोपसमाहारि ।

"अथाऽध्यात्ममिति" शरीरान्तर्गततया मूर्तामूर्तं प्रस्तुत्य "इदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश" योऽयमन्तरात्मन् शरीरे आकाश तस्मात् यदन्यत् इति वाक्येन शरीरारम्भकं तेजोऽबन्नात्मकमाध्यात्मिकं निरूप्य तत्कार्यं चक्षुर्गोलकं समाम्नातम् । 'तस्यैतस्य मूर्तस्य.. ... एष रसो यच्चक्षुरि"त्यादिना । पूर्ववदत्रापि गोलकस्य पञ्चभौतिकत्वेऽपि स्पष्टत्वाभिप्रायं भूतत्रयकार्यत्वम् । "अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश" इति शरीरं वायुञ्चाकाशञ्चामूर्तत्वेन निरूप्य तत्कार्यत्वेन लिङ्गशरीरं निरूपितम् अस्पष्टत्वसामान्यात् । "तस्यैतस्यामूर्तस्य·········एष रसो योऽयं दक्षिणेऽक्षन्पुरुष" इति लिङ्गशरीरस्य पुरुषपदप्रतिपाद्यत्वं च पुरुषतादात्म्येनेति विज्ञेयम् । यद्यपि तत् सर्वशरीरव्यापी तथापि तदभिमानिनो हिरण्यगर्भस्यादित्यरूपस्य 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुष" इति वाक्यसन्दर्भेण दक्षिणाक्षिस्थानत्वावगमात् तदभेदोपचारेण लिङ्गशरीरमपि दक्षिणाक्षिस्थानत्वेन निरूपितम् । अनन्तरं च 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथा सकृद्विद्युत्तमि"ति नानारूपतया लिङ्गं निरूपितम् । महारजनं हरिद्रा कुसुम्भं वा तेन रक्तं वासः माहारजनम् । पाण्डु श्वेतम् । अविलोमविकारभूतं कम्बलादि आविकम् । यो वर्षासु अतिरक्तवर्णतया आविर्भवति कीटविशेषः स इन्द्रगोप इति प्रसिद्ध.। विद्युत्त विद्युत् सकृदुदिता विद्युदित्यर्थः । अत्रेदमवधेयम्—द्वितीयेऽध्यायेऽजातशत्रुब्राह्मणे उपसंहारे—'तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" । अयमर्थोऽवगम्यते अजातशत्रुब्राह्मणे वक्तव्यत्वेन प्रस्तुतस्य ब्रह्मणो यत् सत्यस्य सत्यत्वमुक्तम् । तत्र प्रथमशब्दोदितप्राणालम्बनमुपासनं प्रसङ्गात् शिशुब्राह्मणे निरूप्य यत् परमसत्यत्वं ब्रह्मणो द्वितीयसत्यपदेनोपन्यस्तम् । तत् प्रपञ्चनिषेधेन प्रदर्शयितुमेव मूर्तामूर्तब्राह्मणप्रवृत्तमिति सपिण्डितोऽर्थोऽवगन्तव्यः । "अथात आदेशो नेति नेती 'ति शास्त्रं ब्रह्मणो रूपद्वयं लोकसिद्धं रूपद्वयं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय । अथवा पूर्वः प्रतिषेधः भूतराशिं द्वितीयो वासनाराशिम् । अथवा वीप्साय सर्वप्रतिषेधाय । तेनाविचारस्य सर्वस्य निषेधेनाविषयो ब्रह्मे'ति प्रतिपादयति ततो ब्रवीति च भूयः ३. २ २२ सूत्रे एषाऽक्षरयोजनेत्यादिना । तत्र प्रथमयोजनायामेतस्माद्ब्रह्मणोऽतिरिक्तं नास्तीति निषिध्यते । न तु स्वयमेव नास्तीति । द्वितीययोजनायान्तु न ह्येतस्मात् प्रपञ्चनिषेधरूपादादेशनात् अन्यत् परमादेशनं नास्ति । अस्मिन्पक्षे

नामधेयविषय योजनीयम् । अथ नामधेयम "सत्यस्य सत्यमिति प्राणा वै सत्य तेषामेष सत्यमि"ति । तच्च ब्रह्मावसाने प्रतिपद्येऽवकल्पते न त्वयावसाने । तस्मात ब्रह्मावसानोऽय प्रतिषेध नाभावावसान इति सक्षेप ।

गार्ग्या कथानकम्—महाराजेन जनकेन यज्ञे समवेताना ब्रह्मवेत्,णामुषस्तकहोलादीना पराजये गार्गी नाम ब्रह्मविदुषी काचित्ब्राह्मणी सदस्यागत्य नमस्कारपूर्वक ब्राह्मणभ्योऽनुज्ञा प्राप्य याज्ञवल्क्यम-प्राक्षीत । उत्तरदाने अवाच्यवदन नाम निग्रहस्थान तददाने अप्रतिभा नाम निग्रहस्थानमित्युभयथा याज्ञवल्क्यस्य पराभव मन्वाना । याज्ञवल्क्य सर्वमिद जगद्भूत भवत् भविष्यच्च यत्राव्याकृताकाशे वर्तते । सोऽव्याकृताकाश कुत्राऽध्यस्त इति ।

याज्ञवल्क्यश्च तस्या अभिप्राय ज्ञात्वा एकदैव दोषद्वय परिहरन्नाह—"एतद्वै तदक्षर गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशम्··· ' ···" (बृ० उ० ३-८-८) इत्यादि । अत्र ब्राह्मणा अभिवदन्ति इत्यनेन स्वस्यावाच्यवदनदोष पर्यहारि, स्थौल्यादि-सकलधर्मरहिताक्षरकथनेन चाऽप्रतिभा निराकारि । ततो नेतरसकलनिषेधमात्रत्वात अक्षरसिद्धिरिति शङ्काया सकलनिषेधावधित्वेन तत्सत्त्वमभिप्रेत्य "एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिना द्यावापृथिव्यौ निमेषादिकालानद्यस्समुद्रा देव पितरश्चाक्षरस्य प्रशासने वर्तन्त इति सकलमर्यादाविधायकत्वेन अक्षरसत्त्वमभिधाय "यो वा एतदक्षर गार्ग्यविदित्वाऽस्मिँल्लोके जुहोती"त्यादिना यदज्ञानात्ससारकार्पण्य यज्ज्ञानाच्च तन्निवृत्तिरिति । तत्सर्वमुक्त्वा कुतस्तर्हि तन्नोपलभ्यत इत्याशङ्काया दृष्टचाद्यविषयत्वेऽपि सर्वसाध्यकत्वेन स्वय भासमान तदस्तीति द्रष्टृन्तर निषेधात् "अदृष्ट द्रष्टृ · ·· नान्यदतोऽस्ति द्रष्टृ" इत्यक्षरसद्भाव प्रसाधयामास गार्गी प्रति इत्यक्षर-ब्राह्मणस्य सक्षेप । अत्र न्यायनिर्णये क्रोडपत्रे च वार्तिकोक्तानामनुमानाना स्वरूपवर्णनादिक विस्तरेणो-पपादित जिज्ञासुभिर्द्रष्टव्यम् ।

अत्रेदमवधेयम्—यदस्ति तत्सविशेषणमेव भवतीति लोकप्रसिद्धि । नास्ति अक्षर पर ब्रह्मेति शङ्का न कर्तुमुचिता । अन्तर्यामिणि जगत्कारणे प्रशासनेऽनुमानसिद्धे निरुपाध्यक्षर सेत्स्यति । जग-त्कारणत्वस्योपलक्षणतया "जन्माद्यस्य यत" (ब्र सू १।२।२) इति सूत्रे सिद्धान्तितत्वात उपलक्षणद्वारा ब्रह्मणि स्वरूपलक्षणप्रवृत्ते प्रकृतेऽन्तर्यामिणि अनुमानमुपपद्यत इति ।

याज्ञवल्क्यमैत्रेयीब्राह्मणार्थस्य सक्षेप —महर्षियाज्ञवल्क्यो गृहस्थाश्रमात् सन्यासाश्रम जिगमिषु मैत्रेयीमुवाच सपत्न्या कात्यायन्या तव वित्त सभाग करिष्यामीति । सा तु अमृतत्वार्थिनी मुमुक्षुणा पत्या सह चिरवासेन तत्परिचरणादिलब्धान्त करणशुद्धया सजातमुमुक्षायापृच्छत् मैत्रेय्या वित्तसभागेन लब्धेन वित्तेनामृता स्यामिति । स तु प्रत्युवाच ताम् 'अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति" । यथैवोप-करणवतामशनवासनादिवता जीवित तथैव भवत्या अपि स्यात् । वित्तेनामृतत्वस्याशा नास्तीति । ज्ञानसाध्यत्वादमृतत्वस्य न तु कर्मसाध्यत्वम् । किञ्च कर्मणा तत्त्वविज्ञानविरोधिना तत्सहभावानुपपत्ते । ततो मैत्रेयी न वित्तेन प्रयोजनम् । यदेव भगवानमृतत्वसाधन वेद तदेव मे ब्रूहीति । ततो याज्ञवल्क्य उवाच एह्यास्स्व प्रिय भाषसे इति ता प्रशस्यतममृतत्वसाधनमात्मज्ञानमुपदिदेश । लोके पत्यादयो जायादीना प्रिया भवन्ति कस्मै प्रयोजनाय विचारे क्रियमाणे न पत्यादीना प्रयोजनाय प्रिया भवन्ति । अपितु आत्मन कामायैव प्रिया भवन्ति । अत एव तेषु स्वाऽभिमतसपादकत्व दशायामिव स्वानिष्ट सपादकत्वदशाया न प्रीतिरस्ति । अतस्तेषा प्रियत्व सोपाधिकमेव । आत्मनस्तु निरुपाधिकं प्रियत्वम् ।

तस्मादनात्मभ्यो वैराग्यं प्राप्य यत्र निरुपाधिकं प्रियत्वम् । तस्यैवाचार्योपदेशमनुश्रवणादिद्वारा तस्यैव
साक्षात्कार इति ।

ततो "ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद" इत्यादिना । 'अल्' प्रत्ययः प्रथमार्थे । आत्मान्य-
त्वेन दृष्टा ब्राह्मणत्वजातिरमृतत्वपदात् निराकर्तव्या । अर्थात् सर्वस्यापि जगतः आत्मैव तत्त्वम्
रज्जुरिव सर्पस्य । अत्रानेकदृष्टान्तोपादानं सामान्यबहुत्वव्यापनाय । तदेव विशदयति चिन्मात्रानुगमात्
सर्वत्र चिद्रूपतैवेत्याह—दुन्दुभ्यादिदृष्टान्तैर्यस्मिन्गृहीते यद्गृह्यते यस्मिन्न गृहीते न गृह्यते तत्तेष्वनुगतं
भवतीति न्यायेन जगतो चिदात्ममात्रत्वं निरूपयति श्रुतिर्भगवती ।

एवमुत्पत्तिकालेऽपि प्रागुत्पत्तेर्ब्रह्मैवेति ज्ञातु शक्यमित्याह । एवमार्द्रैधाग्नेः धूमविस्फुलिङ्गादयो
व्युच्चरन्ति तथैव महतो भूतस्य व्युच्चरत् नामरूपात्मकं जगत् तत्त्वान्यत्वाभ्यां निरूपयितु न शक्यते ।
एवमेकायनप्रक्रियायां प्रलयसमयेऽपि तस्मिञ्चैवात्मनि जगतोऽनुप्रवेशः । अतः आत्मैव जगत् ।
तस्मादिदं सर्वमयमात्मेति निरूपयति श्रुतिः । एवं सर्वात्मत्वादिना ब्रह्मणस्सप्रपञ्चत्वेन विकारित्वे
निष्प्रपञ्चब्रह्मप्रतिपादकागमविरोधे प्रसक्ते सप्रपञ्चत्वस्यारोपितत्वप्रतिपादनार्थम् । "स यथा सैन्धव-
घनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे"त्या-
दिनाभिधाय अन्ते "स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते" इत्यादिना सर्वप्रपञ्चनिषेधः । तस्माद्-
मैत्रेयीब्राह्मणसन्दर्भेऽध्यारोपापवादाभ्या जीवत्वेश्वरत्वोपलक्षितशुद्धचैतन्यरूपब्रह्मस्वरूपमात्रप्रतिपादन-
परमिति तत्त्वम् ।

शाकल्यब्राह्मणार्थस्य संक्षेपः—शाकल्ययाज्ञवल्क्यसंवादे देवतास्वरूप विचार्य निर्णीतम् । तत्र
शाकल्यः प्रष्टा याज्ञवल्क्यश्च वक्ता । देवताविस्तारसंक्षेपौ स्वरूप च प्रष्टव्योऽर्थः । तथाहि तत्रैषा
श्रुतिः—"अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवता याज्ञवल्क्येति । हैतयैव निविदा प्रतिपेदे
यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रत्योमिति" । अस्याः श्रुते-
रयमर्थः शाकल्येन देवाना सख्यादिविस्तारे पृष्टः याज्ञवल्क्यो विजिगीषुः कथाया प्रवृत्तत्वात् परेषा
बुद्धिव्यामोहनाय निविदा प्रत्युत्तर ददौ । निविच्छब्दो वैश्वदेवनामके शास्त्रविशेषे स्थिताना संख्यावाचिना
पदाना समुदायमाचष्टे इति वैदिकयाज्ञिकानां प्रसिद्धिः । अतो यावन्तो देवा वैश्वदेवस्य निविद्युच्यन्ते
तावन्त उपास्या इत्युक्त भवति । तानि पदानि त्रयश्च त्री चेत्यादिपदानि । शतत्रय सहस्रत्रय पद च
देवाना विस्तारः । कत्येवेत्येवकारेण तत्र तत्र देवतान्तरशङ्का व्यावर्त्यते । य एव देवाः पूर्वं विस्तृताः त
एव सक्षेपेण क्रियन्त इति तत्र तत्र प्रश्नार्थः । तत्रेदमवधेयम्—कतीति सख्याप्रश्नः । कतमे इति स्वरूप-
प्रश्नः । तत्र तत्र शतसहस्रसख्या ये देवा उक्ताः ते सर्वे प्रधान न भवन्ति । किं तर्हि ? प्राधान्येन
हविर्भुजा त्रयस्त्रिंशद्देवानां योगमहिम्ना स्वीकृतैच्छिकविग्रहा एव । अतस्तेषा स्वरूपविशेषः पृथक् न
निरूपणार्थः । त्रयस्त्रिंशद्देवेषु श्रुता वस्वादय. पुराणादिप्रसिद्धेभ्यः अन्ये । तेषु शब्दप्रवृत्तिर्यौगिकी ।
तत्रत्याना पदानामर्थाः प्राणाः बाह्येन्द्रियाणि । आत्मा अन्तःकरणम् । इन्द्रप्रजापतिशब्दौ लक्षणया
स्तनयित्नुयज्ञयोर्वर्तेते । लक्षितलक्षणयाऽशनिपश्वोः । अध्यर्धशब्दो रूढ्या सख्यावाची । योगेन समृद्ध
वायुं वदतीति वायुः सूत्रात्मा । "वायुर्वै गौतम सूत्रमि"ति श्रुतेः । अन्ते प्राणशब्दः परमात्मवाची ।
तदेव स्पष्टयितु स ब्रह्मेत्युक्तम् । तच्छब्दः परोक्षवाची । अकृतब्रह्मविचारं पुरुषं प्रति ब्रह्मणश्शास्त्रैक-
समधिगम्यत्वात् परोक्षत्वमिति । तत्र प्राणशब्दवाच्यः परमात्मैवैको देव इति । तत्रैवाग्रे ननु इन्द्रमित्र-

वरुणशब्दा भिन्नदेवतावाचिनो न त्वेक देवमभिदधति । अन्यथैन्द्रयागे वारुणो मन्त्र प्रयुज्येत । नाय दोष, देवस्यैकत्वेऽपि मूर्तिभेदेन मन्त्रान्वयस्योपपत्ते । किञ्च देवस्यैकत्वेऽपि कर्मानुष्ठानदशायामौपाधिको भेदोऽङ्गीक्रियत एव । अत एवास्यामुपनिषदि प्रथमाध्यायस्य 'तद्यदिदमाहुरमु यजामु यजेत्येकैक देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवा" (बृ० उ० १-४ ६) "मूर्धा ते व्यपतिष्यदिति याज्ञवल्क्य । त त्वौपनिषद पुरुष न वेद तस्य मूर्धा निपतित । ब्रह्मविद्विद्वेषे न केवलमिहलोकहति अपितु परलोकविरोधोऽपीति । अतो ब्रह्मविदि विनीतेन भवितव्यम् । तेन शाप पराबभूव शाकल्य । तस्मिन्प्रसगे ब्रह्मज्ञानिना विरोध ज्ञातयोऽस्थीन्यपि न लभन्त इति निन्दया आत्मज्ञानिनो विद्वेषो न कार्य इति । न हि निन्दान्यायेनात्मज्ञानस्य प्रशसा । महतीय ब्रह्मविद्या यत् तन्निष्ठावज्ञायामैहिकामुष्मिकविरोधस्स्यादिति विद्यास्तुतिरिति शाकल्यब्राह्मणार्थसक्षेप ॥

अत पर षडध्याया प्रतिपाद्योऽर्थ सिंहावलोकनन्यायेन सक्षेपेणोपवर्ण्यते । इष्ट हि विदुषा लोके समासव्यासधारणाभियुक्तोक्ते । अश्वमेधसबन्धिनोऽश्वस्याङ्गेषु कालदृष्टिर्विधीयते । तत्रैव तैत्तिरीयसहितायास्सप्तमकाण्डस्यान्तिमेऽनुवाके उक्तस्यार्थस्य सक्षेपश्च तत्रत्यभाष्योपहित. प्रादर्शि । तत्र बृहदारण्यकोपनिषदि अश्वाङ्गेषु कालादिदृष्टिविधानम् । तैत्तिरीयके तु अय विशेष । अन्योत्कर्षेण उपनिषदादौ योजनीय । सर्वजगदात्मकत्वेनाऽश्वस्स्तूयते । विराड्रूपेण वाऽश्वोपासनविधिरिति वेदभाष्यकारो बभाषिरे ।

छात्राणा जिज्ञासूना च सुखबोधाय ब्राह्मणार्थ संक्षेपेणाधस्तान्निर्दिश्यन्ते—अस्यामुपनिषदि षडध्याया सन्ति इति प्रागवोचाम । तत्र प्रथमाध्याये षड ब्राह्मणानि सन्ति । तत्र प्रथमे ब्राह्मणे कण्डिकाद्वयमश्वमेधयागाङ्गभूतस्य अश्वमेधे सन्ति अथ पशव प्राजापत्य अश्व तूपरगोमृगश्चेति । तत्र अश्व एव प्रधानमश्वमेधस्य । क्षत्रियकर्तृकत्वेन ब्राह्मणवैश्ययोरनधिकारात । अश्वमेधाङ्गस्य अश्वस्यावयवेषूपासन विहितम् । तेनैवाश्वमेधफलप्राप्ति तयो । अश्वविषयकोपासन यथा अस्यामुपनिषदि समाम्नायते । एव तैत्तिरीयसहिताया सप्तमकाण्ड पञ्चमे प्रपाठके यो वाऽश्वस्य मेध्यस्य शिरो वेद शीर्षण्वान् मेध्यो भवति । 'उषा वाऽश्वस्य मेध्यस्य शिर" इत्यादिना विहितमुपासन तत्प्रतिपादक ब्राह्मण तैत्तिरीयसहितासप्तमकाण्डान्तिमानुवाक अधो निवेशित । यथा—

| बृहदारण्यकोपनिषत् | तैत्तिरीयसहितायां सप्तमकाण्डे पञ्चमप्रपाठक. |
| --- | --- |
| ॐ उषा वा अश्वस्य मेध्यस्य शिर । सूर्यश्चक्षुर्वात प्राणो व्यात्तमग्निर्वैश्वानर सवत्सर आत्माऽश्वस्य मेध्यस्य । द्यौ पृष्ठमन्तरिक्षमुदर पृथिवी पाजस्य दिश पार्श्वे अवान्तरदिश पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । ऊवध्य सिकता सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥१॥ | यो वा अश्वस्य मेध्यस्य शिरो वेद शीर्षण्वान् मेध्यो भवति । उषा वा अश्वस्य मेध्यस्य शिर सूर्यश्चक्षु वात प्राण चन्द्रमा श्रोत्रम् । दिश पादा अवान्तरदिश । पर्शवोऽहोरात्रे निमेषा अर्धमासा पर्वाणि, मासा सन्धानि ऋतवोऽङ्गानि, सवत्सर आत्मा, रश्मय. केशा नक्षत्रानि रूप तारका अस्थीनि नभो मांसान्योषधयो लोमानि वनस्पतयो वाला अग्निर्मुख वैश्वानरो व्यात्तम् ॥ १ ॥ समुद्र उदरमन्तरिक्ष पायुर्द्यावापृथिवी आण्डौ ग्रावा शेप सोमो रेतो यज्जञ्जभ्यते तद्विद्योतते |

अहर्वा अश्व पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेन पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्व महिमानावभित सबभूवतु । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धु समुद्रो योनि ॥२॥

यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेन महिमा पश्चादनुजायत एतौ वै महिमानावश्वमभित सबभूवतुर्हयो देवानवहदर्वाऽसुरान्वाजी गन्धर्वानश्वो मनुष्यान्समुद्रो वा अश्वस्य योनि समुद्र ॥ २ ॥

तदर्थावगमाय तदीय भाष्य च जिज्ञासूनां सुखबोधाय अत्र सन्निवेशितमस्ति ।

पश्चान्तिमेऽनुवाके सर्वजगदात्मत्वेनाश्व स्तूयते । अथवा विराड्रूपेणाश्वोपासनप्रतिपादकोऽयमनुवाक प्रकरणादुत्कृष्योपनिषदादौ द्रष्टव्य । अत एव वाजसनेयिन एतदर्थप्रतिपादक ब्राह्मणमुपनिषदादावामनन्ति । अस्यायमर्थ.—य पुमान्मेध्यस्य यागयोग्यस्याश्वस्य शिरो वेद शिर प्रभृतीनवयवान्विराडवयवभूतमुष कालादिरूपेणोपास्ते, सोऽय शीर्षण्वानुष कालादिरूपै शिर प्रभृतिभिर्विराडवयवैर्युक्तो मेध्यो यागफलभोगयोग्यो भवति । अश्वनुष्ठानस्य चोपासनस्य च समान फलम् । तथा च पञ्चमकाण्डे समाम्नातम्—'सर्व पाप्मान तरति तरति ब्रह्महत्या योऽश्वमेधेन यजते । य उ चैनमेव वेद" इति ।

तत्र कस्मिन्नश्वावयवे को विराडवयवो ध्यातव्य इति तत्सर्वमुच्यते—मेध्यस्याश्वस्य यच्छिरस्तद्रुपा उष कालरूपम् । यदश्वस्य चक्षु तत्सूर्य । यस्तदीय प्राण सोऽय बाह्यो वायु । यत्तदीय श्रोत्र सोऽय चन्द्रमा । ये तदीया पादा ता प्राच्या दिश । ये पर्शव पार्श्वास्थिविशेषा ता इमा आग्नेय्याद्यवान्तरदिश । यस्तदीयो निमेषोन्मेषसहितस्ते उभे अहोरात्रे । यानि तदीयहस्तपादगतपर्वाणि ते शुक्लकृष्ण पक्षरूपा अर्धमासा । यानि च पर्वणा सधानानि ते चैत्राद्या मासा । यानि चानुक्तविशेषाणि खुराद्यङ्गानि ते वसन्ताद्या ऋतव । य आत्मा मध्यदेह स सवत्सरकाल । ये तदीया केशा ते सूर्यरश्मय । यदश्वस्य भास्वररूप तानि कृत्तिकादिनक्षत्राणि । यान्यनुक्तान्यस्थीनि तानि बृहस्पतिशुक्रध्रुवाद्या नीडतारका । यानि तत्र तत्र स्थितानि मासखण्डानि तदेतन्नभ । यानि क्षुद्रलोमानि ता ओषधय । ये वाला पुच्छगता दीर्घकेशास्ते वनस्पतय । यदेतन्मुख सप्यतेऽय लोकप्रसिद्धोऽग्नि । यद्व्यात्त मुखविदारण सोऽय वैश्वानरनामको देवताविशेष । यदुदर सोऽय समुद्र । य पायु तदन्तरिक्षम् । यावाण्डौ ते द्यावापृथिव्यौ । यः शेफ सोऽयमभिषवार्थो ग्रावा । यद्रेत स सोमरस । यज्जजृम्भते गात्राणि विनामयति सेय विद्युत । यद्विधूनुते सशब्द शरीर कम्पयति तदेतद्गर्जनम् । यदेतन्मेहन सेय वृष्टि । अस्य हेषाशब्दरूपा या वाक्सेय वेदरूपा वागेव । जायमानस्य क्रतौ प्रयुज्यमानस्याश्वस्य य सज्ञपनात्पुरस्तान्महिमाख्यो राजतग्रहस्तदिदमहरेव । एन पश्चादेतस्याश्वस्य सज्ञपनादूर्ध्व यो महिमाख्य सौवर्णग्रह सेय रात्रि । एतावेवोभौ महिमानौ ग्रहावश्वमभित सबभूवतुरश्वस्य सज्ञपनात्पूर्व पश्चाच्च व्यवस्थितौ । हयार्ववाज्यश्व अश्वान्तरजातिविशेषास्तत्तद्रूपेण देवादीन्वहन्ति । एवविधस्य विराड्रूपस्याश्वस्य समुद्र एव योनि कारणम् । सम्यगुद्रवत्युत्पद्यते जगदस्मादिति समुद्र परमात्मा । न ह्यन्यस्मादय विराडुत्पत्तुमर्हति । स एवास्य बन्धु स्तम्भ स्थितिहेतुरित्यर्थ । एवमुपासिता पापक्षयद्वारा विराड्रूप प्राप्नोति । "त यथा यथोपास्ते तथैव भवति" इति श्रुत्यन्तरात् । विराट्प्राप्तिश्च क्रममुक्तिहेतु । तत्र ज्ञानोत्पत्तौ सत्या तेन विराजा सह मुच्यमानत्वात् । तथा च स्मृति —

"ब्रह्मणा सह ते सर्वे सप्राप्ते प्रतिसचरे ।
परस्यान्ते कृतात्मान प्रविशन्ति पर पदम" ॥ इति ।

प्रियतमत्वस्य प्रतिपादनम् । 'ब्रह्म वा इदमग्र आसी दित्यादिवाक्यस्य वृत्तिकारभाष्यकारमतयो तात्पर्यवर्णनम । प्रसङ्गादत्र वाक्ये ब्रह्मभावी पुरुष इति भर्तृप्रपञ्चव्याख्यानस्य निराकरणम "तस्य ह न देवाश्चनाभूत्या ईशते" इति अप्राप्तनिषेधाशङ्कापरिहारश्च । एकादशकण्डिकाया चातुर्वर्ण्यसृष्टिकथनम् । 'आत्मानमेव लोकमुपासीत' इति वाक्यस्यार्थवर्णनम् । भर्तृप्रपञ्चमम्मतस्य समुच्चयद्वयस्य निरास देहद्वयनाशस्य अन्तरालावस्थस्य निरासश्च । षोडशकण्डिकायामविदुष देवाद्युपकारनिरूपणम । "तद्वा एतद्विदितं मीमाᳫंसितम्" इति वाक्यार्थनिरूपणमुखेन "जायमानो वै ब्राह्मण" इत्यादिश्रुत्यर्थवर्णनञ्च ।

पञ्चमे ब्राह्मण सप्तान्नसृष्टि एकमस्य साधारण द्वे देवानामन्ने त्रीणि आत्मने पशुभ्य एव तत्पय इत्यत्र सप्तमतया मन्त्रोक्तस्य पयोन्नस्य तुरीयत्वेन ब्राह्मणे व्याख्यानस्य तात्पर्यवर्णनम् । वाङमन प्राणानाम् आधिभौतिक विस्तार, आधिदैविको विस्तार अन्तर्गतत्रयान्तःपातिन प्राणस्य निरूपणम् । "त्रयो वाव" इत्यादिश्रुतौ एवत्र श्रुतस्यवकारस्य अन्ययानुपङ्क्ते न भगवत्पादीय व्याख्यानम् । 'अथात सम्प्रत्ति' इत्याद्यर्थवर्णनम् । तत्रैव भर्तृप्रपञ्चमतस्य सम्प्रत्तिं कृत्वापि यावज्जीव अग्निहोत्र कर्तव्यमेव इत्यस्य निराकरणम । "स यदा एववित्" इति श्रुत्यर्थनिरूपणम ।

षष्ठे ब्राह्मण "तदेतत्त्रय" इत्यादे व्याख्यानमित्यादिरूपेण प्रथमाध्यायार्थो निरूपित ।

**द्वितीयोऽध्याय** — द्वितीयेऽध्याये षड्ब्राह्मणानि सन्ति । तत्र प्रथम ब्राह्मण गार्ग्याजातशत्रुसंवादमुखेन ब्रह्मतत्त्व निरूपयितुमुपक्रान्तम "सत्यस्य सत्यमिति" । तस्यैव द्वितीये शिशुब्राह्मणे प्राणविषयोपासन विहितम् । तृतीयञ्च मूर्तामूर्तब्राह्मणम । तत्र मूर्तामूर्तयो ब्रह्मणि प्रसङ्गमापाद्य तन्निषेधन ब्रह्मतत्त्व परिशेषितम् । "अथ नामधेयᳫं सत्यस्य सत्यमिति प्राणा वै सत्य तेषामेव सत्य' मिति । अनयो विशेष अस्माभि पूर्वमेव कथानकप्रसङ्गे सगृहीत इति । नात्र लेखनी व्यापार्यते ।

चतुर्थञ्च ब्राह्मण मैत्रेयीब्राह्मणम । इदमत्र कर्म मैत्रेयीसवादमुखेन अन्येषामात्मन परमप्रेमास्पदत्व प्रवतते । अनयर्थं कथानकमत्यन्तरुचिकरमिति नात्र किञ्चिद्वक्तव्यमवशिष्यते । अत्र आत्मन परमप्रेमास्पदत्व प्रतिपादितम । तत "इद सर्वं यदयमात्मा" इति वाक्येनात्मविज्ञानेन सर्वविज्ञान प्रदर्शिते स्थितिकाले सर्वस्यात्मा गृहीतु शक्यमिति प्रतिपादनाय दुन्दुभ्यादिदृष्टान्तत्रयोपादानेन पूर्वोक्तप्रतिज्ञैव समर्थिता । उत्पत्ते प्रागपि सर्वस्य प्रपञ्चस्य आत्ममात्रत्वमिति प्रतिपादनाय 'यथार्द्रैधाग्नेरि'ति दृष्टान्तोपादानेनायमर्थस्समर्थित । तत्रैवाष्टविध ब्राह्मण वेदानामपौरुषयत्व तदितरग्रन्थाना पौरुषयकृतकत्वेन पौरुषयत्व तथा नाम प्रपञ्चसृष्ट्या रूपप्रपञ्चसृष्टेरपि सग्रह न्यूनतादोषपरिहाराय इत्यादिक सर्वं विशेषत भाष्ये द्रष्टव्यम् । एव एकायनप्रक्रिययापि एकमेव ब्रह्म अवगन्तव्यम् । तत्रैव 'यथा सर्वासामपाᳫंसमुद्र एकायनमि' ति । तत्र विषयस्य प्रलयाभिधानेन विषयसमानजातीयाना करणानामपि लय मन्यते श्रुति विषयस्यैव स्वात्मग्राहकत्वेन संस्थानान्तर करण नाम यथा रूपविशेषस्यैव संस्थान प्रदीप करण सर्वरूपप्रकाशने इति । तस्मादुत्पत्तिस्थितिलयप्रलयकालेषु प्रज्ञानव्यतिरेकेणाभावात् प्रज्ञान ब्रह्मैव । आत्मैवेदं सर्वमिति यत् प्रज्ञात तत्साधितम ।

तत पञ्चम मधुब्राह्मणम । तत्र मधु परस्परमुपकार्योपकारकभाव । तत् फल सृष्टि । तथा च पृथिव्यादि सर्वं जगत् परस्परोपकार्योपकारकभूत तदेककारणपूर्वकमेकसामान्यात्मकमेकप्रलय च दृष्टम । तस्मादिदमपि पृथिव्यादिलक्षण जगत्परस्परोपकार्योपकारकत्वात्तथाभूत भवितुमर्हति । अयमेवा-

योऽस्मिन्ब्राह्मणे प्रतिपाद्यते । अथवाऽऽत्मैवेदं सर्वमिति प्रतिज्ञातस्याऽऽत्मोत्पत्तिस्थितिलयत्व हेतुमुक्त्वा पुनरागमप्रधानेन मधुब्राह्मणेन प्रतिज्ञातस्यार्थस्य निगमनं क्रियते । यथोक्त प्रामाणिकैः तत्र मधुविद्यायाः प्रकाशकेन मन्त्रेण तदुपबृंहणन ब्राह्मणेन च पञ्चमं ब्राह्मणं समर्थितम् ।

षष्ठे ब्राह्मणे "अथ वंशः" इत्यारभ्य ब्रह्मविद्यार्थम्य मधुकाण्डस्य वंशः ब्रह्मविद्यायाः मन्त्रश्चायं स्वाध्यायार्थः जपार्थश्च । तेन महाजनपरिगृहीतोऽयं ब्रह्मविद्या महाभागधेया इति ब्रह्मविद्यायाः स्तुतिः । स्वाध्यायशब्दार्थस्तु स्वाधीनोच्चारणक्षमत्वे सति अध्यापनम् । जपस्तु प्रत्यहमावृत्तिरिति भेदः । विशेषस्तु क्रोडपत्रे द्रष्टव्यः ।

तृतीयस्य प्रतिपाद्यः—तृतीयेऽध्याये नवब्राह्मणानि सन्ति । अत्र यज्ञप्रङ्गेन समवेतानां ब्रह्मविदुषां परीक्षापूर्वकागमार्थनिर्धारणायोपपत्तिप्रधाने याज्ञवल्क्यकाण्डे एतेषां मध्येऽनूचानतमः क इति जिज्ञासया जनककृतः गोष्ठे गोसहस्रं गोसहस्रावरोधः । ब्रह्मिष्ठेन ग्राह्यमिति जनकेनाभिहितेऽपि ब्राह्मणानां मध्ये गोसहस्रग्रहणासामर्थ्यं दृष्ट्वा स्वगृहं प्रति गोसहस्रं नयेति याज्ञवल्क्यः स्वशिष्यमाज्ञापयामास । ततः ब्राह्मणेषु क्रुद्धेषु प्रथमब्राह्मणे याज्ञवल्क्यं प्रति ब्रह्मिष्ठाभिमानिनः अश्वलस्य संवादरूपं प्रथमं ब्राह्मणम् । द्वितीयं च याज्ञवल्क्यार्तभागसंवादरूपेण प्रवृत्तम् । तृतीयं ब्राह्मणं च याज्ञवल्क्यभुज्युसंवादरूपेण प्रवृत्तम् । चतुर्थं च ब्राह्मणं याज्ञवल्क्योषस्तसंवादरूपम् । पञ्चमं च ब्राह्मणं याज्ञवल्क्यकहोलसंवादमुखेन प्रवृत्तम् । उपस्तकहोलब्राह्मणयोः प्रश्नप्रतिवचनयोरेकरूपत्वेनार्थभेदो नास्ति किं उपस्तब्राह्मणे शरीरातिरेकं कहोलब्राह्मणे अशनायाद्यतीतत्वं प्रतिपाद्यत इति विशेषः । तत्र चतुर्थब्राह्मणे पृष्टस्यैवात्मस्वरूपस्य सोपाधिकत्वनिरुपाधिकत्वाभ्यां भेदः इति प्रतिपादनम् तदङ्गत्वेन च संन्यासविधानम् । षष्ठ च ब्राह्मणं याज्ञवल्क्यगार्गीसंवादमुखेन प्रवृत्तम् । यदिदं सर्वमप्सु ओतं च प्रोतं चेत्यादिनाऽन्तर्यामिसूत्रविषयम् । सप्तम च ब्राह्मणमन्तर्यामिब्राह्मणमित्युच्यते । यत्रान्तर्यामिस्वरूपमुपवर्णितम् । इदमेव औद्दालकब्राह्मणमित्यपि व्यपदिश्यते । अष्टमं च गार्गीब्राह्मणम् अथवा अक्षरब्राह्मणमिति व्यवह्रियते यत्र अशनायाद्यतिविनिर्मुक्तं निरुपाधिकं साक्षादपरोक्ष सर्वान्तर ब्रह्म । नवम शाकल्यब्राह्मणम् । अत्र याज्ञवल्क्यशापात् शाकल्यस्य मूर्धपातः । शाकल्यमूर्धपातभयात् तूष्णीभूतेषु ब्राह्मणेषु ब्रह्मविद्वरिष्ठः याज्ञवल्क्यः उपस्थितान् ब्राह्मणान् सबोध्य युष्माकं मध्ये यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो व कामयते त व पृच्छामि सर्वान्वा वः पृच्छामि । याज्ञवल्क्योक्त्यनन्तरं प्रत्युत्तरदानासामर्थ्यात् अप्रकल्पभूतेषु ब्राह्मणेषु याज्ञवल्क्यकृतप्रश्नप्रतिपादका "यथा वृक्षो वनस्पति"रित्यादिसप्तमन्त्राः पठिता । अत्र प्रसङ्गे भगवत्पादाः परमतनिराकरणपूर्वकं मोक्षस्यानन्दरूपत्वं श्रुत्यनुसारेण प्रतिपादयन्ति स्म ।

चतुर्थस्य विषयः—चतुर्थेऽध्याये नवब्राह्मणानि सन्ति । तत्र प्रथमं षडाचार्यब्राह्मण द्वितीयं कूर्चब्राह्मणं तृतीयं ज्योतिर्ब्राह्मणम् । चतुर्थे ब्राह्मणे संसारोपवर्णनं प्रस्तुतम् । तत्रायं पुरुषः येभ्यो प्रङ्गेभ्य सप्रमुच्येतयुक्तम । कस्मिन्काले कदा इति प्रतिपाद्यते समागतं याज्ञवल्क्यं प्रति किमर्थमागमन पशुकामनया वा सूक्ष्मवस्तुनिर्णयान्तप्रश्नश्रवणं च भवति जनको अपृच्छत् । तदा याज्ञवल्क्यः उभयार्थमित्युत्तर ददौ । ज्ञानसाधनानि वागाद्युपाधिकब्रह्मोपासनानि जाग्रदादिद्वारा तत्त्वनिर्धारणं च । याज्ञवल्क्यस्य वदिष्यतो तस्य भङ्गं कामप्रश्नास्यस्य वरस्य याज्ञवल्क्येन राज्ञे इति दत्तत्वात् हेतुकथन "किंज्योतिरय पुरुषः" इत्यादि जनकेन कृतानां प्रश्नानामादित्यज्योतिरित्यादीनि याज्ञवल्क्येन दत्तान्युत्तराणि । जनककृतस्य "कतम आत्मे"ति प्रश्नस्य "योऽयं विज्ञानमय" इत्यादि याज्ञवल्क्यस्योत्तरम् । जाग्रदव-

स्यायां आत्मज्योतिः सुष्ठेविचारवत् निष्कृष्य दर्शयितुमशक्यत्वात् स्वप्ने स्वयंज्योतिष्ट्वादिप्रतिपादनम् । अत विमोक्षाय ब्रूहि इत्येवं जनकेन अनुयुक्तः याज्ञवल्क्यः सुषुप्ते आत्मनः मोदत्रासादिराहित्यप्रतिपादनपूर्वकमसंगत्वं स्वप्ने कर्तृत्वाभावादसंगत्वं स्वतः कर्तृत्वाभावाज्जाग्रतेऽपि प्रतिपादनं महामत्स्यदृष्टान्तेन श्येनवाक्येनात्मनः सौषुप्तरूपप्रतिपादनं जीवस्य परमात्मना एकत्वाद्विशेषज्ञानाभावे प्रिया स्त्रियः इत्यादि प्रतिपादनम् । अकामस्य मोक्षप्रतिपादनम् । मोक्षसाधनप्रतिपादकानां श्लोकानां समाम्नायते आत्मकामस्य ब्रह्मविदः मोक्ष इत्यस्मिन्नर्थे मन्त्राणामुपन्यासः । आत्मज्ञानस्तुत्यर्थं तन्निष्ठस्य कायक्लेशराहित्यप्रतिपादनेन मार्गान्तरनिन्दा । परमार्थज्ञानसंस्कृतमनसैव ब्रह्मदर्शनं ब्रह्मात्मनि सर्वभेदविनियोगवर्णनञ्च । ब्रह्मविद्याफलकथनपूर्वकं याज्ञवल्क्याय गुरवे कृतकृत्यजनककृतात्मनिवेदनं प्रतिपादनं समस्तारण्यकार्थस्य संक्षेपेण निर्देशः । उक्तस्य सर्वार्थस्य मैत्रेयीब्राह्मणेन निगमनमृषिकाण्डस्य वंशवर्णनञ्च ।

पञ्चमषष्ठविषयः—पञ्चमेऽध्याये सर्वोपनिषत्प्रतिपाद्यस्य ब्रह्मणः "पूर्णमद"इत्यादिना निर्देशः । सर्वोपास्तिशेषत्वेन दमादिसाधनत्रयविधान हृदयं ब्रह्म सत्यं ब्रह्म मनो ब्रह्म इत्याद्युपासनम् । उक्थदृष्ट्या यजुर्दृष्ट्या सामदृष्ट्या प्राणोपासनम् । गायत्र्युपाधिविशिष्टस्य ब्रह्मण उपासनम् । गायत्र्युपस्थानं गायत्र्या मुखविधानायार्थवादः मुखविधानं च । ज्ञानकर्मसमुच्चयकारिण आदित्यप्रार्थनाऽग्निदेवताप्रार्थना च ।

षष्ठेऽध्याये ज्येष्ठश्रेष्ठगुणत्वेन प्राणोपासनं वागादिप्राणैः प्रजापतिसमीपं गत्वा कोऽस्माकं मध्ये वरिष्ठः इति प्रश्नस्य प्रजापतेरुत्तरम् । प्राणस्यान्नवस्त्रप्रतिपादनं च । पञ्चाग्निविद्याविधानमुखेन मानुषवराः ममापि सन्ति इति देववरप्रदानेन स्वप्रतिज्ञा रक्षणीया इति गौतमवचनान्तरं वाचैव पूर्वे ब्राह्मणाः आपत्काले क्षत्रियान् शिष्यवृत्त्योपगच्छन्ति नोपनयनेन शुश्रूषादिभिः । तस्मै पञ्चाग्निविद्योपदेशः । तत्रैव पष्ठस्याग्नेः विधान पञ्चाग्निविदः अर्चिरादिमार्गेण गतिवर्णनम् । पञ्चाग्निविद्यारहितानां केवलकर्मिणां दक्षिणमार्गोपदेशः । महत्त्वप्राप्तये मन्थाख्यस्य कर्मणः उपदेशः श्रीमन्थपूर्वकपुत्रमन्थविधानं च । अविदुषामतिगर्हितमिदं कर्मेतीत्यत्र आचार्यपरम्परासम्मतिकथनम् । विशिष्टपुत्रेच्छायां पण्डितत्वादिविशिष्टपुत्रेच्छाया वोपायस्य कथनम् । ओदनपाकादिकरणकालादिकथनम् । जातकर्मनामकर्णमात्राभिमन्त्रणमन्त्राणा वचनम् । यथोक्त शिशुसम्पन्नपितुः पुत्रस्य च स्तुतिः खिलकाण्डस्य च विद्यावंशश्चेति इत्यादयः पदार्थाः सङ्ग्रहेणात्र उपवर्णिताः जिज्ञासूनामुपकाराय । अन्ये च बहवो विषयाः विशिष्टोपपादनं च ।

क्रोडपत्रविषये वक्तव्यम्— अस्या उपनिषदस्तात्पर्यार्थनिर्णयाय भगवत्पादीय भाष्य गुरुमुखादध्येतव्यमित्युक्तम् । तदर्थश्च आनन्दज्ञानविवरणटीकयैव (न्यायनिर्णयेन) सक्षेपेण ज्ञातु शक्यते । तस्यापि मूल वार्तिककारोक्त महावार्तिकम् । यथोक्तमानन्दगिरिणा उपोद्घाते —

'बृहदारण्यके भाष्ये शिष्योपकृतिसिद्धये ।
सुरेश्वरोक्तिमाश्रित्य क्रियते न्यायनिर्णय.'' ।। इति ।

तस्य तच्च कस्य भाष्यस्य कियद्वार्तिकमित्यज्ञातप्रायमेवासीत् । तदध्ययनपरम्परायाः प्रणीतत्वात् महर्षिकल्पैः विद्यावाचस्पतिभिः महामण्डलेश्वरः हृषीकेशस्थकैलासाश्रमपीठाध्यक्षैः महता प्रणिधानेन तादृश क्रोडपत्रं निर्मायि महता परिश्रमेण । अस्य भाष्यस्य अर्थोपबृंहणमिदं वार्तिक इद वार्तिकद्वयमित्यभिधाय वार्तिकद्वयमुद्धृत्य तदर्थविवरण स्वय चक्रुः । एव प्रतिपद प्रतिभाष्यञ्च

वार्तिकेण यथा व्याख्यात तथा करतलामलकवत् प्रकाशितमेतैः महनीयचरणैः । एवमेव समग्रस्यापि बृहदारण्यकोपनिषद्भाष्यस्य अर्थविवरणात्मक वार्तिकमर्थविवरणेन सह तु सगाहेऽस्मिन् क्रोडपत्रे विद्वदनुभवैकगम्ये विस्तरेण वर्णयामासु । अहो धन्या इमे ब्रह्मविद्वरिष्ठा. । अत समस्त विद्वत्कुलमेतेषाम-धमर्णमित्यत्र नास्ति सन्देहलेश । किं वर्णयामि सुललितपदसन्दर्भं भाष्यवार्तिकयोः आक्षेपसमाधानार्थ-प्रतिपादनशैलीम् । एतेषा कृते यच्च यावच्च उच्यते तत्सर्वमल्पीय एव । ईदृशस्य महानिधिमिव पुस्तकागारे निगूढितस्य क्रोडपत्ररत्नस्य भाष्यवार्तिकयोजनेन महान्तमुपकारमकारसु । ब्रह्मनिष्ठा इममेव पीठमधितिष्ठन्त वेदान्तविद्याविनोदरसिका ,प्राचीनग्रन्थपरिरक्षणप्रकाशनप्रचारणैकतानमानसा. सर्वतन्त्रस्वतन्त्रा श्रीमन्न श्रीस्वामिविद्यानन्दगिरिपादा धन्यवादभाजनमित्यत्र को वा प्रेक्षावान् विप्रतिपद्येत ।

अस्मिन्संस्करणे क्रोडपत्रविभूषिते द्रष्टव्या पदार्था अधस्तनया तालिकया जिज्ञासूना परमोकृतये अधस्तान्निर्दिश्यन्ते—

पृ० १. वश । पृ० २ पाठक्रमादर्थक्रमो बलीयान् । पृ० ३. भाष्यलक्षणम् । पृ० ४. प्रामाण्यविचार, वेदस्य त्रेधा व्याख्यानम् । पृ० ६ औत्पत्तिकसूत्रव्याख्यानम् । नवमत्रिंशपृष्ठयोष्टिप्पणी द्रष्टव्या ।

पृ० ३० श्रुते प्रामाण्यादिति आनन्दगिरिटीका टिप्पणी च । पृ० ३१. कारणस्य सत्त्वेऽनुमानमाहेति नाय पुस्तकान्तरे पाठ अनुपयुक्तोऽपि । पृ० ३३ 'प्रत्यभिज्ञेति क्षणिकार्थं बोधयल्लिङ्गमित्येव पाठो युक्त । पृ० ३८ स्वाश्रमेति पाठान्तरम् । पृ० ४०. इत्थ चात्र प्रक्रिया द्रष्टव्या । पृ० ४४ अनुमानरचना चात्रैवम् । पृ० ५८. ऋगादिशब्दार्था विचार्या ।

पृ० ७७ देवताधिकरणन्यायेन परिहरति । पृ० ९०-९१ वार्तिकोद्धरण तद्व्याख्यानञ्च । पृ० १२४ इन्द्रियसौष्ठव फलम् । पृ० १२७ सदिग्धे तु वाक्यशेषात् । पृ० १४४. मन्त्रार्थ पदार्थ वाक्यार्थ फल तात्पर्यार्थ वार्तिकमादाय तत्समर्थनम् ।

पृ० १६३ विरोधे त्वनपेक्ष स्यात् । पृ० १७६-१७७ केवलयाज्ञिका इति भाष्यपदस्य क्रोडपत्रम् । पृ० १८० अर्थवमित्याद्युपपद्यत इत्यन्तभाष्य पञ्चवार्तिकानि द्रष्टव्यानि । पृ० १८५ भाव इति । पृ० १९० चतुर्विधगतीनामन्यतमत्व वारयति । पृ० १९१-१९२ देहंविह प्रविष्ट इत्यत्राष्टौ वार्तिकानि द्रष्टव्यानि । पृ० २०५ आत्मनि प्रकृतसख्यापूरण इत्यत्र पञ्चवार्तिकानि । पृ० २१७ यत्साक्षादित्यादि प्राप्तत्वादित्यन्तस्य भाष्यस्य तात्पर्य द्वाभ्यामाह । पृ० २२१ विष्णुदृशत्वनैवोपयोग । पृ० २३० निश्चितफलवद्विज्ञानोत्पादकत्वमिति भाष्यसन्दर्भस्य विशेषणकृत्यम् । पृ० २३८-२३९ कथ पुनरित्यादीत्यर्थं इत्यन्तस्य पञ्चदशवार्तिकानि । पृ० २६९ नार्धजरतीयमुचितम् । पृ० २७३ अन्यश्चेतन अचेतनो वा । पृ० २७४ एकजीववादस्य श्रौतत्वमिति । पृ० २७५ अथित्यादि । पृ० २७६. नानाजीववादस्य नावकाश. । पृ० २७७ व्यावृत्तेति बाह्योत्सुक्य इति टीकानुसारेण व्यावृत्तबाह्योत्सुक इत्येव रहस्यम् । पृ० २८० कालकर्मग्रन्थौषधितपसामेषा सपत्तिविपत्तिहेतुत्व शास्त्र लोके च प्रसिद्ध टिप्पणम् । पृ० २८४ उत्क्रान्तेतरप्रतिवचनदशायामित्यर्थ इत्यस्य टिप्पणम् । पृ० २९३ अथेत्यादि अत्र चत्वारि वार्तिकानि सन्तीति क्रोडपत्रम् । पृ० २९७. 'तदाहुर्ब्रह्मविद्यया' इत्यादिना सग्रन्थप्रयोजनेऽभिहिते इत्यस्य टिप्पणम् पृ० २९८ अयञ्चेन्द्रादिसर्गस्तत्रैव द्रष्टव्यस्तच्छेषत्वात् । पृ० ३०८ जप्येनैव सधि-

ध्येद्ब्राह्मणो नात्र संशय' इति ब्राह्मणशब्दार्थनिष्कर्षः । पृ० ३१५ परेण च वैश्वलविद्याविषयेण इति भाष्यानन्दज्ञानयो टिप्पणम् । पृ० ३१८ यजतिचोदनाद्रव्यदेवताक्रियासमुदाये इति टिप्पणम् ।

पृ० ३३८. निर्वपेदिति टिप्पणम् । पृ० ३३६-३४०. अनेना अभिरासति इति पदत्रयस्य व्याख्यानम् । पृ० ३४१ सर्वप्राण्यन्नस्य साधारणत्वप्रतिपादनेन भर्तृप्रपञ्चमतस्य निराकरणम् । पृ० ३४३ द्वे देवानित्यत्र दर्शपूर्णमासयोर्ग्रहणम् 'अग्निरिद हविरजुषते'त्यस्य टिप्पणम् । पृ० ३४६. पाठक्रमादर्थक्रमो बलीयान । पृ० ३४७ ३४८ सर्वस्य जगत पयःपरिणामित्वे शङ्कासमाधाने क्रोडपत्रम् । पृ० ३५३ चतुर्थत्व च बृहदारण्यकापेक्षया उपनिषदपेक्षया तु द्वितीयत्वमिति । पृ० ३५४ मनसा ह्येवेति श्रुतिव्याख्यानम । पृ० ३५७-३५८ मनस असाधारणकारणत्वम् । पृ० ३७३ रात्रिशब्दस्याहोरात्ररूपत्वम् । पृ० ३७७ एवकारस्यान्ययोगव्यवच्छेद उत्तरवाक्ययो खण्डनम् । पृ० ३७९ सप्तस्तिकर्मवाक्यस्य द्वेधा व्याख्यान वार्तिके । पृ० ३८३-३८७. अयेत्यादि चनमित्यन्तभाष्यार्थसग्राहकाणि दश वार्तिकानि प्रदर्श्यन्ते । पृ० ३८८. ऋणवान्जायते इति पाठ । पृ० ३९८ अनुमान सूचितमित्यस्य टिप्पणम् । पृ० ४०० यथा तापस्य इति टिप्पणम् । पृ० ४०२ प्राणाद्वा एप इति ब्राह्मणवाक्यमुक्तत्वेनाभ्युपगम्य यतश्चोदेतीत्यादिमन्त्रस्य पूर्वार्धं प्रश्नत्वेन व्याख्यानम् ।

पृ० ४१६ वार्तिकमारे अध्यायार्थनिरूपणम् । पृ० ४२०-४२१ ब्रह्म ते ब्रवाणीत्यत्र सप्तवार्तिकानि । पृ० ४२१ जनको दित्सुरित्यस्य टिप्पणम् । पृ० ४२२ मा मा इत्यत्र 'आबाधे चेति' सूत्रम् । पृ० ४२५ द्विगुण चन्द्रमण्डलमित्यस्य व्याख्यानम् । पृ० ४३७ पाणिनाऽऽपेष.... स होत्तस्थावित्यस्य टिप्पणम् । एषा प्राणाना विज्ञानेन विज्ञानमादायेत्यादिभाष्यस्यार्थान्तरवर्णनम क्रोडपत्रे । पृ० ४५६ अश्वकर्णादिनाम्न इत्यस्य सालवृक्षवाचिन इति टिप्पणम । पृ० ४६५-४६८ यदा न कस्यचन वेदेति भाष्यार्थाविष्करणपराणि वार्तिकानि । पृ० ४७५ यदैव तदाऽभूदित्यादेष्टिप्पणम । पृ० ४७७ नन्वस्ति प्राणात्मव्यतिरिक्त वस्त्वन्तरमित्यादि भाष्यार्थाविष्करणपराणि नववार्तिकानि । पृ० ४८३ जगद्वाचित्वाधिकरणपूर्वपक्षन्यायेन द्रष्टव्यमिति टिप्पणम । पृ० ५११-५१२ अर्थकरवादध्येयवाक्यता टिप्पणम् । पृ० ५१३ अग्निरुष्ण इति भाष्यस्य टिप्पणम । पृ० ५२२-५२५. जन्मादीना प्रति नियमादिलिङ्गबलादात्मभेद इत्यत्र क्रोडपत्रम् । पृ० ५२५-५२६. अनुमानस्यैवाविषयत्वात्कुतोऽनुमानविरोध इत्यत्र क्रोडपत्रम् ।

पृ० ५३०. सप्तत्व टिप्पणम् । पृ० ५३१ भ्रातरो हि सहजशत्रव । पृ० ५३७ यमसपदस्य टिप्पणम् ।

पृ० ५४०-५४१. मूर्तामूर्तब्राह्मणस्य सबन्धकथनम् । पृ० ५६८-५६९ नकारद्वय वीप्साया. टिप्पणम् । पृ० ५७०-५७१ अथ नामधेय सत्यस्य सत्यमित्यस्य एकादश वार्तिकानि ।

पृ० ५७२. अह्मास्मीत्यर्थः । पृ० ५७३-५७६ अस्या ब्रह्मविद्याया अङ्गत्वेन सन्यासो विविदिषत इत्यादिभाष्यस्य व्याख्यानम् । पृ० ५८७-५८९ श्रवणमनननिदिध्यासनाना स्वरूपकथनम् । पृ० ६००-६०६ अनादिनिधना नित्येत्यादेश्च सदातनत्व तस्य निदर्शीयत इत्यस्य टिप्पणम । पृ० ६०७-६०९ चक्षुस्तैजसमित्याद्यनुमानानि शास्त्रप्रकाशिकायाम् । पृ० ६०९-६१० सैन्धवखिल्य इत्यादिभाष्यस्य व्याख्यानम् । पृ० ६१३ अनन्तमित्याद्यपारमित्यन्तभाष्यस्य व्याख्यानम् । पृ० ६१४-६१५ एतेभ्यो भूतेभ्य इत्यादेरर्थान्तरवर्णनम् । पृ० ६१९-६२१. यत्र हि द्वैतमिव भवतीत्यादेस्तात्पर्यम् । पृ० ६२४. येनेद सर्वं विजानातीत्यादिभाष्यस्य तात्पर्यवर्णनम् ।

पृ० ६२६. इद सर्वं यदयमात्मेति वाक्यस्य व्याख्यानम् । पृ० ६२८. हेत्वपदेशादिति गौतमसूत्रस्य टिप्पणम् । पृ० ६२९. अयमेव स इत्यादेर्भाष्यार्थवर्णनम् । पृ० ६३६. धर्मशब्दस्त्रेधा वर्णित. । पृ० ६४२-६४५. तद्यथा रथनाभौ च रथनेमौ चारा सर्वे समर्पिता इति व्याख्यानम् । पृ० ६५०. परिसमाप्ता ब्रह्मविद्याऽमृतत्वसाधनभूतेति व्याख्यानम् । पृ० ६५२. तद्वामित्यादि मन्त्र-योजना । पृ० ६६२. सर्वानुभूरित्यस्य व्याख्यानम् ।

पृ० ६६६. महाजना. परमर्षय । पर्वः ग्रन्थिद्वयमध्यवर्ति भागः । महाभागधेयेत्यस्य टिप्पणम् । (पृ० ६६६) स्वाध्यायः स्वाधीनोच्चारणक्षमत्वे सत्यध्यापन तस्य परिष्कारः टिप्पणे । स्वाधीनोच्चारण-क्षमत्वविशिष्ट यदन्योच्चारणानुकूलोच्चारण कर्तृत्व तत्स्वाध्यायः । शिष्योच्चारणाधीनतटस्थोच्चारण-मादाय शिष्येऽतिव्याप्तिवारणाय विशेषणम् । उदासीनावस्थाया गुरौ स्वाध्यायव्यवहारवारणाय विशेष्यमिति निरवद्य लक्षणम् ।

एव प्रातस्स्मरणीयनामधेयैर्विद्यावाचस्पतिमहाभागैस्समस्तस्य भगवत्पादीयभाष्यस्य वार्तिकानाञ्च योजनेन तदुपबृहणेन स्वोपज्ञेन क्रोडपत्रेण च भूषयामासुः । अवशिष्टप्रकाशन सोपस्कर सपरिष्का-रञ्च वर्तमानपीठाधीश्वरा शान्ता दान्ताः महान्तः विविधानवद्यविद्याविद्योतितान्त.करणा श्री० विभूषिता श्रीयतीन्द्रचनचूडामणय. श्रीविद्यानन्दगिरीन्द्रा सोमनरमणीयाक्षरैस्सम्मुद्रय प्रकाशमकार्षुरिति परम प्रमोदस्थानम् । एतेषा शरीरे स्वास्थ्य दीर्घजीवित्व समुत्साहञ्च प्रयच्छत्वीश । करालेऽस्मिन् कलिहतके काले ईश्वरमार्गमुत्तम साधु कृत्य सञ्चालयन् सर्वान्तर्यामी भारतीयजनतामानसे सस्कृति राष्ट्रीयैक्यञ्च संपादयन् प्राचीनभारतगौरव प्रतिष्ठाञ्च यथापूर्व प्रतिष्ठापयेदिति ।

अस्मिन् संस्करणे वक्तव्यम्—इदञ्च सस्करणमस्मात्प्राक्प्रकाशितानि सस्त्रीणि सस्करणान्य-तिशेते । तानि च प्रायशो मक्षिकास्थाने मक्षिकापातमनुसरन्ति अशुद्धिबहुलानि श्रूयन्ते । किं बहुना सुपरिष्कृतमिद सस्करण प्रेक्षावता विमर्शकवराणा परम प्रमोदावहमिति । अत्र सस्करणे भाष्याक्षराणा वार्तिकवचनैस्सबन्धवर्णनमपूर्वक्रोडपत्रकारैः समयोजीति प्रागवादिष्म । मन्ये तेनाध्यापकमहाभागानाम-धीतिना जिज्ञासूनाञ्च महानुपकारो भवेदिति । अपूर्वश्च भाष्यवार्तिकयोर्योजनप्रकारो नवीना जागृति-मुत्पादयिष्यति । आस्तिकजनताजनार्दनस्योपकाराय सुखबोधाय श्रीस्वामिवर्यैः बृहदारण्यकोपनिष-न्मन्त्राणा राष्ट्रभाषयाऽनुवाद पूर्वमेव कृत आसीत् । तेन सह डॉ० स्वामिश्रीयुतोमेधानन्दशास्त्रिवर्यैश्चाय कृत. शाङ्करभाष्यानुवादश्च योजितोऽस्मिन सस्करणे । एतेन सर्वेषामेव महानुपकारस्स्यादित्याशास्यते ।

*विदुषां सर्वेऽभ्यर्थना—तत्र तत्र पाठभेद०, शुद्धाशुद्धनिर्देशनम्, अर्थसगतिश्च सावद्भुद्धिबलेनेदम* समशोधि । तथापि मनुष्यमात्रसुलभा बिन्दुविसर्ग - इकार - उकार - एकार - ऐकार - ओकार-औकारादीनाञ्चाक्षराणा सयोजने ये दोषास्समुपलभ्यन्ते, तान् सशोध्य पठितु पाठयितुञ्च प्रियपाठकवरा सानुरोध सानुनयञ्च प्रार्थ्यन्ते । एतत्प्रबन्धक्षीरसागररसास्वादनञ्च कुर्वन्त्विति साञ्जलिबन्ध गुणैकपक्षपातिनो विबुधवरान्प्रार्थयते ।

विदुषामाश्रव
मीमासारत्नम् प. सुब्रह्मण्यशास्त्री
भू. पू. प्राचार्यः अध्यक्षश्च
धर्मपौरोहित्यकर्मकाण्डधर्मशास्त्रमीमासादर्शनविभागस्य
काशीहिन्दूविश्वविद्यालये
सम्मानितदर्शनप्राध्यापकश्च 'साधुबेला' वाराणस्याम् ।

नृसिंहजयन्ती
वै. शु. चतुर्दशी स. २०३६
१०-५-१९७९ ।

पण्डितराजशास्त्ररत्नाकरादिदमाजां महेशानुसंधानसंस्थाननिदेशकानां

श्री एस० सुब्रह्मण्यशास्त्रिमहोदयानां

# सम्मतिः

तत्रभवन्तः श्रीविष्णुदेवानन्दमहाराजाः सिद्धिक्षेत्रे हृषीकेशे विराजमानं कैलासाश्रममधितिष्ठन्तः बहून् छात्रान् श्रीशङ्करभगवत्पादीयान् भाष्यग्रन्थान् अन्यांश्च प्रौढान् अद्वैतसिद्धयादीन् अध्यापयन्तः अध्यापनकाल एव अध्यापनोपयोगितया तत्र ग्रन्थेषु विस्तृतां टिप्पणीं व्यरचयन् । इमाः टिप्पण्यः आलोच्यमाने श्रीमद्भाष्यस्य श्रीमानन्दगिर्याचार्यकृतटीकायाश्च व्याख्यानरूपा भवन्ति । निखिलशास्त्रेषु नदीष्णा एते तत्र शास्त्ररहस्यं भाष्यादिषु निगूढतया गर्भीभूतं सरलसरलया स्वीयया अमृतवाण्या प्राचीकशन् ।

बृहदारण्यकभाष्यटिप्पण्यामयमन्यो विशेषः यत् श्रीसुरेश्वराचार्यकृतवार्तिकं तट्टीका च तत्र तत्रोद्धृत्य स्वीयटिप्पणीं समभूषयन् । जैमिनिसूत्राणि श्रीशबरस्वामिकृतं तद्भाष्यं, श्रीकुमारिलभट्टकृतं तद्वार्तिकं च पदे पदेऽनुवर्तन्ते भाष्यार्थस्पष्टीकरणाय । बृहदारण्यकभाष्यटिप्पण्या महिमाऽत्र प्रकाशते ।

ननु नामभाष्येण "संसारव्याधिमुमुक्षु" इत्यनेन प्रयोजनमुक्तं तेनैव च तत्फलकामस्याधिकारित्वनिर्णयसंभवात् व्यर्थमधिकारिभाष्यमित्याशङ्क्य तस्य तात्पर्यमाहुः वार्तिकाचार्याः—

"मिथो विरोधसिध्यर्थं कर्मज्ञानाधिकारिणोः ।
संसारव्याधिमुमुक्षुरित्युक्तिं भाष्यकृज्जगौ" ॥

इति वार्तिकमत्यन्तावश्यकं भाष्याभिप्रायपरिज्ञाने इति विभावयन्तः अत्र वार्तिकं योजयन्ति । बृहदारण्यकप्रतिपाद्यार्थं विविच्य प्रदर्शयितुं श्रीविद्यारण्यमुनिविरचितवार्तिकसाराख्यात् ग्रन्थात् नव श्लोकान् पठन्ति—"अरण्याध्ययनादेतत् आरण्यकमुदीर्यते"—इत्यादिना (पृ० ५) । कर्माधिकारिण्यपेक्षितं गुणजातं स्वाराज्यसिद्धिकृदभिहितश्लोकोक्तरीत्यति प्रत्यपादयन् । स च "अर्थी दक्षो द्विजोऽज्ञः बुध इति मतिमान्"—इत्यादि अध्ययनफलं वेदार्थज्ञानमिति मीमांसकाः अक्षरावाप्तिरिति विवरणकारादयो वेदान्तिनः । अस्मिन् पक्षे 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य" इति श्रवणविधिरेव ब्रह्मजिज्ञासारूपश्रवणे प्रवर्तिका । मतद्वयमप्यङ्गीकृत्य टिप्पणीकाराः उभयोः काण्डयोः एकपुरुषार्थावसायितया एकराशित्वकरणं भाष्यकृतः 'सर्वोऽप्ययं वेद" इति समञ्जसं वदन्ति (पृ० ६) । मोक्षसुखं न सर्वाभिलषितं विषयसुखमेव खलु प्राकृता जना वाञ्छन्ति इति आक्षेपमुद्भाव्य टिप्पणीकाराः मोक्षसुखस्य सर्वाभिलापविषयत्वं समर्थयन्त—मोक्षसुखं अनावृतं आत्मस्वरूपानन्दः स एव विषयसम्पर्कजन्यमनोवृत्तिभिः तत्र तत्र परिच्छिन्नरूपेण प्रकाशते 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः इत्याहुः । (पृ० ७) वेदप्रामाण्यं औत्पत्तिकसूत्रे स्थापितमिति टीका—तत्र टिप्पणी 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्"—

इति जैमिनिसूत्रम्—इत्यादिना । (पृ० ६) जैमिनिसूत्रमुदाहृत्य तस्य सम्प्रदायसिद्ध कुमारिलप्रोक्तमर्थं स्पष्टमाह।

टिप्पण्या योगसूत्राणि बहून्युदाहृतानि । तथाहि (पृ० १२) "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । दृग्दर्शनशक्त्योरेकात्मतैवास्मिता । सुखानुशयी राग । दुःखानुशयी द्वेष" इत्यादीनि सूत्राणि रागद्वेषादिशब्दप्रतिपाद्यतया विवृण्वन्ति।

मीमासकाः असकृत् विध्युद्देशे—इति पद प्रयुञ्जते । तस्यायमर्थं विधि. उद्दिश्यते निर्दिश्यते अस्मिन् इति व्युत्पत्त्या लिङादिघटित विधिवाक्यमित्यर्थ इति । समेवार्थं टिप्पण्यामाहु (पृ० १८) । विध्युद्देशे विधायकवाक्ये—इत्यादिना (पृ० १६)—भाष्ये ससार क्रियाकारकफलात्मकतया आत्मन्यारोपित. इत्युक्तं तस्य विविच्यार्थमाह टिप्पण्या ससारो हि क्वचित् क्रियारूप निष्क्रिये न सभवति क्वचित्कारकरूपः तस्याद्वितीये न सभव क्वचित् फलरूप फलस्य कार्यरूपतया फलेऽसभवात् इति । (पृ० ५६) भाष्ये तमेव कुमार जातमग्नि प्रथमशरीरिण अशनायावत्वान्मृत्यु अत्तु मुखविदारण कृतवानिति भाष्यम् । टिप्पण्यामाहु—पुत्रमत्तु प्रवृत्तस्य स्रष्टुर्मर्यादाभंग स्यादत आह—क्षुधेति । अशनायाद्युपद्रुतो मर्यादां भिन्दानोऽपि अज्ञाने प्रवर्तते विवेकिनामपि क्षुत्पीडितानां तद्दर्शनात् यथा विश्वामित्र श्वजाघनीमित्यादि।

आत्मैवेदमग्र आसीदित्यादि ब्राह्मणे 'द्वितीयाद्वै भय भवति" इति द्वैतभावनाया भयहेतुत्वमुक्त्वा स वै नैव रेमे स द्वितीयमैक्षत अत इत्यादिना एकाकित्वरूपाद्वैतज्ञानमपि निन्दितम । एव चोभयोरपि दुष्टत्वात क परिग्राह्य इत्याक्षेपे मति टिप्पणीकारः परिजह्रुः—प्रकाशस्य विदुष अद्वैतज्ञान नारतिहेतु. भीतिमपि निवर्तयति कामिनस्तु द्वितीयाद्भय एकाकित्वे अरतिश्च भवत इति एतत्सर्व वार्तिकतट्टीकोदाहरणेन टिप्पणीकारा प्रदर्शयन्ति (पृ० ५६) "एकाकिनो विराजो वाऽविद्यासवीतचेतस । पूर्वजन्मोत्थसंस्कारात भयमाविरभूदिह" ।। इत्यादि ।

एव (पृ० १७६-१७७) तद्यदिदमाहुरमु यजामु यजेत्यादि मूलभाष्यटिप्पणी रचयन्त वार्तिकानि उदाहृत्य केवलकर्मिणामेवेय निन्दा न तु ज्ञानिना अकर्मिणा देवानामप्यात्मभूतानाम् तदुक्त "यजेति लिङ्गान्निन्देयं कर्मिणामेव गम्यते । न तु विध्वस्तमोहाना प्रत्यङ्मात्रैकशायिनाम्"—इत्यादि । "एव मिथो भिन्न यदाहुस्त एकैक देवमध्वरे । तदसत्प्रतिपत्तव्य यतोऽभिन्नैव देवता । भेदग्राहि न नो मान घटादावपि विद्यते" इत्यादिना । १६२ पृ०—विराट्पुरुषहिरण्यगर्भयो स्वरूप वार्तिकानुसारेण विवेचयति—व्यतिकीर्णक्षीरनीरवन्मायोपाधिकारण नानारूप तस्य सर्वकार्यात्मकत्वात्तस्मात् सूत्रमुत्पन्न अपञ्चीकृतपञ्चभूतात्मक क्रियाप्रधानज्ञानोपसर्जनशक्तियुक्तमित्यर्थ । विराट्स्वरूप तु—परात्मैव सूत्रादिहेतुमायावी सूक्ष्म. पृथिव्यादिपञ्चकाद्देशविभागवान्वैराज स्थूलप्रपञ्चात्मक स्थान प्राप्य विराडुच्यते स चाग्निसूर्याद्यवयवानित्यर्थ ।

पृ० २१७—आत्मेत्येवोपासीतेत्यत्र नापूर्वविधि प्राप्तत्वात् इति भाष्यटिप्पण्या वार्तिकमव प्रदर्शयन्त —

"नित्यप्राप्तिमिहाऽऽचष्टे विध्यर्थापनुनुत्सयः ।
अप्राप्ताशानुपात्येव सर्व एव विधिर्यत ।।
पाक्षिक्युपासनप्राप्तिर्नित्या वेति च लिङ्गत. ।
विवक्षिता भाष्यकृतो नित्यप्राप्तिरितीर्यते" ।।

इत्यनेन परिसङ्ख्याविधिश्च प्रतिपाद्यत इत्याह—(पृ० २७६)। नानाजीववादस्य नावकाश इति श्रीग्रानन्दगिरिटीका समर्थयन्त ब्रह्म वा इदमग्र ग्रासीदित्यैकात्मवादोपक्रमादेक एव जीव । बहुवचन शरीरभेदाभिप्रायमिति समाधानमाहु । ( पृ० ३७९ ) सप्रतिकर्म कस्येत्याशङ्काया कोऽधिकारीति प्रश्ने य क्रमसन्यास चिकीर्षति पुत्रवाश्च स एव अधिकारी ब्रह्मचारि-सन्यसने तु नास्य कर्मण प्राप्ति नाप्यपुत्रस्य इति वार्तिकानुसारेण निर्णय कुर्वन्ति । विद्या कस्मै केन वा उपदेष्टव्येति प्रश्ने टिप्पणीकार भर्तृप्रपञ्चाना वचनमुदाहरेति युक्त सयोगोऽधिकारित्वेन हेतुना नष्टाश्वदग्धरथवदिति इमे टिप्पणीकार मूलस्य भगवत्पादकृतव्याख्यामुपपाद्य यत्र यत्र वार्तिककारा व्याख्यान्तर भाष्यविरुद्ध स्वय लिखन्ति । तत्तद्व्याख्यान्तरमपि । विस्तरेण प्रतिपादयन्ति (पृ० ४५६-४५७) 'तदेषा प्राणाना विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इति मूलस्य भगवत्पादा जीवश्चिदाभासेन करणेन इन्द्रियाण्यर्थग्रहणसामर्थ्यं सहृत्य अज्ञाते ब्रह्मणि शेते सुषुप्तौ इत्यर्थापयन्ति । अर्थान्तर तु विज्ञान—अर्थग्रहणशक्तिमन्ति इन्द्रियाणि तानि अज्ञातचैतन्यात्मना सुषुप्तौ जीवाभिन्न पर आकाशे शुद्धे स्वरूपे शेत इत्यथ । बहुषु स्थलेषु एवमेव वार्तिकतात्पर्याणि भाष्ये योजयन्त अश्रुतवार्तिकाना भाष्य पठितुमिच्छता वार्तिकश्रवणौत्सुक्य जनयन्ति । विज्ञाय प्रज्ञा कुर्वीत इति वाक्य मूलीकृत्य प्रसख्यान तत्त्वज्ञानार्थं कर्तव्यमिति वदता मत निराकृत्य ये उक्तवाक्यस्य समविधानर्थान प्रदर्शयन्ति टिप्पण्या च स्पष्टीकुर्वन्ति टिप्पणकारा । मीमासाशास्त्रत उद्धृतान्य-धिकरणानि मीमासाप्रत्यपरिशीलनपूर्वक प्रकृते योजयन्ति । यथा अर्थैकत्वादेक वाक्य (पृ० ५११)। साख्याभिमत पुरुषबहुत्व टिप्पणकारा सतश खण्डयन्ति (पृ० ५२३)। वार्तिकोक्तानि जीवभेदानु-मानखण्डनपराण्यनुमानानि स्वय विवृणोति "ऐकात्म्यवन्तो देहा स्युर्विवादो येषु वर्तते। शरीरत्वा-विशेषत्वात्प्रतिवादिशरीरवत्" ॥ इत्यादिना ।

कि बहुना भाष्यतट्टीकोपेत विस्तृतटिप्पणीव्याजेन भाष्यटीकयोर्व्याख्यानरूपया वार्तिकार्थ-सयोजनेन बृहदारण्यकभाष्यटीकावार्तिकादीना समेषा ग्रन्थानामभिप्रायावगमहेतुभूतया सवलितमिद सस्करण छात्राणामध्यापकाना मुमुक्षूणा चात्यन्तोपकारकमित्यत्र न कोऽपि सशय । हिन्दीभाषया भाष्यविवरण सस्कृतानभिज्ञान् बोधयितु महदुपकारकमिति स्पष्टमेव ।

अस्या च श्रीकैलासाश्रमग्रन्थमालाया ईशाद्युपनिषदा श्रीग्रानन्दगिरिटीकासहित श्रीशाङ्कर-भाष्य महामण्डलेश्वरश्रीविष्णुदेवानन्दगिरिस्वामिना विस्तृतटिप्पण्या श्रीकैलासाश्रमस्थापनशताब्दी-महोत्सवे श्रीमहामण्डलेश्वरविद्यानन्दगिरिमहाभागाना आध्यक्ष्येण सम्वत्स्यमाने प्रकाश्यमान समेषा विदुषा वेदान्तश्रद्धावता च महते प्रमोदाय भवति । सटिप्पणबृहदारण्यकभाष्यटीकात्मकेऽस्मिन् विभागे सयोजितम् । श्रीविष्णुदेवानन्दगिरिस्वामिविरचित क्रोडपत्र इम विभाग परमोत्कर्ष प्रापयतीति ।

संन्यासाश्रमहरिद्वारवास्तव्यवेदान्तज्योतिषाचार्यस्वामियोगेन्द्रानन्दगिरिमहाभागानां

# सम्मतिः

इह खलु नैसर्गिकरूपेण चक्रवदावर्तमाने सत्त्वाऽसत्त्वाभ्याञ्चाऽनिर्वचनीयतयाऽऽविद्यकत्वेनाऽऽपातरमणीयेऽनादिसंसारे सकलो हि जीवलोकः सुखाभीप्सया दुःखजिहासया च निरन्तरं प्रवर्तमानो रागद्वेषमदमोहमात्सर्यादिवैगुण्यविकारैः प्रतिक्षणं स्वान्तःकरणं विकुर्वन् स्वस्य च कल्पनयैवेष्टाऽनिष्टे परिकल्प्याऽनुकूलवेदनीये वस्तुनि समासक्तिं बध्नन् प्रतिकूलवेदनीये च द्विषन् प्रचण्डाऽऽध्यात्मिकादितापत्रयसीमानमुल्लङ्घयितुमसमर्थो वर्तत इति सर्वैरनुभूयत एव। तत्रैव महान्तः पारिणामिकमविद्यास्वभावं निरीक्ष्य काम्य-निषिद्धकर्मवर्जनपुरःसरं नित्यनैमित्तिकादिनिष्कामकर्माऽनुष्ठानपरतया निर्गलितनिखिलकल्मषत्वेन नितान्तनिर्मलस्वान्तःकरणस्य साधनचतुष्टयसम्पन्नस्य च जिज्ञासोर्दुःखनिवृत्तेर्लौकिकोपायाऽसाध्यतां समालोच्य तदात्यन्तिकनिवृत्तिं मार्गन्तो निरतिशयानन्दावाप्त्यर्थं तदुपायतया पराविद्याया प्रवृत्तिर्भवति। अत्र च "परा यया तदक्षरमधिगम्यते" इति श्रुत्याऽऽक्षराधिगमहेतुर्विद्या पराशब्देन व्यवह्रियते; अक्षरञ्च त्रिकालाऽबाध्यं देशकालवस्तुपरिच्छेदशून्यं सच्चिदानन्दघनं स्वयंज्योतिर्ब्रह्मैवापरम्, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिश्रुतेः। तस्मात् सकलसंसारदुःखनिवर्हणेयं विद्या—अक्षरविद्या ब्रह्मविद्या, उपनिषदित्यादिशब्दैः समानार्थकतया कथ्यते। अत एव श्रीमद्भगवत्पादाचार्या अपि भाष्यमाभाषमाणाः—"य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजरारोगाद्यनर्थपूगं निशातयति, परं ब्रह्म वा गमयति अविद्यादिसंसारकारणञ्चाऽत्यन्तमवसादयति विनाशयतीत्युपनिषदि"त्यवोचन्।

एवंभूतगुणविशिष्टोपनिषदामुपर्याचार्यकृतभाष्येषु मध्ये बृहदारण्यकोपनिषद्भाष्यमतिगम्भीरं वर्तते। इदं बृहदारण्यकमपि माध्यन्दिनकाण्वशाखाभेदेन क्वचित् स्वल्पपाठान्तरत्वात् द्विविधं दृश्यते। तत्र श्रीमद्भगवत्पादाचार्या अपि काण्वशाखीयब्राह्मणकुलेऽवतीर्णत्वात् स्वशाखीयशतपथब्राह्मणान्तर्गतं बृहदारण्यकोपनिषदमवलम्ब्यैव सुललितप्रासादगुणविशिष्टभाषया सर्ववेदान्तसंग्रहात्मकं विस्तीर्णभाष्यं सुस्पष्टं कृतवन्तः। आनन्दगिरिकृतटीकासहितस्यैवंभूतभाष्यस्य ऋषिकेशस्थकैलासाश्रमेऽतिप्राचीनकालतः परम्परया प्रचलितस्वाध्यायप्रवचनावसरे ब्रह्मलीनैः श्रीमत्परमहंसपरिव्राजकाचार्यवर्यैः ब्रह्मनिष्ठस्वामिगोविन्दानन्दमहाराजैर्लिखिता विस्तीर्णटिप्पणी अमुद्रितरूपेण साम्प्रतमपि वर्तते। तदनन्तरमपि पदवाक्य-प्रमाणपारावारैः प्रातःस्मरणीयैर्ब्रह्मलीनैः श्रोत्रियब्रह्मनिष्ठैः श्रीमत्परमपूज्यपादमहामण्डलेश्वरैर्यतिकुलशिरोभूषणैर्विद्यावाचस्पतिभिः स्वामिविष्णुदेवानन्दगिरिमहाराजैः कृता संक्षिप्तापि सारगर्भिता टिप्पण्युपलभ्यते। तया संक्षिप्तटिप्पण्या सह राष्ट्रभाषानुवादसमलङ्कृतमिदं बृहदारण्यकभाष्यमानन्दगिरिटीकासहितमधुना वर्तमानश्रीकैलासाश्रमपीठाधीश्वरैरनन्तश्रीविभूषितैरैहिकामुष्मिकफलभोगविरक्तैः श्रद्धालुजिज्ञासुजनानां मानसकैरवं विकासयद्भिर्मोहान्धकारहारिभिः स्वाध्यायप्रवचनाभ्यां निरन्तरं लोककल्याणकारिभिर्ज्ञानामृतपानमदविस्मृतवितथव्यवहारैरपि केवलमहैतुकया दयया लोकोपकाराय कृतपुरुषार्थैर्विद्वत्प्रवरैर्महामण्डलेश्वरैः स्वनामधन्यैश्च श्रीस्वामिविद्यानन्दगिरिमहोदयैः खण्डशः प्रकाशितुमारब्धम्। तत्राऽऽद्यखण्डरूपेण प्रथममध्यायद्वयात्मकमिदममूल्यग्रन्थरत्नं निर्विघ्नं प्रकाशितं सञ्जायते। एतदर्थं श्रीस्वामिपादाः कोटिशो धन्यवादार्हाः। आशासेऽग्रेऽप्येवं प्रशंसनीयपुरुषार्थमवलम्ब्य श्रीस्वामिपादाः शेषभागमप्यतिशीघ्रं प्रकाशयिष्यन्तीति॥

---

# विषयानुक्रमणिका


| | |
|---|---|
| मङ्गलाचरण | १ |
| उपनिषत् के आरम्भ का प्रयोजन | ३ |
| उपनिषत् शब्द के अर्थ की निरुक्ति | ४ |
| बृहदारण्यक उपनिषत् के नामकरण मे हेतुनिरूपण | ५ |
| उपनिषत्प्रतिपाद्य विषय पर विचार | ५ |
| देहात्मवादियों के मत का खण्डन | ७ |
| प्रामाण्यवाद निरूपण | ९ |
| 'उषा वा अश्वस्य' इस मन्त्र का प्रयोजन | १५ |
| नामरूपकर्मात्मक ससार का स्वरूप | १८ |
| अश्वाङ्ग दर्शन | १९ |
| अश्वमेध उपयोगी अग्नि की उपासना का वर्णन | २८ |
| सृष्टि प्रक्रिया कथन शून्यवाद का खण्डन | २९ |
| उत्पत्ति से पूर्व कार्य की सिद्धि | ३५ |
| अर्कशब्द का निर्वचन | ४९ |
| प्रजापति का विभागत्रय निरूपण | ५१ |
| प्रथम एव द्वितीय ब्राह्मण का साराश | ६४ |
| तृतीय ब्राह्मण के विषय का कथन | ७० |
| ज्ञानकर्म का फल व प्रयोजन | ७० |
| मृत्यु एव उसकी उत्पत्ति का वर्णन | ७१ |
| ज्ञान निरूपण मे हेतु | ७५ |
| ज्ञान का अनधिगतार्थ एव अबाधितार्थविषयक होना | ८४ |
| कर्मों के काम्यत्व और नित्यत्व विभाग का खण्डन | ९३ |
| वागादिसङ्घातकर्तृक व्यवहार | |
| अविद्या का आश्रय | ९६ |
| आङ्गिरसनिरूपण | १०६ |
| दूर्देवता निरूपण | १०९ |
| श्री कैलासविद्या प्रकाशक क्रोडपत्र का प्रारम्भ | ११२ |
| प्राणोपासना मे हेतु कथन | १२५ |
| सामकी निरुक्ति एव उपासना का फल | १३० |
| उद्गीथ निरुक्ति एव इसकी उपासना का फल | १३४ |
| 'असतो मा सद्गमय' "तमसो मा ज्योतिर्गमय" "मृत्योर्माऽमृत गमय" इन यजुर्मन्त्रों का तिरोहित अर्थ निरूपण | १४४ |
| पूर्व ब्राह्मण से चतुर्थ ब्राह्मण के प्रतिपाद्य विषय का सबन्ध | १५१ |
| प्रजापति के भययुक्त होने मे हेतु | १५७ |
| एकत्वज्ञान की भयुक्तता का खण्डन | १६१ |
| प्रजापति के एकाकीरमण न करने मे हेतु | १६७ |
| सृष्टि निरूपण | १७० |
| प्रजापति के स्वरूप मे विविधमत निरूपण | १७८ |
| सोमात्मक अतिसृष्टि का कथन | १८३ |
| प्रवेशवादी मत निरूपण एव उसका निराकरण | १९४ |
| आत्मा की उपासना मे अपूर्वविधि का निराकरण | २१५ |
| आत्मा के पदनीय होने मे हेतु प्रतिपादन | २३८ |
| 'प्रिय'नाम आत्मा की उपासना व उसका फल | २४३ |
| ब्रह्मविज्ञान से सर्वात्मभाव प्राप्ति | २४८ |
| ब्रह्मदर्शन का प्रतिपादन | २७१ |
| अल्पसामर्थ्य सम्पन्न कलियुगी जीवो को भी ब्रह्मविद्या प्राप्ति सभव | २७७ |
| देवताओ द्वारा विघ्न सम्पादन वर्णन | २७८ |
| आत्माकारवृत्ति अविद्या की निवृत्ति करने मे हेतुक | २८५ |
| देवादि ऋणो के स्वरूप एव कार्य का निरूपण | २९२ |

| | |
|---|---|
| वर्णाश्रमादि सृष्टि निरूपण | २६८ |
| भर्तृप्रपञ्च मत 'कर्म विद्यासाहचर्य होने से क्षीण नहीं होता' इसका निराकरण | ३१३ |
| कार्य का स्वरूप निरूपण | ३२० |
| एषणात्रयनिरूपण | ३२५ |
| पूर्णतासम्पादन का प्रकार एवं उपाय | ३२८ |
| मानुष एवं अमानुषवित्त | ३२६ |
| सप्तान्नसृष्टि निरूपण | ३३१ |
| श्रुतिवाक्य द्वारा इसके अर्थ का स्पष्टीकरण करना | ३३४ |
| ससार से विरक्त हुए पुरुष के लिए ब्रह्मविद्या का प्रारम्भ | ३३८ |
| साधारण अन्न के विषय मे भर्तृप्रपञ्च का मत एवं उसका निराकरण | ३४२ |
| अन्न का हुत एव अहुत प्रविभाग निरूपण | ३४३ |
| अन्न के अक्षय होने मे हेतु | ३५१ |
| मन के उपास्तित्व और स्वरूप के विषय पर विचार | ३५६ |
| वाक के स्वरूप का निरूपण | ३५८ |
| प्राण के स्वरूप का निरूपण | ३५६ |
| वाक्, मन और प्राण का आधिदैविक अर्थ | ३६४ |
| प्राणविज्ञान का फल | ३६८ |
| अन्नत्रय का सवत्सर रूप से वर्णन एव उसके ज्ञान का फल | ३७० |
| लोकत्रयनिरूपण एव उसका फल | ३७६ |
| प्राजापत्य पद पर विद्यमान विद्वान् का फल | ३६४ |
| व्रतमीमासा विचार | ३६५ |
| अर्थ प्रकाशक मन्त्र | ४०२ |
| नाम, रूप और कर्म का निरूपण | ४०६ |
| पूर्व अध्याय से सबन्ध | ४१५ |
| अत्यन्त सूक्ष्म आत्मतत्त्व को सरलता से समझाने के लिए अजातशत्रु आख्यायिका का निरूपण | ४१७ |
| आदित्य पुरुष की उपासना व फल | ४२२ |
| चन्द्रममण्डलान्तर्गत पुरुष की उपासना व फल | ४२४ |
| विद्युत् पुरुष की उपासना व फल | ४२५ |
| आकाश पुरुष की उपासना व फल | ४२६ |
| वायु पुरुष की उपासना व फल | ४२७ |
| अग्नि पुरुष की उपासना व फल | ४२८ |
| आदर्श पुरुष की उपासना व फल | ४२६ |
| शब्द पुरुष की उपासना व फल | ४३० |
| दिक् पुरुष की उपासना व फल | ४३१ |
| छायामय पुरुष की उपासना व फल | ४३२ |
| बुद्धिमय पुरुष की उपासना व फल | ४३२ |
| गार्ग्य द्वारा चुप हो जाने पर अजातशत्रु द्वारा आत्मतत्त्व विवेचन का वर्णन | ४३५ |
| सुषुप्त अवस्था का वर्णन | ४६५ |
| 'वह कहाँ से आया' इसका निरूपण | ४७३ |
| ब्रह्मविद्या सच्छास्त्रप्रामाण्य | ४८१ |
| परमात्मा से ही सृष्टि सभव | ४८७ |
| ब्रह्म का प्रवेश श्रुतिसम्मत है | ४६० |
| अभेद मे शास्त्र का अर्थ | ४६१ |
| अग्निविस्फुलिङ्ग दृष्टान्त | ४६५ |
| आख्यायिका द्वारा जीवात्मा-परमात्मा के ऐकात्म्यज्ञान की स्थापना | ४६६ |
| भ्रमजन्य अध्यास से परे वह तत्त्व है | ५०३ |
| कर्मकाण्ड की प्रामाणिकता एव अप्रामाणिकता पर चर्चा | ५०६ |
| उपनिषत्प्रामाण्य का प्रतिषेध करना असम्भव है। | ५१० |
| साख्यमत निराकरण | ५२३ |
| परब्रह्म से पृथक् कुछ नही | ५२५ |
| पञ्चभूतात्मक सत्य निर्धारण करने के लिए मूर्तामूर्त ब्राह्मण का प्रारम्भ | ५२८ |
| द्वितीय ब्राह्मण से तृतीय ब्राह्मण का सबन्ध प्रदर्शन | ५४० |
| ब्रह्म का मूर्त-अमूर्तादि विभाग प्रतिपादन | ५४१ |
| भर्तृप्रपञ्च मत निरूपण एव उसका निराकरण | ५४७ |
| अध्यात्म मूर्तामूर्त विभाग प्रतिपादन | ५५० |

| | | | |
|---|---|---|---|
| निखिल प्रपञ्च में तादात्म्य होकर ब्रह्म के सत्यत्व की प्रतीति | ५५३ | सैन्धवखिल्य दृष्टान्त द्वारा परमार्थ दृष्टि का निरूपण | ६०६ |
| भर्तृप्रपञ्चमतानुसारी राशित्रय कल्पना इनका साख्यो से मतैक्य तथा निरास | ५५५ | विज्ञानघन सर्वजगत् का आत्मा है | ६१७ |
| 'नेति नेति' उपदेश ही आदेश है | ५६६ | आत्मज्ञान हो जाने पर कोई कर्तव्य कर्म शेष नही रहता, द्वैत अविद्यावस्था मे ही रहता है। | ६१६ |
| आत्मतत्त्व ही गवेषणीय है | ५७१ | पञ्चम ब्राह्मण प्रारम्भ मे हेतु | ६२५ |
| अङ्गत्व रूप से सन्यास का विधान | ५७३ | पृथिवी सब भूतो की मधु है | ६२८ |
| ब्रह्मज्ञानी का एषणात्रय से सबन्ध नही होता | ५७७ | इसी प्रकार जल, अग्नि, वायु, आदित्य, दिशा, चन्द्रमा, विद्युत्, स्तनयित्नु, आकाश, धर्म, सत्य, मनुष्य एव आत्मा सब भूतों के मधु हैं। | ६३१ |
| प्रवृत्तिलक्षणकर्म और निवृत्तिलक्षण ज्ञान मे परस्पर विरोध है | ५७८ | | |
| आख्यायिका द्वारा सन्यास का विधान | ५८० | सभी कुछ सर्वात्मा मे समर्पित है | |
| जाया, पति, पुत्रादि अपने प्रयोजन के लिए प्रिय होते हैं | ५८४ | इसका रथनाभि रथनेमि दृष्टान्त से प्रतिपादन | ६४२ |
| आत्मा से व्यतिरिक्त कोई वस्तु नही | ५६० | ब्रह्मविद्या की स्तुति | ६५० |
| नक्कारे, दुन्दुभि, वीणा एव गीली लकडी के दृष्टान्त द्वारा प्रतिपादन | ५६२ | मधु विज्ञान का माहात्म्य | ६५२ |
| | | वशानुक्रम वर्णन | ६६५ |
| प्रलयदर्शन दृष्टान्त | ६०२ | अकारादिक्रम से मन्त्रो की सूची | ६७० |

## ★ किञ्चित्प्रास्ताविकम् ★

इह जगति प्राणभृन्मात्रस्याऽऽध्यात्मिकाऽऽधिभौतिकाऽऽधिदैविकतापं नितरा तातप्यमानस्य तस्याऽऽत्यन्तिकदु खनिवृत्तिपूर्वक नित्यनिरतिशयपरमानन्दावाप्त्यर्थं यथाशक्तिप्रयतमानस्यापि मनोरथपूर्तिर्न जायते। यत्तत्प्रकारस्याज्ञानादनुपाये उपायभ्रमाद्वा जानतोऽपि प्रमादवशाद्मन्दप्रयत्नान्मुधैवातिदुर्लभस्य मानुषदेहस्यापव्ययम करोति। समस्तदु खनिवृत्त परमानन्दावाप्तेश्च साधनञ्चाबाधितप्रामाण्याद्वेदादेव प्रसिद्ध्यति। तत्रापि परमप्रमाणस्य वेदान्तस्यैव सामर्थ्यमिति सर्वासामुपनिषदा बृहदारण्यकस्यवेति प्रसिद्धमेव। अन्यतोऽर्थतश्च बृहत्त्वादरण्येऽनूच्यमानत्वाच्च बृहदारण्यकमिति नाम्ना प्रथितस्य तैत्तिरीयारण्यकाद्यारण्यकान्तरापेक्षया बृहत्त्वाच्च शुक्लयजुर्वेदीयशतपथब्राह्मणान्तर्गतस्यास्य प्रवर्ग्यमधुमुनिखिलकाण्डचतुष्टयात्मकस्य प्रवर्ग्यकाण्ड विहाय काण्डत्रयात्मकस्योपनिषद्भागस्य परमहसपरिव्राजकाचार्यकैलासाश्रमाध्यक्षमहामण्डलेश्वरस्वामिनोविद्यानन्दगिरीति ख्यातस्य स्वोपज्ञटिप्पणसमन्वितस्यानन्तश्रीमत्परमहसपरिव्राजकाचार्यविद्यावाचस्पतिकैलासाश्रमाध्यक्षमहामण्डलेश्वरस्वामिविष्णुदेवानन्दगिरिसगृहीतस्यानन्दगिरिव्याख्यान्वितशाङ्करभाष्यापेतस्य यतीन्द्रकुलतिलकश्रीकैलासविद्यापीठाधीश्वरमहामण्डलेश्वरानन्तश्रीस्वामिविद्यानन्दगिरिमहानुभावकृपापात्रडाक्टरोमेशानन्दशास्त्रिनिर्मितनृगिरानूदितस्यापूर्व सस्करण सर्वेषामुपकारक भूयादित्याशासानो

हृषीकेशकैलासाश्रमे
गुरुपूर्णिमाया सवत् २०३६।

विद्वद्विधेय
हरिहरतीर्थः
श्रीकैलासाश्रमब्रह्मविद्यापीठस्य सञ्चालक सचिवश्च कैलासाश्रमन्यासस्य।

ॐ तत्सद्ब्रह्मणे नमः ।

# बृहदारण्यकोपनिषत्

सटिप्पणटीकाद्वयसंवलितशांकरभाष्यसमेता ।

( अथ श्रीमच्छंकरभगवत्पादविरचितं भाष्यम् । )

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्या[1]संप्रदायकर्तृभ्यो [2]वंशऋषिभ्यो नमो गुरुभ्यः ।

( अथाऽऽनन्दगिरिकृता बृहदारण्यकभाष्यटीका )

यदविद्यावशाद्विश्वं दृश्यते [3]रशनाहिवत् । यद्विद्यया च तद्धानिस्तं वन्दे पुरुषोत्तमम् ॥१॥
नमस्त्रय्यन्त[4]संदोहसरसीरुहभानवे । गुरवे [5]परपक्षौघध्वान्तध्वंसपटीयसे ॥२॥
भगवत्पादपादाब्जद्वद्वं द्वंद्वनिबर्हणम् । सुरेश्वरादिसद्भृङ्गैर[6]वलम्बित[7]माभजे ॥३॥
बृहदारण्यके भाष्ये शिष्यो[8]पकृतिसिद्धये । सुरेश्वरोक्तिमाश्रित्य क्रियते [8]न्यायनिर्णयः ॥४॥

अथ डा० उमेशानन्दशास्त्री कृत 'कुमुदतोषिणी' टीका

यो भूर्भुव स्वरभित परिपूर्णभूमा कालात्मना प्रतिपद स्वयमस्ति भाति ।
देव स विष्णुपदवृत्तिमपेक्ष्य दक्षिणामूर्तिरेव ददता मधुरामृत न ॥१॥
छन्दोऽपवर्गसार भुवि विद्यानन्दमन्तत स्तौमि । कैलासे मुनिवृन्दे महोमदीय परिस्फुटति ॥२॥
श्रवणान्तसरस्वन्त तरीतु धृतमेधसाम् । हृदय ह्लादयन्तीय टीका कुमुदतोषिणी ॥३॥

ॐ ब्रह्म विद्या सम्प्रदाय के कर्ता आचार्य परम्परा के (पौतिमाष्यादि) ऋषियो, हिरण्यगर्भादि एव गुरुदेव को नमस्कार है।

अथविद्यावाचस्पतिस्वामिविष्णुदेवानन्दरचितटिप्पणम्

यद्ब्रह्मविष्णुशिवरूपतया प्रतीतम्, सृष्टिस्थितिप्रलयकारणतामुपैति ।
तद्ब्रह्म नित्यनियमान्तपदैकवेद्य स्वत स्फुरतु वस्तु निरन्तर व ॥१॥
नास्मात्किञ्चिदुदेति नास्तमयते नास्मिन्पुनर्लीयते, चिन्मात्र परमार्थतस्तु सकले ज्योतिर्मय भासते ।
जातिव्यक्तिविवर्जित बहुमत सर्वप्रपञ्चातिगम्, स्वान्तध्वान्तमतीत्य यत्र शमिन भ्राम्यन्ति तस्मै नम ॥२॥
रजस्तम—सत्त्वगुणावभासिनी स्वत प्रदीप्ता चितिरेव शान्तिदा ।
सदा भवद्भूतभविष्यभास्वती, स्तवीमि शक्ति चितिमेव केवलाम् ॥३॥

१ सम्प्रदाय—शिष्येभ्य सम्प्रदानम्—सम्यक्प्रदानम् । २ वश आचार्यपरम्परयोपदेश इति यावत् । ३ रशना कटिसूत्रम् मेखलापरपर्य्याया । ४ सदोह समूह । ५ परपक्षौघ भेदवादिसमूह । ६ आ समन्तात् श्रद्धाभक्त्युद्रेकेणेत्यर्थ । ७ उपकृति असम्भावनाविपरीतभावनाराहित्येन वाक्यार्थबोधरूपा ग्राह्या । ८ न्यायनिर्णय इति न्यायानाम्—श्रुत्यर्थोपोद्बलकतया भाष्योक्ताना युक्तीनाम्, निर्णयो वादिशङ्किताभासनानिराकरणपुर सरमभिलषितार्थसाधकत्वव्यवस्थापनेत्यर्थ ।

"उषा वा अश्वस्य" इत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत् । तस्या इयमल्पग्रन्था वृत्तिरारभ्यते संसारव्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये ।

'काण्वोपनिषद्विवरणव्याजेनाशेषामेवोपनिषदं' शोधयितुकामो भगवान्भाष्यकारो विघ्नोपशमादिसमर्थं शिष्टाचारप्रमाणकं परापरगुरुनमस्काररूप मङ्गलमाचरति—ॐ नमो ब्रह्मादिभ्य इति । वेदो हिरण्यगर्भो वा ब्रह्म तन्नमस्कारेण सर्वा देवता नमस्कृता भवन्ति "तदर्थत्वात्तदात्मकत्वाच्च "एष उ ह्येव सर्वे देवाः' इति श्रुतेः । आदिपदेन 'परमेष्ठिप्रभृतयो गृह्यन्ते । यद्यपि तेषामुक्तो ब्रह्मान्तर्भावस्तथाऽपि तेष्वनादरनिरासार्थं पृथग्ग्रहणम् । चतुर्थी नमोयोगे । नमःशब्दस्त्रिविधप्रह्वीभावविषयः । ननु ब्रह्मविद्यां वक्तुकामेन किमित्येते नमस्क्रियन्ते सैव हि वक्तव्येत्यत आह— "ब्रह्म विद्येति । एतेषां तत्संप्रदायकर्तृत्वे "वंशब्राह्मणं प्रमाणयति—वंशऋषिभ्य इति । यद्यपि तत्र पौतिमाष्यादयो ब्रह्मान्ताः संप्रदायकर्तारः श्रूयन्ते ।"तथाऽपि गुरुशिष्यक्रमेण ब्रह्मणः "प्राथम्यमिति" "तदादित्वमिति भावः । संप्रत्यपरगुरुन्नमस्करोति—नमो गुरुभ्य इति । यद्यपि ब्रह्मविद्यासंप्रदायकर्त्रन्तर्भावादेते प्रागेव नमस्कृतास्तथाऽपि शिष्याणां गुरुविषयाद"रातिरेकार्थं पृथग्गुरुनमस्करणम् । 'यस्य देवे परा भक्तिः' इत्यादिश्रुतेरिति" ।

"यदुद्दिश्य मङ्गलमाचरितं तत्प्रतिज्ञातुं प्रतीकमादत्ते—उषा वा इति । "एतेन चिकीर्षितायाः वृत्तेर्भर्तृप्रपञ्चभाष्येणागतार्थत्वमुक्तम् । तद्धि "द्वया "इत्यादिमाध्यंदिनश्रुतिमधिकृत्य प्रवृत्तम् । इयं पुनः 'उषा वा अश्वस्य' इत्यादिकाण्वश्रुतिमाश्रित्येति । अथोद्देश्यं निर्दिशति—तस्या इति । भर्तृप्रपञ्चभाष्याद्विशेषान्तरमाह—अल्पग्रन्थेति । अस्या ग्रन्थतोऽल्पत्वेऽपि नार्थतस्तथात्वमिति "ग्रन्थस्य ग्रहणम् । वृत्तिशब्दो भाष्यविषयः । सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्य स्वपदानां चोपवर्णनस्य "भाष्य-

"उषा वा अश्वस्य" इस मन्त्र से प्रारम्भ होने वाली (काण्वश्रुति) वाजसनेयी ब्राह्मणोपनिषद् है । ससार से विरक्ति के इच्छुक प्राणियो के लिए, ससार के कारण अविद्या निवृत्ति के साधन ब्रह्मात्मैकत्वविद्या की प्राप्ति के लिए उसकी यह अल्प परिमाण ग्रन्थ वाली वृत्ति प्रारम्भ की जाती है ।

१. प्रतिज्ञाभाष्यम् । २ अधिकारिभाष्यम् । ३ फलभाष्यम् । ४ काण्वशाखीयोपनिषदित्यर्थः, भाष्यकारीया हीयम् शाखा । ५ ज्ञातविवरत्वम् । ६ निर्णीततात्पर्यविना वर्त्मना इत्यर्थः । ७ तदर्थत्वादिति वेदप्रतिपाद्यत्वादित्यर्थः । एष उ इत्यादिवाक्यतोऽव्यवहितपूर्वम् एतस्यैव सा विसृष्टिरिति वाक्यम् तथा च या विसृष्टि विविधा अन्यादिरूपेण देवाना सृष्टि सा एतस्य प्रजापतेरेव भेद । हि यस्मात्, उ तस्मात् सर्वे देवा एष एव प्रजापतिरेव तद्भेदत्वात् तदन्तर्गतत्वेन तदभिन्ना एवेति समुदायार्थः । ८ बृह० उ० १ ४ ६ । ९ विराड् । १० यत्कृपया ब्रह्मविद्या येषामनुग्रहात्प्राप्ता ते गुरव सदैव वन्द्या इति शिष्टाचारपरिपालनाय ते नमस्क्रियन्ते इति बोध्यमिति । ११. बृ. उ. २ ६-२ । १२. तथापीति अर्थक्रममाश्रित्येति शेष । पाठक्रमादर्थक्रमो बलीयानिति न्यायादिति भाव । १३ इति अर्थक्रमाश्रयणादित्यर्थः । १४. न तु ब्रह्मादय इति शेष । १५ तदादित्वमिति तेषु सम्प्रदायकर्तृषु ब्रह्मणं आदित्वमुक्तमिति शेष । १६. शिष्या गुरुष्वादरातिशय कुर्वन्त्विति बोधयितुमित्यर्थः । १७ मङ्गलभाष्यव्याख्यासमाप्त्यर्थं इति । १८. यदिति भाष्यप्रणयनमित्यर्थः । १९ उषा वेत्यादि प्रतीकोपादानेन । २०. द्वयाह प्राजापत्यादेवाश्चासुराश्चेत्यादीत्यर्थः । २१ बृह० उ० १-३-१ । २२ अन्यथाऽल्पावृत्तिरित्येवोच्येति बोध्यम् । २३ 'सूत्रार्थो वर्ण्यते यत्र वाक्यै सूत्रानुकारिभि । स्वपदानि च वर्ण्यन्ते भाष्य भाष्यविदो विदु' रिति तल्लक्षणम् । सूत्रानुकारिभिरिति सूत्रसदृशै. सग्रहवाक्यैरित्यर्थः । स्वपदानि च तान्येव सग्रहवाक्यानि ।

**सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्। उपनिपूर्वस्य सदेस्तदर्थत्वात्। तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते।**

---

लक्षणस्यात्र[2]भावादिति। ननु कर्मकाण्डाधिकारिणो[3]विलक्षणोऽधिकारी न ज्ञानकाण्डे संभवति[4]अर्थित्वादेः साधारणत्वाद्वै[5]राग्यादेश्च[6]दुर्वचनत्वात्। नच निरधिकारं शास्त्रमारम्भमर्हतीत्यत आह—संसारेति। कर्मकाण्डे हि[7]स्वर्गादिकामः[8]संसारपरवशो[9]नरपशुरधिकारी। इह तु संसाराद्व्यावृत्तिमिच्छवो[10]विरक्ताः। नच वैराग्यं दुर्वचं शुद्धबुद्धेर्विवेकिनो[11]ब्रह्मलोकान्ते[12]संसारे तत्संभवात्।

उक्तं हि—

"शोध्यमानं तु तच्चित्तमी[13]श्वरार्पितकर्मभिः।
वैराग्यं ब्रह्मलोकादौ व्यनक्त्याशु[14]सुनिर्मलम्" इति॥

[15]अतो यथोक्त[16]विशिष्टाधिकारिभ्यो वृत्तेरारम्भः संभवतीत्यर्थः। तथाऽपि विषयप्रयोजनसंबन्धानामभावे कथं वृत्तिरारभ्यते तत्राऽऽह—संसारहेत्विति। प्रमातृताप्रमुखः कर्तृत्वादिरनर्थः संसारस्तस्य हेतुरात्माविद्या तन्निवृत्तेः साधनं ब्रह्मात्मैकत्वविद्या तस्याः प्रतिपत्तिरप्रतिबद्धायाः प्राप्तिस्तदर्थं वृत्तिरारभ्यत इति योजना। [17]एतदुक्तं भवति—सनिदानानर्थनिवृत्तिः शास्त्रस्य प्रयोजनम्। ब्रह्मात्मैक्यविद्या तदुपायः। तदैक्यं विषयः। संबन्धो ज्ञानफलयोरुपायोपेयत्वम्। शास्त्रतद्विषययोर्विषयविषयित्वं तदारभ्यं[18]शास्त्रमिति।

---

वह यह ब्रह्मविद्या, उपनिषद् शब्द की वाचिका, अपने में तत्पर मनुष्यों के संसार का, कारण-सहितनाश करती है। 'उप' 'नि' पूर्वक षद्लृ (विशरणगत्यवसादनेषु) धातु का यही अर्थ है। ग्रन्थ के ब्रह्मविद्या में जनक एवं उपकारक होने के कारण इसे भी उपनिषद् कहा जाता है।

---

१. नामभाष्यम्। २. प्रतिज्ञाभाष्यव्याख्या समाप्त्यर्थ इति। ३. सकाशात्। ४. अर्थित्वादेरिति—अर्थी दक्षो द्विजोऽह बुध इतिमतिमान् कर्मसूक्तोऽधिकारी इत्यादि स्वाराज्यसिद्धयुक्तपद्यप्रतिपाद्यस्यार्थित्वादेरित्यर्थ। अत्रार्थित्वं द्रव्यवत्त्व स्वर्गाद्यभ्युदयार्थित्व च बोध्यम्। दक्षत्व क्रियाकुशलत्वम्। बुधत्वं चाधीतजैमिनीयशास्त्रत्वम् इत्यादिकं बोद्धव्यम्। ५. ननु अर्थित्वाद्यतिरिक्तं वैराग्यादिकमेव ब्रह्मविद्याधिकारिविशेषणम् तदुक्त शान्तो दान्तः परिव्राडित्यादीत्यत आह वैराग्यादेश्चेति। ६. दुःसम्पाद्यत्वात्। ७. अहमित्यस्य च वर्णाश्रमादिषु दृढाभिमानवानित्यर्थः। तत्रैव च शान्तो दान्त परिव्राड्परमपरमो ब्रह्मविद्याधिकारीत्युक्तम् स्वर्गपदेन पारलौकिककामत्वं सूचितम्। ८. कर्तृत्वाद्यभिमानाधीन। ९. हिताहितविवेकशून्य.।

१०. "त्यक्ताशेषक्रियस्यैव सगारं प्रजिहासतः। जिज्ञासोरेव चैकात्म्य मय्यन्तेष्वधिकारिता॥१॥
एतमेवेति च तथा प्रत्यग्याथात्म्यवित्तये। सर्वकर्मत्यजं प्राह श्रुतिर्विद्याधिकारिणम्॥२॥
प्रत्यग्विविदिषासिद्धयै वेदानुवचनादयः। ब्रह्मप्राप्त्यै तु तत्त्याग ईप्सन्तीति श्रुतेर्बलात्॥३॥"

इति वार्तिककृतोक्तत्वादित्यर्थ। इप्सन्तीत्यनेन एतमेव प्रव्राजिनो लोकमिच्छन्त इति माध्यन्दिनश्रुतेरेव पाठान्तरेण ग्रहणं वेदितव्यम्॥ ११. ब्रह्मलोकपर्यन्ते। १२. संसारमण्डले इत्यर्थः। १३. निष्कामकर्मभिरित्यर्थ। १४. मन्दमध्यमतारूप्यमलापकरणायोक्तं सु इति तीव्रतरवैराग्यमित्यर्थः। १५ वैराग्यादेः सुवचत्वादित्यर्थः। १६ कर्मकाण्डाधिकारितो विलक्षणेत्यर्थः। १७. एतदुक्तं भवतीति अधिकारिभाष्यफलभाष्याभ्यामित्यादिः। १८. फलभाष्यसमाप्त्यर्थ इति शब्दः।

*प्रयोजनादिषु प्रवृत्त्यङ्गतयोक्तेष्वपि सर्वव्यापाराणां प्रयोजनार्थत्वात्तस्य प्राधान्यम् ।*
उक्तं हि—

> "सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् ।
> यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते" इति ॥

तथाच शास्त्रारम्भोपयिकं प्रयोजनमेव नामव्युत्पादनद्वारा व्युत्पादयति—सेयमिति । अध्यात्मशास्त्रेषु प्रसिद्धा संनिहिता चात्र ब्रह्मात्मैक्यविद्या तन्निष्ठानां सर्वकर्मसंन्यासिनां सनिदानस्य संसारस्यात्यन्तनाशकत्वादुपनिषच्छब्दवाच्या । 'उपनिषदं भो ब्रूहि' इत्याद्या च श्रुतिः । तस्मादुपनिषच्छब्दवाच्यत्वेऽप्येतावानर्थो लभ्यते तत्राऽऽह—उपनिपूर्वस्येति । अस्यार्थः—'षद्लृ विशरणगत्यवसादनेषु' इति स्मर्यते । सदेर्धातोरुपनिपूर्वस्य क्विबन्तस्य सहेतुसंसारनिवर्तकब्रह्मविद्यार्थत्वादुपनिषच्छब्दवाच्या सा भवत्युक्तफलवती । उपशब्दो हि सामीप्यमाह । तच्चासति संकोचके प्रतीचि पर्यवस्यति । निशब्दश्च निश्चयार्थः तस्मादैकात्म्यं निश्चिन्वतां तद्विद्या सहेतुं संसारं सादयतीत्युपनिषदुच्यते । उक्तं हि—"अवसादनार्थस्य चावसादात्' इति । ब्रह्मविद्यैव चेदुपनिषदिष्यते कथं तर्हि ग्रन्थे वृद्धास्तच्छब्दं प्रयुञ्जते न खल्वेकस्य शब्दस्यानेकार्थत्वं न्याय्यमित्याशङ्क्याऽऽह—ताद्र्थ्यादिति । ग्रन्थस्य ब्रह्मविद्याजनकत्वादुपचारात्तत्रोपनिषत्पदमित्यर्थः ।

यथोक्तविद्याजनकत्वे ग्रन्थस्य किमिति तदध्येतॄणां सर्वेषां विद्या न भवतीत्याशङ्क्य श्रवणादिपराणामेवारण्यानुवचनादिनियमाधीताक्षरेभ्यस्तज्जन्मेति बृहदारण्यकनामनिर्वचनपूर्वकमाह—सेयमिति । अथारण्यानुवचनादिनियमाधीतवेदान्तानामपि केषांचिद्विद्यानुपलम्भात्कुतो यथोक्ताक्षरेभ्यस्तदुत्पत्तिरित्यत आह—बृहत्त्वादिति । उपनिषदन्तरेभ्यो ग्रन्थपरिमाणातिरेकादस्य बृहत्त्वं प्रसिद्धमर्थतोऽपि तस्य तदस्ति ब्रह्मणोऽखण्डैकरसस्यात्र प्रतिपाद्यत्वात्तज्ज्ञानहेतूनां चान्तरङ्गबहिरङ्गाणां भूयसामिह प्रतिपादनात् । अतो बृहत्त्वादारण्यकत्वाच्च बृहदारण्यकम् । नचैतदशुद्ध-

---

१ प्रवृत्तिप्रयोजकतयेत्यर्थः । २ प्रयोजनस्य प्राधान्ये निश्चिते सतीत्यर्थः । ३ प्रयोजकम् । ४ नामकथनद्वारा कथयतीत्यर्थः । ५ ननु नामभाष्येण प्रयोजनमुक्तं चेत् तत्कामोऽधिकारी अर्थात्सिद्धोऽन्यो व्यर्थमधिकारिभाष्यमित्याशङ्क्य तस्य तात्पर्यमाहुर्वार्तिककाराः—

'मिथोविरोधसिद्ध्यर्थं धर्मब्रह्माधिकारिणोः । समाख्यातिवृतमुष्य इत्युक्ति भाष्यकृज्जगाविति ॥"

६ यत उपनिषदं भो ब्रूहीत्याद्याश्रुतिः । ७ तस्मात्—उपनिषन्नाम व्युत्पत्तेः श्रुतेश्चेत्यर्थः । श्रुतौ हि ब्रह्मविद्यार्थक एवोपनिषच्छब्दः । ८ एतावानिति—सहेतुसंसारनिवर्तकत्वपरिमाणक इत्यर्थः । उपनिषच्छब्दस्याम्नायविशेषे रूढेस्तामतिलङ्घ्य अवयवार्थेन कुतोऽर्थान्तरे वृत्तिर्योगाद्रूढिर्बलीयसीति न्यायादिति भावः । ९ नात्राभिधावृत्तिः समुदायशक्तेरसत्त्वात् प्रसिद्धेस्तु गतिर्वक्ष्यते अतो नेह स न्यायोऽवतरति योगरूढ्युभयसंभवस्थल एव तन्न्यायावतारादिति । अभिधावृत्तेस्तात्पर्यवृत्तिर्बलीयसीति न्यायं चाभिप्रेत्य भाष्यं व्याकुर्वन्नुपोपसर्गस्य वाच्यार्थमाह—उपशब्द इति । १० तच्चेति अव्यवहितस्वरूपसामीप्यं चेत्यर्थः । ११ अन्तर्बहिर्विभागहीन आत्मनीत्यर्थः । १२ पर्यवस्यतीति तात्पर्यवद्भवतीत्यर्थः । तथा च सर्वतो व्यवधानाभावोपलक्षितचैतन्यमुपोपसर्गलक्ष्यमिति ध्येयम् । १३ तस्मादिति अवयवार्थस्य तस्याः पौष्कल्यादित्यर्थः । १४ अवसादनार्थस्य सदिधातोः अवसादरूपार्थस्य ब्रह्मविद्यायां समन्वयादिति सूत्रार्थः । १५ गौरवादिति भावः । १६ जन्यजनकयोरभेदारोपादित्यर्थः । १७ श्रवणादावारण्याध्यायिनाम् । १८ अनुवचनमध्ययनम् ।

[1]सेयं षडध्याय्यरण्येऽनूच्यमानत्वादारण्यकम् । बृहत्त्वात्परिमाणतो [2]बृहदारण्यकम् । [3]तस्या[4]स्य कर्मकाण्डेन संबन्धो[5]ऽभिधीयते ।

सर्वोऽप्ययं[6] वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्वपुरुषाणां निसर्गत[7] एव तत्प्राप्तिपरिहारयोरिष्टत्वात् ।

बुद्धेरधीतमपि विद्यामादधाति । "कषाये कर्मभिः पक्वे ततो ज्ञानम्" इति स्मृतेरित्यर्थः" । ज्ञानकाण्डस्य "विशिष्टाधिकार्यादिवैशिष्ट्येऽपि कर्मकाण्डेन नियतपूर्वापरभावानुपपत्तिलभ्यः संबन्धो वक्तव्यः । स च परीक्षकविप्रतिपत्तेरशक्यो "विशेषतो ज्ञातुमित्याशङ्क्याऽऽह—तस्येति ।

प्रतिज्ञातं संबन्धं "प्रकटयितुमसिद्धप्रमाणभावानां वेदान्तानां संबन्धाभिधानां"वसराभावा-

यह यह षडध्यायी, अरण्य में कही जाने के कारण आरण्यक है । परिमाण में बड़ी होने के कारण बृहदारण्यक है । अब इसके इस ज्ञानकाण्ड का कर्मकाण्ड से सम्बन्ध बतलाया जाता है ।

*यह सारा ही काण्डद्वयात्मक वेद, प्रत्यक्ष अनुमानादि प्रमाणों से अनधिगत, इष्ट-प्राप्ति और अनिष्टनिवृत्ति* के उपायों को प्रकाशित करने वाला है, क्योंकि "मुझे सुख मिले, दुःख न मिले" ऐसा सब मनुष्यों को स्वाभाविक रूप से ही इष्ट है ।

१ सेयं षडध्यायीति ।

"अरण्याध्ययनादेतदारण्यकमुदीर्यते । बृहत्त्वाद्ग्रन्थतोऽर्थाच्च बृहदारण्यकं मतम् ॥१॥
बृहदारण्यके काण्डत्रयमाद्यं मधुरमृतम् । द्वितीयं याज्ञवल्कीयास्यं तृतीयं खिलसंज्ञकम् ॥२॥
उपदेशोपपत्ती द्वे उपास्तिश्चेति ते त्रयः । अर्था क्रमेण काण्डानां प्राधान्येन निरूपिताः ॥३॥
मधुकाण्डे तु चत्वारोऽध्यायास्तत्राद्ययोर्द्वयोः । प्रवर्ग्यसंज्ञकं कर्म प्रोक्तं नोपनिषत्ततः ॥४॥
विद्यासंनिधिपाठेऽपि विद्याशेषं न कर्मणः । अरण्याध्ययनायैव विद्यासंनिधिरिष्यते ॥५॥
गुणोपसंहृतावेतत्सूत्रकारेण वर्णितम् । अतस्तृतीयमारभ्य व्याख्यानं न तु पूर्वयोः ॥६॥
अध्यारोपापवादाभ्यां मधुकाण्डं प्रवर्तते । अध्यारोप्य तृतीयेन चतुर्थेन त्वपोद्यते ॥७॥
षड्ब्राह्मणानि ज्ञेयानि तृतीये ब्राह्मणत्रयम् । आद्यं संसारसीमान्तसाधनप्रतिपादकम् ॥८॥
चतुर्थे तत्फलं प्रोच्य विद्याविद्ये च सूत्रिते । विस्तरात्संग्रहाद्वृत्तिरविद्याया अथोभयोः ॥९॥"

इत्युक्तं वार्तिकसारे । मधुकाण्ड बृ० २-५-१ द्रष्टव्यम् । उभयोरिति पञ्चमषष्ठयोरित्यर्थः । २ अधीयमानत्वात् । ३ इति नामभाष्यम् । ४ तस्येति—उपस्थितस्येत्यर्थः बुद्ध्यारूढस्येति यावत् । ५ ज्ञानकाण्डस्य । ६ ननु मिथो विरुद्धयोः काण्डयोः सम्बन्ध एव न सम्भवति विविदिषारूपे ज्ञानरूपे च कार्ये प्रत्येकमुभयोः काण्डयोः उभयत्र वा प्रत्येककाण्डस्य अपर्यवसानात् इत्याशङ्क्य समादधुर्वार्तिकाचार्याः—'वेदो हि सर्व एवायमात्मैक्यज्ञानसिद्धये । अतो नान्योऽभिसम्बन्धः कर्मविज्ञानकाण्डयोः' ॥ इति । तथा च ब्रह्मात्मैकत्वज्ञानसिद्धिहेतुत्वादुभयोरैक्यज्ञानहेतुत्वरूपधर्मवत्त्वमेव परस्परमुभयोः सम्बन्धसम्भवत्येव ऐक्यधीहेतुत्वादन्योन्यमो सम्बन्ध इत्यर्थः । ७ प्रमाणभाष्यम् । ८ उपदेशमनपेक्ष्येत्यर्थः । ९ कर्माणि कषायान् पाचयन्तीत्यर्थः प्रथमपादस्य कषायेत्यादि—कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिरित्यादि । ततो ज्ञानं प्रवर्तते इति वाक्यशेषश्च । १० तस्मादनेकजन्मसुकृतक्षालितचेतसो नियमाधीतस्वाध्यायस्यापादितश्रवणादेराचार्योपदिष्टो वेदान्तो विद्याहेतुर्नाशुद्धबुद्धेरिति भावः । ११ विलक्षण इति । १२ उपायोपेयभावाद्यसाधारणस्वरूपेणेत्यर्थः । १३ सर्वथापीत्यादिवक्ष्यमाणग्रन्थेनेति ध्येयम । १४ नन्वेवं तदभिधानावसराभावश्चेत् तर्हि प्रथमं तत्प्रामाण्यं प्रतिपाद्य सम्बन्धापेक्षायां सम्बन्धप्रतिज्ञाभाष्यं प्रणेतव्यम् इति चेत्सत्यम् उपोद्घातप्रक्रियया भाष्यकारस्तस्येत्यादिना सम्बन्ध

त्तत्प्रामाण्यं प्रतिपाद्य पश्चात्तेयां कर्मकाण्डेन संबन्धविशेषवचनमुचितमिति मन्वानस्तत्प्रामाण्यं साधयति—सर्वोऽपीति । 'प्रत्यक्षानुमानाभ्यामित्या'गमातिरिक्तप्रमाणोपलक्षणार्थम् । 'एषोऽर्थो'ऽध्ययनविध्युपात्तः सर्वोऽपि काण्डद्वयात्मको वेदो मानान्तरानधिगतं यदिष्टो'पायादि तज्ज्ञापनपरस्त'थाचाज्ञातज्ञापकत्वाविशेषात्तुल्यं प्रामाण्यं काण्डयोरिति । अथ वा वेदनं वेदोऽनुभवः । स च शब्देतरमानायोग्यो रूपादिहीनत्वात् । 'एतदप्रमेयम्' इति हि श्रुतेः । चेष्टानिष्टप्राप्तिपरिहारोपायस्तस्यैव तत्तदात्मनाऽवस्थानात् । 'सच्च त्यच्चाभवत्' इत्यादिश्रुतेः । स च प्रकाशनः सर्वप्रकाशकत्वात् । 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतेः । स च परोऽविद्यातत्कार्यातीतत्वात् । 'विरजः पर आकाशात्' इत्यादिश्रुते' । एवंरूपो वेदपदवेदनीयश्चिदेकरसः प्रत्यग्धातुरेव सर्वोऽपि कार्यकारणात्मकः प्रपञ्चः । 'आत्मैवेदं सर्वम्' इति श्रुतेः । 'तथाच यथोक्तं वस्तु प्रकाशयन्तो वेदान्ता विधिवाक्यवत्प्रमाणमिति । अथवा प्रत्यक्षाविनाऽनवगतो योऽसाविष्टप्राप्त्याद्युपायो ब्रह्मात्मा तस्य प्रकाशनपरः सर्वोऽप्ययं वेदः । तस्यैवाज्ञातत्वात्तत्र' कर्मकाण्डं कर्मानुष्ठानप्रयुक्तबुद्धिशुद्धिद्वारा ब्रह्माधिगतावारादुप'कारकम् । 'विविदिषन्ति यज्ञेन' इति श्रुतेः । ज्ञानकाण्डं तु साक्षादेव तत्रोपयुक्तम् । परमपुरुषस्यौपनिषदत्वश्रवणात् । 'सर्वे वेदा यत्पदमामनन्ति' इति च श्रुतेः । तद्युक्तं कर्मकाण्डवज्ज्ञानकाण्डस्यापि प्रामाण्यमिति । अधिकारिसौलभ्यप्रतिपादनद्वारा ज्ञानकाण्डप्रामाण्यमेव स्फुटयति—सर्वपुरुषाणामिति । अयमर्थः—सुखं मे स्याद्दुःखं मा भूदिति स्वभावतः शास्त्रं विना सर्वेषां पुरुषाणामनवच्छिन्नसुखा'दिमात्रेऽभिलाषोपलम्भात्तन्मात्रस्य च मोक्षत्वा'त्तत्कामिनो ज्ञानकाण्डाधिकारिणः सुलभत्वा'त्तस्मिन्प्रमां 'स्वार्थविषयामाद'धत्कथं 'तदप्रमाणमिति ।

---

प्रत्यक्षामीत् ततो न सम्बन्धप्रतिज्ञा साध्वी वेदान्तानामप्रामाण्यादिति चोदिते तत्प्रामाण्योक्त्या उक्तचोद्य प्रत्याख्याय विविदिषा श्रुतिसिद्धकर्मणा विविदिषाहेतुत्व नाम सबन्धविशेषमाह स्म अतो नात्र भाष्ये किञ्चिद्दूषणम् । उपोद्घातलक्षण चोक्त 'चिन्ता प्रकृतसिद्ध्यर्थामुपोद्घात प्रचक्षत' इति । विविदिषाश्रुतिश्च 'तमेत विविदिषन्ति ब्राह्मणा यज्ञेन दानेन तपसाऽनाशकेनेति' बोध्या । सम्बन्धविशेषश्च भाष्यकृदुक्त उपायोपेयभावरूपो वेदितव्य । १ ननु सर्वोपीत्यादिवदद्भिर्भगवत्पादै सर्ववेदस्य ब्रह्मात्मनि प्रामाण्य यद्यप्युक्त तथापि प्रत्यक्षादिविशेषणेन उपमानादिविषयत्वाद्ब्रह्मण तत्र वेदस्य तत्सवादविसवादाभ्याममानतेत्याशङ्क्य आह—प्रत्यक्षेति । २ आगमविषयत्वोतिरेकात्म्यस्य व्याहता मा भूदित्यागमातिरिक्तेतिप्रमाणविशेषम् ।३ मिथो विलक्षणार्थकर्मज्ञानकाण्डयो सर्वोप्यय वेद इत्यैकराश्येनोपदेशो न युक्त इत्यत आह एषोऽर्थ इति । अध्ययनविधेरक्षरावाप्तिद्वारा अर्थावगमद्वारा वा फलान्तत्वात् तेनैकेनैवोपात्तकाण्डयोरेवपुरुषार्थावसायितया प्रयाजदर्शादिवाक्यवदेकवाक्यता तया च काण्डयोरेकराशित्वकरण युक्तमिति भाव । ४ सर्वोपीत्यादिभाष्योक्तरूपोऽर्थ इत्यर्थ ५ इष्टोपायादीति—प्रत्यगभिन्न ब्रह्मेति शेष । ६ तथाचेति—वेदमात्रस्याज्ञातज्ञापनतात्पर्यवत्त्वे चेत्यर्थ । ७ अव्याकृतात् । ८ सत्तानुभवरूपब्रह्मणो निखिलाधिष्ठानत्वे च । ९ काण्डद्वयमध्ये । १० परम्परया सहकारि । ११ अव्यवहितनिरतिशयपूर्णसुखादावेवेत्यर्थ । १२ तत्कामिन इति—एव प्राणिमात्रस्य मुमुक्षामद्भावे किमु वक्तव्य निरस्तनिखिलचित्तमलस्य तीव्रतरवैराग्यादिसम्पन्नस्य तत्सद्भाव इतिभाव । ननु लौकिकसुख एव सर्वेषामभिलाषदर्शनान्मोक्षसुखस्य चालौकिकत्वात् कथ मुमुक्षासद्भाव इति चेन्न मोक्षरूपसुखस्यैव तत्तद्विषयसम्बन्धेन लौकिकैरिष्यमाणत्वात् लौकिकसुखविलक्षण तदिति न भ्रमितव्यम् । १३ उक्ताधिकारिणि । १४ प्रत्यगभिन्नब्रह्म । १५ उत्पादयत । १६ ज्ञानकाण्डम् । ननु मुमुक्षोरेवान्तराले ग्रामकामस्य भोजनादाविव स्वर्गादावभिलाषसभवात् तत्परवशस्य च विद्यानधिकारात् कथमत्राधिकारिसौलभ्यमिति चेन्न य स्वर्गादि काङ्क्षति स कथञ्चिन्मोक्षमपि नाथेत तस्य निरतिशयफलत्वात्, यस्तु मुक्ति कामयते नासौ स्वर्गादि कथमपि कामयते तस्यात्यल्पफलत्वात्, अतो यो मुमुक्षु भूत्वा पुन स्वर्गाद्यभिलषति स पशूना काम इत्यपसदो मुमुक्षूणामिति

इष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नाऽऽगमान्वेषणा। न चासति जन्मान्तरसवन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्। स्वभाववादिदर्शनात्।

---

ननु वेदस्य कार्यपरतया प्रामाण्यात्कर्मकाण्डवत्काण्डान्तरस्यापि कार्यपरतया प्रामाण्यमेष्टव्यमिति नेत्याह—इष्टविषय इति। क्रियाकारकफलेतिकर्तव्यतानामन्यतमेतस्मिन्का (मे का)र्ये समीहितप्राप्त्याद्युपायभूते व्युत्पत्तिकाले प्रत्यक्षादिसिद्धे तथाविधकार्यधियोऽन्यथालब्धत्वात्तत्र नाऽऽगमोऽनुसृतेव। न हि लोकवेदयोस्तद्भिद्यते। अलौकिके तस्मिन्नव्युत्पत्तिप्रसङ्गात्। नचाव्युत्पन्नानि पदानि बोधकान्यतिप्रसङ्गात्। न च ब्रह्मण्यपि तुल्या व्युत्पत्त्यनुपपत्तिः। तस्मिन्ब्रह्मत्वेनाऽऽत्मत्वेन च प्रसिद्धे तत्तत्सामान्योपाधौ विज्ञानादिपदानां व्युत्पत्तेः सुकरत्वात्। तानि चालौकिकमखण्डं प्रत्यग्ब्रह्म निर्लुंठितसामान्यविशेष लक्षणया बोधयन्ति। तस्माद्ब्रह्मैव वेदप्रमाणक न कार्यमिति भाव.। किंच तिष्ठतु वेदान्तप्रामाण्यं कर्मकाण्डेऽपि व्यतिरिक्तात्मास्तित्वादौ सिद्धेऽर्थे प्रामाण्यमावश्यकम्। तदभावे तत्प्रामाण्यायोगात्। न हि भविष्यद्देहसबन्ध्यात्मसद्भावानधिगमे पारलौकिकप्रवृत्तिविश्रम्भ। तस्मात्कर्मकाण्डप्रामाण्यमिच्छता सिद्धेऽर्थे भविष्यद्देहसबन्धिन्यात्मनि स्वर्गादौ च तत्प्रामाण्यस्याभ्युपेयत्वात्कार्ये वेदप्रामाण्यानियमाद्वेदान्तानामपि स्वार्थे मानत्व सिध्यतीत्याह—न चेति। ननु देहान्तरसबन्ध्यात्मज्ञान विनाऽपि विधिवशाद्दृष्टार्थक्रियासु प्रवृत्तिः स्यादिति नेत्याह—स्वभावेति। यदाऽऽत्मा देहान्तरसबन्धी शास्त्रान्मानान्तराच्च न प्रमितस्तदा भोक्तुरनवगमान्न प्रेक्षापूर्वकारी यागाद्यनुतिष्ठेत्। लोकायतस्य व्यतिरिक्तात्मास्तित्वमजानतो जन्मान्तरेष्टानिष्टप्राप्तिहानीच्छया वैदिकक्रियास्वप्रवृत्तेर्दर्शनात्। अतो नातिरिक्तात्मज्ञान विना सांपरायिके प्रवृत्तिरित्यर्थ.।

---

इष्ट कार्यों मे तो इष्ट प्राप्ति और अनिष्टनिवृत्ति के उपायो के ज्ञान प्रमाण से सिद्ध हो जाने से कारण आगम प्रमाण के अनुसन्धान की कोई आवश्यकता नही। भविष्यदेह सम्बन्धी आत्मा के अस्तित्व का ज्ञान न होने पर देहान्तसम्बन्धी इष्टप्राप्ति और अनिष्टनिवृत्ति की इच्छा भी नही होगी। ऐसा देहात्मवादी चार्वाक दर्शन का मत है।

---

—न च नामभाष्येण परोक्तिद्वारा तत्कामाधिकारिण उक्तत्वादनर्थकमिद भाष्यमिति वाच्यम अर्थश्रुतिभ्यामुभयत्राप्यधिकारिनिर्देशादर्थभेदसिद्धे। यद्यपि ससारविवृत्सुम्य इत्यत्र मुखतोऽधिकारी प्रदर्शितस्तथाप्यत्र तत्सौलभ्यस्यष्टत्वान्नारम्भ वैयर्थ्यम्। न चैवं शास्त्रस्य सर्वाधिकारत्व स्यादिति वाच्यम्, साधनचतुष्टयविशिष्टानामेव विद्याधिकारिणा सौलभ्योक्तिरिति द्रष्टव्यम्। १ आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि त्यादि जैमिनिसूत्रमिति भाव। २ शक्तिग्रहसमय। ३ आगमानुसधान विनैव। ४ कार्यम्। ५ जवगहादिशब्दानामप्ययप्रत्यायकत्वप्रसङ्गात। ६ व्यापकत्वेन। ७ प्रत्यक्त्वेन। ८ ब्रह्मत्वाद्युपहित इत्यर्थ। ब्रह्मत्वादिसामान्यम् उपाधिविशेषण यस्य तस्मिन्। ९ वेदान्तवाक्यानि। १० निर्गतेयस्य। ११ कार्यत्वाद्यस्पृष्टे ब्रह्मण्येव वेदाना प्रामाण्यात्। १२ अदृष्टफलककर्मसु। १३ देहात्मवादिचार्वाकस्येत्यर्थ। १४ सम्यक पर—देहपातादनन्तरमीयते गम्यतेऽसौ सम्पराय परलोक तत्प्राप्तिहेतुकर्मोपासनादिशास्त्रीयसाधनविशेष साम्परायिक तस्मिन्। परलोकफलककर्मणीति यावत्।

तस्माज्जन्मान्तरसंबन्ध्यात्मास्तित्वे जन्मान्तरेष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते । "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इत्युपक्रम्या-स्तीत्येवोपलब्धव्य इत्येवमादिनिर्णयदर्शनात् "यथा च मरणं प्राप्य" इत्युपक्रम्य—

" योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ "

इति च " स्वयं ज्योतिः " इत्युपक्रम्य " तं विद्याकर्मणी समन्वारभेते " " पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन " इति च " ज्ञपयिष्यामि " इत्युपक्रम्य " विज्ञानमयः " इति च व्यतिरिक्तात्मास्तित्वम् ।

---

ननु विषयः साधनविशेषं प्रोपपन्नो नातिरिक्तात्मास्तित्वादो 'मानं वाक्यमेवप्रसङ्गादित्यत आह—तस्मादिति । अतिरिक्तात्मधियं विना पारलौकिकप्रवृत्त्यनुपपत्त्या कर्मकाण्डप्रामाण्यायोगादिति यावत् । विधीनां 'श्रुत्यर्थाभ्यामुभयार्थत्वमविरुद्धमित्यर्थः । न केवलं विधिभिरेवार्थादाक्षिप्तमतिरिक्तात्मास्तित्वं किंतु श्रुत्याऽपि स्वमुखेनोक्तमित्याह—येयमिति । निर्णयदर्शनाद्व्यतिरिक्तात्मास्तित्वमिति संबन्धः । तत्रैव 'प्रकृतोपयोगित्वेनोपक्रमोपसंहारान्तरे दर्शयति—यथा चेति । पूर्ववदेव संबन्धद्योतनार्थ. चकारः । उपक्रमोपसंहारैकरूप्यात्कठवल्लीनामतिरिक्तात्मास्तित्वे तात्पर्यमुक्त्वा बृहदारण्यकवाक्यस्यापि तत्र तात्पर्यमाह—स्वयमिति । न हि प्रसिद्धजडत्वस्य देहादेः स्वयंज्योतिष्ट्वमिति "ज्योतिर्ब्राह्मणगतोपक्रमस्तद्-"विषयो देहादिव्यतिरिक्तात्मानम"धिकरोति । तं प्रेतं" विद्याकर्मणी पूर्वोपार्जिते फलदानायानुगच्छतः । स च गत्वा ज्ञानकर्मानुगुणं फलमनुभवतीति "शारीरकब्राह्मणगतोपसंहारोऽपि जन्मान्तरसंबन्धविषयः ।

---

इसलिये देहान्तरसम्बन्धी आत्मा के अस्तित्व एव देहान्तर इष्टप्राप्ति और अनिष्टनिवृत्ति रूप उपायविशेष के निरूपण करने मे शास्त्र प्रवृत्त होता है—"जाने वाले मृत मनुष्य के विषय मे कुछ रहता है, कुछ नही रहता, ऐसी शका करते है" इस उपक्रम से "आत्मा निश्चित है—ऐसा ही जानना चाहिये" यह निर्णय (शास्त्रकार) लेते हैं।

"मृत्यु के बाद जैसा होता है" इसी प्रकार उपक्रम करके "(अज्ञानी देहाभिमानी) अपने कर्म और चिन्तन के अनुरूप कितने शरीर धारण करने के लिए किसी योनि में चले जाते हैं और कुछ मनुष्य स्थावर भाव को प्राप्त होते है" ऐसा कहते है। "वह स्वयज्योति है" ऐसा उपक्रम करके "उस समय इसके साथ साथ ज्ञान कर्म (और पूर्वानुभवजन्य सस्कार) जाता है", तथा "पुण्यकर्मों से पुण्यवान् एव कुत्सित कर्मों से पापी होता है" ऐसा भी कहते है। "बतलाऊंगा" इस प्रकार प्रारम्भ करके "आत्मा विज्ञानमय है" ऐसा देह से भिन्न आत्मा का अस्तित्व बतलाया है।

---

१ श्रुतौ—एवमादिनिर्धारणोपलम्भादित्यर्थं । २ बृ० ४-३-६ । ३ बृ० ४-४-२ । ४ बृ० ४-४-५ । ५ बृ० २-१-१५ । ६ बृ० २-१-१६ । ७ प्रमितिजनकत्वरूपधर्मैक्यान्मानमिति बहुविशेषणस्याप्यै-क्यमुन्नेयम् । ८ वचनार्थापत्तिभ्यामित्यर्थं शब्दतोऽर्थापत्तितश्चेति यावत् । ९. सिद्धे वस्तुनि वेदस्य प्रामाण्यमिति प्रकृतम् । १०. स्वय ज्योति पुरुषविषय इत्यर्थं । ११ बृ० चतुर्थाध्यायस्यतृतीयब्राह्मणे । १२ अधिकरोतीति—बोधयतीत्यर्थं । १३ परलोकाय गच्छन्तम् । १४ बृ० उ० अ० ४ ।

तत्प्रत्यक्षविषयमेवेति चेत्। न वादिविप्रतिपत्तिदर्शनात्। न हि देहान्तरसंबन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्त्यात्मेति वदन्तः। न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति।

स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत्।,न। निरूपितेऽभावात्। न हि प्रत्यक्षेण

---

नचात्रैव भस्मीभवतो देहादेर्जन्मान्तरसंबन्धो[1] युक्तः। तेनाऽऽत्मा[2] देहादिव्यतिरिक्तो जन्मान्तरसंबन्धी सिद्धो ब्राह्मणाभ्यामित्यर्थः। 'अजातशत्रुब्राह्मणे च ध्येय' स्वा ज्ञपयिष्यामीत्युपक्रमो व्यतिरिक्तात्मास्तित्वविषयः। न हि प्रत्यक्षे देहादौ जिज्ञासाऽस्ति। तत्रैवोपसंहारे "य एष 'विज्ञानमयः[3] पुरुषः" इति विज्ञानमयविशेषणादतिरिक्तात्मास्तित्वं दर्शितं न हि देहादेर्विज्ञानमयत्वमस्ति तस्मात्तदप्युपक्रमोपसंहाराभ्यां व्यतिरिक्तात्मास्तित्वं गमयतीत्याह—ज्ञपयिष्यामीत्युपक्रम्येति। नचोदाहृतानां वाक्यानामप्रामाण्यम्। तत्प्रामाण्यस्यौ[4]त्पत्तिकसूत्रे 'हेत्वविशेषाद[5]भ्युपेयत्वादिति भावः।

यथोक्तात्मन्यहं[6]प्रत्ययो मानं तत्र देहाकारास्फुरणादतिरिक्तात्मास्तित्वस्य तेनैव स्फूर्त्युपपत्ते[7]रतो न तत्र श्रुतिप्रामाण्यमिति शङ्कते—तत्प्रत्यक्षेति। प्रत्यक्षस्य विषयोऽवकाशो यस्मिंस्तद्व्यतिरिक्तात्मास्तित्वमुच्यते। यद्यपि व्यतिरिक्तात्मास्तित्वं स्वदभिप्रायेणाहंधीगोचरस्तथाऽपि न सा व्यतिरेकमात्मनो गोचरयति '[8]युक्त्यागमविवेकशून्यानामहंप्रत्ययभाजां व्यतिरेकाप्रत्ययप्राप्तौ विपश्चितां विप्रतिपत्त्यभावप्रसङ्गादिति परिहरति—न वादीति। वेदप्रतिकूला वादिनो नास्तिका नैव विवादं मुञ्चन्तीत्याह—न हीति। तेषु प्रातिकूल्यसंभावनार्थं विशेषणं नेत्यादि। इति वदन्तः सन्तो नोऽस्माकं प्रतिकूला न हि स्फुरेवं वदनस्यैवासंभवादध्य[10]क्षविरोधादिति योजना। प्रत्यक्षे विषये विप्रतिपत्त्यभावे दृष्टान्तमाह—न हीति।

[11]तत्र व्यभिचारं शङ्कते—स्थाण्वादाविति। प्रत्यक्षे धर्मिणि स्थाणुर्वा पुरुषो वेति विप्रतिपत्ते-

---

यदि कहो आत्मा का अस्तित्व प्रत्यक्ष प्रमाण का ही विषय है, तो उचित नही, क्योंकि इस सम्बन्ध में वादियों में मतभेद देखा जाता है। यदि जन्मान्तरसम्बन्धी आत्मा का ज्ञान प्रत्यक्ष होता तो चार्वाक एवं बौद्ध दर्शन के प्रतिपादन करने वाले "आत्मा नहीं है" ऐसा कहते हुए हमारे प्रतिकूल नही होते। चक्षु इन्द्रिय से साक्षात् दीखने वाले घटादि मे "घट नही है" ऐसा संशय किसी को भी नही होता।

स्थाणु आदि मे पुरुष आदि का भ्रम देखा जाने के कारण प्रत्यक्ष वस्तु में संशय हो जाता है—

---

१. बृ॰ अ॰ २। २ विज्ञपयिष्याम्येवेति भिन्नक्रमेण सम्बन्ध.। ३. विज्ञान बुद्धिः तन्मय. तदुपाधिकस्तदुपहित इति यावत्। ४. औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वादिति प्रथमाध्यायप्रथमपादपञ्चमे जैमिनीयसूत्रे। औत्पत्तिक इत्यादि। औत्पत्तिक स्वाभाविकोऽपौरुषेय इत्यर्थ.। अतस्तस्य धर्मस्य ज्ञानं ज्ञानकरणं वैदिकशब्द.। प्रत्यक्षाद्यनुपलब्धे चार्थे उपदेशः शब्दोऽव्यतिरेकोऽव्यभिचारिमानमित्यर्थ.। तद् वेदवाक्यं प्रमाणं धर्मे बादरायणस्याप्यभिमतं तस्य स्वार्थे मानान्तरानपेक्षत्वादिति सूत्राक्षराणामर्थ। ५. अज्ञातज्ञापकत्वरूपहेतोरुभयत्र तुल्यत्वादित्यर्थः। उभयत्रेति—ज्ञानकर्मकाण्डयोरित्यर्थः। ६. मच्छरीरव्यज्ञानमहं कृशमकृश वा जान इत्येवमादिरूप.। ७. मानसम्भवात्। ८. प्रत्यक्षासिद्धत्वात्। ९. आत्मानात्मनो. प्रत्यक्त्वपरात्वज्ञानं युक्ति। आगमश्चास्थूलमनण्वित्यादिजन्यमात्मनि तत्त्वज्ञानम्। देहादिभेदावगमश्च विवेक। १०. प्रत्यक्षविरोधादित्यर्थः। ११. यत्र प्रत्यक्षविषयत्वं तत्र विप्रतिपत्त्यभाव इति व्याप्तौ।

-निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमितिप्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते ।

तस्मात्प्रत्यक्षविषयवैलक्षण्यात्प्रत्यक्षाग्राह्यात्मास्तित्वसिद्धिः । तथाऽनुमानादपि । श्रुत्याऽऽत्मास्तित्वे लिङ्गस्य दर्शितत्वाल्लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेत् । न । जन्मान्तरसंबन्धस्याग्रहणात् । आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्ग-

---

दुपलम्भान्न प्रत्यक्षे विप्रतिपत्त्यभावो व्यभिचारादिति शङ्कार्थः । आदिपदेन पाषाणादौ गजादिविप्रतिपत्तिः संगृह्यते । किं प्रत्यक्षमात्रे विप्रतिपत्तिः किं वा तेन विविक्ते प्रतिपन्ने । नाऽऽद्योऽङ्गीकारात् । नचैवमात्मनि प्रत्यक्षे विप्रतिपत्तावपि नाऽऽगमान्वेषणा । तेनैव तन्निरासेन तन्निर्णयादिति मन्वानो द्वितीयं दूषयति—नेत्यादिना । प्रत्यक्षतो विविक्तेऽर्थे विप्रतिपत्त्यभावं प्रपञ्चयति—न हीति । आत्मनः स्थूलदेहव्यतिरिक्तत्वं न प्रत्यक्षमिति प्रतिपाद्य सूक्ष्मदेहव्यतिरिक्तत्वमपि नाहंप्रत्ययग्राह्यमित्याह— वैनाशिकास्त्विति । ते खल्वहमिति धियमनुभवन्ति । तथाऽपि देहान्तरं स्थूलदेहातिरिक्तं सूक्ष्मं तत्र प्रधानभूताया बुद्धेरतिरिक्तस्याऽऽत्मनो नास्तित्वमेव पश्यन्ति तस्मादहंधिया सूक्ष्मदेहातिरिक्तात्मसिद्धिरित्यर्थः ।

किञ्च प्रत्यक्षस्य विषयो रूपादिस्तद्राहित्यं तद्वैलक्षण्यं सदात्मनोऽस्ति । "अशब्दमस्पर्शमरूपम्" इत्यादिश्रुतेः । न हि रूपादि तदाधारं वा विना प्रत्यक्षं क्रमते । अतो न देहाद्यतिरिक्तात्मास्तित्वस्य प्रत्यक्षात्प्रसिद्धिरित्याह—तस्मादिति । प्रत्यक्षतो विविक्ते विप्रतिपत्त्ययोगात् । प्रकृते च तद्दर्शनादिति यावत् । अथेच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपादिवदित्यनुमानादतिरिक्तात्मसिद्धिरिति नेत्याह— तथेति । नाऽऽत्मास्तित्वप्रसिद्धिरितिसंबन्धार्थस्तथाशब्दः । अयं भावः—इच्छादीनां स्वातन्त्र्ये स्वरूपासिद्धिः

---

ऐसा कहना उचित नहीं है । भली-भाँति देखने पर वहाँ संशय का अभाव हो जाता है । स्थाणु आदि को भली-भाँति देख लेने पर उसमें सन्देह नहीं होता है । विज्ञानवादी तो "अहम्" ऐसी प्रत्ययविषय बुद्धि के उदित होने पर भी देह में भिन्न आत्मा के न होने का निर्णय करते हैं ।

इसलिए प्रत्यक्ष के विषय रूपादि से विलक्षण होने के कारण आत्मा के अस्तित्व की सिद्धि प्रत्यक्ष द्वारा नहीं हो सकती । इसी प्रकार (आत्मा के अस्तित्व की सिद्धि) अनुमान के द्वारा भी नहीं हो सकती । यदि कहो ("य प्राणेन प्राणिति") श्रुति ने आत्मा के अस्तित्व में लिङ्ग दिखाया है । और लिङ्ग प्रत्यक्ष प्रमाण का विषय होता है—तो ठीक नहीं । क्योंकि आत्मा के जन्मान्तर सम्बन्ध का

---

१ मानसप्रत्यक्षनिश्चितात्मविषयत्वादित्यर्थः । २ आत्मनो जन्मान्तरेण यः सम्बन्धस्तस्य ग्रहणात् आगमेतरप्रमाणेनाभावादित्यर्थः । ३ लोकप्रसिद्धेत्यर्थः । ४ प्रत्यक्षेणेतरभिन्नत्वेन ज्ञात इति यावत् । ५ एवमिति स्थाण्वादाविवेत्यर्थः । ६ अपीति अविप्रतिपन्नघटादाविवेत्यर्थः । ७ आगमविप्रतिपत्तिविविक्तात्मानस्तदा प्रमाथा । ८ विज्ञानवादिनः । ९ अहमितिप्रत्ययविषयतया धियं जानत इत्यर्थः । १० तन्मते धियोऽहं प्रत्ययविषयत्वात् । ११ रूपादिरित्यादिपदेन रसादयो गुणा रूपादिमन्तो गुणिनश्च ग्राह्याः । १२ तद्राहित्यमिति तत्पदेनापि तदुभयग्राह्यमेव च तदा गुणपक्षे राहित्यमत्यन्ताभाववत्त्वम् गुणिपक्षे तु भेदवत्त्वमवगमनीयम् । १३ प्रवर्तते । १४ आत्मनि प्रत्यक्षप्रवृत्तिप्रयोजकाभावादित्यर्थः । १५ शङ्कायामपशब्दोऽप्यन्वर्थकः । १६ आश्रयानपेक्षत्वे ।

विशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहंप्रत्ययं लिङ्गानि च वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चाऽऽत्मेति।

'सर्वथाऽप्यस्त्यात्मा देहान्तरसंबन्धीत्येवं प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरि-

पारतन्त्ये परस्पराश्रयत्वमाधारस्येदानीमेव साध्यमानत्वात्। यच्चिच्छब्देन चाऽऽश्रयमात्र'वचने सिद्धसाधनत्वं मनसस्तदाश्रयस्य सिद्धत्वादात्मोक्तौ च दृष्टान्तस्य साध्यविकलतेति। "'यः प्राणेन प्राणिति" 'इत्यादिश्रुत्या प्राणनादिव्यापाराख्यस्य लिङ्गस्याऽऽत्मास्तित्वे प्रदर्शितत्वात्तस्य च व्याप्तिसापेक्षस्य प्रत्यक्षादिसिद्धात्म'विषयत्वाच्च तस्य शब्दैकगम्यतेति शङ्कते—श्रुत्येति। आत्मनः 'स्वातन्त्र्येण 'लिङ्गाम्यत्वाभिप्रायेण श्रुत्या लिङ्गं नोपन्यस्तमिति परिहरति—नेति। योऽचेतनव्यापारः स चेतनाधिष्ठानपूर्वको यथा रथादिव्यापारः। 'प्राणनादिव्यापारस्याप्यचेतनव्यापारत्वाच्चेतनाधिष्ठानपूर्वकत्वमिति 'संभावनामात्रेण लिङ्गोपन्यासः। न हि निश्चायकत्वेन तदुपन्यस्यते। आत्मनो जन्मान्तरसंबन्धस्य प्रमाणान्तरेणाग्रहणात्तद्व्याप्तलिङ्गायोगाच्चेत्याह—जन्मान्तरेति। ननु व्यतिरिक्तात्मास्तित्वमागमैकगम्यं चेत्कथं तत्प्रत्यक्षमनुमेयं चेति वादिनो वदन्तीति तत्राऽऽह—आगमेन त्विति। येयं प्रेते विचिकित्सेत्याद्यागमेन "को ह्येवान्यात्" इत्यादिवेदोक्तैश्च प्राणनादिभिर्लौकिकैर्लिङ्गविशेषैरात्मास्तित्वे सिद्धे यथोक्तात्मसिद्धिमनुसरन्तो वादिनो वैदिकमेवाहंप्रत्ययं प्रतिलभमाना वैदिकान्येव च लिङ्गानि पश्यन्तः स्वोत्प्रेक्षानिर्मितानि तानीति कल्पयन्तो द्विधाऽऽत्मानं वदन्ति। वस्तुतस्त्वात्मा यथोक्तश्रुत्येकसमधिगम्य इत्यर्थः।

तस्यास्येत्यादिना काण्डयोः संबन्धं प्रतिज्ञाय तादर्थ्येन सिद्धेऽर्थे वेदान्तप्रामाण्यं सर्वोऽपीत्यादिना

आगमेतर प्रमाण से ज्ञान नहीं होता। आगमप्रमाण एवं वेदोक्त और लोकप्रसिद्ध लिङ्गविशेषों के द्वारा आत्मा के अस्तित्व का बोध होने पर उसी का अनुसरण करने वाले मीमांसक और तार्किक वैदिक अहंप्रत्यय और लिङ्गों को ही "ये हमारी बुद्धि की उपज हैं" ऐसी कल्पना करते हुए कहते हैं कि "आत्मा प्रत्यक्ष और अनुमान का भी विषय है।"

सर्वथा ही देहान्तर से सम्बन्ध रखने वाला आत्मा है—ऐसा जानने वाले तथा जन्मान्तर में

१. तस्येत्यादिभाष्येण काण्डयोर्नियतपौर्वापर्यानुपपत्तिसम्य सम्बन्ध प्रतिज्ञाय तदर्थमेव सिद्धेऽर्थे वेदान्तप्रामाण्य सर्वोऽपीत्यादिना प्रसाध्य विद्याधिकारिसौलभ्य च प्रामाण्योपयोगित्वेन सर्वपुरुषाणामित्यादिनोक्त्वा परकीयकार्ये च वेदप्रामाण्य दृष्टविषयेत्यादिना निराकृत्य। न चासतीत्यादिना परैरपि सिद्धेऽर्थे वेदप्रामाण्यस्यैष्टव्यतया युक्त वेदान्ताना स्वार्थनिष्ठत्वमिति प्रतिष्ठाप्य पूर्वेण क सम्बन्ध काण्डयोरिति योऽन्तर्गर्भित प्रश्न तस्य कर्मभि शुद्धबुद्धेर्वैराग्यादिद्वारा ज्ञानोत्पत्तिसम्बन्ध इति निर्णय कर्तव्य तदर्थं सर्वथेत्यादिभाष्यम्। पूर्वेणेति—कर्मकाण्डोक्ति य प्रश्न इत्यन्वय। क सम्बन्ध इति किं शब्दस्य आक्षेपार्थकत्वेन सम्बन्धो नास्तीत्यर्थकत्वेऽपि प्रश्नस्य शब्दस्वाभाव्यात्तद्गर्भस्थत्वमिति ध्येयम् इति टिप्पणटिप्पणम्। २ आश्रयसामान्यवचने। ३ बृ० ३–४–१। ४ स त आत्मा सर्वान्तर इत्यादि श्रुतिशेष। य आत्मा प्राणेन प्राणिति मुखाद्वायुनिर्गमात्मकप्राणनक्रियावान् भवतीत्यक्षरार्थ.। येनात्मना प्राणो वायु प्रणीयते तादृक्क्रियो भवतीत्युक्तश्रुतिभाव। ५ शक्यग्रहा हि सिद्धयोरेव व्याप्तिरध्यक्षेण हेतुसाध्ययो इत्यभ्युपगमनीयमात्मनो व्याप्ति लिङ्गस्य ग्रहीतुमध्यक्षत्व श्रुतिदर्शितस्येति भावः। ६. शब्दानपेक्षतया। ७ लिङ्गमनुमानम्। ८. मुखाद्वायुनिर्गम प्राणन प्रवेशोऽपाननम्। ९ अनुमित्यात्मकापातज्ञानमात्रजननार्थमिति निमित्तार्थिका तृतीया।

हारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम् । न त्वात्मन इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम् । यावद्धि तन्नापनीयते तावदयं कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन स्वाभाविकदोषबलीयस्त्वात् । ततः स्थावरान्ताधोगतिः ।

प्रसाध्याधुना कर्मभिः शुद्धबुद्धेर्वैराग्यादिद्वारा ज्ञानोत्पत्तिरिति तयो. संबन्धं कथयति—सर्वथाऽपीति । आगमान्मानान्तराद्वा व्यतिरिक्तात्मास्तित्वप्रतिपत्तावपीत्यर्थ. । पुरुषार्थोपायविशेषार्थिनस्तज्ज्ञापनार्थं कर्मकाण्डमारब्धं चेत्तर्हि तत्रोक्तकर्मभिरेव विवक्षितपुमर्थसिद्धेर्वेदान्तारम्भवैयर्थ्यान्न संबन्धोक्तिः सावकाशेत्याशङ्क्याऽऽह—नत्विति । आत्माज्ञानं खल्वनर्थकारणमन्वयव्यतिरेकशास्त्रगम्यं मिथ्याज्ञानकार्यलिङ्गक च । तच्चाकर्तृभोक्तृब्रह्मात्मज्ञानादपनेयम् । न हि तत्कर्मकाण्डोक्तैरेव कर्मभिः शक्यमपनेतुं विरोधाभावात् । तस्मात्तद्बाधनार्थं ज्ञानसिद्धये वेदान्तारम्भसंभवादुक्तसंबन्धसिद्धिरित्यर्थः। यदि कर्मभिरज्ञानं न निवर्तते । मा निवर्तिष्ट । सत्येव तस्मिन्कर्मवशान्मोक्ष. स्यादित्याशङ्क्याऽऽह—यावद्धीति । सम्यग्ज्ञानमेव साक्षान्मोक्षहेतुर्न कर्म । तत्तु प्रणाड्या तदुपयोगि । न हि सत्येवाज्ञाने मुक्तिः । तस्मिन्सति संसारस्य दुर्वारत्वात् । तस्मात्कर्मकाण्डस्य वैराग्यद्वारा प्रवेशो मुक्ताविति भाव. । अयमित्यज्ञो निर्दिश्यते । रागद्वेषादीत्यादिशब्देना विद्यास्मिताभिनिवेशा गृह्यन्ते । दोषाणा स्वाभाविकत्वं शास्त्रानपेक्षत्वम् । अपिकारः संभावनार्थः । दृष्टत्वमन्वयव्यतिरेकसिद्धत्वम् ।

होने वाले इष्ट प्राप्ति और अनिष्टपरिहार के उपाय विशेष को समझने की इच्छा वाले पुरुष को, उस विशेष उपाय का ज्ञान कराने के लिए कर्मकाण्ड का प्रारम्भ किया जाता है। आत्मा की इष्ट प्राप्ति और अनिष्टपरिहार की इच्छा के कारण कर्तृत्व भोक्तृत्व स्वरूप अभिमानलक्षण आत्मविषयक अज्ञान को उससे विपरीत ब्रह्मात्मस्वरूप विज्ञान के द्वारा नही हटाया गया। जब तक उसे नही हटाया जाता है, तब तक यह अज्ञानी जीव कर्मफल के राग, द्वेषादि (अविद्या, अस्मिता, अभिनिवेश रूप) स्वाभाविक दोषो से प्रेरित हुआ, शास्त्रोक्त विहित और निषिद्ध कर्मो का अतिक्रमण करके वर्तता हुआ मन वाणी और शरीर से अधर्मसंज्ञक दृष्ट और अनिष्ट साधन भूत अदृष्ट कर्मो का सम्पादन करता है,

१ प्रेरित ।, २ सम्पादयति । ३ अधर्मानुष्ठानात् । ४ अर्थद्वारोपायोपेयभावरूपसम्बन्धमित्यर्थ । ५ अपिरेवार्थः । ६ अन्वयव्यतिरेकौ शास्त्र च 'यत्र हि द्वैतमिव भवती'त्यादि । ७ कर्तृत्वादिभ्रम सोपादानक कार्यत्वात् घटादिवत् देवदत्तोऽज्ञानवान् कर्तृत्वादिभ्रमवत्त्वात्—अन्वये रजतादिभ्रमवद्यज्ञदत्तादिवत् व्यतिरेके वामदेवादिवदित्येवमाद्यनुमानमिह बोध्यम् । ८ उपायोपेयभावरूपसम्बन्धेत्यर्थ । ९ कथं तर्हि तत्र प्रवृत्तिरित्यत्राह—तत्त्विति । १० परम्परया । ११ कर्मकाण्डस्य साक्षान्मुक्तावनुपयोगित्वात् । १२ अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । दृग्दर्शनशक्त्योरेकात्मतैवास्मिता । सुखानुशयी राग । दुःखानुशयी द्वेष । स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेश । द्वितीयसाधनपादीयसूत्राणि ५-९॥ स्वस्य रस संस्कार तद्वाही तज्ज इति यावत् । तथा अविद्वद्वत् । अभिनिवेश मा नाभूवमिति मरणत्रास । रूढ प्रसिद्ध । दार्ढ्यंगत इति वार्थं । १३ शास्त्रजन्येष्टानिष्टसाधनताज्ञानाजन्यत्वम् । १४ प्रायस्त्वद्योतनार्थ । १५ निषिद्धशास्त्रातिक्रमे राजदण्डाद्यनिष्टसत्त्व तदभावे तदभाव ।

कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम् । ततो मनश्रादिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम् । तद्द्विविधम्—ज्ञानपूर्वकं केवलं च । तत्र केवलं पितृलोकादिप्राप्तिफलम् । ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम् । तथाच शास्त्रम् "आत्मयाजी श्रेयान्देव-

---

अदृष्टत्वं शास्त्रमात्रगम्यत्वम् । अधर्मोपचयप्राचुर्ये हेतुमाह—स्वाभाविकेति । अथ वैराग्यार्थं कर्मफलं प्रपञ्चयन्नधर्मफलमाह—तत इति ।

उक्तं हि—

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति।

तर्हि पुण्योपचयाभावादनवकाशं स्वर्गादिफलमिति नेत्याह—कदाचिदिति । शास्त्रीयसंस्कारस्य बलीयस्त्वे फलितमाह—तत इति । आदिशब्दो वाग्देहविषयः । फलविभागं वक्तुं कर्म भिनत्ति—तद्द्विविधमिति । तस्य मुक्तिफलत्वं निरसितु फलं विभजते—तत्रेति । केवलमिष्टादिकर्मेति शेष । "कर्मणा पितृलोकः' इति हि वक्ष्यति । तस्मिन्फले नानात्वमभिप्रेत्याऽऽदिशब्दः । "विद्यया देवलोक.' इति श्रुतिमाश्रित्याऽऽह—ज्ञानेति । देवलोको यस्याऽऽदिर्ब्रह्मलोको यस्यान्तस्तस्या"र्यस्य प्राप्तिरेव फलमस्येति विग्रहः उक्तेऽर्थे शातपथीं श्रुतिं प्रमाणयति—तथाचेति । सर्वत्र परमात्मभावनापुरःसरं नित्यं कर्मानुतिष्ठन्नात्म"याजी । कामनापुर.सरं देवान्यजमानो देवयाजी । तयोर्मध्ये कतरः श्रेयानिति विचारे सत्यात्मयाजी श्रेयानिति निर्णयः कृतः । अतो ज्ञानपूर्वकं कर्म देवलोकस्य कामनापूर्वं तु पितृलोकस्य प्रापकमित्यर्थः ।

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
"इह वाऽमुत्र वा काम्यं "प्रवृत्तं कर्म कीर्त्यते ॥
निष्कामं ज्ञानपूर्वं तु "निवृत्तमभिधीयते'

---

क्योंकि स्वभावजनित दोष बलवान् होता है। अधर्म अनुष्ठान से उसे स्थावर पर्यन्त नीच योनियों की प्राप्ति होती है।

कभी-कभी शास्त्रजन्य (ज्ञान से होने वाले) संस्कार बलवान् होते हैं। तब मन, वाणी, देह से प्राय धर्माख्य इष्टसाधनों को करता रहता है। कर्म दो प्रकार के हैं—सोपासन और केवल । उनमें केवल कर्म (कामना द्वारा अनुष्ठित) पितृलोकादि की प्राप्तिरूप फलवाले होते हैं। सोपासन कर्म देवलोक स्वर्लोक, सत्यलोक, ब्रह्मलोक की प्राप्ति कराते हैं। इस सम्बन्ध मे शास्त्रवचन भी है– "देवयाजी से

---

१ शास्त्रजज्ञानजसंस्कारेत्यर्थः । २ कर्म । ३ उपासनासमुच्चितम् सोपासनमिति यावत् । ४ कामनयाऽनुष्ठीयमानमिति शेष । ५ कर्मकाण्डस्यान्त शुद्धिपुर सर वैराग्यजननद्वारा मोक्षे प्रवेशप्रतिपादनान्तरमित्यर्थः । ६ शारीरकर्मजपापै रित्यर्थः । ७ वाचिकै पक्षिमृगता मानसैरन्त्यजातितामिति स्मृतिशेष । ८ मानवीय स्मृति । ९ तस्मात्—अधर्मोपचयादित्यर्थः । १० कर्मण । ११ बृ० १-५-१६ । १२ कस्यचिद्भोगे कस्यचिद्भोगापेक्षमाधिक्य तरतमभाव तरतमभावेनानेकविधत्वमित्यर्थः । १३ बृ० १-५-१६ । १३ स्वर्लोकादिसत्यलोकान्तरूपस्य । १५ आत्मा अन्त करणम् तद्यजनशील । यजनम् पूजनम् अन्त करणपूजन च तच्छोधनरूपम् शोधित हि तत्पूजित भवति । १६ कारीर्या यजेत वृष्टिकाम । चित्रया यजेत पशुकाम इत्यादिनोक्तमैहिक काम्यम् । ज्योतिष्टोमादि चामुष्मिकं वेदितव्यम् । १७ सांसारिकप्रवृत्तिप्रयोजकत्वात्प्रवृत्तमित्युच्यते । १८ संसारनिवृत्तिप्रयोजकत्वान्निवृत्तमुच्यते ।

याजिनः" इत्यादि । स्मृतिश्च "द्विविधं कर्म वैदिकम्" इत्याद्या । साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः । एवं ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवतो धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया ।

'तदेवेदं' व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत् । 'स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिर-

इत्यादिमनुस्मृतिं चात्रैवोदाहरति—स्मृतिश्चेति । धर्माधर्मयोरेकैकस्य फलमुक्त्वा मिथयोः फलमाह—साम्ये चेति । उक्तं हि—

'उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः' इति ।

त्रिविधमपि कर्मफलं वैराग्यार्थं संक्षिप्योपसंहरति—एवमिति । सा' चाविद्याकृतत्वादनर्थरूपेत्याह—स्वाभाविकेति । विचित्रकर्मजन्यतया तस्या वैचित्र्यमाह—धर्माधर्मेति । तर्हि धर्माधर्माभ्यामेव तन्निर्माणसंभवात्कृतमविद्ययेत्यत आह—नामेति । तेषां सूक्ष्मावस्थाऽविद्या सवासनेति यावत् । धर्मादेरविद्यायाश्च निमित्तत्वोपादानत्वाभ्यामुपयोग इति भाव. ।

ननु संसारगतेराविद्यकत्वमयुक्तं 'प्रत्यक्षादिप्रतिपन्नत्वात्तन्नामरूपाभ्यामेव' व्याक्रियतेति श्रुतौ च नामरूपात्मनो जगतोऽभिव्यक्तिश्रवणाच्च प्रामाणिकस्याविद्याकृतत्वमत आह—तदेवेदमिति । जगतः "स्वरूपमात्मा तत्राध्यस्तत्वात्तस्मा"दात्मतत्त्वेऽनभिव्यक्ते प्रत्यक्षादिना श्रुत्या चाभिव्यक्तमिव दृश्यमानमपि जगदनभिव्यक्त"मेवेति" न तस्याविद्याकृतत्वक्षतिरिति भावः । अविद्याकृतो संसारगतिमनुभाषते"—स एष इति । नन्वविद्याकृतत्वे "कथमनादित्वमित्याशङ्क्य तस्य "प्रवाहरूपेणेत्याह—बीजाङ्कुरादिवदिति । "तर्हि कादाचित्कया साधनापेक्षामन्तरेण नाशो "भविष्यतीत्याशङ्क्याऽऽह—

आत्मयाजी श्रेष्ठ है ।" स्मृति भी कहती है— (प्रवृत्त और निवृत्त भेद से) वैदिक कर्म दो प्रकार के हैं। पुण्य और पाप के समान होने पर मनुष्यत्व की प्राप्ति होती है। इस प्रकार ब्रह्मा से लेकर स्थावर पर्यन्त, धर्म और अधर्म साधन से होने वाली, स्वाभाविक अविद्यादि दोष वाली, नाम रूप एव कर्म के आश्रित ससार की गति है।

(ब्रह्मा से लेकर स्थावर पर्यन्त) यही प्रत्यक्षादि प्रमाण द्वारा प्रतिपन्न साध्य-साधन रूप व्याकृत जगत् उत्पत्ति से पूर्व अव्याकृत था। (परोक्षप्रत्यक्षात्मक) वह ससार आत्मा मे क्रिया, कारक

१ नामादीनामाश्रय एवाश्रयो यस्या इति विग्रह । २ ब्रह्मादिस्थावरान्त यथोक्तमेव । ३ प्रत्यक्षादिना प्रतिपन्नम् । ४ स एष स्वर्गमर्त्यादि परोक्षप्रत्यक्षात्मक ससार इत्यन्वय । ५ धर्मद्वैविध्ये एवेत्यर्थ । ६ ससारगति । ७ नामदीनामित्यर्थ । ८ ससारगताविति शेष । ९ यथाहि प्रत्यक्षादिप्रतिपन्न घटादि अविद्यातिरिक्तमृदुपादान तद्वदिति भाव । १० न तु प्रत्यगात्मनापीत्येवकारार्थ । ११ वास्तव रूपमित्यर्थ । १२ जगत आत्मस्वरूपत्वात् । १३ तथाच वार्तिकमपि—'अविद्यातिमिरोच्छित्तौ नानाविष्कृतमण्वपि । कार्यकारणवद्वस्तु नानपास्त तमोऽप्यत ॥' इति आत्मनि विदिते सर्वं विदितमिति पादत्रयार्थ फलित । नाविद्यातिरिक्त तम इति तुर्यं समाहितम् । अत आत्मज्ञानात् । १४ अन्यथाभासमानत्वाद्वेसो । १५ अनुवदति । १६ कथ तस्येति सम्बन्ध । १७ न स्वरूपेण । १८ ससारस्याविद्याजन्यत्वे । १९ अविद्याजन्य हि गन्धर्वनगरादिनिवर्तकमनपेक्ष्य स्वयमेव नश्यति तद्वदसावपि ।

नर्थोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते ।

अस्य त्वश्वमेधकर्मसंबन्धिनो विज्ञानस्य प्रयोजनं येषामश्वमेधे नाधिकारस्ते-

अनादिरिति । चैतन्यवदात्मनि तस्याविद्याकृतत्वानुपपत्तिमाशङ्क्य नानारूपत्वेन 'ततो विलक्षण-त्वादेकरूपे युक्त तस्य कल्पितत्वमित्याह—क्रियेति । अनादेरपि संसारस्य प्रागभाववन्निवृत्तिः स्यादिति चेत्तयाऽपि ब्रह्मविद्यामन्तरेण नाशो नास्तीत्याह—अनन्त इति । प्रयत्नतो हेयत्वं द्योतयितुमनर्थ इति विशेषणम् । नैसर्गिक इति पाठे तु कारणरूपेण तदूहमुन्नेयम् । यस्मात्कर्म संसारफलं न मोक्षं फलयति तस्मात्सनिदानसंसारनिवर्तकात्मज्ञानार्थत्वेन साधनचतुष्टयसंपन्नमधिकारिणमधिकृत्य वेदान्तारम्भः संभवतीत्युपसंहरति—इत्येतस्मादिति ।

यथोक्तज्ञाना र्थत्वेनोपनिष दारम्भे "ब्रह्म वा इदमग्र आसीत्" इत्यारभ्यैव तस्माद्वारभ्य ज्ञानोपदेशात् । 'उषा वा अश्वस्य' इत्यारम्भस्तु न युक्तः साक्षादत्र तदनुक्तेरित्याशङ्क्यास्मादारम्भ्यो-पनिषदारम्भेऽभीष्टं फलमभिधित्समानः प्रथममश्वमेधोपासनफलमाह—अस्य त्विति । राजयज्ञत्वा-दश्वमेधस्य तदनधिकारिणामपि ब्राह्मणादीनां तत्फलार्थिनामस्मादेवोपासनात्तत्प्राप्तिरिति मत्वा श्रुतौ तदुपासनोक्तिरित्यर्थः । किमत्र नियामकमित्याशङ्क्य विकल्पश्रवणं केवलस्यापि ज्ञानस्य साधनत्वं सूचयतीत्यर्थतो विकल्पश्रुतिमुदाहरति—विदयेति । तत्फलप्राप्तिरिति पूर्वेण संबन्धः । तत्रैव श्रुत्यन्तरमाह—तद्धेति । तदेतत्प्राणदर्शनं लोकप्राप्तिसाधनं प्रसिद्धमिति यावत् । आदिशब्देन केवलोपास्त्या ब्रह्मलोकाभिधायिन्यः श्रुतयो गृह्यन्ते ।

और फल का अध्यास रूप होने से अविद्याकृत है, बीजाङ्कुरादि के समान (प्रवाह रूप से, न कि स्वरूप से), अनादि और अनन्त अनर्थ का कारण है। इसलिए इससे विरक्त की अविद्या निवृत्ति के लिए इससे विपरीत ब्रह्मविद्या प्राप्ति रूप प्रयोजन वाली यह उपनिषद् प्रारम्भ की जाती है।

(उषा वा अश्वस्य) इस अश्वमेधसम्बन्धी विज्ञान का प्रयोजन यही है कि जिनका (राजयज्ञत्व होने से) अश्वमेध यज्ञ करने में अधिकार नहीं है, ऐसे फलार्थी को (उषा वा अश्वस्य) इसी उपासना के

१ इतीति संसारस्यानर्थरूपत्वाद्धेतोरित्यर्थः । २ एतस्मात् संसारात् । ३. तद्विपरीतेति अविद्याविरुद्धेत्यर्थः । ४ असम्भवम् । ५ संसारस्यत्यादि । ६ चैतन्यस्य । ७ अनादित्वस्य निवृत्त्यभावाप्रयोजकत्वेऽपीत्यर्थः । ८ ज्ञानेतरानिवर्त्य । ९. तस्य नैसर्गिकत्वम् स्वरूपेणानादित्वमिति यावत् । १० निष्पादयति । ११. अधि-कृत्यति उद्दिश्येत्यर्थः तदुपकारायेति यावत् । १२ यथोक्तज्ञानेति सनिदानसंसारनिवर्तकब्रह्मात्मैक्यज्ञानेत्यर्थः । १३ तदर्थत्वेन तज्जनकत्वेन तज्जननार्थमिति यावत् । १४ उपनिषदारम्भे तत्प्रतिपादकग्रन्थारम्भे । सिद्धे सतीत्यर्थः । १५ बृ० उ० १-४-१० । १६ इति वाक्याद्ब्राह्य प्रणेतव्यमित्यर्थः इत्यत आरभ्योपनिषच्छब्द प्रयोक्तव्य इति भावः । १७ इत्यारम्भ इति इत्यत आरभ्य उपनिषदारम्भ इत्यर्थः । १८. अत्र—अश्वमेध-ब्राह्मणे । १९ अस्मादिति उषा वेत्यादि ब्राह्मणनिरूपितादित्यर्थः । २० अत्रेति उक्तानधिकारिणा तेन तदाप्तौ । २१ अपीति उपासनासमुच्चितकर्मवदित्यर्थः । अपेर्दृष्टान्तार्थकत्वादत्र । २२ अर्थत इति विकल्प-श्रुत्यर्थनिदर्शनत इत्यर्थः । २३ केवलोपास्त्यापि कर्मफलावाप्तौ । २४ तत्पूर्वोक्तम् एतत् फलकथनसमये उपस्थितम् ।

पामस्मादेव विज्ञानात्तत्फलप्राप्तिः । "विद्यया वा कर्मणा वा" "तद्धैतल्लोकजिदेव" इत्येवमादिश्रुतिभ्यः ।

कर्मविषयत्वमेव विज्ञानस्येति चेत् । न । "योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति विकल्पश्रुतेः । विद्याप्रकरणे चाऽऽम्नानात् । कर्मान्तरे च संपादनदर्शनाद्विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते । सर्वेषां च कर्मणां परं कर्माश्वमेधः । समष्टिव्यष्टिप्राप्तिफलत्वात् ।

---

"अश्वमेधे पशूपासनं तस्याप्यश्वादिवत्कर्मशेषत्वेन फलवत्त्वान्न स्वातन्त्र्येण तद्वत्स्वमङ्गेषु स्वतन्त्रफलाभावादिति शङ्कते—कर्मविषयत्वमिति । ज्ञानस्य क्रत्वर्थत्वं दूषयति—नेति । पूर्वप्रार्थतो" दर्शितां विकल्पश्रुतिमत्र" हेतुतया स्वल्पोऽनुक्रामति—योऽश्वमेधेनेति । स सर्वं पाप्मानं तरति तरति ब्रह्महत्यामिति संबन्धः । ज्ञानकर्मणोस्तुल्यफलत्वस्य "न्याय्यत्वादिति शेषः" । उपास्तिफलश्रुतेरर्थवादत्व"माशङ्कयाश्वमेधवदुपास्तेरपि "कर्मत्वाद्विहितत्वात्कर्मप्रकरणाद्व्युत्थितत्वाच्च मैवमित्याह—विद्येति । फलश्रुतेरर्थवादत्वाभावे हेत्वन्तरमाह—कर्मान्तरे चेति । अश्वमेधातिरिक्ते कर्मण्ययं वाव लोकोऽग्निरित्यादौ" "चित्याग्न्यावायेतल्लोकादिसंपादनस्य "स्वतन्त्रफलोपासनस्य दर्शनाच्च "फलश्रुते-

---

द्वारा फल की प्राप्ति हो जाय । श्रुतियो मे कहा भी है—"उसके फल की प्राप्ति उपासना अथवा कर्म से होती है", "वह यह (प्राण उपासना) सम्पूर्ण लोक प्राप्ति का साधन है ।"

यदि कहो अश्वमेधविज्ञान कर्मशेषत्व ही है, तो ऐसा कहना उचित नही । क्योंकि "जो अश्वमेध से यज्ञ करता है अथवा जो इसे इस प्रकार जानता है (वह मृत्यु को जीत लेता है)" । इस प्रकार कर्मका अनुष्ठान एव ज्ञान का विकल्प बतलाने वाली श्रुति है । विद्या प्रकरण मे भी इसका वर्णन है । अश्वमेध से भिन्न कर्म मे भी इसका सम्पादन मिलने से विज्ञान से भी अश्वमेध का ही फल मिलता है, ऐसा जाना जाता है । अश्वमेध सब कर्मों से श्रेष्ठ कर्म है । क्योंकि इससे समष्टिव्यष्टयात्मक हिरण्यगर्भपद की प्राप्ति होती है ।

---

१. कर्मविषयत्वम्—कर्मशेषत्वम् । २. एव । ३ एनम् अश्वमेधम् । ४ एवमिति कर्मानुष्ठानकमवदित्यर्थ । ५ श्रेष्ठम् । ६ समष्टिव्यष्टिप्राप्तिफलत्वादिति—समष्टित्वम् अनुवृत्तरूपत्वम् तच्च सकलभूतवर्गानुगतत्वम् । व्यष्टित्वम् व्यावृत्तरूपत्वम् तच्च हिरण्यगर्भलोकवृत्तित्वम् । तथा च समष्टिव्यष्ट्यात्मकहिरण्यगर्भपदप्राप्तिफलकत्वादित्यर्थ. ७ अश्वमेधक्रतुविषयम् । ८. उपासनस्य । ९. क्रतुशेषत्वम् । १०. अर्थप्रदर्शनेनोपस्थापिताम् । ११. अत्रेति नेति प्रतिज्ञायामित्यर्थ । १२ आवश्यकत्वात् । १३. अन्यथाविकल्पश्रुतेरनुपपत्तेरिति भाव. । १४. अश्वमेधोपासन प्रशस्तमित्यर्थः । १५ ननु कर्मत्वं न फलजनकत्वनियतम् अतथाभूतस्यापि जलताडनादे. कर्मत्वदर्शनादित्यत आह—विहितत्वादिति । विहितत्वे सति कर्मत्वं फलजनकत्वे हेतु । ननु विहितकर्मरूपत्वेऽपि उक्तोपासनस्य प्रयाजादिवदश्वमेधं कर्मशेषत्व किं न स्यादत आह कर्मेति । वैपरीत्येन कर्मप्रातिकूल्येन स्थितत्वम् व्युत्थितत्वम् तस्मात् विद्याप्रकरणपठितत्वाच्च कर्मणा सह शेषशेषिभावं इत्यर्थ. । १६ वाक्ये । १७ कर्माङ्गभूतचयनाख्यकर्मणा संस्कृतोऽग्नि चित्याग्नि. । १८. अत्र बहुव्रीहिः । १९. न फलश्रुतेरिति कर्मान्तरेऽङ्गविषयकोपासनस्य स्वतन्त्रफलकस्य दर्शनात् तथाविधे च प्रकृतोपासने स्वतन्त्रफलत्वमेवोचित बाधकाभावादिति भाव ।

तस्य चेह ब्रह्मविद्याप्रारम्भ आम्नानं सर्वकर्मणां संसारविषयत्वप्रदर्शनार्थम् । तथाच दर्शयिष्यति फलमशनाया मृत्युभावम् ।

न नित्यानां संसारविषयफलत्वमिति चेत् । न । सर्वकर्मफलोपसंहारश्रुतेः । सर्वं हि पत्नीसंबद्धं कर्म । "जाया मे स्यादेतावान्वै कामः" इति निसर्गत एव सर्वकर्मणां

रर्थवदतेत्यर्थः । अश्वमेधोपासनं न क्रत्वर्थं किं तु पुरुषार्थं तत्र चाधिकारोऽश्वमेधक्रत्वनधिकारिणामपीत्येतावदेवेष्टं चेदुपासने कर्मप्रकरणस्थेऽपि तल्लाभाद्विद्याप्रकरणे नास्याध्ययनमर्थवदित्याशङ्क्याऽऽह—सर्वेषां चेति । परत्वे हेतुः—समष्टीति । अनुवृत्तव्यावृत्तरूपहिरण्यगर्भप्राप्तिहेतुत्वात्तस्य श्रेष्ठतेत्यर्थः ।

"तस्य पुण्य"श्रेष्ठत्वेऽपि "प्रकृते किमायातं तदाह—तस्य चेति । यदा क्रतुप्रधानस्याश्वमेधस्योपास्तिसहितस्यापि संसारफलत्वं तदाऽल्पीयसामग्निहोत्रादीनां संसारफलत्वं किं वाच्यमि"त्यस्मिन्कर्मराशौ बन्धहेतौ विरक्ताः साधनचतुष्टयविशिष्टा ज्ञानमपेक्षमाणास्तदुपाये श्रवणादावेव सर्वकर्मसंन्यासपूर्वके कथं न प्रवर्तेरन्नित्याशयवती श्रुतिरुपासनां विद्यारम्भेऽभिदधाति । "तेनोपा वा अश्वस्येत्यारभ्योपनिषदारम्भो युक्तो"ऽस्य विशिष्टाधिकारिसमर्पकत्वादित्यर्थः । "उपासनफलस्य संसार"गोचरत्वमेव कुतः सिद्धमत आह—तथा चेति । "अशनाया हि "मृत्युः । "स वै नैव रेमे । सोऽबिभेदिति" । भयारत्यादिश्रवणादुपास्तियुक्तक्रतुफलस्य सूत्रस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न "मुक्तये पर्याप्नोतीत्यर्थः ।

अश्वमेधक्रतु और उसकी उपासना का, यहा ब्रह्मविद्या के प्रारम्भ मे व्याख्यान, सब कर्मों का ससारविषयत्व प्रदर्शन करने के लिए है । हिरण्यगर्भ क्षुधादिवाला होने से उसकी मृत्युभावता फल को आगे श्रुति दिखलाएगी ।

यदि कहो नित्यकर्म ससार अन्तर्गत फलवाले नही हैं, तो ऐसा कहना नही बनता । क्योकि ("एतावान्वै काम.") श्रुति समस्त कर्मफलो का उपसहार ससार मे ही करती है । सब कर्म पत्नी से सम्बद्ध हैं ।

१ अश्वमेधक्रतोस्तदुपासनस्य च । २ बृ० उ० १-२-१ । ३ अशनायालक्षणया अशनायादिमान् हिरण्यगर्भं तस्या मृत्युभावमिति समस्त पदम् । ४ विषयेति अन्तर्गतेत्यर्थं । ५ सामान्येन सर्वकर्मफलसंग्राहकश्रुतौ कर्मफलान्तर्गतत्वे न मोक्षस्याश्रवणादित्यर्थ । यद्वा श्रुतौ ससारस्यैव कर्मफलत्वेन श्रवणादित्यर्थ । ६ बृ० उ० १-४-१७ । ७ वाक्येन । ८ अनुशेषम् । ९ पुरुष प्रति स्वातन्त्र्येण फलप्रदम् । १० तर्हीति शेष । ११ तस्य अश्वमेधस्य । १२ पुण्यश्रेष्ठत्वे सकलपुण्यकर्मणां मध्ये ज्यायस्त्वे । १३ प्रकृते अश्वमेधोपासनाध्ययनस्य ब्रह्मविद्याप्रकरणेऽर्थवत्त्वरूपे । "ब्रह्म वा इदमग्र आसीदि"त्यत आरब्धव्ये इत आरम्भस्य किं फलत्वरूपे च परमप्रकृते इत्यर्थं ।१४ इतीति इत्यभिप्रेत्यत्यर्थं । १५ तेनेति विद्याप्रकरणे तदुपन्यासस्य वैराग्यप्रयोजकत्वेनेत्यर्थं । १६ अस्येति उषा वेत्यत आरम्भस्यत्यर्थं । १७ उपासनाफलस्य हिरण्यगर्भरूपस्य । १८ ससारगोचरत्वम् ससारान्तर्गतत्वम् । १९ अशनायालक्षणया तद्वान् हिरण्यगर्भ । २० मृत्यु मारक अशनायावान् हि इतर मारयति । २१ स हिरण्यगर्भं विनोद न प्राप । २२ इति रत्यभावकथनात्तस्य जीवत्वम् तथा च ससारान्तर्गतत्वमेव तस्य । २३ मुक्तये नालमित्यर्थं । ननूपास्तियुक्तस्याशेषक्रतुराजोऽश्वमेधस्य महत्त्वेन मोक्षहेतुत्वम् अन्यथामहत्त्वानुपपत्तेरिति चेन्न क्रत्वन्तरापेक्षया फलातिरेकस्य एव महत्त्वस्य सुस्थत्वात् ।

'काम्यत्वं दर्शयित्वा पुत्रकर्मापरविद्यानां च "अयं लोकः पितृलोको देवलोकः" इति फलं दर्शयित्वा 'त्र्यन्नात्मकतां चान्ते उपसंहरिष्यति "त्रयं वा इदं नाम रूपं कर्म" इति। सर्वकर्मणा फलं 'व्याकृतं संसार एवेति।

इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत्। तदेव पुनः सर्वप्राणिकर्मवशाद्व्या-

उक्ते सर्वकर्मणा बन्धफलत्वे नित्यनैमित्तिकाना न तत्फलत्व तेषां 'विध्युद्देशे फलाश्रुतेर्न-ष्टाश्ववग्ध''रथन्यायेन मुक्तिफलत्वलाभादिति शङ्कते—न नित्यानामिति। "एतावान्वै काम इति" सर्वकर्मणामविशेषेण फलसंबन्धश्रवणात्पश्वादेश्च काम्य''फलत्वस्य तद्विध्युद्देशवशात्सिद्धत्वात्कर्मणा पितृलोक इति वाक्यस्य नित्यादिकर्मफलविषय''त्वान्न मोक्षफलत्वाशङ्केति परिहरति—नेति। ''उक्तमेव स्फुटयति—सर्वं हीति। पत्नीसंबन्धे मानमाह—जायेति। तथाऽपि कथं कर्मण सर्वस्य ''कामोपायत्व तत्राऽऽह—एतावान्वै काम इति। कथं ''तर्हि तेषा फलभेदो लभ्यते तत्राऽऽह—पुत्रेति। ''अथैव फलविभागे कथं समष्टिव्यष्टिप्राप्तिफलत्वमश्वमेधस्योक्तमत आह—त्र्यन्नात्मकता चेति। अस्याध्यायस्यावसाने कर्मफलस्य हिरण्यगर्भरूपता त्रयमित्याद्या श्रुतिरुप''संहरिष्यतीत्यर्थं। उपसंहारस्य तैस्तात्पर्यमाह—सर्वकर्मणामिति।

कर्मफल संसारश्चे''त्प्राक्तदनुष्ठानात्तद'भावान्मुक्ताना पुनर्बन्ध'' स्यादित्याशङ्क्याऽऽह—इदमेवेति। तर्हि तस्यामवस्थायामिति यावत्। तस्य पुनर्व्याकरणे कारणमाह—तदेवेति। व्याकृता-

"मुझे पत्नी प्राप्त हो—यही कामना है" यह श्रुति सब कर्मों को स्वभावत काममूलक दिखाकर, फिर पुत्र, कर्म और अपरा विद्या (उपासना) के "मनुष्यलोक, पितृलोक और देवलोक" इस प्रकार फल दिखलाकर अध्याय के अवसान में त्र्यन्नात्मकता से श्रुति उपसहार करेगी—"यह ससार नाम, रूप और कर्म इन तीनों से युक्त है।" सब कर्मों का फल व्याकृत ससार ही है, यह आशय है।

यही नामरूपकर्मात्मकत्रय उत्पत्ति से पूर्व अनभिव्यक्त रूप से स्थित था। वही फिर वृक्ष

१ काम्यमानफलसाधनत्वम्। २ अपरविद्या उपासना। ३ पूर्वोक्तसप्तान्नाना नामादिविषये सक्षेपकरणादाह-त्र्यन्नेति। ४ प्रथमाध्यायावसाने। ५ बृ० उ० १ ६ १। ६ नामरूपत्मनाऽभिव्यक्तम् तथा च काममेव वस्तु कर्मफल न सिद्धरूपम्। ७ अव्याकृतमासीत्—अनभिव्यक्तनामरूपात्मना स्थितमासीदित्यर्थं। तथा च न कस्यापि समारम्भ प्राथमिकत्व वस्तु दवयत विशेषपत्ते प्राक् सस्य सदैव सत्त्वात् तथास्तु विशेष मत् कदाचिद्व्यक्ततया कदाचिच्चाव्यक्ततयेति। ८ तेषाम् नित्यनैमित्तिककर्मणाम्। ९ विध्युद्देशे विधायक-वाक्य अहरह सन्ध्यामुपासीत 'यावज्जीवमग्निहोत्र जुहुयादि त्यवमादाविति यावत्। १० फलानुक्त नित्यनैमित्तिक फलसापेक्षम्—साधनानुक्तेश्च मुक्ति साधनसापेक्षेति भाव। ११ एतावान्वै जायापुत्रवित्तक-र्माण्येव। काम कामयितव्यो विषय इति श्रुत्यर्थं। १२ इतीति इत्यत्तद्वाक्येनेत्यर्थं। १३ काम्यफल-त्वस्येति—काम्यकर्मफलत्वस्येत्यर्थ। १४ बोधनत्वात्। १५ उक्तमेवेति मोक्षस्य कर्मफलत्वाभावमेव यद्वा कर्मणा ससारफलत्वमेवेत्यर्थं। १६ कामोपायत्वम् काम्यमानफलसाधनत्वमित्यर्थं। १७ तर्हि—निखिल-कर्मणा काम्यमानफलसाधनत्वे। १८ अथो नन्वो एवमिति त्रिधेत्यर्थं। १९ उपसंहरिष्यति बोधयिष्य-तीत्यर्थं। २० तदनुष्ठानात् कर्मानुष्ठानात् प्राक् पूर्वम्। २१ तदभावात् कर्माभावात्। २२ मुक्तानां पुनर्बन्ध इति—यथा प्राक्कर्माभावेऽपि प्राथमिकसमारागम तथैव ज्ञानाग्निदग्धकर्मणां मुक्तानामपि पुनरागम-स्यादिनैव कर्मभिरित्यर्थ।

क्रियते बीजादिव वृक्षः । सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः क्रियाकारकफलात्मकतयाऽऽत्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्तामूर्ततद्वासनात्मकोऽतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते । अतोऽस्मात्क्रियाकारकफलभेदस्वरूपादेतावदिदमितिसाध्यसाधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्याऽऽरभ्यते ।

---

व्याकृतात्मन. संसारस्य "प्रामाणिकत्वेन सत्यत्वमाशङ्क्याविद्याकृतत्वेन तन्मिथ्यात्व"मुक्तं स्मारयति—सोऽयमिति । स एव हि भ्रान्ति"विषयो न प्रामाणिकस्त"स्कुतोऽस्य सत्यतेत्यर्थः । कथम"स्याऽऽत्मन्यद्वये-कूटस्थे "प्राप्तिरित्याशङ्क्याऽऽह—क्रियेति । समारोपे मूलकारणमाह—अविद्ययेति । आत्मन्यविद्यारोपित द्वैतमित्यत्र द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चेत्यादिवाक्य प्रमाणयति—मूर्तेति । नन्वात्मन्यारोपो नोपपद्यते तस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य द्वैतविलक्षणत्वादसति सादृश्येऽध्यासासिद्धेरत आह—अत इति । संसाराद्वैलक्षण्यमेव प्रकटयति—अनामेति । आदिपदेना"न्येऽपि विपर्ययभेदाः सगृह्यन्ते । आरोपे "अमिलोमि करोमि भुञ्जे चेत्यनुभवं प्रमाणयति—अवभासत इति । आत्मन्यध्यासः सादृश्याद्यभावेऽपि नभसि मलिनत्वादिवद्यतोऽनुभूयतेऽत" सविलासाविद्यानिवर्तकब्रह्मविद्यार्थत्वेनोपनिषदारम्भः संभवतीत्युपसंहरति—अत इति । एतावदित्यनर्थात्मत्वोक्तिः । तत्त्वज्ञानादज्ञाननिवृत्तौ दृष्टान्तमाह—रज्ज्वामिवेति ।

---

मे बीजरूप हेतु के समान सब प्राणियो के कर्मवश अभिव्यक्त होता है। यह ससार व्याकृत-अव्याकृत रूप है, अविद्या का विषय है। क्रिया, कारक और फलात्मक होने से आत्मतादात्म्य सम्बन्ध से अविद्या द्वारा ही अध्यस्त है। स्थूल, सूक्ष्म और तत्संस्कारात्मक है। इससे विलक्षण आत्मा नाम-रूप कर्म से रहित है, अद्वितीय, नित्य शुद्ध-बुद्ध-मुक्त स्वभाव होने पर भी क्रिया कारक फल विशेषादि तद्रूप विपर्यय से प्रतीत होता है। ससार के अध्यस्तत्व होने से इस साध्यसाधनरूप, क्रिया-कारक और फल-विशेषादि रूप ससार से "यह इतना है" इस प्रकार विरक्त हुए पुरुष की कामादि दोष से होने वाले तत्तद् निषिद्ध कर्मों की जनयित्री अविद्या की निवृत्ति के लिए, रस्सी मे सर्पभ्रम के समान बाध के लिए, ब्रह्मविद्या का आरम्भ किया जाता है।

---

१ अविद्याकृत इत्यर्थः । २ निष्क्रियाद्वयसिद्धस्वरूपात्मनि भासमानस्य ससारस्याध्यारोपितत्व हेतुमाह—क्रियेति । ससारो हि क्वचित् क्रियारूप स च न निष्क्रिय आत्मनि वस्तुत सभवति विरोधात् । क्वचिच्च कारकरूप तस्य च सद्वचस्य अद्वये विरोधात् । क्वचिच्च फलात्मक फलस्य च कार्यरूपतया सिद्धे वस्तुनि वस्तुत्वविरोधादध्यारोपित एव सति ससार इति । ३ आत्मतादात्म्येनेत्यर्थः । आविद्यकतादात्म्यसम्बन्धेनेति यावत् । ४ अध्यस्त । ५ स्थूलसूक्ष्मतत्संस्कारात्मक । ६ उक्तससारादित्यर्थ । ७ विशेषेत्यर्थः । ८ तद्रूपविपर्ययेणेत्यर्थः । ९ ससारस्याध्यस्तत्वसभवात् । १० ससारात् । ११ इद जगत् एतावत् अनर्थात्मकम् । इति हेतौ ससारस्यानर्थात्मकत्वादिति समुदायार्थ । १२ तत्तद्दोषप्रयुक्तनिषिद्धादिकर्मेत्यर्थः । १३ श्रुतिबोध्यत्वादिति भाव । १४ ससारगतिर्नामरूपकर्माश्रयति वाक्येनोक्तमित्यर्थः । १५ भ्रान्तिप्रयुक्त इत्यर्थः । १६. तत्—तस्मात् भ्रान्तिमूलकत्वादित्यर्थ । १७ भ्रान्तिमूलकससारस्य । १८ सम्बन्ध । १९ देवतिर्यङ्मनुष्या । २० प्रमाश्रयो भवामि प्रमाताहमिति यावत् । प्रमातृत्वानन्तर कर्तृत्व ततो भोक्तृत्वमिति क्रमो दर्शित । २१ सादृश्यादेरध्यासाप्रयोजकत्वादित्यर्थ ।

ॐ । उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा

ॐ यज्ञ सम्बन्धी अश्व का शिरोभाग ब्रह्ममुहूर्त है (नेत्रों का अभिमानी देव) सूर्य उसका नेत्र है, वायु प्राण है, वैश्वानर अग्नि उसका खुला हुआ मुख है (क्योंकि मुखका अधिष्ठातृदेव अग्नि ही है) और यज्ञीय अश्वका आत्मा संवत्सर है, (अश्वस्य मेध्यस्य, इसकी पुनरुक्ति सबके साथ सम्बन्ध बतलाने के लिये है) ऊँचाई में समानता होने के कारण द्युलोक उसका पृष्ठ है। छिद्ररूपता में समानता होने के कारण अन्तरिक्ष उदर है, पृथिवी पैर रखने का स्थान है, चारों दिशाएँ पार्श्व भाग हैं, आग्नेय आदि अवान्तर दिशाएँ पार्श्वभाग की अस्थियाँ हैं, संवत्सर के अवयव होने से ऋतुएँ अङ्ग हैं, मास और अर्धमास संधियाँ हैं, दिन और रात्रि पाद हैं, शुक्लत्व में समानता होने के कारण नक्षत्र अस्थियाँ हैं,

तत्र तावदश्वमेधविज्ञानाय "उषा वा अश्वस्य" इत्यादि । तत्राश्वविषयमेव दर्शनमुच्यते प्राधान्यादश्वस्य । प्राधान्यं च तन्नामाङ्कितत्वात्क्रतोः प्राजापत्यत्वाच्च ।

उषा इति ब्राह्मो मुहूर्त उषाः । वैशब्दः स्मारणार्थः प्रसिद्धं कालं स्मारयति । शिरः प्राधान्यात् । शिरश्च प्रधानं शरीरावयवानाम् । अश्वस्य मेध्यस्य मेधार्हस्य यज्ञियस्योषाः शिर इति संबन्धः ।

एवमुपनिषदारम्भे स्थिते प्राथमिकब्राह्मणयोरवान्तरतात्पर्यमाह—तत्र तावदिति । आद्यस्य पुनरवान्तरतात्पर्यं वर्णयति—तत्रेति । नन्वश्वमेधस्याङ्गबाहुल्ये कस्मादश्वाख्याङ्गविषयमेवोपासनमुच्यते तत्राऽऽह—प्राधान्यादिति । तदेव कथमिति तदाह—प्राधान्य चेति । प्रजापतिदेवताकत्वा-

उसमें भी प्रथम अश्वमेध उपासना के लिए "उषा वा अश्वस्य मेध्यस्य शिर" इत्यादि मन्त्र कहा है। अश्वमेध याग में अश्व की प्रधानता होने के कारण अश्वाङ्ग विषयक ही दर्शन कहा जाता है। इस याग में अश्व नाम अङ्कित होने के कारण, विराट् देवता होने के कारण अश्व की प्रधानता है।

'उषा वा अश्वस्य' इस मन्त्र में उषा का अर्थ है ब्राह्म मुहूर्त। "वै" शब्द स्मरण दिलाने के अर्थ में है, जो (शास्त्रीय एवं लौकिक व्यवहार में) प्रसिद्ध ब्रह्ममुहूर्त काल का स्मरण कराता है।

१ यज्ञार्हस्य। २ टीकोक्तार्थम्। ३ तावदिति—आदौ ब्राह्मणाभ्यामश्वमेधोपासनमुच्यते तत्राप्याद्येनाश्वविषयम् ग्रहविषयं च दर्शनम् द्वितीयेनाग्निविषयमिति भेद। ४ उपासनाय। ५ अश्वाङ्गविषयमिति यावत्। ६ अश्वनामघटितनामवत्त्वादित्यर्थः। ७ 'रात्रेः पश्चिमयामस्य मुहूर्तो यस्तृतीयकः। स ब्राह्म इति विज्ञेयो विहितः स प्रबोधने। ८ सवनीयस्येति यावत्। ९ महातात्पर्यं तु समस्तोपनिषदां ब्रह्मविद्यायामेवेति बोध्यम्। १० विराट।

नक्षत्राण्यस्थीनि नभो माꣳसानि। ऊवध्यꣳ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च [1]लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्वि[2]जृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति [3]वागेवास्य वाक्॥ १॥

[आकाश मे स्थित मेघ मांस है, सिकता उदरस्य अर्धपक्व अन्न है, नदियां नाड़ियां है, पर्वत जिगर और हृदयगत मांसखण्ड है, औषधि और वनस्पतियाँ लोम तथा केश है, मध्याह्नकाल पर्यन्त ऊपर की ओर जाता हुआ सूर्य नाभि से ऊपर का भाग और मध्याह्नकाल से नीचे की ओर जाता हुआ सूर्य कमर से नीचे का भाग है, उसकी जमुहाई लेना विजली चमकना है और जो शरीर का विधूनन है वह मेघ का गर्जन है, वह अश्व जो मूत्र त्याग करता है वही वर्षा है और वाणी ही उस अश्व की वाणी है॥ १॥]

कर्माङ्गस्य पशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषु [4]क्षिप्यन्ते। [5]प्राजापत्यत्वं च प्रजापतिदृष्टचध्यारोपणात्। काललोकदेवतात्वाध्यारोपणं च प्रजापतित्वकरणं पशोः। एवंरूपो हि प्रजापतिः। विष्णुत्वादिकरणमिव प्रतिमादौ।

त्वाश्वस्य प्राधान्यमित्याह—प्राजापत्यत्वाच्चेति। प्रतीकमादाय व्याचष्टे—उषा इत्यादिना। स्मारणार्थत्वमेव निपातस्य स्फुटयति—प्रसिद्धमिति। [6]शास्त्रीये लौकिके च व्यवहारे प्रसिद्धो ब्राह्मो मुहूर्तस्तं कालमिति यावत्। उषसि शिरःशब्दप्रयोगे दिनावयवेषु तस्य प्राधान्यं हेतुमाह–प्राधान्यादिति। तथाऽपि कथं तत्र तच्छब्दप्रयोगस्तत्राऽऽह–शिरश्चेति। आश्वमेधिकाश्वशिरस्युषसो दृष्टिः कर्तव्येत्याह—अश्वस्येति।

कालादिदृष्टिरश्वाङ्गेषु किमिति क्षिप्यतेऽश्वाङ्गदृष्टिरेव तेषु किं न स्यादित्याशङ्क्याऽऽह–कर्माङ्गस्येति। अङ्गेष्वनङ्गमति[7]क्षेपे हेत्वन्तरमाह—प्राजापत्यत्व चेति। अश्वस्य सेत्स्यतीति शेषः। तत्र हेतु—प्रजापतीति। ननु कालादिदृष्टयोऽश्वावयवेष्वारोप्यन्ते न तस्य प्रजापतित्वं क्रियते तत्राऽऽह—कालेति। कालाद्यात्मको हि प्रजापतिः। तथा च यथा प्रतिमायां विष्णुत्वकरणं तद्दृष्टिस्तथा कालादिदृष्टिरश्वा-

उषाकाल प्रसिद्ध होने के कारण शिर है। शरीर के अवयवो मे जैसे शिर श्रेष्ठ है इसी प्रकार दिन रूपी अवयवो मे उषा प्रधान है। आश्वमेधिक अश्व का उषा शिर है—ऐसी दृष्टि कर लेनी चाहिये।

कर्माङ्गभूत पशु का सस्कार होने के कारण उसके शिर आदि मे कालादि दृष्टिया आरोपित की जाती हैं। प्रजापतिदृष्टि के आरोप करने से यह प्रजापतिरूपत्व है। काल, लोक और देवतात्व का आरोप ही पशु मे प्रजापतित्व की भावना करना है। जिस प्रकार प्रतिमादि में विष्णुत्वादि की भावना की जाती है, उसी प्रकार प्रजापति की भावना की जानी चाहिए।

१. केशानामप्येतदुपलक्षणम्। २ गात्रविनामनपूर्वक मुखविदारणं विजृम्भण तत्र विद्योतनदृष्टिः। ३. हेषाशब्द.। ४. आरोप्यन्ते। ५ प्रजापतिरूपत्वमित्यर्थं। ६ "ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयेत्। कायक्लेशाश्च तन्मूलान् वेदतत्वार्थमेव च"त्येवमादिरूपे इत्यर्थ। ७ उष आदि दृष्ट्यारोपे इत्यर्थ।

सूर्यश्चक्षुः शिरसोऽनन्तरत्वात्सूर्याधिदैवतत्वाच्च । वातः प्राणो वायुस्वाभाव्यात् । व्यात्तं विवृतं मुखमग्निर्वैश्वानरः । वैश्वानर इत्यग्नेर्विशेषणम् । वैश्वानरो नामाग्निर्विवृतं मुखमित्यर्थो मुखस्याग्निदैवतत्वात् । संवत्सर आत्मा संवत्सरो द्वादशमासस्त्रयोदशमासो वा । आत्मा शरीरम् । [1]कालावयवानां च संवत्सरः शरीरं । शरीरं चाऽऽत्मा "मध्यं ह्येषामङ्गानामात्मा" इति श्रुतेः । अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम् ।

द्यौः पृष्ठम् । ऊर्ध्वत्वसामान्यात् । अन्तरिक्षमुदरं सुषिरत्वसामान्यात् । पृथिवी पाजस्यं पादस्यमिति वर्णव्यत्ययेन पादासन[2]स्थानमित्यर्थः । दिशश्चतस्रोऽपि पार्श्वे पार्श्वेन दिशां संबन्धात् । पार्श्वयोर्दिशां च संख्यावैषम्याद[3]युक्तमिति चेत् । न । सर्वमुख-

वयवेषु तस्य प्रजापतित्वकरणम् । अश्वमेधा[4]धिकारी हि सत्यश्वे कर्मणो [5]वीर्यवत्तरत्वार्थं कालादिदृष्टीरश्वावयवेषु कुर्यात् । तदनधिकारी त्वश्वाभावे [6]स्वात्मानमश्वं कल्पयित्वा स्वशिरःप्रभृतिषु कालादिदृष्टिकरणेन प्रजापतित्वं संपाद्य प्रजापतिरस्मीति ज्ञानात्तद्भावं प्रतिपद्येतेति भावः ।

चक्षुषि सूर्यदृष्टौ हेतुमाह—शिरस इति । उषसोऽनन्तरत्वं सूर्ये दृष्टं चक्षुषि च शिरसोऽनन्तरत्वं दृश्यते [7]तस्मात्तत्र तद्दृष्टिर्युक्तेत्यर्थः । तत्रैव हेत्वन्तरमाह—सूर्येति । "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति श्रुतेश्चक्षुषि सूर्योऽधिष्ठात्री देवता तेन सामीप्यात्तत्र तद्दृष्टिरित्यर्थः । अश्वप्राणे वायुदृष्टौ चलनस्वाभाव्यं हेतुः । अश्वस्य विदारिते मुखे भवत्वग्निदृष्टिस्तथाऽपि पर्यायोपादानं व्यर्थमित्याशङ्क्य [8]क्रव्यादादिव्यावृत्त्यर्थं विशेषणमित्याह—वैश्वानर इत्यग्नेरिति । "अग्निर्वाग्भूत्वा मुखं

शिर के अनन्तर होने के कारण एव सूर्य के अभिमानी देवता होने के कारण सूर्य ही उषा शिर वाले अश्व के नेत्र है । वायु स्वभाव वाला होने के कारण वायु उसके प्राण हैं। अश्व के खुले हुए मुख वैश्वानर अग्नि हैं । वैश्वानर यह अग्नि का विशेषण है । अग्नि के खुले हुए मुख को वैश्वानर कहते है क्योकि मुख का अभिमानी देव अग्नि है । द्वादश मासात्मक एव (अधिक मास को लेकर) त्रयोदश मासात्मक सवत्सर अश्व की आत्मा है । उसका आत्मा अर्थात् शरीर है । सवत्सरात्मक काल के अवयवो का सवत्सर ही शरीर है । श्रुति भी कहती है—"इन सभी अगो के मध्य आत्मा है ।" इसलिए शरीर आत्मा है । 'अश्वस्य मेध्यस्य' यह पुनरुक्ति सब के साथ सम्बन्ध स्थापित करने के लिए है ।

दोनो मे ऊर्ध्वत्व सामान्य होने के कारण पृष्ठभाग मे द्युलोक की दृष्टि करे । अवकाश सामान्य दोनों में होने के कारण अतरिक्ष लोक की दृष्टि उदर मे करे । पृथिवी पाजस्य अथवा वर्णव्यत्यास से पादस्य है अर्थात् पाद आधारत्व का स्थान अथवा खुर हैं। पार्श्व से दिशाओ का सम्बन्ध होने के कारण चारो दिशाए अश्व के दो पार्श्वभाग हैं, यदि कहो कि पार्श्व और दिशा मे सख्या का वैषम्य होने के कारण सम्बन्ध ठीक नही बनता, तो ऐसा कहना उचित नही । अश्व का मुख सभी

१ कालेति सवत्सरात्मककालेत्यर्थ । २ खुरमिति यावत् । ३ पार्श्वयोर्दिक्चतुष्टयदृष्टिकरणमयुक्तमित्यर्थ । ४ ननु येषामश्वमेधेनाधिकारस्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिरित्युक्तत्वादश्वमेधानधिकृतानामेव प्रकृतोपास्तिरित्याशङ्क्याह—अश्वमेधाधिकारीति । ५ अविघ्नेन शीघ्रफलप्रदत्वार्थम् । ६. स्वशरीरम् । ७ उभयोरानन्तर्यसाम्यात् । ८ श्मशानाग्न्यादिमेध्यानलनिवृत्त्यर्थमित्यर्थ । इदमप्यधिकस्याधिक फलमिति न्यायादेव न तु वैश्वानरस्य दग्धकन्या शुद्धानि बोधयतीति ध्येयम् ।

त्वोपपत्तेरश्वस्य पार्श्वाभ्यामेव सर्वदिशां संबन्धाददोषः । अवान्तरदिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि ।

ऋतवोऽङ्गानि संवत्सरावयवत्वादङ्गसाधर्म्यात् । मासाश्चार्धमासाश्च पर्वाणि संधयः संधिसामान्यात् । अहोरात्राणि प्रतिष्ठाः । बहुवचनात्प्राजापत्यदैवपित्र्यमानुषाणि प्रतिष्ठाः पादाः प्रतितिष्ठत्येतैरिति । अहोरात्रैर्हि कालात्मा प्रतितिष्ठत्यश्वश्च पादैः । नक्षत्राण्यस्थीनि शुक्लत्वसामान्यात् । नभो नभस्था मेघा अन्तरिक्षस्योदरत्वोक्तेर्मांसान्युदकरुधिरसेचनसामान्यात् ।

प्राविशत्" इति श्रुतिमाश्रित्य मुखे तद्दृष्टौ हेतुमाह—मुखस्येति । अधिकमासमनुसृत्य त्रयोदशमासो वेत्युक्तम् । शरीरे संवत्सरदृष्टिरित्यत्राऽऽत्मत्वे हेतुमाह—कालेति । आत्मा हस्तादीनामङ्गानामिति शेषः । कालावयवानां संवत्सरस्याऽऽत्मत्ववदङ्गानां शरीरस्याऽऽत्मत्वे प्रमाणमाह—मध्य हीति । पुनरुक्तेरर्थवत्त्वमाह—अश्वस्येति ।

पृष्ठे द्युलोकदृष्टौ हेतुमाह—ऊर्ध्वत्वेति । उदरेऽन्तरिक्षदृष्टौ निमित्तमाह—सुषिरत्वेति । पाद्यन्ते यस्मिन्निति व्युत्पत्तिमाश्रित्य विवक्षितमाह—पादेति । अश्वस्य हि खुरे पादा'सनत्वसामान्यात्पृथिवीदृष्टिरित्यर्थः । पार्श्वयोर्दिक्चतुष्टयदृष्टौ हेतुमाह—पार्श्वेनेति । द्वे पार्श्वे चतस्रश्च दिशस्तत्र कथं तयोस्तदारोपण द्वाभ्यामेव द्वयोः संबन्धादिति शङ्कते—पार्श्वयोरिति । यद्यपि द्वे दिशौ द्वाभ्यां पार्श्वाभ्यां संबध्येते तथाऽप्यश्वस्य प्राङ्मुखत्वे प्रत्यङ्मुखत्वे च दक्षिणोत्तरयोस्तन्मुखत्वे च प्राक्प्रतीच्योर्दिशोस्ताभ्यां संबन्धसंभवात्तत्र तद्दृष्टिरविरुद्धेति परिहरति—नेत्यादिना । तदुपपत्तौ चाश्वस्य चरिष्णुत्वं हेतूकर्तव्यम् । पार्श्वास्थिष्ववान्तरदिशामारोपे पार्श्वविषसंबन्धो हेतुः ।

ऋतवः संवत्सरस्याङ्गानि हस्तादीनि च देहस्यावयवास्तस्मा"द्दृष्टिरङ्गेषु कर्तव्येत्याह—ऋतव इति । अस्ति मासादीनां संवत्सरसंधित्वमस्ति च शरीरसंधित्वं पर्वणामतस्तेषु मासादिदृष्टिरित्याह—संधीति । युगसहस्राभ्यां प्राजापत्यमेकमहोरात्रम् । अयनाभ्यां दैवम् । पक्षाभ्यां

दिशाओं की ओर होने एव उसके पार्श्वभागो का भी सभी दिशाओ से सम्बन्ध होने के कारण, इसमे कोई दोष नही है। आग्नेय आदि अवान्तर दिशाए पसलिया हैं, पार्श्वभाग की अस्थिया है।

संवत्सर के अवयव एव अङ्गो से उनकी समानता होने के कारण ऋतुए अङ्ग हैं। चैत्रादि मास और शुक्लादिपक्ष, सधि से समानता होने के कारण पर्व सन्धिया हैं। दिन और रात प्रतिष्ठा है। बहुवचन प्रयोग के कारण प्रजापति, देव, पितृ और मनुष्य सभी के दिन-रात प्रतिष्ठा है, मानो पाद हैं, क्योंकि इनसे ही सदा प्रतिष्ठित होता है। सवत्सररूप कालात्मा दिन और रात के द्वारा प्रतिष्ठित होता है और अश्व पैरो के द्वारा प्रतिष्ठित होता है। शुक्लत्व सामान्य होने से नक्षत्र अस्थियाँ हैं। आकाश अथवा आकाशस्थित मेघ, आकाश के उदर रूप कहे के जाने कारण, मास है। क्योकि जल रूप रुधिर बरसाने मे उनकी मास से समानता है।

१ क्रमेणति शेष । २ अनुक्तानीति बोध्यम् । ३ चैत्रादय । ४ शुक्लादिपक्षा । ५ सवत्सर । ६ स्वरूपत्वम् आधारत्व वा । ७ स्थाप्यन्ते । ८ पादाधारत्वेत्यर्थ. । ९ आधाराधिष्ठेययोर्विषमसख्यात्वे । १० सर्वमुखत्वोपपत्तावित्यर्थ । ११. उभयो शरीरसवत्सराङ्गत्वसाम्यात् ।

ऊवध्यमुदरस्थमर्धजीर्णमशनं सिकता विश्लिष्टावयवत्वसामान्यात् । सिन्धवः स्यन्दनसामान्यान्नद्यो गुदा नाड्यो बहुवचनाच्च । यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ । क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव । पर्वताः काठिन्यादुच्छ्रितत्वाच्च । ओषधयश्च क्षुद्राः स्थावरा वनस्पतयो महान्तो लोमानि केशाश्च यथासंभवम् । उद्यन्नुद्गच्छन्भवति सविताऽऽमध्याह्नादश्वस्य पूर्वार्धो नाभेरूर्ध्वमित्यर्थः । निम्लोचन्नस्तं यन्मध्याह्नाज्जघनार्धोऽपरार्धः पूर्वापरत्वसाधर्म्यात् । यद्विजृम्भते गात्राणि विनामयति विक्षिपति तद्विद्योतते विद्योतनं मुखघनयोर्विदारणसामान्यात् । यद्विधूनुते गात्राणि कम्पयति तत्स्तनयति गर्जनशब्दसामान्यात् । यन्मेहति मूत्रं करोत्यश्वस्तद्वर्षति वर्षणं [1]तत्सेचनसामान्यात् । वागेव शब्द एवास्याश्वस्य वागिति नात्र कल्पनेत्यर्थः ॥१॥

---

पिण्यम् । षष्टिघटिकाभिर्मानुषमिति भेदः । प्रतिष्ठाशब्दस्य पादविषयत्वं व्युत्पादयति—प्रतितिष्ठतीति । पादेऽप्यहोरात्रदृष्टिसिद्ध्यर्थं [2]मुक्तमुपपादयति—अहोरात्रैरिति । अस्थिषु नक्षत्रदृष्टौ हेतुमाह—शुक्लत्वेति । नभःशब्देनान्तरिक्षं किमिति न गृह्यते मुख्ये सत्युपचा[3]रायोगादित्याशङ्क्य पुनरुक्ति परिहर्तुमित्याह—अन्तरिक्षस्येति । उदकं सिञ्चन्ति मेघा मांसानि रुधिरमतः सेककर्तृत्वसामान्यान्मांसेषु मेघदृष्टिरित्याह—उदकेति ।

अश्वजठरविपरिवर्तिन्यर्धजीर्णे सिकतादृष्टौ हेतुमाह—विश्लिष्टेति । किमिति गुदशब्देन पायुरेव न गृह्यते शिराग्रहणे हि मुख्यार्थातिक्रमः स्यात्तत्राऽऽह—बहुवचनाच्चेति । चकारोऽवधारणार्थः । यद्यपि बहुत्वया[4] शिराभ्योऽर्थान्तरमपि गुदशब्दमर्हति तथापि स्यन्दनसादृश्यात्तास्वेव सिन्धुदृष्टिरिति तासामिह ग्रहणमिति भावः । कुतो मांसखण्डयोर्द्वित्वमेकत्र बहुवचनाद्बहुत्वप्रतीतेरित्याशङ्क्य दारा

---

ऊवध्य उदर मे रहने वाला अर्धजीर्ण अन्न सिकता है, क्योकि अवयवो के अलग-अलग रहने मे समानता है। समुद्र बहने मे सामान्य धर्मवाले होने के कारण नदियां गुदा-नाडियां है, क्योकि यहाँ सिन्धु और गुदा शब्द बहुवचन मे प्रयुक्त है। यकृत् और क्लोमा हृदय के नीचे भाग मे दायें और बायीं ओर दो मास खण्ड है। "क्लोमान." यह नित्य बहुवचनान्त एकवचन के ही अर्थ मे होता है। (यकृत् और क्लोमा की तरह) पर्वत भी कठिन और ऊँचे उठे हुए हैं। क्षुद्र स्थावर सामान्य धर्म वाली ओषधियां लोम हैं, एव महान् स्थावर सामान्य धर्म वाली वनस्पतियाँ केश हैं।

उगता हुआ एव मध्याह्नकाल तक ऊपर की ओर जाता हुआ सूर्य अश्व का 'पूर्वार्द्ध' अर्थात् नाभि से ऊपर का भाग है। मध्याह्न काल से अस्ताचल की ओर जाता हुआ सूर्य 'जघनार्ध' अर्थात् नीचे का भाग है क्योकि पूर्वत्व और अपरत्व उदित और अस्त होने वाले सूर्य के समान धर्म वाले है। यह जो अश्व जमुहाई लेता है, अङ्गो को फैलाता और पटकता है, वह विद्योतन (बिजली का चमकना) है क्योकि विजृम्भण और विद्योतन मे मुख और मेघ के विदारकत्व रूप समान धर्म है। यह जो अश्व शरीर को हिलाता व कम्पित करता है, वह मेघ का स्तनित है क्योकि दोनो मे गर्जन समान धर्म है। यह जो अश्व सींचता है मूत्र करता है वह वर्षण है क्योकि दोनो मे भूसेचन रूप समान धर्म है। वाणी ही अर्थात् शब्द ही अश्व की वाक् इन्द्रिय है, इसमे कोई आरोप नही है, यह भाव है ॥१॥

---

१ अर्थे । २ आमध्याह्नादितिच्छेदः । ३ भूसेचनेत्यर्थ । ४ अवयवदशत्वा वर्त्तीत्यर्थ ।
५ उक्तमिति प्रतिष्ठाहेतुत्वमित्यर्थ । ६. लक्षणाया अयुक्तत्वादित्यर्थ । ७ दन्तादिरूपमित्यर्थ ।

अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुः। हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥२॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणं समाप्तम् ॥१॥

इस अश्व के सामने महिमा रूप से दिन प्रकट हुआ। उस ग्रह की योनि पूर्व समुद्र है, तत्पश्चात् महिमा रूप से रात्रि प्रकट हुई, उसकी योनि पश्चिम समुद्र है, ये दोनो ही इस अश्व के पीछे दोनो ओर महिमा सज्ञक ग्रह हुए, (जो कि इस अश्व के आगे पीछे स्वर्ण और रजत के पात्र विशेष रक्खे जाते है) इसने हय होकर देवताओ को वहन किया, वाजी होकर गन्धर्वो को, अर्वा होकर असुरो को और अश्व होकर मनुष्यो को वहन किया। समुद्र (परमात्मा ही) इसका बन्धन है और परमात्मा ही उसकी उत्पत्ति का कारण है ॥२॥

---

अहर्वा इति सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते तद्विषयमिदं दर्शनम्। अहः सौवर्णो ग्रहो दीप्तिसामान्याद्धि। अहरश्वं पुरस्तान्महिमाऽन्वजायतेति कथम्। अश्वस्य प्रजापतित्वात्। प्रजापतिर्ह्यादित्यादिलक्षणोऽह्ना लक्ष्यते।

---

इतिवद्बहुवत्तेर्गनि[1]माह—क्लोमान इति। तयो. पर्वतदृष्टौ हेतुद्वयमाह—काठिन्यादित्यादिना। क्षुद्रत्वसाधर्म्यादोषधिदृष्टिर्लोमसु महत्त्वसामान्याद्वनस्पतिदृष्टिश्चाश्वकेशेषु कर्तव्येत्याह—यथासभवमिति। पूर्वत्वसामान्यान्मध्याह्नात्प्रागवस्थादित्यदृष्टिरश्वस्य नाभेरूर्ध्वभागे कर्तव्येत्याह—उद्यन्नित्यादिना। अपरत्वसादृश्यादश्वस्य नाभेरपरार्धे मध्याह्नादनन्तरभाव्यादित्यदृष्टि. कार्येत्याह—निम्लोचन्नित्यादिना। विजृम्भत इत्यादौ प्रत्ययार्थो न विवक्षितः। विजृम्भणं मुखविदारयति विद्योतनं पुनर्मेघमतो[4] विद्योतनदृष्टिर्जृम्भणे कर्तव्येत्याह—मुखेति। स्तनयतीति स्तनितमुच्यते तद्दृष्टिर्गात्रकम्पे कर्तव्येत्यत्र हेतुमाह—गर्जनेति। मूत्रकरणे वर्षणदृष्टौ कारणमाह—सेचनेति। अश्वस्य हेषितशब्दे नास्त्यारोपणमित्यतो न सादृश्यं वक्तव्यमित्याह—नात्रेति ॥१॥

अश्वावयवेषु कालादिदृष्टीर्विधायाश्व प्रजापतिरूपं विवक्षित्वा कण्डिकान्तर गृहीत्वा तात्पर्यमाह—अहरित्यादिना। ग्रहौ हवनीयद्रव्याधारौ पात्रविशेषावग्रत' पृष्ठतश्चेति संज्ञपनात्प्रागूर्ध्वं चेति

---

"अहर्वा अश्व" इत्यादि मन्त्र मे अश्व के आगे और पीछे महिमा नाम के सुवर्ण और रजत के दो ग्रह स्थापित किये जाते है उसी सम्बन्ध मे यह दृष्टि है। दीप्ति रूप समान धर्म होने के कारण दिन ही सुवर्ण ग्रह है। दिन, अश्व के समक्ष महिमा रूप से किस प्रकार प्रकट हुआ? इसे बताते है—क्योंकि अश्व प्रजापति है अादित्यादि रूप प्रजापति ही दिन वाची है। अश्व को लक्षित कराकर

---

१ प्रावर्तताम्। २ प्रकृतत्स्थितिस्थानविषयमित्यर्थ। ३ एकस्मिन्नर्थे उपपत्तिमित्यर्थ। ४ विजृम्भणविद्योतनयोर्मुखमेघविदारकत्वसाधर्म्यादित्यर्थ।

श्रश्वं लक्षयित्वाऽजायत सौवर्णो महिमा ग्रहो वृक्षमनु विद्योतते विद्युदिति यद्वत् । तस्य ग्रहस्य पूर्वे पूर्वः समुद्रे समुद्रो योनिर्विभक्तिव्यत्ययेन । योनिरित्यासादनस्थानम् । तथा रात्री राजतो ग्रहो वर्णसामान्याज्जघन्यत्वसामान्याद्वा । एनमश्वं पश्चात्पृष्ठतो महिमाऽन्वजायत तस्यापरे समुद्रे योनिः । महिमा महत्त्वात् । श्रश्वस्य हि 'विभूतिरेषा यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते' । तावेतौ वै महिमानौ महिमाख्यौ ग्रहावश्वमभितः पुरतः पृष्ठतः संबभूवतुरुक्तलक्षणावेव संभूतौ । इत्यमसावश्वो महत्त्वयुक्त इति पुनर्वचनं स्तुत्यर्थम् ।

---

यावत् । प्रसिद्धा तावदह्नि दीप्तिः सौवर्णे च ग्रहे साऽस्त्यतस्तस्मिन्नहर्दृष्टिरिति 'दर्शनं विभजते—अहर्गिति । अश्वसंज्ञपनात्पूर्वं यो महिमाख्यो ग्रह. स्थाप्यते स चेदहर्दृष्ट्योपास्यते कथं सोऽश्वमन्वजायतेति । पश्चादश्वस्य तज्जन्मवाचो'युक्तिरिति शङ्कते—अहरश्वमिति । नायं पश्चादर्थोऽनुशब्दः किंतु लक्षणार्थः । तथा चाश्वस्य प्रजापतिरूपत्वात्त 'लक्षयित्वा ग्रहस्य यथोक्तस्य 'प्रवृत्तेरुपदेशादश्वमन्व'जायतेत्यविरुद्धमिति परिहरति—अश्वस्येति । 'तदेव स्फुटयति—प्रजापतिरिति । काललोकदेवात्मा प्रजापतिरश्वा''त्मना दृश्यमानोऽत्राहर्दृष्ट्या ''दृष्टेन ग्रहेण लक्ष्यते । ''तथाचाश्वमन्वजायतेति श्रुतिरविरुद्धेत्यर्थः अनुशब्दो न पश्चाद्वाचीत्यत्र दृष्टान्तमाह—वृक्षमिति । ''यथा वृक्षं लक्षयि''त्वा तस्याग्रे विद्युद्विद्योतते तदा वृक्षमनु विद्योतते सेति प्रयुज्यते । तथाऽत्राप्यनुशब्दो न पश्चादर्थ इत्यर्थः । यत्र च स्थाने ग्रह स्थाप्यते तत्पूर्वसमुद्रदृष्ट्या ध्येयमित्याह—तस्येति । पूर्वत्वमत्र सादृश्यम् । कथं सप्तमी प्रथमार्थे योज्यते छन्दस्यर्थानुसारेण व्यत्ययसंभवादित्याह—विभक्तीति । यथा सौवर्णे ग्रहेऽहर्दृष्टिरुपदिष्टा तथा राजते ग्रहे रात्रिदृष्टिः कर्तव्येत्याह—तथेति । अस्ति हि चन्द्रातपवत्त्वाद्रात्रे शौक्ल्यमस्ति च राजतस्य ग्रहस्य तद्युक्त तत्र रात्रिदर्शनमित्याह वर्णेति । रजत सुवर्णाज्जघन्यमहश्च रात्रिरतो वा साहृश्यात्तत्र रात्रिदृष्टिरित्याह—जघन्येति । प्रजापतिरूपं प्रकृतमश्वं लक्षयित्वा तत्संज्ञपनात्पश्चादस्य ''प्रवृत्ति दर्शयति—एनमिति । तदासादनस्थाने पश्चिमसमुद्रदृष्टिर्विधेयेत्याह—तस्येति । कथमेतौ ग्रहौ महिमाख्यावुक्तौ महत्त्वोपेतत्वादित्याह—महिमेति । ''अथाश्वविषय दर्शनमादिश्य ग्रहविषयं तदाविशतो

---

महिमा नाम का सुवर्णमय ग्रह प्रकट हुआ, जिस प्रकार वृक्ष को लक्षित कर बिजली चमकती है । उस ग्रह का "पूर्वे समुद्रे" अर्थात् पूर्व समुद्र उत्पत्ति स्थान है । यहाँ सप्तमी विभक्ति का विभक्तिव्यत्यय से प्रथम विभक्ति परक अर्थ है । योनि इसका अवसादनस्थान अर्थ है । इसी प्रकार वर्ण और निकृष्टता मे समान धर्म वाली होने के कारण रात्रि रजत का ग्रह है । यह इस अश्व की पीठ की ओर महिमा रूप से प्रकट हुई है, उसका पश्चिम समुद्र उत्पत्ति स्थान है । महत्ता के कारण उत्कर्ष अथवा प्राशस्त्य के कारण महिमा नाम पडा । यह अश्व का उत्कर्ष है, जो दोनो ओर सुवर्ण और रजत के ग्रह रखे जाते है । ये महिमाएं अर्थात् महिमा सज्ञक दोनो ग्रह, उक्त सुवर्ण और रजत लक्षण वाले प्रगट हुए है । इस प्रकार "यह अश्व महत्वयुक्त है"—यह पुनरुक्ति स्तुति के लिए है ।

---

१ उत्कर्प, प्राशस्त्यमिति यावत् । २ तथा चार्थवादवाक्यमेवैतदिति न स्वतन्त्रफलकविभिन्नोपासनविषयमिति भाव । ३ दीप्त्यधिकरणत्वसामान्यात् । ४. उपासनम् । ५ तज्जन्मवाचकशब्दप्रयोग । ६ बोधयित्वा । ७ स्थापनस्य विधानादित्यर्थ. । ८ प्रातिष्ठत । ९ अविरोधम् । १० अश्वाभेदेनोपास्यमान इत्यर्थं । ११ उपासितेन । १२ यथोक्तप्रजापत्यात्मनोऽश्वस्य लक्ष्यत्वम् यथोक्तग्रहस्य लक्षणत्वमित्यनुशब्दस्य तदीयलक्ष्यलक्षणभाव द्योतकत्वे चेत्यर्थं । १३ यथा । १४ बोधयित्वा । १५ स्थापनम् । १६ ननु ।

तथा 'च हयो भूत्वेत्यादि स्तुत्यर्थमेव । हयो हिनोतेर्गति'कर्मणो विशिष्टगतिरित्यर्थः । जातिविशेषो वा । देवानवहद्देवत्वमगमयत्प्रजा'पतित्वाद्देवानां वा वोढाऽभवत् । ननु निन्दैव वाहनत्वम् । नैष दोषः' । वाहनत्वं स्वाभाविकमश्वस्य स्वाभाविकत्वादुच्छ्रायप्राप्तिर्देवादिसंबन्धोऽश्वस्येति' स्तुतिरेवैषा । तथा वाज्यादयो जातिविशेषाः । वाजी भूत्वा गन्धर्वानवहदित्यनुषङ्गः । तथाऽर्वा भूत्वाऽसुरान् । अश्वो भूत्वा मनुष्यान् । समुद्र एवेति परमात्मा बन्धुर्बन्धनं बध्यतेऽस्मिन्निति । समुद्रो योनिः कारणमुत्पत्तिं प्रति । एवमसौ शुद्धयोनिः शुद्धस्थिति'रिति स्तूयते "अप्सुयोनिर्वा अश्वः" इति श्रुतेः । प्रसिद्ध एव वा समुद्रो योनिः ॥२॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

---

'वाक्यभेद स्यान्नेत्याह—अश्वस्येति । किमत्र नियामकमित्याशङ्क्य पुन''रुक्तिरिति मत्वाऽऽह—तावित्यादिना । वैशब्दार्थकथनम्—एवेति ।

वाक्यशेषोऽप्य''त्रानुगुणो भवतीत्याह—तथा चेति । हयशब्दनि''ष्पत्तिपुर सरं तदर्थमाह—हयइति । वाज्यादिशब्दानां जातिविशेषवाचित्वाद''श्रपि तदेव ग्राह्यमिति पक्षान्तरमाह—जातीति ।

---

उसी प्रकार "हयो भूत्वा" इत्यादि वचन भी स्तुति के लिए ही है । हय नाम क्यों पड़ा—क्योंकि यह जाता है, गति कर्म वाला है, विशिष्ट गतिवाला है । अथवा हय इसलिए है, क्योंकि यह अश्व जाति विशेषवाचक है । अश्व होकर उसने देवताओं का वहन किया, अर्थात् प्रजापतिरूप होने के कारण देवत्व को प्राप्त कराया अथवा वह देवताओं की सवारी हुआ । यदि ऐसा कहो कि वाहन होना तो निन्दापरक है, स्तुतिपरक कैसे हुआ ? तो ऐसा कहना उचित नहीं । अश्व का वाहनत्व होना दोष नहीं, यह तो स्वाभाविक है । स्वाभाविकत्व होने के कारण, देवादि से सम्बन्ध होने के कारण, उत्कृष्ट पद की प्राप्ति ही है, इसलिए यह अश्व की स्तुति ही है । इसी प्रकार वाजी आदि भी जातिविशेष है । वाजी होकर गन्धर्वों की सवारी बना, अर्वा होकर असुरों को, एवं अश्व होकर मनुष्यों को वहन किया, यह सम्बन्ध है । "समुद्र" अर्थात् परमात्मा ही इसका 'बन्धु' यानी बन्धन है। बन्धन नाम क्यों पड़ा ? क्योंकि इसमें बाँधा जाता है । समुद्र ही 'योनि' अर्थात् उत्पत्ति में कारण है । इस प्रकार 'यह शुद्ध योनि वाला, शुद्ध स्थिति वाला, (शुद्ध लय वाला) है" ऐसे इसकी स्तुति की जाती है । श्रुति भी कहती है—"अश्व की जलमय योनि है" अथवा समुद्र ही इसकी योनि है यह तो प्रसिद्ध ही है ॥२॥

इस प्रकार प्रथम अध्याय का प्रथम ब्राह्मण पूर्ण हुआ ।

---

१ तर्थंवेत्यर्थ । २ गतिक्रियकस्येत्यर्थ । ३ विराडरूपत्वात् । ४ नैष दोष । दोष इत्युक्ते हेतुमाह स्वाभाविकत्वादिति । हेतु विवृणोति वाहनत्वमित्यादिना । ५ यद्वा वाहनत्व न श्रुतितात्पर्यविषय इति दोषस्तस्यानूद्यमानत्वादिति भाव । ६ इतीति—देवादिसम्बन्धरूपोत्कर्षप्राप्तिबोधकत्वादित्यर्थ । ७ स्थाप्यत इति स्थित्यास्पदम् । ८ शुद्धलयश्चेत्यपि बोध्यम् । ९ स्वतन्त्रफलदोषासनद्वयबोधकतयाऽन्योन्याङ्गाङ्गिभावो न स्यादिति भाव । १० इदमप्यधिकमधिकार्यमितिन्यायादेवेति ध्येयम् । ११ अश्वस्तुतौ । १२ सिद्धिपुरःसरमित्यर्थ । १३ हयशब्देऽपि जातिविशेषवाचकत्वमित्यर्थौ ।

( अथ प्रथमाध्यायस्य द्वितीय ब्राह्मणम् । )

नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीत् । अशनाययाऽशनाया हि मृत्युस्तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कꣳ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥१॥

(इस समारमण्डल मे मन ग्रादि की उत्पत्ति से) पहले यहाँ नामरूप मे विभक्त कुछ भी नही था, यह सब क्षुधारूप मृत्यु से आवृत था, क्योकि क्षुधा ही मृत्यु है। उसने मन को इसलिए बनाया कि मैं मन से युक्त होऊं। उसने अर्चन करते हुए आचरण किया। अत उसके अर्चन करने से पूजा का अङ्गभूत रसात्मक जल उत्पन्न हुआ। पूजा करते हुए मुझे जल प्राप्त हुआ है। अत यही अर्क का अर्कत्व है। जो इस प्रकार अर्क के इस अर्कत्व को जानता है, निश्चय ही उसे सुख प्राप्त होता है। (सुख की हेतुभूता पूजा करने से तथा जल का सम्बन्ध होने से अग्नि को ही गौण दृष्टि से अर्क कह दिया गया है, यही अश्वमेध याग मे उपयोगी अग्नि के अर्कत्व मे कारण बतलाया गया है) ॥१॥

— [1] अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते । तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था । नैवेह किंचनाग्र आसीत् । इह संसारमण्डले किंचन किंचिदपि नामरूप-

देवाना देवत्वप्रापकत्वं कथमस्येत्याशङ्क्याऽऽह—प्रजापतित्वादिति । अश्व स्तोतुमारभ्य [2]कल्पान्तरोक्त्या तन्निन्दावचनमनुचितमिति शङ्कते—नन्विति । उपक्रमविरोधो नास्तीति परिहरति—नेत्यादिना । समुत्पद्य भूतानि द्रवन्त्यस्मिन्निति व्युत्पत्त्या परमगम्भीरस्येश्वरस्य समुद्रशब्दतामाह—परमात्मेति । तत्र योनित्वमुत्पादकत्वं बन्धुत्व स्थापकत्वं समुद्रत्व विलापकत्वमिति भेदः । अथ परमात्मयोनित्वादिवचनं कुतस्त्याश्वस्य वोपयुज्यते तत्राऽऽह—एवमिति । श्रुत्यन्तरानुरोधेन समुद्रो योनिरित्यत्र समुद्रशब्दस्य रूढिमनुजानाति—अप्सुयोनिरिति ॥२॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

अश्वादिदर्शनोक्त्यनन्तरमग्निदर्शनं वक्तुं ब्राह्मणान्तरमवतारयति—अथेति । नैवेहेत्यादौ तद्दृष्टिर्नास्तीति चेत्सत्यं तत्राग्नेर्जन्म वक्तु भूमिका क्रियत इत्याह—अग्नेरिति । वायोरग्निरित्यादौ प्रसिद्ध तज्जन्मेति चेत्सत्यं तद्विशेषस्यात्र जन्मोक्तिरित्याह—अश्वमेधेति । दर्शने विधित्सिते-

१ द्वितीयब्राह्मणे वह्नेरश्वमेधोपयोगिन । उपासन विराड्बुद्धया कार्यत्वेन विधीयते ॥१॥
अश्वोपास्तिरिय ज्ञेया प्रथमब्राह्मणोदिता । द्वितीय ब्राह्मणे सम्यक् फलमस्या प्रचक्ष्यते ॥२॥
पृथक्फलस्याकथनाद्ब्राह्मणद्वयवर्णितम् । एकोपासनमेवेति विज्ञातव्यमुपासकै ॥३॥

२ विधित्सयेत्यर्थ । ३ पक्षान्तरकथनेन । ४ उपक्रमविरुद्धमित्यर्थ । ५ लीयन्ते । ६. परात्मनि प्रकृतवाक्य इति वार्थ । ७ अश्वसम्बन्धिनि तस्मिन्फले प्रयोजक भवतीत्यर्थ । ८ तथा चाश्वस्तुतावुपयुक्त तत् । ९ अग्न्युपासनम् । १० तैत्तिरीयवाक्ये । ११ अश्वमेधोपयोगिनोऽग्ने ।

प्रविभक्तविशेषं नैवाऽऽसीन्न बभूव। अग्रे प्रागुत्पत्तेर्मनआदेः। किं शून्यमेव बभूव शून्यमेव स्यात् "नैवेह किंचन" इति श्रुतेः। न कार्यं कारणं वाऽऽसीदुत्पत्तेश्च। उत्पद्यते हि घटः। अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम्।

ननु कारणस्य न नास्तित्वं मृत्पिण्डादिदर्शनात्। यन्नोपलभ्यते तस्यैव नास्तिताऽस्तु कार्यस्य न तु कारणस्योपलभ्यमानत्वात्। न। प्रागुत्पत्तेः सर्वानुपलम्भात्।

---

किं जन्मोक्त्येति चेत्तत्राऽऽह—तद्विषयेति। अग्निदर्शनस्य[2] विधातुमिष्टस्य सिद्धयर्थमुपास्याग्निस्तुतिफला तदुत्पत्तिरिष्टा[3] 'शुद्धजन्मत्वादुत्कृष्टत्वेनायमुपास्यो राजादिवदित्यर्थः। तात्पर्यमुक्त्वा वाक्यमादाया-क्षराणि व्याचष्टे—नैवेत्यादिना। [5]नामरूपाभ्यां विभक्तो विशेषो यस्मिन्निति बहुव्रीहिः। [6]अत्र शून्यवादी लब्धावकाशोऽवि[7]मृश्य [8]परेष्टश्रुत्यवष्टम्भेन स्वपक्षमाह—किमित्यादिना। कार्यस्य प्रागसत्त्वे हेत्वन्तरमाह—उत्पत्तेश्चेति। विमतं[9] प्रागसदुत्पद्यमानत्वाद्यन्नैवं तदेवं यथा परेष्टं[8] ब्रह्मेत्यर्थः। हेत्वसिद्धि शङ्कां चोत्तरमाह—उत्पद्यते हीति। घटग्रहणं कार्यमात्रस्योपलक्षणार्थम्। उक्तमनुमानं [10]निगमयति—अत [11]इति।

[12]तत्र तार्किको ब्रूते—नन्विति। [13]यदुक्तं न कार्यं कारणं वाऽऽसीदिति [14]तत्र भागे [15]बाधो [16]भागे

---

अश्वादिदृष्टिकथन के अनन्तर अश्वमेध याग में उपयोगी अग्नि की उत्पत्ति के विषय में बताया जाता है। अग्नि विषयक दृष्टि विधान की इच्छा, जो उसकी उत्पत्ति कही जाती है—वह स्तुति के लिए है। पहले यहाँ कुछ भी नहीं था। इस संसार मण्डल में 'किंचन' अर्थात् नामात्मक, रूपात्मक विभाग वाला कार्यकारणरूप वस्तु में कुछ भी विशेष नहीं था। 'अग्रे' अर्थात् आगे यानी मनादि की उत्पत्ति के पूर्व (इस पर शून्यवादी शङ्का करता है—) तो क्या (मनादि उत्पत्ति के पूर्व) उस समय शून्य ही था क्योंकि श्रुति कहती है—"यहाँ कुछ भी नहीं था"। उत्पत्ति के पूर्व कार्य अथवा कारण कुछ भी नहीं था। कार्य रूप घट उत्पन्न होता है इसलिए उत्पत्ति से पूर्व घट की सत्ता नहीं होती।

(इस पर कहते हैं)—किन्तु कारण का अस्तित्व तो सदा रहता है क्योंकि (घट रूपकार्य के उत्पत्ति के पूर्व भी) मृत् पिण्डादि देखे जाते हैं। अभाव उसी वस्तु का होता है, जो वस्तु कभी उपलब्ध नहीं होती, कार्य का अभाव भले ही हो, कारण का अभाव तो नहीं होता क्योंकि उसकी उपलब्धि होती है। (शून्यवादी कहता है) ऐसा कहना ठीक नहीं। उत्पत्ति से पूर्व तो सभी वस्तुओं की अनुपलब्धि रहती है। यदि अनुपलब्धि अभाव में हेतु है, तो उत्पत्ति से पूर्व सारे जगत् का कारण

---

१ यत्वयोक्त कारणस्य प्राक्सत्त्व तन्नेत्यर्थ। २ उपासनस्य। ३ इष्टेति निर्विषयदर्शनस्यासंभवादिति भाव। ४ शुद्धात्परमात्मनो जन्म यस्य तत्वात्। ५ नामात्मना रूपात्मना विभाग गत स्वरूप कार्य-कारणरूपवस्तुजात यद्वा विभक्तो व्यवस्थित। विशेष कार्यकारणरूपम्। यस्मिन् कार्यकारणसमुदायवस्तुनि इद घटनामेद तद्रूपमित्येव व्यवस्था गत इत्यर्थ। ६ सृष्टे प्राक्कार्यकारणनिषेधोक्तौ। ७ श्रुतितात्पर्य-मपर्यालोच्यैव। ८. सिद्धान्त्यभीष्टेत्यर्थ। तस्य तु नास्तिकत्वात्। ९ कार्यम्। १० उपसहरति ११ घटस्योत्पन्नमित्वादित्यर्थं। १२ कार्यकारणयोरुभयोरप्यसत्त्व उक्ते। १३ कार्यकारणयोरसत्त्वोक्तौ। १४ कारणांश इत्यर्थं। १५ असत्त्वाभाव। १६ कार्यांशे असत्त्वस्वीकृति।

अनुपलब्धिश्चेदभावहेतुः सर्वस्य जगतः 'प्रागुत्पत्तेर्न कारणं कार्यं वोपलभ्यते । 'तस्मात्सर्वस्यैवाभावोऽस्तु । न "मृत्युनैवेदमावृतमासीत्" इति श्रुतेः । यदि हि 'किंचिदपि नाऽऽसीद्येनाऽऽव्रियते यच्चाऽऽव्रियते तदा नावक्ष्यन्मृत्युनैवेदमावृतमिति । न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति' । ब्रवीति च मृत्युनैवेदमावृतमासीदिति ।

तस्मा'द्येनाऽऽवृतं कारणेन, यच्चाऽऽवृतं कार्यं प्रागुत्पत्तेस्तदुभयमासीच्छ्रुतेः प्रामाण्यादनुमेयत्वाच्च । अनुमीयते च प्रागुत्पत्तेः कार्यकारणयोरस्तित्वम् । कार्यस्य हि

चानुमतिरित्यर्थः । कार्यस्यापि कथं प्रागसत्त्वोपपत्तिरित्याशङ्क्याऽऽह–यत्रेति । 'एतेनानुमानस्य सिद्धसाध्यतोक्ता । कार्यवत्कारणस्यापि प्रागसत्त्वं किं न स्यादित्याशङ्क्योक्तहेत्व'भावान्मैवमित्याह–नत्विति । शून्यवाद्याह–न प्रागुत्पत्तेरिति । 'विमतं प्रागसद्योग्यत्वे सति सदाऽनुपलब्धत्वात्संमतवत्' । न चासिद्धो हेतु श्रुतेरनतिश'ङ्क्यत्वात् । तद्विरोधे" सत्यु"पलब्धेराभास"त्वादित्यर्थः । "तदेव प्रपञ्चयति–अनुपलब्धिश्चेदिति । कार्यवत्कारणस्यापि प्रागसत्त्वे प्राप्ते सिद्धान्तयति—नेत्यादिना । नैवेत्यादिश्रुतिरव्यक्तनामरूपार्थविषया न प्रागसत्त्वं कार्यकारणयोराह । अन्यथा वाक्यशेषविरोधादित्यर्थः । श्रुतिं विवृणोति—यदि हीति । द्वयोरसत्त्वेऽपिका "बाधोपुक्तेरनुपपत्तिस्तत्राऽऽह—न हीति । मा "तर्हि वाक्यमेव भूदित्याशङ्क्याऽऽह—ब्रवीति चेति ।

मृत्युनेत्यादिवाक्यार्थमुपसंहरति—तस्मादिति । श्रुते प्रामाण्यादिति । "तस्य"भाष्यस्य प्रमाणलक्षणे स्थितत्वादिति यावत्" । परकीयेऽनुमाने श्रुतिविरोधमभिधायानुमानविरोधमाह—अनुमेय-

या कार्य उपलब्ध होने का प्रश्न ही नहीं उठता । इसलिए सबकी अनुपलब्धि होने से सभी का अभाव होना चाहिये । (उत्पत्ति से पूर्व कार्य के समान कारण का भी अभाव है—ऐसा प्राप्त होने पर सिद्धान्ती कहता है)—ऐसा कहना ठीक नहीं । श्रुति भी कहती है—"यह मृत्यु से ही आवृत था" । यदि उस समय, जिससे आवृत होता है, और जिसका आवरण होता है– यह कुछ भी न होता, तो श्रुति यह न कहती कि "यह मृत्यु से ही आवृत था" । बन्ध्यापुत्र गगनकुसुम से आवृत है, ऐसा प्रयोग कभी नहीं होता । श्रुति तो ऐसा कहती है—'यह मृत्यु से ही आवृत था' ।

अत (कार्य और कारण दोनो के श्रुत्युक्त होने से) जिस कारण से आवृत था तथा जो कार्य आवृत था, उत्पत्ति से पूर्व वे दोनो ही थे, इसमे श्रुति और अनुमान प्रमाण हेतु हैं । उत्पत्ति से पूर्व

१ कार्यं कारणं वा प्रागुत्पत्तेरसन्नेत्यर्थ । २ सर्वानुपलम्भात् । ३ मृत्युरिह मायाशबलित मूलकारणम्-ईश्वर इति यावत् स च मारकत्वान्मृत्युरप्यास्पदम् । ४ आवृतमावारक वेत्यर्थ । ५ प्रयोग इति शेष ।

६ कार्यकारणयोरुभयोरपि श्रुत्युक्तत्वात्सत्त्वस्य आवार्यावारकत्वेन । ७ एतेनेति—उत्पत्ते प्राक् कार्यसत्त्वानुपलम्भप्रदर्शनेनेत्यर्थ । ८ अनुपलम्भरूपहेत्वित्यर्थ । ९ कारणम् । १० घटादिकार्यवत् । ११ श्रुतिविरुद्धतर्कस्यानर्हत्वात् । १२ ननु प्रत्यक्षविरोध स्यादिति चेदत्राह तद्विरोध इति । १३ उपलब्धे प्रत्यक्षस्य । १४ आभासत्वाद् भ्रमत्वात् । १५ सग्रहवाक्यमेवेत्यर्थ । १६ कस्य श्रुतिवाक्यस्येति यावत् । १७ कार्यकारणयोरसत्त्वे । १८ ननु श्रुतिप्रामाण्येपि किं प्रमाणमित्यत्राह तदिति । १९ प्रथमाध्यायेऽप्यौत्पत्तिकसूत्रे इति बोध्य तच्च सूत्रमत्रैव नवमपृष्ठे समुट्टङ्कितम् । २० प्रमाणनिरूपक लक्षणमध्याय इति व्युत्पत्ते । प्रमाणनिरूपकप्रथमाध्याये जैमिनीयदर्शनीये । तत्र हि समस्तवेदप्रामाण्य स्थापितम् । २१ भाव ।

सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात् । असति चादर्शनात् । जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते घटादिकारणास्तित्ववत् ।

घटादिकारणस्याप्यसत्त्वमेवानुपमृद्य मृत्पिण्डादिकं घटाद्यनुत्पत्तेरिति चेन्न । मृदादेः कारणत्वात् । मृत्सुवर्णादि हि तत्र कारणं घटरुचकादेर्न पिण्डाद्याकारविशेषः । तदभावे भावात् । असत्यपि पिण्डाकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादि-

---

त्वाच्चेति । कार्यकारणयोः सत्त्वस्यानुमेयतया तदसत्त्वमनुमातुमशक्यम् । उपजीव्यविषयतयासत्त्वानुमानस्य बलीयस्त्वादित्यर्थः । कार्यकारणयोः सत्त्वानुमानं प्रतिज्ञाय प्रथमं कारणसत्त्वमनुमिनोति—अनुमीयते चेत्यादिना । "कारणस्य सत्त्वेऽनुमानमाह"—कार्यस्य हीति । विमतं सत्पूर्वं कार्यत्वात्कुम्भवदित्यर्थः ।

नानुपमृद्य 'प्रादुर्भावादिति न्यायेन दृष्टान्तस्य साध्यवैकल्यं चोदयति—घटादीति । न तावदसिद्धो घटः स्वकारणमुपमृद्नात्यसतोऽकारकत्वात्सिद्धस्य तूपमर्दकत्वे नासत्पूर्वकत्वमिति कुतः साध्यविकलतेत्याह—नेति । किञ्चान्वयि द्रव्यमेव सर्वत्र कारणं न पिण्डादिविशेषोऽनन्वयादतस्त्वस्यानारचेति कुतः साध्यवैकल्यमित्याह—मृदादेरिति । तदेव स्फुटयति—मृत्सुवर्णादीति । तत्रेति दृष्टान्तोक्तिः ।

---

कार्य और कारण की सत्ता की अनुमिति की जाती है। क्योंकि उत्पन्न होने वाले विद्यमान कार्य की ही विद्यमान कारण मे उत्पत्ति देखी जाती है, अविद्यमान में नही देखी जाती है। घटादिकारण की सत्ता के समान उत्पत्ति से पूर्व जगत् के कारण की सत्ता का भी अनुमान किया जा सकता है।

(शून्यवादी पुनः अपना मत प्रस्तुत करता है) किन्तु घटादि कारण की भी सत्ता नहीं है, क्योंकि ('कारण का नाश किये बिना कार्य की उत्पत्ति असम्भव है' इस न्याय के अनुसार) मृत्पिण्डादि का नाश किए बिना घट रूप कार्य की उत्पत्ति असभव है। (इस पर सिद्धान्ती कहता है)-ऐसा कहना उचित नही। क्योंकि (घटादि रूपो मे) कारण तो मृत्तिकादि हैं। (इसे अन्वयव्यतिरेक से सिद्ध करते है) घट और रुचकादि के कारण तो मृत्तिका और सुवर्णादि हैं, पिण्डाद्याकार विशेष उनका कारण नही है। क्योंकि पिण्डाभाव होने पर भी घटाद्युद्भव की उपलब्धि तो रहती है। पिण्डाकारविशेष के विद्यमान न रहने पर भी मृत्तिका और सुवर्णादि कारण-द्रव्य मात्र से ही घट और रुचकादि कार्य की

---

१ "यदेव कारणं मानैरिह साक्षाद्विनिश्चितम् । तदेवोत्तरकार्येषु न कार्यं कारणं मितेः ॥"
इति वार्तिकमत्रानुसन्धेयम् । अस्यार्थः इह पिण्डादिरूपप्रथमकार्ये । यदेव मृदादिरूपं कारणं मानैः प्रत्यक्षेतरैः साक्षादध्यक्षेण च विनिश्चितम् तदेवोत्तरकार्येषु घटादिरूपेषु । मितेः मानात् कार्यं तु पिण्डादिरूपं न कारणम् । कस्यचिदघटादेरन्यथाघटादेरपि कस्यचिदन्वयिकारणत्वापत्तेरिति भाव इति ॥ अन्यदपि अन्त्यात्कार्यात्तदेव स्यादाद्य प्रति कारणमिति । अन्त्यात्कार्यादिति ल्यब्लोपे पञ्चमी तदभिव्याप्यत्यर्थः । २ असत्त्वानुमानस्य हि प्रतियोगिविषया सत्त्वमुपजीव्यमतस्तत्साधकमनुमानतो बलीय । ३ 'कारणस्य सत्त्वेऽनुमानमाहेति' नायं पुस्तकान्तरे पाठः—अनुपयुक्तोऽपि । ४. जगत् । ५ विद्यमानपूर्वम् । ६. कारणनाशमकृत्वा कार्यस्योत्पत्त्यसंभवादित्यर्थः । तथा च तथाभास्यैव कार्याव्यवहितपूर्वक्षणवृत्तित्वं न तु कारणस्येति भाव । अभावस्य चासत्त्वान्न सत्पूर्वत्वं प्रसिद्धम् इति । ७ सत्पूर्वकत्वादेतो । ८ कार्यतादात्म्येन प्रतीयमानम् । ९ कार्यतादात्म्येनाप्रतीयमानत्वात् । १० अनवस्थानादिति—घटस्य मृदतिरिक्तकारणकत्वे तत्कारणस्यापि कार्यत्वेन तदतिरिक्तकारणत्वे । ११ मृदादेः कारणत्वमेव।

कार्योत्पत्तिर्दृश्यते। तस्मान्न पिण्डाकारविशेषो घटरुचकादिकारणम्। असति तु मृत्सुवर्णादिद्रव्ये घटरुचकादिर्न जायत इति मृत्सुवर्णादिद्रव्यमेव कारणं न तु पिण्डाकारविशेषः। सर्वं हि कारणं कार्यमुत्पादयत्पूर्वोत्पन्नस्याऽऽत्मकार्यस्य तिरोधानं कुर्वत्कार्यान्तरमुत्पादयति। एकस्मिन्कारणे युगपदनेककार्यविरोधात्। न च पूर्वकार्योपमर्दे कारणस्य स्वात्मोपमर्दो भवति। तस्मात्पिण्डाद्युपमर्दे कार्योत्पत्तिदर्शनमहेतुः प्रागुत्पत्तेः कारणासत्त्वे।—

पिण्डादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमिति चेत्। पिण्डादिपूर्वकार्योपमर्दे मृदादिकारणं नोपमृद्यते घटादिकार्यान्तरेऽप्यनुवर्तत इत्येतदयुक्तम्। पिण्डघटादिव्यति-

किवान्वयव्यतिरेकाभ्यां कारणमवधेयम्। नच पिण्डाभावे घटो न भवतीति व्यतिरेकोऽस्ति। पिण्डाभावेऽपि शकलादिभ्योऽपि घटाद्युद्भवोपलम्भादित्याह—तदभाव इति। तदेव स्फुटयति—असत्यपीति। त्वन्मतेऽपि व्यतिरेकराहित्यं तुल्यमित्याशङ्क्याऽऽह—असतीति। मृदाद्येव घटादिकारणं चेत्किमिति पिण्डादौ सत्येव ततो घटाद्यनुत्पत्तिरित्याशङ्क्याऽऽह—सर्वमिति। "ब्रह्मणि त्वविद्यावशादुपपत्तिरिति भाव। अन्वयिद्रव्यं पूर्वोत्पन्नस्वकार्यतिरोधानेन कार्यान्तरं जनयति चेत्कार्यतादात्म्येन स्वयमपि नश्येत्तत्रो तत्कार्योत्पत्तिहेत्वभावादित्याशङ्क्याऽऽह—नचेति। "कार्यान्तरेऽप्य"नुवृत्तिदर्शनात्कार्यान्तरात्मना भावाच्चेत्यर्थः। अन्वयिद्रव्यस्यैव कारणत्वे फलितमाह—तस्मादिति।

"अन्वयिनो मृदादेर्नानाभावेनाभावान्न कारणतेति शङ्कते—पिण्डादीति। "तदेव चोद्य

उत्पत्ति होती देखी जाती है। इसलिए पिण्डाकार विशेष घटरुचकादि में कारण नहीं है। मृत्तिका और सुवर्णादि के विद्यमान न रहने पर घटरुचकादि की उत्पत्ति नहीं होती, अतः मृत्तिका और सुवर्णादि द्रव्य ही उनके कारण है, पिण्डाकार विशेष कारण नहीं है। कार्य की उत्पत्ति के लिए सभी कारण अपने से पूर्व उत्पन्न कार्य का तिरोभाव करके दूसरे कार्य को उत्पन्न करते हैं। एक ही कारण में एक साथ समष्टि रूप से अनेक कार्य नहीं हो सकते। पूर्वकार्य के तिरोधान होने से ही कारण के स्वरूप का तिरोधान नहीं होता। इसलिए पिण्डादि में तिरोधान होने पर ही कार्य की उत्पत्ति होना, उत्पत्ति से पूर्व कारण के विद्यमान न होने में हेतु नहीं है।

(शून्यवादी शङ्का करता है) पिण्डादि से भिन्न मृदादि की अनुपलब्धि होने से, कारणत्व मानना उचित नहीं है। पिण्डादि पूर्व कार्य का लय होने पर मृदादि कारण का लय नहीं होता, वह घटादि दूसरे कार्य में भी अनुवृत्त रहता है—ऐसा कहना ठीक नहीं। क्योंकि पिण्ड और घटादि से पृथक्

१ व्यतिरेकसहचारसत्त्वाद्धेतोरित्यर्थः। २ मैव तत्कारणस्यापि तथेत्यवमनवस्थानादित्यर्थः। ३ अन्वयिद्रव्यस्य मृदादेरेव घटादिकारणत्वात् पिण्डादेरकारणत्वादिति भावः। ४ सत्यव। ५ अनुपलब्धे। ६ कारणत्वमयुक्तमित्यर्थः। ७ हेतूक्तिरियम् अनुवर्तनादित्यर्थः। ८ व्यतिरेकाभावप्रयुक्तपिण्डादिनिष्ठघटादिकारणत्वाभावमेव। ९ सत्यपि। १० मृदादे। ११ कथं तर्ह्याकाशाद्यनुपमर्द्यैव ब्रह्मणो वाय्वाद्युत्पत्तिरित्यत आह ब्रह्मणि त्विति—एकस्मिन्नपि ब्रह्मण्यविद्यावशाद्युगपदनेककार्योत्पत्तिरित्यर्थः। १२ कार्यतादात्म्यापन्नत्वादित्यर्थः। १३ तथेति प्रथमकार्यनाशावसर इत्यर्थः। १४ न कार्यान्तरमुत्पत्तुमर्हतीति शेषः। १५ प्रतिज्ञायां हेतु पूरयति कार्येत्यादिना। कार्यान्तरे घटादिरूप द्वितीयादिकार्ये। अनुवृत्तिदर्शनादिति तादात्म्येन सत्त्वानुभवादित्यर्थः। १६ कार्यतादात्म्यापन्नस्य। १७ पिण्डादीत्यादिनोक्तमेव सङ्गृहीतमेवेति भावः।

रेकेण मृदादिकारणस्यानुपलम्भादिति चेन्न। मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तौ चानुवृत्तिदर्शनात्। सादृश्यादन्वयदर्शनं न कारणानुवृत्तेरिति चेन्न। पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वेऽनुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः।

न च प्रत्यक्षानुमानयोर्विरुद्धाऽव्यभिचारिता। प्रत्यक्षपूर्वकत्वादनुमानस्य 'सर्वत्रै-

विवृणोति—पिण्डादीत्यादिना। मृद्घटः सुवर्णं कुण्डलमित्यादितादात्म्यप्रत्ययस्य पिण्डाद्यतिरिक्तमृदाद्यभावेऽनुपपत्तेरनुगतं मृदाद्युपेयमिति परिहरति—नेति। किंच या पिण्डात्मना पूर्वेद्युर्मृद्वासीत्सैव घटाद्यभूदिति प्रत्यभिज्ञया मृदोऽन्वयिन्याः सिद्धेस्तत्कारणत्वं दुरपह्नवमित्याह—मृदादीति। "यत्सत्तत्क्षणिकं यथा दीपः" सन्तश्चेमे भावा इत्यनुमानात्सर्वार्थानां क्षणिकत्वसिद्धेरन्वयदृष्टिः सादृश्याद्भ्रान्तिरिति शङ्कते—सादृश्यादिति। "प्रत्यभिज्ञासिद्धस्याप्यर्थविरुद्धं क्षणिकार्थबोधिलिङ्गमनु"क्तानुमानवन्न मानमिति दूषयति—नेत्यादिना। सादृश्यादीत्यादिशब्देन प्रत्यभिज्ञा"भ्रान्तित्वादि" गृह्यते।

"प्रत्यक्षात्कार"णैक्यं गम्यते। अनुमानात्तद्भेदः। "अतो द्वयोर्विरुद्धत्वस्याव्यभि"चारित्वाद्वा

मृत्तिकादि कारण की उपलब्धि नही होती। (क्षणिक विज्ञानवादी की शङ्का का समाधान कर सिद्धान्ती कहता है) ऐसा कहना ठीक नही। घटादि की उत्पत्ति होने पर और पिण्डादि के तिरोधान होने पर मृत्तिकादि कारणो की (घटादि तादात्म्य से) उपस्थिति देखी जाती है। यदि कहो, सादृश्य प्रयोग के कारण एक वस्तु की अनेक काल मे सम्बन्ध होने से प्रतीति-रूपा प्रत्यभिज्ञा देखी जाती है, कारण की अनुवृत्ति होने से नही—तो ऐसा कहना ठीक नही। क्योकि पिण्डादिगत मृदादि अवयवो का ही घटादि मे प्रत्यक्ष देखा जाता है इसलिए ('वह्निरनुष्णो द्रव्यत्वात्' अर्थात् वह्नि द्रव्यत्व होने के कारण उष्ण नही है) अनुमानाभास से सादृश्यादि की कल्पना करना उचित नही है।

यह भी ध्यान रखना चाहिए कि प्रत्यक्ष और अनुमान प्रमाणो की अव्यभिचारिता मे (भाव प्रधान) विरोध भी नही होता। क्योकि अनुमान के प्रत्यक्षपूर्वक होने से सर्वत्र (क्षणिकत्वादि मे भी)

१ अनुवृत्ति घटादितादात्म्येन सत्त्वानुभव। २ कारणस्यानेककालसम्बन्धप्रयुक्तमित्यर्थं। ३ प्रत्यभिज्ञाबाधितादित्यर्थ। ४ विरुद्धेति भावप्रधानो निर्देश। ५ यथा प्रत्यक्षमनुमानानपेक्ष न तथाऽनुमान प्रत्यक्षानापेक्ष तत्सिद्धव्याप्त्याद्युपजीवित्वादत प्रत्यक्षस्योपजीव्यत्वाद्बलवत्त्वेत्यर्थ। ६ क्षणिकत्वादावपि त्वदभिमते। ७ कार्यतादात्म्यापन्नमित्यर्थ। ८ कार्यतादात्म्यापन्नाया। ९ तस्या मृद कारणत्वम्। १० निराकर्तुमशक्यम्। ११ अय विज्ञानवादीत्यादि। १२ अय हि क्षणिकविज्ञानवादी न पञ्चावयवमनुमानमभ्युपगच्छति किन्तु दृष्टान्तमुपनय चेति सर्वं क्षणिक सत्त्वादित्याकार न वर्त्तीति ध्येयम्। १३ एवस्य वस्तुनोऽनेककालसबन्धित्वेन प्रतीतिरूपा प्रत्यभिज्ञा। १४ सादृश्यप्रयुक्तमित्यर्थ। १५ प्रत्यभिज्ञेति वस्तुतस्त्वत्र 'प्रत्यभिज्ञासिद्धस्याप्यर्थविरुद्ध क्षणिकार्थं बोधयल्लिङ्गमि'त्यय पाठोऽवगन्तव्य। १६ स्थाय्यर्थसाधकप्रत्यभिज्ञाबाधितम्। १७ वह्निरनुष्णो द्रव्यत्वादित्यवमनुमानेत्यर्थ। १८ निष्ठेति भाव। १९ आदिना प्रत्यभिज्ञाया भ्रान्तित्वसम्पादक विषयक्षणिकत्व ग्रहीतव्यम्। २० प्रत्यक्षादिति प्रत्यभिज्ञात्मकप्रत्यक्षादित्यर्थ। २१ कारणस्य मृदादे, ऐक्यम् अनेककालसम्बन्धित्वम्। २२ उक्तप्रत्यक्षानुमानयो परस्परम् विरुद्धविषयत्वादित्यर्थ। २३ नियतत्वात्।

वानाश्वासप्रसङ्गात् । ¹यदि ²च क्षणिकं सर्वं तदेवेद³मिति गम्यमानं ⁴तद्बुद्धेरप्यन्यतद्⁵बुद्ध्यपेक्षत्वे तस्या अप्यन्यतद्बुद्ध्यपेक्षत्वमित्यनवस्थायां तत्सदृशमिदमित्यस्या ⁶अपि बुद्धेर्मृषा⁷त्वात्सर्वत्रानाश्वासतैव । तदिदंबुद्ध्योरपि ⁸कर्त्रभावे संबन्धानुपपत्तिः । सादृश्यात्त⁹त्संबन्ध इति चेन्न । तदिदंबुद्ध्योरितरेतरविषयत्वानुपपत्तेः । असति चेतरेतरविषयत्वे सादृश्यग्रहणानु¹⁰पपत्तिः ।

प्रत्यक्षेणा¹¹नुमानबाधो वैपरी¹²त्यसंभवादित्याशङ्क्याऽऽह—नचेति । प्रत्य¹³भिज्ञामुपजीव्यक्षणिकत्वानुमानाप्रवृत्तायप्युपजीव्य¹⁴जातीयत्वात्तत्प्राबल्याबुपजीवकजातीयकमुक्तानुमानं दुर्बलं तद्बा¹⁵ध्यमित्यर्थः¹⁶ । प्रत्य¹⁷भिज्ञा ¹⁸स्वार्थे ¹⁹स्वतो न मानं बुद्ध्यन्तरसंवादादेव बुद्धीनां मानत्वस्य बौद्धैरिष्टत्वात् । न च बुद्ध्यन्तरं स्यादित्यसाधकमस्तीति²⁰ प्रत्यभिज्ञायमानस्यापि क्षणिकत्वमित्याशङ्क्याऽऽह—सर्वत्रेति । प्रसङ्गमेव प्रकटयति—यदि चेति । क्षणिक²¹त्वादिबुद्धेरपि स्वार्थे स्वतोमानत्वाभावात्तादृग्बुद्ध्यन्तरापेक्षायां तस्यापि तथात्वेनानवस्थानाद्बुद्धेः स्वतः प्रामाण्यमुपेयम् । तथाच प्रत्यभिज्ञानं सर्वं तथैवाबाधाविरयर्थः । किंच प्रत्यभिज्ञाया भ्रान्तित्वं वदता²² ²³स्वरूपानपह्नवात्तदिदं²⁴बुद्ध्योः

अविश्वास का प्रसङ्ग हो जायगा । और यदि "यह वही है" इस प्रकार ज्ञात होने वाला सब कुछ क्षणिक है, तो उस अनुमानजन्य क्षणिकत्व बुद्धि को प्रमाणित करने के लिए (स्वभिन्नस्वसमानविषयक) बुद्ध्यन्तर की अपेक्षा होने से, और उसके लिए अन्यतद्बुद्धि की अपेक्षा होने से अनवस्था दोष होने पर "यह उसके समान है" इस प्रकार यह बुद्धि भी मिथ्या होने के कारण सर्वत्र अविश्वास प्रसंग रह ही जायगा । तथा "यह" और "वह" इन बुद्धियो मे कर्ता के आश्रय का अभाव होने के कारण परस्पर सम्बन्ध सिद्ध नही होगा । यदि कहो, सादृश्य होने के कारण उन बुद्धियो मे सम्बन्ध हो सकता है, तो ऐसा कहना ठीक नही । क्योकि "यह" और "वह" इन बुद्धियों का पृथक-पृथक् विषयत्व सिद्ध नही होता । इतरेतर विषयत्व के विद्यमान न रहने पर सादृश्यग्रहण भी सिद्ध नही होता ।

१. चेत् । २. वाक्यालङ्कारे च । ३. प्रत्यभिज्ञाप्रमाणक सर्वं क्षणिक चेदिति सम्बन्ध स्थायित्वसाधकबुद्ध्यन्तराभावादित्यभिप्राय । ४ अनुमानजन्यक्षणिकत्वबुद्धे । ५. स्वभिन्नस्वसमानविषयकबुद्ध्यन्तरेत्यर्थः । ६. अपिरवार्थे. भिन्नक्रमश्च मृषात्वादित्यनन्तर योज्य । ७ मृषात्वादिति सादृश्यबुद्धेः स्वसमानविषयकबुद्ध्यन्तराभावेनाप्रमाणतया स्वार्थबोधकत्वाभावादित्यर्थ । ८ कर्त्रभाव इति कर्तुराश्रयस्यैकस्याभावे सतीत्यर्थ । ९. तत्सम्बन्ध तयो बुद्ध्यो सम्बन्ध सम्बन्धधीरित्यर्थ । १०. अन्यस्य तद्ग्राहकस्याभावादिति भाव । सोपि विज्ञानातिरिक्तस्यानभ्युपगमादिति ध्येयम् । ११. उभयो प्रमाणत्वे तुल्येऽप्यक्षस्यैव बाधकत्वे विनिगमकाभावादिति भाव.। १२. अनुमानस्यैव बाधकत्वसम्भवादित्यर्थं । १३. नन्वनुमानस्याभिज्ञात्मकप्रत्यक्षापेक्षत्वेऽपि प्रत्यभिज्ञाप्रत्यक्षानपेक्षत्वान्न तदपेक्षया दुर्बलत्वम्, तथा च विनिगमकाभावेनानुमानस्यापि प्राबल्य सभवतीत्यत आह—प्रत्यभिज्ञामिति । १४. उपजीव्यजातीयत्वादिति अनुमानोपजीव्य प्रत्यक्षम् प्रत्यक्षत्वेन तज्जातीय प्रत्यभिज्ञानम् तस्य भाव तत्त्व तस्मात् । १५. तद्बाध्यमिति—तेनोपजीव्यजातीयेन प्रत्यभिज्ञानेन बाध्यमित्यर्थः। १६. इत्यर्थ इति अभिप्रेतार्थ इत्यर्थ., तथा च भाष्ये प्रत्यक्षपद प्रत्यभिज्ञायामुपजीव्यजातीयत्वबाधनार्थमिति भाव. । १७ बौद्धानुसार्याह प्रत्यभिज्ञेति । १८. स्वार्थे अनेककालसम्बन्धिमृदि । १९. स्वतः बुद्ध्यन्तरनिरपेक्षतया बुद्ध्यन्तरेति स्वसमानविषयकबुद्ध्यन्तरेत्यर्थः । २०. बुद्ध्यन्तरसंवादाभावाद् । २१. सादृश्यधीरादिग्राह्या । २२. त्वया । २३ स्वरूपानपह्नवादिति प्रत्यभिज्ञास्वरूपानपलपनादित्यर्थः । २४. बुद्ध्योरित्युक्त्या प्रत्यभिज्ञास्थले बुद्धेर्बुद्धिद्वयमुरीक्रियते इत्यवधेयम् ।

असत्येव सादृश्ये तद्बुद्धिरिति चेन्न । तदिदंबुद्ध्योरपि सादृश्यबुद्धिवदसद्विषयत्वप्रसङ्गात् । असद्विषयत्वमेव सर्वबुद्धीनामस्त्विति चेन्न । बुद्धिबुद्धेरप्यसद्विषयत्वप्रसङ्गात् । तदप्यस्त्विति चेन्न । सर्वबुद्धीनां मृषात्वेऽसत्यबुद्ध्यनुपपत्तेः । तस्मादसदेतत्सादृश्यात्तद्बुद्धिरिति । अतः सिद्धः प्राक्कार्योत्पत्तेः कारणसद्भावः । कार्यस्य चाभिव्यक्तिलिङ्गत्वात् । कार्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः ।

---

सामानाधिकरण्येन संबन्धो वाच्यः, स च वक्तुं न शक्यते क्षणद्वयसंबन्धिनो द्रष्टुरभावादित्याह—तदिदमिति । असति संबन्धे बुद्ध्योः सादृश्यात्तद्बुद्धिरिति शङ्कते—सादृश्यादिति । तयोः स्वसंवेद्यत्वाद्ग्राहकान्तरस्य चाभावान्न सादृश्यसिद्धिरिति दूषयति—न तदिदंबुद्ध्योरिति । तथाऽपि किमिति सादृश्यासिद्धिरित्याशङ्क्याऽऽह—असति चेति ।

सादृश्यासिद्धिमभ्युपेत्य शङ्कते—असत्येवेति । यत्र सत्येवार्थे धीस्तत्रैव साधकापेक्षा नान्यत्रेति भावः । तत्र बाह्यार्थवादिनं प्रत्याह—न तदिदंबुद्ध्योरिति । विज्ञानवाद्याह—असदिति । तथा सत्यनालम्बनं क्षणिकविज्ञानमित्यस्यापि ज्ञानस्यासद्विषयतया विज्ञानवादासिद्धिरित्याह—नेति । शून्यवाद्याह—तदपीति । सर्वा धीरसद्विषयेत्येषा धीरसद्विषया स्यात्ततश्च सर्वबुद्धेरसद्विषयत्वासिद्धिरिति दूषयति—नेत्यादिना । परपक्षासंभवात्प्रत्यभिज्ञया स्थायिहेतुसिद्धौ दृष्टान्तस्य साध्यवैकल्यं परिहृत्यावान्तरप्रकृतमुपसंहरति—तस्मादिति । संप्रति कारणसत्त्वानुमानं निगमयति—

---

यदि कहो सादृश्य के विद्यमान न रहने पर भी तद्बुद्धि (यह वही है, ऐसी बुद्धि) होती है—तो ऐसा कहना ठीक नहीं । क्योंकि ऐसे में सादृश्य-बुद्धि के समान 'तद्' और 'इदम्' बुद्धियाँ भी (बुद्धित्व लिङ्ग से) असद्विषयक सद्ध होंगी । तो सभी बुद्धियों को असद्विषयक ही बनने दो—ऐसा कहना ठीक नहीं, ऐसे मे बुद्धि-बुद्धि के भी असद्विषयकत्व होने का प्रसङ्ग आ जाएगा । (तो क्या बात है ?) वह भी हो जाने दो । ऐसा कहना ठीक नहीं, क्योकि तब सब बुद्धियाँ ही मिथ्या होंगी तो असत्य बुद्धि का होना कैसे सम्भव होगा ? अतः सादृश्य से 'यह वही है' ऐसी तद्बुद्धि (घटादि कार्यों मे अन्वयबुद्धि) होती है—यह कहना ठीक नही है । इसलिए (घटादि रूप) कार्य की उत्पत्ति से पूर्व कारण की विद्यमानता सिद्ध ही है । और कार्य की भी सत्ता है क्योकि (कार्यास्तित्वानुमान) अभिव्यक्ति रूप लिङ्ग वाला है । उत्पत्ति से पूर्व कार्य का अस्तित्व भी प्रसिद्ध है ।

---

१ बुद्धित्वेन लिङ्गेनेति ध्येयम् । २ तद्बुद्धिरिति मृदादिकारणाना मृद्घट इत्येव घटादिकार्येष्वन्वयबुद्धिरित्यर्थः । ३ अभेदस्तृतीयार्थः । ४ विज्ञानातिरिक्तपदार्थस्याभावेन मृदादेरपि विज्ञानस्वरूपत्वात् अपोहरूपमृत्त्वादिना तयो सादृश्यात्तत्प्रयुक्तसामानाधिकरण्यबुद्धिरित्यर्थः । मृदतिरिक्तस्याभावोऽत्र अपोहशब्दार्थः । ५. सम्बन्धधी । ६. न तावदन्यो धियोरन्यो ग्राहको यस्तयोः सादृश्यं परवेदनम्युपगमात् अन्योन्यविषयत्व तु स्वसंवेद्यत्वपराहतम्, अत सादृश्ययोरयुक्तो धियोस्तत्सादृश्यस्य च ग्राहकाभावादित्यभिप्रायेणाह—तयोरिति । ७. बौद्ध । ८. सप्तमीत्रयमिद समानाधिकरणम् यस्मिन्नर्थे सत्येवेत्यन्वयः । ९. प्रमाधीरिति यावत् । १०. ग्राहकापेक्षा । ११ तत्रेति असत्सादृश्यविषयकधीस्वीकार इत्यर्थः । १२ बाह्यार्थवादिन सौत्रान्तिकवैभाषिकौ । १३. निर्विषयम् । १४. परेति तार्किकबौद्धेरित्यर्थः । १५. तदिति पूर्वोक्तेरित्यर्थः । १६ अवान्तरप्रकृतमिति—प्रत्यभिज्ञानिष्ठसादृश्यनिबन्धनभ्रान्तित्वनिराकरणमित्यर्थ. । महाप्रकृत तु कार्यसत्पूर्वकत्वसाधनरूपमवगमनीयम् । १७ तस्मादिति—परवादे सादृश्यानुपपत्त्या प्रत्यभिज्ञाया सादृश्यविषयत्वानुपपत्तेरित्यर्थ. ।

कथमभिव्यक्तिलिङ्गत्वादभिव्यक्तिलिङ्गमस्येति । अभिव्यक्तिः साक्षाद्विज्ञानालम्बनत्वप्राप्तिः । यद्धि लोके प्रावृतं तमआदिना घटादि वस्तु तदालोकादिना प्रावरणतिरस्कारेण विज्ञातविषयत्वं प्राप्नुवत्प्राक्सद्भावं न व्यभिचरति । तथेदमपि जगत्प्रागुत्पत्तेरित्यवगच्छामः । न ह्यविद्यमानो घट उदितेऽप्यादित्य उपलभ्यते ।

न । तेऽविद्यमानत्वाभावादुपलभ्येतैवेति चेत् । न हि तव घटादिकार्यं कदाचिदप्यविद्यमानमित्युदित आदित्य उपलभ्येतैव । मृत्पिण्डेऽसंनिहिते तमआद्यावरणे चासति

अत इति । कार्यकारणयोर्द्वयोरपि प्रागुत्पत्तेः सत्त्वमनुमेयमिति प्रतिज्ञाय कारणास्तित्वं प्रपञ्चितमिदानीं कार्यास्तित्वानुमानं दर्शयति—कार्यस्य चेति । प्रागुत्पत्तेः सद्भावः प्रसिद्ध इति चकारार्थः । प्रतिज्ञाभागं विभजते—कार्यस्येति ।

हेतुभागमाक्षिपति—कथमिति । अभिव्यक्तिलिङ्गमस्येति व्युत्पत्त्या कथमभिव्यक्तिलिङ्गत्वादिति कार्यसत्त्वे हेतुरुच्यते 'सिद्धे हि सत्त्वेऽभिव्यक्तिलिङ्गमस्येति सिध्यति तद्बलाच्च 'सत्त्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः । संप्रतिपन्नयाऽभिव्यक्त्या विप्रतिपन्नं सत्त्वं साध्यते 'तन्नान्योन्याश्रयत्वमिति परिहरति—अभिव्यक्तिरिति । कथं "तर्हीहा"नुमानं प्रयोक्तव्यमित्याशङ्क्य प्रथमं व्याप्तिमाह—यद्धीति । यद्यभिव्यज्यमानं तत्प्रागभिव्यक्तेरस्ति यथा तमोन्तःस्थं घटादीत्यर्थः । संप्रत्यनुमिनोति—तथेति । "विमतं प्रागभिव्यक्तेः सदभिव्यक्तिविषयत्वाद्यद्ध्यभिव्यज्यते तत्प्राक्सत्सप्रतिपन्नवदित्यर्थः । ननु तमोन्तःस्थो घटोऽभि"व्यञ्जकसामीप्यादभिव्यज्यते न तत्र प्राक्कालीनं सत्त्वं प्रयोजकमित्याशङ्क्याऽऽह—न हीति ।

उक्तेऽनुमाने कार्यस्य सदोपलब्धिप्रसङ्गं पक्ष"बाधकमाशङ्कते—नेत्यादिना । उक्तानुमाननिषेधो

अभिव्यक्ति रूप लिङ्ग वाला ऐसे व्युत्पत्ति करने पर "अभिव्यक्तिलिङ्गत्वात्" यह हेतु कैसे सिद्ध हुआ ? अभिव्यक्ति का अर्थ है—अपरोक्षज्ञानविषयत्व की प्राप्ति । जैसे कि ससार मे घटादि वस्तु तमादि से ढकी होती है, तब आलोकादि से उस आवरण का निराकरण होने पर विज्ञान विषयत्व को प्राप्त होकर (वही घट) अपने पूर्व अस्तित्व का त्याग नही करता । उसी तरह यह निर्णय हो जाता है, कि उत्पत्ति से पूर्व यह जगत् भी था, क्योकि जिस घट का अस्तित्व ही न हो, सूर्य के उदय होने पर भी उसकी उपलब्धि नही हो सकती ।

ऐसा कहना ठीक नही है । तुम्हारे मत मे घटादिकार्य के अविद्यमान नही होने से भी उनकी उपलब्धि होनी चाहिये । तुम्हारे मत मे घटादि कार्य अविद्यमान तो कभी है ही नही, आदित्य के उदय होने पर भी उसकी उपलब्धि होनी ही चाहिये । मृत्पिण्ड के सान्निध्य के बिना, तम आदि आवरण के न होने पर भी उसकी उपलब्धि होनी चाहिए, क्योकि वह तो विद्यमान है । (सिद्धान्ती

१ साक्षादित्यादि—अपरोक्षज्ञानविषयत्वसम्बन्ध इत्यर्थः । २ निश्चिनुमः । ३ 'मृदित्यादि चेदित्यन्त' पाठ प्रक्षिप्तस्तट्टीकापि तथैवेति प्रतिभाति । ४ ननूत्पत्तेः प्राक् पिण्डस्यैवावरकत्वान्नोपलभ्यत इत्यत आह—मृत्पिण्ड इति । ५ अत इति व्याप्तस्य कार्यत्वहेतोः पक्षवृत्तित्वादित्यर्थः । ६ ज्ञाते । ७ ज्ञायते । ८ अभिव्यक्तिरूपलिङ्गज्ञानात् । ९ नेदिति अभिव्यक्तिसिद्धेः सत्त्वसिद्ध्यनपेक्षत्वादित्यर्थः । १० तर्हीति अभिव्यक्तेर्लिङ्गत्वसम्भवे इत्यर्थः । ११ इहेति उत्पत्तेः प्राक्कार्यसत्त्व इत्यर्थः । १२ विमतमिति शुक्तिरूप्यादीनामप्यधिष्ठानात्मना प्राक्सत्त्वमभिधेयम् लौकिकप्रमात्मिका वाऽभिव्यक्तिर्विवक्षणीयेत्यव्यभिचारः । १३ आलोकादिसामग्रीसामीप्यादित्यर्थः । १४ पक्षबाधकमिति—अनुमानविषयीभूतस्य पक्षस्य सिद्धान्त्यभिमतस्य कार्यसार्वदिकत्वस्य, बाधकम् अभावसम्पादकमित्यर्थः ।

विद्यमानत्वादिति चेत् । न । द्विविधत्वादावरणस्य । घटादिकार्यस्य द्विविधं ह्यावरणं मृदादेरभिव्यक्तस्य तमः कुड्यादि प्राङ्मृदोऽभिव्यक्तेर्मृदाद्यवयवानां पिण्डादिकार्यान्तररूपेण संस्थानम् । तस्मात्प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्यस्याऽऽवृतत्वादनुपलब्धिः । नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्त्वभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः ।

---

नञर्थः । अविद्यमानत्वाभावादिति च्छेदः । अनुमाने बाधकोपन्यासं विवृणोति—न हीति । वर्तमानवदतीतमागामि च घटादि सदेव चेदुपलब्धिसामग्र्या सत्या तद्वत्प्रागजनेर्नाशाच्चोर्ध्वमुपलभ्येत न चैवमुपलभ्यते तस्मादयुक्तं कार्यस्य सदा सत्त्वमित्यर्थः । मृत्पिण्डग्रहणं विरोधिकार्यान्तरोपलक्षणार्थम् । असंनिहिते सतीति च्छेदः "न तावद्विद्यमानत्वमात्रं कार्यस्य सदोपलम्भापादकं सतोऽपि घटादेरभिव्यक्तस्यानभिव्यक्तस्योपलब्धत्वादिति समाधत्ते—नेति । अभिव्यक्तिसामग्रीसत्त्वं त्वभिव्यक्तिसाधकं न तु सतस्तत्सामग्रीनियमोऽस्तीत्यभिप्रेत्याऽऽह—द्विविधत्वादिति । उत्पन्नस्य कुड्याद्यावरणमनुत्पन्नस्य विशिष्टं कारणमिति द्वैविध्यमेव प्रतिज्ञापूर्वकं साधयति—घटादीति । यदोपलभ्यमानकारणावयवाना कार्यान्तराकारेण स्थितिस्तदा नेदं कार्यमुपलभ्यते तत्रान्यथा चोपलभ्यत इत्यन्वयव्यतिरेकसिद्धं कारणस्य कार्यान्तररूपेण स्थितस्य कार्यावरकत्वमिति द्रष्टव्यम् । विशिष्टस्य कारणस्याऽऽवरकत्वसिद्धौ सिद्धमर्थमाह—तस्मादिति । प्रागपि कार्यास्तित्वे सिद्धे सदा तदुपलब्धिप्रसङ्गबाधकं निराकृत्य "नष्टो घटो नास्तीत्यादिप्रयोगप्रत्ययभेदानुपपत्तिं बाधकान्तरमाशङ्क्याऽऽह—नष्टेति ।

---

इसका समाधान करता है—) ऐसा कहना ठीक नहीं है। क्योंकि आवरण द्विविध है। घटादिरूप कार्य में आवरण दो प्रकार का है— उत्पन्न मृदादि के साथ अन्धकार और भित्ति आदि, एवं मृत्तिका से घट रूप कार्य की उत्पत्ति के पूर्व मृदादि अवयवों का पिण्डादि कार्यरूप में स्थित रहना। इसलिए (विशिष्ट कारण के आवरक होने से) उत्पत्ति से पूर्व विद्यमान घटादि कार्य की भी आवृत होने के कारण उपलब्धि नहीं होती। नष्ट होना और उत्पन्न होना, होना और न होना इत्यादि शब्द और प्रत्यय भेद तो अभिव्यक्ति और तिरोभाव (अस्ति व्यवहार और नास्ति व्यवहार) इनकी द्विविधता की अपेक्षा से हुआ करता है।

---

१ सकाशात् । २ उत्पन्नस्य । ३ विशिष्टकारणस्य आवरकत्वात् । ४ बाधकवाक्यम् । ५ उत्पत्त्यनन्तरविद्यमानघटादिवत् । ६ अतीतेति नाशप्रतियोगीत्यर्थः । ७ आगामीति प्रागभावप्रतियोगीत्यर्थः । ८ प्रतिबन्धकाभावे च सतीत्यपि बोध्यम् । ९ वर्तमानवत् । १० वर्तमानवत् । ११ उपलभ्यत इति न च सर्वदा कार्योपलब्धिसामग्रीराहित्यमिति वाच्यम्, तत्कारणस्यैव तत्सामग्रीत्वात् कारणस्य च प्रागुत्पत्तेरपि सत्त्वस्य साधितत्वादिति । १२ अतीतानागतावस्थायामनुपलब्धत्वात् । १३ पिण्डवदावरकत्वेनाभिमतकपालादिकार्यं यथं । १४ विद्यमानत्वे सत्यभिव्यक्तत्वमुपलम्भप्रयोजकमित्याशयवानाह नेत्यादि । १५ अस्तीति वर्तमानघटादावदृष्टेरिति शेष, अनेन कारणसत्त्वमेव तत्सत्त्वमिति प्रत्युक्तम् वर्तमानघटे तत्सत्त्वेऽपि व्यञ्जकसत्त्वानिधमान् अत मतोऽप्यव्यज्यमानत्वम् । स्यायिवादिभिरेष्टव्यमिति भाव । १६ विशिष्टमिति—पिण्डाद्यवस्थान्तरविशिष्टमित्यर्थं पिण्डाद्यवस्थापन्नमिति यावत् । १७ तत्रान्यथेति तत्र तेषु कारणावयवेषु अन्यथा सत्सु कार्यान्तराकारेण स्थित्यभाववत्सु चेत्यर्थ । १८ घटो नष्टो, घटो नास्ति, उत्पन्नो घटो, घटोऽस्तीति चत्वार प्रयोगा बोध्या अत्र च घटोऽस्तीति प्रयोगस्य सदास्तित्ववाचकत्वाभावेऽपि इदानीं घटोऽस्तीत्यस्य तद्बोध्यम् । सदास्तित्वे इदानीमिति विशिष्टकालानुवेधायोगादिति ध्येयम् ।

पिण्डकपालादेरावरणवैलक्षण्याद[1]युक्तमिति चेत्। तमः कुड्यादि हि घटाद्यावरणं घटादिभिन्नदेशं दृष्टं न तथा घटादिभिन्नदेशे दृष्टे पिण्डकपाले। [2]तस्मात्पिण्डकपालसंस्थान[3]योर्विद्यमानस्यैव घटस्याऽऽवृतत्वादनुपलब्धिरित्ययुक्तमावरण[4]धर्मवैलक्षण्यादिति चेत्। न। क्षीरो[5]दकादेः क्षीराद्यावरणेनैक[6]देशत्वदर्शनात्। घटादि[7]कार्ये कपालचूर्णाद्यवयवानामन्तर्भावादनावरणत्वमिति चेत्। न। विभ[8]क्तानां कार्यान्तरत्वादावरणत्वोपपत्तेः।

आवरणाभाव एव यत्नः कर्तव्य इति चेत्पिण्डकपालावस्थयोर्विद्यमानमेव

कपालादिना तिरोभावे नष्टव्यवहार[9] पिण्डाद्यावरणभङ्गेनाभिव्यक्तावुत्पन्नव्यहारो दीपादिना तमोनिरासेनाभिव्यक्तौ भाव[10]व्यवहारः पिण्डादिना तिरोभावे[11]ऽभावव्यवहारः। तदेवं कार्यस्य सदा सत्त्वेऽपि प्रयोगप्रत्ययभेदसिद्धिरित्यर्थः।

पिण्डादि न घटाद्यावरणं तेन समानदेशत्वात्। यद्यस्याऽऽवरणं न तत्तेन समानदेशं यथा कुड्यादीति शङ्कते—पिण्डेति। व्यतिरेक्यनुमानं विवृणोति—तमइत्यादिना। अनुमान[12]फलं निगमयति तस्मादिति। किमिदं समानदेशत्वं किमेकाश्रयत्वं किमेककारणत्वमिति विकल्प्याऽऽद्यं विरुद्ध[13]त्वेन दूषयति—नेत्यादिना। क्षीरेण संकीर्णस्योदकादेराव्रियमाणस्येति यावत्। द्वितीयमुत्थापयति—घटादीनि। यस्येद[14] कार्यं तस्मिन्मृदात्मनि [15]तेषाम[16]वस्थानात्तद्वत्तेषामनावरणत्वमित्यर्थः। घटावस्थमृन्मात्रवृत्तिकपालादेर्घटानावरणत्वमिष्टमेवेति सिद्धसाध्यताऽव्यक्तघटावस्थमृद्वृत्तिकपालादेरनावरणत्वसाधने हेत्वसिद्धिर्घटस्य कपालादेश्चा[17]ऽऽश्रयमृदवयवभेदादिति दूषयति—न विभक्तानामिति।

(इस पर पूर्वपक्षी शङ्का करता है) पिण्डकपालादिकों के आवरण से विलक्षण होने के कारण (घटादिकों का पिण्डादिकों से आवृतत्व कहा जाना) ठीक नहीं है। अन्धकार और दीवार आदि घटादि के आवरण तो घटादि से भिन्न देश में देखे जाते हैं, इस प्रकार पिण्ड और कपाल घटादि से भिन्न देश में नहीं देखे जाते। इसलिए (समान देश में आवरकत्व असंभव होने के कारण) पिण्ड और कपाल के संस्थान में विद्यमान ही घटादि की, आवृत होने के कारण उपलब्धि नहीं होती—यह कहना अयुक्त है क्योंकि आवरण धर्मों (कुड्यादि) से उनमें विलक्षणता है। (सिद्धान्ती इसका खण्डन करता है—)ऐसी बात नहीं है—दूध, जल (तेल, घृत) आदि की अपने आवरण दूध आदि के साथ समानदेशीयता देखी जाती है। घटादि कार्य हैं जिसके, ऐसी मृत्तिका में कपाल और चूर्णादि अवयवों का अन्तर्भाव हो जाता है, इसलिए उनको अनावरणत्व कहो—तो ठीक नहीं। क्योंकि परस्पर भिन्न-भिन्न का विभिन्न कारणवत्त्व होने से उन्हें आवरण मानना सिद्ध हो जाता है।

(इस पर पूर्वपक्षी शङ्का करता है—) आवरणाभाव के लिए ही प्रयत्न करना चाहिए।

१ घटादे पिण्डादिनावृतत्वकथनमयुक्तमित्यर्थः। २ समानदेशत्वेनावरकत्वासंभवात्। ३ सति सप्तमी। ४ आवरण धर्मो यस्य तस्मात्कुड्यादितो वैलक्षण्यादित्यर्थ। ५ आदिना तैलघृतादि। ६ सह। ७ घटादीनि कार्याणि यस्य तस्मिन्मृदात्मनीति विग्रह। ८ विभक्तानां परस्पर भिन्नानाम् कार्यान्तरत्वात् भिन्नकारणत्वादिति यावत्। ९ अस्तित्वव्यवहार। १० नास्तित्वव्यवहारः। ११ पिण्डादेरावरकत्वाभावरूपम्। १२ साध्यविरुद्धत्वेनेत्यर्थ हेतो साध्याभाववद्वृत्तित्वमिति यावत्। १३ इद घटादिकार्यम्। १४ तेषां घटकपालादीनाम्। १५ अवस्थानात्—तुल्यदेशत्वात् एककारणवत्त्वादिति यावत्। १६ स्वाश्रयेति पाठान्तरम्।

घटादिकार्यमावृतत्वान्नोपलभ्यत इति चेत्। घटादिकार्यार्थिना तदावरणविनाश एव यत्नः कर्तव्यो न घटाद्युत्पत्तौ। न चैतदस्ति तस्मादयुक्तं, विद्यमानस्यैवाऽऽवृतत्वादनुपलब्धिरिति चेत्। न। अनियमात्। न हि विनाशमात्रप्रयत्नादेव घटाद्यभिव्यक्तिर्नियता। तमआद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात्। सोऽपि तमोनाशायैवेति चेत्। दीपाद्युत्पत्तावपि यः प्रयत्नः सोऽपि तमस्तिरस्करणाय तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते। न हि घटे किंचिदाधीयत इति चेत्। न। प्रकाशवतो घटस्योपलभ्यमानत्वात्। यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणेन न तथा प्राक्प्रदीपकरणात्। तस्मान्न तमस्तिरस्कारायैव प्रदीपकरणं किं तर्हि प्रकाशवत्त्वाय। प्रकाशवत्त्वेनैवोपलभ्यमान-

विद्यमानस्यैवाऽऽवृतत्वादनुपलब्धिश्चेदावरणतिरस्कारे यत्नः स्यान्न घटादेरुत्पत्तावतोऽनुभवविरोध सत्कार्यवादिन स्यादिति शङ्कते—आवरणेति। तदेव प्रपञ्चयति—पिण्डेति। "यत्राऽऽवृत वस्तु व्यज्यते तत्राऽऽवरणभङ्ग एव यत्न इति व्याप्त्यभावान्नानुभवविरोधोऽस्तीति दूषयति—नानियमादिति। अनियम "साधयति—न हीति। तमसाऽऽवृते घटादौ दीपोत्पत्तौ यत्नोऽस्तीत्यत्र चोदयति—सोऽपीति। अनुभवविरोधमाशङ्क्योक्तमेव व्यनक्ति—दीपादीति। दीपस्तमस्तिरयति चेत्कथं

पिण्ड और कपाल की अवस्थाओ मे, विद्यमान ही घटादि काय की, आवृत होने के कारण उपलब्धि नही होती। तब तो जिसे घटादि कार्य की इच्छा हो, उसे उसके आवरण के नाश का यत्न करना चाहिये, घटादि उत्पत्ति के लिए यत्न करने की क्या आवश्यकता है? किन्तु ऐसा होता नही है। इसलिए (अनुभवविरोधी होने से) यह कहना ठीक नही है कि विद्यमान घटादि की ही आवृत होने के कारण उपलब्धि नही होती।

(सिद्धान्ती खण्डन करता है—) ऐसा कहना ठीक नही, क्योंकि यह नियम नही है। आवरणविनाश के लिए प्रयत्न करने मात्र से ही घटादि की उत्पत्ति हो जाए, ऐसा नियत नही है। क्योंकि तम आदि से आवृत घटादि प्राप्ति के लिए, प्रदीपादि की उत्पत्ति मे प्रयत्न देखा जाता है।

(पुन शङ्का होती है) वह यत्न भी तो अन्धकार के नाश के लिए किया जाता है। दीपादि की उत्पत्ति के लिए भी जो प्रयत्न किया जाता है, वह भी अन्धकार के नाश के लिए ही है। अन्धकार के नष्ट होने पर घट स्वय ही उपलब्ध हो जाता है। यदि कहो, (दीप के उत्पत्ति के अनुकूल प्रयत्न के द्वारा घट के उपलब्धि रूप प्रयोजन वाली) कोई वस्तु घट मे उत्पन्न नही करायी जाती। (इस पर सिद्धान्ती कहता है)—ऐसा कहना ठीक नही। क्योंकि प्रकाशवान् घट की ही उपलब्धि होती है। जैसे दीपक होने पर प्रकाशविशिष्ट घट की उपलब्धि होती है, वैसे दीपक तैयार करने से पहले नही होती। इसलिए अन्धकार विनाश के लिए प्रदीप जलाया नही जाता, बल्कि प्रकाश के लिए दीप जलाया जाता है। इससे स्पष्ट होता है, कि घटादि वस्तु की उपलब्धि

१ अनुभवविरोधात्। २ आवरणविनाशेत्यर्थ। ३ आदिशब्दत्रयेण क्रमाद् दधिनवनीतमथ्यादिक ग्राह्यम्। ४ अपिना पूर्वमादिशब्दत्रयोक्त समुच्चिनोति। ५ आधीयत इति दीपोत्पत्त्यनुकूलप्रयत्नेन घटोपलब्धिप्रयोजक किमपि वस्तु घटेनोत्पाद्यत इत्यर्थं। ६ वक्ष्यमाणहेतो नस्मादित्युक्तम्। ७ व्यनक्ति प्रकाशेति। ८ पिण्डादिनेत्यादि। ९ उत्पत्ताविति तदुत्पत्तौ च घटाद्यर्थीय तत इति शेष। १० अत घटाद्यर्थिनो घटाद्युत्पत्तौ यत्नदर्शनात्। ११ अङ्कितमेव। १२ विवृणोति। १३ गृहादौ। १४ उपपादयति। १५ सोपीत्यादिसग्रहवाक्योक्तमर्थमित्यर्थ।

त्वात् । क्वचिदावरणविनाशेऽपि यत्नः स्यात् । यथा कुड्यादिविनाशे । तस्मान्न नियमोऽस्त्यभिव्यक्त्यर्थिनाऽऽवरणविनाश एव यत्नः कार्यं इति ।

नियमार्थवत्त्वाच्च । कारणे वर्तमानं कार्यं कार्यान्तराणामावरणमित्यवोचाम । तत्र यदि पूर्वाभिव्यक्तस्य कार्यस्य पिण्डस्य व्यवहितस्य वा कपालस्य विनाश एव यत्नः क्रियेत । तदा विदलचूर्णाद्यपि कार्यं जायेत । तेनाप्यावृतो घटो नोपलभ्यत इति पुनः प्रयत्नान्तरापेक्षैव । तस्माद्घटाद्यभिव्यक्त्यर्थिनो नियत एव कारकव्यापारोऽर्थवान् ।

---

कुम्भोपलब्धिरत आह—तस्मिन्निति । तत्र हेतुमाह—न हीति । अनुभवमनुसृत्य परिहरति—नेत्यादिना । किमिदानीमावरणभङ्गे प्रयत्नो नेत्येव नियमोऽस्तु नेत्याह—क्वचिदिति । अनियमं निगमयन्नुभयविरोधाभावमुपसंहरति—तस्मादिति ।

किंचाभिव्यञ्जकव्यापारे सति नियमेन घटो व्यज्यते तदभावे नेत्यन्वयव्यतिरेकावधारितो घटार्थः कुलालादिव्यापारस्तस्यार्थवत्त्वार्थमभिव्यक्त्यर्थं एव प्रयत्नो वक्तव्य आवरणभङ्गस्त्वार्थिक इत्याह—नियमेति । उक्तं स्मारयन्नेतदेव विवृणोति—कारण इत्यादिना । आवृत्तिभङ्गार्थं यत्ने

---

प्रकाशयुक्त होने पर ही होती है । दीवारादि के विनाश के समान कहीं-कहीं आवरणविनाश के लिए प्रयत्न भी हुआ करता है । इसलिए (आवरणविनाश और अर्थाभिव्यक्ति में प्रयत्न दिखाई देने पर) पदार्थ की अभिव्यक्ति के इच्छुक को आवरणविनाश के लिए ही यत्न करना चाहिए—ऐसा कोई नियम नहीं है ।

इसके अतिरिक्त कुलालादि व्यापाररूप नियम की सफलता के लिए भी प्रयत्न करना चाहिए । मृदादि कारण में विद्यमान पिण्डादि कार्य घटादि रूप अन्य कार्यों का आवरण होता है—ऐसे पहले कह आए है । पूर्वोक्त कथन में यदि पूर्वाभिव्यक्त पिण्डकार्य की अथवा व्यवधानयुक्त कपाल की अविद्यमानता के लिए ही यत्न किया जायगा, तो उससे शकल और चूर्णादि कार्य भी सभव हो जायगा । (शकलचूर्णादि घट के आवरण में कार्यान्तर सभव होने पर) तब तो आवृत घट की उपलब्धि नही होती—ऐसे पुन प्रयत्नान्तर की आवश्यकता बनी ही रहेगी । अत घटादि अभिव्यक्ति के

---

१ आवरणतिरस्कृतार्थाभिव्यक्तौ च यत्नदर्शनात् । २ नियमस्य कुलालादिव्यापारस्यार्थवत्त्वात्सफलत्वादित्यर्थः । ३ मृदादौ । ४ पिण्डादि । ५ घटादीनाम् । ६ पूर्वोक्ते स्थिते सतीत्यर्थः । ७ तर्हि । ८ तदेति—पिण्डाद्यावरणविनाशदशायाम् । ९ विदल शकलम् । १० सभवेत् । ११ तेनेति—विदलचूर्णादिघटावरणकार्यान्तरसम्भवादित्यादि । १२ विदलादेरपि भङ्गे तद्व्यक्तिरिति चेन्नेत्याह पुनरिति यद्भङ्गावस्थाया विदलादे सकाशाद्यदपि तत्सजातीय विजातीय वा व्यवधानमापतेत्तस्मादावरणभङ्गे प्रयत्नश्चेत्तदा यावच्छून्य तत्सम्भवात्तद्भङ्गापेक्षायां घटाव्यक्तिरेव न स्यादिति भाव । १३ अन्वयव्यतिरेकावधारित । १४ स्वयमुपलब्धो । १५ नियमाभावमुपसहरन् । १६ अभिव्यञ्जकस्य कुलालादेर्व्यापारे । १७ घटाभिव्यक्त्यर्थं । १८ आवरणभङ्गस्त्वार्थिक इति—यत्र हि प्रकाशव्याप्त घटादिक तत्रैव तमोनिवृत्तिदर्शनात् प्रकाशस्य प्राथम्य तमोहानेस्तु पाश्चात्यमिति भाव । इदमेव भङ्ग्यन्तरेण—प्रकाशव्याप्त घटमृते तदावरकतमोनिवृत्त्यदर्शनात्तत्र प्रकाशस्य प्राथम्य तमोहानेश्च पाश्चात्य दृष्टमिति । इत्थ चात्र प्रक्रिया द्रष्टव्या—घटस्तावत्पूर्वमज्ञातो बाह्येन्द्रियद्वारा बुद्धिव्यावृत्त्या व्याप्यते, तद्व्याप्तश्चस्वगततमो ध्वस्तिविशिष्टो भवति, तत प्राकट्यभागी भवति ततश्चादानादिव्यवहार इति । १९ द्विविधत्वादावरणस्येत्यादिग्रन्थोक्तम् । २० नियमार्थवत्त्वमेव ।

तस्मात्प्रागुत्पत्तेरपि सदेव कार्यम्।

अतीतानागतप्रत्ययभेदाच्च। अतीतो घटोऽनागतो घट इत्येतयोश्च प्रत्यययोर्वर्तमानघटप्रत्ययवन्न निर्विषयत्वं युक्तम्। अनागतार्थिप्रवृत्तेश्च। न ह्यसत्यर्थितया प्रवृत्तिर्लोके दृष्टा। योगिनां चातीतानागतज्ञानस्य सत्यत्वात्। असंश्चेद्भविष्यद्घट ऐश्वरं भविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या स्यात्। न च प्रत्यक्षमुपचर्यते। घटसद्भावे ह्यनुमानमवोचाम।

---

यतो घटानुपलब्धिरतस्तदुपलब्ध्यर्थत्वेन नियतः सम्यत्नः सफलः स्यादिति फलितमाह—तस्मादिति। प्रकृतमभिव्यक्तिलिङ्गकमनुमानं निर्दोषत्वादादेयं मन्वानस्तत्फलमुपसंहरति—तस्मात्प्रागिति।

कार्यस्य सत्त्वे युक्त्यन्तरमाह—अतीतेति। विमतं सदर्थं प्रमाणं स्यात्संप्रति घटप्रत्ययवदित्यर्थः। तदेवानुमानं विशदयति—अतीत इति। अत्रैवोपपत्त्यन्तरमाह—अनागतेति। आगामिनि घटे तदर्थित्वेन लोके प्रवृत्तिर्दृष्टा न चात्यन्तासति सा युक्ता तेन तस्यासद्विलक्षणतेत्यर्थः। किं च योगिनामीशस्य चातीतादिविषयं प्रत्यक्षज्ञानमिष्टं तच्च विद्यमानोपलम्भनमतो घटस्य सदा सत्त्वमित्याह—योगिना चेति। ईश्वरसमुच्चयार्थश्चकारः। भविष्यद्ग्रहणमतीतोपलक्षणार्थम्। ऐश्वरं यौगिकं चेति द्रष्टव्यम्। प्रसङ्गस्येष्टत्वमाशङ्क्याऽऽह—न चेति। अधिकबलं हि बाधकं न चानतिशयादैशाद्विज्ञानादधिकबलं ज्ञानं दृष्टमतो बाधकाभावान्न तन्मिथ्येत्यर्थः। तस्य सत्यत्वेऽपि पूर्वोत्तरकालयोरसद्घटविषयत्वं किं न स्यादित्याशङ्क्याऽऽह—घटेति। पूर्वोत्तरकालयोरिति शेषः।

---

इच्छुक का (अन्वयव्यतिरेक रूप) नियत कारक व्यापार ही सफल होता है। इसलिए उत्पत्ति से पूर्व भी कार्य विद्यमान ही है।

कार्य की विद्यमानता मे भूत-भविष्यत् प्रतीतियो का भेद भी हेतु है। भूत घट और भावी घट, इन प्रतीतियो का भी घट प्रतीति की तरह निर्विषय होना उचित नही है, क्योकि भावी घट के चाहने वाले की प्रवृत्ति देखी जाती है। अत्यन्त अविद्यमान पदार्थ की इच्छा से ससार मे किसी की प्रवृत्ति नही देखी जाती। इसके अलावा योगियो का भी भूत और भावी ज्ञान तो सदर्थविषयक ही हुआ करता है। (विपक्षबाधक तर्क कहते है—) यदि आगामी घट असत् माना जायगा, तो आगामी घटविषयक ईश्वर का प्रत्यक्ष ज्ञान भी अप्रामाणिक होगा। (ईश्वरसम्बन्धी, यौगिक और) प्रत्यक्ष ज्ञान कभी बाधित नही होता। घट की सत्ता मे पूर्वोक्त युक्तियाँ और अनुमान कह चुके है।

---

१ सत्यत्वादिति—सदर्थविषयत्वादित्यर्थः। २ विपक्षबाधकतर्कमाह—असंश्चेदित्यादिना। ३ मिथ्येति—अप्रमाणमित्यर्थः। ४ "प्रत्यक्षं नापि चेशस्य केनचित्प्रतिहन्यते। अपविद्धातिशीत्येव तज्ज्ञानं केन हन्यते।" इति वार्तिकमप्यत्रानुसन्धेयम्। अपविद्धातिशीति निरतिशयमित्यर्थः। प्रत्यक्षम् ऐशं यौगिकं च ज्ञानम्। ५ उपचर्यते बाध्यते केनचिन्नेत्यर्थः। ६ हिना पूर्वोक्तयुक्त्यन्तराणि सूचयति। ७ प्रदर्शितेतिशेषः। ८ नियत—अन्वयव्यतिरेकावधारित। ९ अतीतभविष्यद्घटज्ञानम्। १० सद्घटालम्बनम्। ११ घटज्ञानत्वात्। १२ वर्तमानघटज्ञानवत्। १३ कार्यसत्त्व एव। १४ आगामिनि प्रवृत्तिदर्शनेन अत्यन्तासति प्रवृत्त्ययुक्तत्वेन चेत्यर्थः। १५ घटोत्पत्तितद्ध्वंसापेक्षया पूर्वोत्तरकालयोरित्यर्थः।

विप्रतिषेधाच्च । यदि घटो भविष्यतीति कुलालादिषु व्याप्रियमाणेषु घटार्थं प्रमाणेन निश्चितम् । येन च कालेन घटस्य संबन्धो भविष्यतीत्युच्यते तस्मिन्नेव काले घटोऽसन्निति विप्रतिषिद्धमभिधीयते । भविष्यन्घटोऽसन्निति न भविष्यतीत्यर्थः । अयं घटो न वर्तत इति यद्वत् ।

अथ प्रागुत्पत्तेर्घटोऽसन्नित्युच्यते घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापार-

घटस्य प्रागसत्त्वाभावे हेत्वन्तरमाह—विप्रतिषेधादिति । स हि कारकव्यापारदशायामसन्निति कोऽर्थः किं तस्य भविष्यत्त्वादि तदा नास्ति किं वाऽर्थक्रियासामर्थ्यमाद्ये व्याहतिं साधयति—यदीति । घटार्थं कुलालादिषु व्याप्रियमाणेषु सत्सु घटो भविष्यतीति प्रमाणेन निश्चितं चेत्कथं तद्विरुद्धं प्रागसत्त्वमुच्यते । कारकव्यापारावच्छिन्नेन हि कालेन घटस्य भविष्यत्त्वेनातीतत्वेन वा भविष्यत्यभूदिति वा सम्बन्धो विवक्ष्यते । तथाच तस्मिन्नेव काले घटस्य तथाविधसत्त्वनिषेधे व्याहतिरतिव्यक्तेत्यर्थः । तामेवाभिनयति—भविष्यन्निति । यो हि कारकव्यापारदशायां भविष्यत्त्वादिरूपेणास्ति स तदा नास्तीत्युक्ते तस्य तस्यामवस्थायां तेनाऽऽकारेणासत्त्वमर्थो भवति । तथाच घटो यदा येनाऽऽकारेणास्ति स तदा तेनाऽऽकारेण नास्तीति व्याहतिरित्यर्थः ।

द्वितीयमुत्थापयति—अथेति । प्रागुत्पत्तेर्घटार्थं कुलालादिषु प्रवृत्तेषु सोऽसन्नित्यसच्छब्दार्थं

तथा भूत और भावी घट, निषेध होने पर विरोध भी आता है । यदि घट के लिए प्रवृत्त कुम्हार आदि को, प्रमाण के द्वारा घट की भविष्यत्व रूप सत्ता का निश्चय हो गया है, कि 'घट होगा' तो जिस वर्तमान काल से घट का सम्बन्ध होगा—ऐसा कहा जाता है, उसी समय में 'घट नहीं है'. ऐसा विरुद्ध कथन होता है । "आगामी घट असत् है" इसका अर्थ है, कि घट उत्पन्न नहीं होगा । जैसे यह कहा जाय, कि यह घट नहीं है ।

और यदि ऐसा कहो, कि उत्पत्ति से पूर्व घट असत् है तो कुम्हार आदि के घट के लिए प्रवृत्त होने पर जिस प्रकार वहाँ व्यापार विशिष्टत्व रूप से कुम्हारादि विद्यमान हैं, उस प्रकार घट

१ अतीतानागतघटनिषेधे विप्रतिषेधः प्रसज्ज्येतेत्यर्थः । विप्रतिषेधो विरोधः व्याहतिरिति यावत् । २ भविष्यतीति—प्रमाणेनेत्यन्वयः । प्रमाणेन प्रमाणवाक्येनेत्यर्थः । ३ घटार्थं कुलालादिषु व्याप्रियमाणेषु सत्सु घटो भविष्यतीति प्रमाणवाक्येन घटस्य सत्त्वं निश्चितं यदि तर्हि कथं येन च कालेन वर्तमानरूपेण सह भविष्यतीति वाक्येन घटस्य सम्बन्धोऽभिधीयते तस्मिन्नेव काले घटोऽसन्निति घटस्यासत्त्वमिति विरुद्धमुच्यत इति साध्याहारं योजनीयेयं पङ्क्तिः । ४ घटस्य भविष्यत्त्वरूपं सत्त्वमिति शेषः । ५ कालेन वर्तमानेन । ६ इति वाक्येनेत्यर्थः । ७ व्याहतिरिति शेषः । ८ असच्छब्दार्थमाह नेति । ९ घटोत्पत्तेः प्राक् । १० तस्य अतीतानागतघटस्य । ११ भविष्यत्त्वादीति भविष्यत्त्वादिरूपं सत्त्वमित्यर्थः । १२ वर्तमानकाले । १३ विरोधमुपपादयति । १४ निश्चितं भविष्यत्त्वादिरूपं सत्त्वम् । १५ तद्विरुद्धम् निरस्तसत्त्वविरुद्धम् । १६ व्याहत्यन्तरमाह कारकेति । १७ कालेनेति सम्बन्धो विवक्ष्यत इत्यन्वयः । १८ तेन रूपेण च वाक्येनेत्यत्राह—भविष्यत्त्वेनातीतत्वेन वेति तेन तेन रूपेणेत्यर्थः । १९ भविष्यत्यभूदितीति- तेन तेन वाक्येनेत्यर्थः । २० तथाचेति—उक्तविधया सम्बन्धस्य विवक्षितत्वे चेत्यर्थः । २१ तथाविधेति—भविष्यत्त्वादिरूपेत्यर्थः ।

रूपेण वर्तमानास्तावत्कुलालादयस्तथा घटो न वर्तत इत्यसच्छब्दस्यार्थस्तेन न विरुध्यते। कस्मात्। स्वेन हि भविष्यद्रूपेण घटो वर्तते। न हि पिण्डस्य वर्तमानता कपालस्य वा घटस्य भवति। न च तयोर्भविष्यत्ता घटस्य। तस्मात्कुलालादिव्यापारवर्तमानतायां प्रागुत्पत्तेर्घटोऽसन्निति न विरुध्यते। यदि घटस्य यत्स्वं भविष्यत्ता कार्यरूपं तत्प्रतिषिध्येत। तत्प्रतिषेधे विरोधः स्यात्। न तु तद्भवान्प्रतिषेधति। न च सर्वेषां क्रियावतामेकैव वर्तमानता भविष्यत्त्वं वा।

अपि च चतुर्विधानामभावानां घटस्येतरेतराभावो घटादन्यो दृष्टो यथा घटाभावः

स्वयमेव विवेचयति—तत्रेत्यादिना। तत्र सिद्धान्ती ब्रूते—न विरुध्यत इति। कथं पुनः सत्कार्यवादिनस्तदसत्त्वमविरुद्धमित्याह—कस्मादिति। प्रागुत्पत्तेस्तुच्छव्यावृत्तिरूपं सत्त्वं घटस्य सिषाधयिषितं तच्चेद्भवानपि तस्य सदातनमर्थक्रियासामर्थ्यं निषेधन्ननुमन्यते नाऽऽवयोर्विप्रतिपत्तिरित्यभिप्रेत्याऽऽह—स्वेन हीति। ननु त्वन्मते सर्वस्य मृन्मात्रत्वाविशेषात्पिण्डादेर्वर्तमानता घटस्य स्यात्तस्य चातीतता भविष्यत्ता च पिण्डकपालयोः स्यादिति साङ्कर्यमाशङ्क्याऽऽह—न हीति। व्यवहारदशायां यथाप्रतिभासमनिर्वाच्यसंस्थानभेदाश्रयणादित्यर्थः। प्रागवस्थायां घटस्यार्थक्रियासामर्थ्यलक्षणसत्त्वनिषेधे विरोधाभावमुपपादितमुपसंहरति—तस्मादिति। उक्तमेव व्यतिरेकद्वारा विवृणोति—यदीत्यादिना। यदा कारकाणि व्याप्रियन्ते तदा घटोऽसन्निति तस्य भविष्यत्त्वादिरूपं तत्काले निषिध्यते चेदुक्तविधया व्याघातः स्यात्। न च तस्य तस्मिन्काले भविष्यत्त्वादिरूपं सत्त्वं निषिध्यते। अर्थक्रियासामर्थ्यस्यैव निषेधात्तत्र विरोधावकाशोऽस्तीत्यर्थः। न हि पिण्डस्येत्यादिना साङ्कर्यसमाधिरुक्तस्तमिदानीं सर्वतन्त्रसिद्धान्ततया स्फुटयति—न चेति। भविष्यत्त्वमतीतत्वं चेति शेषः।

कार्यस्य प्रागुत्पत्तेर्नाशाच्चोर्ध्वमसत्त्वाभावे हेत्वन्तरमाह—अपि चेति। तदेवानुमानतया

नहीं है—यह असत् शब्द का अर्थ करने पर (अर्थ क्रिया सामर्थ्य रूप सत्त्व निषेध से तुच्छ व्यावृत्ति रूप सत्त्व का) विरोध नहीं होता। ऐसा क्यों कहते हो? क्योंकि अपने भावी रूप से घट तो विद्यमान ही है। पिण्ड और कपाल की विद्यमानता हो, तो घट की विद्यमानता नहीं हो सकती, घट की भविष्यत्ता हो, तो पिण्ड और कपाल की नहीं हो सकती। इसलिए (निर्व्यापार घट की विद्यमानता संभव होने से) कुम्हार आदि के व्यापार की विद्यमानता में "उत्पत्ति से पूर्व घट असत है" ऐसा कहने में कोई विरोध नहीं आता। यदि घट का, जो भविष्यत् कार्यात्मक रूप स्वरूप है, उसका प्रतिषेध किया जाय, तो उसके प्रतिषेध करने पर विरोध होगा। आप तो उसका निषेध करते नहीं हैं। सभी क्रियावान कारकों की एक ही वर्तमानता या भविष्यत्ता होती हो—ऐसा कहना भी ठीक नहीं।

इसके अतिरिक्त चार प्रकार के अभावों में, घट का अन्योन्याभाव, घट से अन्य वस्तु में भी

१ व्यापारविशिष्टस्वरूपेणेत्यर्थः। २ अर्थक्रियासामर्थ्यरूपसत्त्वनिषेधेन तुच्छव्यावृत्तिरूपसत्त्वं न विरुध्यत इत्यर्थः। ३ घटस्य स्वीयभविष्यच्च रूपेण वर्तमानत्वादित्यर्थः। ४ निर्व्यापारघटस्य सत्त्वसंभवात्। ५ स्वीयम्। ६ भविष्यत् कार्यात्मक रूपमित्यर्थः। ७ कारकाणाम्। ८ पूर्वपक्षीत्यर्थः। ९ पूर्वपक्षिणैवमभिहिते। १० कार्यासत्त्वम्। ११ पृच्छति। १२ प्रतीत्यनुरोधादित्यर्थः। १३ सस्थानमवयवसम्बन्धः। १४ विरोधाभावम्। १५ भावेनेत्यर्थः। १६ तेन-उक्तनिषेधेन, विरोधः—तुच्छव्यावृत्तिरूपसत्त्वस्य विरोधो नेत्यर्थः।

पटादिरेव न घटस्वरूपमेव । न च घटाभावः सन्पटोऽभावात्मकः किं तर्हि भावरूप एव । एवं घटस्य प्रागप्रध्वंसात्यन्ताभावानामपि घटादन्यत्वं स्यात् । घटेन व्यपदिश्यमानत्वाद्घटस्येतरेतराभाववत् । तथैव भावात्मकताऽभावानाम् । एवं च सति घटस्य प्रागभाव इति । न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति ।

स्पष्टयितुं दृष्टान्तं साधयति—चतुर्विधानामिति । षष्ठी निर्धारणे । घटान्योन्याभावस्य घटादन्यत्वे तत्राप्यन्योन्याभावान्तराङ्गीकारादनवस्थेत्याशङ्क्याऽऽह—दृष्ट इति । न यौक्तिकमन्यत्वं किंतु घटो न भवति पट इति प्रातीतिकं तथाच घटाभावः पटादिरेवेति पटादेस्ततोऽन्यत्वाद्घटान्योन्याभावस्यापि घटादन्यत्वसिद्धिरित्यर्थः । ननु घटाभावः पटादिरित्ययुक्तं विशेषणत्वेन घटस्यापि पटादावन्तर्भावप्रसङ्गादिति चेन्मैवं दृष्टपदेन निराकृतत्वात् । घटाभावस्य पटादित्वाभावेऽपि न स्वातन्त्र्यमभावत्वविरोधात् । नापि तदन्योन्याभावः पटादेर्धर्मः संसर्गाभावान्तर्भावापातात् । न च ॥ घटस्यैव धर्मः स्वरूपं वा घटो घटो न भवतीतिप्रतीत्यभावादित्यभिप्रेत्याऽऽह—न घटस्वरूपमेवेति । यदि प्रतीतिमाश्रित्य घटान्योन्याभावः पटादिरिष्यते तदा पटादेर्भावस्याभावत्वविधा नाद्व्याघात इत्याशङ्क्याऽऽह—न चेति । स्वरूपपररूपाभ्यां सर्वं सदसदात्मकमिति हि वृद्धाः । तथा च पटादेः स्वेनाऽऽत्मना भावत्वं घटतादात्म्याभावात्मकभावत्वं चेत्यव्याहतिरित्यर्थः । सिद्धे प्रतीत्यनुसारिणि

देखा जाता है । जिस प्रकार घटाभाव पटादि ही है, घट स्वरूप नहीं है । घटाभाव होने से पटाभावस्वरूप नहीं हो जाता । तो क्या होता है ? (अभावरूप के साथ साथ) भाव रूप भी होता है । इस प्रकार प्रागभाव, प्रध्वंसाभाव और अत्यन्ताभाव भी घट से भिन्न है । घट के अन्योन्याभाव की तरह घट से इसका उपदेश किया जाता है । उसी प्रकार ('अभावा सन्त. घटाभिन्नत्वात पटवत्' अर्थात् अभाव है, घटाभिन्न होने के कारण, पट के सदृश) अभावों की भी भावरूपता है । ऐसा होने पर 'घट का प्रागभाव है' इस उक्ति से, "उत्पत्ति से पूर्व घटस्वरूप नहीं है" ऐसा सिद्ध नहीं होता ।

१ अयमेव शब्दोऽप्यर्थंक, तथा च भावरूपोऽपीत्यभावत्वमपि समुच्चितम् । २ घटप्रागभावो घटध्वंस इत्येव घटविशेषणत्वेन व्यवह्रियमाणत्वादित्यर्थः । अनुमानरचना चात्रैव प्रागभावादयो घटाद्भिद्यन्ते घटविशेषणत्वात् घटान्योन्याभाववत् । न च दृष्टान्तस्य साध्यवैकल्यम् घटान्योऽन्याभावस्य पटाद्यात्मनो घटान्यत्वाभावे घटस्य पटाद्यात्मत्वप्रसङ्गात् । न चान्योऽन्याभावस्यान्यत्वेऽनवस्थास्वरूपभेदाङ्गीकारेण परिहृतत्वादिति । ३ तथैवेत्यादिना—अभावा सन्त घटाद्भिन्नत्वात्पटवदित्यनुमानं सूचितं बोध्यम् । ४ उक्तयेत्यर्थः । ५ प्रतीतिप्रमाणकम् नहि दृष्टेऽनुपपन्नं नामेति भाव । ६ प्रातीतिकत्वे च । ७ अभावविशेषणत्वेनेत्यर्थः । ८ नहि दृष्टेऽनुपपन्नं नामेति भाव । दृष्टे-प्रत्यक्षे । ९ पटादित्वाभावेऽपीति, पटाद्यधिकरणरूपताऽनभ्युपगमेऽपीत्यर्थः । १० न स्वातन्त्र्यमिति—प्रतियोग्यनुयोगिनिरपेक्षत्वेन प्रतीतो नेत्यर्थः । सति स्वातन्त्र्येऽभावत्वमेव न स्यादभावस्य प्रतीतौ प्रतियोग्यादिनिरपेक्षत्वाभावात् स हि प्रतियोग्यादिविशिष्ट एव प्रतीयते घटाभावः पटाभाव इत्येव न स्वैरमिति । ११ संसर्गाभावस्वरूपत्वप्रसङ्गादित्यर्थः । अनुयोगिस्वरूपत्वाभावत्वमन्योऽन्याभावत्वम् अनुयोगिसदृशाभावत्व संसर्गाभावत्वमित्यभ्युपेत्येद द्रष्टव्यम् । १२ विधानादिति—अभिधानादित्यर्थः । १३ व्याघातो विरोधः । १४ स्वरूपपररूपाभ्यामिति—निरपेक्षसापेक्षरूपाभ्यामित्यर्थः । पटादिनिरपेक्षं तु रूपं घटस्य स्वीयं पटादिप्रतियोगिसापेक्षं यत्तत्तस्य परकीयं तथा च पटाद्यपेक्षया घटोऽभावरूपस्तन्निरपेक्षस्तु स भावरूपः । १५ सदसदात्मकमिति—भावाभावोभयात्मकमित्यर्थः । १६ तथा चेति—सर्वस्योभयात्मकत्वे चेत्यर्थः । १७ स्वेनात्मनेति—स्वीयनिरपेक्षरूपेणेत्यर्थः ।

'अथ घटस्य 'प्रागभाव 'इति घटस्य यत्स्वरूपं तदेवोच्येत । 'घटस्येतिव्यपदेशा-नुपपत्तिः । अथ कल्पयित्वा व्यपदिश्येत शिलापुत्रकस्य शरीरमिति यद्वत् । 'तथाऽपि घटस्य प्रागभाव 'इति कल्पितस्यैवाभावस्य घटेन' व्यपदेशो न घट"स्वरूपस्यैव ।

---

दृष्टान्ते विवक्षितमनुमानमाह—एवमिति । किं च तेषामभावानां घटाद्भिन्नत्वात्पटवदेव सत्त्व"मेष्टव्यमित्यनुमानान्तरमाह—तथेति । "अनुमानफलं कथयति—एवं "चेति । तेषां घटादन्यत्वे तस्यानाद्यनन्तत्वमद्वयत्वं सर्वात्मत्वं च प्राप्नोति । "सत्त्वे च "तेषामभावाभावान्न भावाभावयोर्मिथः" संगतिरित्यर्थः ।

ननु प्रसिद्धोऽभावो भावपदशक्योऽपह्नोतुमिति चेत्सं तर्हि" घटस्य स्वरूपमर्थान्तरं वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अथेत्यादिना । प्रागभावादेर्घटत्वेऽपि संबन्धं कल्पयित्वा घटस्येत्युक्तिरिति "शङ्कते—अथेति । संबन्धस्य कल्पितत्वे संबन्धिनोऽप्यभावस्य तथात्वं स्यादिति दूषयति—तथाऽपीति । "यत्र संबन्धं कल्पयित्वा व्यपदेशस्तत्र" न वास्तवो भेदो यथा राहुशिरसोस्तथाऽत्रापि कल्पिते संबन्धे भेदस्य तथात्वाद्वास्तवत्वं संबन्धिनोरन्यतरस्य स्यात् । न चाभावस्तथा सापेक्षत्वात्तो घटस्तथेत्यर्थः ।

---

पक्षान्तर में "घट का प्रागभाव", ऐसा घट का जो स्वरूप है, वही यदि कहा जाय; तो ("घटस्य") घट का, ऐसा व्यवहार ही नहीं बनता। यदि "शिलापुत्रक का शरीर" ऐसी कल्पना करके कहा जाय; तो भी "घट का प्रागभाव", इस कथन से कल्पित अभाव का ही घट सम्बन्धी व्यपदेश होगा, केवल घटस्वरूप का ही नहीं होगा। और यदि घट से घट के अभाव को भिन्न माना

---

१ पक्षान्तरे । २. प्रागभाव इति अभावान्तरोपलक्षणमेतत् । ३ उक्तया । ४. घटस्येत्यादि—भेदनिमित्तसम्बन्धार्थषष्ठ्यनुपपत्तिरित्यर्थः । ५ शिलानिर्मितपुत्रप्रतिकृतेः शरीरमात्ररूपत्वेऽपि सम्बन्धमारोप्य यथा व्यपदेश इत्यर्थः ६ उक्तरीत्या व्यपदेशोपपत्तावपि । ७. अभावान्तरोपलक्षणम् । अभावस्य घटरूपत्वे च घटस्याभाव इत्यस्य घटस्य घट इत्यर्थं स्यादित्यपि बोध्यम् ८. व्यपदेशान्वयीतिः । ९. घटसम्बन्धितया । १०. केवलस्यैव घटस्य । ११. सत्त्वमेष्टव्यमिति—भावरूपताऽभ्युपगन्तव्येत्यर्थः । १२. पूर्वोक्तसत्त्वभिन्नत्वसाध्यकोभयानुमानफलमिति बोध्यम् । १३. तेषां घटान्यत्वे सत्त्वे चानुमानेन साधिते सतीत्यर्थः । १४. घटादन्यत्वेऽपि तेषां घटसम्बन्धात् कुतोऽस्योक्तरूपतेत्याशङ्क्य सत्त्वानुमानफलमाह सत्त्वे चेति । घटसम्बन्धस्तु तेषां घटप्रागभावो घटध्वंस इत्येवं घटविशेषणत्वेन प्रतीतिगोचरत्वादिति ध्येयम् । १५ तेषामित्यादि—अभावानां सत्त्वे भावरूपत्वेऽनुमानसिद्धे सति जगतीतलेऽभावानां दत्तजलाञ्जलित्वात् भावस्य घटादेरभावेन ध्वंसादिनाऽनन्तत्वादिविघातकसम्बन्धाभावात्तस्य तत्त्वं निरुपसर्गमित्यर्थः । तेषामभाव. भावादिति वान्वयः अभावत्वाभावादित्यभावप्रधानत्वात् । १६. न मिथः सङ्गतिरिति—प्रागभावस्य घटादन्यत्वेन सत्त्वेन च घटस्य प्रागभावेन सम्बन्धाभावादनादित्वम् । प्रागभावेन सम्बन्धाभावादित्यस्याभावरूपत्वेनपराभिमतप्रागभावसम्बन्धाभावादित्यर्थः एवमुत्तरत्रापि । एवं ध्वंसस्यापि तथाविधत्वेन घटस्य ध्वंसाभावेन सम्बन्धाभावादनन्तत्वम् तथात्यन्ताभावस्यापि तथात्वेन घटस्यात्यन्ताभावेन सम्बन्धाभावादनुगततयाऽधिष्ठानत्वादद्वयत्वम्, एवं भेदस्याप्युक्तरूपत्वे न घटस्यान्योन्याभावासम्बन्धितया सर्वात्मत्वं च सिद्धम् अन्योन्याभावसम्बन्धिन एवासर्वात्मकस्य वादिभिरभ्युपगमादिति भावः । १७. परोक्तमभ्युपेत्य न तर्हीत्यादि । १८ शङ्कत इति—पुरुषस्य चैतन्यमितिवद्व्यपदेशोपपत्तिं समर्थयत इत्यर्थः । १९. ययो पदार्थयोः । २०. तयोः पदार्थयोः ।

अथार्थान्तरं घटाद्घटस्याभाव इत्युक्तोत्तरमेतत्[1] । किंचान्यत्प्रागुत्पत्तेः शशविषाणवदभावभूतस्य[2] घटस्य स्वकारणसत्तासंबन्धानुपपत्तिः । द्विनिष्ठत्वात्संबन्धस्य[3] । अयुतसिद्धानामदोष इति चेत् । न । भावाभावयोरयुतसिद्धत्वानुपपत्तेः । भावभूतयोर्हि युतसिद्धताऽयुतसिद्धता वा स्यान्न तु भावाभावयोरभावयोर्वा तस्मात्सदेव कार्यं प्रागुत्पत्तेरिति सिद्धम् ।

[7]किंलक्षणेन मृत्युनाऽऽवृतमित्यत आह—अशनाययाऽशितुमिच्छाऽशनाया सैव

कल्पान्तरमनुवदति—अथेति । अनुमानफलं वदद्भिर्घटस्य कारणात्मना ध्रुवत्ववचनेन समाहितमेतदित्याह—उक्तोत्तरमिति । असत्कार्यवादे दोषान्तरमाह—किं चेति । स्वहेतुसंबन्धः सत्तासंबन्धो वा जन्मेति तार्किका । न च प्रागुत्पत्तेरसतः संबन्धस्तस्य सतोर्मुखेरित्यर्थः । युतसिद्धयो रज्जुघटयोर्मिथः संयोगे पृथक्सिद्धिरपेक्ष्यतेऽयुतसिद्धाना परस्परपरिहारेण प्रतीत्यनर्हाणां कार्यकारणादीना मिथोयोगे पृथक्सिद्ध्यभावो न दोषमावहतीति शङ्कते—अयुतेति । परिहरति—नेति । उक्तमेव स्फोरयति—भावेति । व्यवहारदृष्ट्या कार्यकारणयोः साधितां तुच्छव्यावृत्तिमुपसंहरति—तस्मादिति ।

नैवेहेत्यत्र सर्वस्य प्रागुत्पत्तेरसत्त्वशङ्का मृत्युनेत्यादिवाक्यव्याख्यानेन निरस्ता । सम्प्रति मृत्युशब्दस्यार्थान्तरे रूढत्वाच्च तेनाऽऽवरणं जगत संभवतीत्याक्षिपति—किंलक्षणेनेति । अनभिव्यक्तनामरूपमध्यक्षाद्ययोग्यमपञ्चीकृतपञ्चमहाभूतावस्थातिरिक्तं मायारूपं साभासं मृत्युरित्युच्यते । न हि सर्वं कार्यमवान्तरकारणादुत्पत्तुमर्हतीत्यभिप्रेत्याऽऽह—अत आहेति । कथं यथोक्तो मृत्युरशा-

जाय तो (अभावों की सत्ता कथन से अभावत्व का ही अभाव प्रतिपादनरूप) इसका उत्तर कह चुके हैं। इसके अतिरिक्त खरगोश के सींग के समान अभावरूप घट का अपने कारण की सत्ता से सम्बन्ध होना, उत्पत्ति से पूर्व सिद्ध नहीं होता। क्योंकि सम्बन्ध तो दो में ही हो सकता है। अयुतसिद्ध पदार्थों में

१ उक्तोत्तरमेतदिति—अत्र-"प्रागभावस्तथाध्वंस इत्याद्यावाग्युदीरिता । अभावा ब्रह्मकार्यत्वात् मद्रूपा स्युर्घटादिवत् ॥१॥ भावत्वस्याविशेषेऽपि यथा जलभुवोर्भिदा । भावाभावान्तरभेदा स्यु प्रागभावादयस्तथा ॥२॥ लोकप्रसिद्धिमुल्लङ्घ्य किं भावत्वदुराग्रहात् । कार्यं तवेति चेत्तेवा किं कार्यं वेदलङ्घने ॥३॥ अभावव्यवहारस्तु भावत्वेऽप्युपपद्यते । भावान्तरमभावो हि कयाचित्तु व्यपेक्षया ॥४॥" इति वार्तिकसारोक्ति—अत्र कयाचिद्व्यपेक्षयेति प्रतियोग्याद्यपेक्षयेत्यर्थः । २ प्रागुत्पत्तेर्हि घटस्त्वन्मते शशविषाणवदभावभूत । ३ सतोरेवायुतसिद्धत्वम । ४ सम्बन्धानादिति भाव । ५ तस्मादिति कार्यसत्त्वे साधकसत्त्वात् असत्त्वे दोषस्योक्तत्वाच्च । ६. प्रवमानन्तर्यस्योपलक्षणम् । ७ विलक्षणेनेति तत् किं स्वरूपमस्ति मृत्योर्यद् आवरण भवेदपितु नास्त्येव तादृश रूपमित्याक्षपार्थं । ८ ब्रह्मात्मनेत्यर्थ । ९ कार्यस्य स्वहेतुना मृदादिना सह स्वस्मिन्सत्तया वा [illegible] जनिरित्यर्थं । १० न च कार्यस्यात्यन्तासत्त्वाभावाच्च शशशृङ्गसाम्यम् तस्य प्रागसतोऽत्यन्तासतो विशेषासिद्धेरिति भाव । ११ युतसिद्धि ।परस्परनिरपेक्षसिद्धिकत्वम् । १२ आदिना गुणगुणिजातिव्यक्त्यवयवाद्यादिग्रह । १३ अनुपपत्तिमेव । १४ व्यावहारिकसत्त्वम् । १५ मृत्तौ घटे चेत्यर्थ । १६ मायारूपम्—मूलकारणम् । १७ साभासमिति—चिदधिष्ठानमित्यर्थ । अज्ञात ब्रह्मेति द्वयोनिष्कृष्टार्थ । १८ ननु श्रुतौ भाष्ये च सूत्रकृद्भिर्गृहीत्वेनेति प्रतीयते मृत्यो सप्तुरशनायादिमत्त्वोक्तेरतोऽत्र सूत्र मृत्युशब्दितमित्याशङ्क्याह नहीति । १९ अवान्तरकारणादिति—हिरण्यगर्भरूपादित्यर्थं । २० अर्हतीति—अतो मूलकारणमेवात्र मृत्युशब्दितमिति शेष ।

मृत्योर्लक्षणं तया लक्षितेन मृत्युनाऽशनायया । कथमशनाया मृत्युरिति । उच्यते—अशनाया हि मृत्युः । हिशब्देन प्रसिद्ध हेतुमवद्योतयति । यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति जन्तून् । तेनासावशनायया लक्ष्यते मृत्युरित्यशनाया हीत्याह। बुद्धयात्मनोऽशनाया धर्म इति स एष बुद्धयवस्थो हिरण्यगर्भो मृत्युरित्युच्यते । तेन मृत्युनेद कार्यमावृतमासीत् । यथा पिण्डावस्थया मृदा घटादय आवृताः स्युरिति तद्वत् । तन्मनोऽकुरुत । तदिति मनसो निर्देशः । स प्रकृतो मृत्युर्वक्ष्यमाणकार्यसिसृक्षया तत्कार्या-

नायया लक्ष्यते । न हि मूलकारणस्याशनायादिमत्त्वम् । अशनायापिपासे प्राणस्येति स्थितेरिति शङ्कते—कथमिति । मूलकारणस्यैव सूत्रत्व प्राप्तस्य सर्वसहर्तृत्वान्मृत्युत्वे सति वाक्यशेषोपपत्तिरिति परिहरति—उच्यत इति । प्रसिद्धमेव प्रकटयति—यो हीति । तथाऽपि प्रसिद्ध मृत्यु हित्वा कथ हिरण्यगर्भोपादानमत आह—बुद्धयात्मन इति । उक्त हेतु कृत्वा फलितमाह—इति स इति । ननु न तेन जगदाव्रियते मूलकारणेनैव तदावरणात्तत्कथ वाक्योपक्रमोपपत्तिरत आह—तेनेति । ननु हिरण्यगर्भे प्रकृते कथ नपुंसकप्रयोगस्तत्राऽऽह—तदिति मनस इति । वाक्यार्थमधुना कथयति—

कोई दोष नही आता—ऐसा कहना उचित नही । भाव और अभाव का अयुतसिद्ध होना सिद्ध नही होता । भाव पदार्थ ही युतसिद्ध अथवा अयुतसिद्ध होते है, भाव और अभाव अथवा पारस्परिक दो दो अभाव नही होते । निष्कर्ष यह है, कि उत्पत्ति से पूर्व घट कार्य, सत् ही है ।

यह किस स्वरूप वाली मृत्यु से आवृत था ? इस पर श्रुति कहती है—'अशनाया रूप से ।' अशनाया नाम क्यो पडा—खान की इच्छा का नाम अशनाया है, वही लक्षणा के द्वारा मृत्यु का बोधक है, उससे लक्षित मृत्यु से अर्थात् अशनाया से (यह आवृत था) । अशनाया मृत्यु है—ऐसे कैसे कहते हो ? इस पर बतलाते है—क्योकि अशनाया मृत्यु है । "हि" शब्द से श्रुति प्रसिद्ध हेतु को प्रकट करती है । जो भी भोजन की इच्छा करता है, वह अशनाया के अनन्तर ही जीव हत्या करता है । इस (प्रसिद्ध हेतु) से 'अशनाया" शब्द से मृत्यु लक्षित होती है, इसी से अशनाया हि" एसा श्रुति कहती है ।

अशनाया समष्टि बुद्धि तादात्म्यापन्न सूत्रात्मा का धर्म है, अत बुद्धि मे स्थित वह सूत्रात्मा हिरण्यगर्भ ही मृत्यु कहा गया है । इसलिए मृत्यु से यह सब कार्य आवृत था । जिस प्रकार पिण्डावस्था-रूप मृत्तिका से घटादि आवृत है, उसी प्रकार हिरण्यगर्भ रूप मृत्यु से जगत् व्याप्त था । (इस प्रकार कार्य की प्रागवस्था बतलाकर उसकी उत्पत्ति प्रक्रिया कहते है—) वह मन बनाया । 'तत यह शब्द

१ लक्षणम्—लक्षणया बोधकम् । २ तेनेत्यादि—तेन प्रसिद्धेन हेतुना अशनायया असौ अशनायावान् मृत्युर्लक्ष्यते इति युक्तमाह अशनाया हीति । ३ बुद्धयात्मन इति समष्टिबुद्धितादात्म्यापन्नस्य सूत्रात्मन इत्यर्थ । ४ इतीति यथोक्तसूत्रात्मनोऽशनाया धर्मवत्त्वादित्यर्थ । ५ एव कार्यस्य प्रागवस्थामभिधाय तदुत्पत्तिप्रकारमाह तन्मन इति । ६ कार्यमिति विराडादीत्यर्थ । ७ यथोक्त मूलकारणाख्य । ८ प्राणस्येति—हिरण्यगर्भस्य समष्टिप्राणात्मतया ते समवेत इति भाव । ९ स्थितेरिति—सिद्धान्तादित्यर्थ । १० सर्वसहर्तृत्वादिति अध्यात्म वागादीनामधिदैव चाग्न्यादीना सर्वेषा सवर्गविद्योक्ताना सहर्तृत्वादित्यर्थ । ११ वाक्यशेष—अशनायया इति । १२ तथापीति—एव हिरण्यगर्भस्य मृत्युत्वे सत्यपीत्यर्थ । १३ वाक्योपक्रमे मृत्युनैवेदमावृतमासीदित्युपक्रमवाक्यत्यर्थ ।

लोचनक्षमं मन:शब्दवाच्यं संकल्पादिलक्षणमन्त:करणमकुरुत कृतवान् । केनाभिप्रायेण मनोऽकरोदिति । उच्यते—आत्मन्व्यात्मवान्स्यां भवेयम् । अहमनेनाऽऽत्मना मनसा मनस्वी स्यामित्यभि¹प्रायः ।

²स प्रजापतिरभिव्यक्तेन मनसा समनस्कः सन्नर्चन्नर्चयन्पूजयन्ना³त्मानमेव कृतार्थोऽस्मीत्यचर⁴च्चरणमकरोत् । तस्य प्रजापतेरर्चतः पूजयत आपो ⁵रसात्मका पूजाङ्गभूता अजायन्तोत्पन्ना: । अत्राऽऽकाशप्रभृतीनां त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्यं श्रुत्यन्तर⁶सामर्थ्याद्विकल्पासंभवाच्च सृष्टिक्रमस्य । अर्चते पूजा कुर्वते वै मे मह्यं कमुदकमभूदि-

स प्रकृत इति । भूतसृष्ट्यतिरेकेण भौतिकस्य मनस सृष्टिरयुक्तेति मत्वा पृच्छति—केनेति । अपञ्चीकृतानां भूतानां हिरण्यगर्भदेहभूतानां प्रागेव सत्त्वात्मकत्वात्तेभ्यो मनोव्यक्तिरविरुद्धेति मन्वानो ब्रूते—उच्यत इति । स्वात्मवत्त्वस्य स्वाभाविकत्वान्न तदाशंसनीयमित्याशङ्क्य वाक्यार्थमाह—अहमिति ।

मनसो व्यक्तस्योपयोगमाह—स प्रजापतिरिति । ननु तैत्तिरीयकाणामाकाशादिसृष्टिरुच्यते तत्कथमिहापामादौ सृष्टिवचनं तत्राऽऽह—अत्रेति । सप्तम्या हिरण्यगर्भकर्तृकसर्गोक्ति । त्रयाणां पञ्चीकृतानामिति यावत् । नन्वाकाशाद्या तैत्तिरीये सृष्टिरिह स्वबाद्येत्युदितानुदितहोमवद्विकल्पो भविष्यति नेत्याह—विकल्पेति । पुरुषतन्त्रस्वात्क्रियाया युक्तो विकल्प सिद्धेऽर्थे तु पुरुषानधीने नासौ संभवत्यत 'सृष्टिर्विवक्षिता चेदाकाशाद्यैव सा युक्ता 'विद्याप्रधानत्वात्तु नाऽऽदर "सृष्टाविति भाव । अपामादौ सृष्टिवचनमनुपयुक्त स्रष्टुस्ताभिरेव पूजा सिध्यतीत्याशङ्क्या"ऽऽश्वमेधिकाग्नेरर्कनामसिद्धयर्थं

मन का निर्देश करता है । इस प्रकृत मृत्यु ने आगे कहे जाने वाले विराडादि कार्य की सृष्टि करने की इच्छा से उस कार्य की आलोचना मे समर्थ मनशब्दवाची सकल्पादि लक्षणो वाला अन्त करण बनाया । मन किसलिये बनाया ? इस पर कहते है—मैं आत्मन्वी या आत्मवान् होऊं । अर्थात् मैं इस आत्मा से यानी मन से मनस्वी होऊं, इसलिए मन बनाया—यह अभिप्राय है ।

उस प्रजापति ने अभिव्यक्त हुए मन से मनोयुक्त होकर अर्चन अर्थात् पूजा करते हुए अपने प्रति ही "मैं कृतार्थ हू इस प्रकार आचरण किया । उस प्रजापति की अर्चा अर्थात् पूजा करते हुए पूजा के अङ्गभूत द्रवात्मक जल उत्पन्न हुए । यहां (जल की उत्पत्ति) आकाशादि तीन महाभूतो की उत्पत्ति के पश्चात् हुई, ऐसा कहना चाहिए था क्योंकि दूसरी श्रुतियो मे अन्यथा प्रसिद्ध होता है एव सृष्टि का विकल्प करना भी सभव नही है । मृत्यु ने ऐसा माना था—'अर्चन यानी पूजा करते हुए

१ इत्यभिप्रायेण त मनोऽकुरुतेत्यर्थ । २ अभिप्रायवतोऽपि नाशक्तस्य स्रष्टृतेत्याशङ्क्य मोऽर्चन्नित्यस्यार्थमाह—स प्रजापतिरिति । ३ अत्र सूत्रात्मन सृष्टिविषये शक्तोऽस्मीति स्वसामर्थ्यालोचनमेवाचर्नमित्याह—आत्मानमेवेति । ४ चरणमकरोदिति—इत्याकारक सृष्टौ स्वसामर्थ्यालोचनाभिधमाचरणमकरोदित्यर्थ । ५ रसात्मिका द्रवात्मिका इत्यर्थ । ६ सामर्थ्यादिति—अन्यथानुपपत्तेरित्यर्थ । ७ इह वाजसनेयके । ८ अत इति—सिद्धस्य सृष्टिक्रमस्य पुरुषातन्त्रत्वादित्यर्थ । ९ समनन्तर विराज सर्गस्य निर्देक्ष्यमाणत्वात् सृष्टेर्विवक्षितत्वमुपेत्य अपा ग्रहणमुपलक्षणमित्युक्तम् । सम्प्रति सैवाविवक्षिता विद्यानिष्ठत्वादुपनिषदामित्याह—विद्याप्रधानत्वादिति । १० सृष्टाविति—तथा च प्रतिवेदान्त सृष्टिर्नानाविधेक्ष्यते, इति श्रुतिवचनमत्रानुसन्धेयम् । ११ आश्वमेधिकेति—अश्वमेधाङ्गभूतत्यर्थ ।

**आपो वा अर्कस्तद्यदपा शर आसीत्तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्ततताग्निः ॥२॥**

जल ही अर्क है, (क्योकि अर्क नामक अग्नि का वह हेतु है) उन जलो का जो (घृतपिण्ड के समान) स्थूलभाग था, वह एकत्रित हो गया और वही पृथिवी हो गया, अर्थात् जल से ब्रह्माण्ड निष्पन्न हुआ। उसके उत्पन्न होने पर वह प्रजापति रूप मृत्यु थक गया, उस थके हुए प्रजापति के शरीर से उसका सारभूत तेजोरस अग्नि निकल आया ॥२॥

---

येवममन्यत यस्मान्मृत्युस्तदेव[1] हेतोरर्कस्या[2]ग्नेरश्वमेधक्रतूपयोगिकस्यार्कत्व[3]मर्कत्वे हेतुरित्यर्थः। अग्नेरर्कनामनिर्वचनमेतत् । अर्चनात्सु[4]खहेतुपूजाकरणादप्संबन्धाच्चाग्नेरेतद्गौणं नामार्क इति। य एवं यथोक्त[5]कमस्यार्कत्वं वेद [6]जानाति । कमुदकं वा नामसामान्यात् । [7]ह वा इत्यवधारणार्थो भवत्येवेति । अस्मा एवंविद[8] एवंविदर्थं भवति ॥१॥

[9]आपो वा अर्कः। कः पुनरसावर्क इति। उच्यते—आपो वै या अर्चनाङ्गभूतास्ता

---

तदुपयोगमुपन्यस्यति—अर्चत इति। कोऽसौ हेतुरित्यपेक्षायामर्चतिपदावयवस्या[10]कशब्देन संगतिरिति मन्वानः सन्नाह—अर्कत्वमिति। एवं मृत्योरर्कत्वेऽपि कथमग्नेरर्कत्वमित्याशङ्क्य मृत्युसंबन्धादित्याह—अग्नेरिति। किमर्थमग्नेरर्कनामनिर्वचनमित्याशङ्क्यापूर्वसंज्ञा[11]योगस्य फलान्तराभावादुपासनार्थमित्याह—अग्नेरिति । निर्वचनमेव स्फोरयति—अर्चनादिति। फलवत्वाच्च यथोक्तनामवतोऽग्नेरुपास्तिरत्र विवक्षितेत्याह—य एवमिति ॥१॥

अपामर्कत्वश्र[12]वणाद्याग्नेरर्कत्वमिति शङ्कते—क पुनरिति। प्रकरण[13]माश्रित्य तासामर्कत्वमो-

---

मेरे लिए क अर्थात् जल हुआ है—इस हेतु से अर्क अर्थात् अश्वमेध याग मे उपयोगी विराट् अग्नि का अर्कत्व है अर्थात् यही उसके अर्कत्व मे हेतु है।' यह अग्नि के अर्क नाम का निर्वचन है । अर्चन से अर्थात् सुख की मूलभूता पूजा करने से तथा जल का सम्बन्ध होने से अग्नि का यह अर्क नाम गौण है। जो इस प्रकार उपर्युक्त अर्क के अर्कत्व की उपासना करता है उसे "क" उदक अथवा सुख होता है। "क" यह जल और सुख का समानार्थक है। 'ह' 'वा' यह अवधारणार्थक अव्यय हैं अर्थात् निश्चय ही उसके लिए जल या सुख होता है। उसे "एव विद" यानी इस प्रकार जानने वाले (अर्कत्वगुण विशिष्ट रूप से उपासना करने वाले) के लिए (जल या सुख) होता है ॥१॥

---

१ तदेवेति—तस्मादेव यथोक्तमननादेवेत्यर्थ । २ अग्नेरिति—वक्ष्यमाणविराड्रूपस्याग्नेरित्यर्थ । ३ अर्चनात् सुखहेतवम्भ सम्बन्धाच्चार्कनामा प्रजापतिरित्यर्थ । ४ सुखहेतुपूजाकरणादिति—अर्चनादित्यस्य विवरणमिदम् तथा चार्चनान्मृत्योरर्कत्व अब्धारकतरसम्ब धतस्त्वग्नेस्तद्गौणमिति बोध्यम्। ५ बृ० १।२।१ । ६. उपास्ते । ७ सुखम् । ८ एवविद इति-अर्कत्वगुणविशिष्टत्वेनोपासितुरित्यर्थ । ९. अथाद्भ्य. सकाशात्पृथ्वीद्वाराऽग्न्युत्पत्तिमाह-आपो वेति । १० अर्चतिपदावयवस्य अरित्यस्य अर्कशब्देन सङ्गति सम्बन्ध घटयतयत्यर्थ । ११ सम्बन्धस्य । १२ आपो वार्क इति प्रकृतश्रुतो श्रवणादित्यर्थ । १३ अग्नेरेवाभिप्रकरणे प्राधान्यादिति भाव । तथा चाभेर्मुख्य तद्धेतुत्वात्त्वपा गौणमर्कत्वम्।

एवार्कोऽग्नेरर्कस्य हेतुत्वात् । अप्सु 'ह्यग्निः प्रतिष्ठित इति । न पुनः साक्षादेवार्कस्ताः । तासामप्रकरणात् । अग्नेश्च' प्रकरणम् । वक्ष्यति 'सायमग्निरर्क इति,। तत्तत्र यदपां शर इव शरो' दध्न इव 'मण्डभूतमासीत्तत्समहन्यत 'संघातमापद्यत तेजसा बाह्यान्तःपच्यमानं लिङ्गव्यत्ययेन वा योऽपां शरः स समहन्यतेति सा पृथिव्यभवत्स संघातो येयं' पृथिवी साऽभवत् । ताभ्योऽद्भ्योऽण्ड'मभिनिर्वृत्तमित्यर्थः । तस्यां पृथिव्यामुत्पादितायां मृत्युः प्रजापतिरश्राम्यच्छ्रमयुक्तो बभूव सर्वो हि लोकः' कार्यं कृत्वा श्राम्यति । प्रजापतेश्च

पचारिकमित्युत्तरमाह—उच्यत इति । 'तास्वन्तर्हिरण्मयमण्ड समभूवेति श्रुतिमनुसरन्नुपचारे हेत्वन्तरमाह—अप्सु चेति" । मुख्यमर्कत्वमपां वारयति—न पुनरिति । ननु 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याना समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इतिन्यायात्प्रकरणादापो वा अर्क इति वाक्य बलवदित्याशङ्क्य वाक्यसहकृत प्रकरणमेव केवलवाक्याद्बलवदित्याशयवानाह— वक्ष्यति चेति । भूतान्तरसहितास्वप्सु कारणभूतासु पृथिवीद्वारा पार्थिवोऽग्निः प्रतिष्ठित इत्युक्तमिदानी पृथिवीरूपं ताभ्यो दर्शयति—तदित्यादिना । अप्सु भूतान्तरसहितासूत्पन्नासु सतिष्विति समभ्यर्थ । शर इव शर इत्युक्तमेव व्याचष्टे—दध्न इवेति । संघाते सहकारिकारणमाह—तेजसेति । यत्तदिति पदे नपुंसकत्वेन श्रुते कथ तयो शरशब्देन कारणस्योच्छूनत्ववाचिना पुंल्लिङ्गेनान्वयस्तत्राऽऽह—लिङ्गव्यत्ययेनेति । उक्तानुपपत्तिद्योतनार्थो वाशब्द । व्यत्ययेनान्वयमेवाभिनयति—योऽपामिति । वाक्यतात्पर्यमाह—ताभ्य इति । स्थूलप्रपञ्चात्मकविराज सूक्ष्मप्रपञ्चात्मकसूत्रादुत्पत्ति वक्तुं "प्रातनिकामाह—तस्यामिति । उक्तेऽर्थे लोकप्रसिद्धि-

(जल और पृथ्वी से अग्नि की उत्पत्ति होने कारण) जल ही अर्क है । वह अर्क क्या है ? इस पर कहते है—अग्नि मे अर्क के हेतु होने से, पूजा का अङ्गभूत जल ही अर्क है । विराड् जल मे अग्नि प्रतिष्ठित है । किन्तु उसका प्रकरण नही होने से, वह साक्षात् अर्क नही है । अग्नि के प्राकरणिकत्व होने से "पार्थिव अग्नि ही अर्क है ' ऐसा आगे बतलायेंगे । वह उस जल का फेनरूपसारभूत के समान शर अर्थात् दही के सारभूत (घृतपिण्ड) के समान स्थूल भाग था, वह इकट्ठा हो गया । बाहर और भीतर के तेज से परिपक्व होकर कठिन हो गया । अथवा ("योऽपां शर ") जो जल का शर है, इसमे लिङ्गव्यत्यय से, जो जल का स्थूल भाग था, वह एकत्रित हो गया ऐसा अर्थ होता है । वह पृथिवी हो गयी, संघात रूप प्रत्यक्षगोचर पृथिवी हो गयी । उस जल से विराड् शरीर उत्पन्न हुआ । उस पृथिवी के उत्पन्न होने पर वह मृत्यु रूप प्रजापति "अश्राम्यत" अर्थात् श्रमयुक्त हो गया । सभी लोग कार्य करके थक जाते हैं । प्रजापति का यह महान् कार्य है जो उसने पृथिवी की सृष्टि की ।

१ अग्निरिति—पार्थिवो विराड्रूपोऽग्निरित्यर्थ स च पृथिवीद्वाराप्सु प्रतिष्ठित इत्यय टीकोक्तश्रुतेरेवार्थत सङ्ग्रह इति बोध्यम् । २ अग्नेश्चेति—अग्नेश्च प्राकरणिकत्वादित्यर्थं । ३ बृ०उ० १ २ ७ । ४ शर—सार उच्छूनेति यावत् । ५ मण्डभूतमिति—फेनरूपम्—सारभूतमिति यावत् । ६ संघातमापद्यतेति—कठिनमभूदित्यर्थ । ७ येयम्—प्रत्यक्षगोचरा । ८ अण्डमभिनिर्वृत्तमिति—विराट् शरीरमभिनिष्पन्नमित्यर्थ । नानारस सूत्रात्मा स्वस्य स्थूलदेहमुत्करोत्या सृष्टवानिति रहस्यम् यत स एव स्थूलाभिमानी विराड्व्यपदेशी, नानारस—अनेकरूप । ९ तास्वन्तरित्यादि तासु भूतान्तरसहितासु कारणभूतास्वप्सु अन्तर्हिरण्मय ज्योतिर्मयम् अण्ड विराट् शरीरम् अन्याख्य समभूवेत्यर्थ । १० तथा चार्काग्न्याश्रयत्वादपामर्कत्वमिति भाव । ११ विराट्—शरीरम् । १२ भूमिकायाम् ।

**स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं, वायुं तृतीयँ स एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेमौ । अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च**

उस प्रजापति ने अपने को तीन प्रकार से विभक्त किया, उसने (अग्नि और वायु की अपेक्षा) आदित्य को तीन सख्याओं का पूरक बनाया। ऐसे ही वायु को तीसरा बनाया (और अग्नि को भी तीसरा बनाया) इस प्रकार यह प्राण (अग्नि वायु और आदित्य इन) तीन भागों में विभक्त हो गया। उसकी पूर्वदिशा शिर है तथा ईशान्य और आग्नेयी विदिशाएँ भुजाएँ है। वैसे ही पश्चिमदिशा इसकी पुच्छ है और वायव्य तथा नैर्ऋत्य विदिशाएँ जघाएँ है। दक्षिण और उत्तर दिशाएँ उसके पार्श्व भाग है,

---

तन्महत्कार्यं यत्पृथिवीसर्गः किं तस्य श्रान्तस्येत्युच्यते—तस्य श्रान्तस्य[1] तप्तस्य खिन्नस्य तेजोरसस्तेज एव रसस्तेजोरसो रसः सारो निरवर्तत प्रजापतिशरीरान्निष्क्रान्त इत्यर्थः । कोऽसौ निष्क्रान्तोऽग्निः सोऽण्डस्यान्तर्विराट्[2]प्रजापतिः प्रथमजः कार्यकरणसंघातवाञ्जातः । "स वै शरीरी प्रथमः" इति स्मरणात् ॥२॥

स च जातः प्रजापतिस्त्रेधा त्रिप्रकारमात्मानं स्वयमेव कार्यकरणसंघातं व्यकुरुत व्यभजदित्येतत् । कथं त्रेधेत्याह—आदित्यं तृतीयमग्निवाय्वपेक्षया त्रयाणां पूरणम-

---

मनुकूनयति—सर्वो हीति । इदानीं विराडुत्पत्तिमुपदिशति—किं तस्येत्यादिना । अग्निशब्दार्थं स्फुटयति —सोऽण्डस्येति । तस्य प्रथमशरीरित्वे मानमाह—स वा इति ॥२॥

विराजो ध्यानार्थमवच्छेदभेदमाह—स चेति । कोऽस्य त्रेधाभावस्य कर्तेति वीक्षायामाह—स्वयमेवेति । कथमेकस्य त्रिधात्वमन्यया वा कथमेकत्वमित्याह—कथमिति । मूढो यदक्षरा द्यनेकरूपत्व-

---

थकने पर प्रजापति को क्या हुआ ? इस पर कहते हैं—। श्रान्त होने के कारण 'तप्तस्य' अर्थात् खिन्न हुए प्रजापति का 'तेजोरस' यानी तेज ही जो रस है वह तेजोरस, रस सार का भी नाम है, वह सार 'निरवर्तत' अर्थात् प्रजापति के शरीर से बाहर निकल गया। बाहर क्या निकल गया? अग्नि बाहर निकला। वह जो इस अण्डे के भीतर 'प्रथमज' यानी सबसे पहले उत्पन्न कार्यकरणसघाताभिमानी विराड्शब्दित अण्डाभिमानी आत्मा प्रजापति (चतुर्मुख ब्रह्मा नाम वाला) उत्पन्न हुआ। "वही विराड्भावापन्न शरीरी प्रथम हुआ" ऐसा स्मृति भी कहती है।

---

१. श्रान्तस्येति - हेतुगर्भमिदं विशेषणम् श्रान्तत्वात्तप्तस्येत्यर्थं । २ विराडित्यादि - विराट्छब्दिताण्डाभिमान्यात्मेत्यर्थं स च प्रजापतिप्रथमजचतुर्मुखब्रह्मेत्येवमादिनामक इत्यर्थं । ३ सङ्घातवानिति - सङ्घाताभिमानीत्यर्थं । ४ स वा इत्यादि स्मृते स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्त्ततेति ॥ शेषचरणानि अत्र तच्छब्दत्रयेण सूत्रात्मा परामृश्यते - स एव विराड्भावापन्न शरीरीत्युच्यते भूतानाम् - व्यष्टिकार्याणाम् अग्रे - व्यष्टिसृष्टे । ५ प्रजापति - विराड्रूपेणोत्पन्नो हिरण्यगर्भः । ६ स्वयमेव - हिरण्यगर्भ एवेत्यर्थ. । ७ विराड्देहाभिमान्युत्पत्तिमित्यर्थं । ८ अवच्छेदभेदम् उपाधिविशेषम् यत्रासावुपास्यस्तम् । ९. अन्यथेति-त्रिविधत्वाभ्युपगम इत्यथ ।

पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्वचैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥३॥

द्युलोक पृष्ठ भाग है, अन्तरिक्ष उदर है और (अधोभाग में समानता होने के कारण) यह पृथिवी हृदय है। यह लोकादि स्वरूप प्रजापति अग्नि जल में स्थित है, इसे इस प्रकार अग्नि का जल में स्थित होना जानने वाला पुरुष जहाँ कहीं जाता है, वहाँ ही प्रतिष्ठित होता है ॥३॥

---

कुरुतेत्यनुवर्तते। तथाऽग्न्यादित्यापेक्षया वायुं तृतीयम्। तथा वाय्वादित्यापेक्षयाऽग्निं तृतीयमिति द्रष्टव्यम्। सामर्थ्यस्य तुल्यत्वात्त्रयाणां संख्यापूरणत्वे। स एष प्राणः सर्वभूतानामात्माऽप्यग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मृत्य्वात्मना त्रेधा विहितो विभक्तो न विराट्स्वरूपोपमर्दनेन। तस्यास्य प्रथमजस्याग्नेरश्वमेधोपयोगिकस्यार्कस्य विराजश्चित्यात्मकस्याश्वस्येव दर्शनमुच्यते। सर्वा हि पूर्वोक्तोत्पत्तिरस्य स्तुत्यर्थेत्य-वोचाम—इत्थमसौ शुद्धजन्मेति। तस्य प्राची दिक्शिरो विशिष्टत्वसामान्यात्। असौ

---

यद्विराजो बहुरूपत्वं साधयति—आहेत्यादिना। कथमग्निं तृतीयमित्यश्रुतं कल्प्यते तत्राऽऽह—सामर्थ्य-स्येति। वाय्वादित्ययोरिवाग्नेरपि संख्यापूरणत्वशक्तेरविशिष्टत्वादग्निं तृतीयमकुरुतेत्युपसंख्यायते स त्रेधाऽऽत्मानमिति चोपक्रमादित्यर्थः। ननु किमर्थं त्रेधाभावो विराट्स्वरूपोपमर्देन क्रियते न हि स तस्मिन्सत्येव युक्तो विरोधादत आह—स एष इति। यथा तन्त्ववस्थानुपमर्देनेन मूलकारणात्पटो जायते तथा सर्वेषां भूतानां प्राणतया साधारणोऽप्ययं स्वेनैव स्वतन्त्रेणानुगतेन मृत्युरूपेण त्रेधाविभागस्य कर्ता। न चैकस्य बहुरूपत्वविरोधो मायाविवदुपपत्तेरित्यर्थः। तस्य प्राचीत्यादेस्तात्पर्यमाह—तस्येति। उक्ता-नि विशेषणानि प्रकरणाविच्छेदार्थमनूद्यन्ते। "अग्निविषयं दर्शनमिदानीमुच्यते चेन्नैवेहेत्यादि "पूर्वोक्त-

---

(विराड् रूप से उत्पन्न) हिरण्यगर्भ ने अपने को कार्यकरण संघात रूप से 'त्रेधा' यानी तीन प्रकार से 'व्यकुरुत' यानी विभक्त किया। कैसे तीन प्रकार से किया? इस पर कहते हैं—उसने अग्नि और वायु की अपेक्षा आदित्य को तीसरा बनाया। तीन का पूरक किया; ऐसी अनुवृत्ति होती है। इसी प्रकार अग्नि और आदित्य की अपेक्षा वायु तृतीय है। तथा वायु और आदित्य की अपेक्षा अग्नि तृतीय है—ऐसा समझ लेना चाहिए। क्योंकि संख्या के पूरक के रूप में तीनों की सामर्थ्य समान है। (उपासक प्रत्यक्षता रूप से) वह यह प्राण सब प्राणियों का आत्मा होता हुआ भी, अग्नि, वायु और आदित्य रूप से, विशेषतः अपने मृत्युस्वरूप से, न कि विराट्स्वरूप का लय करके, तीन प्रकार का

---

१ सामर्थ्यस्येति – सत्यपि सामर्थ्ये पदार्थान्तरेष्वन्यत्रैतत्त्रितय एवैतदुपासनस्य दृष्टत्वादिहापि तथेति ध्येयम्। २ स एष इति – अपञ्चीकृतशरीरित्वेनाध्यक्षायोग्यतया ॥ इति उपासकप्रत्यक्षतया चैष इति निर्देश। ३. चित्यात्मकस्येति – उपास्यस्येत्यर्थः। ४. विशिष्टत्वसामान्यादिति – अङ्गेषु मूर्ध्नः दिशा च प्राच्या उत्कृष्ट-तुल्यत्वादित्यर्थः। ५. विराज इति-विराड्भावमापन्नस्य हिरण्यगर्भस्येत्यर्थः। ६. उपसंख्यायत इति कल्प्यत इत्यर्थः। ७. स त्रेधाभाव.। ८. तस्मिन्-विराट्स्वरूपे। ९. प्रकरणविच्छेदार्थमिति-एकमेव प्रकरणमिदं तत आरभ्य न तु भिन्नमिति बोधयितुमित्यर्थः। १०. अग्निविषयम् विराड्विषयमित्यर्थः। ११. पूर्वोक्तमिति-"मृत्युनैवेदमावृतमासीदित्यादीत्यर्थ"।

चासौ चैशान्याग्नेय्यावीर्मौ बाहू[1]। ईरयतेर्गतिकर्मणः। अथास्याग्नेः प्रतीची दिक्पुच्छं जघन्यो भागः। प्राङ्मुखस्य प्रत्यग्दिक्संबन्धात्[2]। असौ चासौ च वायव्यनैर्ऋत्यौ सक्थ्यौ सक्थिनी पृष्ठकोणत्वसामान्यात्। दक्षिणा चोदीची च पार्श्वे उभयदिक्संबन्धसामान्यात्। द्यौः[3] पृष्ठमन्तरिक्षमुदरमिति पूर्ववत्[4]। इयमुरः। अधोभागत्वसामान्यात्। स एषोऽग्निः[5] प्रजापतिरूपो लोकाद्यात्मकोऽग्निरप्सु[6] प्रतिष्ठितः। "एवमिमे लोका अप्स्वन्तः" इति श्रुतेः। यत्र क्वच यस्मिन्कस्मिश्चिदेति गच्छति तदेव तत्रैव प्रतितिष्ठति स्थितिं लभते।

[1]मनर्थकमित्याशङ्क्याऽऽह—सर्वा हीति। स्तुतिमेवाभिनयति—इत्थमिति। [2]कर्माङ्गस्याग्नेः संस्कर्तव्यत्वाच्चित्याग्निशिरसि प्राचीदृष्टिः कर्तव्येत्याह—तस्येति। आरोपे सादृश्यमाह—विशिष्टत्वेति। शिरसोऽनन्तरभावित्वात्तद्बाह्वोरैशान्यादिदृष्टिमाह—असौ चेति। कथमीर्मशब्दो बाहुवाचीत्याशङ्क्य तदुपपत्तिमाह—ईरयतेरिति। गत्यर्थयोगादीर्मशब्दो बाहुमधिकरोतीत्यर्थः। तत्पुच्छादिषु प्रतीच्यादिदृष्टीरध्यस्यति—अथेत्यादिना। चित्यस्याग्नेः शिरसि बाह्वो प्राच्यादिदृष्टिकरणानन्तरमित्यर्थः। सक्थिपदं पृष्ठनिष्ठोन्नतास्थिद्वयविषयम्। उभयशब्देन प्राचीप्रतीचीद्वयं गृह्यते। उरसि पृथिवीदृष्टिमाह—इयमिति। उपास्यमग्निमुक्तमनुवदति—स एष इति। तस्योपासनार्थमेवाप्सु प्रतिष्ठितत्वं गुणमुपदिशति—अग्निरिति। [8]भूतान्तरसहितानामपां सर्वलोककारणत्वादशेषलोकात्मकोऽग्निस्तत्र प्रतिष्ठितः संभवतीत्यत्र श्रुत्यन्तरं संवादयति—एवमिति। यथैतेषु लोकेषु सर्वं कार्यं प्रतिष्ठितं तथेति

हो गया। उस प्रथम उत्पन्न इस अग्नि की, अश्वमेधयाग उपयोगी अर्क की, चित्यात्मक उपास्य विराड् की, अश्व के समान दृष्टि कही जाती है। इसकी उत्पत्ति जो पूर्व में कही गयी यह सब स्तुति के लिए है—यह कह चुके है। इस प्रकार यह शुद्ध जन्मा है—ऐसी स्तुति करते है। उत्कृष्टता रूप विशिष्टता मे समान होने के कारण पूर्व दिशा उसका शिर है। 'असौ चासौ' अर्थात् ईशान और आग्नेय विदिशाएं 'ईर्मो' अर्थात् भुजाएं है। (ईर्म नाम क्यो पडा ?) 'ईरयते' जाती है। गत्यर्थक ईरधातु से ईर्म सिद्ध हुआ। और पश्चिम दिशा इस अग्नि की पुच्छ है, अर्थात् निम्न भाग है, क्योकि पूर्व दिशा की ओर मुख करने से पश्चिम दिशा मे पुच्छ का सम्बन्ध है। पृष्ठ भाग के कोण से समानधर्मी होने के कारण 'असौ चासौ' अर्थात् वायव्य और नैऋर्त्य उसकी जङ्घाएं है। दोनो दिशाओ मे पार्श्व भाग की समानता होने के कारण दक्षिण और उत्तर दिशाएं उसके पार्श्व है। उन्नतत्व साम्य से द्युलोक पीठ है एव सुषिरत्व साम्य से अन्तरिक्ष उदर है—ऐसा पहले कह चुके हैं। अधोभागत्व मे समानता होने के कारण यह पृथिवी उसका हृदय है। प्रजापति देवतास्वरूप लोकादिस्वरूप वह यह अग्नि जल

१ बाहू इति अत्र पार्श्वादिक्सम्बन्धसामान्यादिति हेतुवाक्य पूरणीयम्। अनयोर्बाह्वो पार्श्वसम्बन्धो यथा तथाऽन्ययोरपि दिशो पार्श्वत्वेन गम्यमानदक्षिणोत्तरदिक्सम्बन्ध समान इति तदर्थं। २ प्रत्यगित्यादि - प्रत्यग्दिक्सबन्धाश्रयत्वसामान्यादित्यर्थ सम्बन्धस्य द्विष्ठत्वादिति। ३ उन्नतत्वसाम्यात्। ४ अन्तरिक्ष पूर्ववदिति - सुषिरत्वसामान्यादित्यर्थ। ५ प्रजेत्यादि - प्रजापतित्वाद्देवतारूप। लोकरूप। आदिना कालरूपश्च बोध्य। ६ अप्सु प्रतिष्ठित इति - अप्सु भूतान्तरसहितासु कारणभूतासु सूत्ररूपास्विति बोध्यम्। "यस्मात्कारणमुल्लङ्घ्य कार्यं नात्मन वर्तते। अप्सु कारणभूतासु तस्मादग्नि प्रतिष्ठित' इति वार्तिकोक्त। [illegible] अनर्थकमिति-उपासनाबोधकवाक्यशून्यत्वादिति भाव प्रकरणस्य चैतस्योपासननिष्ठत्वादिति ध्येयम्। ८. जघन्याङ्ग पु। ९ भूतेत्यादिसूत्ररूपाणामित्यपि बोद्धव्यम्।

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत् । न ह पुरा ततः संवत्सर आस**

उस मृत्यु ने कामना की कि मेरा दूसरा शरीर उत्पन्न हो (जिसमे मैं शरीर धारी हो जाऊँ), इसीलिये उस क्षुधा मे उपलक्षित मृत्यु ने मन के द्वारा वेदत्रयी की आलोचना की अर्थात् वेदविहित सृष्टिक्रम का मन से विचार किया। उससे जो वीर्य हुआ, वह सम्वत्सर बन गया, इससे पूर्व संवत्सर नही था। उस संवत्सर काल निर्माता गर्भस्थ प्रजापति को मृत्युरूप प्रजापति उतने समय तक गर्भ मे

---

कोऽसावेवं यथोक्तमप्सु प्रतिष्ठितत्वमग्नेर्विद्वान्विजानन्गुणफलमेतत् ॥३॥

सोऽकामयत योऽसौ मृत्युः सोऽबादिक्रमेणाऽऽत्मनाऽऽत्मानमण्डस्यान्तः कार्यकरण-संघातवन्तं विराजमग्निमसृजत त्रेधा चाऽऽत्मानमकुरुतेत्युक्तम् । स किंव्यापारः सन्न-

---

यावत् । लोकशब्देन स्थूलाना भूताना संनिवेशविशेषा गृह्यन्ते । अप्सु भूतान्तरसहितासु कारणभूतासि-वति यावत् । फलश्रुतिं व्याचष्टे—यत्रेति । अथोपास्तिफलमपि पुनर्मृत्युं जयतीत्यादिना वक्ष्यते । किमितमस्थाने फलसंकीर्तनमत आह—गुणेति ॥३॥

उत्तरग्रन्थमवतार्य तस्य पूर्वग्रन्थेन सम्बन्धं वक्तुं वृत्तं कीर्तयति—सोऽकामयतेत्यादिना । अवा-न्तरव्यापारमन्तरेण कर्तृत्वानुपपत्तिरिति मत्वा पृच्छति—स किं व्यापार इति । कामनाविरूपमवान्तर-व्यापारमुत्तरवाक्यावष्टम्भेन दर्शयति—उच्यत इति । कामनाकार्यं मन.संयोगमुपन्यस्यति—स एवमिति ।

---

मे प्रतिष्ठित है। श्रुति कहती है—"यह सब लोक जल के अन्तर्गत हैं—" वह जहाँ कही जिस किसी जगह 'एति' अर्थात् जाता है 'तदेव प्रतितिष्ठति' अर्थात् स्थिति लाभ करता है। वह कौन है? जो इस प्रकार उपर्युक्त अग्नि की जल मे प्रतिष्ठितत्व गुण से उपासना करता है। यह गुण मात्र की उपासना का फल है (गुणी की उपासना का फल नही है) ॥३॥

उसने कामना की। यह जो मृत्यु था उसने अपने से अपने आप को ही ब्रह्माण्ड के अन्दर कार्यकरण संघातात्मक विराड् अग्नि को रचा और अपने को तीन भागो मे विभक्त किया—ऐसा कहा जा चुका। उसने किस क्रिया से इसकी सृष्टि की ? इस पर कहते है—उस मृत्यु ने 'अकामयत'

---

१ गुणिमित्यर्थं । २ उपासीन । ३ गुणेति-गुणमात्रोपास्तिफल न तु गुण्युपास्तेरित्यर्थं । ४ बृ १२७

५ सम्बन्धमिति—उत्थाप्योत्थापकाभावरूप सम्बन्धमित्यर्थ, तत्र पूर्वोक्तग्रन्थ उत्थापक उत्तरश्चोत्थाप्य इति ध्येयम् ॥ ६ सम्बन्धमिति—अत्रोद्ग्राह्य सम्बन्धान्तरमपि वार्तिक उक्तम् तथाहि 'अत्सृसर्गोऽप्यथोक्त प्रागमसर्गोऽधुनोच्यते । अशनायावतो यस्मादात्त्यत्रविरद्धात्स्थिति ॥' अस्यार्थ—तेजोरसो निरवर्ततेताग्निरित्यत्रात्तु सर्गे उक्त अग्ने सर्वभक्षकत्वात् सम्प्रत्यन्नसर्ग उच्यत इति माधीयसी सङ्गतिरित्यर्थ । किमर्थमन्नसर्गवचनमित्याशङ्क्याह—अशनायावत इति । अत्र हि विराज सृष्टि स्पष्टीक्रियते, 'अन्न विराडिति' च श्रुत बलीयोऽन्न करिष्य' इति च वक्ष्यत ततोऽप्यय सम्बन्धो युक्त इति भाव । वार्तिकान्तरम्—'त्रेधा व्यभजदात्मानमित्यतद्वा प्रदर्श्यते । अग्निप्राणौ पुरोक्तावथ संवत्सरोद्भव ॥" सम्बन्धान्तरमाह त्रेधेति । ननु आदित्य तृतीयमित्यादिना प्रागेव प्रजापतेस्त्रेधात्मत्वमुक्त तत्कथ तदुक्तमर्थमुक्तवानथ तत्राह-अग्निप्राणाविति । निरवर्ततताग्निरित्यग्निरुक्तो वायु तृतीयमिति वायु । यद्यप्यादित्य तृतीयमित्यादिस्थोऽप्युक्तस्तथापि तस्य संवत्सरात्मनो जन्मोक्त्यर्थमुत्तरा श्रुतिरित्यर्थं । अत्राग्निप्राणाविति प्राणशब्देन वायुर्विवक्ष्यत इति बोध्यम् ।

**तमेतावन्तं कालमबिभः। यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत। तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥४॥**

धारण किये रहा जितना सवत्सर का परिणाम होता है। इतने समय के वाद उससे उसकी सृष्टि की अर्थात् उस अण्ड को फोड दिया। उस उत्पन्न हुए प्रथम शरीरी कुमार अग्नि के प्रति भक्षण के लिये मुख फाडा, स्वाभाविक अविद्या से युक्त होने के कारण उसने डरकर 'भाण' ऐसा शब्द किया, वही वाक् (शब्द) हुआ ॥४॥

सृजतेति। उच्यते—स मृत्युरकामयत कामितवान्। किम्। द्वितीयो मे ममाऽऽत्मा शरीरं येनाहं शरीरी स्यां स जायेतोत्पद्येतेत्येवमेतदकामयत। स एवं कामयित्वा मनसा पूर्वोत्पन्नेन वाचं त्रयीलक्षणां मिथुनं द्वंद्वभावं समभवत्संभवनं कृतवान्मनसा त्रयीमालोचितवांस्त्रयीविहितं सृष्टिक्रमं मनसाऽन्वालोचयदित्यर्थः। कोऽसावशनायया लक्षितो मृत्युः। अशनाया मृत्युरित्युक्तम्। तमेव परामृशत्यन्यत्र प्रसङ्गो मा भूदिति। तत्तत्र रेत आसीत्। तत्तत्र मिथुने यद्रेत आसीत्प्रथमशरीरिणः प्रजापतेरुत्पत्तौ कारणं रेतो बीजं ज्ञानकर्मरूपं त्रय्यालोचनायां यद्दृष्टवानासीज्जन्मान्तरकृतम्। तद्भावभावि-

कोऽयं मनसा सह वाचो द्वंद्वभावस्तत्राऽऽह—मनसेति। वाक्यार्थमेव स्फुटयति—त्रयीविहितमिति। वेदोक्तसृष्टिक्रमालोचनं प्रजापतेर्नेदं प्रथमं संसारस्यानादित्वादिति वक्तुमनुशब्द.। 'सोऽकामयत' इत्यादौ सर्वनाम्नोऽव्यवहितविराड्विषयत्वमाशङ्क्य परिहरति—कोऽसावित्यादिना। कथं तया मृत्युर्लक्ष्यते तत्राऽऽह—अशनायेति। किमिति तर्हि पुनरुक्तिरित्याशङ्क्याऽऽह—तमेवेति। अन्यत्रानन्तरप्रकृते विराडात्मनीति यावत्। अवान्तरव्यापारान्तरमाह—तदित्यादिना। प्रसिद्धं रेतो व्यावर्तयति—ज्ञानेति। ननु प्रजापतेर्न ज्ञानं कर्म वा संभवति तत्रानधिकारादित्याशङ्क्याऽऽसीदित्यस्यार्थमाह—जन्मान्तरेति। वाक्यस्यापेक्षितं पूरयित्वा वाक्यान्तरमादाय व्याकरोति—तद्भावेत्यादिना।

अर्थात् चाहा। क्या चाहा? मेरा दूसरा 'आत्मा' यानी शरीर होवे, जिससे मैं देहधारी होऊं। वह 'जायेत' अर्थात् पैदा होवे, ऐसा उसने चाहा। ऐसी इच्छा करके उसने पूर्वोत्पन्न मन से (वेदोक्त सृष्टिक्रम मे) आलोच्य-आलोचक भाव रूप 'मिथुनम्' यानी द्वन्द्व भाव से त्रयीलक्षणा रूपा वाणी की 'समभवत्' यानी संभावना अर्थात् मन से वेदत्रयी की आलोचना की, वेदत्रयी-प्रतिपाद्य सृष्टिक्रम की मन से आलोचना की—ऐसा तात्पर्य है। वह कौन था? अशनाया के द्वारा लक्षित मृत्यु। अशनाया मृत्यु है, ऐसा कह चुके है। उसी को यहाँ कहते हैं, ताकि अन्यत्र प्रसंग न हो जाय। 'तद्रेत आसीत्'

१ सूत्रम्। २ वेदोक्तसृष्टिक्रममिति यावत्। ३ द्वन्द्वभावमिति—द्वन्द्वभावश्चात्राऽध्यात्मप्रकरणे आलोच्यालोचकयोः सम्बन्धो विषयविषयित्वाख्यो न तु स्त्रीपुंसयोर्व्यतिकरोऽप्रस्तुतत्वात् तत्रालोच्यो वेदोक्तः सृष्टिक्रमः आलोचकस्तु मनःशब्दितमन्तःकरणमिति ध्येयम्। ४ प्रतिपाद्यम्। ५ मिथुने इति-मनसा त्रय्यालोचने कृते सतीत्यर्थः। ६ ज्ञानकर्मरूपमिति-ज्ञानमुपासनं कर्म-उपासनसमुच्चितम् तयोर्भावना संततिरूपमित्यर्थः। ७ जन्मान्तरकृतमिति-पूर्वकल्पे यजमानावस्थयार्जितम् अनन्तरकल्पादौ च फलावस्थस्य तस्याविर्भूतं ज्ञानादित्रयमित्यर्थः। ८ तद्भावभावित इति-आविर्भूतज्ञानादिसम्पृक्त इत्यर्थः।

तोऽपः[1] सृष्ट्वा तेन रेतसा - बीजेना[2]प्स्वनुप्रविश्याण्डरूपेण गर्भीभूतः स संवत्सरोऽभवत्संवत्सरकालनिर्माता संवत्सरः [3]प्रजापतिरभवत्।

[4]न ह पुरा पूर्वं ततस्तस्मात्संवत्सरकालनिर्मातुः प्रजापतेः संवत्सरः कालो नाम नाऽऽस न [4]बभूव ह। तं संवत्सरकालनिर्मातारमन्तर्गर्भं प्रजापतिं यावानिह प्रसिद्धः काल एतावन्तमेतावत्संवत्सरपरिमाणं कालमबिभर्भृतवान्मृत्युः[5]। यावान्संवत्सर इह प्रसिद्धस्ततः परस्तात्किं कृतवान्। [6]तमेतावतः कालस्य संवत्सरमात्रस्य परस्तादूर्ध्वमसृजत सृष्टवानण्डमभिनदित्यर्थः। तमेवं कुमारं जातमग्निं प्रथमशरीरिणमश[7]नायावत्त्वान्मृत्युर-

ननु संवत्सरस्य प्रागेव सिद्धत्वान्न प्रजापतेस्तन्निर्माणेन तदात्मत्वमित्याशङ्क्योत्तरं वाक्यमुपादत्ते—न ह पुरेति। तद्व्याचष्टे—पूर्वमिति। प्रजापतेरादित्यात्मकत्वात्तदधीनत्वाच्च संवत्सरव्यवहारस्याऽऽदित्यात्पूर्वं तद्व्यवहारो नाऽऽसीदेवेत्यर्थः। कियन्तं कालमण्डरूपेण गर्भो बभूवेत्यपेक्षायामाह—तमित्यादिना। अवान्तरव्यापारमनेकविधमभिधाय विराडुत्पत्तिमाकाङ्क्षाद्वारोपसंहरति—यावानित्यादिना। कियं पूर्वमेव गर्भतया विद्यमानस्य विराजः सृष्टिस्तत्राऽऽह—अण्डमिति। विराडुत्पत्तिमुक्त्वा अयोग्येऽपि पुत्रभक्षणे प्रवर्तकं दर्शयति—अश- [8]शब्दमात्रस्य सृष्टिं विवक्षुर्भूमिकां करोति—तमेवमिति।

अर्थात् उस मन से (त्रयी आलोचन रूप) मिथुन मे वह जो रेतस् हुआ, प्रथम शरीरी प्रजापति से उत्पत्ति मे हेतुभूत जो बीज रूप रेतस हुआ अर्थात् वेदत्रयी की आलोचना करने पर उसने जो जन्मान्तरकृत उपासना कर्म रूप बीज देखा। उस बीज रूप से आविर्भूत ज्ञानादि मे सहकृत (पञ्चीकृतभूत) जल की सृष्टि कर, उस रेतस् रूप बीज के द्वारा जल मे प्रविष्ट होकर, ब्रह्माण्ड रूप से गर्भस्थ हो, वह सवत्सर हुआ। अर्थात् वह सवत्सर रूप काल का निर्माता आदित्यात्मक सवत्सर प्रजापति हुआ।

उस सवत्सर रूप काल के निर्माता प्रजापति से पूर्व आदित्यात्मक सवत्सर नाम (आदित्य के उदय के आधीन होने के कारण) काल नहीं था। उस सवत्सर काल के निर्माता अन्तर्गर्भ

१ अप सृष्ट्वेति पञ्चीकृतभूतान्युत्पाद्येत्यर्थ। २ अप्स्विति-सृष्टेषु भूतेष्वित्यर्थ। ३ प्रजापतिरिति-आदित्यात्मक सवत्सरोऽभवदित्यर्थ। आदित्यसवत्सरयो प्रयोज्यप्रयोजकभावादभेद इति बोध्यम्। ४ बभूव हेति हेति प्रसिद्धौ न हि तत पूर्व सवत्सरो नाम आदित्योदयाधीनत्वात्तन्निश्चयस्येतिभाव। ५ भृतवान्मृत्युरिति-मृत्युरेव स्वय गर्भीभूत आसीदित्यर्थ। ६ तमिति विराजमादित्यमित्यर्थ। ७ अशनायावत्त्वादितितथा च वार्तिकम्— "अशनायादिमत्त्वात्स स्वभावबलचोदित। सृष्ट्वाद्य घस्मर पुत्र तमभिव्याददात्क्षुधा॥ भिनत्ति सर्वमर्यादा नान्वयाद्याप्यपेक्षते।" इति मृत्युर्हि ग्रसनशीलस्तेनैव हिंसास्वभावेन चोदित क्षुत्पिपासायुक्तत्वाज्ज्येष्ठ पुत्र सृष्ट्वा तमत्तुमभिमुखत्वेन मुख विदारितवानित्यर्थ। पुत्रमत्तु प्रवृत्तस्य स्वस्ष्टमर्यादाभङ्ग स्यादित्यत आह क्षुधेति। अशनायाद्युपद्रुतो मर्यादा भिन्दानोऽपि स्व पर च दृष्ट्वैवाशने प्रवर्तत इत्याशङ्क्याह नान्वयेति आदिनाऽभोज्यादिगुं ह्यते मर्यादाभेतृत्ववदित्यपेरर्थ। न चाविवेकिनामेव प्रवृत्तावपि न विवेकिमूढाभिषिक्तस्य प्राणस्येदृशी प्रवृत्तिर्युक्तेति वाच्यम् व्यवहारदशाया विवेकिनामपि पश्वादिभिरविशेषात्। "अस्य दग्धोदरस्यार्थे को न कुर्यादसाम्प्रतम्" इति तैरेवोक्ते क्षुत्पिपासापीडित पुत्रमपि भक्ष्यति किं पुनरन्यत्र करोतीति न्याय प्रदर्शयितु प्राणस्य मृत्यो स्वपुत्रभक्षणे प्रवृत्तिरिति भाव। ८. सिद्धान्ते सत्कार्यवादाभ्युपगमात्सृच्छति नेयमिति। ९ शब्दमात्रस्येति - यावदभिधानस्येत्यर्थ।

**स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनाऽऽत्मनेदꣳसर्वमसृजत यदिदं किंचर्चो यजूꣳषि सामानि छन्दाꣳसि यज्ञान्प्रजाः**

उस मृत्यु ने विचार किया, यदि मैं इस कुमार को मार डालूगा तो मैं यह बहुत ही थोडा भोजन करूंगा। अत उसने उस वाणी और उस मन के द्वारा इन सबकी सृष्टि की जो कुछ भी ये ऋक यजु, साम, छन्द, यज्ञ, प्रजा तथा पशु है—(इन सभी को बनाया)। उसने जिस-जिस वस्तु की

---

भिव्यादवदान्मुखविदारणं कृतवानत्तुम्। [1]स च कुमारो भीतः स्वाभाविक्याऽविद्यया[2] युक्तो भाणित्येवं शब्दमकरोत्। सैव वागभवद्वाक्शब्दोऽभवत् ॥४॥

[3]स ऐक्षत स एवं भीतं कृतरवं कुमारं दृष्ट्वा मृत्युरैक्षतेक्षितवान्। [4]अशनायावानपि यदि कदाचिद्वा [5]इमं कुमारमभिमंस्ये। अभिपूर्वो मन्यतिर्हिंसार्थः। हिंसिष्य इत्यर्थः।

---

नायावत्त्वादिति। विराजो भयकारणमाह—स्वाभाविक्येति। इन्द्रिय देवता च व्यावर्तयति—वाक्शब्द इति ॥४॥

इदानीमृगादिसृष्टिमुपदेष्टु पातनिका करोति—स इत्यादिना। ईक्षणप्रतिबन्धकसद्भाव दर्शयति—अशनायावानपीति। अभिपूर्वो मन्यतिरिति। यद्योऽस्य पशूनभिमन्येत नास्य रुद्र पशूनभिमन्यत

---

प्रजापति को एक संवत्सर व्यापी काल तक, जो कि प्रसिद्ध है, मृत्यु ने धारण किया। 'अर्थात् मृत्यु स्वय गर्भीभूत हुई।) संवत्सर पर्यन्त जितना कि प्रसिद्ध है, रखा, तब बाद मे क्या किया? विराड् आदित्य को संवत्सरमात्र काल के पश्चात् उसने ऊपर सृजन किया अर्थात् अण्डे को विदारण कर दिया। उससे प्रथम शरीरी अग्नि बालक हुआ, भूखी मृत्यु ने उसे खाने के लिए मुंह फाडा। स्वाभाविकी अविद्या से युक्त डरे हुए उस बालक ने "भाण्" एसे शब्द किया। वही वाक् हुआ, वाक् अर्थात् शब्द हुआ ॥४॥

(शिशु क शब्द करते हुए क्षण मे) उसने सोचा—इस प्रकार डरे हुए शब्द करने वाले उस शिशु को देखकर मृत्यु ने 'ऐक्षत' अर्थात् विचार किया। क्षुधायुक्त होने पर भी यदि मैं (स्रष्टव्य अन्न मे हेतुभूत) इस शिशु को 'अभिमस्ये' अर्थात् मार डालगा। अभिपूर्वक मन् धातु हिंसार्थ ॥ होता है।

---

१ स भाणकरोदित्यस्य सहेतुकमर्थमाह—स चेति मृत्युना मुखविदारणे कृते सति स चोत्पन्न कुमारो भीत सन् भाणित्येव शब्दमात्रमकरोदिति सम्बन्ध। २ अविद्ययति—उपलक्षणमेतत्कर्मादीनापि-तदुक्तम् 'जन्मान्तरसमभ्यस्ताविद्याकर्मादिहेतुत। जन्यकर्मप्रयुक्त सन् शिशुर्भाणत्यथाकरोत् ॥ अत्र जन्येत्यादे जनिष्यमाणप्राणिकर्मप्रयुक्त इत्यर्थ।' यथोक्तहेतुवशाय स्वभावप्रहितोऽप्यसु। कुमारोत्यरवत्रस्त स्वभाव चिच्छिदे भयात् ॥ अत्यन्तमपि शूराणां स्वस्वभावैर्नहेतुन। तित्तिरादिसमुत्पाते वेपथुर्जायते भयात् ॥ इत्यर्थ। ३ स इति शिशुसरावसलब्धालोचनक्षण इत्यर्थ। ४ ननु तस्य सर्वज्ञत्वादीक्षण स्वत एव सभवति किंनिमित्तविशेषोक्त्येत्याशङ्क्याह अशनायेति। अशनायावत्त्वेऽपि तस्यातिनिपुणत्वादुक्तनिमित्तवशादीक्षण समुत्पन्नमेवेत्यर्थ। ५ इममिति स्रष्टव्यान्नहेतुभूतमित्यर्थ।

पशून् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वꣳ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥

रचना की उन सभी का खाने का विचार किया, वह सबको खाता है, यही उस अदिति या अदितित्व है। जो इस प्रकार इसके अदितिपन को जानता है, वह इन सभी का भोक्ता हो जाता है और ये सब उसके अन्न हो जाते हैं ॥५॥

कनीयोऽन्नं करिष्ये कनीयोऽल्पमन्नं करिष्य इत्येवमीक्षित्वा तद्भक्षणादुपरराम । बहु ह्यन्नं कर्तव्यं दीर्घकालभक्षणाय न कनीयः । तद्भक्षणे हि कनीयोऽन्नं स्याद्बीजभक्षण इव सस्याभावः । स एव प्रयोजनमन्नबाहुल्यमालोच्य तयैव वाचा पूर्वोक्तया तेनैव वाऽऽत्मना मनसा मिथुनीभावमालोचनमुपगम्येदं सर्वं स्थावरं जङ्गमं चासृजत यदिदं किंच यत्किंचेदम् । किं तत् । ऋचो यजूंषि सामानि छन्दांसि च सप्त गायत्र्यादीनि

इत्यादि शास्त्रमत्र प्रमाणयितव्यम् । अन्नस्य कनीयस्त्वे का हानिरित्याशङ्क्याऽऽह—बहु हीति । तथा ऽपि विराजो भक्षणे का क्षतिस्तत्राऽऽह—तद्भक्षणे हीति । तस्यान्नात्मकत्वात्तदुत्पादकत्वाच्चेति शेषः । कारणनिवृत्तौ कार्यनिवृत्तिरित्यत्र दृष्टान्तमाह—बीजेति । यथोक्तेक्षणानन्तरं मिथुनभावद्वारा त्रयीसृष्टिं प्रस्तौति—स एवमिति । ननु विराजं सृष्ट्वा स्थावरजङ्गमात्मनो जगतः सृष्टेरुक्तत्वात्किं पुनरवत्येत्या शङ्क्येन पृष्ट्वा परिहरति—किं तदिति । गायत्र्यादीनीत्यादिपदेनोष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगती

तो 'कनीयोऽन्नं करिष्ये' अर्थात् कम अन्न कर लूंगा, इस प्रकार विचार कर उसने उसे नहीं खाया। बहुत समय तक खाते रहने के लिए अधिक अन्न करना चाहिए कम से काम नहीं होगा। बीजभक्षण से अन्नाभाव हो जाने के समान इसे खा लेने पर थोड़ा ही अन्न होगा। इस प्रकार भक्षण से उपराम हो अन्न की बाहुल्यता के लिए विचार कर उस पूर्वोक्त भाषात्मिका वाक तथा उसी कुमारभावापन्न आत्मना

१ बीजभक्षण इवेत्यादि ननु कुलालाभावे घटवत् विराडभावेऽपि स्यादन्नमिति चेत्सत्यम् यद्यपि समुत्पन्नो घटः कुलालाभावेऽपि तिष्ठति तथापि तदभावेन जायते न चोपादानाभावे भावकार्यस्य सभवो न हि बीजमङ्कुरोपादानं भक्षितवता तत्कारणोऽङ्कुरो लभ्यतेऽतो विराडभावे जन्माभावादन्नस्य समृद्धिर्दूरनिरस्तेत्यर्थः । २ प्रयोजनमिति—भक्षणोपरते फलमित्यर्थः । ३ पूर्वोक्तयेति—भाषात्मिकया कुमारवदननिर्गतयेत्यर्थः । ४ आत्मनेति—आत्मीयकुमारेण तद्भावापन्नेन स्वेनेति वार्थः । ५ मिथुनीत्यादि मिथुनीभावाख्यं त्रय्यालोचनं कृत्वेत्यर्थः ६ असृजतेति—एवं वाच्यवाचकरूपं जगद्विराजा तन्मुखोत्थया वाचा च उत्पादितवान् प्रजापतिरित्यर्थः तथा च वार्तिकम् कुमारवदनोद्गतया वाचर्गादीन् ससर्ज सः । पश्वादींश्च कुमारेण ह्यात्मनाऽजीजनज्जगत् । इति न हि हनुभूनयोक्तत्रय्यैव त्रय्या सृष्टिं न चाव्यक्ता त्रयी तद्व्यक्तिहेतुस्तये यनन्तरप्रकृतकुमारमुखनिर्गतवाग्ग्रहण संभवे विनष्टकल्पनाऽनवकाशादिति भावः । ७ किंचेत्यादि—किंच यदिदमिति योज्यम् । ८ ऋचः—नियताक्षरपादवद्धमन्त्राः । ९ यजूंषि—अविवक्षितछन्दस्कास्ते । १० सामानि—स्तोभविशिष्टा मन्त्राः स्तोभाश्च हुफडाद्यनर्थकशब्दाः । ११ मिथुनीभावद्वारेति सृष्टिक्रमालोचनद्वारेत्यर्थः ।

स्तोत्रशस्त्रादिकर्माङ्गभूतांस्त्रिविधान्मन्त्रान्गायत्र्यादिच्छन्दोविशिष्टान्यज्ञांश्च तत्साध्याःप्रजास्तत्कर्त्रीः पशूंश्च ग्राम्यानारण्यान्कर्मसाधनभूतान् । ननु त्रय्या मिथुनीभूतयाऽसृजतेत्युक्तमृगादीनीह कथमसृजतेति । नैष दोषः । मनसस्त्वव्यक्तोऽयं मिथुनीभावस्त्रय्या बाह्यस्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति ॥

स प्रजापतिरेवमन्नवृद्धि बुद्ध्वा यद्यदेव क्रियां क्रियासाधनं फलं वा किंचिदसृजत तत्तदत्तुं भक्षयितुमध्रियत धृतवान्मनः सर्वं कृत्स्नं वै यस्मादत्तीति तत्तस्माददितेरदितिनाम्नो मृत्योरदितित्वं प्रसिद्धम् । तथाच मन्त्रः "अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता

छन्दांस्युक्तानि । केवलानां छन्दसां सर्गासंभवात्तदारूढानामृग्यजुःसामात्मनां मन्त्राणां सृष्टिरत्र विवक्षितेत्याह—स्तोत्रेति । उद्गात्रादिना गीयमानमृग्जातं स्तोत्रं तदेव होत्रादिना शस्यमानं शस्त्रम् । स्तुतमनुशंसतीति हि श्रुतिः । यत्र गीयते न च शस्यतेऽध्वर्युप्रभृतिभिश्च प्रयुज्यते तदप्यत्र ग्राह्यमित्यभिप्रेत्याऽऽदिपदम् । अत एव त्रिविधानित्युक्तम् । अजादयो ग्राम्याः पशवो गवयादयस्त्वारण्या इति भेदः । कर्मसाधनभूतानसृजतेति संबन्धः । स मनसा वाचं मिथुनं समभवदित्युक्तत्वात्प्रागेव त्रय्याः सिद्धत्वान्न तस्याः सृष्टिः श्लिष्टेति शङ्कते—नन्विति । व्यक्ताव्यक्तविभागेन परिहरति—नेत्यादिना । इति मिथुनीभावसर्गयोरुपपत्तिरिति शेषः । अत्तृसर्गश्चाद्यसर्गश्चेति द्वयमुक्तम् ।

इदानीमुपास्यस्य प्रजापतेर्गुणान्तरं निर्दिशति—स प्रजापतिरित्यादिना । कथं मृत्योरदिति-

यानी मन से वेदत्रयी का आलोचन रूप मिथुन भाव को प्राप्त होकर इस जड़-चेतन संसार की रचना की । 'यदिद किंच' अर्थात् जो भी कुछ यह है । वह क्या है ? ऋक्, यजु, साम, गायत्री आदि सात छन्द अर्थात् गायत्री आदि छन्द विशिष्ट स्तोत्र-शस्त्रादि कर्मों के अङ्गभूत तीनों प्रकार के मन्त्र और यज्ञ, उसकी साध्य प्रजा और उस कर्म के साधनभूत ग्राम्य और वन्य पशुओं की रचना की, यदि कहो, मन द्वारा मिथुनीभूत वेदत्रयी से आदित्यात्मक संवत्सर की रचना की, पहले यह कहा था—तो फिर ऋगादि की सृष्टि कैसे हुई ? ऐसा कहना ठीक नहीं है । मनका जो वेदत्रयी से मिथुनीभाव है, वह अव्यक्त है । विद्यमान उन ऋगादि का ही कर्मों में विनियोग रूप से जो बाह्य व्यक्तीभाव है यही उसकी सृष्टि है ।

१. त्रय्यामिथुनीभूतयाऽसृजतेति—मनसा मिथुनीभूतया त्रय्याऽऽदित्य संवत्सरमसृजतेत्यर्थः तदात्मना स्वयमेवाऽजायतेति यावत् । २. विद्यमानानाम्—अव्यक्ततया पूर्वं सिद्धानामेवेत्यर्थः नत्वपूर्वसताम् । ३. यस्मादिति—मूलस्थेति शब्दार्थोऽयम् व्याख्येय चेति शब्दम—अत्तीत्यत्र धृतवानित्यवगमनीयमिह । ४ मृत्योरदितित्वमिति—ननु प्रजापतेः स्रष्टृत्वमेव नात्तृत्वमन्यथाऽन्नवृद्ध्यसिद्धेस्तत्कुतोऽस्यादितित्वमित्याशङ्क्य समादधुर्वार्त्तिकाचार्याः तथाहि—"स्रष्टुर्नो कार्यभक्ष्याभ्यामन्योऽन्याव्यतिरेकतः । स्रष्टृत्वात्स सृजत्येव खादतेऽन्न सदाऽऽद्यतः ॥" इति अस्यार्थः—स्रष्टा कार्यम् तच्च तमपेक्षत अत्ता भक्ष्य तच्च तमपेक्षते अत स्रष्टा कार्यं सृजत्येव स्रष्टृत्वात् अन्यथा तदसिद्धेः अत्ता चान्नं सदैवात्ति तस्याद्यत्वेनैव स्थितेरित्यर्थः । ५ उद्गात्रादिनेत्यादिना प्रतिप्रस्थात्रादयो ग्राह्याः । ६. होत्रादिनेत्यादिना ब्रह्मादयो ग्राह्याः । ७. अध्वर्युप्रभृतिभिरिति प्रतिहर्त्रादय प्रभृतिग्राह्याः । ८. तेजोरसो निरवर्त्ततानाग्निरित्यत्रात्तृसर्ग उक्तः "सोऽकामयत । द्वितीयो म आत्मा जायेते"त्यत्र विराजः सृष्टिः स्पष्टीकृता अन्नं च विराडिति श्रुतेः 'कनीयोऽन्नं करिष्य' इति च । अतस्तत्सृष्ट्याऽन्नसर्ग उक्त इत्यभिप्रेत्याह - अत्तृसर्गश्चान्नसर्गश्चेति । ९. उत्तरसम्बन्ध्येतद्वाक्यम् । १०. गुणान्तरमिति पूर्वोक्ताप्सु प्रतिष्ठितत्वापेक्षया गुणान्तरमित्यर्थः ।

पशून्। स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वꣳ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥

रचना की, उन सभी को खाने का विचार किया, वह सबको खाता है, यही उस अदिति का अदितित्व है। जो इस प्रकार इसके अदितिपन को जानता है, वह इस सभी का भोक्ता हो जाता है और ये सब उसके अन्न हो जाते हैं ॥५॥

कनीयोऽन्नं करिष्ये कनीयोऽल्पमन्नं करिष्य इत्येवमीक्षित्वा तद्भक्षणादुपरराम। बह्वन्नं कर्तव्यं दीर्घकालभक्षणाय न कनीयः। तद्भक्षणे हि कनीयोऽन्नं स्याद्बीजभक्षण इव सस्याभावः। स एवं प्रयोजनमन्नबाहुल्यमालोच्य तयैव वाचा पूर्वोक्तया तेनैव चाऽऽत्मना मनसा मिथुनीभावमालोचनमुपगम्येदं सर्वं स्थावरं जङ्गमं चासृजत यदिदं किंच यत्किंचेदम्। किं तत्। ऋचो यजूंषि सामानि छन्दांसि च सप्त गायत्र्यादीनि

इत्यादि शास्त्रमत्र प्रमाणयितव्यम्। अन्नस्य कनीयस्त्वे का हानिरित्याशङ्क्याऽऽह—बह्विति। तथाऽपि विराजो भक्षणे का क्षतिस्तत्राऽऽह—तद्भक्षणे हीति। तस्यान्नात्मकत्वात्तदुत्पादकाभावश्चेति शेषः। कारणनिवृत्तौ कार्यनिवृत्तिरित्यत्र दृष्टान्तमाह—बीजेति। यथोक्तेक्षणानन्तरं मिथुनभावद्वारा प्रवृत्तिं प्रस्तौति—स एवमिति। ननु विराजः सृष्टया स्थावरजङ्गमात्मनो जगतः सृष्टेरुक्तत्वात् किं पुनरनयेत्याशङ्क्य पृष्ट्वा परिहरति—किं तदिति। गायत्र्यादीनीत्यादिपदेनोष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगती-

तो 'कनीयोऽन्नं करिष्ये' अर्थात् कम अन्न कर लूंगा, इस प्रकार विचार कर उसने उसे नहीं खाया। बहुत समय तक खाते रहने के लिए अधिक अन्न करना चाहिए, कम से कार्य नहीं होगा। बीजभक्षण से अन्नाभाव हो जाने के समान, इसे खा लेने पर थोड़ा ही अन्न होगा। इस प्रकार भक्षण से उपराम हो अन्न की बाहुल्यता के लिए विचार कर उस पूर्वोक्त त्रयात्मिका वाक् तथा उसी कुमारभावापन्न 'आत्मना'

१ बीजभक्षण इवेत्यादि ननु कुलालाभावे घटवत् विराडभावेऽपि स्यादन्नमिति चेत्सत्यम् यद्यपि समुत्पन्नो घटः कुलालाभावेऽपि तिष्ठति तथापि तदभावेन जायते न चोपादानाभावे भाव्यकार्यस्य सम्भवो न हि बीजमङ्कुरोपादानं भक्षितवता तत्कारणोऽङ्कुरो लभ्यतऽतो विराडभावे अन्नाभावादन्नस्य समृद्धिदूरनिरस्तेत्यर्थः। २ प्रयोजनमिति—भक्षणोपरते फलमित्यर्थः। ३ पूर्वोक्तयेति—त्रय्यात्मिकया कुमारवदननिर्गतयेत्यर्थः। ४ आत्मनेति—आत्मीयकुमारेण तद्भावापन्नेन स्वेनेति वार्थः। ५ मिथुनीत्यादि मिथुनीभावाख्यं त्रय्यालोचनं कृत्वेत्यर्थः। ६ असृजतेति—एवं वाच्यवाचकरूपं जगद्विराजा तन्मुखोत्थया वाचा च उत्पादितवान् प्रजापतिरित्यर्थः तथा च वार्तिकम् कुमारवदनोद्गतया वाचर्गादीन् ससर्ज सः। पश्वादींश्च कुमारेण ह्यात्मनाऽजीजनज्जगत्। इति न हि हनुकृतयोक्तयैव त्रय्या सृष्टिः न चाव्यक्ता त्रयी तदुत्पत्तिहेतुस्तयेत्यनन्तरप्रकृतकुमारमुखनिर्गतवाग्घट-सम्भवे विराड्वदनाज्जातवाक्यादिति भावः। ७ किंचेत्यादि—किंच यदिदमिति योज्यम्। ८ ऋचः—नियताक्षरपादबद्धमन्त्राः। ९ यजूंषि—अनियताक्षरच्छन्दस्कास्ते। १० सामानि—स्तोभविशिष्टमन्त्राः ... हुंकाराद्युच्चकशब्दाः। ११ मिथुनीभावद्वारेति-सृष्टिक्रमालोचनद्वारेत्यर्थः।

स्तोत्रशस्त्रादिकर्माङ्गभूतांस्त्रिविधान्मन्त्रान्गायत्र्यादिच्छन्दोविशिष्टान्यज्ञांश्च तत्साध्यान्प्रजास्तत्कर्त्रीः पशूंश्च ग्राम्यानारण्यान्कर्मसाधनभूतान् । ननु त्रय्या मिथुनीभूतयाऽसृजतेत्युक्तमृगादीनीह कथमसृजतेति । नैष दोषः । मनसस्त्वव्यक्तोऽयं मिथुनीभावस्त्रय्या बाह्यस्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति ॥

स प्रजापतिरेवमन्नवृद्धिं बुद्ध्वा यद्यदेव क्रियां क्रियासाधनं फलं वा किंचिदसृजत तत्तदत्तुं भक्षयितुमध्रियत धृतवान्मनः सर्वं कृत्स्नं वै यस्मादत्तीति तत्तस्माददितेरदितिनाम्नो मृत्योरदितित्वं प्रसिद्धम् । तथाच मन्त्रः "अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता

छन्दांस्युक्तानि । केवलानां छन्दसां सर्गासंभवात्तदारूढानामृग्यजुःसामात्मनां मन्त्राणां सृष्टिरत्र विवक्षितेत्याह—स्तोत्रेति । उद्गात्रादिना गीयमानमृग्जातं स्तोत्रं तदेव होत्रादिना शस्यमानं शस्त्रम् । स्तुतमनुशंसतीति हि श्रुतिः । यन्न गीयते न च शस्यतेऽध्वर्युप्रभृतिभिश्च प्रयुज्यते तदप्यत्र ग्राह्यमित्यभिप्रेत्याऽऽदिपदम् । अत एव त्रिविधानित्युक्तम् । अजावयो ग्राम्याः पशवो गवयादयस्त्वारण्या इति भेदः । कर्मसाधनभूतानसृजतेति संबन्धः । स मनसा वाचं मिथुनं समभवदित्युक्तत्वात्प्रागेव त्रय्याः सिद्धत्वान्न तस्याः सृष्टिः श्लिष्टेति शङ्कते—नन्विति । व्यक्ताव्यक्तविभागेन परिहरति—नैत्यादिना । इति मिथुनीभावसर्गयोरुपपत्तिरिति शेषः । अत्तृसर्गश्चान्नसर्गश्चेति द्वयमुक्तम् ।

इदानीमुपास्यस्य प्रजापतेर्गुणान्तरं निर्दिशति—स प्रजापतिरित्यादिना । कथं मृत्योरदिति-

यानी मन से वेदत्रयी का आलोचन रूप मिथुन भाव को प्राप्त होकर इस जड-चेतन संसार की रचना की । 'यदिदं किंच' अर्थात् जो भी कुछ यह है । यह क्या है ? ऋक्, यजु, साम, गायत्री आदि सात छन्द अर्थात् गायत्री आदि छन्द विशिष्ट स्तोत्र-शस्त्रादि कर्मों के अङ्गभूत तीनों प्रकार के मन्त्र और यज्ञ, उसकी साध्य प्रजा और उस कर्म के साधनभूत ग्राम्य और वन्य पशुओं की रचना की, यदि कहो, मन द्वारा मिथुनीभूत वेदत्रयी से आदित्यात्मक संवत्सर की रचना की, पहले यह कहा था—तो फिर ऋगादि की सृष्टि कैसे हुई ? ऐसा कहना ठीक नहीं है । मनका जो वेदत्रयी से मिथुनीभाव है, वह अव्यक्त है। विद्यमान उन ऋगादि का ही यज्ञों में विनियोग रूप से जो बाह्य व्यक्तीभाव है यही उसकी सृष्टि है ।

१ त्रय्यामिथुनीभूतयाऽसृजतेति—मनसा मिथुनीभूतया त्रय्याऽऽदित्यं संवत्सरमसृजतेत्यर्थः तदात्मना स्वयमेवाऽजायतेति यावत् । २ विद्यमानानाम्—अव्यक्ततया पूर्वं सिद्धानामेवेत्यर्थः नत्वपूर्वसताम् । ३ यस्मादिति—मूलस्थेति शब्दार्थोऽयम् व्याख्येय चेति शब्दम्—अत्तीत्यत्र धृतवानित्यवगमनीयमिह । ४ मृत्योरदितित्वमिति—ननु प्रजापतेः स्रष्टृत्वमेव नात्तृत्वमन्यथाऽनवृद्धयसिद्धेस्तत्कुतोऽस्यादितित्वमित्याशंक्य समादधुराचार्याः तथाहि—'स्रष्टुर्नो कार्यभक्षाभ्यामन्योऽन्याव्यतिरेकतः । स्रष्टृत्वात्स सृजत्येव खाद्यतेऽन्न तदा ऽऽद्यत ॥ इति अस्यार्थः—स्रष्टा कार्यम् तच्च तमपेक्षत अत्ता भक्ष्य तच्च तमपेक्षते अत स्रष्टा कार्यं सृजत्येव स्रष्टृत्वात् अन्यथा तदसिद्धेः अन्ना चान्नं सदैवाद्यते तस्याद्यत्वेनैव स्थितेरित्यर्थः । ५ उद्गात्रादिनेत्यादिना प्रतिप्रस्थात्रादयो ग्राह्याः । ६ होत्रादिनेत्यादिना ब्रह्मादयो ग्राह्याः । ७ अध्वर्युप्रमृतिभिरिति प्रतिहर्त्रादयः प्रमृतिग्राह्याः । ८ तजोरसो निरवर्तताग्निरित्यत्रात्तृसर्गं उक्तः 'सोऽकामयत । द्वितीयो म आत्मा जायेत 'त्यत्र विराजः सृष्टिः स्पष्टीकृता अन्नं च विराडिति श्रुतेः 'कनीयोऽन्नं करिष्य' इति च । अतस्तत्सृष्ट्याऽन्नसर्गं उक्त इत्यभिप्रेत्याह - अत्तृसर्गश्चान्नसर्गश्चेति । ९ उत्तरसम्बन्ध्येतद्वाक्यम् । १० गुणान्तरमिति पूर्वोक्तात्प्रतिष्ठितत्वापेक्षया गुणान्तरमित्यर्थः ।

**सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्य-**

उस प्रजापति ने ऐसी कामना की कि मैं पुनः बड़े भारी अश्वमेधादि यज्ञ के द्वारा यजन करूँ, इसी से वह थक गया। उसने तप किया, उस थ्रान्त तथा खिन्न हुए का यश और वीर्य निकल गया।

---

स पिता" इत्यादिः। सर्वस्यैतस्य जगतोऽन्नभूतस्यात्ता सर्वात्मनैव भवत्यन्यथा विरोधात्। न हि कश्चित्सर्वस्यैकोऽत्ता दृश्यते तस्मात्सर्वात्मा भवतीत्यर्थः। सर्वमस्यान्नं भवत्यत एव। सर्वात्मनो ह्यत्तुः सर्वमन्नं भवतीत्युपपद्यते। य एवमेतद्यथोक्तमदितेर्मृत्योः प्रजापतेः सर्वस्यादनाददितित्वं वेद तस्यैतत्फलम् ॥५॥

सोऽकामयतेत्यश्वाश्वमेधयोर्निर्वचनार्थमिदमाह। भूयसा महता यज्ञेन भूयः

---

नामत्वं सिद्धवदुच्यते तत्राऽऽह—तथा चेति। अदितेः सर्वात्मत्वं वदता मन्त्रेण सर्वकारणस्य मृत्योरदितिनामत्वं सूचितमिति भावः। मृत्योरदितित्वविज्ञानवतोऽवान्तरफलमाह—सर्वस्येति। सर्वात्मनेति कुतो विशिष्यते तत्राऽऽह—अन्यथेति। सर्वरूपेणावस्थानाभावे सर्वान्नभक्षणस्याशक्यत्वादित्यर्थः। विरोधमेव साधयति—न हीति। फलस्योपासनाधीनत्वात्प्रजापतिमदितिनामानमात्मत्वेन ध्यायन्ध्येयात्मा भूत्वा तत्तद्रूपत्वमापन्नः सर्वस्यान्नस्यात्ता स्यादित्यर्थः। अन्नमन्नमेवास्य सदा न कदाचित्तदस्यात्तृ भवतीति वक्तुमनन्तरवाक्यमादत्ते—सर्वमिति। अत एवेत्युक्तं व्यक्तीकरोति—सर्वात्मनो हीति ॥५॥

उपास्तिविधौ सफले सति समाप्तिरेव ब्राह्मणस्योचिता किमुत्तरग्रन्थेनेत्याशङ्क्य प्रतीकमा-

---

उस प्रजापति ने 'इस प्रकार अन्नवृद्धि होगी'—ऐसा जानकर जिस किसी भी क्रिया या त्रिया के साधन स्वरूप फल की रचना की, उस उसका 'अत्तुम्' अर्थात् भक्षण करने के लिए 'अध्रियत' यानी मन मे धारणा की। उस 'अदितेः' अर्थात् अदिति नामक मृत्यु का अदितित्व प्रसिद्ध है, क्योंकि "कृत्स्नमत्ति" अर्थात् सभी खाता है। यजुर्वेद संहिता मे मन्त्र है—'अदिति द्युलोक, अदिति अन्तरिक्ष, अदिति माता और अदिति पिता है"—इत्यादि। इस अन्नमय सारे संसार का वह सर्वात्मभाव से ही भोक्ता है, क्योंकि बिना सर्वात्मभाव के सबका भोक्ता संभव नहीं है; इसलिए सर्वभोक्ता होने से वह सर्वात्मा हो जाता है। अन्न उसके लिए सब कुछ हो जाता है। अतः जो सर्वात्मभाव से भोक्ता है, उसी का सभी कुछ अन्न होना संभव है। जो 'एवम्' अर्थात् इस पूर्व कथित अदिति संज्ञक मृत्यु प्रजापति को, सबका भोक्ता होने से अदितित्व रूप से उपासना करता है—उसे यह फल मिलता है ॥५॥

---

१ तस्मादिति—सर्वात्मत्वोनत्तेरित्यर्थः। २- निर्वचनार्थमिदमिति—प्रजापते अश्वाश्वमेधनाम्नो प्रवृत्तिनिमित्तस्यात्तन्निर्वचनार्थमिदमुत्तर वाक्यमित्यर्थं तन्निर्वचनार्थत्वेन चास्य ग्रन्थस्य स्वार्थेऽप्रामाण्यादर्थवादतया स्तुत्यर्थत्वमिति समसूचीति सम्भवगमनीयम् ॥ ३ महतेति—महत्त्व च यज्ञे सर्वस्वदक्षिणात्वस्य तच्चाश्वमेधस्यैव भवति तथा च महता यज्ञेनेति अश्वमेधाभिधेन यागेनेति यावत्। ४ तत्तद्रूपत्वमिति-तत्तदात्मरूपत्वमित्यर्थ। ५. अन्नमन्नमेवास्येति सर्वमत्तीत्यनेनैव सर्वस्यान्नत्वसिद्धेः सर्वमस्यान्नमिति पुनरुक्तिरित्याशङ्कायामित्यादि। ६ अतएव-अत्तुः सर्वात्मत्वादित्यर्थं। ७ अभिहिते सतीत्यर्थं।

—मुदक्रामत् । प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥६॥

चक्षुरादि प्राण ही यश और वीर्य है । तत्पश्चात् प्राणो के निकल जाने पर शरीर फूलने लग गया, इतने पर भी उसका मन शरीर मे ही रहा ॥६॥

---

पुनरपि यजेयेति । जन्मान्तरकरणापेक्षया भूयःशब्दः । स प्रजापतिर्जन्मान्तरेऽश्वमेधेनायजत । स तद्भावभावित एव कल्पादौ व्यावर्तत । योऽश्वमेधक्रियाकारकफलात्मत्वेन निर्वृत्तः सोऽकामयत भूयसा यज्ञेन भूयो यजेयेत्येव महत्कार्यं कामयित्वा लोकवदश्राम्यत् ।

---

दाय तात्पर्यमाह—सोऽकामयतेत्यादिना । तदेवाश्वमेधस्याश्वमेधत्वमित्येतदन्तं वाक्यमिदमा निर्दिश्यते । भूयोदक्षिणाकत्वादश्वमेधस्य भूयस्त्वम् । इतिशब्दोऽकामयतेत्यनेन संबध्यते । कथं पुनस्तेन यक्ष्यमाणस्य प्रजापतेर्भूय शब्दोक्तिः । न हि स पूर्वमश्वमेधमन्वतिष्ठत्कर्मानधिकारित्वादात आऽऽह—जन्मान्तरेति । तदेव स्पष्टयति—स प्रजापतिरिति । अथातीते जन्मनि यजमानोऽश्वमेधस्य कर्ताऽभूत् । अधुना हिरण्यगर्भो भूयो यजेयेत्याह । तथाच कर्तृभेदाद्भूयःशब्दासामञ्जस्यमत आह—स तद्भावेति । स प्रजापतिरश्वमेधवासनाविशिष्टो ज्ञानकर्मफलत्वेन कल्पादौ निवृत्तो भूयो यजेयेत्याह कर्तृभोक्त्रोरैक्येन साधकफलावस्थयोर्यजमानसूत्रयोर्भेदाभावादित्यर्थः । प्रजापतिरीश्वरो न तस्य दुःखात्मकक्रत्वनुष्ठानेच्छा युक्तेत्याशङ्क्य प्रकृतिवशात्तदुपपत्तिमभिप्रेत्याऽऽह—सोऽश्वमेधेति । कथमेतावता विवक्षिता स्तुतिः सिद्धेत्याशङ्क्या-

---

'उसने कामना की' इत्यादि श्रुतिवाक्य से अश्व और अश्वमेध का (प्रवृत्तिनिमित्तक होने से स्वार्थ मे अप्रामाण्य होने से अर्थवाद द्वारा स्तुति के लिए) निर्वचन करने के लिए श्रुति यह कहती है—(सर्वस्व दक्षिणा वाले) महान् (अश्वमेध) याग से मैं पुन यजन करूँ। जन्मान्तर मे करने की अपेक्षा से यहाँ महान् शब्द का प्रयोग किया है । उस प्रजापति ने दूसरे जन्म मे अश्वमेध याग द्वारा यजन किया था । अश्वमेध याग के सस्कारो से सस्कृत ही वह कल्प के आदि मे आविर्भूत हुआ । अश्वमेध याग के क्रिया कारक और फलात्मक रूप से प्रादुर्भूत होकर उसने कामना की, कि मैं महान् याग से महान् अनुष्ठान करूँ। इस प्रकार महान् कार्य की कामना करके वह सासारिक लोगो के समान श्रम कार्य मे प्रवृत्त हुआ । उसने तप किया । उसके थके हुए होने से खिन्न हुए (प्रजापति के)

---

१ अश्वमेधसस्कारसस्कृत । २ आविरभवत् । ३ प्रादुर्भूत । ४ तदेवेति जन्मान्तरकरणापेक्षत्वमेवेत्यर्थ । ५ तथाचेति साधनफलावस्थापन्नयोर्यजमानसूत्रयोर्भिन्नत्वे चेत्यर्थ । ६ असामञ्जस्यम् अस्वारस्यम् । ७ ऐक्येनेति–कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यादर्शनादिति भाव । ८ इच्छेति–नहि सुखी दुःख भोक्तुमर्थयत इति दृष्ट लोक इति भाव । ९ प्रकृतिवशादिति–सर्वमपि कार्यं व्यवहारभूमौ प्रकृतितन्त्र दृष्ट तथा च सूत्रस्यापि प्रकृतिवशात् क्रत्वनुष्ठानेच्छा कर्ता हि भोक्तु फलावस्थस्य प्रकृति स च क्रतुमन्वतिष्ठत् तद्वशात्फलभूतस्यापि प्रजापते तदनुष्ठानेच्छेत्यर्थ । १० एतावतेति–यथोक्तकामनामात्रेणेत्यर्थ । ११ विवक्षिता–वक्ष्यमाणतया विवक्षितेत्यर्थ ।

स तपोऽतप्यत । तस्य 'श्रान्तस्य तप्तस्येति पूर्ववत् । 'यशो वीर्यमुदक्रामदिति स्वयमेव पदार्थमाह । प्राणाश्चक्षुरादयो वै यशो यशोहेतुत्वात्तेषु हि सत्सु ख्यातिर्भवति । तथा वीर्यं बलमस्मिञ्शरीरे । न ह्युत्क्रान्तप्राणो यशस्वी बलवान्वा भवति । तस्मात्प्राणा एव यशो वीर्यं चास्मिञ्शरीरे । 'तदेवं 'प्राणलक्षणं यशो वीर्यमुदक्रामदुत्क्रान्तवत् । 'तदेवं यशोवीर्यभूतेषु प्राणेषूत्क्रान्तेषु 'शरीरान्निष्क्रान्तेषु तच्छरीरं प्रजापतेः श्वयितुमुच्छूनभावं गन्तुमध्रियत मेध्यं चाभवत् । तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे 'मन आसीत् । 'यथा कस्यचित्प्रिये 'विषये दूरं गतस्यापि मनो भवति तद्वत् ॥६॥

ऽऽह—एवमिति । "श्रमकार्यमाह—स तप इति । चक्षुरादीनां यशस्त्वे हेतुमाह—यशोहेतुत्वादिति । तदेव साधयति—तेषुहीति । प्राणा एवेति तथाशब्दार्थः । सत्सु हि तेषु शरीरे बलं भवतीति पूर्ववदेव हेतुरुन्नेय । उक्तमर्थं व्यतिरेकद्वारा स्फोरयति—न हीति । प्राणानां यशस्त्वं वीर्यत्वं चोपसंहृत्य वाक्यार्थं निगमयति—तदेवमिति । तत्प्राणेष्वित्यादि व्याचष्टे—तदेवमित्यादिना । शरीरान्निर्गतस्य प्रजापतेर्मुक्तत्वमाशङ्क्याऽऽह—तस्येति ॥६॥

ऐसा पूर्ववत मन्त्रार्थ समझना चाहिए। प्रजापति के शरीर से यश और वीर्य—यह दो पदार्थ निकल गये। श्रुति यश और वीर्य पदो का स्वय अर्थ करती है—यश मे कारण होने से चक्षुरादि प्राण ही यश है; क्योकि उनके होने से विश्रुति होती है। इसी प्रकार प्राण ही इस शरीर मे वीर्य या बल है। प्राणो के उत्क्रमण होने पर कोई भी यशस्वी या बलवान नही होता। इसलिए प्राण ही इस शरीर मे यश और वीर्य है। वे इस प्रकार प्राणलक्षणरूप लिङ्ग शरीर के यश और वीर्य निकल गए। इस प्रकार यश और वीर्यभूत प्राणो के 'उत्क्रान्तेषु' यानी शरीर से निकल जाने पर प्रजापति शरीर मे 'अश्वयितुम्' अर्थात् फूलना रूप विकार होना 'अध्रियत' यानी आरम्भ हुआ और वह अपवित्र हो गया। उस प्रजापति के शरीर से निकल जाने पर भी मन उसका उसी शरीर मे अभिषक्त रहा। (क्योकि बिना एकात्मबोध के आसक्ति का त्याग असभव है) जैसे किसी प्रिय वस्तु के दूर चले जाने पर मन वही चला जाता है ॥६॥

१. श्रान्तत्वात् क्लिष्टस्य । २. यशोवीर्यमुदक्रामदिति—प्रजापते शरीरादेतद्द्वयमुत्क्रान्तवदित्यर्थ । ३ तदेवमिति—न्य बहूना प्राणानां यशोवीर्यत्वं न हि तेषां प्रत्येकं यशोवीर्यत्वम् कस्यचिद्भावेपीतरेषामभावे देहे स्यातिबलयोरनुपलम्भात् नापि मिलितानां तथात्वम् एकस्याप्यभावे तदभावप्रसङ्गादित्याशङ्क्य समादधुर्वार्तिकाचार्या तथाहि— "लिङ्गात्मेह यशोवीर्यमुभयं हि तदुद्भवमिति ।" इह स्थूलदेहेलिङ्गात्मनि यशोवीर्यशब्दयोर्वृद्धप्रयोगाभावान्नैवमित्याशङ्क्याह उभय हीति । यशश्च वीर्यं चेत्युभय लिङ्गात्मन सकाशादुद्भवति तदभावे तदयोगात्तस्मादुक्त लिङ्गात्मनस्तथात्वमित्यर्थ । ४. प्राणलक्षणमिति—लिङ्गशरीरमिति यावत् । ५ तदेवमिति—मूलस्थतच्छब्दस्यार्थ एवमिति । ६ आरभत । ७ अपवित्रम् । ८. अभिषङ्ग । ९. ननु देहान्निर्गतस्यापि प्रजापते किमिति तस्मिन्नेवासक्तिरासीत्, नहि बुद्धिपूर्वकारी दुःखायतनाय देहाय स्पृहयति तत्राह यथेति । तथा चोक्तं वार्तिके—"सङ्गत्यागो ह्यसभाव्यो विनैकात्म्यावबोधनादिति ।" 'रसवर्जमि'त्याद्या स्मृतिरत्रानुगुणेति योजयितु हि शब्द । १० स्त्र्यादौ । ११ श्रमकार्यम्—तापरूप श्रमकार्यमित्यर्थ ।

**सोऽकामयत मेध्यं म इदꣳ स्यादात्मन्व्यनेन स्यामिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम् । एष ह वा अश्वमेधं वेद य एनमेवं वेद । तमनवरुध्यैवामन्यत । तꣳ संवत्स-**

उसने कामना की कि यह मेरा शरीर यज्ञ के योग्य हो जावे, मैं इस शरीर से शरीर वाला होऊँ, क्योंकि वह शरीर (यश और वीर्य से हीन होकर) फूल गया था। अत उससे वह अश्व हो गया और वह यज्ञीय हुआ। इसीलिये यही अश्वमेधत्व है—अर्थात् उसे अश्वमेध नाम प्राप्त हुआ। जो इसे इस प्रकार जानता है, वही अश्वमेध को जानता है। उसने उसे बन्धनशून्य ही चिन्तन किया, फिर पूरे एक

स तस्मिन्नेव शरीरे गतमनाः सन्किमकरोदिति । उच्यते—[1]सोऽकामयत कथं मेध्यं मेधार्हं यज्ञियं मे ममेदं शरीरं स्यात् । किंचाऽऽत्मन्व्यात्मवांश्चानेन शरीरेण शरीरवान्स्यामिति प्रविवेश । [2]यस्मात्तच्छरीरं मद्वियोगाद्गतयशोवीर्यं सदश्वत्[3]श्वयत्ततस्तस्मादश्वः[4] समभवत् । [5]ततोऽश्वनामा प्रजापतिरेव साक्षादिति [6]स्तूयते । यस्माच्च पुनस्त-

सम्यग्ज्ञानाभावादासङ्गे सत्यपि न पुनस्तस्मिन्प्रवेशो युक्तः परित्यक्तपरिग्रहायोगादिति शङ्कते—स तस्मिन्निति । अज्ञानवशात्परित्यक्तपरिग्रहोऽपि संभवतीत्याह—उच्यत इति । वीतदेहस्य कामनाऽयुक्तेति शङ्कते—कथमिति । सामर्थ्यातिशयादशरीरस्यापि प्रजापतेस्तदुपपत्तिरिति मन्वानो ब्रूते—मेध्यमिति । कामनाफलमाह—इति प्रविवेशेति । [7]तथाऽपि कथं [8]प्रकृतनिरुक्तिसिद्धिरित्याशङ्क्याऽऽह—यस्मादिति । यच्छब्दो यस्मादिति व्याख्यातः । देहस्याश्वत्वेऽपि कथं प्रजापतेस्तथात्वमित्याशङ्क्य तत्तादात्म्यादित्याह—तत इति । अश्वस्य प्रजापतित्वेन स्तुतत्वात्तस्यो[9]पास्यत्व फलतीति भावः । [10]तथाऽपि कथमश्वमेधनामनिर्वचनमित्याशङ्क्याऽऽह—यस्माच्चेति । अतोऽस्तदात्मकस्य प्रजा-

उसी शरीर मे लगे हुए मन वाले उस प्रजापति ने क्या किया ? इस पर श्रुति कहती है—(देहासक्ति से छूट कर तादात्म्य बोध के लिए) उस प्रजापति ने कामना की कि मेरा यह शरीर 'मेध्य' यानी यज्ञ के उपयुक्त या यज्ञीय कैसे हो जाय ? तथा मैं 'आत्मन्वी' यानी आत्मानुरागी अर्थात् इस शरीर से शरीरवान् कैसे हो जाऊं ? उसने ऐसा सोच कर उसमें प्रवेश किया । अश्व इसलिए हुआ, क्योंकि वह शरीर मेरे वियोग से यशवीर्यहीन होकर 'अश्वयत्' अर्थात् फूल गया था। उसी शरीर

१ सोऽकामयतेति—"जातदेहाभिषङ्गः सस्तादात्म्यप्रतिपित्सया। मेध्यमित्यादिकं काम सोऽकामयत कामुकः । इति वार्तिके तद्देहासक्तिरेवोक्तकामनाया हेतुरिति ववतु कामुक इत्युक्तम् । २ यस्मादितिमूलस्य यच्छब्दस्यैवार्थोऽयम् । ३ अश्वयत्-उच्छूनतामगात् । ४ अश्व समभवदिति—तस्मिन्प्रविष्ट प्रजापतिरेवाश्वरूपोऽभवदित्यर्थः । ५ तत —शरीरतद्वतोरभेदविवक्षात इत्यर्थः । ६ स्तूयत इति—अयमश्व साक्षात्प्रजापति रेवेत्यश्व स्तूयत इत्यर्थः । ७ तथापीति—प्रजापतेर्विराज शरीरे प्रवेशेऽपीत्यर्थः । ८ प्रकृतेति—अश्वमेधनामेत्यर्थः । ९ उपास्यत्व फलतीति तथा च "तस्योषा वे"त्यादिग्रात्तनग्रन्थेनोपास्तिरभिहितेति । १० तथापि—एवमश्वनामनिर्वचने सिद्धेऽपि ।

रस्य परस्तादात्मन आलभत । पशून्देवताभ्यः प्रत्यौहत् । तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावे-

संवत्सर के बाद अपने लिए ही आलभन किया अर्थात् प्रजापति देवता सम्बन्धी पशुरूप उसका आलभन किया और अन्य पशुओं को भी अन्यान्य देवताओं के प्रति पहुँचाया। इसलिए आज भी याज्ञिक लोग सभी देवताओं के लिये मन्त्रों द्वारा संस्कृत प्रजापति सम्बन्धी पशु का आलभन करते हैं। यह जो सूर्य तपता है, यही अश्वमेध है, उस सूर्य का संवत्सर शरीर है, यह पार्थिव अग्नि अर्क है, तथा उसके ये

त्प्रवेशाद्‌गतयशोवीर्यत्वादमेध्यं स[1]मेध्यमभूत्तदेव, तस्मादेवाश्वमेधस्याश्वमेधनाम्नः [2]क्रतोरश्वमेधत्वमश्वमेधनामलाभः। [3]क्रियाकारकफलात्मको हि क्रतुः। स च प्रजापतिरेवेति [4]स्तूयते।

क्रतुनिर्वर्तकस्याश्वस्य प्रजापतित्वमुक्तमुषा वा अश्वस्य मेध्यस्येत्यादिना। [5]तस्यैवाश्वस्य मेध्यस्य प्रजापतिस्वरूपस्याग्नेश्च [6]यथोक्तस्य क्रतुफलात्मरूपतया [7]समस्योपा-

पत्तेरिति यावत्। देहो हि प्राणवियोगादश्वयत्पुनस्तत्प्रवेशाच्च [8]मेधार्होऽभूत्तः सोऽश्वमेधस्तत्तावास्मात्प्रजापतिरपि तथेत्यर्थः। ननु प्रजापतित्वेनाश्वमेधस्य स्तुतिर्नोपयोगिनी[9], अग्नेरुपास्यत्वेन प्रस्तुतत्वात्क्रतूपासना[10]भावाच्च आह—क्रियेति।

ननु क्रत्वङ्गस्याश्वस्याश्वमेधक्रत्वात्मनश्चाग्नेरुक्तरीत्या स्तुतत्वात्तदुपास्तेश्च प्रागेवोक्तत्वादेष ह वा अश्वमेधमित्यादिवाक्यं नोपयुज्यते तत्राऽऽह—क्रतुनिर्वर्तकस्येति। उक्तं च चित्यस्याग्नेस्तस्य प्राची दिगित्यादिना प्रजापतित्वमिति शेषः। [11]अश्वोपासनमग्न्युपासनं चैकमेवेति वक्तुमुत्तर वाक्यमित्याह—

मे (अभेदविवक्षा) से 'यह अश्व साक्षात् प्रजापति ही है' ऐसे उसकी स्तुति की जाती है। क्योंकि यश और वीर्य के चले जाने पर अपवित्र होने पर भी उसके पुनः प्रवेश से वह यज्ञार्ह हुआ। इसी से 'अश्वमेधस्य' अर्थात् अश्वमेध नामक याग का 'अश्वमेधत्वम्' अर्थात् अश्वमेध नाम हुआ। क्योंकि (विराडात्मकप्रजापति शरीररूप) क्रतु, क्रिया, कारक और फल रूप होता है। और उसी की ही प्रजापति रूप से स्तुति की जाती है।

१ पुनस्तत्प्रवेशान्मेध्यमभूदित्यन्वयः। २ क्रतोरिति—अत्र क्रतुशब्देन वपुषो विवक्षितत्वात्। प्रजापतिशरीरस्येत्यर्थः। ३ तत्साध्यतया तत्साधकतया च तत्तदात्मकत्वोक्तिरिति ध्येयम्। ४ स्तूयत इति—तथा च क्रतो विराडात्मप्रजापतिरूपत्वेनोपास्यत्वं सिध्यतीति भावः। ५ उक्तस्यैव। ६ प्रजापत्यात्मकस्य। ७ समस्योपासनमिति—अग्न्यश्वोपासनयोः पूर्वमुक्तयोरेकीकृत्येत्यर्थः। ८ मेधार्होऽभूदिति—अश्वमेधसंज्ञायोग्योऽभूदित्यर्थः। ९ न कुत्राप्युपकारिणी। १० अभावादिति—इहानुक्तत्वादित्यर्थः। ११ अश्वोपासनमित्यादि—अश्वोपासनमुषा वेत्यादिनोक्तम् उक्तं चाग्न्युपासनं नैवेह किञ्चनेत्यादिना तदुभयं न मिथो भिन्नं किन्त्वेकमेवेति विशिष्टोपासनं विधातुं प्रधानविधिमाहेत्यर्थः।

**तावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्याऽऽत्मा भवत्येतासां देवतानामेको भवति ॥७॥**

## इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

आदित्यादि लोक आत्मा है, ये अग्नि और आदित्य अर्क एवं अश्वमेध हैं, किन्तु वे मृत्युरूप देवता एक ही है। जो इस प्रकार (इस अश्वमेध को मृत्युरूप एक देवता) जानता है, वह पुनर्मृत्यु को जीत लेता है। इसे मृत्यु प्राप्त नहीं करता, मृत्यु तो उसकी आत्मा हो जाता है, तथा वह इन देवताओं में से ही कोई एक हो जाता है (उस उपासक को यही फल प्राप्त हो जाता है) ॥७॥

॥ इति द्वितीय ब्राह्मणम् ॥

---

सनं विधातव्यमित्यारभ्यते । पूर्वत्र क्रियापदस्य विधायकस्याश्रुतत्वात्क्रियापदापेक्षत्वाच्च प्रकरणस्यायमर्थोऽवगम्यते । एष ह वा अश्वमेधं क्रतुं वेद यः कश्चिदेनमश्वमग्निरूपमर्कं च यथोक्तमेवं वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विशिष्टं वेद स एषोऽश्वमेधं वेद नान्यः । तस्मादेवं वेदितव्य इत्यर्थः ।

---

तस्यैवेति । य एवमेतदवितेरदितित्व 'वेदेत्यादौ प्रागेव विहितमुपासनं किं पुनरा'रम्भेणेत्याशङ्क्याऽऽह —पूर्वत्रेति । यद्यपि विधिरदितित्वं वेदेति श्रुतस्तथाऽपि सगुणोपास्तिविधिर्न प्रधानविधिः । अत्र तु प्रधानविधिरुपास्तिप्रकरणत्वादपेक्ष्यते । अतोऽश्वमेधं वेदेति प्रधानविधिरिति भावः । तात्पर्यमुक्त्वा वाक्यभावाभाक्षराणि व्याकरोति—एष इति । यथोक्तमित्यु भयत्र' प्रजापतित्वमनुकृष्यते । तमनयव-ध्येत्यादि' प्रदश्यमानविशेषणम् । विधिरत्र स्पष्टो न भवतीत्याशङ्क्याऽऽह—तस्मादिति । अश्वमेधो विशेष्यत्वेन 'संबध्यते ।

---

"उषा वा अश्वस्य मेध्यस्य शिर" इत्यादि श्रुतिवाक्य से यागनिर्वर्तक उस अश्व का प्रजापतित्व कहा गया । प्रजापति स्वरूप मेध्य उक्त अश्व की ही, और यज्ञफलात्मकरूप से यथोक्त प्रजापत्यात्मक रूप अग्नि की (अश्व, अग्नि की) एकीभाव से उपासना करनी चाहिए—इससे आगे का ग्रन्थ प्रारम्भ किया जाता है। पूर्व श्रुति में विधिबोधक क्रियापद का श्रवण नहीं हुआ है, और क्योंकि (उपासनापरक श्रुति में) क्रिया पद की आवश्यकता होती है, इससे प्रकरण में (अग्नि अश्व की एकीकृत उपासना करनी चाहिये) यह अर्थ किया जाता है। वही इस अश्वमेध याग को जानता है, जो इसकी इस प्रकार उपासना करता है। जो कोई इस अश्व तथा पूर्वोक्त अग्नि रूप अर्क को आगे बतलाये जाने वाले एकीकृत रूप से प्रदर्शित विशेषण से विशिष्ट जानता है, वह इस अश्वमेध को जानता है, दूसरा नहीं। इसलिए इस अश्वमेध की इसी प्रकार उपासना करनी चाहिए, यह अर्थ है।

---

१ अयमर्थ इति—गमस्योपासन विधातव्यमित्ययमर्थ इत्यर्थं । २ तस्मादिति—तस्यैवाऽश्वमेधवदित्वादित्यर्थं ।
३ आदिना प्रथमकण्डिकोक्तार्कस्यार्कत्व वेदेत्यपि तृतीयकण्डिकोक्त य एव विद्वानिति ग्राह्यम् । ४ आरम्भेण एकत्वफलकेनारम्भेणेत्यर्थं । ५ उभयत्रेति—अग्नावश्वे चेत्यर्थं । ६ इत्यादिना प्रदर्श्यमानेत्यर्थं ।
७ तथा चैवंविधमश्वमेध प्रजापतित्वकाम उपासीतेति विशिष्टविधिवाक्यार्थं इति बोध्यम् ।

कथं, तत्र पशुविषयमेव तावद्दर्शनमाह । तत्र प्रजापतिर्भूयसा यज्ञेन भूयो यजेयेति कामयित्वाऽऽत्मानमेव [1]पशुं [2]मेध्यं कल्पयित्वा तं पशुमनवरुध्येवोत्सृष्टं पशुमवरोधमकृत्वेव मुक्तप्रग्रहमन्यताचिन्तयत् । तं संवत्सरस्य पूर्णस्य परस्तादूर्ध्वमात्मन आत्मार्थमालभत । प्रजापतिदेवताकत्वेनेत्येतदालभताऽऽलम्भनं कृतवान् । पशूनन्यान्ग्राम्यानारण्यांश्च [4]देवताभ्यो [5]यथादैवतं प्रत्यौहत्प्रतिगमितवान् । यस्माच्चैवं प्रजापतिर[6]मन्यत तस्मादेवमन्योऽप्युक्तेन विधिनाऽऽत्मानं पशुमश्वं मेध्यं कल्पयित्वा [7]सर्वदैवत्यो[8]ऽहं [9]प्रोक्ष्यमाण आलभ्यमानस्त्वहं मद्दैवत्य एव स्याम् । अन्य इतरे पशवो ग्राम्यारण्या यथादैवतमन्याभ्यो देवताभ्य आलभ्यन्ते मदवयवभूताभ्य एवेति [10]विद्यात् । [11]अत एवेदानीं [12]सर्वदैवत्यं प्रोक्षितं प्राजापत्यमालभन्ते याज्ञिकाः ।

---

एवंशब्दादप्रसिद्धार्थत्व भाति कुतो विधिरित्याह—कथमिति । एष ह वा अश्वमेध वेदेत्यादौ विवक्षितस्य [13]विधेर्भूमिका करोति—तत्रेत्यादिना । उपास्तिविधि[14]प्रस्ताव सप्तम्यर्थः । [15]कथ नु पशुविषय दर्शनं [16]तद्दर्शयति—तत्रेति । [17]एवम[18]नन्तरवाक्ये प्रवृत्ते सतीति यावत् । [19]अथ विवक्षितविधिसभिदधाति—यस्माच्चेति । प्रजापतिरित्थं फलावस्थायाममन्यतेत्यत्र किं प्रमाणमित्याशङ्क्य संप्रति तत्कार्यभूतासु [20]प्रजासु तथाविधचेष्टादृष्टिरित्याह—अत एवेति । प्रोक्षितं मन्त्रसंस्कृतं पशुमिति यावत् ।

---

किस प्रकार उपासना करनी चाहिए ? इस सन्दर्भ मे श्रुति पहले पशु विषयक दर्शन का ही प्रतिपादन करती है । "मैं महान् अश्वमेध याग से पुन यजन करूँ" इस प्रकार प्रजापति ने कामना करके अपने शरीर मे ही यज्ञीय पशु की कल्पना करके उस पशु को 'अनवरुध्येव' यानी उसे छूटा हुआ माना अथवा उसे बिना अवरुद्ध किये हुए बिना बन्धन के है—ऐसे 'अमन्यत्' अर्थात् चिन्तन किया। पूरे एक संवत्सर के बाद उसका अपने लिए ही वध किया अर्थात् प्रजापति देवता रूप से उसका आलम्भन किया । स्व अवयव भूत अग्नि आदि देवताओ के लिए भी, जिस देवता के लिए जो जो शास्त्र मे विधान है, उसी के अनुसार अन्यान्य ग्राम्य और वन्य पशु प्राप्त कराये । क्योकि प्रजापति ने इस प्रकार उपासना की, इसलिए दूसरे को भी उक्त विधि से अपने को यज्ञार्ह पशु अश्व मानकर "वेदमन्त्रो द्वारा अभिषिक्त मेरा शरीर सभी देवताओ के लिए हो" किन्तु वध किये जाने पर "केवल अपने ही देवता के लिए होऊँ ।" ऐसा जाने । तथा दूसरे ग्राम्य और वन्य पशु, जिस देवता के लिए जिस-जिस का शास्त्र में विधान है—उसी के अनुसार मेरे ही अवयवभूत अन्यान्य देवताओ के लिए—आलम्भन किये जाते है—ऐसी उपासना करे । प्रजापति के द्वारा ऐसे करने से ही, सब देवो के उद्देश्य से अभिषिक्त किये हुए प्रजापति सम्बन्धी का याज्ञिक लोग आलम्भन करते हैं ।

---

१ स्वशरीरम् । २ अश्वम् । ३ यज्ञियम् । ४ देवताभ्य इति—स्वावयवभूताभ्योऽग्न्यादिदेवताभ्य इत्यर्थं । ५ यथादैवतमितिशास्त्रे यद्यद्देवताकत्वेन यद्यदुक्त तदनतिक्रमेणेत्यर्थं । ६ उपास्त । ७ सर्वदेवत्य -सर्वदेवतार्थ । ८ अहं मच्छरीरम् । ९ प्रोक्ष्यमाण इति—प्रोक्ष्यमाणेतरद्वयस्यापि प्रजापतिरूपत्वादभेदोक्ति । १० उपासीत । ११ अत एव प्रजापतिना तथाकरणादेव । १२ सर्वदेवताद्देश्यम् । १३ विधे—विशिष्टस्य विधेरित्यर्थ । १४ प्रस्ताव प्रकरणम् । १५ किंस्वरूपम् । १६ तदिति—विशिष्टविधिरूपमित्यर्थं पशुविषय विशिष्टविधिरूप दर्शन कथमित्यन्वय । १७ एव विशिष्टविधिपरत्वेन १८ अनन्तर वाक्ये—एष ह वेत्यादिवाक्ये । १९ अथेति -भूमिकां कृत्वेत्यर्थ २० कारणानुविधायित्वात्कार्यस्येति भाव ।

'एवमेष ह वा अश्वमेधो य एष तपति यस्त्वेवं पशुसाधनकः क्रतुः स एष साक्षात्फलभूतो निर्दिश्यत एष ह वा अश्वमेधः । कोऽसौ । य एष सविता तपति जगदवभासयति तेजसा । तस्यास्य क्रतुफलात्मनः संवत्सरः कालविशेष आत्मा शरीरं तन्निर्वर्त्यत्वात्संवत्सरस्य । तस्यैव क्रत्वात्मनोऽग्निसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देशः । अयं पार्थिवोऽग्निरर्कः साधनभूतः । तस्य चार्कस्य क्रतौ चित्यस्येमे लोकास्त्रयोऽप्यात्मानः शरीरावयवाः । तथाच व्याख्यातं तस्य प्राची दिगित्यादिना । तावग्न्यादित्यावेतौ

'फलावस्थप्रजापतिवदित्येवंशब्दार्थः । "उपासनविधिरुक्तः संप्रति प्रतीकमादाय "तात्पर्यमाह—एष इति । द्विविधो हि क्रतुः "कल्पितपशुहेतुको बाह्यतद्धेतुकश्च, स च द्विप्रकारोऽपि फलरूपेण स्थितः सवितैवेत्युपास्तिफलं वक्तुमेतद्वाक्यमित्यर्थः । विशेषोक्तिं विना नास्ति बुभुत्सोपशान्तिरित्याह—कोऽसाविति । क्रतुफलात्मकः सविता मण्डलं देवता वेति संदेहे द्वितीयं गृहीत्वा तस्येत्यादि व्याचष्टे—तस्यास्येति । "आदित्योदयास्तमयाभ्यामहोरात्रादिद्वारा संवत्सरव्यवस्थानात्तन्निर्मातुस्तस्य युक्तं तत्तादात्म्यमित्यर्थः । क्रतोरादित्यत्वमुक्त्वा तदङ्गस्याग्नेस्तद्वक्तुमयमग्निरर्क इति वाक्यं तस्यार्थमाह—तस्यैवेति । ननु पूर्वोक्तस्यैवाग्नेरादित्यत्वं कुतो नियम्यतेऽन्यश्चित्योऽ"ग्निरन्यश्चाग्निरादित्यः किं न स्यादित्याशङ्क्याऽऽह—तस्य चेति । "तथाऽपि कथं तस्यैवाऽऽदित्यत्वं तत्राऽऽह—तथा चेति । तस्य प्राचीत्यादिना लोका-

"पूर्वान्वयी यह वही अश्वमेध है, जो तपता है" । जो इस प्रकार पशुसाध्य याग है, वही "यह वही अश्वमेध है" इस वाक्य से साक्षात् फलस्वरूप बतलाया जाता है । वह कौन है ? जो यह (सबको दीखने वाला) सूर्य तपता है अर्थात् अपने प्रकाश से जगत् को प्रकाशित करता है । उस इस सविताविशेष्यक क्रतुफलरूप सूर्य का संवत्सर—कालविशेष आत्मा स्वरूप है; क्योंकि वही संवत्सर का निर्वाहक होता है । उस सविता फलरूप यज्ञात्मा का यज्ञफल अग्निसाध्यत्व होने से उसका यज्ञरूप से निर्देश किया गया है । यह पार्थिव अग्नि, देवतात्वस्वरूप से क्रतु के अङ्गभूत होने से अर्क है । यज्ञ में चयन किए जाने वाले उस अर्क के भू , भुवः, स्व. तीनों लोक 'आत्मान'-यानी शरीर के अवयव है ।

१. पूर्वान्वयी । २. सर्वप्रत्यक्षः । ३ तेजसेति-एष एवोभयविधोऽश्वमेध. फलात्मनावस्थितो दृश्यत इति शेष । ४. सविताविशेष्यः । ५. स्वरूपम् । ६. तस्यैवेत्यादि-तस्यैव-सवितुरेव फलस्य फलरूपस्य फलरूपत्वादिति यावत् क्रतुस्वरूपेणैव-क्रतुरूपत्वेनैव साध्यसाधनयोरभेदारोपात् क्रत्वात्मनश्च सतस्तस्याग्निसाध्यत्वात् अयं पार्थिवोऽग्निरर्क सूर्य इति निर्देश इत्यन्वयः । ७ देवतात्वेन क्रत्वङ्गभूत । ८. लोका - भूरादय । ९. पूर्वान्वयि वाक्यमिदम् । १०. नन्वश्वमेधोपासनमत्र विधित्सितम् तस्य च विधिरतिक्रान्त. तत्किमुत्तरेण वाक्येनेत्यभिप्रेत्याह-उपासनविधिरिति । ११. तात्पर्यमिति अश्वमेधोपासनफल वक्तुमुत्तर वाक्यमिति तात्पर्यमित्यर्थ. । उपायोपदेशानन्तरमुपेयोपदेशस्यावसरत्वात् फलोपदेशमन्तरेणाकाङ्क्षानुपशमादिति यावत् । १२ कल्पितपशुहेतुक इति—यो मनसा सम्पादितः पूर्वोक्ताश्वाग्निसाधनोऽश्वमेध. स आद्यः यश्च कायेन निष्पादितो बाह्यादश्वादिहेतुक. स द्वितीय इत्यर्थः । ननु कथमादित्यस्य उभयविधाश्वमेधत्वम् न हि तस्य मनोदेहनिर्वर्त्यक्रियात्वम्, मैवम् उभयी तावदश्वमेधक्रिया मानसी कायिकी च तदनुष्ठानात् योऽपूर्वाख्यपरिणामस्तद्द्वारा सवितैव मानसोऽश्वमेधो य. पूर्वमुषा वेत्यादिनाऽनुक्रान्तः कायिकोऽपि स एव यं साक्षादश्वादिभिर्निर्वर्तयति "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" इति स्मृतेः । १३. कथमादित्यस्यात्मा संवत्सर. न हि कालेन परिच्छिन्नो न तदभिन्नो भवति तत्राह—तन्निर्वर्त्यत्वादिति । १४. आदित्यरूपोऽग्निरादित्यादग्नेरभिन्न इति । १५. तथापीति—अत्राग्नेर्लोकात्मकत्वकथनेऽपीत्यर्थः ।

यथाविशेषितावर्काश्वमेधौ [1]क्रतुफले । [2]अर्को यः पार्थिवोऽग्निः स साक्षात्क्रतुरूपः क्रियात्मकः क्रतोरग्निसाध्यत्वात्तद्रूपेणैव निर्देशः । क्रतुसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देश आदित्योऽश्वमेध इति ।

तौ साध्यसाधनौ क्रतुफलभूतावग्न्यादित्यौ सा उ पुनर्भूय एकैव देवता भवति । का सा, मृत्युरेव । पूर्वमप्येकैवाऽऽसी[3]त्क्रियासाधनफलभेदाय विभक्ता । तथा चोक्तम् "स [4]त्रेधाऽऽत्मानं व्यकुरुत" इति । सा पुनरपि [5]क्रियानिर्वृत्त्युत्तरकालमेकैव देवता भवति

रमकत्वं चित्याग्नेरुक्तं तदिहाप्युच्यते 'तस्मात्तस्यैवात्राऽऽदित्यत्वमिष्टमित्यर्थः । [6]अग्न्यादित्ययोर्भेदस्य लोकवेदसिद्धत्वात्र तयोरेकेन क्रतुना तादात्म्यमित्याशङ्क्याऽऽह—ताविति । यथाविशेषितत्वमादित्य-क्रतुरूपत्वम् । कुतस्तस्य 'चार्कस्य क्रतुरूपत्वं साधनत्वेन भेदादित्याशङ्क्यो'पचारादित्याह—क्रियात्मक इति । "तथाऽपि कथमादित्यस्य क्रतुतादात्म्योक्तिरित्याशङ्क्याऽऽह—क्रतुसाध्यत्वादिति ।

[7]नन्वादित्यस्य क्रतुफलत्वेन क्रतुत्वे सत्यपि तद्धेतोरग्नेरादित्येन सहस्तादात्म्यायोगादयुक्तमग्ने-रादित्यत्वमित्याशङ्क्याऽऽह—ताविति । क्रतुफलत्वात्तदात्मा सविता तद्धेतुश्चित्यो[8]ऽग्निस्ताबु[9]क्त[10]विभा-गाद्वय[11]रूपादितोपासनादि[12]व्यापारो सन्तावेकैव प्राणाख्या देवतेति[13] तयोरैक्योक्तिरित्यर्थः । एकैवेत्युक्ते प्रकृतयोरग्न्यादित्ययो[14]रन्यतरपरिशेषं शङ्कते—का सेति । कथं द्वयोरेकत्वमेकत्वे वा कथं द्वित्वं तत्राऽऽह—पूर्वमपीति । उक्तेऽर्थे वाक्योपक्रममनुकूलयति—तथा चेति । सा पुनरित्यत्र पुनरित्यादेरर्थं निगमयति

इसीमे "पूर्व दिशा उसका शिर है" इत्यादि वाक्यो से पहले व्याख्या की जा चुकी है। वे ये अग्नि और आदित्य, यथोक्त विशेषणो से अर्क और अश्वमेध क्रमश यज्ञ और फल हैं। अर्क जो पार्थिव अग्नि है, वह साक्षात् यज्ञ स्वरूप है। याग अग्निसाध्य है, इसलिए उसी रूप से उसका निर्देश किया जाता है। फल के यज्ञसाध्य होने से आदित्य अश्वमेध रूप है, ऐसा यज्ञ रूप से उसका निर्देश किया जाता है।

वे यज्ञरूप अग्नि और फलभूत आदित्य साध्य और साधन हैं। अग्नि और आदित्य तादात्म्य से वह एक ही देवता है। वह देवता कौन है? मृत्यु ही है। उस एक मृत्यु देवता का ही अश्वमेध क्रिया अश्वादि साधन एवं मृत्यु फल भेद से विभाग हो गया। जैसे कहा भी है—"उस मृत्यु ने तीन प्रकार

१ क्रतुफले इति-एक क्रतुरूपोऽग्निरपरस्य फलभूतोऽर्क इत्यर्थः । २ तावानीत्यादिमप्रहवाक्यं व्याचष्टे अर्को य इत्यादिना । ३ क्रियेत्यादि क्रिया-अश्वमेध, साधनम्-अश्वादि । फलं-मृत्युरेव । त्रेधा परस्परं भेदाय भिन्न-त्वेन व्यवहाराय वा कारकफलभेदाय विभक्ता इति । ४ स त्रेधेति इत्थं मृत्योर्विभागे सत्येव सर्वोऽपि भेद-व्यवहार इति भावः । ५ क्रियादीति पाठान्तरम् आदिना कारकादि । ६ तस्मादिति—उपक्रमानुरोधात् उपक्रमोपसंहारयोरेकवाक्यत्वादित्यर्थः । ७ नन्वादित्य क्रतुरुक्तः तद्धेतुश्चाग्निस्तत्कथं तयोः साध्यसाधनयो रैक्यमित्यभिप्रेत्याह—अग्न्यादित्येति । ८ आहेति—आदित्यचित्याग्न्योरुभयोरेकत्वमनूद्य मृत्युना मन सूत्रेण सह एकत्वमाहेत्यर्थः । ९ अग्नेरित्यर्थः । १० साध्यसाधनयोरभेदारोपादित्यर्थः । ११ चित्या-ग्नेरारोपात्क्रतुरूपत्वेऽपि । १२ अग्निरिति—तदात्मेत्यनुषङ्गः । १३ स त्रेधाऽऽत्मानं व्यकुरुतेत्युक्तविभागादित्यर्थः । १४ विभागावृत्पत्तिरिति पाठान्तरम् अर्थस्त्वविशिष्ट उभयत्रापि । १५ व्यापारावधि कृतकर्तव्यावित्यर्थः । १६ इति—एतदर्थम् । १७ अन्यतरपरिशेषमिति—एकस्य अपरस्मिन्नन्तर्भावेनैव उभयोरेव देवतात्वं भवितुमर्हतीति कस्य कस्मिन्नन्तर्भावेन मुख्यत्वेन परिशेष इत्याशयेन शङ्कत इत्यर्थः ।

मृत्युरेव फलरूपः। यः पुनरेवमेनमश्वमेधं मृत्युमेका देवतां वेदाहमेव मृत्युरस्म्यश्वमेध एका देवता मद्रूपाश्वाग्निसाधनसाध्येति। सोऽपजयति पुनर्मृत्युं पुनर्मरणं सकृन्मृत्वा पुनर्मरणाय न जायत इत्यर्थः। अपजितोऽपि मृत्युरेनं पुनराप्नुयादित्याशङ्कयाऽऽह—नैनं मृत्युराप्नोति। कस्मात्। मृत्युरस्यैवंविद आत्मा भवति। किंच मृत्युरेव फलरूपः सन्नेतासां देवतानामेको भवति तस्यैतत्फलम् ॥७॥

इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

अथ प्रथमाध्यायस्य तृतीयं ब्राह्मणम्।

द्वया हेत्याद्यस्य कः संबन्धः। कर्मणां ज्ञानसहितानां परा गतिरुक्ता मृत्वा-

---

—सा पुनरिति। ननु फलकथनार्थमुपक्रम्य प्राणात्मनाऽन्यादित्ययोरेकत्वं वदता प्रक्रान्तं विस्मृतमिति नेत्याह—य पुनरिति। एकरूपमभिन्नत्वम् ॥७॥

---

से अपना विभाग किया"—। पुन वह ही क्रियाकारकादि निष्पत्ति के लिए, उत्तरकाल मे एक ही देवता मृत्युलक्षण प्राणाख्य फलरूप हो जाता है। जो इस अश्वमेध को इस प्रकार मृत्युरूप एक देवता जानता है, अर्थात् 'मैं ही अश्वमेध रूप मृत्यु हू, अश्व और अग्नि रूप साधन से सिद्ध होने वाला एक मृत्युरूप देवता मेरा स्वरूप है' इस प्रकार जो उपासना करता है, वह पुनर्मृत्यु को जीत लेता है अर्थात् एक बार मर कर पुन मरने के लिए उत्पन्न नही होता। पराजित होने पर भी इसे मृत्यु पुन ग्रहण कर लेगी—ऐसी शका होने पर कहते है—इसे मृत्यु पुन प्राप्त नही करती। ऐसा क्यो? क्योकि इस प्रकार उपासना करनेवाले का मृत्यु आत्मा हो जाता है। फलान्तर भी है कि उपासक मृत्यु ही फलरूप होकर इन देवताओ मे एक हो जाता है—यही फल उपासक को मिलता है ॥७॥

इस प्रकार प्रथम अध्याय का द्वितीय ब्राह्मण पूर्ण हुआ।

---

१ मृत्युरेवेति मृत्युलक्षणप्राणाख्यैवेत्यर्थः। २ मन्त्रवत्। ३ आत्मा भवतीति-ननु अशनाया हि मृत्युरित्यशनायापिपासावती सवस्थूलप्रपञ्चसहर्त्री या मृत्युर्भिदता प्राणाख्योपास्या देवतोक्ता सैव देवता तत्कर्तुत्यायादुपासितुरात्मा चेत्तर्हि क्षुत्पिपासादित सुदुःखी स्यात् तन्नार्थोऽनर्थमरेणोपासनेनेति चेन्न मृत्योर्हि साक्षादात्मा निरुपाधिको जरादिवर्जित स चेदुपासितुरात्मा कथ सर्वोपद्रवरहितो न स्यात् अशनायादिना चोपलक्षणेन तस्य सर्वसहर्तृत्वमेवेष्टमिति भाव। तदुक्त वार्तिके— 'अशनायावती योक्ता मृत्यु सर्वाशनस्मरा। सैवात्मा विदुष साक्षादात्मा स्यादजरोऽमर ॥" इति यद्यपि विदुषो मृत्युरात्मा तथापि तस्य देहमबन्धादाध्यात्मिक मृत्युसबन्ध स्यादिति चोद्य तु 'नैन मिति वाक्येन दत्तोत्तरम् तर्हि विदुष शरीरमविनाशि तिष्ठेत् ततस्तस्य शरीरस्वव्याहतिरित्यपि चोद्य 'मृत्युरस्य'ति वाक्येन दत्तसमाधान प्राणात्मना स्थितो विद्वान् वर्तमानदेहमारब्धमन्ते जहाति ततश्च तस्य सर्वसम्बन्धविनिर्मोको भवति न पुनर्मरणार्थं देह गृह्णाति इति भाव। तदुक्त वार्तिके— 'नैनमाध्यात्मिको मृत्युस्तन्मृत्युत्वादवाप्नुयात्। सकृन्मृत्वाऽसुदेहेन मुच्यते सर्वबन्धनादिति" ॥ अत्र तन्मृत्युत्वादिति-अजरामरात्मना स्थितस्योपासितमृत्योर्ऽपि मृत्युत्वादित्यर्थ। असुदेहेनेति प्राणात्मना स्थित इत्यर्थ। ४ ननु विदुष सर्वसम्बन्धविनिर्मोको न युक्तोऽन्यादि प्रेप्यत्वादित्याशङ्क्यानन्तरवाक्यार्थकथनेन परिहरति किं चेति-फलान्तरमाह-किञ्चेति। उपासक इति शेष। ५ "तृतीयब्राह्मणे प्राण क्षुद्धयादिगुणसयुत। हिरण्यगर्भप्राप्त्यर्थमुपास्य प्रतिपादित ॥" इति वार्तिकसारे। ६ पर। ७ फलम्। ८ मृत्य्वात्मभाव इति। मत्युपाणस्याभाविकामङ्गलक्षणपाप्मस्वरूपमृत्युव्यावृत्त्यर्थमत्रत्यमृत्युशब्दार्थमाहुर्वार्तिककाराचार्या तथाहि—"आध्यात्मिकपरिच्छेदव्यावृत्तियत्समाश्रयात्। स मृत्युर्मृत्युशब्देन फलभूतोऽत्र भण्यत" इति यस्य सूत्रप्रयात्मत्वेन समाश्रयात्। परिच्छेदव्यावृत्ति देहपरिच्छेदाभिमाननिवृत्तिरित्यर्थ।

त्मभावोऽश्वमेध'गत्युक्त्या । अथेदानीं मृत्य्वात्मभावसाधनभूतयोः कर्मज्ञानयोर्यत' उद्भवस्त-त्प्रकाशनार्थमुद्गीथब्राह्मणमारभ्यते । ननु मृत्य्वात्मभावः पूर्वत्र ज्ञानकर्मणोः फलमुक्तम् । 'उद्गीथज्ञानकर्मणोस्तु मृत्य्वात्मभावातिक्रमणं फलं 'वक्ष्यति । 'अतो 'भिन्नविषयत्वात्फ-लस्य न पूर्वकर्मज्ञानोद्भवप्रकाशनार्थमिति चेत् । नायं दोषः । 'अग्न्यादित्यात्मभावत्वादु-

---

ब्राह्मणान्तरमवतार्य तस्य पूर्वेण संबन्धाप्रतीतेर्न सोऽस्तीत्याक्षिपति—द्वया हेत्याद्यस्येति । विवक्षितं संबन्धं वक्तुं वृत्तं कीर्तयति—कर्मणामिति । सा काष्ठा सा परा गतिरिति श्रुतेरुक्ता परा गतिर्मुक्तिरित्याशङ्क्याऽऽह—मृत्य्वात्मभाव इति । अश्वमेधोपासनस्य साश्वमेधस्य केवलस्य वा फलमुक्तं नोपास्त्यन्तराणां कर्मान्तराणां चेत्याशङ्क्याश्वमेधफलोक्त्योपास्त्यन्तराणां केवलानां समुच्चितानां च फलमुपलक्षितमित्याह—अश्वमेधेति । वृत्तमनूद्योत्तरब्राह्मणस्य तात्पर्यमाह—अथेति । ज्ञानयुक्तानां कर्म-णां संसारफलस्य प्रदर्शनानन्तरमिति यावत् । ज्ञानकर्मणोरुद्भावकस्य प्राणस्य स्वरूपं निरूपयितुं ब्राह्मणमित्युत्थाप्योत्थापकत्वं संबन्धमुक्तमाक्षिपति—नन्विति । मृत्युमतिक्रान्तो दीप्यत "इति मृत्योर-तिक्रमस्य वक्ष्यमाणज्ञानकर्मफलत्वात्पूर्वत्र च तद्भावस्य तत्फलस्योक्तत्वादुभयस्यापि फलस्य भेदात्पूर्वो-

---

प्रथम अध्याय तृतीय ब्राह्मण

"द्वया ह प्राजापत्या" इस मन्त्र से प्रारम्भ होने वाले इस ब्राह्मण का पूर्वब्राह्मण से क्या सम्बन्ध है? अश्व के फल द्वारा ज्ञानसहित कर्मों की मृत्युरूपता की प्राप्तिरूप चरम फल बतलाया गया है। अब यहा मृत्युस्वरूपता के साधनभूत कर्म और ज्ञान का जिस वक्ष्यमाण पाप्मस्वरूप से उदय होता है, उसी को स्पष्ट करने के लिए उद्गीथ ब्राह्मण का आरम्भ किया जाता है। (उत्थाप्य उत्थापक भाव से) अब शका होती है—पहले तो ज्ञान और कर्म का फल मृत्य्वात्मभाव है—ऐसा कहा। किन्तु उद्गीथ ब्राह्मणोक्त ज्ञान और कर्म का मृत्य्वात्मभाव का अतिक्रमण फल बतलाया जायगा। अत ज्ञान कर्म के भेद से फल के भिन्न-उद्देश्यक होने के कारण पूर्व कर्मज्ञान के उद्भावक होने से प्रकाशन के लिए

---

१ गति —फलम् । २ यत उद्भव इति - यस्मात्कारणात वक्ष्यमाणपाप्मभिरनभिभव इत्यर्थ । ३ उद्गी-थज्ञानकर्मणो - उद्गीथब्राह्मणोक्तयोस्तयोरित्यर्थ । ४ बृ०उ० १ ३ १२ । ५ अत इत्यादि - अत इति भेदादित्यर्थ । ज्ञानकर्मणोरिति शेष । ६ भिन्नविषयत्वादिति - भिन्नोद्देश्यकत्वादित्यर्थ । तथा च पूर्वोत्तर-ब्राह्मणज्ञानकर्मणोर्भिन्नविषयत्वात् फलस्य भेदादित्येवमन्वय । ७ उद्भावकेत्यर्थ । ८ अग्न्यादीति पाठान्त-रम् । ९ उपलक्षितमिति—उपलक्षणतयोक्तमित्यर्थं नत्वश्वमेधफलोक्तिस्तन्मात्रफलसग्रहार्था सर्वस्मात्फलबहुपा-यताभेर्वैराग्यस्येष्टत्वादिति शेष, अश्वमेधफलोक्तेरपि ततो वैराग्यार्थत्वात् । ननु ज्ञानयुक्ताना कर्मणा सूत्राप्तिफलत्वे कथ पितृलोकाद्याप्ति, न ह्येकमेव साधन ब्रह्मलोक पितृलोकादि च प्रापयति तत्कर्मणा पितृलोक इत्यादिवाक्यविरुद्धमित्याशक्य समाहित वार्तिके तथाहि—"अल्पीय फलसप्राप्तिरल्पीयोज्ञानकर्मत । अल्पत्व-मभिभूते स्यात्तयोरासुरपाप्मभिरिति ।" महत्तराभ्या ज्ञानकर्मभ्या समुच्चिताभ्या केवलाद्वा तथाविधज्ञानाद ब्रह्मलोक । ताभ्यामेवाल्पीयोभ्या पितृलोकादीति व्यवस्थाया न श्रुतिविरोधोऽस्तीत्यर्थ । ननु ज्ञानकर्मणो-रल्पत्व नाम न्यूनफलत्व परिच्छिन्नफलत्व वा । नाद्य परस्पराश्रयात् । नेतर सूत्राद्युपासनस्यापि तथात्वेन पितृलोकादिफलत्वप्रसङ्गात् । अत आह-अल्पत्वमिति । तयोर्ज्ञानकर्मणोरल्पत्वम् आसुरपाप्मभिरभिभूत स्यात् तथा च तदभिभूतत्वमेव तदल्पत्वमित्यर्थ । १० अनभिभूतत्वकारणस्य पाप्मभिर्वक्ष्यमाणे । ११ उत्थाप्यत्यादि-पूर्वोक्तज्ञानकर्मणी अनभिभूत एव सति ब्रह्मलोकायाल नान्यथेत्यवगतवत इयमुत्तिष्ठत आकाक्षा तयोर्यदाश्रयादनभि-भवस्तदिव स्वरूपमित्युत्थापकत्वोत्थाप्यत्वभाव । १२ बृ०उ० १ ३ १२ ।

**द्वया ह प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥१॥**

प्रजापति के देव और असुर—ऐसे दो प्रकार के पुत्र थे। उनमे देवगण थोडे ही थे और असुरगण अधिक थे (क्योकि स्वाभाविक कर्म-जन्य प्रवृत्ति अधिक होती है और शास्त्र जन्य प्रवृत्ति अल्प होती है), इन लोको मे वे दोनो ज्ञानसाध्य लोक के निमित्त परस्पर ईर्ष्या करने लगे, उनमे से देवो ने कहा—कि यज्ञ मे उद्गीथ के द्वारा हम असुरो को जीतेंगे ॥१॥

[1]दुगीथफलस्य पूर्वत्राप्येतदेव फलमुक्तमेतासां देवतानामेको भवतीति । [2]ननु मृत्युमतिक्रान्त इत्यादि विरुद्धम् । न । स्वाभाविकपाप्मासङ्गविषयत्वाद[3]तिक्रमणस्य ।

[4]कोऽसौ स्वाभाविकः पाप्मासङ्गो मृत्युः । कुतो वा तस्योद्भवः । केन वा तस्यातिक्रमणम् । कथं वेत्येतस्यार्थस्य प्रकाशनायाऽऽख्यायिकाऽऽरभ्यते । कथम्—

त्तरयोर्ज्ञानकर्मणोर्विषयशब्दितोद्देश्यभेदाच्च पूर्वोक्तयोस्तयोरुद्भवकारणप्रकाशनार्थं ब्राह्मणमित्यर्थः । पूर्वोत्तरज्ञानकर्मफलभेदाभावादेक[7]विषयत्वात्तदुद्भावकप्रकाशनार्थं ब्राह्मणं युक्तमिति परिहरति—नायमिति । वाक्यशेषविरोधं शङ्कित्वा दूषयति—नन्वित्यादिना । स्वाभाविकः शास्त्रानाधेयो योऽयं पाप्मा विषयासङ्गरूप स मृत्युस्तस्यातिक्रमणं वाक्यशेषे कथ्यते नहि हिरण्यगर्भाख्यमृत्योरत पूर्वोक्तज्ञानकर्मभ्यां [8]तुल्यविषयत्वमेवोत्तरज्ञानकर्मणोरि[9]त्यर्थः ।

ज्ञानकर्मणोरुद्भावक भवतु ब्राह्मणमारभ्यतामाख्यायिका तु किमर्थेत्याशङ्क्य तस्यास्तात्पर्यमाह—कोऽसाविति । कथं यथोक्तो ब्राह्मणाख्यायिकयोरर्थः शक्यो ज्ञातुमित्याकाङ्क्षा [9]निक्षिप्याक्षराणि

नही हो सकते । (शका का परिहार करते है—)यह दोष नही है । क्योकि उद्गीथ ब्राह्मणोक्त ज्ञान कर्म फल का प्रयोजन है—अग्नि एव आदित्य आत्मभाव । पहले भी "वह उपासक इन देवताओ मे से कोई एक देवता हो जाता है" —इस वाक्य से यही फल बतलाया है ।(पूर्वोत्तरज्ञानकर्म की अग्न्यादिदेवतात्मभाव फलरूपता होने से) यदि कहो 'मृत्यु को अतिक्रमण कर लेता है—यह कथन विरुद्ध है । ऐसा कहना ठीक नही । अतिक्रमण वाक्य का "स्वाभाविक पाप्मासङ्गरूप मृत्यु का अतिक्रमण"—यह अर्थ है ।

वह शास्त्र अनाधेय पाप्मासङ्ग मृत्यु क्या है? उसकी उत्पत्ति कैसे होती है? किससे उसका अतिक्रमण होता है? किस प्रकार इस अर्थ का प्रतिपादन करने के लिए आख्यायिका का प्रारम्भ किया जाता है? किस प्रकार?—'द्वया'—अर्थात् दो प्रकार के थे । 'ह' यह निपात पूर्व प्रसङ्ग का द्योतक है ।

१ उदगीथब्राह्मणात्त ज्ञानकर्मफलस्य । २ नन्विति - पूर्वोत्तरज्ञानकर्मणोरग्न्यादिदेवतात्मभावफलत्व इति दोष । ३ अतिक्रमणस्य - अतिक्रमणवाक्यस्य । ४ कोऽसावित्यादि-प्रथम स्वरूपप्रश्न । द्वितीय कारणप्रश्न । तृतीय अतिक्रमकरणप्रश्न । चतुर्थ इतिकर्तव्यतापरपर्यायसामग्र्यभिन्नोपकरणप्रश्न । ५ अनभिभूतत्वकारणेत्यर्थ । ६ उद्देश्यवत्त्वात् । ७ एकोद्देश्यवत्त्वम् । ८. एव च हिरण्यगर्भव्याप्तिर्महाफलमवान्तरफल तु पाप्ममृत्युनिक्रम इति विवेक । ९ उत्थाप्य ।

[1]द्वया द्विप्रकाराः । हेति पूर्ववृत्तावद्योतको निपातः । वर्तमानप्रजापतेः पूर्वजन्मनि यद्वृत्तं तदवद्योतयति हशब्देन । प्राजापत्याः [2]प्रजापतेर्वृत्तजन्मावस्थस्यापत्यानि प्राजापत्याः । के ते । देवाश्चासुराश्च । तस्यैव प्रजापतेः प्राणा वागादयः । कथं पुनस्तेषां देवासुरत्वम् । उच्यते—शास्त्रजनितज्ञानकर्म[3]भाविता द्योतनाद्[4]देवा भवन्ति । त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुराः । स्वेष्वेवासुषु [5]रमणात्सुरेभ्यो वा देवेभ्योऽन्यत्वात् ।

---

व्याकरोति—द्वयमित्यादिना । निपातार्थमेव स्फुटयति—वर्तमानेति । प्रजापतिशब्दो भविष्यद्वृत्त्या यजमानं गोचरयतीत्याह—वृत्तेति । इन्द्रादयो देवा विरोचनादयश्चासुरा इत्याशङ्कां वारयति—तस्यैवेति । याजमानेषु [6]प्राणेषु देवत्वमसुरत्वं च विरुद्धं न सिध्यतीति शङ्कते—कथमिति । तेषु तदुभयमौ[6]पाधिकं साध्यते—उच्यत इति । शास्त्रानपेक्षयोर्ज्ञानकर्मणोर[7]त्पादकमाह—प्रत्यक्षेति । [8]संनिधानासंनिधानाभ्यां प्रमाणद्वयोक्तिः । स्वेष्वेवासुषु रमणं नामाऽऽत्मंभरित्वम् ।

---

वर्तमान प्रजापति के पूर्वजन्म में जो कुछ हुआ उसी को "ह" शब्द से प्रदर्शित करते हैं। (प्रजापति शब्द से हिरण्यगर्भ का उपादान करने में क्या क्षति है?—इस पर कहते हैं) "प्राजापत्या." अर्थात् जिस जन्म में प्रजापति का जो कुछ पूर्व वृत्त घटित हुआ था, उसमें होने वाले प्रजापति के पुत्र प्राजापत्य कहलाये। वे कौन थे? उसी प्रजापति के वागादि प्राण थे—देवता और असुर। उनका देवासुरत्व कैसे सिद्ध हुआ? –इस पर कहते हैं –शास्त्र से होने वाले ज्ञान और कर्म से संस्कृत प्राण, द्योतनशील अर्थात् प्रकाशमय होने से देवता कहे जाते हैं। तथा स्वाभाविक प्रत्यक्ष और अनुमान से होने वाले, दृष्ट प्रयो-

---

१ इय हि द्वया हेत्याद्या श्रुतिराख्यायिकारूपा यथाक्रतुर्मुसितस्वाभाविकपाप्मस्वरूपादिचतुष्टयज्ञानद्वारा प्राणमाहात्म्य निरूपयितु प्रकान्तेत्यभिप्रेत्याकाङ्क्षितमेव प्रदर्शयति द्वयेत्यादिना । तथा च वार्तिकम्— "यथोक्तार्थप्रसिद्ध्यर्थं श्रुतिराख्यायिकात्मिका । द्वया हेत्येवमाद्यत्र प्रचक्राम परीक्षितुम् ॥" इति किं तन्निरूपणमुद्गीथोपास्तेरुपकरोति किंवा सर्वप्राणोपास्तीनामिति वीक्षायाम् द्वितीयमाश्रित्याहुर्वार्तिककाचार्या "प्राजापत्य पद यो यो ह्यधिकारी परीप्सति । तन्निर्धार्यानया श्रुत्या पदमाप्नोत्युपासनात्" इति ॥ यो य सोत्र स्थानमाप्तुमिच्छति स तदुपायमन्वेषमाणोऽनया श्रुत्या शुद्ध्यादिगुणक प्राण निश्चित्य तत्र तत्रोक्ततत्तद्गुणकस्य तस्योपासनात् तत्पदमाप्नोति अतोऽयं विचार. सर्वप्राणोपास्त्युपकारीत्यर्थ । अत्र चानधिकारिपर्युदासार्थमधिकारीत्युक्तम् । २. प्रजापतेर्वृत्तेत्यादि । ननु प्रजापतिशब्देन हिरण्यगर्भस्यैवोपादाने का क्षति । उच्यते । अत्र हि प्राजापत्यानां देवासुराणां सग्रामोक्तिद्वारा प्रजापतेर्ज्ञानकर्मणी कर्तव्ये बध्येते ज्ञानाद्युपदेशश्च सर्वो गुणप्रधानत्वेन समप्रधानत्वेन वा सर्वप्रकारोऽपि श्रौत स्मार्तो मानुष्याद्यभिमानवन्त प्रत्येव युक्त शास्त्रस्य तदधिकारत्वात् तस्माद्यजमानोऽत्र प्रजापतिरिति । तदुक्तम्— "ज्ञानकर्मो देवो हि नर प्रत्येव सर्वथा । मर्वं श्रौतो यतस्तस्माद् स एवेहाभिधीयत" इति ॥ ३. संस्कृता । ४ स्वीयप्राणमात्रैकसरक्षणपरायणत्वादित्यर्थ । ५ यत्रैव प्राणेषु सुरत्व तत्रैवासुरत्व विरुद्धमित्यर्थ । ६ औपाधिकमिति—तथा च वार्तिकम्—"शास्त्रस्वभावजज्ञानकर्मसंस्कारहेतुत । देवासुरत्व प्राणानां निरूढोपाधिकारणात् ॥" शास्त्रजे स्वभावजे च ये ज्ञानकर्मणी तयो संस्कारैर्वागादीनां सस्कृतत्वाद्देवो शास्त्रीयज्ञानादिसंस्कृतत्वमितर—ज्ञानादिसंस्कृतत्वञ्चेति निरूढोपाधिसम्बन्धरूपकारणात् यजमानप्राणानां देवत्वमसुरत्व चेत्यर्थ । ७ उत्पादकम्—आपादकम् । ८ सनिधानेत्यादि—संनिधान विषयसन्निकर्ष प्रत्यक्षस्य । असंनिधान तद्विप्रकर्षोऽनुमानस्य—अनेन च विप्रकृष्टविषयाण्यन्यान्यप्युपलक्षणीयानीति भाव ।

यस्माच्च दृष्टप्रयोजनज्ञानकर्मभाविता असुराः, ततस्तस्मात्कानीयसा. कनीयांस एव कानीयसाः स्वार्थेऽणि वृद्धिः कनीयांसोऽल्पा एव देवाः। ज्यायसा असुरा ज्यायांसोऽसुराः। स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्महत्तरा प्राणाना शास्त्रजनिताया: कर्मज्ञानप्रवृत्तेः। 'दृष्टप्रयोजनत्वात्। अत एव कनीयस्त्व देवानां, शास्त्रजनितप्रवृत्तेरल्पत्वात्। अत्यन्तयत्नसाध्या हि सा।

ते देवाश्चासुराश्च प्रजापतिशरीरस्था एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येष्वस्पर्धन्त 'स्पर्धा कृतवन्तः। देवाना चासुराणा च वृत्त्युद्भवाभिभवौ स्पर्धा कदाचिच्छास्त्रजनितकर्मज्ञानभावनारूपा 'वृत्तिः प्राणानामुद्भवति। यदा चोद्भवति

तत इत्याविवाक्यद्वयं व्याचष्टे—यस्माच्चेति। देवानामल्पत्व प्रपञ्चयति—स्वाभाविकी हीति। महत्तरत्वे हेतुर्दृष्टप्रयोजनत्वादिति। असुराणा बहुत्व प्रपञ्चयति—शास्त्रजनितेति। असुराणा बाहुल्यमिति शेष। तदेव साधयति—अत्यन्तेति।

उभयेषा देवासुराणा मिथ संघर्ष दर्शयति—ते देवाश्चेति। कथं ब्रह्मादीना स्थावरान्ताना 'भोगस्थानाना स्पर्धानिमित्तत्वमित्याशङ्क्य तेषा शास्त्रीयेतरज्ञानकर्मसाध्यत्वा'त्तयोश्च देवासुरजयाधीनत्वात्तस्य च स्पर्धापूर्वकत्वात्परम्परया लोकाना तन्निमित्तत्वमित्यभिप्रेत्य विशिनष्टि—स्वाभाविकेति।

जन वाले कर्म और उपासना से संस्कृत, वे प्राण ही असुर है। अथवा केवल अपने ही प्राणो के संरक्षण मे तत्पर रहने के कारण सुर यानी देवताओ से भिन्न होने से वे असुर कहलाते है।

क्योकि असुर दृष्टप्रयोजन वाले ज्ञान और कर्म से संस्कृत है इसलिए देवता अल्प है। कनीयान् शब्द मे ही स्वार्थ मे अणप्रत्यय होकर आदिवृद्धि करके 'कानीयस' सिद्ध हुआ। 'कनीयास' अर्थात् देवता अल्प ही है। असुर ज्येष्ठ है, अथवा अपेक्षाकृत अधिक महान् है। क्योकि (हिंसा-अनृतादि रूप स्वाभाविक अज्ञान जनित कर्मो मे प्रवृत्त होने के कारण) दृष्टप्रयोजन वाली प्राणो की शास्त्रजनित कर्म-ज्ञान प्रवृत्ति की अपेक्षा उनमे स्वाभाविकी कर्मज्ञान प्रवृत्ति ही अधिक होती है। इसलिए देवताओ की अल्पता है, क्योकि शास्त्रजनित प्रवृत्ति की अल्पता है, अत्यन्त प्रयत्न करने पर (शास्त्रजनित प्रवृत्ति) सिद्ध होती है।

वे देवता और असुर प्रजापति के शरीर मे रहते हैं। स्वाभाविक एव शास्त्रजनित कर्म और ज्ञान से साध्य इन लोको के लिए वे परस्पर संघर्ष करने लगे। दैवी और आसुरी चित्तवृत्तियो का उठना और दबना ही इन देवताओ और असुरो की स्पर्धा है। कभी तो प्राणो की शास्त्रजनित कर्म-ज्ञान भावनास्वरूपा शमादिवृत्ति होती है। और जब यह उठती है तो दृष्टप्रयोजन वालो प्रत्यक्ष

१ दृष्टप्रयोजनत्वादिति—हिंसाऽनृतादिरूपाया स्वाभाविक्याज्ञानकर्मप्रवृत्तेरिति शेष। २ स्पर्धा कृतवन्त इति। स्पर्धां कुर्वता देवानामयमभिप्राय वार्तिके—'आसुरेभ्योऽधिकारेभ्यो व्युत्थाप्यह प्रजापतिम्। दैवीमूंमीर्नयामैनमिति देवचिकीर्षितम् ॥" असुराणामयमभिप्राय —"दैवम्य एनमाच्छिद्य कामक्रोधादिसाधना। आनयामासुरीमूंमीरिति दैत्यनिश्चिति ॥' इह—व्यवहारमार्गे स्थित प्रजापति—यजमानम् आसुराधिकारा कामादय। व्युत्थाप्य विमुखीकृत्य। दैवभूमी—दैवसम्पद इत्यर्थ। ३ वृत्ति शमादिरूपा। ४. भोगभूमिशरीराणामित्यर्थ। ५ तयो—शास्त्रीयतदितरज्ञानकर्मणो।

तदा दृष्टप्रयोजना प्रत्यक्षानुमानजनितकर्मज्ञानभावनारूपा तेषामेव प्राणानां [1]वृत्तिरासुर्यभिभूयते। स देवानां जयोऽसुराणां पराजयः। कदाचित्तद्विपर्ययेण देवानां वृत्तिरभिभूयत आसुर्या उद्भवः। सोऽसुराणां जयो देवानां पराजयः। एवं देवानां जये धर्मभूयस्त्वा-दु[2]त्कर्ष आ प्रजापतित्वप्राप्तेः। असुरजयेऽधर्मभूयस्त्वादपकर्ष आ स्थावरत्वप्राप्तेः। उभयसाम्ये मनुष्यत्वप्राप्तिः। त एवं [3]कनीयस्त्वाद[4]भिभूयमाना असुरैर्देवा [5]बाहुल्याद-सुराणां किं कृतवन्त इत्युच्यते—ते देवा असुरैरभिभूयमाना ह किलोचुरुक्तवन्तः। कथम्। हन्तेदानीमस्मिन्यज्ञे ज्योतिष्टोम उद्गीथेनो[6]द्गीथकर्मपदार्थ[7]कर्तृ[8]स्वरूपाश्रयणे-नात्ययामातिगच्छामः। असुरानभिभूय स्वं देवभावं शास्त्रप्रकाशितं प्रतिपद्यामह इत्युक्तवन्तोऽन्योन्यम्। उद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणं च [9]ज्ञानकर्मभ्याम्। कर्म वक्ष्यमाणं मन्त्रजपलक्षणं विधित्स्यमानं तदेतानि जपेदिति। ज्ञानं त्विदमेव [10]निरूप्य-माणम्।

का पुनरेषां स्पर्धा नामेत्याशङ्क्याऽऽह—देवाना चेति। तामेव सफलां विवृणोति—कदाचिदित्यादिना। अधिकृतैरसुरपराजये देवजये च प्रयतितव्यमित्यनुग्रहबुद्ध्या जयफलमाह—एवमिति। आकाङ्क्षापूर्वक-मनन्तरवाक्यमादाय व्याकरोति—त एवमित्यादिना। योऽयमुद्गीथो नाम कर्माङ्गभूत. पदार्थस्तत्कर्तुः प्राणस्य स्वरूपाश्रयणमेव कथं सिध्यतीत्याशङ्क्याऽऽह—उद्गीथेति। किं तत्कर्म किं वा ज्ञानं तदाह—कर्मेति। तदेतान्य"सतो मा सद्गमयेत्यादीनि यजूंषि जपेदिति विधित्स्यमानमिति योजना।

अनुमान जनित कर्मज्ञानभावनारूपा, उन प्राणो की कामादि रूपा आसुरीवृत्ति दब जाती है। यह देवताओ की जीत है, और असुरो की हार है। कभी उल्टा हो जाता है, देवताओ की कामादिवृत्ति दब जाती है, एव राक्षसो की कामादिवृत्ति उत्पन्न हो जाती है। यह असुरो की जीत है और देवताओ की हार है। इस प्रकार देवताओ की जीत होने पर धर्म की अधिकता से प्रजापतित्व प्राप्ति पर्यन्त (वागाद्युपहित यजमान का) उत्कर्ष होता है। असुरो की जीत से अधर्म के बाहुल्य से स्थावरत्व प्राप्ति पर्यन्त अपकर्ष होता है। धर्म और अधर्म के समान होने से मनुष्यत्व की प्राप्ति होती है। असुरो के प्राबल्य से एव निराश्रय होने से उनके द्वारा पीडित करने से उन देवताओ ने क्या किया? इस पर कहते हैं—असुरो द्वारा पीडा पहुँचाए जाने पर वे देवता इस प्रकार बोले। किस प्रकार बोले? "अरे! अब इस ज्योतिष्टोम यज्ञ में कर्म के अङ्गभूत उद्गीथ पदार्थ के उद्गाता स्वरूप प्राण के आश्रय से हम असुरो का अतिक्रमण करेंगे। असुरो का पराभव कर शास्त्रप्रतिपादित अपने देवभाव को प्राप्त करेंगे" —इस प्रकार एक दूसरे से बोले। उद्गीथ कर्माङ्गभूत पदार्थ के उद्गाता स्वरूप प्राण का आश्रय

१ वृत्ति कामादिरूपा। २ उत्कर्ष इति—वागाद्युपहितस्य यजमानस्येति शेष। ३ कनीयस्त्वादिति—निराश्रयत्वाच्चेति शेष। ४ अभिभूयमाना—पीड्यमाना। ५ बाहुल्यादिति प्राबल्याच्चेति शेष। ६ उद्गीथकर्मेत्यादि—उद्गीथनामको य कर्माङ्गभूत पदार्थ। यद्वा उद्गीथरूपो य कर्मपदार्थ क्रियात्मक। ७. तस्य कर्ता प्राण तस्यैव प्राणे सामगानात्मकोद्गीथस्य साध्यत्वात्। तत्स्वरूपाश्रयणेनेत्यर्थ। यद्वा कर्ता उद्गाता तस्य स्वरूपम् आत्मा प्राण एव तदाश्रयणेनेत्यर्थ.। ८ प्राणविषयकोपासनकर्मसमुच्चयानुष्ठाना-दित्यर्थ। ९. ज्ञान त्विदमेवेति—अशुद्धवागादिपरित्यागपूर्वकशुद्धप्राणोपासनमेवेत्यर्थ। १० निरूप्यमाणम्—परीक्ष्यमाण विचार्यमाणमिति यावत्। ११ बृ०उ० १ ३ २८।

नन्विदमभ्यारोहजपविधिशेषोऽर्थवादो न ज्ञाननिरूपणपरम् । न । य एवं वेदेति वचनात् । उद्गीथप्रस्तावे पुराकल्पश्रवणादुद्गीथविधिपरमिति चेत् । न । अप्रकरणात् । उद्गीथस्य चान्यत्र विहितत्वात् । विद्याप्रकरणत्वाच्चास्य ।

अभ्यारोहजपस्य चानित्यत्वात् । एवंवित्प्रयोज्यत्वात् । विज्ञानस्य च नित्यवच्छ्र-

द्वया हेत्यादि न ज्ञाननिरूपणपरं जपविधिशेषत्वेनार्थवादत्वात्तत्कुतोऽत्र ज्ञानस्य निरूप्यमाणत्वमित्याक्षिपति—न्विति । आभिमुख्येनाऽऽरोहति देवभावमनेनेत्यभ्यारोहो मन्त्रजपस्तद्विधिशेषोऽर्थवादो द्वया हेत्यादिवाक्यमित्यर्थः । उपास्तिविधिश्रवणात्तत्परं वाक्यं न जपविधिशेष इति दूषयति—नेति । ...ना नूनं जपविधिशेषस्तथाऽप्युद्गायेत्योद्गात्रस्य कर्मणः संनिधाने पुरातनकल्पनाप्रकारस्य द्वया हेत्यादिना श्रवणात्तद्विधिशेषोऽर्थवादोऽयमिति शङ्कते—उद्गीथेति । नेदं वाक्यं ज्ञानं चोद्गीथविधिशेषस्तत्प्रकरणत्वाभावेन संनिध्यभावादिति दूषयति—नाप्रकरणादिति । उद्गीथस्तर्हि क्व विधीयते न खल्वविहितमङ्गं भवति तत्राऽऽह—उद्गीथस्य चेति । अन्यत्रेति कर्मकाण्डोक्तिः । अथोद्गायेत्युद्गीथविधिरपीह प्रतीयते तत्कथं संनिधिरपोद्यते तत्राऽऽह—विद्येति । उद्गीथविधिरिह प्रतीयमानः प्राणस्योद्गातृदृष्ट्योपासनविधिरन्यथा प्रकरणविरोधादित्यर्थः ।

जपविधिशेषत्वमुद्गीथविधिशेषत्वं वा ज्ञानस्य नास्तीत्युक्तम् । इदानीं जपविधिशेषत्वाभावे युक्त्यन्तरमाह—अभ्यारोहेति । अनित्यत्वं साधयति—एवमिति । प्राणविज्ञानवताऽनुष्ठेयो जपो न तद्विज्ञानात्प्रागस्ति तत्रासौ पश्चाद्भावी प्रागेव सिद्धं विज्ञानं प्रयोजयतीत्यर्थः । तस्यापि प्राचीनत्वं कथमित्याशङ्क्याऽऽह—विज्ञानस्य चेति । य एवं विद्वान्पौर्णमासीं यजत इतिवद्य एवं वेदेति विज्ञानं श्रुतम् । न

प्राणविषयक कर्म के समुच्चय रूप अनुष्ठान से हो सकता है । आगे कहा जाने वाला वह कर्म मन्त्र जप लक्षण वाला है । "तदेतानि जपेत्" इस वाक्य से उसका विधान किया जाता है । यही (मुख्यवागादि का परित्याग कर शुद्ध प्राणो की उपासना ही) वह ज्ञान है, जिसका विचार किया जायगा ।

यदि शङ्का करो, कि यह तो अभ्यारोह मन्त्रजप विधि का शेषरूप अर्थवाद है, ज्ञानपरीक्षण परक नही है—तो ऐसा कहना ठीक नही । इसमे "जो ऐसा जानता है" यह श्रुति प्रमाण है । यदि कहो उद्गीथप्रकरण मे आख्यायिकारूपा पुरातन कल्पनासम्बन्धी श्रुति होने से उद्गीथ विधिपरक है, तो ठीक नही, क्योकि यह तो उद्गीथ का प्रकरण नही है । सामोद्गान रूप उद्गाता के कर्म का अन्यत्र विधान किया गया है । यहाँ तो विद्या का प्रकरण है ।

इससे दूसरा भी हेतु बतलाते है, कि अभ्यारोह जप अनित्य है । वह प्राण विज्ञानी द्वारा ही

१. बृ०उ० १ ३ ७ । २ उद्गीथस्य—सामोद्गानरूपस्योद्गातृ कर्मण । ३ एवंवित्प्रयोज्यत्वादिति—प्राणविज्ञानवताऽनुष्ठेयत्वादित्यर्थः । जपस्येति शेष । जपस्य प्राणविज्ञानवत्पुरुषानुष्ठेयत्वेन विज्ञानात् प्रागसत्वात् कादाचित्कत्वम् । तदेव च तस्यानित्यत्वमिति ध्येयम् । ४ नित्यवच्छ्रवणादिति—सिद्धवच्छ्रवणादित्यर्थ । एव वेदेति तस्य सिद्धवच्छ्रवण न तु एव विद्यादिति साध्यवदित्यर्थ । ५ पुरातनकल्पनाप्रकारस्येति—आख्यायिकारूपस्येत्यर्थ । ६ प्राणोपासनम् । ७ अतोद्गीथविध्यनभ्युपगमे । ८ प्राणस्येति—उद्गीथानुवादेन वागादिनिन्दाद्वारा मुख्येत्यादि । ९. तत्रासावित्यादि । असौ जप पश्चाद्भावी प्रागेव सिद्ध विज्ञान न प्रयोजयति विज्ञानप्रयोजको न भवतीति योजना तथा च जपस्य प्रागसिद्धत्वेनाप्रयोजकतया विज्ञान प्रति शेषित्व न घटते शेषिणा हि प्राक् सिद्धेनभवितव्यम् शेष प्रति प्रयोजकत्वादिति भाव । १०. अनुष्ठापयतीत्यर्थ । ११ विज्ञानस्यापि ।

"तद्धैतल्लोकजिदेव" इति च श्रुतेः । प्राणस्य वागादीनां च शुद्धयशुद्धि-
वणात् । न ह्यनुपास्यत्वे प्राणस्य शुद्धिवचनं वागादीनां च सहोपन्यस्तानामशुद्धिवचनं
वचनात् । वागादिनिन्दया मुख्यप्राणस्तुतिश्चाभिप्रेतोपपद्यते । मृत्युमतिक्रान्तो दीप्यत इत्यादि
फलवचनं च । प्राणस्वरूपापत्तेर्हि फलं तद्वद्वागादीनामग्न्यादिभावः ।

भवतु नाम प्राणस्योपासनं न तु विशुद्धयादिगुणवत्तेति । ननु स्याच्छ्रुतत्वात् ।

---

हि प्रयाजादि पौर्णमास्यप्रयोजकम् । तस्या एव तत्प्रयोजकत्वात् । तथा प्राणवित्प्रयोज्यो जपो न
विज्ञानप्रयोजकः । तस्य स्वप्रयोजकत्वेन प्रागेव सिद्धेरावश्यकत्वादित्यर्थः । फलवत्त्वाच्च प्राणविज्ञानं
स्वतन्त्रं विधित्सितमित्याह—तद्धेति । प्राणोपास्तेर्विवक्षितत्वे हेत्वन्तरमाह—प्राणस्येति । यद्धि स्तूयते
तद्विधीयते' इति न्यायमाश्रित्योक्तमेव प्रपञ्चयति—न हीति । इतश्च प्राणोपास्तिरत्र विधित्सितेत्याह
—मृत्युमिति । फलवचनं प्राणस्यानुपास्यत्वे नोपपद्यत इति संबन्धः । उक्तमेव व्यनक्ति—प्राणेति ।
मृत्युमोक्षणानन्तरं वागादीनां यदग्न्यादित्वं फलं तदध्यात्मपरिच्छेदं हित्वोपासितुराधिदैविकप्राणस्वरू-
पापत्तेरुपपद्यते । तस्माद्विधित्सितैवात्र प्राणोपास्तिरित्यर्थः ।

उक्तन्यायेन प्राणोपास्तिमुपेत्य प्राणदेवतां शुद्धयादिगुणवतीमाक्षिपति—भवत्विति । यथा

---

अनुष्ठेय है। प्राण विज्ञान सिद्धवत सुना गया है । श्रुति भी कहती है—'कर्म से असहकृत केवल
प्राणविज्ञान, लोकों की प्राप्ति कराने वाला ही है।'' प्राणोपासना में प्राण और वागादि की शुद्धि और
अशुद्धि का वर्णन होने से भी यह विद्या या प्रकरण सिद्ध होता है। प्राणोपास्ति न होने पर प्राणों की
शुद्धि का वर्णन करना, उसी के साथ प्रतिपादित वागादि को अशुद्ध कहना, नहीं बनता । इससे

---

१ तद्धैतदित्यादि—ह शब्दोऽत्र कैवल्य श्रुते अवधारणी चोपासन तथा च केवल (कर्मासहकृतम्) प्राणोपासन सूत्रात्मत्वसाधनमेव भवतीति वाक्यार्थं । २ बृ०उ० १ २ २८ । ३ शुद्धीत्यादि—प्राणस्य शुद्धिरशुद्धिश्च वागादीनामित्युक्तिवचनादस्मिन्प्रकरणे प्राणोपास्तिरभिप्रेता अन्यथा तच्छुद्धयादिवचनमनर्थकं स्यादित्यर्थं । ४ न हीत्याद्युपपद्यत इत्यन्तस्य भाष्यस्यायमर्थ । वागादीनामशुद्धत्वेन निन्दा प्राणस्य शुद्धत्वेन स्तुतिरित्यर्थवादा-ल्लिङ्गात् प्राणोपासने विधि कल्प्यत इति । अर्थवादलिङ्गक विधिकल्पनमन्यत्रापि प्रसिद्धमिति वक्तुमभिप्रेते-त्युक्तम् । ५ बृ०उ० १ ३ १२ । ६ अग्न्यादिभाव इति—"तद्धैतल्लोकजिदेव"त्यत्र प्राणोपास्ते सूत्रात्मत्व फलमुक्तम् इह च मृत्युमतिक्रान्तो दीप्यत इति वाक्ये तत्कृतम् (सूत्रात्मभावप्रयुक्तम्) वागाद्युपास्तेरग्न्याद्यात्म-त्वमुपासितुर्वागादीनामुच्यत इति विशेष । एव प्राणोपास्ते विधित्सितत्वाद्विधिशेषो द्वया हेत्यादिरिति भाव । ७ नन्वित्यादि—शुद्धयादिगुणवती प्राणदेवता नास्ति प्रमाणाभावात् । उपास्तिविधिपरत्वेन श्रुतेरुक्तदेवताया-मतात्पर्यादित्यर्थ । ८ नन्वित्यादि—ननु गुणावधारणे—श्रुतत्वाद्गुणवत्तापि स्यादेवेत्यर्थ । ९. अनुष्ठापकम् । १० आवश्यकत्वादित्यर्थं इति यद्वा—अनावश्यको हि जप प्राणविदा तस्याननुष्ठेयत्वसम्भवात् असत्यपि जपे विदुषो विद्यया फलसिद्धे । उपासन त्वावश्यकम् तद्विना जपमात्रेणोत्कृष्टफलासिद्धे ततोऽनित्यस्य जपस्य नित्यवच्छ्रुतो-पासनाऽप्रयोजकत्वात्—नित्यानित्ययोश्च संयोगायोगाच्च तत्पक्षान्तरस्य जपविधिशेषतेत्यर्थं । एवं चानयोरावश्यक-त्वानावश्यकत्वे एव नित्यत्वानित्यत्वे इति ध्येयम् । ११ किं चेह प्रकरण तद्धैतदिति वाक्यादुत्कृष्टफलविशिष्ट प्राणविज्ञान यत श्रुत तत फलवत्त्वादपि तद्विषय विज्ञान विधातुमिष्टमिति द्वया हेत्यादिवाक्य तत्परमेव न विध्य-न्तरपरमित्याह—फलवत्त्वाच्चेति । १२ स्वतन्त्रमिति न कस्यचिच्छेषभूतमित्यर्थं । १३ उक्तम्—अनुपपन्नत्वमेवे-त्यर्थं । १४ व्यनक्ति—विधिमुखेन स्पष्टयतीत्यर्थं । १५ तस्मादिति—यथोक्तफलस्य प्राणस्वरूपापत्तिनिमित्तत्-त्वादित्यर्थं । १६ उपदिष्टादुष्टोपपत्तिन्यायेनेत्यर्थं ।

न स्यादुपास्यत्वे स्तुत्यर्थत्वोपपत्तेः । न । अविपरीतार्थप्रतिपत्तेः श्रेयःप्राप्त्युपपत्तेर्लोकवत् । यो ह्यविपरीतमर्थं प्रतिपद्यते लोके स इष्टं प्राप्नोत्यनिष्टाद्वा निवर्तते न विपरीतार्थप्रतिपत्त्या । तथेहापि श्रौतशब्दजनितार्थप्रतिपत्तौ श्रेयःप्राप्तिरुपपन्ना न विपर्यये ।

न चोपासनार्थश्रुतशब्दोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाणमस्ति । न च तद्विज्ञा-

प्राणस्योऽस्ति शास्त्रदृष्टत्वादिष्टा तथाऽस्य गुणसबन्धः श्रुतत्वादेष्टव्य उपास्तावुपास्ये न गुणवति प्राणे प्रामाणिकप्राप्तेरविशेषादिति सिद्धान्ती ब्रूते—नन्विति । प्राणस्योपास्यत्वेऽपि शुद्धयादिगुणवादस्य स्तुत्यर्थत्वेनार्थवादत्वसभवात् 'यथोक्ता देवता स्यादिति पूर्ववाद्याह—न स्यादिति । विशुद्धयादिगुणवादस्यार्थवादत्वेऽपि ना'भूतार्थवादत्वमिति परिहरति—नेति । विशुद्धयादिगुणविशिष्टप्राणदृष्टेरत्र फलप्राप्तिः श्रुता न सा 'ज्ञानस्य मिथ्यार्थत्वे युक्ता 'सम्यग्ज्ञानादेव 'पुमर्थाप्तेः सभवादतः"स्तुतिरपि यथार्थेवेत्यर्थः । लोकदृष्टान्तं व्याचष्टे—यो हीति । इहेति वेदाख्यदार्ष्टान्तिकोक्तिः ।

ननु विशुद्धयादिगुणवतीं देवतां वदन्ति वाक्यान्युपासनाविध्यर्थत्वान्न स्वार्थे प्रामाण्यं प्रतिपद्यन्ते तत्राऽऽह—न चेति । "अन्यपराणामपि वाक्यानां मानान्तरसवादविसवादयोरसतोः स्वार्थे प्रामाण्यमनुभवानुसारिभिरेष्टव्यमित्यर्थः । ननु प्राणस्य विशुद्धयादिवादो न स्वार्थे मानमन्यपरत्वादादित्य"यूपादिवाक्यवदत आह—न चेति । "आदित्ययूपादिवाक्यार्थज्ञानस्य प्रत्यक्षादिनाऽपवादवद्विशुद्धयादिगुणविज्ञानस्य नापवादः श्रुतः"तस्माद्विशुद्धयादिवादस्य स्वार्थे मानत्वमप्रत्यूहमित्यर्थः । विशुद्धयादिगु-

वागादि की निन्दा द्वारा मुख्य प्राण की स्तुति अभीष्ट है ऐसा सिद्ध होता है । 'मृत्यु का अतिक्रमण करके प्रकाशित होता है'—ऐसा फल वाक्य भी मिलता है। वागादि को जो अग्न्यादिभाव होता है, वह उनकी प्राणस्वरूपावाप्ति का ही फल है।

(इस पर शका होती है –) भले ही प्राण की उपासना हो किन्तु (प्रमाण के अभाव के कारण) प्राण देवता का विशुद्धयादि गुण वाला होना सिद्ध नही होता । यदि कहो श्रुति विहित होने से प्राणो की गुणवत्ता है ही,—तो ऐसा कहना ठीक नही, क्योकि श्रुति तो उपासित विधि परक होने से (बिना प्राणदेवता म तात्पय के) उसकी स्तुति के लिए हो सकती है। शका परिहार करते है—ऐसी बात नही । लोक मे भी देखा जाता है, कि अविपरीत अथ के ज्ञान से ही श्रयप्राप्ति सभव है । क्योकि जो पुरुष यथाभूत अर्थ का जानता है उसे ससार मे इष्ट प्राप्ति होती है भयकम्पादि रूप अनिष्ट भी निवृत्ति होती है अयथाभूत अथ के ज्ञान से ऐसा नही होता । उसी प्रकार यहा भी श्रुति वचन से होने वाले ज्ञान से ही श्रय प्राप्ति सभव है उसके बिना सभव नही ।

१ यथाभूतम् । २ भयकम्पादे । ३ श्रौतेत्यादि—शास्त्रीयविशुद्धयादिगुणविशिष्टप्राणोपास्ताविति प्रकृतेऽर्थः । ४ तदित्यादि—विशुद्धयादिगुणविज्ञानस्येत्यर्थः । ५ ब्रूत इति—देवताधिकरणन्यायेन परिहरणीयमर्थः । मन्त्रार्थवादेतिहासपुराणलोकप्रसिद्धिभ्यो विग्रहादिपञ्चकविशिष्टदेवतादृष्टेन प्रत्याख्यानं सभवति विशुद्धयादि श्रुते प्राणोपासनविध्यर्थवादत्वेऽपि सवादविसवादयोरभावे द्वारार्थे मानं च विरोधादित्यभिप्रायः । विग्रहादिपञ्चकं चोक्तम्— विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता । फलप्रदानमित्येतत् पञ्चकं विग्रहादिकम् ॥' ६ विशुद्धयादिगुणवतीत्यर्थः । ७ अभूतेत्यादि अविद्यमानार्थबोधकत्वमित्यर्थः । ८ यथोक्तोपासनस्य । ९ अबाधितार्थविषयकज्ञानात् । १० यथास्तफलावाप्तेः । ११ अत इति सम्यग्ज्ञानस्यैवाभीष्टफलप्राप्तिप्रयोजकत्वादित्यर्थः । १२ अन्यपराणामिति—विधेयप्राणस्तत्यपराणामित्यर्थः । १३ यूपादीति—आदिना यजमानः प्रस्तर इत्याग्निग्रहः ।१४ अनुमानेऽपवादश्रवणत्वमुपाधिरित्यभिप्रायेणाह—आदित्येत्यादि । १५ तस्मादिति—मानान्तरविसवादाभावादित्यर्थः ।

नस्यापवादः श्रूयते। ततः श्रेयःप्राप्तिदर्शनाद्यथार्थतां प्रतिपद्यामहे। विपर्यये चानर्थप्राप्तिदर्शनात्। यो हि विपर्ययेणार्थं प्रतिपद्यते लोके पुरुषं स्थाणुरित्यमित्रं मित्रमिति वा सोऽनर्थं प्राप्नुवन्दृश्यते।

आत्मेश्वरदेवतादीनामप्ययथार्थानामेव चेद्ग्रहणं श्रुतितोऽनर्थप्राप्त्यर्थं शास्त्रमिति ध्रुवं प्राप्नुयाल्लोकवदेव, न चैतदिष्टम्। तस्माद्यथाभूतानेवाऽऽत्मेश्वरदेवतादीन्ग्राहयत्युपासनार्थं शास्त्रम्। नामादौ ब्रह्मदृष्टिदर्शनादयुक्तमिति चेत्स्फुटं नामादेरब्रह्मत्वं

णकप्राणविज्ञानात्फलश्रवणात्तद्वादस्य यथार्थत्वमेवेत्युपसंहरति—तत इति। लोकवद्वेदेऽपि सम्यग्ज्ञानादिष्टप्राप्तिरनिष्टपरिहारश्चेत्यन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेना(णा)पि समर्थयते—विपर्यये चेत्यादिना।

शास्त्रस्यानर्थार्थत्वमिष्टमिति शङ्कां निराचष्टे—न चेति। अपौरुषेयस्यासंभावितसर्वदोषस्याशेषपुरुषार्थहेतोः शास्त्रस्यानर्थार्थत्वमेष्टुमशक्यमित्यर्थः। शास्त्रस्य यथाभूतार्थत्वं निगमयति—तस्मादिति। उपासनार्थं ज्ञानार्थं चेति शेषः। शास्त्राद्यथार्थप्रतिपत्तेः श्रेयःप्राप्तिरित्यत्र व्यभिचारं चोदयति—नामादाविति। तदेव स्फुटयति—स्फुटमिति। अब्रह्मणि ब्रह्मदृष्टिरतस्मिंस्तद्बुद्धिस्तस्या मिथ्या धीः सा च "यावन्नाम्नो गतम्" इत्यादिश्रुत्या फलवती तत शास्त्राद्यथार्थप्रतिपत्तेरेव फलमित्ययुक्तमित्यर्थः भेदा-

इसके अतिरिक्त उपासना प्रतिपादक श्रुतिवचनों से होने वाले विज्ञान के विषय में, अयथार्थ होने में कोई प्रमाण नहीं है। विशुद्धत्वादिगुणविज्ञान का अपवाद तो कहीं सुनने को भी नहीं मिलता। यथोक्त प्राणोपासना से श्रेय प्राप्ति श्रवण होने से हम उसकी यथार्थता स्वीकार करते हैं। इससे विपरीत मानने में अनर्थ प्राप्ति होगी, ऐसा सुना जाता है। जो पुरुष संसार में वस्तु को अयथाभूत देखता है अर्थात् पुरुष को स्थाणु और शत्रु को मित्र की तरह समझता है, वह अनर्थ की प्राप्ति करता है—यह देखा जाता है।

(लोकदृष्टान्त समुच्चय होने से) यदि श्रुति से आत्मा, ईश्वर, देवतादि का भी अयथार्थ रूप से ग्रहण होता, तब तो लोक की तरह शास्त्र भी अनिष्ट प्राप्ति के प्रयोजन वाला है, ऐसी आपत्ति अवश्य हो जाती। परन्तु यह स्वीकार्य नहीं है। (शास्त्र के अनर्थ-प्रयोजक होने से तुम्हारा भी अनिष्ट होगा) इसलिए उपासना के लिए यथार्थ आत्मा ईश्वर देवतादि को शास्त्र ग्रहण करता है।

१ तत—यथोक्तप्राणोपासनात्। २ श्रवणात्। ३. अपिर्लोकदृष्टान्तसमुच्चयार्थः। ४ श्रुतित इति तर्हीति शेषः। ५ अनर्थेत्यादि—अनिष्टप्राप्तिप्रयोजकं शास्त्रमित्येतदवश्यमापतेदित्यर्थः। ६ तस्मादिति—शास्त्रानर्थार्थत्वस्य तवाप्यनिष्टत्वादित्यर्थः। ७ ग्राहयतीति—तथा च वार्तिकम्—"यावत्किञ्चिन्मिते प्राप्तं न तन्मिथ्या मितत्वतः। मिथ्येति ग्राहयच्छास्त्रमनर्थार्थं यतो भवेदिति॥" अस्यार्थः—शास्त्रसिद्धं प्राणस्य विशुद्धत्वादि न तन्मिथ्याहेत्वभावादित्यर्थः। प्राणस्य सत्यमेव शुद्धत्वादीत्यत्र हेत्वन्तरमाह—मिथ्येति—यदि मिथ्येति निश्चितं शुद्धत्वादिप्राणस्य शास्त्रं बोधयेत्तदा वस्तुतोऽविद्यमानतद्विशिष्टतत्प्रतिपत्तेरनर्थः स्यात् लोके विपरीतार्थधियोऽनर्थदर्शनात् अतः शास्त्रं मिथ्याशुद्धत्वादिबोधकमनर्थार्थं स्यान्न चैतदिष्टम् अपौरुषेयस्यासंभावितसर्वदोषस्याशेषपुरुषार्थहेतोः तस्यानर्थार्थत्वमेष्टुमशक्यत्वेन शास्त्रीयं शुद्धत्वादिसत्यमेव। न च योषाग्निवदिदमपि मिथ्येति युक्तम् तद्वदत्र द्वारार्थं विरोधाभावस्योक्तत्वादित्यर्थः। द्वारार्थं—यज्ञार्थं योषाग्निरत्र च छा० पञ्चाग्निविद्यायाम्॥ ८ नाम ब्रह्मेत्युपासीत। छा० उ० अ० ७ ख० १। ९ नामादौ। १०. यावन्नाम्नो गतमित्यादि-यावन्नाम्नो विषयभूतं तत्र यथाकामचारोऽस्य तत्रत्यशब्दानां यथेच्छं श्रवणं भवतीत्यर्थः। ११. छा० उ० ७-१। गतमिति तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्ते इति वाक्यशेषः।

[1]तत्र ब्रह्मदृष्टिं स्थाण्वादाविव पुरुषदृष्टिं विपरीतां ग्राहयच्छास्त्रं दृश्यते । [2]तस्माद्यथार्थमेव शास्त्रतः प्रतिपत्तेः, श्रेय,इत्ययुक्तमिति चेत् । [3]न । प्रतिमाव[4]द्भेदप्रतिपत्तेः । नामादावब्रह्मणि ब्रह्मदृष्टिं विपरीतां ग्राहयति शास्त्रं स्थाण्वादाविव पुरुषदृष्टिमिति नैतत्साध्ववोचः । कस्मात् । भेदेन हि ब्रह्मणो [5]नामादिवस्तुप्रतिपन्नस्य[6] नामादौ विधीयते ब्रह्मदृष्टिः प्रतिमादाविव [7]विष्णुदृष्टिः ।

[8]आलम्बनत्वेन हि नामादिप्रतिपत्तिः प्रतिमादिवदेव न तु नामाद्येव ब्रह्मेति । यथा स्थाणावनिर्ज्ञाते न स्थाणुरिति पुरुष एवायमिति प्रतिपद्यते विपरीतम्, न तु

ग्रहपूर्वकोऽन्यस्यान्यात्मतावभासो 'मिथ्याज्ञानमत्र' तु भेदे भासमाने'ऽन्यत्रान्यदृष्टिर्विधीयते । यथा विष्णोर्भेदे प्रतिमाया गृह्यमाणे तत्र विष्णुदृष्टिः क्रियते तन्नेदं मिथ्याज्ञानमित्याह—नेति । नअर्थं स्पष्टयति—नामादाविति । प्रश्नपूर्वकं हेतुं व्याचष्टे—कस्मादिति ।

प्रतिमाया विष्णुदृष्टि "प्रत्यालम्बनत्वमेव न विष्णुतादात्म्यं नामादेस्तु ब्रह्मतादात्म्यं श्रुतमिति "वैधर्म्यमाशङ्क्याऽऽह—आलम्बनत्वेनेति । "उक्तमर्थं "वैधर्म्यदृष्टान्तेन स्पष्टयति—यथेति । कर्ममीमांसको ब्रह्मविद्वेष "प्रकटयन्प्रत्यवतिष्ठते—ब्रह्मेति । केवला तद्दृष्टिरेव नाम्नि "चोद्यते चोदनाबलाच्च फलं सेत्स्यति ब्रह्म तु नास्ति मानाभावादित्यर्थः । अथ यथा देवानां प्रतिमादिषूपास्यमानानामन्यत्र सत्त्वं यथा च वस्वाद्यात्मना पितॄणां ब्राह्मणादिदेहे तर्प्यमाणानामन्यत्र सत्त्व तथा ब्रह्मणोऽपि नामादावुपास्यत्वादन्यत्र सत्त्वं भविष्यतीत्याशङ्क्याऽऽह—एतेनेति । नामादौ ब्रह्मदर्शनेनेति यावत् । दृष्टान्तासद्धेर्न क्वापि ब्रह्मास्तीति भावः । सत्यज्ञानादिलक्षणं ब्रह्म नास्तीत्ययुक्तम् 'सदेव सोम्येदम्'

'नाम की ब्रह्म भावना से उपासना करे' इत्यादि छान्दोग्य श्रुति मे ब्रह्मदृष्टि का श्रवण होने के कारण तुम्हारा कथन ठीक नही है। नामादि मे अब्रह्मत्व स्पष्ट ही है। शास्त्र अनात्मनामादि मे, स्थाणु मे पुरुष की तरह विपरीत ब्रह्मदर्शन करता हुआ देखा जाता है, अतः (उक्त व्यभिचार से) शास्त्र से यथार्थ ज्ञान होने के कारण ही श्रेय प्राप्ति होती है, ऐसा कहना ठीक नही। (उक्त शङ्का का परिहार करते हैं—) ऐसी बात नही है। (ब्रह्म और नाम मे) भेदज्ञान पुरसर, प्रतिमा मे विष्णुत्व दृष्टि के समान नाम मे ब्रह्मत्व बुद्धि रहती है। स्थाणु आदि मे पुरुषदृष्टि के समान शास्त्र अनात्मनामादि मे विपरीत ब्रह्मदृष्टि का ग्रहण कराता है-यह तुमने सही नही कहा। ऐसा क्यो, क्योकि ब्रह्म का नामादि मे ब्रह्मदृष्टि का विधान उसी प्रकार किया जाता है, जैसे प्रतिमादि मे विष्णुदृष्टि का विधान किया जाता है।

१. नामादावनात्मनि । २ उक्तव्यभिचारात् । ३ अब्रह्मण्यपि नाम्नि ब्रह्मेतिज्ञानस्य मिथ्यात्व नास्त्य । ४ ब्रह्मनाम्नोर्भेदज्ञानपुरःसर नाम्नि ब्रह्मत्वबुद्धिरित्यर्थ । ५ द्वितीयान्तमेतत् । ६ पुरुषस्येत्यर्थं । ७ विष्णुदृष्टिरिति—तथा चाविवेकपूर्वकाभेदधियो मिथ्याज्ञानत्वादनात्मनि च ब्रह्मदृष्टेर्विवेकपूर्वकत्वात्तन्मिथ्यात्वोक्तिरयुक्तेति भाव. । ८ ब्रह्मदृष्ट्यधिकरणत्वेनैव नामादिप्रतीतिरित्यर्थं । ९ मिथ्याज्ञानमिति यथा यो हि रज्जु रज्जुतया न जानाति तस्य तत्र सर्पत्वप्रतीतिर्मिथ्याज्ञानमित्यर्थं । १० नामब्रह्मणो । ११ नाम्नि ब्रह्मदृष्टि । १२ अधिकरणत्वमेव । १३ दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्यमित्यर्थ । १४ वैधर्म्याभावरूपम् । १५ व्यतिरेकिदृष्टान्तेनेत्यर्थं । १६ प्रकटयन्निति । विवेकस्य धर्मिप्रतियोगिनो वाच्यो न चात्मनस्तथात्व न च ब्रह्मणि । यस्य धर्मित्वादिव स्यान्मानाभावात् उपनिषदां तु वेदोपरत्वेनामानत्वात् अतो विवेकपूर्वकत्वायोगान्नामादौ ब्रह्मदृष्टे रज्जुसर्पादिदृष्टेरिव मिथ्यात्वमिति मन्यान मविशते शेष । वेदोपरा वेदान्ता इति मीमांसकमत । ऊगग, ऊपरभूतान्निरर्थका इत्यर्थं । १७ उपदिश्यते ।

तया नामादौ ब्रह्मदृष्टिर्विपरीता[1]। ब्रह्मदृष्टिरेव केवला नास्ति ब्रह्मेति चेत्। एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिदृष्टीनां तुल्यता[2]। न। ऋगादिषु पृथिव्यादिदृष्टिदर्शनात्। विद्यमानपृथिव्यादिवस्तुदृष्टीनामेवर्गादिविषये प्रक्षेपदर्शनात्। तस्मात्सामान्यान्नामादिषु ब्रह्मादिदृष्टीनां विद्यमानब्रह्मादिविषयत्वसिद्धिः[3]।

एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिबुद्धीनां च सत्यवस्तुविषयत्वसिद्धिः। मुख्यापेक्षत्वाच्च गौणत्वस्य[4]। पञ्चाग्न्यादिषु चाग्नित्वादेर्गौणत्वान्मुख्याग्न्यादिसद्भाववन्नामादिषु ब्रह्मत्वस्य[5] गौणत्वान्मुख्यब्रह्मसद्भावोपपत्तिः[6]। क्रियार्थैश्चाविशेषाद्वि-

इत्यादिश्रुतेरित्याह—नेति। किंच ब्रह्मदृष्टिः[7]सत्यार्था शास्त्रीयदृष्टित्वादित्यमेवर्गादिनिः सामैतिदृष्टिवदित्याह—ऋगादिष्विति। [8]तदेव स्पष्टयति—विद्यमानेति। ताभिर्दृष्टिभिः सामान्यं दृष्टित्वं तस्म दिति यावत्।

यत्तु दृष्टान्तासिद्धिरिति तत्राऽऽह—एतेनेति। ब्रह्मदृष्टेः सत्यार्थत्वसाधनेनेति यावत्। ब्रह्मास्तित्वे हेत्वन्तरमाह—मुख्यापेक्षत्वादिति। [9]उक्तमेव विवृणोति—पञ्चेति। पञ्चाग्नयो द्युपर्जन्यपृथिवीपुरुषयोषितः। आदिपदं वाग्धेन्वादिपरिग्रहार्थम्। ननु वेदान्तवेद्यं ब्रह्मोच्यते न च तेभ्यस्तत्सिद्धिः सिध्यति [10]तेषां [11]विधिवैधुर्येणाप्रामाण्यात्तत्कुतो ब्रह्मसिद्धिरत आह—क्रियार्थैश्चेति। [12]विमतं स्वार्थे प्रमाणमज्ञातज्ञा-

ब्रह्मदृष्टि के अधिकरणत्व होने से ही प्रतिमा मे विष्णुदृष्टि के समान नामादि की प्रतीति होती है, नामादि ही ब्रह्म है—ऐसी प्रतीति नही होती। जिस प्रकार स्थाणु का ज्ञान न होने पर 'यह पुरुष ही है, स्थाणु नही है'—ऐसा विपरीत ज्ञान होता है। नामादि मे वैसी अयथार्थ ब्रह्मदृष्टि नही होती। यदि कहो, ब्रह्मदृष्टि मात्र ही है, वस्तुत ब्रह्म नही है। इससे तो प्रतिमा और ब्राह्मणादि मे विष्णु और पितृ आदि दृष्टियाँ समान रूप से सिद्ध होती हैं। (शङ्कापरिहार किया जाता है—) ऐसी बात नही—क्योंकि ऋगादि मे पृथिवी आदि दृष्टि सुनी जाती है। ऋगादि विषय मे विद्यमान वस्तुविषयक पृथिवी आदि दृष्टियो का ही आरोप देखा गया है। अतः उनसे समानता होने के कारण नामादि मे जो ब्रह्मदृष्टि है, उनकी सद्ब्रह्मादि विषयता सिद्ध हो जाती है।

इससे प्रतिमा और ब्राह्मणादि मे विष्णु आदि देवदृष्टि और पितृ आदि दृष्टियो का भी सत्

१ ब्रह्मदृष्टिमात्रम्। २ तुल्यतेति—तथा च विष्ण्वादीनामप्यन्यत्र सत्त्व नास्तीति भाव। ३. सिद्धिरिति ऋगादिषु सत्सु सता पृथिव्यादीनामारोपदर्शनाद्ब्रह्मादावपि सत्येव सतो ब्रह्मणो दृष्टिरारोपणीयेत्यर्थ। ४ गौणत्वादिति—दाहकत्वाद्यभावाद्गौणत्वम्। ५ मुख्येति—शक्त्योपस्थापनीयत्वम्मुख्यत्वम्। ६ उपपत्तिरिति—किं च विमता बुद्धि सालम्बना बुद्धित्वात् घटादिबुद्धिवत् इत्यनुमानाच्च ब्रह्मास्तीत्याहुर्वार्तिकाचार्या—"न चासद्विषया काचिद्बुद्धिर्जगति वीक्ष्यते" इति। किंच सर्वस्य भावाद्यर्थस्य व्यभिचारेऽपि भावाभावसाधक चिद्रस्त्वव्यभिचार्यस्ति तत्त्वच कूटस्थ मविदेकरस ब्रह्म नास्ति तदुक्तम्—"सर्वार्थव्यभिचारेऽपि संविदव्यभिचारिणीति"। ७ सत्यविषयिका। ८. इयमेवेत्यादि—इयम् पृथिवी—तथा च ऋचि पृथिवीदृष्टि कर्त्तव्येत्यर्थ.। ९. तदेवेति ऋगादिषु पृथिव्यादिदृष्टिदर्शनमेवेत्यर्थ.। १०. उक्तमेव—गौणत्वनिष्ठ मुख्यापेक्षत्वमेव। ११. सिद्धार्थबोधिना वेदान्तानाम्। १२ विधिवैधुर्येणेति-विधायकक्रियापदाघटितत्वादित्यर्थ। तथा च वेदान्तानाम् क्रियापदशून्यत्वेन वाक्यार्थबोधाजनकत्वादप्रामाण्यमित्याशय। १३ वेदान्तवाक्यम्।

द्यार्थानाम् । यथा च दर्शपौर्णमासादि[1]क्रियैवंफला [2]विशिष्टेतिकर्तव्यताकैवंक्रमप्रयुक्ताङ्गा चेत्येतदलौकिकं वस्तु प्रत्यक्षाद्यविषयं तथाभूतं च वेदवाक्यैरेव ज्ञाप्यते । तथा परमात्मेश्वरदेवतादिवस्त्वस्थूलादिधर्मकमशनायाद्यतीतं चेत्येवमादिविशिष्टमिति वेदवाक्यैरेव ज्ञाप्यत इत्यलौकिकत्वात्तथाभूतमेव भवितुमर्हतीति । न च क्रियार्थैर्वाक्यैर्ज्ञानवाक्यानां बुद्ध्युत्पादकत्वे विशेषोऽस्ति । न चा[3]निश्चिता विपर्यस्ता वा परमात्मादिवस्तुविषया [4]बुद्धिरु[5]त्पद्यते ।

---

पकत्वा[6]संमतवत् । [7]अतो वेदान्तशास्त्रादेव ब्रह्मसिद्धिरित्यर्थः । [8]सिद्ध[9]साध्यार्थभेदेन वैधर्म्याद्विशिष्टत्वमनिष्टमित्याशङ्क्यो[10]क्तं विवृणोति—यथा चेति । विशिष्टत्व [11]स्वरूपोपकारित्वं [12]फलोपकारित्वं च । [13]पञ्चमोऽत्र प्रकारं परास्प्रष्टुमेवमित्यादिष्टम् । अलौकिकत्वं साधयति—प्रत्यक्षादीति । किंच वेदान्तानामप्रामाण्य [14]बुद्ध्यनुत्पत्तेर्वा [15]संशयाद्युत्पत्तेर्वा नाऽऽद्य इत्याह—न चेति । न द्वितीय इत्याह—न चानिश्चितेति । [16]कोटिद्वयास्पर्शित्वाद[17]बाधाच्चेत्यर्थः ।

---

वस्तु विषयक होना सिद्ध हो जाता है। (ब्रह्म के सत् होने मे दूसरा हेतु कहते हैं–) क्योंकि गौणत्व तो मुख्यत्व की अपेक्षा से होता है। पञ्चाग्नियो मे दाहकत्वादि-अभाव होने से अग्नित्व आदि का गौणत्व है, इससे शक्त्योपस्थापनीयत्वरूप मुख्य अग्नि आदि का सद्भाव सिद्ध हो जाता है। उसी प्रकार नामादिको मे ब्रह्मत्व की गौणता होने से मुख्य ब्रह्म मे सद्भाव सिद्ध हो जाता है। उपासनापरक और कर्मपरक वाक्यो की भी समानता होने के कारण यही सिद्ध होता है । जैसे दर्श-पौर्णमासादि क्रिया इस फल वाली है, विलक्षण इतिकर्तव्यता वाली है और इसी क्रम से उसके अङ्ग प्रयुक्त है—ये सब अलौकिक बातें प्रत्यक्षादि प्रमाण का विषय नही है, किन्तु सत् हैं—ऐसा वेदवाक्यो से सिद्ध होता है । इस प्रकार परमात्मा, ईश्वर और देवतादि-वस्तु स्थूलत्वादि-धर्मो से रहित एव क्षुधादि से अतीत है–तथा इस प्रकार के गुणो से विलक्षण हैं—यह सब वेद–वाक्यो से प्रमाणित होता है—इसलिए अलौकिक होने के कारण वह सत् ही हो सकता है। इसके सिवा कर्मपरक वाक्यो से उपासनापरक वाक्यो का बुद्धि अर्थात् दृष्टि उत्पन्न करने मे कोई भेद नही है । उनसे परमात्मादि वस्तु विषयक संशयरूप

---

१ क्रियैवंफलेति—अत्र क्रियापद तज्जन्य अपूर्वपरम् तस्यैव साक्षात्फलजनकत्वादिति । विध्युद्देशातो विश्वजिन्न्यायादिना च सिद्धाधिकार पराणुत्वेन फलेति । अत्र विध्युद्देशत इति विधिवाक्यादित्यर्थ विश्वजिन्न्यायश्च यस्य कर्मण फलविशेषो नोक्तस्तस्य स्वर्ग एव फल विश्वजिति तथा व्यवस्थापनादिति । अधिकारमिति–फलसम्बन्धमित्यर्थ । २ विलक्षणेत्यर्थ । ३ संशयरूपेत्यर्थ । ४ बुद्धिरिति–अधिकारिणामिति शेष । उत्पद्यत इति वेदान्तवाक्यैरिति शेष । ५ उत्पद्यत इति–किंतु तेषा यथाभूतार्थबोधकस्तत्त्वमादिवाक्यादेकरूपाऽबाधिता च वस्तुविषया बुद्धिरुत्पद्यतेऽत प्रामाण्यमेव स्वार्थे वेदान्तानामिति ध्येयम् । ६ कर्मकाण्डवत् । ७ वेदान्ताना स्वार्थे मानत्वात् । ८ सिद्ध-ब्रह्म, सिद्धार्थविषयकत्व वेदान्तानाम् । ९ साध्यार्थविषयकत्व च कर्मकाण्डस्येतिवैलक्षण्यम् । १० संग्रहवाक्यम् । ११ इद चेति कर्तव्यतारूपमेवेति बोध्यम् । १२ स्वरूपोपकारित्वम्–सन्निपत्योपकारकत्व प्रोक्षणावघातादीनाम् । फलोपकारित्व चारादुपकारकत्व प्रयाजादीनाम् । १३ जैमिनीय अ ५ पा १ । १४ बुद्धीत्यादि–बुद्ध्यनुत्पादकत्वादित्यर्थ । १५ तथा च बुद्ध्यनुत्पादकत्वमेवाप्रामाण्यम् एवमग्रेऽपि बोध्यम् । १६ वेदान्तवाक्यजधियोऽनिश्चितत्वे हेतुमाह–कोटीत्यादि–विरुद्धकोटिद्वयानवगाहित्वादित्यर्थ । तस्या एवाविपर्ययरूपत्वे हेतु । १७ अबाधादिति–अबाधितविषयकत्वादित्यर्थ ।

अनुष्ठेयाभावादयुक्तमिति चेत् । क्रियार्थवाक्येषु त्र्यंशा भावनाऽनुष्ठेया ज्ञाप्यतेऽलौकिक्यपि । न तथा परमात्मेश्वरादिविज्ञानेऽनुष्ठेयं किंचिदस्ति । अतः क्रियार्थैः साधर्म्यमित्ययुक्तमिति चेत् । न । ज्ञानस्य तथाभूतार्थविषयत्वात् । न ह्यनुष्ठेयस्य त्र्यंशस्य भावनाख्यस्यानुष्ठेयत्वात्तथात्वं किं तर्हि प्रमाणसमधिगतत्वात् । न च तद्विषयाया बुद्धेरनुष्ठेयविषयत्वात्तथात्वं किं तर्हि, वेदवाक्यजनितत्वादेव ।

---

क्रियार्थैर्वाक्यैर्विद्यार्थानां वाक्यानां साधर्म्यमुक्तमाक्षिपति–अनुष्ठेयेति । साधर्म्यस्यायुक्तत्वमेव व्यनक्ति–क्रियार्थैरिति । वाक्ययोस्तद्बुद्धेर्यथार्थत्वाद्विध्यभावेऽपि वाक्यप्रामाण्यमज्ञातज्ञापकत्वेनाविरुद्धमिति परिहरति–न ज्ञानस्येति । अनुष्ठेयनिष्ठत्वमन्तरेण कुतो वस्तुनि प्रयोगप्रत्यययोस्तथार्थत्वमित्याशङ्क्य तयोर्विषये तथात्वार्थं तदपेक्षास्य प्रामाण्यार्थं वेति विकल्प्याऽऽद्यं दूषयति–न हीति । तदुभयविषयस्य कर्तव्यार्थस्य तथात्वं न कर्तव्यत्वापेक्षं किन्तु मानगम्यत्वादन्यथा विप्रलम्भकविधिवाक्येऽपि तथात्वापत्तेरित्यर्थः । द्वितीयं प्रत्याह–न चेति । बुद्धिग्रहणं प्रयोगोपलक्षणार्थम् । कर्तव्यार्थविषयप्रयोगादेर्नानुष्ठेयविषयत्वान्मानत्वं किंतु प्रमाकरणत्वात्तच्चाज्ञातत्वात्त्वान्यथोपपत्तिप्रमवितत्वादवस्थाद्यतोऽनुष्ठेयनिष्ठत्वं मानत्वेऽनुपयुक्तमित्यर्थः ।

---

अनिश्चित या विपरीत बुद्धि उत्पन्न नहीं होती । अर्थात् वेदान्त का स्वार्थ में ही प्रामाण्य है ।

(इस पर शङ्का होती है) उपासनापरक वाक्यों को कर्मपरक वाक्यों के तुल्यप्रमाण रूप (समानधर्मी) कहना अनुचित है, क्योंकि वहाँ अनुष्ठेय कर्म नहीं होता । क्रियार्थक वाक्यों से प्रत्यक्षादि के अविषय होने से भी तीन अंशवाली शाब्दी भावना अनुष्ठेया है । परमात्मा और ईश्वरादि विज्ञान में ऐसी कोई अनुष्ठेया क्रिया नहीं होती, अतः विज्ञान वाक्यों की कर्मपरक वाक्यों से जो तुल्यप्रामाण्यरूपता बतलायी है, वह ठीक नहीं है । (शङ्का का परिहार करते हैं)—ऐसा कहना ठीक नहीं है । क्योंकि (तत्त्वमादिवाक्यों से उत्पन्न) ज्ञान अनधिगतार्थ और अबाधितार्थ विषयक होता है । त्र्यंश-शाब्दी भावना संज्ञक अनुष्ठेयार्थनिष्ठ होने से प्रामाण्य नहीं है, क्योंकि वह अनुष्ठेय है । तो कैसे है ? प्रमाणगम्य होने के कारण है । इसी तरह अनुष्ठेयविषया बुद्धि की अनधिगताबाधितार्थता

---

१ भावनाऽत्र शाब्दयेव ग्राह्या अनुष्ठेयार्थनिष्ठत्वादनुष्ठेयेत्युक्तम् । २ अलौकिकीति—प्रत्यक्षाद्यविषया तथा च तस्या अज्ञातत्वात् तद्बोधिककर्मकाण्डीयवाक्यानाम् प्रामाण्यमिति भाव । ३ ज्ञानस्येत्यादि—तत्त्वमादिवाक्योत्थज्ञानस्य अनधिगताबाधितार्थविषयकत्वादित्यर्थ । ४. प्रामाण्यम् । ५ मानगम्यत्वात् । ६ तदिति—अनुष्ठेयवस्तुनि । ७ वेदवाक्यजनितत्वादेवेति—किं च कार्यनिष्ठत्वेन प्रामाण्ये तन्निष्ठत्वे प्रामाण्य तत्र सति तन्निष्ठत्वेत्यन्योऽन्याश्रयादज्ञातज्ञापकत्वमेव तत । अतो यागादेरिष्टोपायत्वस्य मानान्तरायोग्यत्वात् तदेव विधिकाण्डमेयम् इति मत्वा वार्तिकेऽभिहितम्—'अन्योऽन्याश्रयतादोष कार्यप्रामाण्यवादिन" इति । ८ साधर्म्यम्—तुल्यप्रामाण्यरूपम् । ९ तत्त्वमादिवाक्येत्यर्थ । १० अविरुद्धमिति—न ह्यनुष्ठेयनिष्ठत्व प्रामाण्यप्रयोजकम् स्वर्गकाम सिकता भक्षयेदित्यादौ व्यभिचारात् किन्त्वज्ञातज्ञापकत्वम् तस्य चोभयत्राप्यव्यभिचारादिति भाव । उभयत्रेति कर्मज्ञानकाण्डोक्ति । ११ वस्तुनि—सिद्धे वस्तुनि ब्रह्मणीत्यर्थम् । १२ प्रयोगप्रत्यययोरिति—शब्दतज्जन्यज्ञानयोरित्यर्थ । १३ प्रामाण्यम् । १४. तयो प्रयोगप्रत्यययो । १५ तथात्वार्थं—प्रामाण्यार्थम् । १६ तदपेक्षा—अनुष्ठेयवस्त्वपेक्षा । १७ तदुभयेति—प्रयोगप्रत्ययेत्यर्थ । १८ अनुष्ठेयार्थस्येत्यर्थ । १९ स्वनिष्ठानुष्ठेयत्वप्रयुक्तम् । २० अनुष्ठेयनिष्ठत्वस्यानिप्रमकत्वात् ।

वेदवाक्याधिगतस्य वस्तुन स्तथात्वे सत्यनुष्ठेयत्वविशिष्टं चेदनुतिष्ठति नो चेदनुष्ठेयत्वविशिष्टं नानुतिष्ठति। ²अननुष्ठेयत्वे वाक्यप्रमाणत्वानुपपत्तिरिति चेत्। न ह्य³नुष्ठेये⁴ऽसति पदाना संहतिरुपपद्यते । अनुष्ठेये तु सति ⁵तादर्थ्येन पदानि ⁶संहन्यन्ते । ⁸तत्रा नुष्ठेयनिष्ठं वाक्यं प्रमाणं ⁹भवतीदमनेनैवं कर्तव्यमिति । न त्विदमनेनैवमित्येवंप्रकाराणां पदशतानामपि वाक्यत्वमस्ति । 'कुर्यात्क्रियेत कर्तव्यं ¹⁰भवेत्स्यादिति पञ्चमम्'

¹¹कुतस्तर्हि कार्याकार्यधियावित्याशङ्क्याऽऽह—वेदेति । ¹²वैदिकस्यार्थस्याबाधेन ¹³यथार्थत्वे सिद्धे समीहितसाधनत्वविशिष्टं चेद्वस्तु तदा कर्तव्यमिति धियाऽनुतिष्ठति । तच्चेदनिष्टसाधनत्वविशिष्ट तदा न कार्यमिति धिया नानुतिष्ठति । ¹⁴अतो मानात्तस्यानुष्ठानाननुष्ठानहेतू ¹⁵कार्याकार्यधियावित्यर्थः । ¹⁶तथाऽपि ब्रह्मणो वाक्यार्थत्वं पदार्थत्वं वा नाऽऽद्य इत्याह—अननुष्ठेयत्व इति । ¹⁷तस्याकार्यत्वेऽपि वाक्यार्थत्वं किं न स्यादित्याशङ्क्याऽऽह—न हीति । उभयत्रासतीति च्छेद । द्वितीय दूषयति—

अनुष्ठेयवस्तुविषयक होने से नही है । तो फिर क्यो है ? वेदवाक्यजनित होने से ही उसकी यथार्थता है ।

वेद वाक्य द्वारा ज्ञात वस्तु के प्रामाण्य सिद्ध होने पर, यदि वह अनुष्ठेयत्वविशिष्ट होती है, तो पुरुष उसका अनुष्ठान करता है, और यदि अनुष्ठेयत्व विशिष्ट नही होती, तो पुरुष उसका अनुष्ठान नही करता। (इस पर शङ्का होती है—) फिर (ब्रह्म के अकार्यत्व होने से) तो वाक्यगम्यता ही न होगी, क्योकि कार्य की ही वाक्यगम्यता होती है। ब्रह्मरूप वस्तु के अनुष्ठेय न होने पर (क्रिया पदाभाव से) पदो की सहति सिद्ध नही होती है। कार्यपरक होने से तदुपकारक रूप से पदो की सहति होती है। लोक और वेद मे "इसे इससे इस प्रकार ही करना चाहिये" इस प्रकार अनुष्ठेयार्थनिष्ठ वाक्य ही प्रमाण होता है। 'इसे, इससे, इस प्रकार' ऐसे सैकडो पद मिलने पर भी उसमे

१ प्रामाण्ये। २ अननुष्ठेयत्व इत्यादि—ब्रह्मण इत्यादि तथा च ब्रह्मणोऽकार्यत्वान्न वाक्यगम्यतेति भाव कार्यस्यैव वाक्यगम्यत्वमित्यभिमान । ३ अनुष्ठेय इत्यादि ब्रह्मणश्चेदकार्यत्व तदा तद्विषयवेदान्तेषु क्रियापदाभावात्पदसहत्ययोगाद्वाक्यासिद्धेर्न तस्य तदर्था इति भाव । ४ ब्रह्मरूपवस्तुनीति शेष । ५ तदुपकारकतयेत्यर्थं । ६ एतावता वेदान्तस्य वाक्यत्वाभाव उक्त । ७ उक्तान्वयव्यतिरेके मति लोकवेदयोर्वार्यं । ८ तत्रानुष्ठेयनिष्ठमित्यादि—लोकवेदयो न क्रियापदमन्तरेण पदानाम् मिथ सहतिर्दृष्टाऽतो वेदान्तेषु क्रियापदशून्येषु नास्ति वाक्यत्वमितिभाव । ९ इदमनुष्ठेय वस्त्वनेन वाक्येनैव कर्त्तव्यमित्यनुष्ठेयनिष्ठ वाक्य प्रमाण भवतीत्यन्वय । १० "एतत् स्यात् सर्ववेदेषु नियत विधिलक्षणम्" । ११ कुतस्तर्हीति—तर्हि अनुष्ठेयनिष्ठत्वस्य प्रामाण्यानुपयुक्तत्वे कार्याकार्यधियाविति—कर्तव्याकर्तव्यबुद्धी इत्यर्थं । यथा हि कर्मकाण्डीयक्रियार्थवाक्यश्रवणात् कर्तव्यधीर्जायते इद यागादि मया कर्तव्यमिति । सत्य ज्ञानमित्यादि ज्ञानवाक्याच्च न कर्तव्यधीरिति तथा च अनुष्ठानाननुष्ठानहेतुकार्याकार्यबुद्धी कस्माद्धेतोर्जायेयातामिति वाक्यार्थं । १२ वैदिकस्य—वेदबोधितस्य । १३. प्रामाण्ये । १४ अतो मानात्तस्येति—यथोक्तमेयानुरोधादित्यर्थं । तस्य—अनुष्ठेयादिवस्तुन । १५ कार्याकार्यधियाविति—तथा चानुष्ठेयानुष्ठानाननुष्ठानहेतुकर्तव्याकर्त्तव्यबुद्धी मेयानुरोधादेव भवत इत्यर्थ. । तथा च वार्त्तिकम्—"प्रमाणाधिगतो सत्या पुसो मेयानुरोधत । अनुष्ठेयोऽननुष्ठेय इति पश्चान्मतिर्भवेदिति ॥" १६ तथापीत्यादि—वेदान्ताना प्रामाण्येपि ब्रह्म किं कस्यचिद्वाक्यस्यार्थ पदस्य वा । १७ ब्रह्मण' ।

इत्येवमादीनामन्यतमेऽसत्यतः परमात्मेश्वरादीनामवाक्यप्रमाणत्वम् । पदार्थत्वे च प्रमाणान्तरविषयत्वम् । अतोऽसदेतदिति चेत् । न । अस्ति मेरुर्वर्णचतुष्टयोपेत इत्येवमादावननुष्ठेयेऽपि वाक्यदर्शनात् । न च मेरुर्वर्णचतुष्टयोपेत इत्येवमादिवाक्यश्रवणे मेर्वादावनुष्ठेयत्वबुद्धिरुत्पद्यते । तथाऽस्तिपदसहितानां परमात्मेश्वरादिप्रतिपादकवाक्यपदानां विशेषणविशेष्यभावेन संहतिः केन वार्यते ।

मेर्वादिविज्ञानवत्परमात्मज्ञाने प्रयोजनाभावादयुक्तमिति चेत् । न । "ब्रह्मविदाप्नोति

---

पदार्थत्वे चेति । ब्रह्मणः शास्त्रार्थत्वमेतदित्युच्यते । कार्यास्पृष्टेऽर्थे वाक्यप्रामाण्यं दृष्टान्तेन साधयति—नेत्यादिना । शुक्लकृष्णलोहित मिश्रलक्षणं वर्णचतुष्टयं तद्विशिष्टो "मेरुरस्तीत्यादिप्रयोगे मेर्वादाव"कार्येऽपि "मन्दधीदर्शनात्तत्रमसिवाक्यादपि कार्यास्पृष्टे ब्रह्मणि सम्यक्ज्ञानसिद्धिरित्यर्थः । दृष्टान्तेऽपि कार्यधीरेव वाक्यादुदेतीत्याशङ्क्याऽऽह—न चेति । ननु तत्र क्रियापदाधीना पदसंहतिर्युक्ता वेदान्तेषु पुनस्तदभावात्पदसंहत्ययोगात्कुतो वाक्यप्रमाणकत्वं ब्रह्मण संभवति तत्राऽऽह—तथेति ।

"विमतमफलं सिद्धार्थज्ञानत्वात् "संमतवदित्यनुमानात्तत्त्वमादेः सिद्धार्थस्यायुक्तं मानत्वमिति शङ्कते—मेर्वादीति । श्रुतिविरोधेनानुमानं "धुनीते—नेत्यादिना । "विद्वदनुभवविरोधाच्च नैवमित्याह—

---

वाक्यत्व नही आ सकता । 'कुर्यात्, क्रियेत्, कर्त्तव्यम्, भवेत, स्यात्' ये पाँचो विधिलक्षण क्रियापद सब वेदो मे नियत हैं । अत परमात्मा और ईश्वरादि वाक्य प्रामाण्यत्व के विषय नही हैं । क्रियापदाभाव होने एव वेदान्त के अवाक्यत्व होने से ऐसा होता है । (ब्रह्म प्रमाणान्तरविषय पदार्थत्वात् घटवत्) पदार्थत्व होने से (वह ब्रह्म) आगमातिरिक्त प्रमाण का विषय होगा । (वाक्यार्थत्व और पदार्थत्व से ब्रह्म का निरूपण न हो सकने के कारण) अत यह असत् है ऐसे कहना चाहिए ? (शङ्का का परिहार करते है–) ऐसा कहना ठीक नही "मेरु चार वर्णों वाला है" इत्यादि वाक्य मे अननुष्ठेयत्व होने पर भी वाक्य देखा जाता है । "मेरु चार वर्ण वाला है" इत्यादि वाक्य सुनने पर मेरु आदि मे अनुष्ठेय बुद्धि

---

१ क्रियापदाभावेन वेदान्तानामवाक्यत्वात् । २ प्रमाणान्तरविषयत्वमिति—अत्रेदमनुमान सूचित ब्रह्मप्रमाणान्तरविषय पदार्थत्वात् घटवदिति । प्रमाणान्तरेति--आगमातिरिक्तप्रमाणेत्यर्थ । अत्रोक्त वार्तिके— "पदार्थत्वे च तत्सिद्धिलिङ्गप्रत्यक्षमत्र्यादिति ।" किञ्च पदार्थत्वे ब्रह्मणो युक्त सिद्धान्तहानिरित्यभिप्रेत्योक्तं वार्तिके— "आगमैकप्रमाणत्वान्न पदार्थत्वमिष्यत" इति । ब्रह्म वाक्यार्थमित्यङ्गीकारात्पदार्थत्वकृतदोषाभावः । न च क्रियापदाभावात् पदासंहति वेदान्तेष्वपि प्रतिपाद्यनुगुणा क्रियापदोपगमात् इत्यभिप्रेत्य तत्रोक्तम्— "अस्यस्मीत्यभ्युपेतत्वान्नैवमप्युपपद्यत इति" । यद्वा वाक्यार्थत्वमङ्गीकृत्य पदार्थत्वमनङ्गीकारपरास्तमित्यभिप्रेत्योक्तम् आगमेति । क्रियापदमन्तरेण पदसंहत्यभावाद्वाक्यासिद्धेस्तद्गम्यत्वमपि निरस्तमित्याशङ्क्योक्तम् अस्यस्मीति । ३ ब्रह्मणो वाक्यार्थत्वपदार्थत्वाभ्या निरूपयितुमशक्यत्वात् । ४ दृष्टान्तवत् । ५ अयुक्तमिति— सिद्धार्थबोधकस्य तत्त्वमस्यादि वाक्यस्य प्रामाण्यमयुक्तमित्यर्थं । ६ शास्त्रप्रतिपाद्यत्वम् । ७. कार्यास्पृष्ट इति कार्यम्—अनुष्ठेयम्, तदस्पृष्टे-अननुष्ठेय इति यावत् । ८. मिश्रम्—चित्रम् । ९ वर्णचतुष्टयमिति—तच्च मेरावेतस्मिन् दिग्विभागेन द्रष्टव्यम् । १०. मेरुरस्तीत्यादीति—आदिना-यथा सौवर्णराजतपक्षाभ्या सुपर्णगतिविहङ्गमोऽत्यद्भुतदर्शनो द्वीपान्तरेऽस्तीति प्रयोगे विशिष्टे पतत्रिण्यकार्येऽप्यस्ति पक्षीति शब्दादुत्पद्यते सम्यग्ज्ञानमित्येवमादि ग्राह्यम् । ११. अननुष्ठेये । १२. अस्ति मेरुरिति शब्दादिति शेष । १३. ब्रह्मज्ञानम् । १४. मेर्वादिज्ञानवत् । १५ निरस्यति । १६ अनुमानेश्रुतिबाधमवतार्यं तत्रैव प्रत्यक्षबाधमप्यवतारयति विद्वदनुभवेति ।

**परम्" "भिद्यते हृदयग्रन्थिः" इति फलश्रवणात् । संसारबीजा[1]विद्यादिदोषनिवृत्ति-[2]दर्शनाच्च । अनन्यशेषत्वाच्च तज्ज्ञानस्य जुह्वामिव फलश्रुतेरर्थवादत्वानुपपत्तिः ।**

---

संसारेति । फलश्रुतेरर्थवादत्वेना[3]मानत्वादनुमानाबाधकतेत्याशङ्क्याऽऽह—अनन्येति । [4]पर्णमयीत्वाधिकरणन्यायेन जुह्वां फलश्रुतेरर्थवादत्वं युक्तम् । ब्रह्मधियोऽन्यशेषत्वप्रापकाभावात्तत्फलश्रुतेरर्थवादत्वासिद्धिरिति । [5]अन्यथा [6]शारीरकानारम्भः स्यादित्यर्थः । श्रुत्यनुभवाभ्यां वाक्योत्थज्ञानस्य फलवत्त्वदृष्टेर्युक्ता कार्यास्पृष्टे स्वार्थे तत्त्वमस्यादेर्मानतेत्युक्तं संप्रति शास्त्रस्य कार्यपरत्वानियमे [7]हेत्व-

---

नही उत्पन्न होती । इसी दृष्टान्त के समान परमात्मा और ईश्वरादि का प्रतिपादन करने वाले "अस्ति" पद वाले वाक्यो के पदो की विशेषण-विशेष्यभावरूप सङ्गति का कौन वारण कर सकता है ?

(इस पर शङ्का होती है—) मेरु आदि के ज्ञान की तरह परमात्मज्ञान, प्रयोजन के अभाव होने से (सिद्धार्थबोधक 'तत्त्वमस्यादि' वाक्य का प्रामाण्य) अयुक्त है । (इस पर शङ्कापरिहार करते हैं—) ऐसा कहना ठीक नही । "ब्रह्म के जानने वाला परमपद प्राप्त कर लेता है", "उसके हृदय की ग्रन्थि खुल जाती है" इत्यादि श्रुतियो मे परमात्मज्ञान का फल सुना गया है । तथा ससार के बीज रूप

---

१ अविद्यादीति—आदिनाऽविद्याकार्यं शोकमोहादिग्राह्यम् । २ दर्शनाच्चेति—वाक्यीयज्ञानोदयानन्तरमेव तत्फलस्य शोकादिविमोक्षस्य प्रत्यक्षत्वात् तद्विरुद्धमनुमानं नोदयतीत्यर्थः । ३ अमानत्वादिति—अर्थवादस्य स्वार्थे तात्पर्याभावात्तत्राप्रमाणत्वादित्यर्थः । ४ पर्णमयीत्वाधिकरणन्यायेन जुह्वां फलश्रुतेरर्थवादत्वं युक्तमिति—द्रव्यसंस्कारकर्मणामत्वर्थत्वाधिकरणापरपर्याये पर्णमयीत्वाधिकरणे उक्तेन परार्थत्वादिहेतुना पापश्लोकश्रवणराहित्यस्यार्थवादत्वं क्रतुप्राशस्त्यबोधकत्वं युक्तमित्यर्थः । "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादि"ति तदधिकरणसूत्रम् । "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" । यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते । यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै इत्येतानि प्रकृतसूत्रस्य विषयवाक्यानि—अथ यज्जुह्वप्रकृतिभूतं द्रव्यं पर्णात्मकं यच्चाञ्जनेन चक्षुषः संस्कारः यच्च प्रयाजानुयाजरूपं कर्म किमेते पुरुषार्थफलमुद्दिश्य विधीयन्त उत क्रत्वर्थवादा इति संशये पापश्लोकाश्रवणराहित्यादेः (स्वनिन्दाश्रवणाभावादेः) पुरुषसम्बन्धिफलस्य प्रतिभानात् पुरुषार्थत्वेन विधीयन्त इति प्राप्ते सिद्धान्तयति-द्रव्यसंस्कारकर्मविधिषु क्रमेण उदाहृतवाक्येषु फलश्रवणमर्थवादः स्यात् परार्थत्वात् पर्णमयीत्वादीनां क्रत्वर्थत्वादित्यर्थः । फलं हि साध्यं भवति न चात्र साध्यता प्रतीयते न शृणोति, वृङ्क्ते, वर्म क्रियत इति वर्तमानत्वनिर्देशात् । अतः क्रत्वर्था एव विषयः तत्र पर्णमयीत्वस्यानारभ्याधीतस्यापि वाक्येन क्रतुसम्बन्धः (समभिव्याहारो वाक्यम्) तथा चोक्ता सेयं पर्णताऽनारभ्याधीतापि सर्वप्रकृतिष्वेवान्वेति न विकृतिषु तत्र चोदकेनापि तत्प्राप्तिसम्भवात्पौनरुक्त्यापत्तेरिति । चोदकम् प्रकृतिवदित्यादतिदेशवाक्यम् ॥ पौनरुक्त्येति प्रकृतौ वा द्विरुक्तत्वादिति न्यायविरोधेन पौनरुक्त्यरूपदोषापत्तेरित्यर्थः । प्रकृतौ वा प्रकृतावेव पर्णता कस्मात् द्विरुक्तत्वात् चोदकप्राप्तत्वेन पौनरुक्त्यादिति सूत्रार्थः । एवं च पौनरुक्त्योद्भावनान्यथानुपपत्त्या पर्णताया वाक्येन क्रतुसम्बन्धः तथा च पर्णमयीवाक्यं क्रतुसमभिव्याहारेण पठनीयम् । क्रतुश्चात्र दर्शपौर्णमासाख्यः । संस्कारकर्मणोस्तु प्रकरणेन क्रतुसम्बन्धः क्रत्वर्थानां तु क्रतुनिष्पादनव्यतिरेकेण फलाकाङ्क्षाया अभावात् वर्तमाननिर्देशस्य विपरिणामं कृत्वापि फलं कल्पयितुमशक्यमिति भावः । उभयाकाङ्क्षाप्रकरणम् । ५ तत्फलश्रुतेरर्थवादत्वाङ्गीकारे । ६ ब्रह्मविद्याफलप्रयोजनवत्त्वादारम्भस्येति भावः । ७ अस्ति मेरुरित्याद्युक्तहेत्वपेक्षयाऽन्यं हेतुमित्यर्थः ।

'प्रतिषिद्धानिष्टफलसंबन्धश्च वेदादेव विज्ञायते । न चानुष्ठेयः सः । न च प्रतिषिद्धविषये प्रवृत्तक्रियस्याकरणादन्यदनुष्ठेयमस्ति । 'अकर्तव्यताज्ञाननिष्ठत्वमेव हि 'परमार्थतः प्रतिषेधविधीनां स्यात् ।

क्षुधार्तस्य 'प्रतिषेधज्ञानसंस्कृतस्या 'भक्ष्ये 'ऽभोज्ये वा प्रत्युपस्थिते कलञ्जाभिशस्ता-

---

न्तरमाह—प्रतिषिद्धेति । यद्यपि कलञ्जभक्षणादेरध:पातस्य च 'संबन्धो न कलञ्जं भक्षयेदित्यादिवाक्यात्प्रतीयते 'तथाऽपि तस्यानुष्ठेयत्वाद्वाक्यस्यानुष्ठेयनिष्ठत्वसिद्धिरित्याशङ्क्याऽऽह—न चेति । संबन्धस्या'भावार्थत्वान्नानुष्ठेयतेत्यर्थः । अभक्षणादि कार्यमिति विधिपरत्वमेव निषेधवाक्यस्य किं न स्यादित्याशङ्क्याऽऽह—न चेति । "तस्यापि "कार्यार्थत्वे विधिनिषेधभेदभङ्गात्प्रसक्तश्च स्वसंबन्ध्यभावबोधने "मुख्यस्या"र्थान्तरे वृत्तौ लक्षणापाताद्विषिद्धविषये रागादिना प्रवृत्तक्रियावतो "निषेधशास्त्रार्थधीसंस्कृतस्य "निषेधश्रुतेरकरणात्प्रसक्तक्रिया"निवृत्त्युपलक्षितादौदासीन्यादन्यदनुष्ठेयं न प्रतिभातीत्यर्थः । "भावविषयं कर्तव्यत्वं विधीनामर्थो"ऽभावविषयं तु निषेधानामिति "विशेषमाशङ्क्याऽऽह—अकर्तव्यतेति । अभावस्य "भावार्थत्वाभावात्कर्तव्यताविषयत्वासिद्धिरिति हिशब्दार्थः ।

"प्रतिषेधज्ञानवतोऽपि "कलञ्जभक्षणादिज्ञानदर्शनात्तन्निवृत्ते"र्नियोगाधीनत्वात्तन्निष्ठमेव वाक्यमेष्टव्यमिति चेन्नेत्याह—क्षुधार्तस्येति । विषलिप्तबाणहतस्य पशोर्मांसं कलञ्जं ब्रह्मवधाद्य-

---

भिशापादि दोष की निवृत्ति भी ब्रह्मात्म-ज्ञान से होती देखी गयी है । ब्रह्मात्मज्ञान किसी अन्य कर्म का शेष भी नहीं है, जिस प्रकार जुहू विषयक फलश्रुति अर्थवाद है, उसी प्रकार उसके अर्थवाद होने की कल्पना नहीं कर सकते । इसी प्रकार ("किसी की हिंसा न करे" इत्यादि)' प्रतिषिद्ध कर्मानुष्ठान से

---

१ प्रतिषिद्धेत्यादि—प्रतिषिद्धस्य यदनिष्टं फलं तत्सम्बन्ध इत्यर्थः । हननादेरनिष्टफलसम्बन्धो न हन्यादिति वेदादेव ज्ञायते न च तस्य कार्यता शङ्कितुमपि शक्यते न हि निषेधमध्ये निषिद्धानिष्टसम्बन्धः तत्संस्कृतोऽनुतिष्ठति अतो निषेधवाक्यानां कार्यानपेक्षाणामपि मानत्वात् कार्यपरत्वनियमः शास्त्रस्येति भावः । अत्र तत्संस्कृत इत्यस्य निषेधशास्त्रसंस्कारविशिष्ट इत्यर्थः । २ अकर्तव्यताज्ञाननिष्ठत्वेति—भक्षणादिकर्तव्यत्वाभावबोधतात्पर्यवत्त्वेत्यर्थः । ३ फलतः । ४ निषेधशास्त्रार्थज्ञानीयसंस्कारयुतस्य । ५. अभक्ष्य—कलञ्जे । ६. अभोज्य—अभिशस्तान्न इति यथाक्रमम् । ७ भक्षणादेरधःपातस्य च जन्यजनकभावाख्यः सम्बन्धः पुरुषेण सहत्वधःपातस्य स्वस्वामिभावाख्य ■ इति ज्ञेयम् । ८ सम्बन्धस्य वेदगम्यत्वेऽपि । ९. भावार्थत्वाभावादित्यर्थः धात्वर्थत्वाभावादिति यावत् सर्वत्र धात्वर्थस्यैवानुष्ठेयत्वादिति भावः । १०. निषेधवाक्यस्यापि । ११ अनुष्ठेयनिष्ठत्वे । १२ शक्तस्य । १३ स्वसम्बन्धि यदाख्यातान्तं तद्विशेषणीभूतधात्वर्थाभावे वृत्तावित्यर्थः । १४ निषेधशास्त्रश्रवणजन्यतदर्थज्ञानीयसंस्कारविशिष्टस्य पुंसः । १५. प्रतिषेधवाक्यश्रवणादित्यर्थः । १६ निवृत्त्यपरपर्यायस्याकरणस्याभावरूपत्वेनाननुष्ठेयत्वमभिप्रेत्याह—निवृत्तीत्यादि—प्रसक्तक्रियानिवृत्तिपदेन लक्षणया मनोऽवस्थाविशेषरूपादौदासीन्यादित्यर्थः । १७ प्रतियोगिप्रतीतिनिरपेक्षप्रतीतिविषयविषयकमित्यर्थः । १८ प्रतियोगिप्रतीतिसापेक्षप्रतीतिविषयविषयकमित्यर्थः । १९. विधिनिषेधयोर्भेदोपपत्तिमिति यावत् । २०. धात्वर्थत्वाभावादित्यर्थः । २१ प्रतिषेधशास्त्रार्थज्ञानसंस्कृतस्य पुंसः । २२ कलञ्जादेर्भक्ष्यत्वादिरूपेण ज्ञानस्य प्रतीयमानत्वादित्यर्थः । २३ अपूर्वापरपर्यायकार्याधीनत्वादित्यर्थः । तथाहि 'न कलञ्जं भक्षयेदि'त्यस्य कलञ्जभक्षणमनिष्टसाधनमित्यर्थकत्वेनानिष्टस्य च दुरदृष्टतया तदधीना ततो निवृत्तिरित्यागतं निषेधस्य कार्यनिष्ठत्वमिति भावः ।

भ्रादाविदं भक्ष्यमदो भोज्यमिति वा ज्ञानमुत्पन्नं तद्विषयया प्रतिषेधज्ञानस्मृत्या बाध्यते। मृगतृष्णिकायामिव पेयज्ञानं तद्विषययाथात्म्यविज्ञानेन तस्मिन्बाधिते स्वाभाविकविपरीतज्ञानेऽनर्थकरी तद्भक्षणभोजनप्रवृत्तिर्न भवति। विपरीतज्ञाननिमित्तायाः प्रवृत्तेर्निवृत्तिरेव न पुनर्यत्नः कार्यस्तदभावे। तस्मात्प्रतिषेधविधीनां वस्तुयाथात्म्यज्ञाननिष्ठतैव न पुरुषव्यापारनिष्ठतागन्धोऽप्यस्ति। तथेहापि परमात्मादियाथात्म्यज्ञान-

---

अभिशापयुक्तस्यान्नपानद्यभोज्यं तस्मिन्नभक्ष्येऽभोज्ये च प्राप्ते यद्भ्रमज्ञानं क्षुत्क्षामस्योत्पन्नं तन्निषेधधीसंस्कृतस्य तद्धीस्मृत्या बाध्यमित्यत्र लौकिकदृष्टान्तमाह—मृगतृष्णिकायामिति। तथाऽपि प्रवृत्त्यभावसिद्धये विधिरभ्युपेयतामिति चेन्नेत्याह—तस्मिन्निति। तदभावः प्रवृत्त्यभावो न विधिजन्यप्रयत्नसाध्यो निमित्ताभावेनैव सिद्धेरित्यर्थः। दृष्टान्तमुपसंहरति—तस्मादिति। दार्ष्टान्तिकमाह—

---

उसका फल भी अनिष्ट है—ऐसा वेदों से ही जाना जाता है। उसका अनुष्ठान नहीं होता। जो मनुष्य कर्मों में प्रवृत्त है; उसके लिए प्रतिषिद्ध कर्मों का अनुष्ठान न करने मात्र से ही, दूसरे कर्मों की अनुष्ठेयनिष्ठता नहीं हो जाती। क्योंकि प्रतिषेधसम्बन्धी विधियाँ फलतः भक्षणादि कर्तव्यत्व के अभावबोधक तात्पर्य वाली हैं।

यदि निषेध-शास्त्रार्थ-ज्ञान-संस्कार से युक्त किसी क्षुधार्त पुरुष के सामने अभक्ष्य कलञ्ज अथवा अभोज्य अभिशस्त अन्न आ जाए; तो उसे "यह भक्ष्य है यह भोज्य है" ऐसा भ्रमात्मक ज्ञान उत्पन्न होगा। कलञ्ज और अभिशस्त अन्न विषयक प्रतिषेधज्ञान स्मृति से उसका बाध हो जाएगा। जिस प्रकार मरु-मरीचिका के स्वरूप का यथार्थ ज्ञान होने पर उसमें पेयजल-बुद्धि का बाध हो जाता है। उस शास्त्रानाधेय विपरीत ज्ञान के बाधित हो जाने पर उसके भक्षण अथवा भोज्य में अनिष्ट सम्पादिका प्रवृत्ति नहीं रहती। विपरीत ज्ञान जन्य प्रवृत्ति की तो निवृत्ति हो जाती है। उसके अभाव के लिए उसे फिर कोई यत्न नहीं करना चाहिए। अत (प्रतिषेध विधि-वाक्यों का विधेयार्थनिष्ठत्व

---

१. भ्रमात्मकम्। २ कलञ्जाभिशस्तान्नविषयया। ३ बाध्यत इति—तथा च प्रवृत्तिबीजस्य भक्ष्यत्वादिप्रकारकभ्रमस्य न कलञ्जमित्यादिनिषेधज्ञानीयस्मृत्याबाधात् प्रयोजकाभावादेव निवृत्त्युपपत्तेर्न तस्यानियोगाधीनत्वमित्यर्थः। ४. तद्विषयेत्यादि—जलज्ञानविषये मरुभूमिप्रतिफलितमरीच्युदके यद् याथात्म्यज्ञानं—मरुभूरियं न तु जलमित्येव रूपं तेनेत्यर्थः। ५. शास्त्रानाधेयेत्यर्थः। ६. अनिष्टसम्पादिका। ७ निवृत्तिरेवेति-भवतीति शेषः। ८. तस्मात्—प्रतिषेधविधीनां (वाक्यानाम्) विधेयार्थनिष्ठत्वासम्भवात्। ९. वस्तुयाथात्म्यज्ञाननिष्ठतैवेति—वस्तुनः—कलञ्जभक्षणादेः याथात्म्यम्—अनिष्टसम्पादकत्वम्। तद्बोधतात्पर्यवत्त्वैवेत्यर्थः। १०. तथेहापीति—प्रतिषेधवाक्यवत् वेदान्तवाक्येऽपीत्यर्थः। ११. परमात्मादीत्यादि—परमात्मा-तत्पदार्थ आदिना त्वंपदार्थ आत्मा तयोर्याथात्म्य निरुपाधिकं स्वरूपम्। तद्विषयकज्ञानोत्पादकविधीनाम्—तत्त्वमादिमहावाक्यानामवान्तरवाक्यानां चेत्यर्थः। वेदान्तेषु विध्यभावाद्विधिशब्दो वाक्यपरत्वेनैव व्याख्यात इति ध्येयम्। १२. मिथ्याकलङ्कोऽभिशापः। अनेन ब्राह्मणो हत इत्येवमादिस्तमहतवतोऽपि पुंसः। १३. इदं भक्ष्यमदोभोज्यमित्याद्याकारम्। १४. तथापीति—प्रतिषेधज्ञानस्मृत्या प्राप्ताऽभक्ष्याभोज्यविषयके विपरीतज्ञाने बाधितेऽपीत्यर्थः। १५. अभ्युपेयतामिति—स्वीक्रियताम्। प्रवृत्त्यभावस्य विधिजन्यप्रयत्नसाध्यत्वादितिभावः। १६. निमित्तेति—भक्ष्यत्वादिप्रकारकविपरीतज्ञानरूपप्रयोजकेत्यर्थः।

विधीनां [1]तावन्मात्रपर्यवसानतैव स्यात् । [2]तथा तद्विज्ञानसंस्कृतस्य तद्विपरीतार्थज्ञाननिमित्तानां प्रवृत्तीनामनर्थार्थत्वेन ज्ञायमानत्वात् । परमात्मादियाथात्म्यज्ञानस्मृत्या [3]स्वाभाविके [4]तन्निमित्तविज्ञाने बाधितेऽभावः स्यात् ।

ननु कलञ्जादिभक्षणादेरनर्थार्थत्ववस्तुयाथात्म्यज्ञानस्मृत्या [5]स्वाभाविके तद्भक्षत्वादि[6]विपरीतज्ञाने निवर्तिते तद्भक्षणाद्यनर्थप्रवृत्त्यभाववदप्रतिषेधविषयत्वाच्छास्त्रविहितप्रवृत्त्यभावो [7]न युक्त इति चेत् । न । विपरीतज्ञाननिमित्तत्वानर्थार्थत्वाभ्यां [8]तुल्यत्वात् ।

तथेति । न केवलं तत्त्वमस्यादिवाक्यानां सिद्धवस्तुमात्रपर्यवसानता किन्तु [9]सर्वकर्म[10]निवर्तकत्वमपि सिध्यतीत्याह—तथेति । अकर्त्रभोक्तृब्रह्माहमितिज्ञानसंस्कृतस्य[11] [12]प्रवृत्तीनामभाव स्यादिति संबन्धः । तस्माद्ब्रह्मभावाद्विपरीतो[13]ऽर्थो यस्य कर्तृत्वादिज्ञानस्य तन्निमित्तानाम[14]नर्थार्थत्वेन [15]ज्ञायमानत्वादिति [16]हेतुः । कदा पुनस्तासामभावः स्यादत आह—परमात्मादीति । भ्रान्तिप्राप्तभक्षणादिनिरासेन निवृत्तिनिष्ठतया निषेधवाक्यस्य मानत्ववत्तत्त्वमादेरपि प्रत्यगज्ञानोत्थकर्तृत्वादिनिवर्तकत्वेन मानत्वोपपत्तिरिति समुदायार्थः ।

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्कते—नन्विति । तस्य निषिद्धत्वाद[17]नर्थार्थत्वमेव यद्वस्तुयाथात्म्यं तज्ज्ञानेन निषेधे कृते तत्संस्कारद्वारा संपादितस्मृत्या शास्त्रीयज्ञानेन विपरीतज्ञाने बाधिते तत्कार्यप्रवृत्त्यभावो निमित्ताभावे नैमित्तिकाभावन्यायेन युक्तो न तथाऽग्निहोत्रादिप्रवृत्त्यभावो युक्त' ।

---

असंभव होने से) प्रतिषेध विधियों का कलञ्ज-भक्षणादि वस्तु के यथार्थ स्वरूप के ज्ञान कराने में तात्पर्य है, उनमें पुरुष के व्यापारनिष्ठता की गन्ध भी नहीं है। प्रतिषेध वाक्य के समान वेदान्त-वाक्य में भी ब्रह्मात्मैक्य स्वरूप का ज्ञान कराने वाली विधियाँ सिद्धवस्तु-मात्र तात्पर्य वाली हो जाएँगी। सिद्धवस्तु पर्यवसान के समान परमात्मादि ज्ञान से संस्कृत पुरुष को उससे विपरीत पदार्थ-ज्ञान निमित्त प्रवृत्तियाँ अनर्थ प्रयोजन वाली लगने लगेंगी। ब्रह्मात्मैक्य ज्ञान की स्मृति से स्वाभाविक आविद्यक प्रवृत्ति प्रयोजक कर्तृत्वादि ज्ञान के बाधित हो जाने से प्रवृत्ति का अभाव हो जायगा।

(दृष्टान्त और दार्ष्टान्त में विषमता से शङ्का होती है।) परन्तु कलञ्ज भक्षणादि अनर्थार्थक

---

१ सिद्धवस्तुमात्रतात्पर्यवत्त्वैवेत्यर्थ । २ सिद्धवस्तुपर्यवसानवत् । ३ स्वाभाविके—आविद्यके । ४ तन्निमित्तेत्यादि—प्रवृत्तिप्रयोजककर्तृत्वादिज्ञान इत्यर्थ । ५ शास्त्रज्ञानाधेये । ६ भ्रान्तिरूपज्ञाने । ७ न युक्त इति—यथा कलञ्जभक्षणादेरज्ञानकृतत्वादनर्थफलत्वाच्च न कलञ्जं भक्षयेदित्यादिनिषेधवाक्यानामनिष्टोपायताधीद्वारा निवृत्तिनिष्ठत्वेन प्रामाण्यमयुक्तम् तथा श्रौतकर्मणो नाज्ञानकृतत्वमनर्थार्थत्वं वा, तद्धि शास्त्रप्रयुक्तमतस्तत्त्वमस्यादेस्तत्त्वज्ञानं जनयतोऽपि श्रौतकर्मानिवर्तकत्वान्न निवर्तकत्वेन प्रामाण्यमिति तदाशय । ८ तुल्यत्वादिति यथा कलञ्जभक्षणादि—अज्ञानकृतम् अनर्थफलकं च तथा श्रौतमपि कर्म । प्रत्यगज्ञानकृतकर्तृत्वादिजन्यत्वात् तज्जन्यदेहग्रहस्य चानर्थत्वादतो वाक्योत्थज्ञानादज्ञानध्वस्तौ तज्जन्यकर्मध्वस्तेर्निवर्तकत्वेन निषेधवत् तत्त्वमस्यादिवाक्यस्य मानत्वोपपत्तिरिति सिद्धान्तिनो भाव । ९ विहितनिषिद्धसकलकर्मेत्यर्थ । १० इदमार्थिकमिति ध्येयम् । ११ पुंस । १२ प्रवृत्तीनाम्—विहितनिषिद्धकर्ममात्रविषयिकाणामित्यर्थ । १३ अर्थ —कर्तृत्वादिरूपो विषय । १४ अनिष्टप्रयोजकत्वेन । १५ निश्चितत्वात् । १६ हेतुरिति—यथोक्तप्रवृत्त्यभावे इति शेष । १७ अनिष्टसाधनत्वमेव ।

कलञ्जभक्षणादिप्रवृत्तेर्मिथ्याज्ञाननिमित्तत्वमनर्थार्थत्वं च यथा तथा शास्त्रविहितप्रवृत्तीनामपि । तस्मात्परमात्मयाथात्म्यविज्ञानवतः शास्त्रविहितप्रवृत्तीनामपि मिथ्याज्ञाननिमित्तत्वेनानर्थार्थत्वेन च तुल्यत्वात्परमात्मज्ञानेन विपरीतज्ञाने निवर्तिते युक्त एवाभावः ।

ननु तत्र युक्तो नित्यानां तु केवलशास्त्रनिमित्तत्वादनर्थार्थत्वाभावाच्चाभावो न युक्त इति चेत् । न । अविद्यारागद्वेषादिदोषवतो विहितत्वात् । यथा स्वर्गकामादिदोषवतो दर्शपौर्णमासादीनि काम्यानि कर्माणि विहितानि तथा सर्वानर्थबीजाविद्यादिदोषवतस्तज्जनितेष्टानिष्टप्राप्तिपरिहाररागद्वेषदोषवतश्च तत्प्रेरिताविशेषप्रवृत्तेरिष्टा-

ब्रह्मविदाऽग्निहोत्रादि न कर्तव्यमिति निषेधानुपलम्भादित्यर्थः । तत्त्वमस्यादिवाक्येनाग्निषिद्धमग्निहोत्रादीति मन्वान साम्यमाह—नेत्यादिना । शास्त्रीयप्रवृत्तीनां गर्भवासादिहेतुत्वादनर्थार्थत्वमहं कर्तेत्याद्यभिमानकृतत्वेन विपरीतज्ञाननिमित्तत्वम् । एतदेव दृष्टान्तावष्टम्भेन स्पष्टयति—कलञ्जेति ।

काम्यानामज्ञानहेतुत्वानर्थार्थत्वाभ्यां विदुषस्तेषु प्रवृत्त्यभावो युक्तो नित्यानां तु शास्त्रमात्रप्रयुक्तानुष्ठानत्वादज्ञानकृतत्वं प्रत्यवायाख्यानर्थध्वंसित्वाच्च नानर्थकरत्वमतस्तेषु प्रवृत्त्यभावो युक्तो न भवतीति शङ्कते—नन्विति । नित्यानां शास्त्रमात्रकृतानुष्ठानत्वमसिद्धमिति परिहरति—नेत्यादिना । तदेव प्रपञ्चयति—यथेति । अविद्यादीत्यादिशब्देनास्मितादिक्लेशचतुष्टयोक्तिः । तैरविद्यादिभिर्जनितेष्टप्राप्तौ तादृगनिष्टप्राप्तौ च क्रमेण रागद्वेषवत पुरुषस्येष्टप्राप्तिमनिष्टपरिहारं च वाञ्छतस्ताभ्यामेव रागद्वेषाभ्यामिष्टं मे भूयादनिष्टं मा भूदिति स्वविशेषकामनाभिप्रेरिताविशेषप्रवृत्तियुक्तस्य

वस्तुओं के यथार्थस्वरूप ज्ञान की स्मृति से उनके भक्ष्यत्व आदि शास्त्रानाधेय भ्रान्ति रूप ज्ञान के निवृत्त हो जाने पर, जैसे कलञ्ज-भक्षणादि अज्ञानकृत और अनर्थफल वाले हैं, 'कलञ्ज भक्षण न करे', इत्यादि निषेध वाक्यों का अनिष्ट—उपाय बुद्धि द्वारा प्रामाण्य सिद्ध नहीं होता । उसी प्रकार श्रौत कर्म अज्ञानकृत अथवा अर्थार्थत्व नहीं है, तत्त्वज्ञान होने पर भी श्रौतकर्म निवर्तकत्व रूप से प्रामाण्य नहीं है । (शंका का परिहार करते हैं) ऐसा कहना ठीक नहीं है । क्योंकि विपरीत ज्ञान के निमित्त होने से और अनर्थ के लिए होने से ये दोनों समान ही हैं । जैसे कलञ्ज भक्षण की प्रवृत्ति विपरीत ज्ञान निमित्तक और अनर्थफलक है, उसी प्रकार शास्त्र विहित प्रवृत्तियां भी हैं । इसलिए परमात्मा के निरुपाधिक स्वरूप के ज्ञाता की दृष्टि में शास्त्रविहित प्रवृत्तियाँ भी मिथ्याज्ञान निमित्तक अनर्थ फलक होने से समानधर्मी हैं । निरुपाधिकस्वरूप परमात्मा के ज्ञान हो जाने से विपरीत ज्ञान के निवर्तित होने पर उनका अभाव हो जाता है, यही ठीक है ।

वैसे "अभाव हो जाता है" ऐसा काम्य कर्मों में कह सकते हो, किन्तु नित्य कर्मों का

१ अनर्थफलकत्वम् । २ निरुपाधिस्वरूपेत्यर्थः । ३ काम्यकर्मस्वित्यर्थ । ४ प्रयुक्तत्वात् । ५ विहितत्वादिति—नित्यकर्मणामिति शेषः । ६ प्राप्तीत्यादि—प्राप्तिपरिहाराभ्यां प्रयोजनौ रागद्वेषाविति विग्रहः । ७ तदित्यादि—रागादिजनितप्रवृत्तिसामान्यस्येत्यर्थः । कर्तुरेव विशेषणमिदम् । ८ अर्थादिति—फलत इत्यर्थः—प्रवृत्तिप्रयोजककर्तृत्वादिविषयकविपरीतनानाभावसम्पादनमपि यावत् । ९ तुल्यत्वमेव । १० शास्त्रमात्रेति मात्रपदम् अविद्याऽस्मितादिदोषान् व्यावर्तयति । ११ नित्यानाम्— अहरहः सन्ध्यामुपासीत इत्यादिविहितानाम् । १२ अगृहीतमेव । १३ इत्यविशेषेत्यादि—स्वस्वाकारककामनासामान्यजनितप्रवृत्तिसामान्ययुक्तस्य पुंस इत्यर्थः ।

निष्टप्राप्तिपरिहारार्थिनो नित्यानि कर्माणि विधीयन्ते न केवलं शास्त्रनिमित्तान्येव।

न चाग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धसोमानां कर्मणां स्वतः काम्यत्वनित्यत्व[1]विवेकोऽस्ति। कर्तृगतेन हि स्वर्गादिकामदोषेण कामार्थता[2]। तथाऽविद्यादिदोषवतः [3]स्वभावप्राप्तेष्टानिष्टप्राप्तिपरिहारार्थिनस्तदर्थान्येव नित्यानीति युक्तं, [4]तं प्रति विहितत्वात्। न [5]परमात्मयाथात्म्यविज्ञानवतः [6]शमोपायव्यतिरेकेण किंचित्कर्म विहित-

नित्यानि विधीयन्ते। स्वर्गकाम पशुकाम इति विशेषार्थिनः काम्यानि। तुल्यं तूभयेषां केवलशास्त्रानिमित्तत्वमित्यर्थः।

किंच काम्यानां [7]दुष्टत्वं ब्रुवता नित्यानामपि [8]तद्विधमुत्पत्तिविनियोगप्रयोगाधिकारविधिरूपे [9]विशेषाभावादित्याह—न चेति। कथं तर्हि काम्यनित्यविभागस्तत्राऽऽह—कर्तृगतेनेति। स्वर्गकामः पशुकाम इतिविशेषार्थिनः काम्यविधिरिष्टं मे स्यादनिष्ट मा भूदित्यविशेष[10]कामप्रेरिताविशेषितप्रवृत्तिमतो नित्यविधिरिति [11]युक्तमित्यर्थः। [12]नन्वविद्यादिदोषवतो नित्यानि कर्माणीत्ययुक्तं परमात्मज्ञानवतोऽपि यावज्जीवश्रुतेस्तेषामनुष्ठेयत्वादित्याशङ्क्य [13]श्रुतेरविरक्तविषयत्वान्मैवमित्याह—न परमात्मेति।

अभाव तो उचित नही है, क्योकि वे केवल शास्त्र प्रयुक्त हैं, एव अनर्थों की प्राप्ति नही कराते। (शका का परिहार करते है—) ऐसा कहना ठीक नही है। क्योकि नित्यकर्म अविद्या, राग, द्वेषादि दोष से विहित है। जैसे दर्शपौर्णमासादि काम्यकर्मो का स्वर्गकामादि दोषवान् पुरुषो के लिए विधान किया जाता है, उसी प्रकार सब अनर्थों की जनयित्री ऐसी अविद्यादि-दोषवान्, तथा उससे होने वाले इष्टप्राप्ति और अनिष्टपरिहार के प्रयोजक रागद्वेषरूप दोष से युक्त, तथा उस राग-द्वेष से प्रेरित प्रवृत्ति सामान्य इष्टप्राप्ति अनिष्टपरिहार इच्छा वाले कर्त्ता के लिए नित्य कर्मो का व्यपदेश किया जाता है—वे केवल शास्त्र निमित्तक ही नही हैं।

१ विभाग। २ काम्यता। ३ स्वभाव—कर्तृत्वाद्यभिमान तत्प्रयोजकादृष्ट वा तेन प्राप्तेत्यर्थ। ४ निखिलानर्थबीजाविद्यादिदोषवन्त पुमासम्। ५ परमात्मनोस्तत्त्वमर्थयोर्याथात्म्य निरुपाधिरूपम्। ६ कर्मोपरमात्मकसाधन विनेत्यर्थ। ७ दोषप्रयुक्तत्वम्। ८ यथा एषां विधीना काम्यविधायकत्व तथैव नित्यविधायकत्वमपीति भाव। ९ विधित्वस्य तुल्यत्वादित्यर्थ तथा चोभयेषामपि दुष्टत्वमवश्य वाच्य विहितत्वाविशेषात्। १० कामसामान्यजनितेत्यर्थ। ११ युक्तमिति उक्तविधया काम्यनित्यविभागो युक्त इत्यर्थ। प्रकारान्तरेण स विभागो न सिध्यति तुल्य हि नित्यस्यापि कामनाधीनत्व "यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टित"मिति स्मृतेरिति न कामाधीनत्वमपि काम्यत्वमिति भाव। १२ कामनाप्रयुक्त काम्य जीवनप्रयुक्त नित्यमिति विभागे शङ्कते नन्विति। १३ श्रुतेरविरक्तेति—यावज्जीवश्रुते कामादिदोषापहृतमानसपुंविषयत्वादित्यर्थ। ननु रागादिदुष्टस्य कर्माधिकारे तथाविधस्यैव मुमुक्षोर्ज्ञानाधिकारोऽपीति न विशेषो ज्ञानकर्मणो मुमुक्षोरपि मोक्षे रागादित्याशङ्क्य समादधुर्वार्तिककाचार्या तथाहि—"आविरिञ्चादिरक्तस्य तद्विविक्तात्मकामिन। मोक्षे पुंसोऽधिकार स्यान्न कामापहृतात्मन ॥१॥ पराच कामानित्येव कामानित्यपर तथा। सोऽकाम इति तद्वच्च श्रुति कामनिषेधिनी ॥२॥ अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष्यते। ज्ञानोत्पत्तौ न चैवान्यच्छमादिभ्यो ह्यपेक्ष्यते ॥३॥ शमाद्युत्पत्तये नान्यद्बुद्धिशुद्धेरपेक्ष्यते। बुद्धिशुद्धौ च नित्यादिकर्मभ्यो नान्यदिष्यते ॥४॥ आत्माऽज्ञानैकहेतुत्वाद्वाङ्मन कायकर्मणाम्। आत्मज्ञानेन तद्बाधात् कर्मापेक्षा कुतो भवेत् ॥५॥ यदज्ञाना-

मुपलभ्यते । कर्मनिमित्तदेवतादिसर्वसाधनविज्ञानोपमर्देन ह्यात्मज्ञानं विधीयते । न चोपमर्दितक्रियाकारकादिविज्ञानस्य कर्मप्रवृत्तिरुपपद्यते । विशिष्टक्रिया-

---

"योगारूढस्य तस्यैव शमः कारणमुच्यते"

इति स्मृतेर्ज्ञानपरिपाके कारणं कर्मोपशम एव प्रतीयते न तथा कर्मविधिरित्यर्थः । न केवलं विहितं नोपलभ्यते न संभवति चेत्याह—कर्मनिमित्तेति । यदा नासि त्वं संसारो किंवकर्त्रभोक्तृ ब्रह्मासीति श्रुत्या ज्ञाप्यते तदा देवतायाः संप्रदानत्वं करणत्व व्रीह्यादेरित्ये"तत्सर्वमु"पमृदितं भवति । "तत्कथमकर्त्रात्मज्ञानवतः संभवति कर्मविधिरित्यर्थः ।

"उपमृदितमपि वासनावशादुद्भविष्यति "ततश्च विदुषोऽपि कर्मविधिः स्यादित्याशङ्क्याऽऽह—न चेति । वासनावशादुद्भूतस्या"ऽऽभासत्वादा"त्मस्मृत्या पुनः पुनर्बाधाच्च विदुषो न कर्मप्रवृत्ति-

---

इसके अतिरिक्त, अग्निहोत्र, दर्श, पूर्णमास, चातुर्मास्य, पशुबन्ध और सोमादि कर्मों का, स्वत कोई काम्यत्व अथवा नित्यस्वरूप विभाग नहीं होता । स्वर्गविषयक कामना के दोष से कर्ता की काम्यता सिद्ध होती है । इसी प्रकार कर्तृत्वादि-अभिमान से प्राप्त, इष्टप्राप्ति और अनिष्टपरिहार के इच्छुक अविद्यादि-दोषवान् कर्त्ता के लिए ही नित्यकर्मों का व्यपदेश किया गया है—ऐसा मानना उचित है । क्योंकि उसी (निखिल अनर्थ के बीजरूपा अविद्यादि दोषवान्) पुरुष के लिए उनका प्रयोग किया गया है । परमात्मा के निरुपाधिकस्वरूप विज्ञाता के लिए कर्मोपशमरूप साधन से भिन्न

---

त्प्रवृत्तिर्या तज्ज्ञानात्सा कुतो भवेत् । प्रत्यग्ज्ञानोद्भवे तस्मात् समाप्तिः सर्वकर्मणामिति ॥६॥" एतेषां व्याख्यानम्—आविरिञ्चादिति-आ च स्थाणो संसारादिति शेष. । अनित्यसंसारविषयस्तच्छब्द । मोक्षशब्दस्तदुपायज्ञानविषय । साधनचतुष्टयविशिष्टो हि मोक्षोपायज्ञानेऽधिकारी न रागादिमान् अथ शब्दोपात्तन्यायविरोधादित्यर्थ । अथाथ शब्द आदिमब्रह्मसूत्रघटको बोध्य तस्य साधनसम्पत्त्यानन्तर्यार्थत्वात् न्यायश्च तत्रोक्तयुक्तिकलाप ॥१॥ विरक्तस्य ज्ञानाधिकारे मानमाह—पराच इति । पराच कामाननुयन्ति बाला इत्येष प्रकारक वाक्यम् । कामान्य कामयते मन्यमान इत्यपरमपि वाक्य पूर्ववशिन्दाद्वारा कामनिषेधकम् । उक्तवाक्यवद् योऽकाम इति च श्रुति साक्षादेव तन्निषेधेन कामाद्यनुपद्रुतस्य श्रेयोमार्गे सम्यग्ज्ञानेऽधिकार सूचयतीत्यर्थं ॥२॥ कथ कर्मफलाद्विरक्तस्य मोक्षाधिकार तन्यापि हस्फलत्वादन्यथा कर्मणामुत्तमफलानन्वय स्यादित्याशङ्क्य क्रममुपन्यस्यति-अविद्याया इति । शमादीनां ज्ञानोऽन्त्यत्युपकरणत्व श्रुतिप्रसिद्धमिति हिशब्दार्थ ॥३॥ ॥४॥ परम्परयापि कर्मणा मोक्षोपयोगश्चेत् किमिति साक्षादेव नेष्यते तत्राह—आत्मेति त्रिविधस्यापि कर्मणोऽज्ञानजन्यत्वात् ज्ञानादज्ञाननिवृत्तौ तद्स्थस्य कर्मणोऽपि निवृत्तेर्ज्ञानिनो मोक्षे तदपेक्षा न युक्तत्यर्थ ॥५॥ ज्ञानिनो ध्वस्ताज्ञानस्यापि कर्मदर्शनात्मोक्षे तदपेक्षेत्याशङ्क्य तस्य बाधितानुवृत्त्या तदहष्टिरित्याशयेनाह्—तदज्ञानादिति ऊर्ध्वमिति शेष । योगारूढस्य तस्यैवेति वचनात् कर्मोपशमो ज्ञानपरिपाके हेतुर्न कर्मेति मत्वा फलितमाह्—प्रत्यगिति— ज्ञानादूर्ध्वं कर्मासंभवस्तच्छब्दार्थ ॥६॥ इति १ कर्मनिमित्त यस्येति विज्ञानान्वयि । २ उपमर्दो बाध प्रयोजकत्व तृतीयार्थं तद्बाधप्रयोजक तद्बाधफलकमिति यावत् । ३ उपदिश्यते । ४ विदुष । ५. सभवति । ६ विशिष्टत्वम्-अबाधितत्वम् । ७ ज्ञानपदारूढस्य । ८ न च जीवनप्रयुक्त नित्यमिति युक्त सत्यपि जीवने कदाचित्तदभावात् तस्मिन्सत्येव तत्सत्त्व तु काम्येऽपि तुल्यमिति भाव । ९. इति स्वरूपमित्यर्थं । १० एतत्सर्वज्ञानमित्यर्थं । ११ बाधितम् । १२ तत् तस्मात्—कर्मप्रवृत्तिप्रयोजकक्रियाकारकादिविज्ञानाभावादित्यर्थं । १३ बाधितमपि यथोक्तविज्ञानम् । १४. उद्भूतात्तस्मात् । १५ आभासत्वात्—भ्रमरूपत्वात् भ्रमस्य चाप्रवर्त्तकत्वादित्यर्थ । १६ नन्वाभासादपि शुक्तिरजतादाविव प्रवृत्ति स्यादत आह—आत्मस्मृत्येति ।

साधनादिविज्ञानपूर्वकत्वात्क्रियाप्रवृत्तेः न हि देशकालाद्यनवच्छिन्नास्थूलाद्वयादिब्रह्मप्रत्यय-[1]धारिणः कर्मावसरोऽस्ति । भोजनादिप्रवृत्त्यवसरवत्स्यादिति चेत् । न । अविद्यादि-[2]केवलदोषनिमित्तत्वाद्भोजनादिप्रवृत्तेरा[3]वश्यकत्वानुपपत्तेः ।

न तु [4]तथाऽनियतं कदाचित्क्रियते कदाचिन्न क्रियते चेति नित्यं कर्मोपपद्यते । केवलदोषनिमित्तत्वात्तु भोजनादिकर्मणोऽनियतत्वं स्यात् । दोषोद्भवाभिभवयोरनियतत्वा-[5]त्कामानामिव काम्येषु । [6]शास्त्र[7]निमित्तकालाद्यपेक्षत्वाच्च नित्यानामनियतत्वानुपपत्तिः ।

रित्यर्थं । किंचानवच्छिन्नं ब्रह्मास्मीति स्मरतस्तदात्मकस्य देशादिसापेक्षं कर्म निरवकाशमित्याह—नहीति । विदुषो भिक्षाटनादिवत्कर्मावसरः स्यादिति शङ्कते—भोजनादीति । अपरोक्षज्ञानवतो वा परोक्षज्ञानवतो वा भोजनादिप्रवृत्तिः । [8]नाऽऽद्य । [9]अनभ्युपगमा[10]त्तत्प्रतीतेर्बाधितानुवृत्तिमात्रत्वाद-[11]ग्निहोत्रादेरबाधिताभिमाननिमित्तस्य [12]तथात्वानुपपत्तेरित्यभिप्रेत्याऽऽह—नेति । न द्वितीयः । परोक्षज्ञानिन [13]शास्त्रानपेक्षक्षुत्पिपासादिदोषकृतत्वा[14]त्तत्प्रवृत्तेरिष्टत्वादित्याह—अविद्यादीति ।

अग्निहोत्राद्यपि [15]तथा स्यादिति चेन्नेत्याह—नत्विति । भोजनादिप्रवृत्तेरा[16]वश्यकत्वानुपपत्तिं विवृणोति—केवलेति । न तु तथेत्यादि प्रपञ्चयति—शास्त्रनिमित्तेति । [17]तर्हि शास्त्रविहितकाला-

कोई भी कर्म विहित नहीं है । क्योंकि आत्मज्ञान का उपदेश तो इसलिए किया जाता है, ताकि कर्म-निमित्तक विज्ञानान्वयी देवतादिरूप सब प्रकार के साधनों के विज्ञान का बाध हो ।

और जिसके क्रियाकारकादि-विज्ञान का बाध हो गया है, ऐसे विद्वान् की भी कर्म में प्रवृत्ति संभव नहीं है । कर्म में प्रवृत्ति तो अबाधित-क्रियासाधनादि ज्ञानपूर्वक होती है । देशकालादि से अनवच्छिन्न, अस्थूल और अद्वयादि स्वरूप ब्रह्मप्रत्यय की धारणा करने वाले विद्वान् को तो कर्म करने का कोई अवकाश ही नहीं होता । (शंका होती है) भोजनादि प्रवृत्ति के अवसर के समान विद्वान् को भी कर्म का अवसर हो सकता है, ऐसा कहा जाय तो ? (शंका परिहार करते हैं)—ऐसा कहना ठीक

१ उत्पन्नब्रह्मप्रत्ययस्यापि तस्मात्तदूर्ध्वं कर्म भविष्यतीत्याशङ्क्याह—धारिण इति । तथा चोक्तम्— 'न चोच्छि-न्नात्ममोहस्य सदैवात्मधियि स्थिते । प्रतीच्यवसरोऽस्तीह वाङ्मनःकायकर्मणामिति ॥" स्थितेरिति प्रवाहरूपे-णेति शेषः । २ शास्त्रानपेक्षत्वं केवलत्वम् । ३ नियतत्वाभावादित्यर्थः । ४ तथेति—भोजनादिवदि-त्यर्थः । ५ कामवतां पुंसामिति केचित् । ६ शास्त्रविहितेति यावत् । ७ शास्त्रनिमित्तेत्यादि—यथा काम्याग्निहोत्रस्य दोषनिमित्तत्वे सत्यपि शास्त्रविहितत्वात् सायंप्रातःकालाद्यपेक्षत्वम् एवं नित्यानामपि दोष-निमित्तत्वे सत्यपि शास्त्रनिमित्तकालाद्यपेक्षत्वात् अनियतत्वानुपपत्तिरित्यन्वयः । ८ दृष्टान्तासमत्वं परिहरति-नाद्य इति । ९ प्रवाहात्मना सदा सम्यग्बुद्धिस्थितेरात्मवत्त्वप्रयुक्तत्वादित्यभिप्रेत्याह—अनभ्युपगमादिति । १० ननु तदनभ्युपगमे देहधारणदर्शनं देहाधीनजीवन्मुक्तिशास्त्रं च विरुध्येतेत्याशङ्क्याह—तदिति । यद्यपि सत्यामेवाकर्तृभोक्तृब्रह्मात्मविद्यायां भोजनादिप्रवृत्त्यनवकाशस्तथापि दग्धपटवद्बाधितानुवृत्त्या तद्भानाज्जीव-न्मुक्तिरविरुद्धेति भावः । ११ नन्वग्निहोत्राद्यपि बाधितानुवृत्त्या स्यादित्याशङ्क्याह—अग्निहोत्रेति । १२ तथात्वम्—बाधितानुवृत्तिमात्रत्वम् । १३ शास्त्रानपेक्षेत्यादि—भिक्षादिप्रवृत्तेः केवलदोषप्रयुक्तत्वात् अग्निहोत्रा-देश्च शास्त्रप्रयुक्तत्वाच्च भिक्षादिदृष्टान्तेन अग्निहोत्राद्यापादयितुं शक्यम्—दृष्टान्तदार्ष्टान्तिकयोः शास्त्रकृतत्व-तदकृतत्वाभ्यां वैधर्म्यादिति भावः । १४ भिक्षाटनादिप्रवृत्तेः । १५ तथेति—अविद्यादिदोषमात्रप्रयुक्त-मित्यर्थः । १६ अविद्येत्यादिग्रहवाक्योक्तनियतत्वाभावं व्याचष्ट इत्यर्थः । १७ नियतत्वे सतीत्यर्थः ।

'दोषनिमित्तत्वे सत्यपि यथा काम्याग्निहोत्रस्य शास्त्रविहितत्वात्सायंप्रात कालाद्यपेक्ष-त्वमेवम् ।

।तद्भोजनादिप्रवृत्तौ 'नियमवत्स्यादिति चेत् । न नियमस्याक्रियात्वा'त्क्रियायाश्चा-प्रयोजकत्वा'न्नासौ' ज्ञानस्या'पवादकरः ।

---

द्यपेक्षत्वान्नित्यानाम'दोषप्रभवत्वं भवेदित्याशङ्क्याऽऽह—'दोषेति । एव दोषकृतत्वेऽपि नित्याना शास्त्र-सापेक्षत्वात्कालाद्यपेक्षत्वमविरुद्धमित्याह—एवमिति ।

भोजनादेर्दोषकृतत्वेऽपि—

'चातुर्वर्ण्यं 'चरेद्भैक्षम् ।' 'यतीना तु 'चतुर्गुणम्'

"इत्यादि"नियमवद्विदुषोऽग्निहोत्रादिनियमोऽपि स्यादिति शङ्कते—तद्भोजनादीति । "विदुषो नास्ति भोजनादिनियमो"ऽतिक्रान्तविधित्वात् । न च"तावता यथेष्टचेष्टापत्तिरधर्माधीनाऽविवेककृता हि सा । न च तौ विदुषो विद्येते । अतो"ऽविद्यावस्थायामप्यसतो यथेष्टचेष्टा विद्यादशाया "कुत "स्यात् । सस्कारस्याप्यभावात् । "बाधितानुवृत्तेश्च । अग्निहोत्रादेस्त्व"नाभासत्वान्न बाधितानुवृत्तिरित्याह—नेति । किचाविदुषा विविदिषूणामेव "नियमः । तेषा विधिनिषेधगोचरत्वात् । न च तेषामप्येष"

---

नही । भोजनादि मे प्रवृत्ति नियतत्वाभाव के कारण अथवा शास्त्रानपेक्षत्व केवल अविद्यादिदोप-जनित होने के कारण होती हो—ऐसा सिद्ध नही होता ।

इसके अतिरिक्त भोजनादि के समान नित्य कर्म का—'कभी करलो, कभी न करो'—ऐसा अनियत होना सभव नही है । भोजनादि कर्म केवल क्षुधादि दोप के कारण होते है, उनका अनियतत्व सभय है, काम्य कर्मो मे कामना अथवा कामवान् पुरुषो की तरह उन दोषो की उत्पत्ति और निवृत्ति अनियत हैं । अग्निहोत्ररूप काम्यकर्म के दोपनिमित्तक होने पर शास्त्रविहित होने से साय-प्रात-कालादि अपेक्ष्य है, ऐसे ही नित्य कर्म भी दोपमय होने पर शास्त्रनिमित्तक कालाद्यपेक्ष्य है, अत उनमे अनियत होना नही बनता ।

---

१ दोषेत्यादि--इद पूर्वोत्तरोभयान्वयि दोषनिमित्तत्वे सत्यपि नित्यानामनियतत्वानुपपत्तिरिति पूर्वान्वय । २ विदुषोऽग्निहोत्रादिनियमोऽपि स्यादित्यर्थ । ३ भिक्षादेरितरविद्याविरोधिक्रियाऽनाक्षेपकत्वादित्यर्थ । ४ ननु विविदिषूणा परिसख्यायते चेत्तदर्थानुष्ठाननिष्ठाना तेषा विद्यार्थप्रवृत्त्यनुपपत्ते सा नोपपद्येतेत्याशङ्क्याह—नासाविति । यस्मादन्य निवृत्तिफलो नियमो न विरुद्धक्रियाप्रयोजक तस्मादादमविधो न बाधकोऽपित्वनुग्राहक एव भिक्षादिहीनस्य यथेष्टचेष्टारसिकस्य वा ब्रह्मविद्यानुपपत्तेरिति भाव । ५ परिसख्यानियम । ६ बाधक । ७ अदोषप्रभवत्व भवेदिति—तथा च शास्त्रमात्रप्रयुक्तानुष्ठानत्वादनर्थकरत्वाभावात्तेषु प्रवृत्त्यभावो विदुषोऽपि न युक्त इत्याकूतम् । ८ इमौ भिन्नपर्यायपादौ । ९ इद चातुर्गुण्य शौचेऽभिहितम्—मनु० ५-१३६ । १० आदिना एककाल चरेद्भैक्षमित्यादिग्राह्यम् । ११ वर्णसख्या कालनियमेत्यर्थ । १२ विदुषो भिक्षाटनाद्येवासिद्ध तन्नियमवदग्निहोत्रादिनियतिस्तु दूरनिरस्तेत्यभिप्रेत्याह—विदुष इति । अत्र असिद्धमित्यस्य शास्त्रानपेक्षमित्यर्थ । १३ विध्यकिङ्करत्वादित्यर्थ । १४ अतिक्रान्त-विधित्वमात्रेण । १५ साधनावस्थायामिति यावत् । १६ कारणात् । १७ अपितु न स्यात् कारणा-भावात् । १८ उपशान्त दृष्टान्तदार्ष्टान्तिकयोर्वैषम्य स्फुरयति—बाधितेति । भोजनादौ प्रवृत्तिसभव इति शेष । भोजनादेर्दोषमात्रजन्यत्वनाभासतया बाधितानुवृत्तिसभवादिति भाव । १९ अबाधिताभिमाननिमित्त-त्वादनाभासत्वम् । २० नियम —चातुर्वर्ण्यमित्यादिवर्णितो नियम । २१ नियम ।

'तस्मात्परमात्मयाथात्म्य'ज्ञानविधेरपि तद्विपरीतस्थूलद्वैतादिज्ञाननिवर्तकत्वा'त्सामर्थ्यात्सर्वकर्मप्रतिषेध'विध्यर्थत्वं संपद्यते । कर्मप्रवृत्त्यभावस्य तुल्यत्वाद्यथा 'प्रतिषेधविषये । 'तस्मात्प्रतिषेधविधिवच्च वस्तुप्रतिपादनं तत्परत्वं च सिद्धं शास्त्रस्य ॥१॥

---

ज्ञानोदय'परिपन्थी । 'तस्यान्यनिवृत्तिरूपस्य स्वयंक्रियात्वाभावात् । नापि 'स क्रियामाक्षिपन्ब्रह्मविद्यां "प्रतिक्षिपति । "अन्यनिवृत्त्या"स्मन"स्तदाक्षेपकत्वासिद्धेरित्याह—नियमस्येति ।

कर्मसु रागादिमतोऽधिकाराद्विरक्तस्य ज्ञानाधिकारज्ज्ञानिनो हेत्वभावादेव कर्माभावा"त्तस्य "भोजनाद्यतुल्यत्वात्तत्त्वमादेः सर्वव्यापारोपरमात्मकज्ञानहेतोर्निवर्तकत्वेन प्रामाण्यं प्रतिपादितमुपसंहरति—तस्मादिति । तस्य" विधिरुत्पादकं वाक्यम् । तस्य निषेधवाक्यवत्तत्त्वज्ञानहेतोस्तद्विरोधिमिथ्याज्ञानध्वंसित्वादशेषव्यापारनिवर्तकत्वेन "कूटस्थवस्तुनिष्ठस्य युक्तं प्रामाण्यम् । मिथ्याज्ञानध्वंसे हेत्वभावे फलाभावन्यायेन सर्वकर्मनिवृत्तेरित्यर्थः । "तत्पदोपात्तं हेतुमेव स्फुटयति—कर्मप्रवृत्तीति । यथा प्रतिषेध्ये भक्षणादौ प्रतिषेधशास्त्रवशात्प्रवृत्त्यभावस्तथा तत्त्वमस्यादिवाक्य"सामर्थ्यात्कर्मस्वपि प्रवृत्त्यभावस्य तुल्यत्वात्प्रामाण्यमपि तुल्यमित्यर्थः । प्रतिषेधशास्त्रसाम्ये तत्त्वमस्यादिशास्त्रस्योच्यमाने "तद्वत्‌ निवृत्तिनिष्ठत्वं स्यान्न वस्तुप्रतिपादकत्वमित्याशङ्‌क्याऽऽह—तस्मादिति । प्रतिषेधो हि प्रसक्तक्रियां निवर्तयंस्त"दुपलक्षितौदासीन्यात्मके वस्तुनि "पर्यवस्यति" । तथा तत्त्वमस्यादिवाक्यस्यापि वस्तुप्रतिपादकत्वमविरुद्धमित्यर्थः । वेदान्तानां "सिद्धे प्रामाण्यवद्"र्थवादादीनामन्यपराणामपि संवादविसंवादयोरभावे स्वार्थे मानत्वसिद्धौ सिद्धा विद्युद्धचादिगुणवती "प्राणदेवतेति चकारार्थः ।

---

(इस पर शङ्का होती है)—उस भोजनादि प्रवृत्ति में (भिक्षाटन) नियम की तरह विद्वान् का अग्निहोत्रादि नियम भी हो सकता है, ऐसा कहना ठीक नहीं । नियम की क्रियारूपता नहीं है, और क्रिया प्रयोजक नहीं होती—यह परिसंख्या नियम ज्ञान का विरोधी नहीं है ।

---

१ वक्ष्यमाणहेतौ । २ ज्ञानोत्पादकवाक्यस्य । ३ निवर्तकत्वान्यथाऽनुपपत्त्येत्यर्थः । ४ बोधनार्थत्वम् । ५ कलञ्जभक्षणादौ । ६ तस्मादिति- निषेधवाक्ये तत्त्वमादौ च प्राप्तप्रवृत्तिनिरासेन अकार्यरूपवस्तुमात्रपर्यवसानत्वाविशेषाद् इत्यर्थः । ७ प्रतिबन्धक । ८ नियमस्य परिसंख्यात्मकस्य । तेषामपि चातुर्वर्ण्यमित्यादिनापि नियमविधि प्रसिद्धपरिसंख्याविधित्वोपपत्तेरित्यभिप्रेत्याह—तस्येत्यादि । ९ स परिसंख्यात्मको नियमविधि क्रियाम् निवृत्त्यनुकूलव्यापारम् । आक्षिपन्निति—तां विना स्वस्य विधित्वानुपपत्तेरिति भाव । १० प्रतिबध्नाति । न प्रतिक्षिपतीति—अन्यथा तयैवाग्निहोत्रादिक्रियापि तस्य स्यात् । भगवस्य वादिना क्रियात्वाभ्युपगमेन तत्प्रतिबन्धकत्वाभावे विधौ क्रियात्वसामान्येन अग्निहोत्रादेरप्यप्रतिबन्धात्तदपि प्रसज्येतेति भाव । ११ अन्यनिवृत्तीत्यादि—स खल्वन्यनिवृत्तिप्रयोजक सन् प्रयोजयति क्रियाम्—इति कुतो विद्याविरोध कुतश्च तस्याग्निहोत्रादिप्रसक्तिरिति भाव । १२ निवृत्तिबोधकस्य । १३ ननु विधेर्माचार्यविषयत्वनियमादस्तिक्रियाऽऽक्षेपकत्वमित्याशङ्क्य विद्याविरुद्धतदाक्षेपकत्वासंभवमभिप्रेत्याह—तदिति । भिक्षादे क्षुद्दोषकृतत्वात्कर्मणोऽतथात्वात् वैषम्यमिति भाव । १४ कर्मण । १५ शास्त्रानपेक्षक्षुधादिदोषमात्रकृतत्वाद्भिक्षादे । १६ परमात्मयाथात्म्यज्ञानस्य । १७ अक्रिये वस्तुनात्पर्यवत । १८ तस्मादिति—पदेत्यर्थ । १९ सामर्थ्यादिति अदोषप्रवृत्तीनामात्मा ज्ञानहेतुकत्वात् परमात्मयाथात्म्यज्ञानहेतोस्तत्त्वमस्यादेस्तद्ध्वंसित्वेन हेत्वभावे फलाभाव इति न्यायेन विदुष कर्मसु प्रवृत्त्यभावो युक्त एवेति तत्त्वम् । २० तद्वत्-निषेधशास्त्रवदेवेत्यर्थः । २१ तदुपलक्षितेत्यादि—निवृत्त्युपलक्षितप्रवृत्त्यनुकूलप्रयत्नाभावविशिष्टमनोऽवस्थाविशेषात्मके वस्तुनीत्यर्थ । २२ तात्पर्यवद्भवति । २३ यथानि दोष । २४ अनारोपे शुद्धे ब्रह्मणि । २५ विधेयप्राधान्यपराणाम् । २६ प्राणदेवतेति—तदुपास्तेश्च सिद्धत्वात् तत्परमेव इत्याहेत्यादिवाक्यमित्यर्थ ।

**ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत्। यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥२॥**

उन देवताओ ने ऐसा निश्चय कर वाक् के अभिमानी देव से कहा—'तुम हमारे लिए उद्गाता का कर्म करो'। वाणी ने 'बहुत अच्छा' ऐसा कहकर उन देवताओं के लिए गान किया। उसने वाणी मे जो भोग था, उसे देवताओ के लिए गान किया और जो कल्याणकारक भाषण करती थी, उसे अपने लिए गाया। तब असुरो ने जाना कि इस उद्गाता के द्वारा ही देवगण हमे जीतेंगे। अत असुरो ने वाणी के पास जाकर उसे पाप से बेध डाला। यह जो वाणी निषिद्ध भाषण करती है, वही वह पाप है, वही वह पाप है ॥२॥

---

[1]ते देवा हैवं [2]विनिश्चित्य वाचं वागभिमानिनीं देवतामूचुरुक्तवन्तः। त्वं नोऽस्मभ्यमुद्गायौद्गात्रं कर्म कुरुष्व वाग्देवतानिर्वर्त्यमौद्गात्रं कर्म [3]वृष्टवन्तः। तामेव च

---

[4]ज्ञानमिह परीक्ष्यमाणमित्येतत्प्रसङ्गागतं विचार परिसमाप्य ते ह वाचमित्यादि व्याचष्टे—ते देवा इति। [5]अचेतनाया वाचो नियोज्यत्वं वारयति—वागभिमानिनीमिति। नियोक्तृणा देवानामभिप्रायमाह—वाग्देवतेति। नन्वौद्गात्रं कर्म जपमन्त्रप्रकाश्या देवता निर्वर्तयिष्यति ननु वाग्देवतेति

---

इस वक्ष्यमाण हेतु से परमात्मनिरुपाधिक ज्ञानोत्पादकवाक्य भी, उससे विपरीत स्थूल एव द्वैतादि ज्ञाननिवर्तक—अन्यथानुपपत्ति से, सब प्रकार के कर्मों के प्रतिषेध-बोधन के लिए तत्पर होता है। उसमे कर्मप्रवृत्ति का अभाव (कलञ्जभक्षणादि) प्रतिषेधविषयक वाक्यो के समान है। अत प्रतिषेधवाक्यो के समान ही 'तत्त्वमसि' आदि मे भ्रान्त-प्रवृत्ति निरास द्वारा (अकार्य शेष) वस्तु-प्रतिपादक और कर्मनिषेधपरक होना शास्त्र का सिद्ध होता है ॥१॥

उन (प्राजापत्य करणाधिष्ठाता) देवताओ ने ऐसा निश्चय कर "वाचम्" अर्थात् वाक् के

---

१ ते प्राजापत्या देवा करणाधिष्ठातार। २ उद्गीथेन ज्योतिष्टोमयज्ञे असुरानतीत्य स्व देवभाव प्रतिपद्येमहीत्येव निश्चित्येति ॥ शब्दार्थ। ३ औदगात्र कर्मवाग्देवतयैव निर्वर्तयितु शक्यमिति निश्चितवन्त सन्त ऊचुरित्यन्वय। ४ ७४ पृष्ठे भाष्ये 'ज्ञान त्विदमेवनिरूप्यमाण'मित्युक्ततत्प्रसङ्गादागतमित्यर्थ। ५ ननु चेतनस्यैव भृत्यादे चेतनेन राजादिना नियोगदर्शनात् अचेतनेन चक्षुरादिना कथमचेतनाया वाचो नियोग इत्याशङ्क्याह—अचेतनाया इति। तथा च वार्तिकम्—"वागभिमानिनी चेह वाक्शब्देनाग्निरुच्यत" इति। अथ ह प्राणमूचुरित्यादिपर्य्यायेष्वपि प्राणादिशब्दाना देवतावाचित्व च शब्देन समुच्चीयते। तामेव विशिनष्टि-अग्निरिति। "अग्निर्वाग्भूत्वा मुख प्राविशद्' ति श्रुतेरग्निरेव वागभिमानिनी देवता सैवात्र ग्राह्य उपास्यत्वात्। "ते ह देवा वाचमुद्गीथमुपासाञ्चक्रिरे" इति श्रुते। अध्येषणाविषयत्वाच्च—लोके अध्येषणाविषयश्चेतनश्चैत्रो दृष्टो वाक् च त्व न उद्गायेत्यध्येषणाविषय। न च रूढिवशाद्वागादिशब्दैरिन्द्रियाणामेव ग्रहण तेषा पारार्थ्यात्। अचेतनत्वात्। मर्त्यत्वात्। अनीश्वरत्वाच्चेत्यन्यत्र विस्तर.।

वाचं देवतां जपमन्त्राभिधेयामसतो मा सद्गमयेति।[1]अत्र चोपासनायाः कर्मणश्च कर्तृत्वेन वागादय एव विवक्ष्यन्ते। कस्मात्। यस्मात्परमार्थतस्तत्कर्तृकस्तद्विषय एव च सर्वो ज्ञानकर्मसंव्यवहारः। वक्ष्यति हि "ध्यायतीव लेलायतीव" इत्यात्मकर्तृत्वाभावं विस्तरतः षष्ठे। इहापि चाध्यायान्त उपसंहरिष्यत्य व्याकृतादिक्रियाकारकफलजातम् "अयं वा इदं नाम रूपं कर्म" इत्य विद्याविषयम्। अव्याकृतात्तु यत्परं परमात्माख्यं विद्याविषयम-

तत्राऽऽह—तामेवेति। असतो मा सद्गमयेतिजपमन्त्राभिधेया दृष्टवन्त इति पूर्वेण संबन्धः। वागाद्याश्रयं कर्तृत्वादि दर्शयतोऽर्थवादस्य "प्रासङ्गिकं तात्पर्यमाह—अत्र चेति। आत्माश्रये कर्तृत्वादावभासमाने तस्य वागाद्याश्रयत्वमयुक्तमित्याह—कस्मादिति,। परस्य जीवस्य या कर्तृत्वादि विवक्षितमिति विकल्प्याऽऽद्यं दूषयति—यस्मादिति। विचारदशायां वागादिसंघातस्य क्रिया"दिशक्तिमत्त्वात्कर्तृत्वादिस्तदाश्रयो यस्मात्प्रतीतस्तस्मात्परस्याऽऽत्मनः "स्वतस्तच्छक्तिशून्यस्य न तदाश्रयत्वमित्यर्थः। किं चा"विद्याश्रय सर्वो व्यवहारो न तद्धीने परस्मिन्नवतरतीत्याह—तद्विषय इति। ""कर्ता शास्त्रार्थवत्त्वात्""इति न्यायेन कर्तृत्वमात्मनोऽङ्गीकर्तव्यमित्याशङ्क्य "यथा च तक्षोभयथा" इति न्यायादौपाधिकं तस्मिन्कर्तृत्वमित्यभिप्रेत्याऽऽह—वक्ष्यति हीति। यदुक्तम"विद्याविषयः सर्वो व्यवहार इति "तत्र "वाक्यशेषमनुकूलयति—इहापीति। इतश्च परस्मिन्नात्मनि कर्तृत्वादिव्यवहारो नास्तीत्याह—अव्याकृतात्त्विति। अनामरूपकर्मात्मकमित्यस्मादुपरिष्टात्तत्पदमध्याहर्तव्यं पृथग"विद्याविषया-

अभिमानी देवता से कहा—तुम हमारे लिए 'उद्गाय' अर्थात् उद्गाता का कर्म करो—औद्गात्र कर्म वाग्देवता द्वारा उपपन्न होना शक्य है—ऐसा निश्चय किया। उसी वाक् देवता को "मुझे असत् से सत् के प्रति अग्रसरित करो" इस जप मन्त्र का अभिधेय देखा। यहां अर्थवाद वाक्य में उपासना और कर्म के कर्त्तारूप से वागादि ही विवक्षित हैं (आत्मा नहीं)। ऐसा क्यों कहते हो? क्योंकि उपासना और कर्मसम्बन्धी सारा व्यवहार वस्तुतः वागादिसङ्घातकर्तृक है, एवं अविद्या का आश्रय है। आत्म-कर्तृकविषयता का अभाव विस्तार से बृहदारण्यक उपनिषद् के चतुर्थ अध्याय में बताया जायगा। जैसे "बुद्धि से ध्यान करता हुआ आत्मा भी ध्यान करता हुआ सा प्रतीत होता है। उसके चलने पर आत्मा भी चलता हुआ सा प्रतीत होता है।" एवं अव्याकृत और व्याकृत क्रिया-कारक-फलजात,

१ अर्थवादवाक्ये। २ मत्वात्मा। ३ तत्कर्तृक वागादिसङ्घातकर्तृक। ४ अविद्याश्रय। ५ ध्यायतीत्यादि—बुद्धौ ध्यायन्त्यां सत्यामात्मापि ध्यायतीव लक्ष्यते। चलन्त्यां च तस्यां चलतीव सोऽपीति वाक्यार्थः। ६ बृ०उ० ४-३-७। ७ सक्षेपेणोपदेक्ष्यति। ८ अव्याकृतव्याकृतात्मकम्। ९ बृ० उ०—१ ६ १। १० अविद्याश्रयम्। ११ अवान्तरम्। १२ आदिना ज्ञानशक्तिः। १३ स्वत इति संघातरूपोपाधिमन्तरेणेत्यर्थः। १४ अविद्याश्रय इति—अविद्याऽन्वयव्यतिरेकानुविधायित्वात्तज्जन्यत्वात्तदाश्रित इत्यर्थः। १५ कर्ता शास्त्रार्थवत्त्वादिति—आत्मैव कर्ता न बुद्धिः कर्तुरपेक्षितोपायबोधकविधिशास्त्रस्य अर्थवत्त्वात् आत्मनः कर्तृत्वे हि विधिशास्त्रमर्थवद्भवति अन्यथा बुद्धिः कर्त्री फलभोक्ता चात्मेति कर्तुरपेक्षितोपायबोधकशास्त्रमनर्थकं स्यात्। तस्माच्च केवलबुद्धेः कर्तृत्वं किन्त्वात्मन इति सूत्रार्थः। १६ ब्र०सू० २ ३ ३३। १७ ब्र० सू० २ ३ ४०। १८ यथा च तक्षोभयथेति—यथा तक्षा उभयथा वास्यादिकरणान्यपेक्ष्य कर्ता दुःखी भवति अनपेक्ष्य तु स्वरूपेणाऽकर्ता सुखी भवति। तथाऽऽत्मापि बुद्ध्यादीनि करणान्यपेक्ष्य कर्ता संसरति अनपेक्ष्य तु स्वाभावतोऽकर्ता परमानन्दः। अतोऽस्त्वयं स्वाभाविककर्तृत्वाभावं गृहाण। १९ अविद्याश्रय। २० उक्तेऽर्थे। २१ उपसंहारवाक्यं संवादयति। २२ अविद्याश्रयात्।

नामरूपकर्मात्मकं नेति नेतीतीतरप्रत्याख्यानेनोपसंहरिष्यति[1] पृथक्। यस्तु वागादिसमाहारोपाधिपरिकल्पितः संसार्यात्मा तं च वागादिसमाहारपक्षपातिनमेव दर्शयिष्यत्येतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति। तस्माद्युक्ता वागादीनामेव ज्ञानकर्मकर्तृत्वफलप्राप्तिविवक्षा।

तथेति तथाऽस्त्विति देवैरुक्ता वाक्तेभ्योऽर्थिभ्योऽर्थायोदगायदुद्गानं कृतवती। कः पुनरसौ देवेभ्योऽर्थायोद्गानकर्मणा वाचा निर्वर्तितः कार्यविशेष इति। उच्यते—यो वाचि निमित्तभूतायां वागादिसमुदायस्य य उपकारो निष्पद्यते वदनादिव्यापारेण स एव। सर्वेषां ह्यसौ वाग्वदनाभिनिर्वृत्तो भोगः फलम्। तं भोगं सा त्रिषु पवमानेषु

---

रिक्रयाकारकफलजातादिति शब्दः। मा भूत्परमात्मा कर्तृत्वाद्याश्रयो जीवस्तु स्यादिति द्वितीयमाशङ्क्याऽऽह—यस्त्विति। जीवशब्दवाच्यस्य विशिष्टस्य कल्पितत्वान्न तात्त्विकं कर्तृत्वादिकं किं तु तद्द्वारा स्वरूपे समारोपितमिति भाव.। आत्मनि तात्त्विककर्तृत्वाद्यभावे फलितमर्थवादतात्पर्यमुपसंहरति—तस्मादिति।

तात्पर्यमर्थवादस्योक्त्वा नियुक्तया वाग्देवतया यत्कृतं तदुपन्यस्यति—तथेत्यादिना। उद्गातृत्वं जपमन्त्रप्रकाश्यत्वं चाऽऽत्मनोऽङ्गीकृत्य वागुद्गाने प्रवृत्ता चेत्तया कश्चिदुपकारे देवानामुद्गानेन निर्वर्तनीयः स च नास्तीति शङ्कते—क पुनरिति। वदनादिव्यापारे सति यः सुखविशेषः संघातस्य निष्पद्यते स एव कार्यविशेष इत्याह—उच्यत इति। यो वाचीति प्रतीकमादाय व्याख्यायते। कथं पुनर्वाचो वचनं चक्षुषो दर्शनमित्यादिना निष्पन्नं फलं सर्वसाधारणमित्याशङ्क्यानुभवमनुसृत्याऽऽह—सर्वेषामिति। किं च देवार्थमुद्गायन्त्या वाचः स्वार्थमपि किंचिदुद्गानमस्ति। तथा च ज्योतिष्टोमे द्वादश स्तोत्राणि तत्र त्रिषु पवमानाख्येषु स्तोत्रेषु याजमानं फलमुद्गानेन कृत्वा शिष्टेषु नवसु स्तोत्रेषु यत्क-

---

अविद्या का आश्रय है। इसमें "यह नाम, रूप और कर्म से वह अनात्मा ही त्रिविध है" ऐसा श्रुतिवाक्य है, जिसका इस अध्याय के अन्त मे सक्षेप से उपदेश किया जायगा। अव्याकृत से परे जो नाम, रूप और कर्म से रहित परमात्मसज्ञक विद्या का विषय है, "नेति नेति" इस श्रुति से आत्मभिन्न-अनात्मनिषेध द्वारा उसका पृथक् उपसहार किया जायगा। और जो वागादि सघातरूप-उपाधि विशिष्ट से कल्पित ससारी आत्मा है वह "इन भूतो से उत्पन्न होकर, इनके नष्ट होने से, इन्ही के साथ नष्ट हो जाता है" इस श्रुतिवचन से वागादिसघात के अन्तर्गत ही है, ऐसा बतलाएंगे। इसलिए वाक् आदि ही उपासना और कर्म के कर्ता हैं, तथा उन्हे ही फल प्राप्ति होती है,—ऐसा मानना ही उचित है।

---

१ आत्मभिन्नानात्मनिषेधेन। २ बृ० उ २ ३ ६। ३ वागादिसघातरूपोपाधिविशिष्टत्वेन कल्पित। ४. सघातान्तर्गतमेवेत्यर्थ। ५ बृ० उ० २ ४ १२। ६ उपकाराय। ७ सर्वदेवसाधारण फलविशेष। ८. सुखविशेष। ९ उद्गीथदेवताधीन सघातस्य सदा जीवन प्रत्यक्षसिद्धमिति हिना द्योतयति। उद्गीथशब्दश्चात्र वागाद्युद्गानकर्तृपर। १० परस्मिन्नेव प्रतीचि विशेष्यादो। ११. उच्यत इत्यस्यायमर्थ। १२. आदिनाऽनुक्तज्ञानकर्मेन्द्रियव्यापारग्रहणम्। १३ सुखविशेषात्मकम्। १४. ज्योतिष्टोमप्रकरणे। १५ यजमानगामि। १६ शुद्धोच्चारणसामर्थ्यम्।

'कृत्वाऽवशिष्टेषु नवसु स्तोत्रेषु 'याचनिकमार्त्विज्यं फलं यत्कल्याणं शोभनं वदति वर्णान-'मितिर्वर्तयति तदात्मने' मह्यमेव । तद्धय'साधारणं वाग्देवतायाः कर्म य'त्सम्यग्वर्णाना-मुच्चारणम'तस्'तदेव विशेष्यते यत्कल्याणं वदतीति । यत्तु वदनकार्यं सर्वसंघातोपकारा-त्मकं तद्याजमानमेव ।

तत्र कल्याणवदनात्मसंबन्धासङ्गावसरं देवताया रन्ध्रं प्रतिलभ्य ते 'विदुरसुराः कथमनेनोद्गात्रा नोऽस्मा''न्स्वाभाविकं ज्ञानं कर्म चा''भिभूयातीत्य शास्त्रजनितकर्मज्ञान-

---

ल्याणवदनसामर्थ्यं तदात्मने स्वार्थमेवाऽऽगायदित्याह—त भोगमिति । ऋत्विजा क्रीतत्वान्न फलसबन्धः संभवतीत्याशङ्क्याऽऽह—याचनिकमिति । ''अथाऽऽत्मनेऽन्नाद्यमा''गायेत्' इति श्रुतमित्यर्थः । कल्याण-वदनसामर्थ्यस्य स्वार्थत्वं समर्थयते—तद्धीति । कल्याणवदनं वाचोऽसाधारणं चेत्कस्तर्हि यो वाची-त्यादेर्विषयस्तत्राऽऽह—यत्त्विति ।

वाग्देवतायामसुराणामवकाशं दर्शयति—तत्रेति । स्वार्थे परार्थे चोद्गाने सतीति यावत् । कल्याणवदनस्याऽऽत्मना यावेव संबन्धे योऽयमासङ्गोऽभिनिवेशः ॥ एवावसरो देवतायास्तमवसरं प्राप्येत्यर्थः । अवसरमेव व्याकरोति—रन्ध्रमिति । अस्मा''नतीत्येति संबन्धः । कोऽसावसुरात्ययस्तं व्याचष्टे—स्वाभाविकमिति । तत्रोपायमुपन्यस्यति—शास्त्रेति । असुरानभिभूय केनाऽऽत्मना देवा.

---

'तथेति' अर्थात् 'ऐसा ही हो'—देवताओं द्वारा कही गयी इस वाणी ने देवताओं के उपकार के लिए उद्गान किया । देवताओं के हित के लिए उद्गान कर्म से वाणी द्वारा कौनसा ऐसा सर्वदेव-साधारण फलविशेष सम्पन्न हुआ ? इस पर कहते हैं—निमित्तभूता वाणी में उसके भाषणादि व्यापार द्वारा वाक् आदि समुदाय का जो (सुख विशेष) उपकार होता है—वही उनका फलविशेष है, क्योंकि सबको वाणी के भाषण से होने वाला, भोगरूप फल प्राप्त होता है ।

उस भोग को पवमानाख्य तीन स्तोत्रों में यजमानगामी उद्गान करके, शेष नौ स्तोत्रों में जो ऋत्विक् सम्बन्धी वेदवचन-प्रमाणित फल था, या वह जो कल्याणमय सुन्दर भाषण-रूप वर्णों का उच्चारण था, "मेरे लिए ही हो"—इस प्रकार उसने अपने लिए उद्गान किया । वाक् देवता का वो इतर व्यावृत्त कर्म है, जो वर्णों का ठीक उच्चारण है । अत (यथोक्त उच्चारण वाणी का असाधारण धर्म होने से) "जो कल्याणमय बोलता है" उक्त सामर्थ्य को ही विशेष रूप से बतलाया है । बोलना रूप जो कार्य है, वह समस्त सङ्घात का हितकारी है, वह यजमान सम्बन्धी ही है ।

(स्वार्थ और परार्थ उद्गान होने पर) वहाँ कल्याणवदन का मेरी वाणी से सम्बन्ध है—ऐसा

---

१ याजमानफलमुद्गानं कृत्वा । २ वेदवचनप्रमाणकम् । ३ उच्चारयति । ४ कृतवतीतिशेष । ५ इतरव्यावृत्तम् । ६ सम्यगित्यादि—तदुक्त वार्तिके—"यथाशास्त्र यथायोग वर्णदोषविवर्जितम् । वर्णोच्चार-णसामर्थ्यं ममैवास्तु तदीदृशमिति ॥" अस्यायमर्थ —व्याकरणादिलक्षणशास्त्रोक्तक्रमेण ताल्वादिस्थानसम्बन्धा-नुरोधेन च अनिद्रुतत्वादिदोषहीन यथा भवति तथा वर्णानामुच्चारणे सामर्थ्यं सदाऽऽत्विज्यमेवेति । ७ अत इति—यथोक्तोच्चारणस्य वाचोऽसाधारणधर्मत्वादित्यर्थ । ८ तदेवेति—उक्तसामर्थ्यमेवेत्यर्थ । ९ विदुरिति—देवाभिप्राय ज्ञातवन्त इत्यर्थ । १० शास्त्रानापेक्षम् । ११ अभिभूयति—अत्येष्यन्तीति भौतिकपदघटका-तिशब्दार्थोऽयम् । १२ बृ० उ० १ ३ २८ । १३ आगानेन सम्पादयेत् । १४ तिरस्कृत्येत्यर्थ ।

रूपेण ज्योतिषोद्गात्रात्मनाऽत्येष्यन्त्यतिगमिष्यतीत्येवं विज्ञाय तमुद्गातारमभिद्रुत्याभिगम्य स्वेनाऽऽसङ्गलक्षणेन पाप्मनाऽविध्यंस्ताडितवन्तः संयोजितवन्त इत्यर्थः। ॥ यः स पाप्मा यः प्रजापतेः पूर्वजन्मावस्थस्य वाचि क्षिप्तः स एष प्रत्यक्षीक्रियते। कोऽसौ। यदेवेदमप्रतिरूपमननुरूप शास्त्रप्रतिषिद्ध वदति येन प्रयुक्तोऽसभ्यबीभत्सानृताद्यनिच्छन्नपि वदति। अनेन कार्येणाप्रतिरूपवदनेनाऽनुगम्यमानः प्रजापतेः कार्यभूतासु प्रजासु वाचि वर्तते। एवाप्रतिरूपवदनेनानुमितः स प्रजापतेर्वाचि गतः पाप्मा कारणानुविधायि हि कार्यमिति ॥२॥

---

स्यास्यन्तीति विवक्षायामाह—ज्योतिषेति। प्रजापतेर्वाचि पाप्मा क्षिप्तोऽसुरैरिति कुतोऽवगम्यते तत्राऽऽह—स य स पाप्मेति। प्रतिषिद्धवदनमेव पाप्मेत्ययुक्तमदृष्टस्य क्रियातिरिक्तत्वाङ्गीकारादित्याशङ्क्याऽऽह—येनेति। असभ्यं सभानर्हं स्त्रीवर्णनादि। बीभत्स भयानकं प्रेतादिदर्शनम्। अनृतमयथादृष्टवचनम्। आदिशब्दात्पिशुनत्व गृह्यते। किमत्र प्रजापतेर्वाचि पाप्मत्त्वे मानमुक्त भवतीत्याशङ्क्य स एव स पाप्मेति व्याकरोति—अनेनेति। प्राजापत्यासु प्रजासु प्रतिपन्नेनासत्यवदनादिना लिङ्गेन तद्वाचि पाप्माऽनुमीयते। विमत पाप्मपूर्वक प्रतिकूलधीविषयत्वाद्दुःखवद्. स पाप्मा प्रजावाच्यनुमित स एव प्रजापतिवाचि पाप्मान गमयति। विमत कारणपूर्वक कार्यत्वाद्घटवत्। न च प्रजागत दुरित प्राजापत्यं तद्विना हेत्वन्तरादेव स्यात्कारणानुविधायित्वात्कार्यस्य। न च तत्कारणेऽपि परस्मिन्प्रसङ्ग 'अपापविद्धम्' इति श्रुते। न च न ह वै देवान्पाप गच्छति इति श्रुतेर्न सूत्रेऽपि पापवेधस्तस्य फलावस्थस्यापापत्वेऽपि यजमानावस्थस्य तद्भावादित्यर्थं। आद्यसकाराभ्या कारणस्थ पाप्मानमनूद्य तस्यैव कार्यस्थत्वमुच्यते। उत्तराभ्या तु कार्यस्थ पाप्मानमनूद्य तस्यैव कारणस्थत्वमिति विभाग ॥२॥

---

अभिनिवेश का अवसर-रूप, वाक् देवता का कमजोर स्थल देखकर असुरो ने (देवताओ का अभिप्राय) जाना। कैसे इसे जाना ? इस उद्गान कर्म से ये हमारा शास्त्रानाधेय ज्ञान, कर्म दबा कर, उद्गाता रूप शास्त्रजनित कर्मज्ञान रूप उपाय से, ज्योति द्वारा हमारा अतिगमन करेंगे ज्योतिरात्मा से युक्त हो जाएंगे, इस प्रकार जानकर उस उद्गाता के समीप 'अभिद्रुत्य' अर्थात् जाकर अपने आसङ्ग—

---

१ रूपेणेति—उपायनेति शेष। २ ज्योतिषेत्यादि उद्गात्रा वाचा अत्येष्यन्तीति सम्बन्ध। ज्योतिरात्मना अग्न्यादिदेवात्मरूपेण च स्यास्यन्तीत्यर्थ। ३ एष्यन्तीत्यस्य च गमिष्यन्तीति। तस्य च स्यास्यन्तीत्यर्थ ज्योतिरात्मनान्वयीतिबोध्यम्। ४ पापरूपशरेणेत्यर्थ। ५ पापफलेनेत्याशयम्। ६ सम्बद्ध। ७ प्रत्यक्षीक्रियत इति—अनुमानेन प्रकटीक्रियत इत्यर्थं। प्रजास्विति शेष। ८ शास्त्रप्रतिषिद्ध वदतीति—नानृत वदेदित्यादिशास्त्रनिषिद्धानृतादिवदनमित्यर्थ। प्रत्ययार्थस्याविवक्षणात्। ९ येनेत्यादि—येनादृष्टरूपेण पाप्मना प्रेरित तथा चादृष्टमेवात्र पाप्मशब्दितमिति सूचितमिति ध्येयम्। १० अनुमीयमान। ११ प्रजानामिति शेष। १२ मानादित्यर्थं। १३ प्रतीयमानेनेत्यर्थ। १४ अनुमापयति। १५ कारणमिहोपादान विवक्षितम्। १६ न च प्रजागतमित्यादि—यत् प्रजागत दुरित प्राजापत्य तत् तदेव प्रजापतिनिष्ठमित्यर्थं। तच्च विना हेत्वन्तरादेव स्यादिति न च वाच्यम्। कारणानुविधायित्वात्कार्यस्य—कार्यस्य कारणपूर्वकत्वादिति साध्याहार योजयन्ति। एकस्यैव दुरितस्य कारणस्थदुरितत्वेन कारणत्वम् कार्यस्थदुरितत्वेन च कार्यत्वमिति भाव। १७ पाप्मप्रसक्तिरित्यर्थ। १८ बृ० उ० १ ५ २०।

[1]अथ [2]ह [3]प्राणमूचुस्त्वं न उद्‍गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य [4]आगायद्यत्कल्याणं जिघ्रति तदात्मने । ते विदुरनेन वै न उद्‍गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा तदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥३॥

अथ ह चक्षुरूचुस्त्वं न उद्‍गायेति तथेति तेभ्यश्चक्षुरुदगायत् । यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने । ते विदुरनेन वै न उद्‍गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥४॥

फिर देवताओ ने घ्राण से कहा—"तू हमारे लिए उद्‍गान कर"। तब घ्राण ने "तथास्तु" कह कर उन देवताओ के लिये उद्‍गान किया। घ्राण मे जो भोग है, उसे उसने देवताओ के लिए गान किया और जो कुछ अच्छी गन्ध सूंघता है, उसे उसने अपने लिए गाया। असुरो को इस बात का ज्यो ही पता लगा कि इस उद्‍गाता के द्वारा देवता हमे जीतेंगे। त्यो ही असुरो ने उस घ्राण के समीप जाकर उसे पाप से वेध डाला। अतएव जो अननुरूप सूंघता है, यही वह पाप है, यही वह पाप है ॥३॥

फिर देवताओ ने चक्षु से कहा—"तू हमारे लिए उद्‍गान कर"। तब चक्षु ने "तथास्तु" कह कर उनके लिए उद्‍गान किया—अर्थात् चक्षु मे जो भोग है, उसे चक्षु ने देवताओ के लिए गाया और जो शुभ दर्शन करता है, उसे उसने अपने लिए गाया। असुरो को ज्यो ही यह मालूम हुआ कि इस उद्‍गाता के द्वारा देवगण हमे जीतेंगे, त्यो ही असुरो ने चक्षु के पास जाकर उसे वेध डाला। यह जो निषिद्धरूप को देखता है, यही वह पाप है, यही वह पाप है ॥४॥

---

[5]तथैव घ्राणादिदेवता [6]उद्गीथनिर्वर्तकत्वाज्जपमन्त्रप्रकाश्या उपास्याश्चेति क्रमेण

---

वाग्देवताया जपमन्त्रप्रकाश्यत्वमुपास्यत्वं च नेति [7]निर्धार्यविशिष्टपर्यायचतुष्टयस्य तात्पर्यमाह

---

लक्षण पाप रूप शर से 'विध्यन्' अर्थात् ताडित या पापफल से संयुक्त कर दिया। वह यह जो पाप प्रजापति की पूर्वजन्मस्थित वाणी मे सम्बद्ध था, उसी को अनुमान के द्वारा प्रकट किया जाता है। वह कौन-सा है ? जो यह 'अप्रतिरूपम्' यानी अननुरूप या शास्त्रनिषिद्ध (अनृत) बोलता है, जिस अदृष्टरूप पाप से प्रेरित हुआ न चाहते हुए भी अशिष्ट, बीभत्स, अनृतादि बोलता है। इस अप्रतिरूप

---

१ अथेति—वाचिनैराश्यानन्तरमित्यर्थं। २ हेति—उद्‍गीथेनासुरानत्ययामेति निश्चित्येत्यर्थः। ३ प्राणमिति—घ्राणाभिमानिनी देवतां पृथ्वीम् अश्विनौ वेत्यर्थः। ४ आगायदिति—आगानेन प्रार्थितवानित्यर्थः। ५ वाग्वदेव। ६ उद्‍गानसम्पादकत्वात्। ७ निर्धार्येत्येतदन्तो मूलस्थाथशब्दार्थोऽयमिति ज्ञेयम्।

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्य-त्कल्याणँ शृणोति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपँ शृणोति स एव स पाप्मा ॥५॥

अथ ह मन ऊचुस्त्व न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणँ सकल्पयति तदात्मने । ते विदुरनेन वै न उद्गात्रा-ऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपँ संकल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥६॥

*फिर देवताओं ने श्रोत्र से कहा "तू हमारे लिए उद्गान कर।" तब श्रोत्र ने 'तथास्तु" कहकर* उन देवताओं के लिए उद्गान किया। श्रोत्र में जो भोग है, उसे उस श्रोत्र ने देवताओं के लिए घोषणा की और जो शुभ श्रवण करता है, उसे अपने लिए गाया। असुरों ने जब जाना कि इस उद्गाता के द्वारा देवगण हमें जीतेंगे, तब उस श्रोत्र के पास जाकर असुरों ने उसे पाप से बेध डाला। यह जो निषिद्ध शब्द का श्रवण करता है यही वह पाप है, यही वह पाप है ॥५॥

फिर देवताओं ने मन से कहा—"तू हमारे लिए उद्गान कर ।तब मन ने तथास्तु' कह कर उन देवताओं के लिए उद्गान किया। मन में जो भोग है, उसे मन ने देवताओं के लिए घोषित किया और वह जो शुभ सङ्कल्प करता है, उसे अपने लिए गाया। असुरों को ज्यों ही मालूम हुआ कि इस उद्गाता के द्वारा हमें जीतेंगे, त्यों ही मन के पास जाकर असुरों ने उसे पाप से बेध डाला। यह जो निषिद्ध सङ्कल्प करता है, यही वह पाप है। इस प्रकार निःसंदेह ही इन देवताओं का पाप का संसर्ग हुआ और ऐसे ही असुरों ने इसे पाप से बेध डाला ॥६॥

---

परीक्षितवन्त. । देवाना चैतन्निश्चितमासीत् । वागादिदेवता. क्रमेण परीक्ष्यमाणा. 'कल्याणविषयविशेषात्मसबन्धासङ्गहेतोरासुरपाप्मससर्गाद्द्रुद्रीथनिर्वर्तनासमर्थ' । 'अतो-

---

—तथैवेति । परीक्षाफलनिर्णयमाह—देवाना चेति । अनुपास्यत्वे हेत्वन्तरमाह—इतरति । इतर कार्यकरणसघातस्तस्मिन्नव्यापकत्व 'परिच्छिन्नत्वमतश्चानुपास्यत्व जपमन्त्राप्रकाश्यत्व चेत्यर्थ । उक्तं-

---

भाषणरूप-काय से अनुमीयमान वह पाप प्रजापति की कार्यभूता प्रजाओं की वाणी में रहता है। प्रजापति की वाणी को प्राप्त हुआ, वही पाप अननुरूप भाषण से अनुमित होता है, क्योंकि वायं

---

१ कल्याणमिति—यथाशास्त्रवदनादिरूपेत्यर्थ । २ वक्ष्यमाणहेतो । ३ परिच्छिन्नाभिमानवत्त्वम् ।

**अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति**
**तेभ्य [1]एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रा-**

इसके बाद मुख के छिद्र में रहने वाले प्राण से देवताओं ने कहा—"तू हमारे लिए उद्गान कर", तब "तथास्तु" कह कर इस प्राण ने शरणागत देवताओं के लिए उद्गान किया, असुरों ने जब

ऽनभिधेया असतो मा सद्गमयेत्यनुपास्याश्चाशुद्धत्वादितराव्यापकत्वाच्चेति । [2]एवमु खल्वनुक्ता अप्येतास्त्वगादिदेवताः [3]कल्याणाकल्याणकार्यदर्शनादेवं वागादिवदेवैनाः पाप्मनाऽविध्यन्पाप्मना विद्धवन्त [4]इति यदुक्तं [5]तत्पाप्मभिरुपासृजन्पाप्मभिः संसर्गं कृतवन्त [6]इत्येतत् ॥३॥४॥५॥६॥

रिन्द्रियैरनुक्तेऽिन्द्रियाण्युपलक्षणीयानीति विवक्षित्वोपसंहरति—एवमिति । वागादिवत्त्वगादिषु "कल्पकाभावान्न पाप्मवेधोऽस्तीत्याशङ्क्याऽऽह— कल्याणेति । पाप्मभिरुपासृजन्पाप्मनाऽविध्यन्नित्यनयोरस्ति

कारण के पीछे चलने वाला होता है ॥२॥

वाणी की तरह ही घ्राणादि देवता उद्गान कर्म के सम्पादक होने से जपमन्त्र से प्रकाश्य और उपास्य है, ऐसा जानकर क्रम से देवताओं ने उनकी परीक्षा ली । देवताओं को यह निश्चय था, कि वागादि देवता क्रमश परीक्षा लिए जाने पर यथाशास्त्र वदनादि रूप का अपने से सम्बन्ध होने के कारण आसङ्गसञ्ज्ञक आसुर पाप के संसर्ग हो जाने से उद्गीथ सम्पादन मे समर्थ नही हैं । वक्ष्यमाण हेतु से अनभिधेय "असत् से मुझे सत् की ओर ले जाओ", इस श्रुतिवाक्य से (घ्राणादि देवता) अशुद्ध और इतर अव्यापक होने के कारण अनुपास्य हैं । इस प्रकार वागादि के समान ही शास्त्रोक्त-

१ एष प्राण उदगायदिति—ननु पूर्वत्र यो वाचि भोगस्त देवेभ्य आगायत् यत्कल्याण वदति तदात्मन इत्यादिवदत्रापि स प्राणे भोग इति वाच्य प्रकरणवशादित्याशङ्क्य समाहित वार्तिके—"यः प्राणे भोग इति न पूर्ववद्भण्यतेऽत्र किम् । वागादीनामिव यतो नास्य भोगो विशिष्यते । अकृत्स्नभोगतो युक्त वागादिषु विशेषणम् । सर्वस्यैवासुभोगत्वात् किं कुतोऽत्र विशिष्यत" इति । लिङ्गं न प्रकरणभङ्ग मन्वान समाधत्ते—वागादीनामिति । न हि प्राणस्य विशिष्टो भोगोऽस्ति तत्र तस्य विशेषणानुपपत्ते सदपि प्रकरणमनुपपत्त्या बाधितमकिंचित्करमित्यर्थ. । तर्हि तेषामपि प्राणवद्विशेषणानुपपत्तिरित्याशक्य दृष्टान्त स्पष्टयति-अकृत्स्न इति । वाचो हि वचनमेव भोगो न दर्शनादि । चक्षुषो दर्शनमेव न वदनादि । इत्येवमशेषस्य वागादिभोगत्वाभावात् प्रातिस्विक भोगमादाय यो वाची-त्यादिवचनमित्यर्थं । अस्तु तर्हि वागादिवत्प्राणेऽपि विशेषणमकृत्स्नभोक्तृत्वाविशेषादित्याशक्य दार्ष्टान्तिक स्फुटयति—सर्वस्येति । दर्शनश्रवणादेरिति यावत् । किंशब्देन कार्यं कुत शब्देन हेतुश्चाक्षिप्यत । अत्र-प्राणे ।
२ इतरत्सर्वं पूर्ववदित्युपेक्ष्य पष्ठकण्डिकोपान्त्यादिभाग व्याकरोत्येवमु इत्यादिना एवमेव-वागादिवदेवेत्यर्थं ।
३ कल्याणाकल्याणेत्यादि–त्वगादिष्वपि वागादिवत् कल्याणस्य-यथाशास्त्र स्पर्शनादे । अकल्याणस्यासङ्गाख्यपाप्मकार्यस्य च दर्शनादनुक्तोऽप्यासुरपाप्मवेधोऽनुमीयत इत्यर्थं । तथाहि–विमत पाप्मानुविद्धम् तत्कार्यवत्वात् वागादिवदिति भाव । ४ इति यदुक्तमिति–इति यद्वाक्यमुक्तमित्यर्थं । ५ तदिति–तस्येत्यर्थं । ६ इत्येतदिति—व्याख्यातमिति शेष । नन्वेव मत्येना दवना इति व्यर्थम् एवमु खल्वेता इत्यनेनैव गतत्वादित्याशङ्क्य समादधु. वार्त्तिके—"या विद्धा देवतास्तासा प्रक्रियामहृति पृथगिति" । या वागादिदेवता दर्शितन्यायेन पाप्मना विद्धास्तासा प्राणप्रकरणात् पृथगेव प्रक्रियाया प्रकरणस्योपमहृतिरेवमित्यादिना क्रियते तन्नास्य वैयर्थ्यम् इति तदर्थ. । प्राणप्रकरणाद्वागादिप्रकरणविच्छेदाय तत्समाप्तिसूचनार्थं पुनरुक्तिरिति भाव । उपसहृतप्रकरणस्य तात्पर्यमपि दर्शित तत्रैव—"आसङ्गपाप्मभिर्विद्धा यस्माद्वागादयोऽसुरं । वर्जनीयास्ततस्ता स्युर्नोपास्या श्रेय इप्सुभिरिति ॥" वागादीना स्वप्राधान्येन नोपास्यता प्राणशेषत्वेनोपास्यत्वमपीतिभाव । ७ अनृतवदनादिवत् । ज्ञापकाभावा-दित्यर्थ ।

ऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविव्यत्सन्स यथाऽश्मानमृत्वा लोष्टो विध्वᳫंसेतैवᳫं हैव विध्वᳫंसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन्पराऽसुरा भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥७॥

जाना कि, इस उद्गाता के द्वारा देवगण हमें जीत लेंगे। तब उन्होंने मुख्य प्राण के पास जाकर उसे पाप में वेधना चाहा—किन्तु जैसे पत्थर से टकराने पर मिट्टी का ढेला चूर-चूर हो जाता है, वैसे ही वे असुर लोग भी प्राण से टकराने पर विध्वस्त होकर अनेक प्रकार से नष्ट हो गये। तब से देवगण स्वस्थ हो गये और असुरों का पराभव हुआ। जो इस प्रकार जानता है, वह प्रजापति स्वरूप अपने रूप से स्थित होता है और उससे द्वेष करने वाला सौतेला भाई पराभव (हार) को प्राप्त करता है ॥७॥

वागादिदेवता उपासीना अपि मृत्युमतिगमनायाशरणाः सन्तो देवाः क्रमेण। अथानन्तरं हेममित्यभिनयप्रदर्शनम्। आसन्यमास्ये भवमासन्यं मुखान्तर्बिलस्थं प्राणमूचुस्त्वं न उद्गायेति। तथेत्येवं शरणमुपगतेभ्यः स एव प्राणो मुख्य उदगायदित्यादि पूर्ववत्। पाप्मनाऽविव्यत्सन्वेधन कर्तुमिष्टवन्तस्ते च दोषासंसर्गिणं सन्तं मुख्यं प्राणम्। स्वेनाऽऽसङ्गदोषेण वागादिषु लब्धप्रसरास्तदभ्यासानुवृत्त्या संश्लिष्यमाणा विनेशुर्विनष्टा विध्वस्ताः।

पौनरुक्त्यमित्याशङ्क्य व्याख्यानव्याख्येयभावान्नैवमित्याह—इति यदुक्तमिति ॥३॥४॥५॥६॥
सम्प्रति मुख्यप्राणस्य मन्त्रप्रकाश्यत्वमुपास्यत्वं च वस्तुमुत्तरवाक्यमुपादाय व्याकरोति—वागादीति। क्रमेणोपासीना इति सबन्ध। वागादिषु नराश्यानन्तर्यमथशब्दार्थ। विवक्षितार्थज्ञापकोऽसाधारणो देहतदवयवव्यापारोऽभिनय। दोषासंसर्गिणं दोषेण संसृष्ट कर्तुमिच्छा कुतो जातेत्याशङ्क्याऽऽह—स्वेनेति। तदभ्यासानुवृत्त्या तस्य पाप्मसंसर्गकरणस्याभ्यासवशादिति यावत्।

स्पर्शनादि कल्याणमय कर्म, आसङ्गपापमय अकल्याणमय कर्म देखे जाने पर अन्य त्वगादि देवता है—अनुक्त होने पर भी इन्हें पाप में विद्ध कर दिया। पाप से वेध दिया" इस वाक्य से जो कहा, उसका "पाप से लिप्त कर दिया, अर्थात् पाप से युक्त कर दिया' यही व्याख्यान है। ॥३-६॥
वागादि देवताओं की उपासना करने पर मृत्यु को जीतने में उन्हें अपना शरण न पाकर

१ आसङ्गलक्षणशरेणेत्यर्थ। २ प्राणात्मना भवतीत्यथ प्राणस्वरूप एव भवतीति यावत्। ३ अभिनयेति—ननु प्राणान्तरेष्वभिनयाभावात् इहापि तद्वैयर्थ्यमिति चेन्न। नहि देहे प्राणस्य करणग्रामवत् आयतनविशेषप्रसिद्धि अतस्तदभिनयसाफल्यमित्यभिप्राय। ४ इष्टवन्त इति—तेन सह प्राण संस्रष्टु संश्लेष्टु स योजयितुमेषामिच्छा जातेति यावत्। ५ नष्टावयवा। ६ संश्लेषयितुमिच्छावन्त इत्यर्थ अन्तर्भावितणिच्समर्थत्वादिति ध्येयम्। ७ प्राणमिति शेष।

कथमिवेति चेद्दृष्टान्त [१]उच्यते—स यथा स दृष्टान्तो यथा लोकेऽश्मानं पाषाणमृत्वा गत्वा प्राप्य लोष्टः पांसुपिण्डः पाषाणचूर्णनायाश्मनि निक्षिप्तः स्वयं विध्वंसेत विस्रंसेत विचूर्णीभवेत्, एवं हैव यथाऽयं दृष्टान्त एवमेव विध्वंसमाना विशेषेण ध्वंसमाना विध्वञ्चो [२]नानागतयो विनेशुर्विनष्टा यतस्ततस्तस्मादसुरविनाशाद्देवत्वप्रतिबन्धभूतेभ्यः स्वाभाविकासङ्गजनितपाप्मभ्यो वियोगादसंसर्गधर्मिमुख्यप्राणाश्रयबलाद्देवा वागादयः प्रकृता अभवन्। किमभवन्। स्वं देवतारूपमग्न्याद्यात्मकं [३]वक्ष्यमाणम्। [४]पूर्वमप्यग्न्याद्यात्मान एव सन्तः स्वाभाविकेन पाप्मना [५]तिरस्कृतविज्ञानाः पिण्डमात्राभिमाना आसन्। ते [६]तत्पाप्मवियोगादुज्झित्वा पिण्डमात्राभिमानं [७]शास्त्रसमर्पितवागाद्यग्न्याद्यात्माभिमाना

[१]उक्तमर्थं दृष्टान्तेन स्पष्टयति—कथमित्यादिना। असुरनाशेनाऽऽसङ्गजनितपाप्मवियोगे हेतुमाह—असंसर्गेति। वक्ष्यमाणं 'सोऽग्निरभवदित्यादिनेति शेषः'। वागादीनां [१०]"स्थितानां नष्टानां च कुतोऽग्न्यादिरूपत्वमित्याशङ्क्याऽऽह—पूर्वमपीति। न [११]"तर्हि तेषां परिच्छेदाभिमानः स्यादित्याशङ्क्याऽऽह—स्वाभाविकेनेति। परिच्छेदाभिमानादग्न्याद्यात्माभिमानस्य बलवत्त्वं सूचयति—शास्त्रेति। न केव-

देवताओं ने क्रमशः (प्राणादि की शरण ली)। इसके अनन्तर "ह, इमम्" यह पदद्वय अभिनय-सार्थक्य प्रदर्शन के लिए है। 'आसन्यम्' अर्थात् मुख में होने वाले मुखान्तर्वर्ती छिद्र में स्थित प्राण से कहा, तुम हमारे लिए उद्गान करो'। इस प्रकार अपनी शरण में आए हुए देवताओं के प्रति उस मुख्य प्राण ने उद्गान किया—इत्यादि प्रसङ्ग पूर्ववत् समझना चाहिये। असुरों ने पापरूप-दोष से अलिप्त उस मुख्य प्राण को पाप में सश्लिष्ट अथवा युक्त करना चाहा। अभिनिवेशरूप अपने दोष के कारण वागादिकों में उन्हें अवसर प्राप्त हो गया। उसी अभ्यास की अनुवृत्ति में सश्लेष की इच्छा करने वाले वे 'विनेशुः' अर्थात् विध्वस्त हो गये।

यदि कहो—किस प्रकार नष्ट हो गये? तो इसे जानने के लिए दृष्टान्त कहते हैं—। 'स यथा' अर्थात् वह दृष्टान्त इस प्रकार है, जैसे लोक में 'अश्मनि' अर्थात् पाषाण के पास 'ऋत्वा' यानी जाकर 'लोष्ट' अर्थात् मृत्तिका चूर्णीभाव, के लिए पत्थर पर फेंका हुआ, स्वयं 'विध्वंसेत' नष्ट हो जाए, चूर्णीभूत हो जाए—उसी प्रकार, अर्थात् जैसे यह दृष्टान्त है, इसी प्रकार 'विध्वंसमाना' अर्थात् विशेष रूप से ध्वस हुआ 'विध्वञ्च' अर्थात् मनुष्यत्वदेवत्व स्थावरत्वरूप, प्रतिबन्धक नानागतियों को प्राप्त हुए 'विनेशु' अर्थात् नष्ट हो गये। क्योंकि ऐसा हुआ, इसलिए आसुरत्वविनाश हो जाने से देवत्व प्राप्ति के प्रतिबन्धकभूत शास्त्र-अनाधेय अभिनिवेशजनित पाप से वियोग हो जाने पर, असंसर्गधर्मी

१ उच्यत इति—प्राणताडनच्छोदमात्रेण प्राणोऽसुराणां हन्ता इत्यर्थप्रतिपत्त्यर्थं वक्ष्यमाणप्रकारो दृष्टान्त उच्यत इत्यर्थः। २ नानागतय इति—प्राणस्याप्रधृष्यत्वादेव तत्ताडनेच्छामात्रेणैवासुरा नानागतय-मनुष्यत्व-स्थावरत्वादेहेनैव देवत्वप्रतिबन्धकाश्च सर्वेऽपि युगपन्नष्टा दुर्मेधशिलाक्षिप्तपांसुपिण्डवदिति दार्ष्टान्तिकभावार्थः। ३ बृ० उ० १ ३ १२। ४ पूर्वमपीति—यथोक्तपाप्मवियोगात् प्रागपीत्यर्थः। ५ तिरस्कृतेत्यादि—आच्छादिताग्न्यादिस्वरूपविज्ञाना इत्यर्थः। ६ आसङ्गलक्षणपाप्मेत्यर्थः। ७ शास्त्रेति—अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादिशास्त्रेत्यर्थः। ८ उक्तेच्छावत्त्वाद्धिनानाप्राप्तिरूपमर्थमित्यर्थः। ९ बृ० उ० १ ३ १२। १० स्थितानामित्यादि—यदि तेऽध्यात्मभावे एव स्थिता तदा नोपपद्यते तेषां देवत्वं, यदि तु ततोऽपि नष्टास्तदा पुनरां तदनुत्पत्तिः स्वरूपत एवोच्छेदादिति शङ्काशयः। ११ तर्हीति—वागादीनां सदाग्न्यादिरूपत्व इत्यर्थः।

[1]बभूवुरित्यर्थः । किंच ते प्रतिपक्षभूता असुराः पराऽभवन्नित्यनुवर्तते । [2]पराभूता विनष्टा इत्यर्थः ।

यथा पुराकल्पेन वर्णितः पूर्वयजमानोऽतिक्रान्तकालिक एतामेवाऽऽख्यायिकारूपां श्रुतिं दृष्ट्वा तेनैव क्रमेण वागादिदेवताः परीक्ष्य ताश्चापोह्याऽऽसङ्गपाप्मा[3]स्पददोषवत्त्वेनादोषास्पदं मुख्यं प्राणमात्मत्वेनोपगम्य वागाद्याध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभिमानं हित्वा वैराजपिण्डाभिमानं [4]वागाद्यग्न्याद्यात्मविषयं वर्तमानप्रजापतित्वं शास्त्रप्रकाशितं प्रतिपन्नस्तथैवायं यजमानस्तेनैव विधिना भवति प्रजापतिस्वरूपेणाऽऽत्मना [5]परा चास्य प्रजापतित्वप्रतिपक्षभूतः पाप्मा [6]द्विषन्[7]भ्रातृव्यो भवति । यतोऽद्वेष्टाऽपि भवति कश्चिद्भ्रा-

---

तृत्वम् [8]अत्रोक्तानामेवासुराणामसंसर्गधर्मिप्राणाश्रयाद्विनाशः किंतु [9]तत्तुल्यजातीयानामपीत्यभिप्रेत्याऽऽह—किंचेति ।

वागादीनामग्न्यादिभावापत्तिवचनेन [10]तत्सहितस्य यजमानस्य देवताप्राप्तिरासुरपाप्मध्वंसश्च फलमित्युक्तं [11]तत्र [12]पूर्वकल्पीययजमानस्यातिशयशालित्वाद्यथोक्तफलवत्त्वेऽपि [13]नैदानीतनस्यैवमित्याशङ्क्य भवतीत्यादिश्रुतिमवतारयति—यथेति । पूर्वकल्पनाप्रकारेण पूर्वजन्मस्थो यजमानः शास्त्रप्रकाशितं वर्तमानप्रजापतित्वं प्रतिपन्नो यथेति संबन्धः । पूर्वयजमान इत्यस्य व्याख्याऽतिक्रान्तकालिक इति । पुराकल्पमेव दर्शयति—एतामिति । तेनेति श्रुत्युक्तेनेत्येतत् । तेनैव विधिना श्रुतिप्रकाशितेन क्रमेण मुख्यं प्राणमात्मत्वेनोपगम्येति शेषः । सपत्नो भ्रातृव्यस्तस्य द्विषन्निति [14]कुतो विशेषणमर्थं [15]सिद्ध-

---

मुख्यप्राण के आश्रय के बल से वागादि देवता अपने स्वरूप में स्थित हो गये । वह क्या हो गये ? आगे बतलाये जाने वाले अपने अग्न्यादिरूप देवत्वभाव को प्राप्त हो गये । पापवियोग के पूर्व भी अग्न्यादिस्वरूप ही थे । शास्त्र-प्रमाणक अग्न्यादिस्वरूप से आच्छादित-विज्ञान वाले होने से पिण्डमात्र में अभिमान से युक्त हो गये । ("अग्नि ही वाक् होकर मुख में प्रवेश कर गया") इस प्रकार शास्त्र-समर्पित होने से वागादि उस आसङ्गलक्षणपापवियोग से पिण्डमात्र में अभिमान को त्यागकर अग्न्यादिरूप अभिमान से उपहित हो गये । इसके अतिरिक्त उनके प्रतिद्वन्द्वी असुर उनसे पराजित हो गये । इसकी अनुवृत्ति होती है । पराजित होकर विनष्ट हो गये, यह इसका भाव है ।

जैसे पूर्वकल्प में वर्णित पूर्व अथवा भूतकालिक यजमान इस आख्यायिकारूपा श्रुति का निरूपण कर, उसी प्रकार वागादि देवताओं का परीक्षण कर, उन्हें आसङ्गपाप के आस्पदरूप दोष का

---

१ बभूवुरिति—वागाद्युपहितस्य यजमानस्य प्राणेऽहंग्रहोपासनात् तत्स्वरूपप्राप्तौ सर्वस्य परिच्छेदाभिमानरूपस्य पाप्मनो नाशात् प्राणवद्वागादयः सदा देवतात्मानः सन्तोऽप्यात्मपरिच्छेदाभिमानप्रतिबन्धनिवृत्तावग्न्यादिदेवतात्वं भजन्तीति परमार्थः । २ असुराः पराभूता अभवन्नित्यनुषङ्गः न पुनः प्रारोहन्निति यावत् इत्यभिप्रेत्याह—पराभूता इति । ३ आस्पदतया दोषवत्त्वेन । ४ वागाद्यभिन्नाग्न्यादीत्यर्थः । ५ परा भवती—लोष्ठवच्चूर्णी-भवति । ६ नित्यद्वेष्टा । ७ शत्रुः । ८ अत्रोक्तानाम्—उद्गीथब्राह्मणोक्तानामित्यर्थः । ९ तत्तुल्यजातीयानामिति-शाखान्तरोक्तानामपीत्यर्थः । १० तदुपहितस्य । ११ तत्रेति-सामान्येन यजमानस्योक्तरूपवत्त्वोक्तावपीत्यर्थः । १२ यजमानावस्थप्रजापतेः । १३ नैदानीतनस्येति—अतिशयशालित्वाभावादिति शेषः । १४ व्यावर्त्याभावाद्व्यर्थं विशेषणमित्याक्षेपार्थः । १५ शत्रुत्वेनैव सिद्धत्वात् ।

**ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्ये-ऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः ॥८॥**

जब देवताओं ने कहा—जिसने हमे इस प्रकार देवभाव को प्राप्त कराया है वह कहाँ है ? ऐसा विचार कर उन्होंने निश्चय किया कि यह मुख के ही भीतर है। अत यह अयास्य (किसी का आश्रय न लेने के कारण) आङ्गिरस है, क्योंकि यही भूत और इन्द्रियादि अङ्गों का रस है ॥८॥

तृव्यो 'भरतादितुल्यो यस्त्विन्द्रियविषयासङ्गजनितः' पाप्मा भ्रातृव्यो द्वेष्टा च। पारमार्थिकात्मस्वरूपतिरस्करणहेतुत्वात्। स च पराभवति विशीर्यते लोष्टवत्प्राणपरिष्वङ्गात्। कस्यैतत्फलमित्याह—य एवं वेद। यथोक्तं 'प्राणमात्मत्वेन 'प्रतिपद्यते पूर्वयजमानवदित्यर्थः ॥७॥

फलमुपसंहृत्याधुनाऽऽख्यायिकारूपमेवाऽऽश्रित्याऽऽह। कस्माच्च हेतोर्वागादीन्मुक्त्वा

त्वाद्द्वेष्टत्वमेत्याशङ्क्याऽऽह—यत इति। तस्य द्वेष्टृत्वनियमे हेतुमाह—पारमार्थिकेति। अपरिच्छिन्नदेवतात्वमत्र पारमार्थिकमात्मस्वरूप विवक्षित तत्तिरस्करणकारणत्वादुक्तपाप्मनो विशेषणमर्थवदिति शेष। यदाग्नेयोऽष्टाकपाल 'इतिवद्य एव वेदेति 'प्रसिद्धार्थोपबन्धेऽपि 'विधिपर वाक्यमतश्चैवं 'विद्यादिति विवक्षितमित्यभिप्रेत्याऽऽह—यथोक्तमिति ॥७॥

फलवत्प्रधानोपास्तेरुक्तत्वात्ते होचुरित्याद्युत्तरवाक्य गुणोपास्तिपरमित्याशङ्क्याह—'फलमिति।

त्याग कर, दोषास्पदरहित उस मुख्य प्राण को आत्मभाव से उपलब्ध कर, आध्यात्मिक पिण्डमात्र से अवच्छिन्न वागादि मे आत्मत्व का अभिमान त्याग कर, वागादि की वागाद्यभिन्न-अग्न्यादिरूपता-विषयक शास्त्रनिरूपित विराट् पिण्डाभिमानी वर्तमान प्रजापति को प्राप्त हुआ, इसी प्रकार यह यजमान भी प्रजापति रूप से स्थित होता है। पापरूप, नित्यद्वेष्टा शत्रु सौतेला भाई प्रजापति का प्रतिद्वन्द्वी लोष्ट के समान पिस जाता है, चूर्णीभूत हो जाता है। राम के छोटे भाई भरत

१ भरतो—रामानुज। २ स इति शेष। ३ मूत्रात्मानम्। ४ उपास्त। ५ भवतीति पदशेष। ६ प्रसिद्धार्थोपबन्धेऽपीति -प्रसिद्धार्थकपदसम्बन्धेऽपीत्यर्थं। अनुष्ठेयार्थबोधकलिङादिपदाभावेऽपीति यावत्। ७ विधिपर वाक्यमिति—तदुक्त वार्तिके—'य एव वेदेति विधि फलोक्तेरर्थवादत। आनुषङ्गिफलाक्त्या वा तदुपासाविमुक्तय ॥१॥ आत्मविद्याधिकारेऽस्मिस्तदुपायाविधानत। आत्मविद्योपकारित्व तस्माद्वाक्याच्च गम्यत इति ॥२॥ अत्र टीका—उक्तार्थवादात् फलस्योच्यमानत्वात् तद्वचनस्य च स्तुतित्वात् विधि विना च तदयोगात् अत्र सूत्रप्राप्तिफलत्वेन तदुपास्तिर्विधीयते इत्यर्थं। यद्वा मोक्षफलत्वेन तदुपास्तिरत्र विधीयते। सूत्रभावस्तु फलार्थं बीजावापे छायागन्धादिवदानुषङ्गिक फलमित्याह—आनुषङ्गीति। सूत्रोपास्तिस्तत्प्राप्तिद्वारा क्रममुक्तिफलेत्यत्र मानमाह—आत्मेति। आत्मविद्याप्रकरण सूत्रोपास्तिविधेस्तस्या मुक्तिफल चेदात्मविद्यैव मुक्तिहेतुरिति नियमासिद्धिरित्याशङ्क्याह—आत्मविद्येति। सैव मुक्तिहेतुस्तदुत्पत्त्युपकारित्वमुपासनस्य प्रकरणादित्यर्थ। उक्तोपनिषत्क इतो विमुच्यमान क्व गमिष्यसीति वाक्याच्च क्रममुक्तिफलत्व सूत्रोपास्तेर्गम्यते। अतो ब्रह्मविद्याद्वारा मोक्षे पर्यवसिता प्रकृतोपास्तिरित्याह—वाक्याच्चेति। उक्तोपनिषत्क इत्यादिनिरुक्तवाक्य जनक प्रति याज्ञवल्क्यस्य। उक्तोपनिषत्क इत्यस्य बहुभिराचार्यैरुपदिष्टोपासन इत्यर्थ। ८ उपासीत। ९ आवृत्ति—न होचुरित्यादेरुत्तरवाक्यस्य तात्पर्यमाहेत्यर्थ।

मुख्य एव प्राण आत्मत्वेनाऽऽश्रयितव्य इति तदुपपत्तिनिरूपणाय यस्मादयं वागादीनां पिण्डादीनां च साधारण आत्मेत्येतमर्थमाख्यायिकया दर्शयन्त्याह 'श्रुतिः।

ते प्रजापतिप्राणा मुख्येन' प्राणेन परिप्रापितदेवस्वरूपा होचुरुक्तवन्तः 'फलावस्थाः। किमित्याह। क्व न्विति वितर्के। क्व नु कस्मिन्नु सोऽभूत्। कः। यो नोऽस्मानित्थमेवमसक्त सञ्जितवान्देवभावमात्मत्वेनोपगमितवान्। स्मरन्ति हि लोके केनचिदुपकृता उपकारिणं लोकवदेव स्मरन्तो विचारयमाणाः कार्यकरणसंघात 'आत्मन्येवोपलब्धवन्तः।

कथम्, अयमास्येऽन्तरिति, आस्ये मुखे य आकाशस्तस्मिन्न'न्तरयं प्रत्यक्षो वर्तत

फलवन्तं प्रधानविधिमुक्त्वा संप्रत्याख्यायिकामेवाऽऽश्रित्य गुणविशिष्टं प्राणोपासनमाहानन्तरश्रुतिरित्यर्थः। शङ्कोत्तरत्वेन चोत्तरग्रन्थमवतारयति—कस्माच्चेति। विशुद्धत्वस्योक्तत्वाद्धेत्वन्तरं जिज्ञास्यमिति द्योतयितुं चशब्दः। करणानां कार्यस्य तदवयवानां च प्राणो यस्मादात्मा व्यापकस्तस्मात्स एवाऽऽश्रयितव्य 'इत्युपपत्तिनिरूपणार्थं तस्य व्यापकत्वमित्येतमर्थमाख्यायिकया दर्शयन्ती श्रुतिर्हेत्वन्तरमाहेति योजना। तच्छब्दस्तस्मादर्थे। प्राणस्याऽऽत्मत्वादि व्यक्तीकर्तुमाख्यायिकाश्रुतिं विभजते—ते प्रजापतीति। वागादयश्चेत्प्राणमाश्रित्य 'फलावस्थास्तर्हि किमिति प्राणं स्मरन्ति प्राप्तफलत्वादित्याशङ्क्याऽऽह—स्मरन्ति हीति। विचारफलमुपलब्धिं कथयति—लोकवदिति।

तामेवोपलब्धिमाकाङ्क्षाद्वारेण विवृणोति—कथमिति। दृष्टान्तं स्पष्टयति—सर्वो हीति। तथा

के समान कोई-कोई सौतेला भाई द्वेष नही करने वाला भी होता है, किन्तु जो इन्द्रिय की विषयासक्ति से होने वाला पाप रूप सौतेला भाई है, वह तो शत्रु ही होता है। क्योकि वह आत्मा के यथार्थस्वरूप के तिरस्करण मे कारण है। प्राण मे सश्लेष होने पर उसका ऐसे ही नाश हो जाता है, जैसे मिट्टी का टुकडा चूर्णीभूत हो जाता है। किसको यह फल मिलता है ? इस पर उत्तर देते है—"य एव वेद" अर्थात् जो यथोक्त सूत्रात्मा प्राण की पूर्वयजमान की तरह आत्मभाव से उपासना करता है ॥७॥

फल का उपसहार कर अब आख्यायिका के ही रूप का आश्रयण कर श्रुति कहती है—वागादि अन्य सब प्राणों को छोड कर मुख्य प्राण का ही आत्मस्वरूप से क्यो आश्रय लेना चाहिये ? उसकी सिद्धि प्रदर्शित करने के लिए। क्योकि यह (मुख्य प्राण) वागादि और पिण्डादि का साधारण

१ ते होचुरित्यारभ्य आत्मनऽआद्यमागायदित्यत प्राक्तनी श्रुतिरित्यर्थ। २ अग्न्यादिदेवभावापन्ना इत्यर्थ। ३ आत्मीये। ४ अन्तरिति—अन्तरिति प्राणविशेषणम् त्वगादिव्यावृत्त्यर्थम्। आस्य प्राण इति सामान्येनोक्तौ त्वगादीनामप्यास्यान्त सत्वात्तत्र स्यादतिप्रसक्ति मध्यवाचिनाऽन्त शब्देन तु तद्व्यावृत्ति क्रियते। तदुक्त वार्तिके—"आस्यपर्यन्तशायीनि त्वगादीनि न मध्यत। प्राणस्तु मध्य आस्यस्य तस्मादन्तर्विशेषणमिति॥' त्वचस्तावदनुभवसिद्धमास्यपर्यन्तत्वम् वाग्जिह्वयोरन्तदन्तस्थत्वेऽपि न व्याप्त्या मध्यस्थतेति भाव। प्राणस्तु मुखनासिकाऽऽकाशमध्ये वर्तते नैव त्वगादयोऽतोऽन्तर्विशेषण त तभ्यो व्यावर्तयतीत्यर्थ। ५ इत्युपपत्तिनिरूपणार्थमिति—उक्तस्यार्थस्योपपत्तिभिर्निरूपणार्थमित्यर्थ। ६ आत्मत्वादीत्यादिनाऽऽस्यत्वादिवक्ष्यमाणगुणग्रहणम्। ७ फलावस्था—अग्न्यादिदेवभावापन्ना इत्यर्थ।

इति । सर्वो हि लोको विचार्या[1]ध्यवस्यति । तथा देवाः । [2]यस्मादयमन्तराकाशे वागाद्यात्मत्वेन [3]विशेषमनाश्रित्य वर्तमान उपलब्धो देवैः, तस्मात्स प्राणोऽयास्यो विशेषानाश्रयत्वाच्चासक्त सञ्जितवान्वागादीन् । अत एवाऽऽङ्गिरस [4]आत्मा कार्यकरणानाम् । कथमाङ्गिरसः । प्रसिद्धं ह्येतदङ्गानां कार्यकरणलक्षणानां रसः सार [5]आत्मेत्यर्थः । कथं पुनरङ्गरसत्वं तदपाये शोषप्राप्तेरिति[6] [7]वक्ष्यामः । यस्माच्चायमङ्गरसत्वाद्विशेषानाश्रयत्वाच्च कार्य-

देवा विचार्य प्राणमास्यान्तराकाशस्थं निर्धारितवन्त इत्याह—तथेति । किमनया कथया सिद्धमित्याशङ्क्याऽऽह—यस्मादिति । [8]उपलब्धिसिद्धेऽर्थे युक्तिं समुच्चिनोति—विशेषेति । सर्वानेव वागादीनविशेषेणाग्न्यादिभावेन प्राण सञ्जितवान् । न चामध्यस्थः साधारणं कार्यं निर्वर्तयति । अतो युक्तितोऽप्ययमास्यान्तराकाशे वर्तमान सिद्ध इत्यर्थः । अयास्यत्ववदाङ्गिरसत्वं गुणान्तरं दर्शयति—अत एवेति । सर्वसाधारणत्वादेवेति यावत् । तथाऽपि कुतोऽस्याऽऽङ्गिरसत्वं साधारणेऽपि नभसि तदनुपलब्धेरित्याशङ्क्य [9]परिहरति—कथमित्यादिना । अङ्गेषु चरमधातोः सारत्वप्रसिद्धेर्न प्राणस्य तथात्वमिति शङ्कि-

आत्मा है,—इस आख्यायिका से दिखलाते हुए ("ते होचु" यहाँ से लेकर "आत्मनेऽन्नाद्यमागायत्" बृ० उ० १-३-१७ इस मन्त्र पर्यन्त) श्रुति कहती है।

मुख्य प्राण के द्वारा अग्न्यादिदेवभाव को प्राप्त कराये हुए वे प्रजापति के फलावस्थित प्राण "होचु" अर्थात् कहने लगे । क्या कहने लगे ? यह बतलाते हैं । "क्व" "नु" यह वितर्क अर्थ मे निपात है । "क्व नु" अर्थात् अच्छा किसमे थो रहा ? कौन किसमे रहा ? जिसने हमें 'असक्त' अर्थात् सञ्जित कर आत्मस्वरूप देवभाव की प्राप्ति करायी । संसार में भी तो किसी के द्वारा कृतकृत्य होने वाले (कृतज्ञ) मनुष्य उस उपकारीजन का स्मरण किया करते हैं । लोकमर्यादा के समान ही स्मरण तथा विचार करते हुए कार्यकरण के समुदायरूप उसका अपने मे साक्षात्कार किया ।

किस प्रकार साक्षात्कार किया ? जो आस्य के भीतर है—'आस्ये' अर्थात् मुख मे जो आकाश है, उसमे इसका साक्षात्कार होता है । सभी लोग निश्चय करने से पूर्व विचार करते है । उसी प्रकार देवताओ ने किया । क्योंकि देवताओ ने इसे वागादिभाव से (वागादिको के अन्यतम) किसी विशेष का आश्रय लिए बिना अन्तराकाश मे ही साक्षात्कार किया था, इसलिए उस प्राण ने 'अयास्य' अर्थात विशेष का अनाश्रय करके वागादि इन्द्रियो को अग्न्यादिभाव से 'असक्त'

१ निर्धारयात । २ यस्मादिति—यत एव वागादय प्राणमास्येऽन्तरुपलभ्यायमास्येऽन्तरिति व्याजह्रुस्तत सोऽयास्य इत्यर्थ । मध्यस्थ इति यावत् ३ विशेषमिति--वागादीनामन्यतममित्यर्थ । ४ आत्मेति--स्वरूपभूत इत्यर्थ । हेतुगर्भविशेषणमिद प्राणस्य । ५ स्वरूपभूत । ६ बृ०उ० १ ३ १९ । ७ वक्ष्याम इति—ननु 'प्राणस्याङ्गिरसत्वमादावुक्तम् अनन्तर च सा वा एषा देवता दूर्नामेति दूगुणत्वमुक्तम् । तत्र प्रथमश्रुतमुपरिष्टात्प्रतिपादयिष्यति चरमश्रुत तु दूर हीत्यादिश्रुतिरादावेव प्रतिपादयति, तत्र क्रमभङ्गे कि कारणमित्याशङ्क्य समाहित वार्तिके—तथाहि—'उपास्तिक्रमसिद्ध्यर्थं क्रमभङ्गो यमिष्यते । यतो'तोऽङ्गिरस त्यक्त्वा दूरित्येवाभिधीयत'' इति ॥ आदौ दूर्गुणो ध्येयोऽनन्तरमाङ्गिरसत्वमित्युपास्तिक्रमसिद्ध्यर्थं पाठक्रमभङ्गोऽङ्गीकृतस्तस्य ततो बलवत्त्वात्सह्यनुक्ते दूर्गुणे प्राणस्य शुद्धिसिद्धि न चाशुद्धस्योपास्यत्वमतोऽग्निहोत्रहोमयवागूपाक क्रमवत्पाठक्रमातिक्रम इत्यर्थ । श्रौतक्रमभङ्गेनार्थक्रमोपादाने फलितमाह—यत इति । ८ उपलब्धिसिद्ध इति—प्रत्यक्षसिद्धे प्राणस्यास्यान्तरावस्थानस्वरूप इत्यर्थ । ९ परिहरतीति—अन्वयव्यतिरेकवत सर्वसाधारणस्य आङ्गिरसत्वकथनेनेति शेष ॥

**सा वा एषा देवता दूर्नाम दूरꣳ ह्यस्या मृत्युर्दूरꣳ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥९॥**

वह यह देवता "दूर" नामवाली है, क्योंकि इस प्राण देवता से आसक्तिरूप मृत्यु दूर है। जो ऐसा जानता है उससे मृत्यु दूर रहता है ॥९॥

करणानां साधारण आत्मा विशुद्धश्च तस्माद्वागादीनपास्य प्राण एवाऽऽत्मत्वेनाऽऽश्रयितव्य इति वाक्यार्थः। आत्मा ह्यात्मत्वेनोपगन्तव्योऽविपरीतबोधाच्छ्रेयःप्राप्तेर्विपर्यये चानिष्टप्राप्तिदर्शनात् ॥८॥

स्यान्मतं प्राणस्य विशुद्धिरसिद्धेति। ननु परिहृतमेतद्वागादीनां कल्याणवदनाद्यासङ्गवत्प्राणस्याऽऽसङ्गास्पदत्वाभावेन। बाढम्। किं त्वाङ्गिरसत्वेन वागादीनामा-

त्वा समाधत्ते—कथं पुनरित्यादिना। कस्माच्च हेतोरित्यादिचोद्यपरिहारमुपसंहरति—यस्माच्चेति। वाक्यार्थं प्रपञ्चयति—आत्मा हीति ॥८॥

प्राणस्य शुद्धत्वाद्व्यापकत्वाच्चोपास्यत्वमुक्तं तस्य शुद्धत्वं वागादिवदसिद्धमित्याशङ्कते—स्यान्मतमिति। शङ्कामाक्षिप्य समाधत्ते—नन्वित्यादिना। शवेन स्पृष्टिर्यस्यास्ति तेन स्पृष्टोऽपरस्तस्याशुद्धतावदशुद्धवागादिसंबन्धादशुद्धत्वाशङ्का प्राणस्योन्मिपतीत्यर्थः। तात्पर्यं दर्शयन्नुत्तरवाक्यमुत्तर-

अर्थात् संश्लिष्ट किया। इसी से वह अङ्गिरस कार्यभूत और करण इन्द्रियों का स्वरूपभूत आत्मा है। वह आङ्गिरस क्यों है? क्योंकि वह कार्यकरणसंघातरूप अङ्गों का रस या सार है अर्थात् स्वरूपभूत आत्मा है—यह प्रसिद्ध है। किन्तु इसका अङ्गरसत्व क्यों है? क्योंकि उसके चले जाने पर वह सूख जाता है—इसे आगे (बृ० उ० १-३-१९ मन्त्र में) कहेंगे। क्योंकि यह अङ्ग-रस होने से किसी विशेष का आश्रित होने से कार्य-करण का साधारण आत्मा है और विशुद्ध है। अतः वाक् आदि का परित्याग कर प्राण का ही आत्मभाव से आश्रय करना चाहिए—यह इस वाक्य का तात्पर्य है। यथार्थज्ञान से ही श्रेय प्राप्ति होती है, अयथार्थ ज्ञान से अनिष्ट प्राप्ति देखी गयी है। इसलिए आत्मस्वरूप से ही आत्मा का दर्शन करना चाहिए ॥८॥

यह (विशुद्धत्व और व्यापकत्व सिद्ध होने पर प्राणों का उपास्यत्व) अभिमत है; किन्तु वहाँ प्राणों की विशुद्धि सिद्ध नहीं होती। (इस पर कहते हैं—) इसका समाधान तो हम पूर्व ही कर चुके हैं, क्योंकि वागादि शुद्धभाषणादिविषयक आसङ्ग के समान, प्राण में आसक्ति की आस्पदरूपता का अभाव है। यह सत्य ही है। किन्तु आङ्गिरसरूप से वागादि का आत्मा बतलाया जाने से, शुद्ध होने पर अशुद्धवाक् के सम्पर्क से वह अशुद्ध हो जाता है, ठीक उसी प्रकार जैसे शव का स्पर्श हो जाने से उसे

१ दुर्गुणविशिष्टत्वेन प्राणं वेदेत्यर्थः। २. यथार्थज्ञानात्। ३ स्यान्मतमिति—विशुद्धत्वव्यापकत्वयोः सिद्धौ प्राणस्योपास्यत्वमभिमतं स्यादित्यर्थः। ४ प्राणस्यापि पूर्वोत्तरान्वयि—तत्रेति वा शेषः। ५ ननुरवधारणे। ६. सत्यम्। ७ सत्यं स्वतस्तस्य शुद्धत्वेऽप्यशुद्धवागादिसंबन्धादशुद्धत्वमित्याह—किं त्विति। ८ तत्र। ९. शङ्कामाक्षिप्य समाधत्त इति प्राणस्य विशुद्धत्वाभावशङ्काम्। आक्षिप्य—निरस्य, शङ्काया असंभाव्यत्वबुद्ध्येति यावत्। समाधत्ते—उत्तरशङ्कामुपपादयति पूर्ववादीत्यर्थः। १०. उत्तरवाक्यमित्यादि—नवमकण्डिकारूपमुत्तरवाक्यमुक्तशङ्कासमाधानत्वेन दर्शयतीत्यर्थः।

स्मत्वोक्त्या वागादिद्वारेण शवस्पृष्टिलत्स्पृष्टेरिवाशुद्धता ।शङ्क्यत इत्याह—शुद्ध एव प्राणः । कुतः, सा वा एषा देवता दूर्नाम यं प्राणं प्राप्याऽश्मानमिव लोष्टो विध्वस्ता असुरास्तं परामृशति सेति । सैवंवा येयं वर्तमानयजमानशरीरस्था देवैर्निर्धारिताऽयमास्ये-ऽन्तरिति । देवता च सा स्यात् । उपासनक्रियायाः कर्मभावेन गुणभूतत्वात् । 'यस्मात्सा दूर्नाम दूरित्येवं ख्याता । नामशब्दः ख्यापनपर्यायः । तस्मात्प्रसिद्धाऽस्या विशुद्धिर्दूर्ना-मत्वात् । कुतः पुनर्दूर्नामत्वमित्याह—दूरं दूरे हि यस्मादस्याः प्राणदेवताया' मृत्युरा-सङ्गलक्षणः पाप्माऽसंश्लेषधर्मित्वात्'प्राणस्य समीपस्थस्यापि दूरता मृत्योस्तस्माद्दूरित्येवं

---

स्वेनावतारयति—आहेति । नन्वत्र' प्राणो नोच्यते स्त्रीलिङ्गेनार्थान्तरोक्तिप्रतीतेरित्याशङ्क्याऽऽह—य प्राणमिति । 'तस्या'मूर्तस्य परोक्षत्वादपरोक्षवाचो च कथमेतच्छब्दो 'युज्यते तत्राऽऽह—सैवेति । कथं प्राणे देवताशब्दो न हि तस्य तच्छब्दत्वं प्रसिद्धमित्याशङ्क्याऽऽह—देवता चेति । 'यागे हि देवता कारकत्वेन 'गुणभूता प्रसिद्धा । तथा प्राणोऽपि द्रव्याद्यन्यत्वे सति विहित''क्रियागुणत्वाद्देवतेत्यर्थः । ''प्राणोपास्तेर्द्विविधं फलं पापहानिर्देवताभावश्च तत्र पापहानेरेव प्रधानफलत्वात्र श्रवणाद्दूर्गुणविशिष्ट-प्राणोपास्तिरिह विवक्षितेति वाक्यार्थमाह—यस्मादिति । न तावत्प्राणदेवताया दूर्नामत्वं ''निरूढं तत्र तच्छब्दप्रसिद्धेरदर्शनान्नापि यौगिकं प्राणस्य ''प्रत्यग्वृत्तेर्दूरत्वाभावादित्याक्षिपति—कुतः पुनरिति । परिहरति—आहेति । कथं पाप्मसंनिधौ ''वर्तमानस्य ततो दूरत्वमित्याशङ्क्याऽऽह—असंश्लेषेति ।

---

स्पर्श करने वाला अशुद्ध हो जाता है । ऐसी शङ्का होने पर श्रुति कहती है—प्राण शुद्ध ही है । क्यो शुद्ध है ? वह यह देवता 'दूर्' नाम वाला है । जिस प्राण को प्राप्त होकर असुर ऐसे ही नष्ट हो गये, जैसे अश्मरूप-मृत्पिण्ड । उसे ही श्रुति "सा" अर्थात् वह कह कर सम्पादित करती है । यह वही है, जिसे देवताओं ने 'यह मुख के भीतर है'—ऐसा कह कर वर्तमान शरीर में स्थित निर्धारित किया है । उपासना क्रिया के कर्मभाव से गुणयुक्त होने के कारण वह देवता भी है । जिस कारण से वह प्राण देवता "दूर् नाम" अर्थात दूर् इस प्रकार से विख्यात है । नाम शब्द ख्याति का पर्यायवाची है, अत 'दूर्' नाम होने से इसकी ख्याति भी प्रसिद्ध है । "दूर्" नाम क्यो पड़ा ? इस पर कहते हैं—क्योंकि इस प्राणदेवता से मृत्यु दूर ही रहती है—प्राण आसङ्गलक्षणात्मक पाप है (जल मे पद्म के समान) असंसर्गधर्मी है, पास होने भी इससे मृत्यु की दूरता है, इस कारण से 'दूर्' इस प्रकार की ख्याति ही प्राणो की विशुद्धि की ज्ञापिका है । दूर्गुणविशिष्ट प्राणो के जानने वाले का फल बतलाते हैं—इससे

---

१ प्राणदेवता । २ सकाशात । ३ जलपद्मवत् । ४ प्रकृतवाक्ये । ५ प्राणस्य । ६. अतिसूक्ष्मस्य । ७ प्राणे प्रयुज्यते । ८ याग हि देवतेत्यादिपङ्क्तिस्थले वार्तिकटीकायामित्थं पङ्क्ति तथाहि—यागादौ शब्दनिरेकेण चेतनो गुणोऽग्न्यादिर्देवताप्रसिद्धा तथा प्राणस्याप्युपास्तिक्रियाया गुणत्वाद्देवतात्व न च तस्योक्तक्रियायां कर्मत्वात्र गुणतेति युक्तमिति वाच्यम् गुणशब्देन कारकस्य विवक्षितत्वात् तथा च प्राणस्य शब्दनिरिक्तचेतनत्व सति क्रियाया कारकत्वाद्देवतात्व युक्तमिति । अत्र न च तस्योक्तक्रियाया कर्मत्वात्र गुणतेत्यस्य मीमांसकं कर्मणो गुणत्वानभ्युपगमादित्याशय इत्यवधेयम् । ९ क्रियाया प्राधान्यात देवताया गुणभूतत्व गौणत्वमित्यर्थं । १० कारकत्वात् । ११. ननु दध्यादिवत् फलविशेषसम्बन्धात् गुणविधिरेवाय न तु विशिष्टविधिरित्याशङ्क्याह—प्राणोपास्तिरित्यादि । १२ प्रसिद्धम्—अनादितात्पर्यवद्वृत्ति यावत् । १३ शरीरा-न्तर्वर्तनादित्यर्थं । १४ पाप्मवति वागादौ वर्तमानस्य ।

स्याति रेव प्राणस्य विशुद्धिज्ञापिका। 'विदुषः फलमुच्यते—दूरं ह वा अस्मान्मृत्युर्भवति। अस्मादेवंविदो' य एवं वेद तस्मादेवमिति प्रकृतं विशुद्धिगुणोपेतं प्राणमुपास्त इत्यर्थः। उपासनं नामो'पस्यार्थवादे यथा देवतादिस्वरूपं श्रुत्या ज्ञाप्यते तथा मनसो'पगम्याऽऽसनं चिन्तनं लौकिक'प्रत्ययाव्यवधानेन, यावत्तद्देवतादिस्वरूपात्माभिमानाभिव्यक्तिरिति 'लौकिकात्माभिमानवत्। "देवो भूत्वा देवानप्येति" "किंदेवतो'ऽस्यां प्राच्यां दिश्यसि" इत्येवमादिश्रुतिभ्यः ॥९॥

सा वा एषा देवता दूरं ह वा अस्मान्मृत्युर्भवतीत्युक्तम्। कथ पुनरेवंविदो दूरं मृत्युर्भवतीति। उच्यते। "एवंवित्त्वविरोधात्। इन्द्रियविषयसंसर्गासङ्गजो हि पाप्मा

---

उपास्ते सदा भावयतीति यावत्। "ब्रह्मज्ञानादिव प्राणतत्त्वज्ञानात्फलासिद्धिसंभवे किं सदा तद्भावनयेत्याशङ्क्य भावनापर्यायोपासनशब्दार्थमाह—उपासन नामेति। "दीर्घकालादरनैरन्तर्यरूपविशेषणत्रयं विवक्षित्वाऽऽह—लौकिकेति। "तस्य मर्यादां "दर्शयति—यावदिति। मनुष्योऽहमितिवद्देवोऽहमिति यस्य जीवत एवाभिमानाभिव्यक्तिस्तस्यैव देहपातादूर्ध्वं तद्भावः फलतीत्यत्र प्रमाणमाह—देवो भूत्वेति। का देवता रूपं तवेति किंदेवतोऽसीति तद्भावो" भातीत्यर्थ" ॥९॥

कण्डिकान्तरमवतार्य सूत्रं कीर्तयति—सा वा इति। नित्यानुष्ठानात्पापहानिर्धर्मात्पापक्षयश्रुतेः। न चेदमुपासनं "नित्यं "नैमित्तिकं वा देवतात्मत्वकामिनो विधानात्तत्कथं पापमेवंविदो दूरे भवतीत्याक्षिपति—कथ पुनरिति। "विरोधिसंनिपाते पूर्वध्वंसमावश्यकं मन्वानः समाधत्ते—उच्यत इति। "उक्तमेव व्यनक्ति—इन्द्रियेति। इन्द्रियाणां विषयेषु संसर्गे योऽभिनिवेशस्तेन जनित पाप्मा परिच्छेदा-

---

मृत्यु दूर ही रहता है। 'अस्मात्' अर्थात् इस प्रकार जानने वाले के पास से यानी जो इसे इस प्रकार जानता है, उसके पास से, इस प्रकार जो विशुद्धिगुणविशिष्ट प्रकृतप्राण की उपासना करता है—यह निष्कर्ष हुआ। उपास्य-स्तावक वाक्यों में श्रुति द्वारा देवता का जैसा जैसा स्वरूप बताया जाता है, वैसा वैसा मन में निश्चय करके आसन अर्थात् लौकिक विजातीय-प्रत्यय के व्यवधान न आने देकर, जब तक उस देवतादि के स्वरूप में वर्णादिविशिष्टदेहात्म-अभिमान की तरह आत्माभिमान उत्पन्न न हो, तब तक उसी का चिन्तन करना उपासना है। श्रुतियाँ भी इसी का दिग्दर्शन कराती हैं—"देवता होकर देवता में समा जाता है", "इस पूर्व दिशा में तुम किस (अधिष्ठातृ) देवता से युक्त होकर स्थित हो?" इत्यादि ॥९॥

---

१ दुर्गुणविशिष्टप्राणविद। २ सकाशात्। ३ उपास्यस्तावकवाक्य। ४ निश्चित्य। ५ विजातीय-प्रत्ययेत्यर्थं। ६ वर्णादिविशिष्टदेहात्माभिमानवदित्यर्थ। ७ बृ० उ० ४ १ २। ८ कयाधिष्ठातृदेवतया त्व प्राचीदिग्रूपेण सम्पन्नोऽसीति फलितार्थं। ९ बृ० उ० ३ ९ २० याज्ञवल्क्य प्रति शाकल्यावितरियम्। १० अस्या का देवतेति प्रष्टव्येऽप्येव प्रश्नकरण तु मुनेर्दिगुपासनात्तत्तादात्म्यसम्पत्तिरिहैव जातेति बोधयितुम्। इहैव—इहजन्मनीत्यर्थं। ११ एवंवित्त्वविरोधादिति न हि नित्याद्यनुष्ठानादेव पापक्षयो नियतस्तीर्थस्नानादेरपि तत्प्रसिद्धेस्तस्मादेवंवित्त्वेन पाप्मनो विरोधित्वादेवंविद सकाशाद्दूरे भवत्यनाशावित्यथ। १२ उपासनशब्दार्थं ज्ञान मत्वा शङ्कते ब्रह्मेत्यादिना। १३ दीर्घकालेत्यादि—दीर्घकालत्व फलपर्यन्तत्वम् आदर श्रद्धाभक्ती। नैरन्तर्यम्—अव्यवहितत्वम्। १४ चिन्तनस्य। १५ अवधिम्। १६ दिग्भाव। १७ उपासकस्येति-शेष। १८ नित्य सन्ध्यावन्दनादि। १९ नैमित्तिकं च श्राद्धजातकर्मादि। २० विरोधिसंनिपात इति—जलाग्न्यादिवद्विरोधिनो पदार्थयो सामानाधिकरण्य सति पूर्वस्थित ध्वंसित्वैवापरमवतिष्ठत इत्यर्थ। २१ विरोधमेव।

प्राणात्माभिमानिनो हि विरुध्यंते । वागादिविशेषात्माभिमानहेतुत्वात्स्वाभाविकाज्ञानहेतुत्वाच्च । शास्त्रजनितो हि प्राणात्माभिमानस्तस्मादे ॐवंविदः पाप्मा दूरं भवतीति युक्तं 'विरोधात्तदेत'त्प्रदर्शयति—

भिमानोऽपरिच्छिन्ने प्राणात्मन्यात्मा'भिमानवतो विरुध्यते परिच्छेदापरिच्छेदयोर्विरोधस्य प्रसिद्धत्वादित्यर्थः । विरोधं 'साधयति—वागादीति । पाप्मनो 'वागादिविशेषवत्यात्मनि "विशिष्टेऽभिमानहेतुत्वादाधिदैविकापरिच्छिन्नाभिमाने' ध्वंसो 'युज्यते । दृश्यते हि चण्डालभाण्डायसम्बन्धिनो जलस्य "गङ्गाद्यविशेषभावापत्ताव"पेयत्वनिवृत्तिः ।

"मद्युत्यपि पयः प्राप्य गङ्गां याति पवित्रताम्"

इति न्यायादित्यर्थः । "यन्नैसर्गिकाज्ञानजन्यं "तदागन्तुकप्रमाणज्ञानेन निवर्तते यथा रज्जुसर्पादिज्ञानं नैसर्गिकाज्ञानजन्यश्च पाप्मा तेन प्रामाणिकप्राणविज्ञानेन तद्ध्वस्तिरित्याह—स्वाभाविकेति । नन्वभिमानयोर्विरोधाविशेषाद्बाध्यबाधकत्वव्यवस्थायोगाद्द्वयोरपि "मिथो बाधः स्यात्तत्राऽऽह—शास्त्रजनितो हीति । उक्तमेव पापध्वंसरूपं विद्याफलं प्रपञ्चयितुमुत्तरवाक्यमित्याह—तदेतदिति ।

"वह यह देवता है, मृत्यु उसके पास नहीं जाती" यह कहा । इस प्रकार जानने वाले के पास से मृत्यु क्यों दूर रहती है ? इस पर कहते हैं । क्योंकि इस प्रकार जानने वाले से पाप का विरोध होने के कारण मृत्यु दूर ही रहती है । इन्द्रियों के विषयों के संसर्ग से होने वाली आसक्ति ही पाप है, उस पापरूपा मृत्यु के कारण मृत्यु से प्राणात्माभिमानी का विरोध है, क्योंकि वह वागादि से उपहित आत्माभिमान का हेतु है, और शास्त्रानाधय अज्ञान में कारण है । प्राणात्माभिमान शास्त्रजनित है । इसलिए ऐसे ज्ञाता से पाप का विरोध होने के कारण इस प्रकार जानने वाले के पास से पाप दूर ही रहता है । यह कहना ठीक है । इसी (पापध्वंसरूपा विद्या के फल) को श्रुति दिखाती है—

१ पाप्मन इति शेष । २ विरोधादिति—एवंविदा सह पाप्मनो विरोधादित्यर्थ । अपरिच्छेदस्य शास्त्रसमर्पितत्वेन बलवत्त्वाद्बाधकत्व परिच्छेदस्य तु स्वाभाविकत्वेन दुर्बलत्वाद्बाध्यत्वमिति युक्तैव व्यवस्था । ३ एतदिति—यथोक्त पापध्वंसरूप विद्याफलमित्यर्थं । ४ विदुष । ५ उपपादयति । ६ वागादीत्यादि—वागादिरूप आध्यात्मिक परिच्छिन्न पदार्थो विशेष तत्तादात्म्याभिमानवति पुरुष इत्यर्थ । ७ विशिष्टाभिमानेति पाठान्तरम् । ८ जाते सतीति शेष । ९ सभवति । १० अभेदभावापत्तावित्यर्थ । ११ अपेयत्वनिवृत्तिरिति—चाण्डालभाण्डस्थजलस्थानीयस्य देहस्योपासकस्य गङ्गास्थानीयदेवभावापत्तावपेयत्वस्थानीयस्य पाप्मनो निवृत्तिर्भवतीति दार्ष्टान्तिके योज्यम् । १२ अनाद्यज्ञानजन्य रजतादिज्ञानम् । १३ आगन्तुकम्—जन्यम् । १४. सुन्दोपसुन्दन्यायवदिति भाव ।

ॐ श्रीकैलासविद्याप्रकाशकक्रोडपत्राणि ।

ॐएवंविद पाप्मा दूर भवतीति युक्तमिति—ननु प्राणस्य पाप्मा सम्बन्धे तदभिमानिनस्तदात्मत्वादपि पाप्मा दूर भवतीति युक्तमुक्त स्यात्तथापि प्राणस्य पाप्मा सम्बन्ध सिद्ध प्राणत्वादितरप्राणवत्तत्सम्बन्धानुमानादित्याशङ्क्य समादधुर्वार्तिककाचार्या —"परिस्पन्दात्मिका वृत्ति श्रोत्रादिष्वपि विद्यत । प्राणस्यार्थेन्द्रियाणा तु शब्दाद्यर्थावलेहिनी ॥ शब्दादिग्राहिणी वृत्ति स्वैरासङ्गात्मपाप्मभि । दूषिता न परिस्पन्दो दूर मृत्युरसौस्तत इति"॥२१६-१७॥ प्राणस्य चलनरूपा वृत्तिरपरिच्छिन्ना सर्वदेहव्यापिनीति न दूषितेत्यर्थ । प्राणान्तरवृत्तिरपि तथैवेत्याशङ्क्य—अर्थेति । तुशब्देन शङ्काव्यावर्तयन्नाह—इन्द्रियाणा त्विति । वागादीनां शब्दादिग्राहिणी वृत्तिस्तन्मात्र गोचरयति । न हि वाचा दर्शन चक्षुषा वा वदन तया च परिच्छिन्नैव तद्वृत्तिरित्यर्थं । तथापि पाप्मस्पर्शास्पर्शयोरभयत्र

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्राऽऽसां दिशामन्तस्तद्गमयांचकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥१०॥**

उस इस प्राण देवता ने इन वागादि देवताओं के पापरूप मृत्यु (स्वाभाविक अज्ञान से प्रेरित विषयससर्गजनित ममता) को हटा कर जहाँ इन दिशाओं का अन्त हो जाता है, वहाँ पहुचा दिया। वहाँ इन देवताओं के पाप को मुख्य प्राण ने तिरस्कारपूर्वक निहित कर दिया। अत "मैं पापरूप मृत्यु से युक्त न होऊँ" इस भय से अन्य जना के ससर्ग मे न जाय और अन्त दिशा मे भी न जावे। (श्रौत विज्ञानवान् पुरुषो की सीमापर्यन्त ही दिशाओं की कल्पना की है, उनसे विरुद्ध आचरण वाले लोगो से बसा हुआ देश ही दिशाओं का अन्त है) ॥१०॥

[1]सा वा एषा देवतेत्युक्तार्थम्। एतासा वागादीना देवताना [2]पाप्मान मृत्यु स्वाभाविकाज्ञानप्रयुक्तेन्द्रियविषयसंसर्गासङ्गजनितेन हि पाप्मना सर्वो म्रियते [3]स ह्यतो मृत्युस्तं [4]प्राणात्माभिमानरूपाभ्यो देवताभ्यो[5]ऽपच्छिद्यापहत्य [6]प्राणात्माभिमानमात्रतयैव प्राणोऽ-

मृत्युम[7]पहत्य यत्राऽऽसां दिशामन्तस्तद्गमयांचकारेति सबन्ध। कथ पाप्मा मृत्युरुच्यते तत्राऽऽह—स्वाभाविकेति। अपहत्येत्यत्र पूर्ववदन्वय। प्राणदेवता चेत्पाप्मान हन्ति सदैव किं न हन्यादित्याशङ्क्याऽऽह—प्राणात्मेति। भवतु प्राणो वागादीना पाप्मनोऽपहन्ता [8]विदुषस्तु किमायातमित्या-

"सा वा एषा देवता" इस मन्त्र का अर्थ कह चुके हैं। इन वाक् आदि देवताओं के 'पाप्मान मृत्युम्' अर्थात् शास्त्रानाधेय अज्ञान से प्रयुक्त इन्द्रियो के विषय के ससर्गरूप अभिनिवेश से होने वाले पाप से ही सारे प्राणी मरते है। इसलिए (मृत्युप्रयोजक होने से) वही मृत्यु है। प्राण मे आत्माभिमान है जिनका, ऐसे रूप वाले देवताओं क पास से 'अपहत्य' अर्थात अलग करके, प्राण मे अपनी आत्म-

१ सा—या प्राप्यासुरालोष्टवद्विनेशु। एषा-भयमास्यऽन्तरिति देवैरुपलब्धा दैवतैवेत्युक्तोऽर्थ। २ पाप्मा।
३ मृत्युप्रयोजकत्वात्। ४ प्राणात्माभिमानरूपाभ्य इति प्राणे आत्माभिमानो यासां तद्रूपाभ्य इति बहुव्रीहि।
५ सकाशात्। ६ प्राणात्माभिमानमात्रतयैवेति-अभिमान एवेत्यभिमानमात्र प्राणे आत्माभिमानमात्र यस्य तत्सम्बन्धीति यावत् स प्राणात्माभिमानमात्र प्राण तस्य भावस्तत्ता तयैव स्वस्मिन्नात्मत्वाभिमानविषयतयैवेत्यर्थ। न तूक्ताभिमानाविषयतयेत्येवकारार्थं। ७ अपसार्य। ८ विदुष इत्यादि उपासकस्योपासनया किं फल लब्धमित्यर्थ।

तुल्यतेत्याशङ्क्य परिच्छेदस्य पाप्मफलत्वात्तद्दूषिता परिच्छिन्ना वागादिवृत्तिरित्याह—स्वैरिति। धर्मफलत्वादपरिच्छेदस्य प्राणवृत्तिरपरिच्छिन्ना न पाप्मदूषितेत्याह-नेति। एवमनुमानासभवे प्राणस्य पाप्मसबन्धाभाव फलितमाह—दूरमिति। पापासम्बन्ध प्राणस्योक्त्वा तद्विदोऽपि तन्निषमयति—'मृत्युर्दूर यथा प्राणात् तदात्मत्वात्तथाऽसुर। तद्विदश्च भवेन्मृत्युर्दूरमित्युपदिश्यत इति' ॥२१८॥ पूर्वोक्तन्यायाद्यथा प्राणादासङ्गरूपो मृत्युर्दूरे भवति तथा तद्विदोऽप्यसौ दूरे स्याद्विदुषस्सदा तद्भावनया तदात्मत्वादतो दूरमित्यादिफलोक्तिरविरुद्धेत्यथ। तदेतत्सवमभिप्रेत्याहुर्भगवत्पादा विरोधादिति—एवंवित्त्वेन सह पाप्मनो विरोधादित्यथ।

पहन्तेत्युच्यते ।[1]विरोधादेव तु पाप्मैवंविदो दूरंगमो भवति । किं पुनश्चकार देवतानां पाप्मानं मृत्युमपहत्येति, उच्यते—यत्र यस्मिन्नासां प्राच्यादीनां दिशामन्तोऽवसानं तत्तत्र गमयांचकार गमनं कृतवानित्येतत् ।

ननु नास्ति दिशामन्तः कथमन्तं गमितवानिति । उच्यते—श्रौतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशां तद्विरोधिजनाध्युषित एव देशो दिशामन्तो देशान्तोऽरण्यमिति[2]यद्वदित्यदोषः । तत्तत्र[3] गमयित्वाऽऽसां देवतानां पाप्मन इति द्वितीयाबहुवचनं विन्यदधा-

शङ्कामाऽऽह—विरोधादेवेति ।

[4]अनन्ताकाशदेशत्वाद्दिशामन्ताभावाद्यत्राऽऽसामित्याद्ययुक्तमिति शङ्कते—नन्विति । [5]शास्त्रीयज्ञानकर्मसंस्कृतो जनो मध्यदेश. [6]प्रसिद्धस्यापि [7]तदधिष्ठितत्वेन मध्यदेशत्वा[8]त्तत्राप्यन्त्यजाधिष्ठितदेशस्य पापीयस्त्वस्वीकाराद[9]तस्त जन तदधिष्ठित च [10]देशमवधि कृत्वा [11]तेनैव [12]निमित्तेन दिशां कल्पितत्वादानन्त्याभावात्पूर्वोक्तजनातिरिक्तजनस्य तदधिष्ठितदेशस्य चान्तत्वोक्तेर्मध्यदेशादन्यो देशो दिशामन्त इत्युक्ते न काचिदनुपपत्तिरिति परिहरति—उच्यत इति । किमित्यन्त्यजनेष्विस्य-

स्वाभिमानविषयता से यहाँ प्राण को अपहन्ता कहा है । इस प्रकार जानने वाले से पाप का विरोध होने के कारण ही पाप दूर भाग जाता है । देवताओं की पापरूप मृत्यु को उनसे अलग करके (प्राणदेवता ने) पुन क्या किया ? इस पर कहते है—'यत्र अर्थात् जहाँ "आसाम्" अर्थात् पूर्वादि दिशाओं का "अन्त अर्थात् अवसान है, "तत्" अर्थात् वहाँ "गमयाचकार" अर्थात् गमन करा दिया ।

यहाँ शङ्का होती है, जब दिशाओं का अन्त ही नही है, तो दिशाओं के अन्त मे कैसे पहुँचा दिया ? इसका समाधान देते हैं—दिशाओं का कल्पना शास्त्रीय ज्ञान कर्म से संस्कृत पुरुष की अवधि-पर्यन्त की गयी है, तथा उनसे विरुद्ध असंस्कृत लोगों से बसा हुआ देश ही दिशाओं का अन्त है । जैसे 'नगर का अन्त अरण्य है', यह प्रयोग होता है—ऐसे ही यहाँ मानने मे कोई दोष नही है । वहाँ यथोक्तदिशा के अन्त मे (वहाँ के निवासी जनो मे) देवताओं के पापो को पहुँचा कर 'विन्यदधात्' यानी विविध प्रकार से रख दिया । "पाप्मन ' यह पद द्वितीया बहुवचनान्त है । अन्यथा-अनुपपत्ति

१ विरोधादेवेति-एवंविदेन पाप्मनो विरोधादेवेत्यर्थ । २ यद्वदिति-यथा देशान्तोऽरण्यमिति प्रयोग वृक्षसमुदायविशेषशून्या भूभागो देशशब्देनोच्यते तथा दिशामन्त इति प्रयोगे शास्त्रीयज्ञानकर्मसंस्कृतजनाधिष्ठानशून्यो देशो दिक्छब्दार्थ । इत्यदोष इति उक्तविवक्षया दिशामन्तस्यानुपपत्तिलक्षणो दोषो नेत्यर्थ । ३ तत्रेति—यथोक्तदिशामन्त तत्स्थजने चेत्यर्थ । ४ अनन्त आकाशो देशोऽधिष्ठानमाश्रयो यासां तथात्वात् अनन्ताकाशदेशत्वादित्यर्थ यावत् । ५ शास्त्रप्रसिद्धानिन्दिताचारसंस्कृतमना पुरुष । ६ अनु आर्यावर्त पुण्यभूमि मध्य विन्ध्यहिमागयोरिति-प्रसिद्धमध्यदेश विहायाप्रसिद्धस्य तस्य ग्रह किं नियामकमित्याशङ्क्याह—प्रसिद्धस्यापीति । ७ प्रसिद्धस्यापि मध्यदेशस्य तादृशजनाधिष्ठितत्वेनैव मध्यदेशत्वात् इत्यर्थ । तथा चार्तविशिष्टो जनो मध्यदेश तदधिष्ठितदेशस्तूपचारात्तथेति न मध्यदेशशब्दस्यानेकार्थताऽपीति भाव । ८ तत्रापीति—प्रसिद्धमध्यदेशेऽपीत्यर्थ । ९ अत —उक्तजनस्य तदधिष्ठितदेशस्य च मध्यदेशत्वादित्यर्थ । १० मर्यादीकृत्य । ११ तादृगवधिरूपेणैव । १२ तेनैव निमित्तेन दिशां कल्पितत्वादिति तृतीयाया अभेदार्थत्वात् उक्तजनादिरूपमध्यदेशमवधित्वेनाभिप्रेत्य दिशां व्यवहारादिति यावत् ।

द्विविधं न्यग्भावेनादधात्स्थापितवती प्राणदेवता प्राणात्माभिमानशून्येष्वन्त्यजनेष्विति 'सामर्थ्यादिन्द्रियसंसर्गजो हि स इति प्राण्याश्रयताऽवगम्यते । 'तस्मात्तमन्त्यं जनं नेयान्न गच्छेत्संभाषणदर्शनादिभिर्न संसृजेत् । तत्संसर्गे पाप्मना संसर्गः-कृतः स्यात्पाप्माश्रयो हि सः । तज्जननिवासं चान्तं दिगन्तशब्दवाच्यं नेयाज्जनशून्यमपि जनमपि तद्देशवियुक्तमित्यभिप्रायः । नेदिति 'परिभयार्थे निपातः । इत्थं जनसंसर्गे पाप्मानं मृत्युमन्ववायानीति । अनु अव अयानीत्यनुगच्छेयमित्येवं भीतो न जनमन्तं चेयादिति पूर्वेण संबन्धः ॥१०॥

'धिकायापः क्रियते तत्राऽऽह—इति सामर्थ्यादिति । 'देशमात्रे पाप्मावस्थानानुपपत्तेरित्यर्थः । तामेवानुपपत्तिं साधयति—इन्द्रियेति । भवतु यथोक्तो दिशामन्तस्तथा 'च पाप्मसंसर्गोऽस्तु तथाऽपि किमायातमित्याशङ्क्य तस्य शिष्टैस्त्याज्यत्वमित्याह—तस्मादिति । निषेधद्वयस्य तात्पर्यमाह—जनशून्यमपीति । प्राणोपास्तिप्रकरणे निषेधश्रुतेस्तदुपासकेनैवायं निषेधोऽनुष्ठेयो न सर्वैरित्याशङ्क्याऽऽह—नेदित्यादिना । 'इत्थं श्रुत्युक्तं निषेधं न चेदहं कुर्यां ततः पाप्मानमनुगच्छेयं निषेधातिक्रमादिति सर्वस्य भयं जायते न प्राणोपासकस्यैव । "अत सर्वोऽपि पापाद्भीतो नोभयं गच्छेद्वाक्यं हि प्रकरणाद्बलवदित्यर्थः ॥१०॥

से यह भय प्रतीत होता है, कि उसे प्राणात्माभिमान-शून्य पापीजनों में स्थापित कर दिया। वह पाप इन्द्रियों के संसर्ग से होता है, इसलिए उसकी प्राण्याश्रयता सिद्ध होती है। इसलिए उस पापी के पास न जाय, अर्थात् सम्भाषण और दर्शनादि से उनका सम्पर्क न करें। उनके संग करने से उस पाप का संसर्ग हो जायगा, क्योंकि वह पाप का आश्रय है। उन (पापियों) के निवास 'अन्तम्' अर्थात् दिगन्त शब्दवाची देश में जनशून्य होने पर भी न जाय। पापी जनों के देश से अलग रहे, यह अभिप्राय है। "नेत्" यह अत्यन्त भय के अर्थ में निपात है। इस प्रकार इन पापी जनों से सम्पर्क होने पर मृत्यु को प्राप्त होऊँगा। "अन्ववायानि" में 'अनु, अव, अयानि' इस प्रकार पदच्छेद है। इस प्रकार भयापन्न होने पर पापी के दिशान्त देशों में न जाय। "इयात्" इस पूर्वस्थ क्रियापद से इनका सम्बन्ध है ॥१०॥

"सा वा एषा देवता" इस श्रुति से प्राण का आत्मत्वरूप से जो उपासनाभूत ज्ञान है तदात्मक जो कर्म, उसके फल रूप से वागादि देवता की अग्न्यादिरूपता का वर्णन किया जाता है। पापविमोक्ष के बाद कर्मभूत वागादि देवता ने पापरूप मृत्यु से पार कर दिया (अर्थात् स्वरूपबोध करा दिया)। वागादिदेवताप्रमोजक-पापरूप मृत्यु प्राणात्मज्ञान द्वारा नष्ट हो गया। इसीलिए वह प्राण पापरूप

१ पामरजनेषु । २ इति सामर्थ्यादिति—अयमर्थोऽन्यथानुपपत्त्याऽवगम्यत इत्यन्यथानुपपत्त्यर्थ । ३ तस्मादिति—यस्मात्तत्र वागादीनां पाप्मानं प्राणो विन्यदधात्तस्मादित्यर्थं । ४ अत्यन्तभय । ५ अधिकस्यावाप प्रक्षेप अध्याहार इति यावत् । ६ देशमात्र इत्यादिदेशस्य जडात्मत्वात् पापस्य च जडानाश्रितत्वाच्च देशमात्रस्थत्वसंभव इत्यनुपपत्तिसामर्थ्यादित्यवमधिकावाप इत्यर्थं । ७ तथैव । ८ तत्रेतिशेष । ९ इत्थमित्यादि-श्रुत्युक्त निषेधमित्थं श्रुत्युक्तानुसारेण यद्यहं न पालयेयमित्यर्थ । १० अत इति-निषेधस्य सामान्यविषयकत्वादित्यर्थ । तथा च वार्तिकम्—"सामान्यविषयश्चाय निषेधो नानविद्गत । बलवत्प्रक्रियातो हि वाक्य सामान्यमात्रगम् ॥" प्रकरणात् प्राणविद्विषय निषेधेऽवगम्यमाने कथ तस्मान्न जनमित्यादिवाक्यात्तस्य सामान्यविषयतेत्याशङ्क्य श्रुतिलिङ्गादिसूत्रे प्रकरणाद्वाक्यस्य बलवत्त्वनिश्चयादित्याह—बलवदिति ।

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमप-हत्याथैना मृत्युमत्यवहत् ॥११॥**

**स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥१२॥**

उस इस प्राण देवता ने इन वागादि देवताओं के पापरूप मृत्यु को नष्टकर पुनः इन्हें आध्यात्मिक परिच्छेदरूप मृत्यु के पार अपरिच्छिन्न आधिदैविक अग्न्यादि देवात्मभाव को प्राप्त करा दिया ॥११॥

उस प्रसिद्ध प्राण ने वाक् देवता को (आध्यात्मिक परिच्छेदरूप मृत्यु के) पार पहुँचा दिया। जब वाणी मृत्यु से पार हुई तब वह अग्नि हो गयी। वह यह अग्नि परिच्छिन्न मृत्यु से परे देदीप्यमान है ॥१२॥

---

सा वा एषा देवता, [1]तदेतत्[2]प्राणात्मज्ञानकर्मफलं वागादीनामग्न्याद्यात्मत्वमुच्यते। [3]अथैना मृत्युमत्यवहत्। यस्मादा[4]ध्यात्मिकपरिच्छेदकरः पाप्मा मृत्युः प्राणात्मविज्ञानेनापहतस्[5]तस्मात्स प्राणोऽपहन्ता पाप्मनो मृत्योः। तस्मात्स एव प्राण एना वागादिदेवताः प्रकृतं पाप्मानं मृत्युमतीत्यावहत्प्रापयत्स्वं स्वमपरिच्छिन्नमग्न्यादिदेवतात्मरूपम् ॥११॥

स वै वाचमेव प्रथमामत्यवहत्। स प्राणो वाचमेव प्रथमां प्रधानामित्येतत्।

---

द्विविधमुपास्तिफलं पापहानिर्देवताभावश्च। तत्र पापहानिमुपदिशता [6]प्रासङ्गिकः [7]साधारणो निषेधो दर्शितः। संप्रति देवताभावं वक्तुमुत्तरवाक्यमिति प्रतीकोपादानपूर्वकमाह—सा वा एषेति। अथशब्दावद्योतितमर्थं कथयति—यस्मादिति। पाप्मापहन्तृत्वमनूद्यावशिष्टं भागं व्याचष्टे—तस्मात्स एवेति ॥११॥

[8]सामान्योक्तमर्थं विशेषेण प्रपञ्चयति—स वै वाचमित्यादिना। कथं वाचः प्राथम्यं तदाह—

---

मृत्यु का नाश करने वाला है। इस कारण से उस प्राण ने ही वागादि देवताओं को प्रकृत पापरूप मृत्यु से पार कर इनके अपरिच्छिन्न अग्न्यादि देवनात्मस्वरूप को प्राप्त करा दिया ॥११॥

---

१ नन्वस्तु प्राणोपास्ते पापक्षयफलत्वम् अग्न्यादिदेवताप्राप्तिफलं तु न सम्भवति स्थितेषु नष्टेषु च वागादिषु तेषां देवत्वप्रापणे प्राणस्यासमर्थत्वात् इत्याशङ्क्याह—तदेतदिति। २ प्राणेत्यादि—प्राणस्यात्मत्वेन यज्ज्ञानम् उपासनम् तदात्मकं यत्कर्म तस्य फलं स्थितेष्वेव तेषु वस्तुतो देवतात्मसु परिच्छेदाभिमानप्रतिबन्धध्वस्तिमात्रेण देवत्वप्रापणं प्राणस्य सम्भवतीत्येतदनन्तरग्रन्थेनोच्यते। ३ अथेत्यादि—पापवियोगानन्तरम्। एना—वागादिदेवता कर्मभूताः। मृत्युम्- पूर्वोक्तपाप्मरूपम्। अति—अतीत्य अवहत्—स्वरूपं प्रापितवती प्राणदेवतेत्यर्थः। ४ आध्यात्मिकेत्यादि आध्यात्मिका वागादिदेवता तासां परिच्छेदप्रयोजक इत्यर्थः। ५ तस्मात्—प्राणस्यैव यथोक्तमृत्य्वपहन्तृत्वादुपासितस्य सतः स्वात्मविज्ञानेन। ६ प्रासङ्गिक इति—प्रसङ्गादागत इत्यर्थः। प्रसङ्गश्च स्मृतस्योपेक्षानर्हत्वम्। ७ उपासकानुपासकसाधारणः। ८. पूर्ववाक्येनैव वागादीनामग्न्यादिभावस्योक्तत्वात् उत्तरवाक्यवैयर्थ्यमित्याशङ्क्यार्थभेदान्मैवमित्याह-सामान्येति। वागादिदेवता मृत्युं पाप्मानमतीत्य अग्न्यादिभावं प्राणः प्रापयति स्म इति सामान्येन तासां देवभावस्योक्तत्वात् वाचोऽग्नित्वं प्राणस्य वायुत्वमित्यादिविशेषणविशिष्टदेवतारूपता अनन्तरग्रन्थेन विव्रियत इत्यर्थः।

**अथ प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥१३॥**

इसी प्रकार प्राण ने घ्राण को मृत्यु के पार पहुंचाया । वह जिस समय मृत्यु से पार हुआ, उस समय वायु हो गया । अतः वह अतिक्रान्त-वायु मृत्यु से पार होकर वहता है ॥१३॥

---

[1]उद्गीथकर्मणीतरकरणापेक्षया [2]साधकतमत्वं प्राधान्यं तस्याः । तां प्रथमामत्यवहद्वहनं कृतवान् । तस्याः पुनर्मृत्युमतीत्यो[3]ढायाः किं रूपमित्युच्यते—सा[4] वाग्यदा यस्मिन्काले पाप्मानं मृत्युमत्यमुच्यतातीत्यामुच्यत [5]मोचिता स्वयमेव[6] तदा सोऽग्निरभवत्सा वाक्पूर्वमप्यग्निरेव सती मृत्युवियोगेऽप्यग्निरेवाभवत् । एतावांस्तु विशेषो मृत्युवियोगे । सोऽय[7]मतिक्रान्तोऽग्निः परेण मृत्युं परस्तान्मृत्योर्दीप्यते । [8]प्राङ्मोक्षान्मृत्युप्रतिबद्धोऽध्यात्मं[9]वागात्मना[10] नेदानीमिव दीप्तिमानासीदिदानीं तु मृत्युं परेण दीप्यते मृत्युवियोगात् ॥१२॥

तथा प्राणो घ्राणो वायुरभवत् । स तु पवते मृत्युं परेणातिक्रान्तः । सर्वमन्यदुक्तार्थम् ॥१३॥

---

उद्गीथेति । वाचो मृत्युमतिक्रान्ताया रूपं प्रश्नपूर्वकं प्रदर्शयति—तस्या इति । अनग्नेरग्नित्वविरोधं धुनीते—सा वागिति । पूर्वमपि वाचोऽग्नित्वेनोपासनालभ्यं "तदग्नित्वमित्याशङ्क्याऽऽह—एतावानिति । उक्तं विशेषं विशदयति—प्रागिति ॥१२॥

---

इस प्रसिद्ध प्राण ने प्रधान वाग्देवता को मृत्यु के पार पहुंचाया । उस प्रसिद्ध प्राण ने "प्रथमाम्" अर्थात् प्रधान वाक् को, स्वरूपबोध कराया । साम-उद्गानरूप उद्गीथ कर्म में करणान्तर की अपेक्षा वाक् की अधिक प्रधानता है, क्योंकि साधकतम-रूप से प्राण उद्गाता के अत्यन्त समीप है । उस प्रधान वाक् देवता का उसने अतिवहन किया । किन्तु मृत्यु को पार करके ले जायी जाती हुई (अग्निभाव-प्राप्ता) उस वाणी का क्या स्वरूप है ?—इस पर कहते है ।—वह वाणी "यदा" अर्थात् जिस समय में, पापरूप मृत्यु को 'अत्यमुच्यत' अर्थात् लाघ कर मुक्त हुई, प्राण द्वारा पापाभाव वाली कर दी गई; उस समय वह-अग्निभाव को प्राप्त हुई । पूर्व मे अग्निस्वरूप होती हुई वाणी मृत्यु के विरह मे भी अग्निस्वरूप हो गयी । "मृत्यु के वियोग होने पर" इतनी ही यहा अधिकता है । वह यह (पाप का) निष्क्रमण करने वाला अग्नि "परेण मृत्युम्" अर्थात् मृत्यु से परे दीप्तिमान् होता है । मृत्यु के मुख से छूटने से पूर्व अध्यात्म-वाक् इन्द्रिय से तादात्म्य-मृत्यु से प्रतिबद्ध होने के कारण, वह इस समय के समान देदीप्यमान नही था । अब मृत्यु से वियुक्त होने से वह मृत्यु का अतिक्रमण करके प्रकाशित होता है ॥१२॥

---

१. पूर्ववाक्यात् स वै, इत्यनुवर्तनीयमिह । २ सामोद्गानरूपकर्मणीत्यर्थ । ३. साधकेति--औद्गात्रकर्मणि साधकतमत्वेन प्राणस्योद्गातुरत्यन्तसन्निहितत्वात् करणान्तरेभ्यो वाच प्राधान्यमित्यर्थः । ४. अग्निभाव प्राप्ताया इत्यर्थ । ५. मोचितेति--प्राणेन पापाभाववती कृतेत्यर्थ । ६. पापान्निष्क्रान्तः । ७ प्रागित्यादि--मृत्युमुखान्मोक्षणात्प्रागित्यर्थ । ८ वागत्रेन्द्रियम् । ९ तत्तादात्म्येनेत्यर्थः । १०. तदग्नित्वमिति तस्या वाचोऽग्नित्व तदऽग्नित्वमिति विग्राह्यम् ।

अथ चक्षुरत्यवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्त-स्तपति ॥१४॥

अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत दिशोऽभ-वꣳस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥१५॥

अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्ये-वꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं [१]वेद ॥१६॥

फिर उस प्राण ने चक्षु को मृत्यु से पार पहुचाया, जब चक्षु मृत्यु से पार हुआ तब वह आदित्य हो गया, क्योंकि वह यह परिच्छेद से अतिक्रान्त आदित्य मृत्यु से पार होकर तपता है ॥१४॥

फिर प्राण ने श्रोत्र को मृत्यु के पार पहुचाया, जब वह मृत्यु से पार हुआ तब वह दिशा हो गया, क्योंकि वे ये अतिक्रान्त दिशाएँ परिच्छेदरूप मृत्यु से परे हैं ॥१५॥

फिर प्राण ने मन को मृत्यु के पार पहुचाया, वह मन जिस समय मृत्यु से पार हुआ उस समय वह चन्द्रमा हो गया । वह यह अतिक्रान्त चन्द्रमा परिच्छेदरूप मृत्यु से परे प्रकाशित होता है । ऐसे ही यह देवता उस उपासक को मृत्यु के पार ले जाता है, जो कोई इसे इस प्रकार जानता है ॥१६॥

---

तथा चक्षुरादित्योऽभवत्स तु तपति ॥१४॥

तथा श्रोत्रं दिशोऽभवन् । दिशः प्राच्यादिविभागेनावस्थिताः ॥१५॥

मनश्चन्द्रमा भाति । यथा पूर्वयजमानं [२]वागाद्यग्न्यादिभावेन मृत्युमत्यवहत् । एवमेनं वर्तमानयजमानमपि ह वा एषा प्राणदेवता मृत्युमतिवहति वागाद्यग्न्यादिभावे-

---

वागादीनामग्न्यादिदेवतात्वप्राप्तावुपासकस्य किमायात न हि तदेव तस्य फलमित्याशङ्क्याऽऽह—यथेति । देवतात्वप्रतिबन्धकान्पाप्मन सर्वा[३]नपोह्योक्त[४]यरमंना वागादीनामुपासकोपाधिभूताना-मग्न्यादिदेवताप्त्येव [५]सोऽपि सदा प्राणमात्मत्वेन ध्यायन्भावनाबलाद्वैराज पदं पूर्वयजमानवदाप्नोतीति भाव. । कस्येद फलमित्याकाङ्क्षायामुपासक विशिनष्टि—यो वागादीति । उक्तोपासनस्य प्रागुक्त

---

उसी प्रकार 'प्राण' याना घ्राण वायु हो गया । वह मृत्यु का अतिक्रमण करके वहता है । अन्य सभी पदों का अर्थ कहा जा चुका है ॥१३॥

उसी प्रकार चक्षु इन्द्रिय आदित्य हो गया, क्योंकि वह तपना है ॥१४॥

---

१ अग्न्याद्यात्मकवागादिविशिष्ट प्राणमात्मत्वेन वद प्राणोऽहमस्मीत्युपासत इत्यर्थ । २ वागादीत्यादि—वागा-न्द्रूपयजमानोपाधीना देवभावप्रापणद्वारा मृत्युमतिक्रमय्य यजमान वैराज पद प्राणाम्य प्रापितवती प्राणदेवतेत्यर्थ । ३ निरस्य । ४ रीत्या । ५ वर्तमानयजमानो पि ।

**अथाऽऽत्मनेऽन्नाद्यमागायद्यद्धि किंचान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥१७॥**

फिर उस प्राण ने अपने लिये खाने योग्य भक्ष्य का आगान किया, क्योंकि जो भी कुछ अन्न खाया जाता है, वह प्राण के द्वारा ही खाया जाता है। इसीलिये उस अन्न में प्राण प्रतिष्ठित होता है ॥१७॥

---

नैवं यो वागादिपञ्चकविशिष्टं प्राणं वेद। "तं यथा यथोपासते तदेव भवति" इति श्रुतेः ॥१६॥

अथाऽऽत्मने। यथा वागादिभिरात्मार्थमागानं कृतं तथा मुख्योऽपि प्राणः सर्वप्राणसाधारणं प्राजापत्यफलमागानं कृत्वा त्रिषु पवमानेष्वथानन्तरं शिष्टेषु नवसु स्तोत्रेष्वात्मन आत्मार्थमन्नाद्यमन्नं च तदाद्यं चान्नाद्यमागायत्। कर्तुः कामसंयोगो

---

फल"मनुगुणमित्यत्र मानमाह—त यथेति ॥१६॥

उपास्यस्य प्राणस्य कार्यकरणसंघातस्य विधारकत्वं नाम गुणान्तरं वक्तुमुत्तरं वाक्यं तदादाय व्याकरोति—अथेत्यादिना। कथमुद्गातुर्विक्रीतस्य फलसंबन्धस्तत्राऽऽह—कर्तुरिति। "अन्नागानमात्वि-

---

इसी प्रकार श्रोत्र, दिशा हो गया। दिशाएं पूर्वादि विभाग से अवस्थित हैं ॥१५॥

मन चन्द्रमा होकर भासित होता है। जिस प्रकार प्राणदेवता ने वागादिरूप यजमान की उपाधियों को देवभावप्राप्ति द्वारा, अग्न्यादिभाव से मृत्यु का अतिक्रमण किया था, उसी प्रकार यह प्राणदेवता इस वर्तमान यजमान को भी, वागाद्यग्न्यादिभाव द्वारा मृत्यु से पार करा देता है। (वागादिकों का, प्रधानरूप से अनुपास्य होने पर भी प्राणशेषरूप से उपास्यत्व होना कहा है, उनका सर्वथा अनुपास्यत्वरूप सिद्ध नहीं है) जो प्राण को इस प्रकार वागादि-पञ्चदेव विशिष्ट जानता है। उसके लिए श्रुति कहती है—"उसकी जो जिस रूप से उपासना करता है, तद्रूप हो जाता है" ॥१६॥

फिर उसने अपने लिए (अन्नाद्य का आगान) किया। जैसे वागादिकों द्वारा अपने लिए गान किया गया, उसी प्रकार मुख्य प्राण ने भी तीन पवमानों में अविशेष, सर्व प्राणों के उपकारक वागादि-

---

१. प्राणेनैवाद्यते सर्वमन्नमित्यवधारणमयुक्तं वागादीनामप्यन्ननिमित्तोपकारदर्शनादिति चोद्यं दूषयति—इह प्रतितिष्ठतीति। इह—प्राणे अन्नं प्रतितिष्ठतीत्यर्थः। तदुक्तम् वार्तिके—"असावन्नं स्थितं यस्मादिह प्राणानवत्यतः। तस्माच्छ्रुतिरतो वक्ति त्विहान्नं प्रतितिष्ठतीति।" असौ महाभक्ष्यार्थे प्राणे स्थितं सत् यस्माद् देहम्—स्थूलमन्नमयम् इतरांश्च प्राणानवति पालयति अन्नम्। तस्मादिहेत्याद्या श्रुति अन्नप्राणे प्रतिष्ठितमिति तात्पर्येण वक्ति। अतः वागादीनां प्राणसम्बन्ध्यन्नाधीनस्थितिकत्वादवधारणमित्यर्थो वार्तिकानुसारी ॥ २ अनेन वागादीनां प्राधान्येनानुपास्यत्वेऽपि प्राणशेषतयोपास्यत्वमुक्तम् न सर्वथानुपास्यत्वं तेषाम्। ३. तस्येदं फलं भवतीति शेषः। ४ तम्—आत्मानम्। ५. अविशेषेण सर्वप्राणोपकारकम्। ६ प्राजापत्येत्यादि—वागाद्युपहितस्य यजमानस्याभ्युदयार्थमित्यर्थः। ७. अन्नं हि सिद्धासिद्धसाधारणम्। आद्यं तु अत्तुमर्हं सिद्धमेवौदनादीति न पौनरुक्त्यमित्यभिप्रेत्य विगृह्यते। ८ आगानेन समपादयदित्यर्थः। ९. कामः फलम् तेन सम्बन्धः। १० अनुरूपम्। ११ न केवलं प्रजापतिशरीरे प्राणस्यान्नस्वीकारे श्रुतिरेव मानम् किन्तु तत्कार्यभूतप्राणिष्वन्नस्वीकारदर्शनात् कारणेऽपि तदनुमेयम् कारणानुसारित्वात्कार्यस्येत्यभिप्रायेण भाष्यमवतारयति—अन्नागानमिति।

'वाचनिक इत्युक्तम् । कथं पुनस्तदन्नाद्यं प्राणेनाऽऽत्मार्थमागीतमिति गम्यत इत्यत्र हेतुमाह । यत्किचेति 'सामान्यान्नमात्रपरामर्शार्थः । हीति हेतौ । यस्माल्लोके प्राणिभिर्यत्किंचिदन्नमद्यते भक्ष्यते तदनेनैव प्राणेनैव । अन इति प्राणस्याऽऽख्या प्रसिद्धा । अनःशब्दः सान्तः शकटवाची, यस्त्वन्यः स्वरान्तः स प्राणपर्यायः । प्राणेनैव तदद्यत इत्यर्थः । किंच न केवलं प्राणेनाद्यत एवान्नाद्यं 'तस्मिञ्छरीराकारपरिणतेऽन्नाद्य इह प्रतितिष्ठति प्राणस्तस्मात्प्राणेनाऽऽत्मनः प्रतिष्ठार्थमागीतमन्नाद्यम् । यदपि 'प्राणेनान्नादनं तदपि 'प्राणस्य प्रतिष्ठार्थमेवेति न वागादिष्विव कल्याणासङ्गजपाप्मसंभवः प्राणेऽस्ति ॥१७॥

---

कथमित्यत्र प्रश्नपूर्वकं वाक्यशेषमनुकूलयति—कथमित्यादिना । तत्रैव हेतुमाह—यस्मादिति । प्राणेनैव तदद्यत इति संबन्धः । यस्मादित्यस्य तस्मादित्यादिभाष्येणान्वयः । अनितेर्धातोरनशब्दश्चेत्प्राणपर्यायस्तर्हि कथं शकटे तच्छब्दप्रयोगस्तत्राऽऽह—अन.शब्द इति । इतश्च प्राणस्य स्वार्थमन्नागानं युक्तमित्याह—किंचेति । प्राणेन वागादिवदात्मार्थमन्नमागीतं चेत्तर्हि तस्यापि पाप्मवेधः स्यादित्याशङ्क्याऽऽह—यदपीति । इहान्ने देहाकारपरिणते प्राणस्तिष्ठति तदनुसारिणश्च वागादयः स्थितिभाजोऽतः "स्थित्यर्थं प्राणस्यान्नमिति न पाप्मवेधस्तस्मिन्नस्तीत्यर्थः ॥१७॥

---

उपहित यजमान के अभ्युदय के लिए गान कर, इसके बाद अवशिष्ट नौ स्तोत्रों मे अपनी आत्मा के लिए अन्नाद्य का गान किया । अन्नाद्य उसे कहते हैं, जो अन्न हो और आद्य यानी भक्षण करने योग्य हो (इससे पुनरुक्ति दोष नही है) । उद्गानकर्ता को जो फल से सम्बन्ध है; वह ("आत्मनेऽन्नाद्यमागायेदिति" बृ उ १ ३ २८) यह वक्ष्यमाणवचन कहा । किन्तु यह कैसे समझें, कि प्राण ने इस अन्नाद्य को अपने लिये आगान द्वारा सम्पादित किया । इसमे हेतु कथन के लिए श्रुति को प्रस्तुत करते हैं—"यत् किंच" यह शब्दसमुदाय अद्यमान-वस्तुसामान्य के परामर्श के लिये है । "हि" यह हेतु-अर्थ मे निपात है । क्योकि ससार मे प्राणियो द्वारा सामान्यरूप से जो अन्न सेवन किया जाता है; वह 'अनेनैव' अर्थात् प्राण के द्वारा ही खाया जाता है । "अन" यह प्राण का नाम प्रसिद्ध है । एक दूसरा शब्द 'अनस्' सकारान्त भी है, जो शकटवाची है, और यह जो दूसरा अकारान्त है, वह "अन" शब्द प्राण का पर्यायवाचक है । अर्थात् प्राण से ही खाया जाता है । एक बात और भी है— भोज्य अन्न प्राण से केवल खाया ही नही जाता, अपितु उस अन्नाद्य के शरीराकार परिणत होने पर उसमे ही प्राण विराजित होता है । इसलिए अपने विराजने के लिये प्राण ने अन्नाद्य का गान किया । मुख्य प्राण के द्वारा जिस किसी अन्न का भक्षण होता है, वह गौणमुख्यसाधारण प्राणप्रतिष्ठा के लिए होता है । अत. वागादिको के समान प्राण मे कल्याण आसङ्गजनित पाप होना सम्भव नही है ॥१७॥

'वे देवगण' (बोले) । शका होती है कि यह जो निश्चय किया है कि अन्न प्राण के द्वारा खाया जाता है—यह कहना ठीक नही है । क्योकि वागादिको मे अन्न से होने वाला उपकार देखा जाता है । शका का समाधान करते हैं— इसमे कोई दोष नही है । क्योकि उस उपकार का श्रीगणेश तो प्राण के

---

१ बृ०उ० १ ३ २८ । "आत्मनेऽन्नाद्यमागायदिति" वक्ष्यमाणवचनप्रमाणनम् । २ आगानेन सम्पादितम् । ३ शब्दसमुदाय । ४. अद्यमानवस्तुसामान्येत्यर्थं । ५. सामान्यतोऽन्नमात्रम् । ६ हहेत्यस्य व्याख्यानमेतत् । ७ मुख्येन । ८. गौणमुख्यसाधारणस्य । ९. सवादयति । १० अत इति अन्नमये देहे वागादिस्थित. प्राणस्थित्यधीनत्वादित्यर्थ । ११. स्थित्यर्थम्—स्वपरस्थित्यर्थम् ।

**ते देवा अब्रुवन्नेतावद्वा इदꣳ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माऽभिसंविशतेति तथेति तꣳ समन्तं परिण्यविशन्त। तस्मा-**

वे वागादि देवगण बोले—यह जो अन्न है, वह सब तो इतना ही है, उसे तूने अपने लिये आगान कर लिया है। इसलिए अब हमे भी इस अन्न मे साझीदार बनाओ। प्राण ने कहा, वे तुम लोग सभी ओर से मुझमे प्रवेश कर जाओ, तब "तथास्तु" कह कर वे वागादि सभी ओर से उस प्राण

---

ते देवाः। नन्ववधारणमयुक्तं प्राणेनैव तदद्यत इति। वागादीनामप्यन्ननिमित्तोपकारदर्शनात्। नैष दोषः। प्राणद्वारत्वात्तदुपकारस्य। कथं प्राणद्वारकोऽन्नकृतो वागादीनामुपकार इत्येतमर्थं[1] प्रदर्शयन्नाह—ते वागादयो देवाः स्वविषयद्योतनाद्वा अब्रुवन्नुक्तवन्तो मुख्य प्राणमिदमेतावन्नातोऽधिकमस्ति। वा इति स्मरणार्थः। इदं तत्सर्वमेतावदेव[2], किं, यदन्न[3] प्राणस्थितिकरमद्यते लोके तत्सर्वमात्मन आत्मार्थमागासीरा-

---

[4]भर्ता श्रेष्ठः पुरो गन्तेत्यादिगुणविधानार्थं वाक्यान्तरमादत्ते—ते देवा इति। तस्य विवक्षितमर्थं वक्तुमादावाक्षिपति—नन्विति। अयुक्तत्वे हेतुमाह—वागादीनामिति। अवधारणानुपपत्तिं दूषयति—नैष दोष इति। यथा प्राणस्योपकारोऽन्नकृतो न वागादिद्वारकस्तथा तेषामपि नासौ प्राणद्वारको [5]विशेषाभावादिति शङ्कते—कथमिति। वाक्येन परिहरति—एतमर्थमिति। आह [6]विशेषमिति शेषः। तेषां देवत्वं साधयति—स्वविषयेति। [7]तत्र प्रसिद्धि प्रमाणयितुं वैशब्द इत्याह—वा इति स्मरणार्थं इति। [8]तत्प्रसिद्धस्यार्थस्येति शेषः। वाक्यार्थमाह—इदं तदिति। एतावत्त्वमेव व्याचष्टे—तत्सर्वमिति।

---

द्वारा होता है। अन्न के कारण किया गया वागादिको का उपकार प्राणद्वारक कैसे है? इसी अर्थ को बतलाने के लिए श्रुति कहती है—वे वागादि देवता मुख्यप्राण से बोले, 'यह तो इतना ही अन्न है, इससे अधिक नही है।' देव नाम क्यो पड़ा? क्योकि वे अपने विषय का द्योतन यानी प्रकाशन करते है इसलिए देवता है। यहा 'वा' यह निपात स्मरणार्थक है। यह जो सब कुछ है, वह इतना ही है। वह क्या? लोक मे देह की स्थिति का द्वार, जो भी अन्न भक्षण किया जाता है उस सबका तुमने 'आत्मन' अर्थात् आत्मा के लिये "आगासी" अर्थात् आगान कर लिया। आगान के द्वारा आत्मसात् कर लिया, यह भाव है। लौकिक न्याय के अनुसार हम अन्न के बिना जी नही सकते। इस कारण 'अनु' अर्थात् बाद मे

---

१ एतमर्थमिति—वागादीनामन्ननिमित्तोपकारस्य प्राणद्वारकत्वरूपमर्थमित्यर्थः। २ एतावदेवेति वार्तिकं—"अद्यमन्नं यतो देहलिङ्गभावेन याति न। परिणामं व्रजत्तस्मादेतावदिति भण्यते॥" भुक्तमन्नं कालादिना परिपाकं गच्छद्देहद्वयस्य स्थापकत्वेन तिष्ठति ततो देहद्वयस्थितिकरमेवान्नं नान्यदस्तीत्यर्थः। ३ देहस्थितिद्वारेति शेषः। ४ ननु विधिप्रभेदस्य प्रागेवोक्तत्वात् किमुत्तरग्रन्थेनेत्याशङ्क्याह—भर्तेति। तथा च वार्तिकम्—'भर्ता श्रेष्ठः पुरोगन्ता ह्यन्नादोऽधिपतिस्तथा। इत्यादिगुणविध्यर्थं परो ग्रन्थोऽवतार्यते" इति॥ अत्र विधिप्रभेदेति—गुणप्रधानविधीत्यर्थः। अथ गुणविधिर्ज्ञेयः प्रत्येकं तत्फलश्रुतेः। एकैकस्मिन् गुणे विध्यनुकूलस्य प्रधानफलातिरिक्तस्य फलस्य दध्यादाविव श्रवणादिति हेत्वर्थः। दध्यादाविति। दध्नेन्द्रियकामस्य जुहुयादित्यादाविवेत्यर्थः। ५ नियामकाभावात्। ६ नियामकम्। ७ अन्नाधिक्याभावे। ८ लोकप्रसिद्धस्यार्थस्य स्मरणार्थं।

द्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्ता स्वानाꣳ श्रेष्ठः पुर एता भवत्य-न्नादोऽधिपतिर्य एवं वेद य उ हैवंविदꣳ स्वेषु प्रति

मे प्रवेश कर गये। अतः प्राण के द्वारा यह जीव जो भी अन्न खाता है, उससे ये वागादि प्राण भी तृप्त हो जाते हैं। जो इस प्रकार जानता है, उसका आश्रय सम्बन्धी-जन सभी ओर से ग्रहण करते हैं, वह स्वजनो का भर्ता, उनमे श्रेष्ठ और उनके आगे चलने वाला हो जाता है। तथा अन्न

गीतवानस्यागानेनाऽऽत्मसात्कृतमित्यर्थः। 'वयं चान्नमन्तरेण स्थातुं नोत्सहामहे। 'अतोऽनु पश्चान्नोऽस्मानस्मिन्नन्न आत्मार्थे तवान्न आभजस्वाऽऽभाजयस्व। णिचोऽश्रवणं छान्दसम्। अस्मांश्चान्नभागिनः कुरु। 'इतर आह—ते यूयं यद्यन्नार्थिनो वै मा मामभि-संविशत "समन्ततो"मामाभिमुख्येन "निविशतेत्येवमुक्तवति प्राणे तथेत्येवमिति तं प्राणं परिसमन्तं परिसमन्तान्न्यविशन्त निश्चयेनाविशन्त तं प्राणं परिवेष्ट्य निविष्टवन्त

"किमिदं प्राणार्थमन्नागानं नाम तदाह—आगानेनेति। का पुनरे"तावता भवता क्षतिस्तत्राऽऽह—वय चेति। अन्नमन्तरेण ममापि स्थातुमशक्तेर्मदर्थं तदागीतमिति चेत्तत्राऽऽह—अत इति। आभजस्वेति श्रूयमाणे कथमन्यथा व्याख्यायते तत्राऽऽह—णिच इति। "तवयान्नस्वामित्वमस्माकमपि तत्र प्रवेशमात्रं स्थित्यर्थमपेक्षितमिति वाक्यार्थमाह—अस्मांश्चेति। वैशब्दो यद्यर्थे प्रयुक्त। प्राणं परिवेष्ट्य तदनुज्ञया

"नो" अर्थात हम भूखो को "अस्मिन्नन्न" यानी अपने इस अन्न मे से 'आभजस्व' अर्थात् हमे भी हिस्सेदार बनाओ। 'आभजस्व' (इसका अर्थ णिचपरक है) छान्दस प्रयोग होने के कारण इसमे णिच् का श्रवण नही होता। अत हमे भी अन्न म भागीदार करो। उनके द्वारा इस प्रकार कहे जाने पर मुख्यप्राण ने कहा—"ते" अर्थात् आप जो अन्नाभिलाषी हो, "वै" अर्थात् तो 'मा' अर्थात् मुझमे 'अभिसंविशत' सब ओर से तादात्म्य भाव से मेरी आज्ञा द्वारा मुझसे एकता प्राप्त करो। इस प्रकार प्राण के कहे जाने पर "तथेति" अर्थात् ऐसा ही हो, "तम्" अर्थात् प्राण मे 'परिसमन्तम्' अर्थात् चारो ओर से घेर कर प्रविष्ट हो गये। प्राण मे आश्रयभाव मे अवस्थित प्राण की आज्ञा से उन सबके प्राण द्वारा जो कुछ खाया जाता है, वह अन्न प्राण की स्थिति करने के साथ तृप्तिकारक भी है। वागादि का (प्राण की सहायता के बिना) स्वतन्त्ररूप से अन्न के साथ सम्बन्ध नही होता। स्वतन्त्ररूप से अन्न मे

१ लोके। २ आत्मसात्कृतमिति। अतस्त्वय्यव तदखिल स्थितिकरम् स्यादस्माक तु स्थितिप्रयोजकान्नाभिद्धि-रिति भाव। ३ वय चेति। स्वामिनि भृत्येन स्वीयापन्निवद्येति लौकिकन्याय सूचयितु चकार। ४ न शक्नुम। ५ अत इति—अन्नमन्तरेणावस्थानुमशक्यत्वादित्यथ। ६ क्षुधितान्। ७ भागिन कुरु। ८. तैरेवमुक्त प्राण। ९ तर्हीति शेष। १० तादात्म्यन। ११ मदाज्ञया। १२ मय्यकतामापद्यध्वमि-त्यर्थ। १३ कि स्वरूपमित्यर्थ। १४ एतावतेति -आगानेनाग्निनान्नस्य स्वाधीनीकरणमात्रेणेत्यर्थ। एतत्प-ङ्क्तिस्थले पाठान्तरमपि तद्यथा—माभूद भवतामन्नमथ च आत्मवत स्थितिरित्याशङ्क्याह- वय चेतीति। आत्म-वदित्यस्य मद्वदित्यर्थ। प्राणवदिति यावत्। १५ स्वयमेव भवन्तोऽन्नस्य भाग भजन्त्वामित्याशङ्क्य स्वामित-न्त्रत्वादस्माक नैव कर्तुमुचितमित्यभिप्रेत्य वाक्यार्थपर भाष्यमवतारयति—तथेति।

प्रतिबुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैत-
मनुभवति यो वैतमनु भार्यान्बुभूर्षति स हैवालं
भार्येभ्यो भवति ॥१८॥

भक्षण करने वाला सबका अधिपति हो जाता है। सम्बन्धियो मे से जो भी ऐसे उपासक के प्रति विरुद्ध होना चाहता है, वह अपने आश्रितो का पोषण करने मे समर्थ नही होता और जो कोई भी इनके अनुकूल रहकर अपने शरणागतो का भरण करना चाहता है, वह निश्चय ही अपने शरणागतो के भरण पोषण मे सक्षम हो जाता है ॥१८॥

---

इत्यर्थः। [1]तथा निविष्टाना प्राणानुज्ञया तेषा प्राणेनैवाद्यमान प्राणस्थितिकर सदन्न तृप्तिकर भवति न स्वातन्त्र्येणान्नसबन्धो वागादीनाम्। [2]तस्माद्युक्तमेवावधारणमनेन तदद्यत इति।

तदेवाऽऽह—तस्माद्यस्मात्प्राणाश्रयतयैव प्राणानुज्ञया[3]ऽस्मिंसंनिविष्टा वागादिदेवतास्तस्माद्यदन्नमनेन प्राणेनात्ति [4]लोकस्तेनान्नेनैता वागाद्यास्तृप्यन्ति वागाद्याश्रयं प्राण यो वेद वागादयश्च पञ्च प्राणाश्रया इति [5]तमप्येनमेव ह वै स्वा ज्ञातय अभिसविशन्ति वागादय इव प्राणम्। ज्ञातीनामाश्रयणीयो भवतीत्यभिप्रायः। [6]अभिसनिविष्टाना च स्वाना प्राणवदेव वागादीना स्वान्नेन [7]भर्ता भवति। [8]तथा [9]श्रेष्ठः [10]पुरोऽग्रत [11]एता गन्ता

---

वागादीनामस्वार्थिनामवस्थान चेत्तेषामपि प्राणवदन्नसबन्ध स्यादित्याशङ्क्याऽऽह—तथेति। त्यक्तप्राणस्यान्नबलाद्वागादिस्थित्यनुपलब्धेरित्यर्थ। वागादीनामन्नजन्योपकारस्य प्राणद्वारत्वे सिद्धे फलितमाह—तस्मादिति।

[12]तेषामन्नकृतोपकारस्य प्राणद्वारकत्वे वाक्यशेष सवादयति—तदेवेति। विद्याफल वक्ष्यन्[13]गुणजातमुपदिशति—वागादीति। वेदनमेव व्याचष्टे—वागादयश्चेति। स ह प्राणोऽहमस्मीति वेदेति

---

वागादिपोषकता का अभाव होने से यही निश्चय करना उचित है, 'वह अन्न प्राण के द्वारा ही खाया जाता है'।

उसे ही श्रुति भी कहती है। अत जिससे प्राण के आश्रित रह कर ही प्राण की आज्ञा से वागादिदेवता सर्वात्मभाव से प्राण मे निवास किए हुए है, इसीलिए अनेन अर्थात् प्राण के द्वारा जो अन्न मनुष्य खाते हैं, उसी अन्न से ये वागादि तृप्त होते हैं। वागादि के आश्रयस्वरूप प्राण को जो 'वागादि पाँचो ही प्राण के आश्रित है इस प्रकार जानता है, उस उपासक को भी इसी प्रकार

---

१ तथा निविष्टानामिति—प्राणमाश्रित्यावस्थितानामित्यर्थ। २ तस्मादिति-स्वात यथा नस्य वागादिपोषकत्वाभावादित्यर्थ। ३ अभिसनिविष्टा—सर्वात्मना प्राणेऽवस्थान कृतवन्त इत्यर्थ। ४ तेनेति—प्राणस्वामिकेनेत्यर्थं। ५ उक्तोपासकमपि। ६ ज्ञातयो यद्यपि प्राणविदमाश्रयिष्यन्ति तथापि नासौ तान् पालयितुमलमुपायाभावादित्याशङ्क्याह—अभिसनिविष्टानामिति। ७ पोष्टा। ८ भर्तृत्वश्रेष्ठत्वयोरैक्यमाशङ्क्याह—तथेति। श्रेष्ठ पूज्य गुणत इति शेष। क्षत्रिये श्रोत्रिये च तथा (भर्तृत्वश्रेष्ठत्वयो) भेददृष्टिरितिस्पष्टत्यर्थ। ९ पूज्य। १० सति भर्तृत्वादौ पुरोगन्तृत्वमकिञ्चित्करमिति पुर एता भवतीत्यनर्थकमित्याशङ्क्याह—इति। ११ अग्रगण्य इति यावत्। १२ वागादीनाम्। १३ भर्तृत्वश्रेष्ठत्वादिरूपम्।

भवति वागादीनामिव प्राणः । तथाऽन्नादोऽनामयावीत्यर्थः । अधिपतिरधिष्ठाय च पालयिता स्वतन्त्रः पतिः प्राणवदेव वागादीनां य एवं प्राणं वेद तस्यैतद्यथोक्तं फलं भवति । किंच य उ हैवंविदं प्राणविदं प्रति स्वेषु ज्ञातीनां मध्ये प्रतिः प्रतिकूलो बुभूषति प्रतिस्पर्धी भवितुमिच्छति सोऽसुरा इव प्राणप्रतिस्पर्धिनो न हैवालं न पर्याप्तो भार्येभ्यो भरणीयेभ्यो भवति भर्तुमित्यर्थः । अथ पुनर्य एव ज्ञातीनां मध्य एतमेवंविदं वागादय इव प्राणमन्वनुगतो भवति यो वैतमेवंविदमन्वेवानुवर्तयन्नेवाऽऽत्मीयान्भार्यान्बुभूर्षति भर्तुमिच्छति यथैव वागादयः प्राणानुवृत्त्याऽऽत्मबुभूर्षव आसन् । स हैवालं पर्याप्तो भार्येभ्यो भरणीयेभ्यो भवति भर्तुं नेतरः स्वतन्त्रः । सर्वमेतत्प्राणगुणविज्ञानफलमुक्तम् ॥१८॥

चकारार्थः । अनामयावी व्याधिरहितो दीप्ताग्निरिति यावत् । संप्रति प्राणविद्यां स्तोतुं तद्विद्यावद्विद्वेषिणो दोषमाह—किंचेति । इदानीं प्राणविदं प्रत्यनुरागे लाभं दर्शयति—अथेत्यादिना । 'ते देवा अब्रुवन्नित्यादौ गुणविधिविवक्षितो न विशिष्टविधिर्गुणफलस्यैवात्र श्रवणादित्याह—सर्वमेतदिति ॥१८॥

ज्ञातिजन अपने आश्रित कर लेते है, जैसे वागादि को प्राण । वह ज्ञातिजनो का आश्रयणीय होता है, यह अभिप्राय है । वागादिको के स्वामी प्राण की तरह वह भी आश्रितजनों का अपने अन्न से पोषण करने वाला होता है तथा वह पूज्य 'पुर' अर्थात् आगे 'एता' जाने वाला होता है अर्थात् अग्रगण्य होता है, जैसे प्राण वागादिको को आगे ले जाते है । तथा वह 'अन्नाद' अर्थात् दीप्ताग्नि वाला होने के कारण निरामय है, "अधिपति" अर्थात् वागादि के अधिपति प्राण के समान ही आश्रितजनो का अधिष्ठाता होकर पालक अर्थात् स्वतन्त्र रक्षक होता है । "जो प्राण को इस प्रकार जानता है, उसे उपर्युक्त फल मिलता है ।" इसके सिवा 'स्वेषु' अर्थात् बन्धुजनो के मध्य जो भी इस प्रकार जानने वाले प्राणवेत्ता से 'प्रति' अर्थात् प्रतिकूल "बुभूषति" अर्थात् प्रतिस्पर्द्धा करने की इच्छा करता है, वह प्राण के प्रतिपक्षी असुरो के समान अपने "भार्येभ्यो" अर्थात् आश्रितो का भरण करने मे "हैवालम्" अर्थात समर्थ नही होता । इस प्रकार ज्ञातिजनो मे से जो भी 'प्राण के अनुयायी वागादि के समान'— इस प्रकार इसे जानने वाले प्राणवेत्ता के 'अनु' अर्थात अनुगत होता है । "यो वैतम्" अर्थात् जो भी इस प्राणवेत्ता का 'अनु' अर्थात् अनुवर्तन करते हुए भी अपने आश्रितो का 'बुभूषति' अर्थात् भरण करने की वैसे ही इच्छा करता है, जिस प्रकार कि वागादि प्राण का अनुवर्तन करते हुए आत्मीयजनो का भरण करने के इच्छुक थे । 'स' वह 'भार्येभ्यो' यानी अपने आश्रितो के प्रति भरण करने मे 'अलम्' अर्थात् समर्थ होता है । दूसरा जो स्वतन्त्र है, वह ऐसा करने मे समर्थ नही होता । यह सब प्राण की गुण-उपासना का फल कहा गया है ॥१८॥

१ अनामयावीति—दीप्ताग्नित्वाभावे सदपि भर्तृत्वादि व्यर्थम् । नहि व्याधितो मन्दाग्निरुत्तगुणोऽपि निर्वृणोतीति भाव । २ नहि पुरोगन्तृत्वेनाधिपत्यस्य गतार्थत्व पुरोहितस्य पुरोगन्तृत्वेऽपि राजन्येवाधिपत्याधिगमादित्याह—अधिष्ठायेति । अधिष्ठाय पालयितृत्वाभावे दीप्ताग्नित्वादेर्वैयर्थ्यं प्रसिद्धमिति च शब्दार्थः । ३. प्रतिपक्षी । ४ आत्मीयान् भर्तुमिच्छव । ५ उपासनफलम् । ६ ते देवा इत्यादे सोऽयास्य इत्यत प्राक्तनस्य तात्पर्यमाह—ते देवा इति । ७ गुणफलस्येति—एकैकस्मिन् गुणे विध्यनुकूलस्य प्रधानफलातिरिक्तस्य फलस्यैव अत्र दध्यादाविव श्रवणात् इन्द्रियकामस्य दध्ना जुहुयादित्यादौ इन्द्रियसौष्ठव फलम् ।

**सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः प्राणो वा अङ्गानाꣳ रसः प्राणो हि वा अङ्गानाꣳ रसस्तस्माद्य-स्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाꣳ रसः ॥१९॥**

वह प्राण "अयास्य" आङ्गिरस है, क्योंकि वह अङ्गों का सार है, अङ्गों का रस प्राण ही है, निःसन्देह अङ्गों का रस प्राण ही है, क्योंकि जिस किसी अङ्ग से जब प्राण निकल जाता है, तब वह अङ्ग सूख जाता है। अतः प्राण ही सब अङ्गों का रस है ॥१९॥

---

कार्यकरणानामात्मत्वप्रतिपादनाय प्राणस्याऽऽङ्गिरसत्वमुपन्यस्तं सोऽयास्य [1]आङ्गिरस इति। अस्माद्धेतोरयमाङ्गिरस इत्याङ्गिरसत्वे हेतुर्नोक्तस्तद्धेतुसिद्ध्यर्थमिद-मारभ्यते। तद्धेतुसिद्ध्यायत्तं हि कार्यकरणात्मत्वं प्राणस्य। अनन्तरं च वागादीनां प्राणा-धीनतोक्ता। सा च कथमुपपादनीयेत्याह[2]—

सोऽयास्य आङ्गिरस इत्यादि [3]यथोपन्यस्तमेवो[4]पादीयत उत्तरार्थम्। प्राणो वा अङ्गानां रस [5]इत्येवमन्तं [6]वाक्यं यथाव्याख्यातार्थमेव [7]पुनः [8]स्मारयति। [9]कथं, प्राणो

---

[1]उत्तरग्रन्थस्य [2]व्यवहितेन संबन्धं वक्तुं [3]व्यवहितमनुवदति—कार्यकरणानामिति। अनन्तर-ग्रन्थमवतारयति—अस्मादिति। किमित्याङ्गिरसत्वसाधको हेतुः साधनीयस्तत्राऽऽह—तद्धेत्विति। [4]संप्रत्यव्यवहितसंबन्धं दर्शयति—अनन्तरं चेति। [5]प्रकारान्तरं बुभुत्स्यमानमिति सूचयितुं चशब्दः। तर्हि यदुपपादनीयं तदुच्यतां किमित्युक्तस्य पुनरुक्तिरित्याशङ्क्याऽऽह—उत्तरार्थमिति। प्रतिज्ञानुवादो [6]वक्ष्यमाणहेतोरुपयोगीत्यर्थः। यथोपन्यस्तमेवेत्यादि [7]प्रपञ्चयति—प्राणो वा इति। [8]उक्तार्थनिर्णयहेतुं

---

कार्य और करण का आत्मत्व-प्रतिपादन करने के लिए "सोऽयास्य आङ्गिरस" इस अष्टम मन्त्र मे प्राण का आङ्गिरसत्व उपपादन किया, किन्तु किस कारण से यह आङ्गिरस है? यह नहीं बताया गया। उस हेतु की सिद्धि के लिए अब (आगे का ग्रन्थ) आरम्भ किया जाता है। क्योंकि प्राण की कार्यकरणस्वरूपता उसके हेतु की सिद्धि के आधीन है, उसके बाद वागादि की प्राणाधीनता कही गयी है। उसका विवेचन किस प्रकार किया जाय? ऐसी जिज्ञासा होने पर कहते है—

"सोऽयास्य आङ्गिरस" इत्यादि मन्त्र से अष्टम कण्डिका मे कहे हुए का ही पुनः प्रतिपादन, उत्तर के लिए है। "प्राणो वा अङ्गानां रसः" यहां तक का कर्तृवाक्य पूर्वोक्त व्याख्या के अनुसार ही है, पुन. कर्मभूत पूर्ववाक्य का स्मरण श्रुति कराती है—प्राण के आङ्गिरसत्व में क्या हेतु है? क्योंकि

---

१. अष्टमकण्डिकायाम्। २ इति जिज्ञासायामाहेत्यर्थ। ३ अष्टमकण्डिकायाम्। ४ अनूद्यत। ५ अत्रातद्गुणसंविज्ञानबहुव्रीहि। ६ कर्तृवाक्यम्। ७ पूर्ववाक्य कर्मभूतम्। ८. अनुवदति। ९. कथ-मिति—केन हेतुनेत्यर्थ.। प्राणस्याङ्गिरसत्वे को हेतुरिति यावत्। १०. एकोनविंशकण्डिकात्मकस्य। ११. अष्टम-कण्डिकात्मकग्रन्थेन। १२. अव्यवहितपूर्वकण्डिकया सह सम्बन्धाभावादिति बोध्यम्। १३. अष्टादशकण्डि-कया सह। १४. प्रकारान्तरेण वागादीनां प्राणाधीनत्वं बोधयितुमिति यावत्। एतस्य प्रकारस्य सर्वोत्तरत्वात्। १५. प्राणनिष्ठाङ्गिरसत्वसाधकहेतो। १६ सग्रहवाक्यम्। १७. प्राणनिष्ठाङ्गिरसत्वरूपोक्तार्थस्य।

वा अङ्गानां रस इति । प्राणो हि । हिशब्दः प्रसिद्धौ । अङ्गानां रसः । प्रसिद्धमेतत्प्राणस्याङ्गरसत्वं न वागादीनाम् । तस्माद्युक्तं प्राणो वा इति स्मारणम् । कथं पुनः प्रसिद्धत्वमित्यत आह । तस्माच्छब्द उपसंहारार्थं उपरित्वेन संबध्यते । यस्माद्यतोऽवयवात्कस्मादनुक्तविशेषात् । यस्मात्कस्माद्यतः कुतश्चिच्चाङ्गाच्छरीरावयवाद्विशेषितात्प्राण उत्क्रामत्यपसर्पति तदेव तत्रैव तदङ्गं शुष्यति नीरसं भवति शोषमुपैति । तस्मादेष हि वा अङ्गाना रस इत्युपसंहार । अतः कार्यकरणानामात्मा प्राण इत्येतत्सिद्धम् । आत्मापाये हि शोषो मरणं स्यात्तस्मात्तेन जीवन्ति प्राणिनः सर्वे । तस्मादपास्य वागादीन्प्राण एवोपास्य इति समुदायार्थः ॥१६॥

---

पृच्छति—कथमिति । तत्र प्रसिद्धि हेतु कुर्वन्परिहरति—प्राणो हीति । प्रसिद्धिमेव प्रकटयति—प्रसिद्धमिति । स्मारण प्रसिद्धस्याऽऽङ्गिरसत्वस्येति शेष । प्रसिद्धिरसिद्धेति शङ्कते—कथमिति । तामन्वयव्यतिरेकाभ्या साधयति—अत आहेति । पदार्थमुक्त्वा वाक्यार्थमाह—यस्मात्कस्मादिति । उक्तेन व्यतिरेकेणानुक्तमन्वयं समुच्चेतु चशब्द । तस्माच्छब्दस्योपरिभावेन सम्बन्धमुक्त स्फुटयति—तस्मादिति । अन्वयव्यतिरेकाभ्यामङ्गरसत्वे प्राणस्य सिद्धे फलितमाह—अत इति । उक्तन्यायावङ्गरसत्वे सिद्धेऽपि कथमात्मत्वं सिध्येदित्याशङ्क्याऽऽह—आत्मेति । अस्तु प्राण सघातस्याऽऽत्मा तथाऽपि किं स्यात्तदाह—तस्मादिति । भवतु प्राणाधीन सघातस्य जीवन तथाऽपि कथ तस्यैवोपास्यत्वमित्याशङ्क्याऽऽह—तस्मादपास्येति ॥१६॥

---

प्राण ही अङ्गो का रस है । "प्राणो हि" यहा 'हि' शब्द प्रसिद्धि के अर्थ मे है । "अङ्गाना रस " प्राण का हो यह अङ्गरसत्व होना प्रसिद्ध है—वागादि का नही । इसलिए प्राणो वा" इस श्रुतिवाक्य की पुन याद दिलाना उचित ही है । किन्तु उसकी प्रसिद्धि क्यो है ? इस पर कहते हैं—'तस्मात्' शब्द उपसहारार्थक है, यह उपरोक्त (अर्थात् मन्त्र मे 'शुष्यति' है उसके बाद) से सम्बन्ध रखता है । 'यस्मात्' यानी जिस अवयव 'कस्मात्' अर्थात् जिसका विशेष नही बताया गया, ऐसे किसी अवयव मे 'यस्मात कस्मात्' जिस किसी भी अनिर्धारित अङ्ग शरीर के अवयव से प्राण उत्क्रामति' अर्थात अपसर्पित हो जाता है, वह अङ्ग प्राण-उत्क्रमण अवस्था मे 'शुष्यति' अर्थात नीरस हो जाता है, यानी सूख जाता है । (प्राण के अधिष्ठाता होने पर ही हस्तादि अङ्ग रस वाले होते है, अन्यथा नीरस हो जाते है इस अन्वय व्यतिरेक से) इसलिए यही अङ्गो का रस है—इस प्रकार निष्कर्ष निकलता है । उक्त न्याय से उसके अङ्गरसत्व होने स कार्य-करण का स्वरूप प्राण है, वह सिद्ध हुआ । प्राणस्वरूप आत्मा क वियुक्त होने मे शोष अर्थात् मरण हो जाता है । इसलिए सभी प्राणी उसी सर्वजीवनत्व प्राण के होने से जीवित रहते हैं । अत वागादिको को त्याग कर प्राण ही की उपासना करनी चाहिए, यह इसका समुदाय अर्थ है ॥१६॥

---

१ प्रसिद्ध्यनुवाद । २ उपरिष्टादित्यथ । शुष्यतीत्यस्मादनन्तरमिति यावत् । ३ अनिर्धारितात् । ४ तस्या प्राणोत्क्रमणावस्थायाम् । ५ सति प्राणेऽधिष्ठातरि हस्ताद्यङ्ग रसवत् अन्यथा नीरसमित्यन्वयव्यतिरेकात् । ६ उक्त न्यायात्तस्याङ्गरसत्वात् । ७ स्वरूपम् । ८ तथा च प्राणस्य सर्वजीवनत्वमायातम् । ९ अन्वयव्यतिरेकरूपात् । १० प्राणस्य किमायातमित्यथ ।

**एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥२०॥**

यह प्राण ही बृहस्पति है। वाक् ही बृहती है, उस वाक् का यह प्राण, पति है। इसलिए यह बृहस्पति है ॥२०॥

---

एष उ। न केवलं कार्यकारणयोरेवाऽऽत्मा प्राणो रूपकर्मभूतयोः किं तर्हि ऋग्यजुःसाम्नां नामभूतानामात्मेति सर्वात्मकतया प्राणं स्तुवन्महीकरोत्युपास्यत्वाय—एष उ प्रकृत आङ्गिरसो बृहस्पतिः। कथं बृहस्पतिरिति। उच्यते—वाग्वै

---

बृहस्पत्यादिधर्मकं प्राणोपासनं वक्तुं वाक्यान्तरमवतारयति—एष इति। तस्य विधान्तरेण तात्पर्यमाह—न केवलमिति। कार्यं स्थूलशरीरं प्रत्यक्षतो दृश्यमाणं रूपात्मकं करणं च ज्ञानक्रियाशक्तिमत्कर्मभूतं तयोरात्मा प्राण इत्युक्त्वा नामराशेरपि तथेति वक्तुं कण्डिकाचतुष्टयमित्यर्थः। किमिति प्राणस्याऽऽत्मत्वेन सर्वात्मत्वोक्त्या स्तुतिरित्याशङ्क्याऽऽह—उपास्यत्वायेति। उशब्दोऽप्यर्थो बृहस्पतिशब्दादुपरि संबध्यते। 'बृहस्पतिर्देवानां पुरोहित आसीत्' इति श्रुतेर्देवपुरोहितो बृहस्पतिरुच्यते तत्कथं प्राणस्य बृहस्पतित्वमिति शङ्कते—कथमिति। देवपुरोहितं व्यावर्तयितुमुत्तरवाक्येनो(णो)

---

'एष उ' अर्थात् यह ही (बृहस्पति है)। स्थूल शरीर के रूप में प्रत्यक्ष दीखने वाले कार्यों एवं ज्ञानबलक्रियायुक्त कर्मभूत इन्द्रियों का आत्मा प्राण नहीं है। तो किसका है? नामरूप-कर्मात्मक सब जगत् का आत्मा होने से ऋग्यजुसामरूप वेदत्रयी का आत्मा है। इसलिए प्राण की स्तुति करते हुए (श्रुति) ऋगात्मत्व प्राण की तत्त्व से उपासना करने के लिए उसकी प्रशस्ति करती है। यह प्राण ही इस प्रकरण में आङ्गिरस बृहस्पति है। बृहस्पति किस प्रकार है? इस पर कहते

---

१ इतीति-नामरूपकर्मात्मकस्य सर्वस्य जगत आत्मत्वाद्धेतोरित्यर्थः। २ उपास्यत्वायेति-तत्र तावदृगात्मत्व प्राणस्य तत्त्वेनोपास्यत्वायाहेति शेषः। ३ प्राणः। ४ प्रसिद्धः। ५ वाक्यान्तरमवतारयतीति—यथा पूर्वं-मयास्यत्वादिभिर्गुणैर्विशिष्टं प्राणकर्मकमुपासनमुक्तं तथा बृहस्पत्यादिधर्मकं तद्विधानं विधातुमिच्छञ्छास्त्रं गुणविशेषमाचष्टे। ■ चैष गुणविधिः तत्फलाश्रुतेः विशिष्टविधिस्तु स्यादेव अश्नुते साम्नः सायुज्यमिति प्रधानफलोक्तेः। न च तानोपासकस्य प्रधानफलसम्बन्धः श्रुतो न बृहस्पत्याद्युपासकं प्रति किंचिदुक्तं—तत्र कथमसौ विशिष्टविधि-रिति वाच्यं मध्यमणिन्यायेन तृतीयकण्डिकास्थफलस्योभयत्र सम्बन्धादित्यभिप्रेत्य वाक्यान्तरमवतारयतीत्यर्थः। ६ इतः कण्डिकाचतुष्टयमित्यर्थः। ७ नामरूपकर्मणां स्वरूपत्वेनेत्यर्थः। ■ व्यावर्तयितुमिति—तथा च वार्तिकम्—"यजुर्ब्रह्मेति श्रवणादन्ते साम्नो ग्रहादपि। ऋग्यजुःसामनिर्देशः क्रमेणेति प्रतीयते॥" यजुरिति ब्रह्मणस्पतिरित्युत्तरवाक्ये ब्रह्मेति यजुः श्रुतं तत्र प्राणो यजुष्पतिरित्यवगमात् पूर्वत्रापि बृहस्पतिरिति स एवर्क्पतिरुक्त इत्यर्थः। उत्तरवाक्ये ब्रह्मशब्दस्य यजुर्विषयत्वं सन्दिग्धमित्याशङ्क्य सदिग्धे तु वाक्यशेषादिति न्यायनाह—अन्त इति। वाक्यशेषे प्राणस्य सामत्वोक्तेरुपक्रमेऽपि तस्य यजुरादिरूपता विवक्षिता। सामान्यवचनेन सह पठितो वाक्यस्योपक्रमो निगमनबलेन। शेषवाक्येन नेय इति मीमांसासूत्रान्वयः कि चर्गादिशब्दानां श्रुतिष्वेव क्रमदृष्टेर्बृहस्पतिब्रह्मशब्दाभ्यामृग्यजुषोर्ग्रहणमित्याह—ऋगिति। अतो बृहस्पतिः ऋक्पतिः ब्रह्मणस्पतिः यजुष्पति-रिति भातीत्याह—प्रतीयत इति।

वृहती वृहतीच्छन्दः षट्त्रिंशदक्षरा। अनुष्टुप्च वाक्। कथम्। "वाग्वा अनुष्टुप्" इति श्रुतेः। सा च वागनुष्टुब्बृहत्यां छन्दस्यन्तर्भवति। अतो युक्तं वाग्वै वृहतीति प्रसिद्धवद्वक्तुम्। वृहत्यां च सर्वा ऋचोऽन्तर्भवन्ति प्राणसंस्तुतत्वात्। "प्राणो वृहती प्राण ऋच इत्येव विद्यात्" इति श्रुत्यन्तरात्। वागात्मत्वाच्चर्चां प्राणेऽन्तर्भावः। तत्कथमित्याह—तस्या वाचो वृहत्या ऋच एष प्राणः 'पतिः। तस्या निर्वर्तकत्वात्। कौष्ठ्याग्निप्रेरित-

तस्माह—उच्यत इति। प्रसिद्धवचनं कथमित्याशङ्क्याऽऽह—वृहतीछन्द इति। सप्त हि' गायत्र्यादीनि प्रधानानि च्छन्दांसि तेषां मध्यमं छन्दो वृहतीत्युच्यते। सा च वृहती षट्त्रिंशदक्षरा 'प्रसिद्धेत्यर्थः। भवतु यथोक्ता वृहती तथाऽपि कथम् 'वाग्वं वृहती' इत्युक्तं तत्राऽऽह—अनुष्टुप्चेति। द्वात्रिंशदक्षरा तावदनुष्टुबिष्टा, सा चाष्टाक्षरैश्चतुर्भिः पादैः षट्त्रिंशदक्षरायां वृहत्यामन्तर्भवत्ययान्तरसंख्याया महासंख्यायामन्तर्भावादित्याह—सा चेति। वागनुष्टुभोरनुष्टुब्बृहत्योश्चोक्तमैक्यमुपजीव्य फलितमाह—अत इति। भवतु वागात्मिका वृहती तथाऽपि तत्पतित्वेन प्राणस्य कथमृक्पतित्वमित्याशङ्क्याऽऽह—वृहत्यां चेति। सर्वात्मकप्राणरूपेण वृहत्याः स्तुतत्वात्तत्र 'सर्वासामृचामन्तर्भावः संभवति, तस्मात्प्राणस्य वृहत्पतित्वे सिद्धमृक्पतित्वमित्यर्थः। प्राणरूपेण स्तुता वृहतीत्यत्र प्रमाणमाह—प्राणो वृहतीति। 'तथाऽपि प्राणस्य विवक्षितमृगात्मत्वं कथं सिध्यतीत्याशङ्क्याऽऽह—प्राण इति। तस्य तदात्मत्वे हेत्वन्तरमाह—वागात्मत्वादिति। तासां तदात्मत्वेऽपि कथं प्राणेऽन्तर्भावो' न हि घटो मृदात्मा पटेऽन्तर्भवतीति शङ्कते—तत्कथमिति। प्राणस्य वाङ्निष्पादकत्वात्तद्भूतानामृचां कारणे प्राणे युक्तोऽन्तर्भाव इत्याह—आहेत्यादिना। प्राणस्य तन्निर्वर्तकत्वेऽपि न तस्मिन्वाचोऽन्तर्भावो न हि घटस्य कुलालेऽन्तर्भाव इत्याशङ्क्याऽऽह—कौष्ठ्येति। कौष्ठनिष्ठेनाग्निना प्रेरित'स्तद्गतो वायुरूर्ध्वं गच्छन्कण्ठादिभिरभिहन्यमानो वर्णतया व्यज्यते 'तदात्मिका च 'वाङ्निर्णीता "देवताधिकरणे ऋक्च वागात्मिकोक्ता तद्युक्तं तस्याः

हैं—प्रसिद्ध वाक ही 'बृहती' अर्थात् वहती छन्द है, जिसमें छत्तीस अक्षर होते है। वाक् अनुष्टुप् छन्द भी है। यह कैसे कहते हो? "क्योंकि वाक् ही अनुष्टुप् है—" ऐसा श्रुति समर्थन करती है। वह अनुष्टुप् वाक् वृहती छन्द की अन्तर्वर्ती है। इसलिए (पिङ्गल शास्त्र में) प्रसिद्ध के सदृश वाक् ही वृहती है—ऐसा कहना उचित है। "प्राण वृहती है, प्राण ऋक् है, ऐसा जाने" इस दूसरी श्रुति द्वारा प्राणरूप से संस्तुत वृहती में ही सब ऋचाओं का अन्तर्भाव हो जाता है। सब ऋचाएँ वाक्स्वरूपा हैं; इसलिए उनका प्राण में अन्तर्भाव हो जाता है। यह कैसे कहते हो? इस पर बतलाते हैं—उस वाक् का यानी वृहती ऋचा का यह प्राण ही उत्पत्ति-स्थिति-हेतुक होने से पति है। क्योंकि वाक् प्राण का निष्पादक भी है। कोष्ठनिष्ठ अग्नि के द्वारा प्रेरित कोष्ठगत वायु से ऋक् निष्पादित होती है। 'पति' इसलिए हुआ, क्योंकि वाणी का पालन करता है, प्राण से ही वाणी का पालन किया जाता है। प्राणरहित मनुष्य में शब्दोच्चारण की शक्ति नहीं रह जाती। (स्थिति और उत्पत्ति का कारण होने

१ उत्पत्तिस्थितिहेतु। २ गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्ति, त्रिष्टुप्, जगती। ३ पिङ्गलशास्त्रे। ४ ऋचामपि सर्वान्तर्गतत्वादिति भाव। ५ प्राणस्य यथोक्तरीत्या ऋक्पतित्वऽपीत्यर्थः। ६. उपादाने तु संभवत्यप्युपादेयस्यान्तर्भावो न तु निमित्तादाविति भाव। ७ कोष्ठगत। ८. वर्णात्मिका। ९ निर्णीतिनिवर्णा एव तु शब्द इति भगवानुपवर्ष इत्यादिभाष्येणेति द्रष्टव्यम्। १०. देवताधिकरण शारीरकीयप्रथमाध्यायतृतीयपादे।

**एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्माद् ब्रह्मणस्पतिः ॥२१॥**

यह प्राण ही ब्रह्मणस्पति है, वाक् ही (यजुर्वेदरूपवाणी) है। उस ब्रह्म का यह प्राण पति है, अतएव यह ब्रह्मणस्पति है ॥२१॥

---

मारुतनिर्वर्त्या हि ऋक्। पालनाद्वा वाचः पतिः प्राणेन हि पाल्यते वाक्। अप्राणस्य शब्दोच्चारणसामर्थ्याभावात्। तस्माद् बृहस्पतिर्ऋचां प्राण आत्मेत्यर्थः ॥२०॥

तथा यजुषाम्। कथम्, एष उ एव ब्रह्मणस्पतिः। वाग्वै ब्रह्म ब्रह्म यजुस्तच्च वाग्विशेष एव। तस्या वाचो यजुषो ब्रह्मण एष पतिस्तस्माद् ब्रह्मणस्पतिः पूर्ववत्। कथ पुनरेतदवगम्यते बृहतीब्रह्मणोर्ऋग्यजुष्ट्वं न पुनरन्यार्थत्वमिति। उच्यते–वाचोऽन्ते सामसामानाधिकरण्यनिर्देशाद्वाग्वै सामेति। तथा च वाग्वै बृहती वाग्वै ब्रह्मेति च वाक्समानाधिकरणयोर्ऋग्यजुष्ट्वं युक्तम्। परिशेषाच्च। साम्न्यभिहिते ऋग्यजुषी एव

---

प्राणेऽन्तर्भूतत्वमित्यर्थः। ऋगात्मत्वं प्राणस्य प्रकारान्तरेण साधयति–पालनाद्वेति। सत्ताप्रदत्वे सति स्थापकत्वं तादात्म्यव्याप्तमित्यभिप्रेत्योपसंहरति–तस्मादिति ॥२०॥

यजुषामात्मेति पूर्वेण संबन्धः। नियतपादाक्षराणामृचां प्राणत्वे कुतस्तद्विपरीतानां यजुषां तत्त्वमिति शङ्कित्वा परिहरति–कथमिति। तथाऽपि कथं प्राणो यजुषामात्मेत्याशङ्क्याऽऽह–वाग्वै ब्रह्मेति। निर्वर्तकत्वं पालयितृत्वं चात्रापि तुल्यमित्याह–पूर्ववदिति। रूढिमाश्रित्य शङ्कते–कथं पुनरिति। वाक्यशेषविरोधान्नात्र रूढिः संभवतीति परिहरति–उच्यत इति। वाग्वै सामेत्यन्ते वाचः सामसामानाधिकरण्येन निर्देशाद्वेदाधिकारोऽयमिति योजना। तथाऽपि कथमृक्त्वं यजुष्ट्वं वा बृहती-ब्रह्मणोरिति तत्राऽऽह–तथा चेति। परिशेषमेव दर्शयति–साम्नीति। इतश्च वाक्समानाधिकृतयो-

---

से) इसलिए यह बृहस्पति ऋचाओं का प्राण अर्थात् आत्मा है ॥२०॥

इसी प्रकार यजुर्वेद के मन्त्रों का भी आत्मा है। कैसे है? यह ही ब्रह्मणस्पति है। वाक् ही प्रसिद्ध ब्रह्म है, ब्रह्म यजुष् है और वह एक प्रकार से वाक् ही है। उस वाक् यानी यजु स्वरूप का यह निष्पादक है। इसलिए ब्रह्मणस्पति यजुर्मन्त्रों का प्राण आत्मा है, ऐसा अर्थ पूर्वमन्त्र के समान जानना चाहिए। यह किस प्रकार जाना जाता है कि बृहती ऋक्वाचक है, और ब्रह्म यजुष्वाचक है, इसके अतिरिक्त इनका कोई दूसरा अर्थ नहीं हो सकता? इस पर कहते हैं–उपसंहाररूप-निगमन वाक्य में ("वाग्वै साम") वाक् ही साम है, इस श्रुति द्वारा वाक् की साम के साथ एकता दिखायी गयी है। ऐसा निश्चय होने पर "वाक् ही बृहती है", "वाक् ही ब्रह्म है"–इन श्रुति-

---

१ स्थित्युत्पत्तिहेतुत्वादेव। २ प्रसिद्धम्। ३ पालको निवर्तकश्चेत्यर्थः। ४ ब्रह्मणस्पतिरिति–तथा च सत्ताप्रदत्वस्थापकत्वयोस्तादात्म्यव्याप्तत्वात् ब्रह्मणस्पतिः प्राणो यजुषामात्मेति भावः। ५ मन्त्र–वाक्यशेषे निगमनवाक्य इत्यर्थः। ६ वेदाधिकारे निश्चिते च। ७ इत्थं प्राणस्य वागुपादानत्वात्। ८ व्याप्तिश्च मृद्घटादौ दृष्टा। ९ एकस्मिन्धर्मिणि विरुद्धधर्मद्वयासंभवादिति भावः। १० पूर्वकण्डिकायामिव। ११ अयमिति एष उ एव बृहस्पतिरित्ययं वेदाधिकारे वेदोपक्रम इत्यर्थः।

**एष उ एव साम वाग्वै साऽम एष सा चामश्चेति तत्साम्नः सामत्वम् । यद्वेव समः प्लुषिणा समो मश-**

यह प्राण ही साम है । उसमें वाक् ही "सा" और यह प्राण "अम" है । "सा" और "अम" ही साम है, वही साम का सामत्व है, क्योंकि यह प्राण मक्खी के समान है, मच्छर के समान है, हस्ती

परिशिष्टे । वाग्विशेषत्वाच्च वाग्विशेषौ हि ऋग्यजुषी । तस्मा[1]त्तयो[2]र्वाचा समानाधिकरणता [3]युक्ता अविशेषप्रसङ्गाच्च । सामोद्गीथ इति च [4]स्पष्टं विशेषाभिधानत्वम् । [5]तथा बृहतीब्रह्मशब्दयोरपि विशेषाभिधानत्वं युक्तम् । अन्यथाऽनिर्धारितविशेषयोरानर्थक्यापत्तेश्च विशेषाभिधानस्य वाङ्मात्रत्वे चोभयत्र पौनरुक्त्यात् । ऋग्यजुःसामोद्गीथशब्दानां च श्रुतिष्वेवंक्रम[6]दर्शनात् ॥२१॥

एष उ एव साम । कथमित्याह–वाग्वै सा यत्किंचित्स्त्रीशब्दाभिधेयं सा वाक् ।

बृहतीब्रह्मणोर्ऋग्यजुष्ट्वमेष्टव्यमित्याह—वाग्विशेषत्वाच्चेति । तत्रैव हेत्वन्तरमाह—अविशेषेति । प्रसङ्गमेव व्यतिरेकमुखेन(ण) विवृणोति—सामेति । द्वितीयश्चकारोऽवधारणार्थः । किंच 'वाग्वै बृहती' 'वाग्वै ब्रह्मेति' वाक्याभ्यां बृहतीब्रह्मणोर्वागात्मत्वं सिद्धं न च तयोर्वाङ्मात्रत्वं वाक्यद्वयेऽपि वाग्वै वागिति' पौनरुक्त्यप्रसङ्गात्तस्माद्बृहतीब्रह्मणोरेष्टव्यमृग्यजुष्ट्वमित्याह—वाङ्मात्रत्वे चेति । 'तत्रैव [9]स्थानमाश्रित्य हेत्वन्तरमाह—ऋगिति ॥२१॥

ऋग्यजुष्ट्वं प्राणस्य प्रतिपाद्य तस्यैव सामत्वं साधयति—एष इत्यादिना । [10]तदेव स्पष्टयति—

मन्त्रों में जो वाक् की एकता बृहती और ब्रह्म से दिखाई गई है, उसका ऋक्स्वरूप और यजु स्वरूप होना उचित ही है । परिशेष रह जाने से भी यह बात सिद्ध होती है । साम के प्रतिपादन कर देने के बाद ऋक् और यजुष् ही अवशेष रहते हैं । बृहती और ब्रह्म के एकतापरक ऋक् और यजुष् वाक्-विशेष ही हैं । इसलिए वाक्विशेषार्थक बृहती और ब्रह्म का वाक्सामान्यार्थक वाक्शब्द के साथ एकाधिकरण होना युक्त ही है, इसके अतिरिक्त अविशेष का प्रसङ्ग होने लगेगा, साम और उद्गीथ शब्द वाक् के उपसर्जन प्राणरूप विशेष अर्थ के वाचक हैं, ऐसा स्पष्ट है । इसी प्रकार बृहती और ब्रह्म का

१ वाग्विशेषार्थकबृहतीब्रह्मणो । २ वाचेति—वाक् सामान्यर्थकवाकशब्देनत्यर्थ । ३ युक्तेति—सामान्यविशेषयो सामानाधिकरण्यस्य नीलो घट इत्यादौ प्रसिद्धत्वादन्यार्थेत्व तया वाग्वै बृहती वाग्वै ब्रह्मेति" श्रुता समानाधिकरणताऽनुपपन्ना स्यादिति भाव । ४ स्पष्ट विशेषाभिधानत्वम्—सामोद्गीथशब्दयोर्वागुपसर्जनप्राणरूपो यो विशेषोऽर्थस्तद्वाचकत्वमित्यर्थ । ५ तथेति—वाग वै सा अम एष' सा चामश्चेति तत्साम प्राणो वा उत् वागेव गीथा उच्च गीथा चेति स उद्गीथ इति सामोद्गीथयोर्विशेषाभिधानत्व स्पष्टम् । तथा बृहतीब्रह्मशब्दयो- 'वाग्वै बृहती' 'वाग्वै ब्रह्मेति' विशेषाभिधानत्वम् तच्च तयोर्वेदत्वे एव सम्भवति अन्यथा तयोर्वाक्यपर्यायत्वे विशेषाभिधानस्यानर्थक्यप्रसङ्गादितिभाव । ६ दर्शनादिति—बृहतीब्रह्मशब्दाभ्यामृग्यजुषोर्ग्रहणमिति शेष । ७ वत् । ८ तत्रैवेति—बृहतीब्रह्मणो ऋग्यजुर्विषयत्व इत्यर्थ । ९ स्थानमिति—स्थानाख्य मीमांसाप्रसिद्ध-प्रमाणम् । स्थान च पाठक्रम एव । १० वाचोऽखिलस्त्रीलिङ्गशब्दवाच्यवस्तुरूपत्वमेव ।

**केन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यꣳ सलोकतां य एवमेतत्साम वेद ॥२२॥**

के समान है। यह त्रिलोकी के समान है। (किंबहुना) यह सभी के समान है, इसलिये तो यह साम है। जो इस साम को इस प्रकार जानता है, वह साम के सायुज्य और सालोक्य को प्राप्त करता है ॥२२॥

सर्वस्त्रीशब्दाभिधेयवस्तुविषयो हि सर्वनामसाशब्दः। तथाऽम एष प्राणः सर्वपुंशब्दाभिधेयवस्तुविषयोऽमःशब्दः। "केन मे पौंस्नानि नामान्याप्नोषीति प्राणेनेति ब्रूयात्केन मे

सर्वेति। साशब्दो हि सर्वनाम तथाच यः स्त्रीलिङ्गः सर्वः शब्दस्तेनाभिधेयं वस्तु वागित्यर्थः। अमः प्राण इत्युक्तमुपपादयति—सर्वपुंशब्देति। पुंलिङ्गेन सर्वेण शब्देनाभिधेयं वस्तु प्राण इत्यर्थः। तत्र श्रुत्यन्तरं

भी विशेष अर्थ का वाचक होना युक्तिसगत ही है, अन्यथा विशेष अर्थ का निर्धारण न होने से उनकी निरर्थकता सिद्ध हो जायगी। यदि उन्हें विशेष अर्थ का वाचक वाक् मात्र ही दिखाया जाय तो ("वाक् ही बृहती है", "वाक् ही ब्रह्म है") इन दोनो स्थानो मे पुनरुक्ति-प्रसङ्ग हो जायगा। तथा ऋक्, यजुष्, साम, उद्गीथ—इन शब्दो का श्रुतियो मे ऐसा क्रम देखा जाने से बृहती और ब्रह्म शब्द से ऋक् और यजुष् का ग्रहण करना चाहिए ॥२१॥

यही साम है। किस प्रकार? इस पर कहते हैं—वह वाक् ही है। जो कुछ भी स्त्रीशब्द अभिधेय है, वह वाक् है। 'सा' (वह) यह सर्वनामसज्ञक शब्द समस्त स्त्रीशब्द की वाच्य वस्तुओ का विषय है। इस प्रकार 'अम' यह प्राण है। 'अम' शब्द समस्त पुल्लिङ्ग शब्द की अभिधेय वस्तुओ का विषय है। एक दूसरी कौषीतकि श्रुति यही दिखाते हुए कहती है—"मेरे पुल्लिङ्ग नाम उपासक किस करण से प्राप्त करता है, (ऐसा पूछा जाने पर) उपासक कहे—कि पञ्चवृत्त्यात्मकप्राण से प्राप्त करता है। (पुन पूछे जाने पर कि) मेरे स्त्रीलिङ्ग नाम किस करण से प्राप्त करता है?—उपासक कहे—प्राणनिष्पादिका, वर्णाभिव्यक्ति मे हेतुभूता वाक् से प्राप्त करता है।" यह सामशब्द

१ प्राणवाच्यअमशब्द। २ सलोकतामित्यस्य स्थाने सालोक्यमित्येव पाठो भाष्यानुसारी। ३ स्वात्मन सर्वात्मत्व ब्रुवाणमुपासक ब्रह्मा ब्रूत—केनेति। मे मम ब्रह्मण सर्वात्मन पौंस्नानि पुल्लिङ्गनामानि केन करणभूतेन रूपेण वोपासक आप्नोषि प्राप्नोषि इति। एवपृष्टे प्राणेन पञ्चवृत्त्यात्मकेन साधिदैविकेन इति ब्रूयादुपासक प्रत्युत्तरयेदित्यर्थः। पुनर्ब्रह्मा पृच्छति केनेत्यादि पूर्ववत्। अत्रोत्तरवाक्ये वाचेति प्राणनिष्पाद्यया वर्णाभिव्यक्तिहेतुभूतयेत्यर्थः। तृतीयप्रश्नोत्तरे मनसेति साधिदैविकान्तःकरणेनेत्यर्थः। अत्र यद्यपि नाममात्रावाप्तौ करण वाङ् न तु स्त्री नामाप्तावेव प्राणश्च जीवनमन्तरेण न कुत्रापि करण मनश्च सर्वोपलब्धिसाधारण करण न तु नपुसक नामाप्तावेव तथापि स्त्रीपुमव्यक्तिवश झटित्येव नपुसकध्वनेर्बाह्यकरणे प्रत्ययोदयो भवति। ततोऽस्ति तदधिगमे मनसोऽधिको व्यापार इत्यभिप्रेत्योक्त मनसा नपुसकानीति प्राणस्य च वाक्सहकारित्वात् नामाप्तौ करणत्वम् पुंस्त्वाच्च तस्य पुन्नामाप्तौ स्त्रीत्वाच्च वाच स्त्रीनामाप्ताविति विभागो न विरुद्ध इत्यन्यत्र विस्तर। अत्र च प्राणाद्यात्मना नामाप्तिर्नाम तत्तन्नामाभिधेयत्वमेव तच्च प्राणादेरभिधेयरूपतामेवोपपद्यत इति। ४ अमशब्दाभिधेयस्य प्राणत्वम्। ५ स्पष्टयति। ६. तत्रेति—सर्वपुंशब्दाभिधेय प्राण सर्वस्त्रीशब्दाभिधेय च वागित्यत्रेत्यर्थः। तत्रेति—वाक्प्राणवाचकौ सा अमशब्दावित्यत्रेति वार्थ।

स्त्रीनामानीति 'वाचा" इति श्रुत्यन्तरात्। वाक्प्राणा निधानभूतोऽयं सामशब्दः। तथा प्राणनिर्वर्त्यस्वरादिसमुदायमात्रं गीतिः सामशब्देनाभिधीयते। अतो न प्राणवाग्व्यतिरेकेण सामनामास्ति किंचित्स्वरवर्णादिश्च प्राणनिर्वर्त्यत्वात्प्राणतन्त्रत्वाच्च। एष उ एव प्राणः साम यस्मात्साम सामेति वाक्प्राणात्मकं सा चामश्चेति तत्तस्मात्साम्नो गीतिरूपस्य स्वरादिसमुदायस्य सामत्वं तत्प्रगीतं भुवि।

यद्वु एव समस्तुल्यः सर्वेण वक्ष्यमाणेन प्रकारेण तस्माद्वा सामेत्यनेन

प्रमाणयति—केनेति। आचार्यस्य शिष्यं प्रत्येतद्वाक्यम्। पौंस्नानि पुंसो वाचकानि। तथाऽपि कस्य "सामशब्दवाच्यत्वमित्याशङ्क्य फलितमाह—वागिति। "वागुपसर्जनः प्राणः सामशब्दाभिधेय एकवचन-निर्देशादित्यर्थः। ननु "गीतिषु सामाख्येति न्यायाद्विशिष्टा काचिद्"गीतिः सामेत्युच्यते तत्कुतो वागुपसर्ज-नस्य प्राणस्य सामत्वमत आह—तथेति। प्राणस्य सामत्वे सतीति यावत्। प्रगीते मन्त्रवाक्ये सामशब्दस्य वृद्धैरिष्टत्वावस्ति प्राणादिव्यतिरेकेण सामेत्याशङ्क्याऽऽह—स्वरेति। आदिपदेन पदवाक्यादिग्रहः। "वागु-पसर्जने प्राणे मुख्यः सामशब्दस्तत्संबन्धादितरत्र" गौणो "मञ्चादिशब्दवदित्यर्थः। "उक्तेऽर्थे तत्साम्नः सामत्वमिति वाक्यं योजयति—यस्मादिति। इदं सामेदं सामेति यद्व्यवह्रियते तद्वाक्प्राणात्मकमेवो-च्यते सा चामश्चेति "व्युत्पत्तेर्यस्मादेव तस्मात्प्रसिद्धस्य साम्नो यत्सामत्वं तन्मुख्यसामनिर्वर्त्यत्वाद्गौ-णमेव सद्व्येतृव्यवहारे प्रसिद्धमिति योजना।

प्रकारान्तरेण प्राणस्य सामत्वमुपासनार्थमुपन्यस्यति—यदित्यादिना। प्रकारान्तरद्योती

वाक् और प्राण उभय का अभिधानभूत है। तथा प्राण से निष्पन्न स्वरादिसमुदाय साम शब्द से कहा जाता है। अतः (प्रसिद्ध सामत्व के प्राणाधीन होने से) प्राणरूप वाक् से भिन्न साम नाम की कोई वस्तु नहीं है। स्वर और वर्णादि प्राण से निष्पन्न होते हैं, एवं प्राण के आधीन हैं। इसलिए यह प्राण ही साम है। "सा और अम" इस विग्रहरूप व्युत्पत्ति में "साम साम"—इस प्रकार कहा जाने वाला शब्द वाक् और प्राणस्वरूप ही है। इस कारण से गीतिरूप-साम-संज्ञक स्वरादिसमुदाय का सामत्व होना लोकव्यवहार में प्रसिद्ध है।

अथवा वह वक्ष्यमाण प्रकार से प्राण सबके "सम" अर्थात् तुल्य है। इसलिए "उ" शब्दार्थक "वा" का "साम" इस वाक्य से सम्बन्ध है। प्राण के सामशब्द लाभ के निमित्तवाली प्रकारा-

१ येन मे नपुंसकानीति मनसैवेत्येव ब्रूयादिति श्रुतिशेषो द्रष्टव्य। २ उभयेरर्थ। ३ ममस्त। ४. प्रसिद्धसाम्न सामत्वस्य प्राणाधीनत्वादित्यर्थ। ५ व्युत्पत्ते। ६. व्यवहारभूमौ। ७. प्राण इति शेष। ८. उशब्दार्थोऽयं वेति। ९ तथापीति—व्यस्तयो सामशब्दयो. वाक्प्राणवाचकत्वेऽपीत्यर्थ.। १०. सामश-ब्देनि—समस्तसामशब्देत्यर्थं। ११ ननु वाक्प्राणयो सामत्वे कथ सामेत्येकवचनमर्थभेदादित्याशङ्क्य तयार्गुण-प्रधानभाव एव एकवचनकरणे कारणमित्यभिप्रेत्याह—वागिति। १२ जै० २।१।३६। १३. गानम्। १४. ननु तथा प्राणेत्यादिभाष्यण सामशब्दस्य शब्दार्थस्मकार्थद्वयमुक्त न चैकस्य शब्दस्यैकार्थत्वे सभवति अनेकार्थत्व न्याय्यमित्याशङ्क्याह—वागुपसर्जन इति। सामशब्दस्य मुख्यार्थे भेदाभावात अर्थान्तरस्य गौणत्वात् मञ्चा-दिशब्देषु गौणमुख्यार्थभेदस्य दृष्टत्वात् नात्र किंचिदवद्यमिति भाव.। १५. मन्त्रादौ। १६. मञ्चाः क्रोशन्ती-त्यादौ। १७. उक्तेऽर्थं इति—वागुपसर्जने प्राणे मुख्य सामशब्दस्तत् सम्बन्धादितरत्र गौण इत्युक्तेऽर्थं इत्यर्थः। १८ एवमिति—वागुपसर्जनप्राणे मुख्य सामशब्द इत्यर्थ.।

संबन्धः । वाशब्द[1]सामशब्दलाभनिमित्तप्रकारान्तरनिर्देश[2]सामर्थ्यलभ्यः । केन पुनः प्रकारेण प्राणस्य [3]तुल्यत्वमित्युच्यते—समः [4]प्लुषिणा पुत्तिकाशरीरेण समो मशकेन मशकशरीरेण समो नागेन हस्तिशरीरेण सम एभिस्त्रिभिर्लोकै[5]स्त्रैलोक्यशरीरेण [6]प्राजापत्येन समोऽनेन जगद्रूपेण [7]हैरण्यगर्भेण पुत्तिकादिशरीरेषु गोत्वादिव[8]कात्स्न्र्येन [9]परिसमाप्त इति[10] समत्व प्राणस्य । न पुनः शरीरमात्रपरिमाणेनैवामूर्तत्वात्सर्वगतत्वाच्च । न च घटप्रासादादिप्रदीपवत्सङ्कोचविकासितया शरीरेषु [11]तावन्मात्र समत्वम् । [12]त एते सर्व एव

---

वाशब्दोऽत्र न श्रूयत इत्याशङ्क्याऽऽह—वाशब्द इति । [13]निमित्तान्तरमेव प्रश्नपूर्वक प्रकटयति—केनेत्यादिना । ननु प्राणस्य तत्तच्छरीरपरिमाणत्वे परिच्छिन्नत्वादा[14]नन्त्यानुपपत्तिरतस्कथमस्य विरुद्धेषु शरीरेषु समत्वमित्याशङ्क्याऽऽह—पुत्तिकादीति । समशब्दस्य [15]यथाभूतार्थत्व किं न स्यादित्याशङ्क्याऽऽह—न पुनरिति । [16]आधिदैविकेन रूपेणामूर्तत्व सर्वगतत्व च द्रष्टव्यम् । ननु प्रदीपो घटे सकुचति प्रासादे च विकसति तथा प्राणोऽपि मशकादिशरीरेषु सकोचमिभादिदेहेषु विकास चाऽऽपद्यतामिति [17]समत्वासिद्धिरित्याशङ्क्याऽऽह—न चेति । प्राणस्य सर्वगतत्वे समत्वश्रुतिविरोधमाशङ्क्याऽऽह—

---

न्तरद्योतक सामर्थ्य से 'वा' शब्द का श्रवण होता है। अच्छा तो प्राण की तुल्यता अर्थात् उनका सर्वसमत्व किस प्रकार से है ? अब इसका प्रतिपादन करते है—यह प्राण 'प्लुषिणा' अर्थात् अतिसूक्ष्म शरीररूपा पुत्तिका के सदृश, 'मशकेन' अर्थात् मच्छर के शरीर के सदृश, 'नागेन' अर्थात् हाथी के शरीर के सदृश है। इन 'त्रिभिर्लोकै' अर्थात् प्रजापति के त्रैलोक्यात्मक विराट्शरीर के समान है। इस सम्पूर्ण जगत्‌रूप हिरण्यगर्भ के समान है। जिस प्रकार गोशरीर मे सर्वावयव अवच्छेदरूप से गोत्व व्याप्त है, उसी प्रकार वह पुत्तिकादि शरीरो म व्याप्त है, इस कारण से उनके समान प्राण है। शरीरमात्रपरिमाण के कारण समान नही, क्योकि यह अमूर्त और सर्वगत है। घट म सङ्कोच को प्राप्त होने

---

१ प्राणस्य सामशब्दलाभेत्यर्थ । २ उनिपातस्य प्रकारान्तरावद्योतकस्य सत्त्वादिद चाद्यान्तरमसङ्गतमित्यरुचे यद्वेति वाक्यतात्पर्यमाहुर्वार्तिकाचार्या — निर्दोषभूतसाम्याद्वा सामप्राणोऽभिधीयते । प्रत्यग्ज्ञानहेतुत्वात्तज्ज्ञस्याऽऽनन्त्यमुच्यते ॥२०४॥ इति । सर्वसमत्वेन प्राणस्यानन्त्यमयुक्त सत्य ज्ञानमनन्तमित्यादिश्रुतब्रह्मण एवाऽऽनन्त्यावगमाद्धि ब्रह्मोपासनस्य मुख्यमित्याशङ्कयाह—प्रत्यगिति । अज्ञानजन्यस्य प्राणस्याऽऽनन्त्यमापेक्षिकम् धर्मितद्धर्मस्यापि तज्ज्ञत्वात्तस्यानुपपत्तिरित्यर्थ । अस्मिन्पक्षे उनिपातो विकल्पार्थ सधाम्यत्वात्प्राधान्यावलनीयम् । ३ सर्वसमत्वम् । ४ प्लुषिणेति— अतिसूक्ष्मशरीरा हि पुत्तिका प्लुषिरुच्यते । पुत्तिकादिशरीरेण सम प्राणस्तदाश्रयात् ॥२०५॥ इति वार्तिके । तदाश्रयादिति—तत्र तत्र देहे समाप्यवृत्तेरित्यर्थ । पुत्तिका चातिसूक्ष्मतममशकभेद । ५ त्रैलोक्यात्मकविराट्शरीरेणत्यर्थ । ६ सर्वेण । ७ हैरण्यगर्भेणेति- ननु प्राणो नाम सूत्रात्मा तस्य तेनैव साम्य कथमित्याशङ्क्य समाहित वार्तिके— तथा हैरण्यगर्भेण लिङ्गात्मा सम एव तु इति ॥ '२०६॥ क्रियाशक्तिमतो ज्ञानशक्तिमत्ता साम्यमिति भाव । उभयशक्त्यात्मा हि स इति । ८ सर्वावयवावच्छेदेन । ९ व्याप्त । १० हेतो । ११ परिमाणमात्ररूपम् । १२ त एते इति सर्वे वागादय समास्तुल्या केन रूपेणेत्याकाङ्क्षायामाह—सर्वेऽनन्ता इति । आधिदैविकरूपेणाशेषजगद्व्यापिन इत्यर्थ । १३ प्रकारान्तरमित्यर्थ । १४ एतेन वार्तिकोक्तमानन्त्यमप्यभिमतमित्यसूचि । १५ तत्तच्छरीरपरिमाणस्वरूपम् । १६ नत्वाध्यात्मिकेन जडरूपेणेत्यर्थ । १७ एकरसत्वासिद्धिरित्यर्थ ।

**एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदँसर्व-**
**मुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ॥२३॥**

यह प्राण ही उद्गीथ है, प्राण ही "उत्" है, क्योंकि प्राण से ही यह जगत् ऊपर की ओर धारण किया हुआ है। वाक् ही "गीथा" है, वह प्राण "उत्" है और यह गीथा प्राणतन्त्रा वाक् भी है। अतः (दोनों का एक शब्द से कथन होने के कारण) उद्गीथ है ॥२३॥

---

समाः सर्वेऽनन्ताः'[1] इति श्रुतेः। सर्वगतस्य तु शरीरेषु शरीरपरिमाणवृत्तिलाभो न विरुध्यते। एवं समत्वात्सामाख्यं प्राणं वेद यः श्रुतिप्रकाशितमहत्त्वं तस्यैतत्फलमश्नुते व्याप्नोति साम्नः प्राणस्य सायुज्यं सयुग्भावं समानदेहेन्द्रियाभिमानत्वं सालोक्यं समानलोकतां वा [2]भावनाविशेषतो य एवमेतद्यथोक्तं साम प्राणं वेद। आ प्राणात्माभिमाना-भिव्यक्तेरुपास्त इत्यर्थः ॥२२॥

'एष उ वा उद्गीथः। उद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानम्। सामा-

---

सर्वगतस्येति। [3]'खण्डादिषु गोत्ववच्छरीरेषु सर्वत्र स्थितस्य प्राणस्य तत्तच्छरीरपरिमाणया [4]वृत्तेर्लाभः संभवति सर्वगतस्यैव नभसस्तत्र तत्र कूपकुम्भाद्यवच्छेदोपलम्भादित्यर्थः। फलश्रुतिमवतार्य व्याकरोति—एवमिति। फलविकल्पे हेतुमाह—भावनेति। वेदनं व्याकरोति—आ प्राणेति। [6]'इदं च फलं मध्यप्रदीपन्यायेनोभयतः संबद्धमवधयम् ॥२२॥

[7]'प्रस्तावादिशब्दवदुद्गीथशब्दस्यापि भक्तिविशेषे रूढत्वादुद्गीथेनात्ययामेत्यत्र चोद्गात्रे [8]'कर्मणि प्रयुक्तत्वात्कथमुद्गीथः प्राण इत्याशङ्क्याऽऽह—उद्गीथो नामेति। नञ्पदस्योभयतः संबन्धः।

---

वाले एवं महत् में विकास को प्राप्त होने वाले प्रदीप के समान शरीरों में भी उतने परिमाणमात्ररूप वाला होने से इसका समत्व नहीं है। श्रुति से यही अभिलक्षित होता है—"वे ये वागादि सभी तुल्य हैं, क्योंकि आधिदैविकरूप में अशेष-जगद्व्यापी हैं" सर्वगत प्राण का प्रत्येक शरीरों में शरीर के परिमाणानुसार स्वरूपलाभ करने में कोई विरोध नहीं है। इस प्रकार समत्व होने से श्रुति द्वारा प्रमाणित महत्व वाले सामनामक प्राण को जो पुरुष जानता है, उसे वह फल मिलता है, वह साम-नामक प्राण का 'सायुज्यम्' अर्थात् सम्मिलनभाव या उसके साथ समान देह और इन्द्रियादि का अभि-मानत्व प्राप्त करता है, तथा उपास्ति वैलक्षण्य से सालोक्य अर्थात् समानलोकता को प्राप्त करता है, जो इस प्रकार इस यथोक्त सामरूप प्राण को जानता है, अर्थात् प्राणात्म-अभिमान उदय होने पर्यन्त उसकी उपासना करता है ॥२२॥

'यह (प्रकरणस्थ प्राण) ही उद्गीथ है'। साम अवयवरूप भक्तिविशेष का नाम 'उद्गीथ' है, उद्गीथ से उद्गान अर्थ नहीं समझना, क्योंकि यहाँ सामशब्दित प्राण का ही प्रकरण चल रहा है।

---

१. बृ०उ० १.५.१३। २ उपास्तिवैलक्षण्यात्। ३. प्रकृत. प्राण। ४. व्याप्तिषु। ५ स्वरूपस्य। ६. एतस्य सायुज्यादे प्रधानफलत्वादयमपि विशिष्टविधिरेवेत्यभिप्रेत्याह—इदं चेति। ७. आदिना छान्दोग्योक्ता हिङ्कारादयो ग्राह्याः। ८ उद्गाने।

धिकारात् । कथमुद्गीथः प्राणः । प्राणो वा उत्प्राणेन हि यस्मादिदं सर्वं जगदुत्तब्धमूर्ध्वं स्तब्धमुत्तम्भितं विधृतमित्यर्थः । उत्तब्धार्थावद्योतकोऽयमुच्छब्दः प्राणगुणाभिधायकः । तस्मादुत्प्राणो वागेव गीथा शब्दविशेषत्वादुद्गीथभक्तेः । गायतेः शब्दार्थत्वात्सा वागेव । न ह्युद्गीथभक्तेः शब्दव्यतिरेकेण किञ्चिद्रूपमुपलभ्यते तस्माद्युक्तमवधारणं वागेव गीथेति । उच्च प्राणो गीथा च प्राणतन्त्रा वागित्युभयमेकेन शब्देनाभिधीयते स उद्गीथः ॥२३॥ उक्तार्थदार्ढ्यायाऽऽख्यायिकाऽऽरभ्यते—

सामशब्दितस्य प्राणस्य प्रकृतत्वादिति हेतुमाह—सामाधिकारादिति । न तावदुद्गीथशब्दस्य प्राणे रूढिस्तस्य तस्मिन्वृद्धप्रयोगादर्शनान्नापि योगोऽवयवश्रुते रदृष्टेरिति शङ्कते—कथमिति । योगवृत्तिमुपेत्य परिहरति—प्राण इति । उच्छब्दो नास्यार्थस्य वाचको निपातत्वादित्याशङ्क्याऽऽह—उत्तब्धेति । तथाऽपि कथं प्राणो वा उदित्युक्तं तत्राऽऽह—प्राणेति । "वायुर्वै गौतम तत्सूत्रम्' इत्यादि"श्रुतेरित्यर्थः । "उद्गीथभक्तेः शब्दविशेषत्वेऽपि गीथा वागिति कथमुच्यते तत्राऽऽह—गायतेरिति । अथावधारणं साधयति—न हीति । "तथाऽपि कथं प्राणस्योद्गीथत्वमित्याशङ्क्य वागुपसर्जनस्य तस्य तथात्वं कथयति—उच्चेति ॥२३॥

प्राण उद्गीथ किस प्रकार से है ? 'प्राणो वा उत्' अर्थात् प्राण ही उत् है, प्राण के द्वारा ही यह सम्पूर्ण जगत् विधृत है, ऊपर की ओर निष्चेष्ट है, उत्तम्भित है, धारण किया हुआ है। (निपात के अनेकार्थक होने से) यह 'उत्' शब्द उत्तब्ध अर्थ का द्योतन करता है, 'उत्' शब्द उत्तम्भनरूप प्राण के गुण का बोधक है। (प्राण के सर्वजगत्-विधारक होने से) प्राण उत् है। (प्राण 'उत्' है, वहाँ गीथा शब्द का अभाव है तो उद्गीथ की सिद्धि कैसे हुई ?) वाक् ही गीथा है, क्योंकि उद्गीथभक्ति के शब्दविशेष होने के कारण वह उद्गीथ भक्ति है। 'जिससे गाया जाय' इस व्युत्पत्ति के द्वारा गीथा शब्द का अर्थ वाक् ही है। उद्भक्ति के रूप की शब्द से भिन्न कोई उत्प्रेक्षा प्रस्तुत नहीं की जा सकती। इसलिए वाक् ही गीथा है, ऐसा निश्चय करना ही ठीक है। उत् प्राण है, और गीथा प्राण के आधीन

१ प्राणो वा उदिति। तदुक्तं वार्तिके—"उपसर्ग उदित्येष स चात्यन्तक्रियाश्रितः। सर्वोत्कर्षक्रियायास्तत व्याचष्टे श्रुतिरञ्जसा" ॥११८॥ अत्यन्तक्रियाश्रित इति—उत्कृष्टक्रियावाचक इत्यर्थः। उत्कर्षवाचक इति यावत्। तस्मिन्—यया सर्वोत्कर्षवाचकत्वं तस्य मनसि कृत्वा सर्वोत्तम्भकत्वं तस्य ब्रूते इत्यर्थः। अञ्जसा साक्षात्॥ २ सर्वं जगदुत्तब्धमिति। अत्र वार्तिकम्—"उत्तब्धं विधृतं यस्मात् प्राणेन जगदित्वरम्। उत्प्राणोऽतः प्रसिद्धस्तु गुणादुद्गीथ उच्यते॥"११९॥ प्रसिद्धः-सामभक्तिविशेषः। गुणात् -आरोपात्। प्राणनिर्वर्त्यत्वादिति भावः। ३ निपातानामनेकार्थत्वात्। ४ उत्तम्भनं प्राणगुणः। ५ तस्मादिति—प्राणस्य सर्वजगद्विधारकत्वादित्यर्थः। ६ प्राणस्योच्छब्दत्वेऽपि गीथाशब्दत्वाभावात् कथमुद्गीथत्वमित्याशङ्क्य गीथाशब्दार्थमाह—वागिति। ७ उद्गीथभक्तेरिति—उद्गीथभक्तेः शब्दविशेषत्वात् सा उद्गीथभक्तिः गीयतेऽनयेति व्युत्पत्त्या गीथाशब्दार्थो वागेवेत्यर्थः। ८ गायतेरिति गीयतेऽनयेति व्युत्पत्त्या गीथा वागित्यर्थः। ९ उपलभ्यत इति—नहि तत्कर्मकोद्गानकरणत्वम् वागतिरिक्ते चोपलभ्यत इति शेषः। १० तस्मादिति—तत्कर्मकोद्गानकरणत्वस्य वाच्येव सत्त्वादित्यर्थः। ११. उद्गीथ इति—उद्गीथशब्दितप्राणनिर्वर्त्यतयोपचाराद्भक्तेस्तत्त्वसंभवे न तत्रापि भक्ति शक्त्या गौरवादिति भावः। १२ अप्रतीतः। १३ बृ०उ० ३ ७ २। १४ इयं हि वायो सूत्रस्य ब्रूवाणा सर्वोत्तम्भनं तत्कर्तृकं ब्रूते सूत्रस्योद्ग्रथनसामर्थ्यात्। १५ उक्ताभिप्रायमजानानः शङ्कते-उद्गीथभक्तेरिति। १६ तथापीति—प्राणस्योच्छब्दार्थत्वेऽपि वाचकत्व गीथाशब्दार्थत्वेऽपीत्यर्थः।

**तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य**

उक्त विषय में यह आख्यायिका भी सुनी जाती है। चिकितान के पुत्र ब्रह्मदत्त ने यज्ञ में सोम का भक्षण करते हुये कहा—"यदि अयास्य और आङ्गिरस नामक प्राण ने वाक्संयुक्त-प्राण से भिन्न

---

तद्धापि तत्त्रैतस्मिन्नुक्तेऽर्थे ह्याप्याख्यायिकाऽपि श्रूयते ह स्म । ब्रह्मदत्तो नामतः । चिकितानस्यापत्यं चैकितानस्तदपत्यं युवा चैकितानेयो राजानं यज्ञे सोमं भक्षयन्नुवाच किमय चमसस्थो मया भक्ष्यमाणो राजा त्यस्य तस्य ममानृतवादिनो मूर्धानं शिरो विपातयताद्विस्पष्ट पातयतु । तोरयं तातङादेश आशिषि लोड्विपातयतादिति । यद्यहम-

---

तद्धापीत्यादिवाक्यस्य 'प्रकृतानुपयोगमाशङ्क्याऽऽह—उक्तार्थेति । उद्गीथदेवता प्राणो न वागादिरित्युक्तार्थं । 'जीवति तु वश्ये युवा' (पा० सू० ४।१।१६३) इति स्मरणात्पित्रादौ वश्ये जीवति पौत्रप्रभृतेर्यदपत्य तद्युवसंज्ञकमिति द्रष्टव्यम् । क्रियापदनिष्पत्तिप्रकार सूचयति—तोरिति । तुप्रत्यय-स्यायमाशिषि विषये तातङादेश 'तुह्योस्तातङाशिष्यन्यतरस्याम्' (पा० सू० ७।१।३५) इति स्मरणादि-त्यर्थं । मूर्धपातप्रापक दर्शयति—यदीति । अनृतवादित्वस्य प्रापकाभावादप्राप्तिरिति शङ्कते—अथ पुनरिति । उद्गानस्य 'बुद्ध्यादिसंनिधानात्तद्देवता 'प्राजापत्यादिलक्षणा किं तस्मिन्देवता किं वा वर्ण-स्वरा'दिसंनिधानात्तद्देवतैव तत्र देवतेति 'विप्रतिपत्तेरनृतवादित्वे शङ्किते ब्रह्मदत्त शपथेन निर्णयं चकारेत्याह—उच्यत इति । प्राणाद्वाक्संयुक्तादन्येनायास्यो यद्युदगायदिति संबन्ध । नन्वयास्याङ्गिर-

---

वाक् है ऐसा प्राणों का जब एक शब्द से कहा जाता है तो वह "उद्गीथ" शब्द होता है ॥२३॥

उक्त अर्थ की पुष्टि के लिए आख्यायिका का आरम्भ करते हैं—'तद्धापि'—अर्थात् इस उपर्युक्त विषय में यह आख्यायिका भी सुनी जाती है। 'ब्रह्मदत्त' अर्थात् ब्रह्मदत्त नाम का। चिकितान का अपत्य चैकितान उसकी युवा सन्तान चैकितानेय कहलाती है, यज्ञ में 'राजानम्' अर्थात् सोम को भक्षण करते हुए बोला—मेरे द्वारा भक्षण किया जाता हुआ यह सोम 'त्यस्य' उस मुझ मिथ्यावादी के 'मूर्धानम्' अर्थात् शिर को "विपातयतात्" अर्थात् बिल्कुल गिरा दे। 'विपातयतात्' शब्द कैसे सिद्ध हुआ? आशीर्वाद अर्थ में लोट् लकार में 'तु' प्रत्यय को (तुह्योस्तातङाशिष्यन्यतरस्याम्' सूत्र से) तातङ् आदेश होकर 'विपातयतात' शब्द की निष्पत्ति हुई। यदि मैं मिथ्यावादी होऊं तो शिर पात हो—यह अर्थ है। परन्तु अनृतवादित्व की प्राप्ति कैसे हो सकती है?—इस पर कहते हैं। 'यत्'

---

१ विश्वसृजामृषीणां सत्र। सत्र नाम यत्र ऋत्विज एव यजमाना स्वयंभूत्वा विचारादि कुर्वंत। २ उद्गीथ-देवताया प्राण एवेत्यनुपकारकत्वम्। ३ पूर्वं प्राणसंवादे उक्त। ४ बुद्ध्यादीति—अबुद्धरुद्गानानुत्पत्तेरुद्गा-नस्य बुद्ध्यादिसंनिधानम्। आदिपदेन वायादिग्राह्यम् वागादीनां चाद्गानसंबन्धत्व न उद्गायति स्पष्ट एवोक्त। ५ प्राजापत्यादीति—प्रजापतिश्चतुर्मुख तस्यापत्यानि बृहस्पत्यादय प्राजापत्या बुद्धिदेवता बृहस्पति॥ ६ आदिना पदवाक्यस्थानानि कण्ठादि च स्थानम्। ७ विप्रतिपत्तेरिति—ब्रह्मदत्तोद्गातृके यज्ञे समागतानामृषीणा-मुद्गीथदेवतानिश्चयाभावात्तामुद्दिश्योक्तरीत्या विप्रतिपत्तिरासीत्। तत परस्परस्मिन् अनृतवादित्व तै शङ्किते सति विद्वद्ग्रणीब्रह्मदत्त उद्गाता सर्वराप्ततमत्वात् साक्षीकृत स शपथद्वारेष्टदेवतानिर्णयं चकारेत्यर्थं।

**आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥२४॥**

देवता द्वारा उद्गान किया हो, तो (मैं मिथ्यावादी ठहरूंगा, ऐसे विपरीत ज्ञानवाला) मेरा शिर यह सोम देवता गिरा देवें"। अतः उस ब्रह्मदत्त ने प्राण और वाक् के ही द्वारा उद्गान किया था, यही अर्थ इस शपथ से निश्चित होता है ॥२४॥

---

नृतवादी स्यामित्यर्थः। कथं पुनरनृतवादित्वप्राप्तिरिति। उच्यते—यद्यदीतोऽस्मात्प्रकृतात्प्राणाद्वाक्संयुक्तावयास्यो मुख्यप्राणाभिधायकेनायास्याङ्गिरसशब्देनाभिधीयते 'विश्वसृजां पूर्वर्षीणां सत्र उद्गाता 'सोऽन्येन देवतान्तरेण वाक्प्राणव्यतिरिक्तेनोदगायदुद्गानं कृतवान्। 'ततोऽहमनृतवादी स्यां तस्य मम देवताविपरीतप्रतिपत्तुर्मूर्धानं विपातयत्वित्येवं शपथं चकारेति विज्ञाने प्रत्ययदार्ढ्यकर्तव्यतां दर्शयति। तमिममाख्यायिकानिर्धारितमर्थं स्वेन वचसोपसंहरति श्रुतिः—वाचा च प्राणप्रधानया प्राणेन च स्वस्याऽऽत्मभूतेन 'सोऽयास्य

---

सशब्दवाच्यो मुख्यप्राणो देवतात्वात्प्रोद्गाता भवितुमुत्सहते तत्राऽऽह—मुख्येति। उक्तार्थदार्ढ्यार्थे'त्युक्तमुपसंहरति—इति विज्ञान इति। उक्तरीत्या शपथक्रियया प्राण एवोद्गीथदेवतेत्यस्मिन्विज्ञाने प्रत्ययो विश्वासस्तस्य यद्दार्ढ्यं तस्य कर्तव्यतामाख्यायिकया दर्शयति श्रुतिरिति यावत्। आख्यायिकार्थस्यैव वाचेत्यादिनोक्तेः पौनरुक्त्यमित्याशङ्क्याऽऽह—तमिममिति। 'शपथस्य स्वातन्त्र्येणाप्रामाण्येऽपि श्रुतिमूलतया प्रामाण्यं सिध्यतीति भावः ॥२४॥

---

अर्थात् जो 'इत' अर्थात् इस प्रकृत वाक्संयुक्त प्राण से 'अयास्य' अर्थात् मुख्य प्राण का अभिधायक अयास्य आङ्गिरस शब्द से कहा जाता है, इस नाम वाला वह अयास्य-आङ्गिरस विश्वसृज् नामक पूर्व ऋषियों के यज्ञ मे उद्गाता था। उसने 'अन्येन' अर्थात् वाक् प्राण से भिन्न किसी दूसरे देवता द्वारा 'उद्गायत' अर्थात् उद्गान किया हो, तो मैं अनृतवादी होऊं। ऐसे मुझ देवतासम्बन्धी विपरीतज्ञान धारण करने वाले का मस्तक गिरा दे। इस प्रकार जो उस (ब्रह्मदत्त) ने कसम खायी, वह ('प्राण ही उद्गीथ देवता है') इस विज्ञान मे विश्वास दृढ करने के लिए है—यह स्पष्ट होता है। आख्यायिका द्वारा निर्णीत इस अर्थ का (स्वतन्त्ररूप से आख्यायिकागत उक्त शपथ अप्रामाण्य है, परन्तु श्रुतिमूलक होने के कारण प्रामाण्य है, इसलिए) श्रुति अपनी ही वाणी द्वारा उपसहार करती है—उस (विश्व-

---

१ एतन्नामकानाम्। २ य बभूव स। ३ तत इति-उद्गीथदेवतात्वेन मदभिमतप्राणादन्येन देवतान्तरेणायास्यनर्तृकोद्गानादित्यर्थः। ४ वागुपसर्जन प्राण एव देवतोद्गीथस्येतीममर्थम्। ५ सोऽयास्य इति-पूर्वेषां नैमिषारण्यवासिना विश्वसृजामृषीणा सत्रे (बहुयजमानके कर्मणि) य उद्गाताऽभूत् स चायास्यप्राणस्यात्मत्वेनोपासनात् तद्रूपस्तन्नामा सवृत्त स वागुपसर्जन प्राणमुद्गीथदेवतात्वेनोपेत्य प्राणोपसर्जनभूतया वाचोद्गातृ कर्म कृतवान् तस्मादोद्गानस्य प्राण एव देवतेत्येषोऽर्थो विचार्य निर्धारित इति भाव। ६ इत्युक्तमिति—इति वाक्येन प्रतिज्ञातमाख्यायिकार्थमित्यर्थः। ७ ननु शपथस्य स्वयमेव मानत्वान्न श्रुतेरपेक्षा न हि मान मानान्तरमपेक्षत इत्याशङ्क्याह—शपथस्येति। तस्य हि स्मृत्याचारयोरन्यतरस्य वेदमूलत्वादेव मानत्व स्थित पूर्वतन्त्र इति। स्मृति —ऋषिवाक्यम्।

**तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य**

उक्त विषय में यह आख्यायिका भी सुनी जाती है। चिकितान के पुत्र ब्रह्मदत्त ने यज्ञ में सोम का भक्षण करते हुये कहा—"यदि अयास्य और आङ्गिरस नामक प्राण ने वाक्संयुक्त-प्राण से भिन्न

---

तद्धापि तत्तत्रैतस्मिन्नुक्तेऽर्थे ह्याप्याख्यायिकाऽपि श्रूयते ह स्म। ब्रह्मदत्तो नामतः। चिकितानस्यापत्यं चैकितानस्तदपत्यं युवा चैकितानेयो राजानं यज्ञे सोमं भक्षयन्नुवाच किमयं चमसस्थो मया भक्ष्यमाणो राजा त्यस्य तस्य ममानृतवादिनो मूर्धानं शिरो विपातयताद्विस्पष्टं पातयतु। तोरयं तातङादेश आशिषि लोड्विपातयतादिति। यद्यहम-

---

तद्धापीत्यादिवाक्यस्य [1]प्रकृतानुपयोगमाशङ्क्याऽऽह—उक्तार्थेति। उद्गीथदेवता प्राणो न [2]वागादिरित्युक्तार्थः। 'जीवति तु वंश्ये युवा' (पा० सू० ४।१।१६३) इति स्मरणात्पित्रादौ वंश्ये जीवति पौत्रप्रभृतेर्यदपत्यं तद्युवसंज्ञकमिति द्रष्टव्यम्। क्रियापदनिष्पत्तिप्रकारं सूचयति—तोरिति। तुप्रत्ययस्यायमाशिषि विषये तातङादेशः 'तुह्योस्तातङाशिष्यन्यतरस्याम्' (पा० सू० ७।१।३५) इति स्मरणादित्यर्थः। मूर्धपातप्रापकं दर्शयति—यदीति। अनृतवादित्वस्य प्रापकाभावादप्राप्तिरिति शङ्कते—कथं पुनरिति। उद्गानस्य [4]बुद्ध्यादिसंनिधानात्तद्देवता [5]प्राजापत्यादिलक्षणा किं तस्मिन्देवता किं वा वर्णस्वरा[6]दिसंनिधानात्तद्देवतैव तत्र देवतेति [7]विप्रतिपत्तेरनृतवादित्वे शङ्किते ब्रह्मदत्तः शपथेन निर्णयं चकारेत्याह—उच्यत इति। प्राणाद्वाक्संयुक्तादन्येनायास्यो यद्युदगायदिति संबन्धः। नन्वयास्याङ्गिर-

---

वाक् है, दोनों को जब एक शब्द से कहा जाता है तो वह "उद्गीथ" शब्द होता है ॥२३॥

उक्त अर्थ की पुष्टि के लिए आख्यायिका का आरम्भ करते हैं—'तद्धापि'—अर्थात् इस उपर्युक्त विषय में यह आख्यायिका भी सुनी जाती है। 'ब्रह्मदत्त' अर्थात् ब्रह्मदत्त नाम का। चिकितान का अपत्य चैकितान उसकी युवा सन्तान चैकितानेय कहलाती है, यज्ञ में 'राजानम्' अर्थात् सोम को भक्षण करते हुए बोला—मेरे द्वारा भक्षण किया जाता हुआ यह सोम 'त्यस्य' उस मुझ मिथ्यावादी के 'मूर्धानम्' अर्थात् शिर को "विपातयतात्" अर्थात् बिल्कुल गिरा दे। 'विपातयतात्' शब्द कैसे सिद्ध हुआ? आशीर्वाद अर्थ में लोट् लकार में 'तु' प्रत्यय को ('तुह्योस्तातङाशिष्यन्तरस्याम्' सूत्र से) तातङ् आदेश होकर 'विपातयतात्' शब्द की निष्पत्ति हुई। यदि मैं मिथ्यावादी होऊँ तो शिर पात हो—यह अर्थ है। परन्तु अनृतवादित्व की प्राप्ति कैसे हो सकती है?—इस पर कहते हैं। 'यत्'

---

१ विश्वसृजामृषीणां सत्रे। सत्र नाम यत्र ऋत्विज एव यजमाना स्वयंभूत्वा विचारादि कुर्वंत। २ उद्गीथदेवताया प्राणे प्रकृतेऽनुपकारकत्वम्। ३ पूर्वं प्राणसंवादे उक्तं। ४ बुद्ध्यादीनि—अबुद्धेरुद्गानानुत्पत्तेरुद्गानस्य बुद्ध्यादिसंनिधानम्। आदिपदेन वागादिग्राह्यम् वागादीना चाद्गानसंबन्धस्त्व न उद्गायेति स्पष्ट एवोक्तं। ५ प्राजापत्यादीति—प्रजापतिश्चतुर्मुख तस्यापत्यानि बृहस्पत्यादय प्राजापत्या बुद्धिदेवता बृहस्पति ॥ ६ आदिना पदवाक्यस्थानानि कण्ठादि च स्थानम्। ७ विप्रतिपत्तेरिति—ब्रह्मदत्तोद्गातृके यज्ञे समागतानामृषीणामुद्गीथदेवतानिश्चयाभावात्तामुद्दिश्योक्तरीत्या विप्रतिपत्तिरासीत। तत परस्परस्मिन् अनृतवादित्वे सं शङ्किते मति विद्वद्ग्रणीर्ब्रह्मदत्त उद्गाता सर्वेराप्ततमत्वात् साक्षीकृत स शपथद्वारेष्टदेवतानिर्णयं चकारेत्यर्थः।

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः॥२७॥**

जो पुरुष उस इस साम की प्रतिष्ठा को जानता है, वह प्रतिष्ठित होता है। निश्चय ही उस साम की वाणी ही प्रतिष्ठा है, निःसंदेह वाक् में प्रतिष्ठित हुआ ही यह प्राण गाया जाता है, अर्थात् गीतिभाव को प्राप्त होता है। कुछ लोग कहते हैं कि वह प्राण अन्न में प्रतिष्ठित होकर गाया जाता है। (अतः प्राण की प्रतिष्ठा वाक् है, अथवा अन्न है ऐसी दृष्टि करे।) ॥२७॥

---

यथा यथोपासते" इति श्रुतेस्तद्गुणत्वं युक्तम्। पूर्ववत्फलेन प्रलोभिताय का प्रतिष्ठेति शुश्रूषव आह—तस्य वै साम्नो वागेव। वागिति जिह्वामूलादीनां स्थानानामाख्या। सैव प्रतिष्ठा। [1]तदाह—वाचि हि जिह्वामूलादिषु हि यस्मात्प्रतिष्ठितः सन्नेव प्राण [2]एतद्गानं गीयते गीतिभावमापद्यते तस्मात्साम्नः प्रतिष्ठा वाक्। अन्ने प्रतिष्ठितो गीयत इत्यु हैकेऽन्य आहुः। इह प्रतितिष्ठतीत्युक्तम्। अनिन्दितत्वादेकीयपक्षस्य विकल्पेन [3]प्रतिष्ठागुणविज्ञानं कुर्याद्वा[4]ऽवा प्रतिष्ठाऽन्नं वेति ॥२७॥

---

शिरःकण्ठदन्तोष्ठनासिकाताल्वूनि गृह्यन्ते। किमित्यष्टौ स्थानानि वागित्युच्यन्ते [5]तत्राऽऽह—वाचि हीति। पक्षान्तरमाह—अन्न इति। [6]अन्नशब्देन तत्परिणामो देहो गृह्यते। एकीयपक्षे [7]युक्तिमाह—इहेति। कथं [8]तर्हि प्रतिष्ठागुणस्य प्राणस्य [9]विज्ञानं कर्तव्यमत आह—अनिन्दितत्वादिति ॥२७॥

---

अर्थ पूर्ववत् समझना चाहिए ॥२६॥

स्व और सुवर्ण के समान दूसरा प्रतिष्ठागुण विधान करने की इच्छा से श्रुति कहती है—'जो उस, इस साम की प्रतिष्ठा को जानता है'। प्रतिष्ठा किसे कहते हैं? क्योंकि इसमें प्रतिष्ठित होता है। कौन होता है? वह वाक्। यही वाक् उसकी प्रतिष्ठा है। जो सामशब्दितप्राण के गुण प्रतिष्ठा को जानता है, वह लोक में प्रतिष्ठा प्राप्त करता है। "उसकी जो जिस-जिस रूप से उपासना करता है, (वही हो जाता है)" इस श्रुति के प्रमाण से उसका वैसे गुणों वाला हो जाना युक्तिसंगत है। पूर्व-प्रतिपादित प्रक्रिया के समान ही तब श्रुति कहती है, जब फल का लोभी तथा श्रोता पूछता है?' 'वह प्रतिष्ठा क्या है 'वागेव' इस पद में वाक् यह जिह्वामूलीयादि स्थानों का नाम है। उस साम की वही प्रतिष्ठा है। इसी बात को कहते हैं। क्योंकि 'वाचि' अर्थात् जिह्वामूलीयादि स्थानों में प्रतिष्ठित हुआ यह प्राण 'एतद् गानं गीयते' अर्थात् गीतिभाव को प्राप्त होता है। इसलिए साम की प्रतिष्ठा वाक्

---

१ तदाहेति—वाचा तदा ग्रहणं हेतुपरं वाचि हीत्यादिवाक्यमित्याहेत्यर्थः। २ क्रियाविशेषणमेतत्। ३ प्रतिष्ठागुणकस्य प्राणस्य विज्ञानमुपासनम्। ४ विकल्पमेव विशदयति-वाग्वेति। ५ तत्राहेति—वाक्शब्देन स्थानानामुपादाने हेतुप्रदर्शकं वाचीतिप्रभृतिवाक्यमित्याहेत्यर्थः। ६ ननु व्रीह्याद्यन्नं प्राणस्य न प्रतिष्ठा नहि तत्प्रतिष्ठितः स दृश्यते अत आह—अन्नेति। अन्नमशितं त्रेधेत्यादिश्रौतक्रमेणान्नविकारो देहस्तत्र स्थितः प्राणो गीतित्वं यतो गच्छत्यतः स प्राणप्रतिष्ठोच्यते पक्षान्तरोक्तिश्रुत्यर्थः। ७ युक्तिमाहेति- उक्तयुक्तिं वाक्यमाहेत्यर्थः। ८ प्राणस्य प्रतिष्ठाद्वयवत्त्वे। ९ विज्ञानकर्तव्यमिति -किं प्रतिष्ठितस्य प्राणस्य विज्ञानं कर्तव्यमिति प्रश्नार्थः।

**तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥२६॥**

जो उस इस साम के सुवर्ण को जानता है, उसे सुवर्ण प्राप्त होता है। उसका स्वर ही सुवर्ण है, जो इस प्रकार साम के सुवर्ण को जानता है उसे लौकिक सुवर्ण या स्वर प्राप्त होता है ॥२६॥

---

अथान्यो गुणः सुवर्णवत्तालक्षणो विधीयते । असावपि सौस्वर्यमेव। एतावान्विशेषः । पूर्वं कण्ठगतमाधुर्यमिदं तु लाक्षणिकं सुवर्णशब्दवाच्यं, तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम् । सुवर्णशब्दसामान्यात्स्वरसुवर्णयोः । लौकिकमेव सुवर्णं गुणविज्ञानफलं भवतीत्यर्थः । तस्य वै स्वर एव सुवर्णम् । भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेदेति पूर्ववत्सर्वम् ॥२६॥

तथा प्रतिष्ठागुणं विधित्सन्नाह—तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद । प्रतितिष्ठत्यस्यामिति प्रतिष्ठा वाक्तां प्रतिष्ठां साम्नो गुणं यो वेद स प्रतितिष्ठति ह । "तं

---

साम्नो गुणान्तरमवतारयति—अथेति । तर्हि पुनरुक्तिः स्यात्तत्राऽऽह—एतावानिति । लाक्षणिकं कण्ठ्योऽयं वर्णो दन्त्योऽयमितिलक्षणज्ञानपूर्वकं सुष्ठु वर्णोच्चारणं ममैव सामशब्दितप्राणभूतस्य धनमिति यावत् । लाक्षणिकसौस्वर्यगुणवत्प्राणविज्ञानवतो यथोक्तफललाभे हेतुमाह—सुवर्णशब्देति । वाक्यार्थमाह—लौकिकमेवेति । फलेन प्रलोभ्याभिमुखीकृत्य किं तत्सुवर्णमिति शुश्रूषवे ब्रूते—तस्येति । गुणविज्ञानफलमुपसंहरति—भवतीति । साम्नस्तच्छब्दवाच्यस्य प्राणस्य स्वरूपभूतस्येति यावत् ॥२६॥

उपास्यस्य प्रतिष्ठागुणत्वेऽपि कथमुपासकस्य तद्गुणत्वं तत्राऽऽह—त यथेति । आदिपदादुर-

---

वाह्य धन से सम्बन्ध प्रदर्शन के अनन्तर दूसरे सुवर्णवत्त्व (आन्तर धनवत्व) लक्षण वाले गुण का प्रतिपादन करते हैं। यह भी स्वर-माधुर्यरूप ही है। इसमें इतनी ही विशिष्टता है, कि पहली स्वशब्दवाच्य सुस्वरता कण्ठगत माधुर्य की द्योतिका थी, वह सौवर्ण्य सुवर्णशब्दवाच्य लाक्षणिक है। जो पूर्ववर्णित इस साम के सुवर्ण को जानता है, उसे लोकप्रसिद्ध स्वर्ण मिलता है। स्वर और सुवर्ण, इन दोनों में सुवर्णशब्द-वाच्यत्व समान रूप से है। गुण और उपासना का फल लौकिक स्वर्ण ही होना है—इसका तात्पर्य है। उस साम का स्वर ही सुवर्ण है, यह निर्विवाद सिद्ध है। उसे सुवर्ण प्राप्त होता है, जो इस प्रकार सामशब्दवाच्य स्वरूपभूत प्राण की सुवर्णत्व भाव से उपासना करता है—इस प्रकार शेष

---

१ बाह्यवित्तेन सम्बन्धानन्तरम् । २ आन्तरधनवत्तालक्षण । ३. स्वशब्दवाच्य सौस्वर्यम् । ४. सौवर्ण्यम् । ५ लोकप्रसिद्ध हाटकम् । ६ सुवर्णशब्दवाच्यत्वसामान्यात् । ७ कनकम् । ८. तथेति-स्वसुवर्णवदित्यर्थ । ९ उक्ताभ्यामप्यान्तरम् । १०. सामशब्दितस्य प्राणस्य । ११. प्रतिष्ठा लभते लोके । १२ कण्ठनिष्ठ माधुर्यं बाह्यधन लाक्षणिक वर्णज्ञानपूर्वक तदुच्चारणमान्तरम् । सौस्वर्यस्य ध्वनिगतत्वात् बाह्यत्वम् सौवर्ण्यस्य वर्णस्थत्वादान्तरत्वमिति तयोर्भेद मनसि निधायाहेत्यर्थ । अत्र लाक्षणिकत्व लक्षणप्रयुक्तत्व लक्षण च शास्त्रमित्यवधेयम् । १३ तस्य हैतस्येत्यादिनोक्त वेदनमेव स्फुटयति—लाक्षणिकमित्यादिना । १४. अहमहोपासनया प्राणतादात्म्यापन्नस्योपासकस्येत्यर्थं ।

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥२७॥**

जो पुरुष उस इस साम की प्रतिष्ठा को जानता है, वह प्रतिष्ठित होता है। निश्चय ही उस साम की वाणी ही प्रतिष्ठा है; नि.सदेह वाक् मे प्रतिष्ठित हुआ ही यह प्राण गाया जाता है; अर्थात् गीतिभाव को प्राप्त होता है। कुछ लोग कहते हैं कि वह प्राण अन्न मे प्रतिष्ठित होकर गाया जाता है। (अत. प्राण की प्रतिष्ठा वाक् है, अथवा अन्न है ऐसी दृष्टि करे। ) ॥२७॥

यथा यथोपासते" इति श्रुतेस्तद्गुणत्वं युक्तम्। पूर्ववत्फलेन प्रलोभिताय का प्रतिष्ठेति शुश्रूषव आह—तस्य वै साम्नो वागेव। वागिति जिह्वामूलादीनां स्थानानामाख्या। सैव प्रतिष्ठा। 'तदाह—वाचि हि जिह्वामूलादिषु हि यस्मात्प्रतिष्ठितः सन्नेष प्राण 'एतद्गानं गीयते गीतिभावमापद्यते तस्मात्साम्नः प्रतिष्ठा वाक्। अन्ने प्रतिष्ठितो गीयत इत्यु हैकेऽन्य आहुः। इह प्रतितिष्ठतीत्युक्तम्। अनिन्दितत्वादेकीयपक्षस्य विकल्पेन 'प्रतिष्ठागुणविज्ञानं कुर्याद्वा'ग्वा प्रतिष्ठाऽन्नं वेति ॥२७॥

शिरःकण्ठदन्तोष्ठनासिकाताल्वूनि गृह्यन्ते। किमित्यष्टौ स्थानानि वागित्युच्यन्ते,'तत्राऽऽह—वाचि हीति। पक्षान्तरमाह—अन्न इति। 'अन्नशब्देन तत्परिणामो देहो गृह्यते। एकीयपक्षे 'युक्तिमाह—इहेति। कथं 'तर्हि प्रतिष्ठागुणस्य प्राणस्य 'विज्ञानं कर्तव्यमत आह—अनिन्दितत्वादिति ॥२७॥

अर्थ पूर्ववत् समझना चाहिए ॥२६॥

स्व और सुवर्ण के समान दूसरा प्रतिष्ठागुण विधान करने की इच्छा से श्रुति करती है—'जो उस, इस साम की प्रतिष्ठा को जानता है'। प्रतिष्ठा किसे कहते है? क्योकि इसमे प्रतिष्ठित होता है। कौन होता है? वह वाक्। यही वाक् उसकी प्रतिष्ठा है। जो सामशब्दितप्राण के गुण प्रतिष्ठा को *जानता है; वह लोक मे प्रतिष्ठा प्राप्त करता है। "उसकी जो जिस-जिस रूप से उपासना करता है, (वही हो जाता है)"* इस श्रुति के प्रमाण से उसका वैसे गुणो वाला हो जाना युक्तिसगत है। पूर्व-प्रतिपादित प्रक्रिया के समान ही तब श्रुति कहती है, जब फल का लोभी तथा श्रोता पूछता है?' 'वह प्रतिष्ठा क्या है 'वागेव' इस पद मे वाक् यह जिह्वामूलीयादि स्थानो का नाम है। उस साम की वही प्रतिष्ठा है। इसी बात को कहते हैं। क्योकि 'वाचि' अर्थात् जिह्वामूलीयादि स्थानो मे प्रतिष्ठित हुआ यह प्राण 'एतद् गान गीयते' अर्थात् गीतिभाव को प्राप्त होता है। इसलिए साम की प्रतिष्ठा वाक्

१ तदाहेति—वाचा तेषा ग्रहण हेतुपर वाचि हीत्यादिवाक्यमित्याहेत्यर्थ। २. क्रियाविशेषणमेतत्। ३ प्रतिष्ठागुणकस्य प्राणस्य विज्ञानमुपासनम्। ४ विकल्पमेव विशदयति-वाग्वेति। ५ तत्राहेति—वाक्शब्देन स्थानानामुपादान हेतुप्रदर्शक वाचीतिप्रभृतिवाक्यमित्याहेत्यर्थ। ६. ननु व्रीह्याद्यन्न प्राणस्य न प्रतिष्ठा नहि तत्प्रतिष्ठित स दृश्यते अत आह—अन्नेति। अन्नमशित त्रेधेत्यादिश्रुतेरन्नमेणान्नविकारो देहस्तत्र स्थितः प्राणो गीतित्व यतो गच्छत्यत. स प्राणप्रतिष्ठोच्यते पक्षान्तरोक्तिश्रुत्येत्यर्थ। ७ युक्तिमाहेति—उक्तयुक्तिक वाक्यमाहेत्यर्थ। ८. प्राणस्य प्रतिष्ठाद्वयवत्वे। ९. विज्ञानकर्तव्यमिति—किं प्रतिष्ठितस्य प्राणस्य विज्ञान कर्तव्यमिति प्रश्नार्थ।

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत्। असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योति-

इसके पश्चात् (इस प्रकार जानने वाले उपासक से किये जाने वाले जप का विधान किया जाता है) पवमानों का ही अभ्यारोह बतलाया जाता है। वह प्रस्तोता निश्चितरूप से सामको ही आरम्भ करता है। जब वह प्रस्ताव करे तब इनका जप करे। "असतो मा सद्गमय" "तमसो मा ज्योतिर्गमय" "मृत्योर्माऽमृतं गमय" (मुझे असत् से सत् की ओर ले जाओ। मुझे अन्धकार से प्रकाश की ओर ले जाओ। मुझे मृत्यु से अमृत की ओर ले जाओ) वह जो कहता है मुझे असत् से सत् की ओर ले जाओ, यहाँ असत् ही मृत्यु है और अमृत ही सत् है। अतः उसके कहने का भाव यह है कि मुझे मृत्यु से अमृत की ओर ले चलो अर्थात् मुझे अमर कर दो। जब कहता है—मुझे अंधेरे से प्रकाश

---

एवं प्राणविज्ञानवतो जपकर्म विधित्स्यते। यद्विज्ञानवतो जपकर्मण्यधिकारस्तद्विज्ञानमुक्तम्। अथानन्तरं यस्माच्चैवं विदुषा प्रयुज्यमानं देवभावाभ्यारोहफलं जपकर्म, अतस्तस्मात्तद्विधीयत इह। तस्य चोद्गीथसंबन्धात्सर्वत्र प्राप्तौ पवमानानामिति वचनात्।

---

अथात पवमानानामित्यादिवाक्यमवतारयति—एवमिति। तत्राथशब्दं व्याचष्टे—यद्विज्ञानवत इति। अत इत्यस्यार्थमाह—यस्मादिति। इहेति "प्राणविदुक्तिः। यदा "तर्हि जपकर्म कर्तव्यं तत्राऽऽह—

---

है। यह अन्न परिणामी शरीर में प्रतिष्ठित हुआ पाया जाता है, इस प्रकार भी कुछ अन्य लोग कहते हैं। प्राण इनमें प्रतिष्ठित है, यह स्वीकार्य है। एकीयपक्ष की युक्ति भी स्वीकार्य होने के कारण विकल्प से प्रतिष्ठागुण वाले प्राण की उपासना करे। क्योंकि 'वाक् प्रतिष्ठा है अथवा अन्न प्रतिष्ठा है' इस प्रकार प्रतिष्ठाद्वय निर्दिष्ट है ॥२७॥

रमृतं मृत्योर्माऽमृत गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत य काम कामयेत तꣳ स एष एवविदुद्गाताऽऽत्मने वा यजमानाय वा यं काम कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशाऽस्ति य एवमेतत्साम वेद ॥२८॥

इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

की ओर ले चलो, तो यहाँ मृत्यु ही अंधेरा है और अमृत ज्योति है। अत उसका यही कहना है कि मुझे मृत्यु से अमृत की ओर ले चलो—यानी मुझे अमर कर दो। मृत्यु से अमृत की ओर मुझे ले चलो। इसमे छिपी-सी तो कोई बात ही नही है, इसके बाद जो अन्य स्तोत्रो मे उपासक अपने लिये अन्नाद्य का आगान करे। उनके गाये जाने पर यजमान वर मॉगे और जिस भोग को वह चाहता है उसे भी मॉगे। यह इस प्रकार जानने वाला वह उदगाता अपने अथवा यजमान के लिए जिस भोग को चाहता है, उसी का आगान करता है। वह यह प्राण उपासना सम्पूर्णलोक प्राप्ति का साधन है। जो इस प्रकार इस साम को जानता है, उसे लोक प्राप्ति की अयोग्यता की तो आशा ही नही है अर्थात् वह सम्पूर्ण लोको को प्राप्त करने मे समर्थ है ॥२८॥

॥ इति तृतीय ब्राह्मणम् ॥

---

पवमानेषु त्रिष्वपि [1]कर्तव्यताया प्राप्ताया पुनः कालसंकोच करोति । स वै खलु प्रस्तोता साम प्रस्तौति। [2]स प्रस्तोता यत्र यस्मिन्काले साम प्रस्तुयात्प्रारभेत् । तस्मिन्काल एतानि [3]जपेत् । अस्य च जपकर्मण आख्याऽभ्यारोह इति । [4]आभिमुख्येनाऽऽरोहत्यनेन जपकर्मणो-

---

त्स्येति । उद्गीथेनात्प्याम स्व न उद्गायेति च प्रकरणादुद्गीथेन सर्वयाज्जपस्य सर्वप्रोद्गानकाले प्राप्तौ पवमानानामेवेति वचनात्कालनियमसिद्धिरित्यर्थं । स वै खल्वित्यादिवाक्यतात्पर्यमाह्—पवमानेष्विति । ननु कर्तव्यत्वेनाभ्यारोह श्रूयते जपकर्म विधित्सितमिति चोच्यते [6]किं केन सगतमित्याशङ्क्याऽऽह—अस्य चेति । अभ्यारोहशब्दस्य न [7]तत्र रूढिर्वृद्धप्रयोगाभावादित्याशङ्क्याऽऽह—आभिमुख्ये-

---

इस प्रकार (अब) प्राण उपासक के लिए जपकर्म का विधान किया जाता है। जिस प्राण के उपासक का जपकर्म मे अधिकार है वह उपासना कह दी गई। यथोक्त जानने वाले उपासक के द्वारा प्रयुक्त किया हुआ जपकर्म तादात्म्य रूप से देवभाव की प्राप्ति कराता है, इसलिए

---

१ जपकर्मण । २ उक्तप्रसिद्धित सिद्ध कालसङ्कोचमेव स्पष्टयति-स इति । ३ प्राणविद्यजमानो जपकर्त्तेति ध्येयम् । ४ तादात्म्येन । ५ प्राणवित् । ६ किं केन सगतमिति । किम्—उत्तरवाक्यम् केन—पूर्ववाक्येन सगतम् कथ सम्बद्धमित्यर्थ । ७ जपकर्मणि ।

वंविद्देव'भावमात्मानमित्यभ्यारोहः। एतानीति बहुवचनात्त्रीणि यजूंषि। द्वितीयानिर्देशाद्-'ब्राह्मणोत्पन्नत्वाच्च यथापठित एव स्वरः प्रयोक्तव्यो न मान्त्रः। 'याजमानं 'जपकर्म।

एतानि तानि यजूंषि—'असतो मा सद्गमय' 'तमसो मा ज्योतिर्गमय' 'मृत्योर्माऽमृतं गमय' इति। 'मन्त्राणामर्थस्तिरोहितो भवतीति स्वयमेव व्याचष्टे ब्राह्मणं

नेति। यजुर्मन्त्राणामनियतपादाक्षरत्वादसतो मा सद्गमयेत्यारभ्यैको वा द्वौ वा मन्त्रावित्याशङ्क्याऽऽह —एतानीति। यद्यमी याजुषा मन्त्रास्तर्हि मान्त्रेण स्वरेण 'वैभाषिकग्रन्थोक्तेन भाव्यमित्याशङ्क्याऽऽह —द्वितीयेति। यत्र स्वरो विवक्षितस्तत्र तृतीयानिर्देशो दृश्यते। "उच्चैरृचा क्रियत उच्चैः साम्नोपांशु यजुषा' इति। प्रकृते तु द्वितीयानिर्देशाज्जपकर्ममात्रं प्रतीयते मन्त्रास्तु स्वरो न प्रतिभातीत्यर्थः। केन तर्हि स्वरेण प्रयोगो मन्त्राणामिति चेत्तत्राऽऽह—ब्राह्मणेति। भवतु शातपथेन स्वरेण मन्त्राणां प्रयोगस्तथाऽपि किमार्त्विज्यं किं वा याजमानं जपकर्मेति वीक्षायामाह—याजमानमिति।

व्याचिख्यासितयजुषां स्वरूपं दर्शयति—एतानीति। 'मन्त्रार्थशब्देन पदार्थो वाक्यार्थस्तत्फलं'

इसके अनन्तर, उसका यहाँ विधान किया जाता है। उद्गीथ-सम्बन्ध होने के कारण जपकर्म की सर्वत्र प्राप्ति में "पवमानानाम्" अर्थात् पवमानाख्य स्तोत्र के उद्गान काल मे ही—यह (नियम) वचन प्रमाण है। तीनो पवमानो में जपकर्म की कर्तव्यता प्राप्ति होने पर 'वह प्रस्तोता साम का ही प्रारम्भ करता है' इस वाक्य से श्रुति पुन उसके काल का सकोच करती है। 'स.' अर्थात् वह प्रस्तोता 'यत्र' अर्थात् जिस काल में, साम "प्रस्तुयात्" अर्थात् प्रारम्भ करे, उसी समय मे (प्राणवेत्ता जपकर्ता-यजमान) इनका जप करे। इसी जपकर्म का "अभ्यारोह" यह नाम है। 'तादात्म्यरूप से प्राणवेत्ता इस जपकर्म द्वारा आरोहण करता है, प्राणोपासक देवस्वरूप को प्राप्त हो जाता है'—इसलिए इसका 'अभ्यारोह' नाम पडा। 'एतानि' इस पद मे बहुवचन होने के कारण तीनो यजुर्मन्त्र हैं। द्वितीया विभक्ति के निर्देश से शतपथ ब्राह्मणस्थ मन्त्र होने से इनमे यथापठित ही स्वर का प्रयोग करना चाहिए—मन्त्रप्रयुक्त स्वर का नही। (मन्त्रो के देवभावसाधनत्व एव प्रार्थनार्थत्व होने से) यह जप कर्म यजमान का है।

वे तीनो यजुर्मन्त्र ये हैं—'असत् से सत् की ओर मुझे ले जाओ', 'अन्धकार से प्रकाश की ओर मुझे ले जाओ' एव 'मृत्यु से मुझे अमृतत्व की ओर ले जाओ'। मन्त्रो का अर्थ छिपा हुआ होता है; इसलिए शतपथ ब्राह्मण स्वय ही मन्त्र के अर्थों की व्याख्या करता है। "स यदाह" अर्थात् मन्त्र जो उसने कहा। वह अर्थ क्या है? इसे कहा जाता है।—"असतो मा सद्गमय" इस मन्त्र मे मृत्यु ही

१. देवेत्यादि–देवस्वरूप प्राणात्मानमित्यर्थ। २ ब्राह्मणोत्पन्नत्वादिति–शतपथब्राह्मणोत्पन्नत्वात् तदीयो लक्षणग्रन्थोक्तस्वरो मन्त्राणा प्रयोक्तव्यो न मान्त्रो द्वितीयानिर्देशेन तस्याविवक्षितत्वादिति भाव.। ३. यजमान-कर्तृकम्। ४ जपकर्मेति–मन्त्राणा देवभावसाधनत्वादिप्रार्थनार्थत्वादिति शेष। ५. स यदाहेत्यादिब्राह्मण-तात्पर्यमाह–मन्त्राणामिति। ६ एतन्नामकग्रन्थेत्यर्थ.। ७ उच्चैरित्यादि–ऋग्वेदविहिते कर्मणि मन्त्रप्रयोग उच्चैः कर्तव्य। उपांशु–तूष्णीम्। ८. ब्राह्मणे दृष्टो पुनरुक्ति प्रत्याह–मन्त्रार्थेति। तदुक्त वार्तिके— "पूर्वं पदार्थान्व्याख्याय पश्चाद्वाक्यार्थमब्रवीत्। फल पश्चाद्यथोक्तस्येत्येष व्याख्याक्रम. श्रुते.॥२५४॥" इति। फलम्–फलितार्थ। तात्पर्यार्थ इति यावत्। ९. फलम्–तात्पर्यार्थ.।

मन्त्रार्थम् । स मन्त्रो यदाह यदुक्तवान्कोऽस्यार्थ इत्युच्यते । 'असतो मा सद्गमय' इति । मृत्युर्वा असतस्वाभाविक[1]कर्मविज्ञाने मृत्युरित्युच्येते । असद[2]त्यन्ताधोभावहेतुत्वात् । सदमृतं [3]सच्छास्त्रीयकर्मविज्ञाने [4]अमरणहेतुत्वादमृतम् । [5]तस्मादसतो मा मां कर्मणो ज्ञानाच्च [6]सच्छास्त्रीयकर्मविज्ञाने गमय [7]देवभावसाधनात्मभावमापादयेत्यर्थः । [8]तत्र वाक्यार्थमाह—[9]अमृतं मा कुर्वित्येवं तदाहेति । [10]तथा तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमः [11]सर्वं ह्यज्ञानमावरणात्मकत्वात्तमस्तदेव च मरणहेतुत्वान्मृत्युः । ज्योतिरमृतं पूर्वोक्तविपरीतं [12]दैवं स्वरूपम् । प्रकाशात्मकत्वाज्ज्ञानं [13]ज्योतिस्तदेवामृतम्[14]विनाशात्मकत्वात्तस्मात्तमसो मा ज्योतिर्गमयेति । पूर्ववत्[15]मृत्योर्माऽमृतं गमयेत्यादि । अमृतं मा कुर्वित्येवं तदाह । दैवं

---

चेति त्रयमुच्यते । लौकिकं तमो व्यावर्तयति—सर्वं हीति । पूर्वोक्तपदेन व्याख्यातं तमो गृह्यते । वैपरीत्ये हेतुमाह—प्रकाशात्मकत्वादिति । ज्ञानं तेन साध्यमिति यावत् । पदार्थोक्तिसमाप्तावितिशब्दः । उत्तरवाक्याभ्यां वाक्यार्थस्तत्फलं" चेति द्वयं क्रमेणोच्यत इत्याह—पूर्ववदिति । फलवाक्यमादाय "पूर्व-

---

असत है; अशास्त्रीय कर्म और विज्ञान को मृत्यु कहते है । अत्यन्त अधोपात मे हेतु होने के कारण इसकी असत् शब्द-वाच्यता है । सत् अमृत है; शास्त्रीय होते हुए देवत्वप्राप्ति के साधन होने के कारण कर्म और विज्ञान का नाम सत् है । (देवभावापत्ति हेतु से) अमरत्व का हेतु होने के कारण वह अमृत है । (पद का अर्थ कह कर अब वाक्यार्थ कहते है ।) इसलिए असत् कर्म और असत् ज्ञान से मुझे सत् देवभाव के साधन और शास्त्रीय कर्म और ज्ञान की प्राप्ति कराओ, अर्थात् देवभाव की साधनरूपता को प्राप्त कराओ । पदार्थादि तीनों मे वाक्यार्थ कहते है—मुझको अमृतत्व साधन के योग्य स्वभाव का सम्पादन करो–यही श्रुति का आत्यन्तिक अर्थ है । इसी प्रकार 'तमसो मा ज्योतिर्गमय' इस मन्त्र मे मृत्यु ही तम है; (तमशब्द से अज्ञानमूलक सभी शास्त्रीय और अशास्त्रीय कर्म और ज्ञान का ग्रहण होता है ।) आवरणात्मक होने से सारा अज्ञान 'तम' है और मरण का हेतु होने के कारण 'मृत्यु' है । ज्योति अमृत है, वह पूर्वोक्त मृत्यु से विपरीत उपास्यरूप है, प्रकाशात्मक होने से उपासना ही ज्योति है, मरणरहितस्वरूप होने से वही अमृत है । इसलिए कहा है "आवरणात्मक अज्ञानरूप तम से प्रकाशात्म-

---

१. अशास्त्रीये । २. अत्यन्ताध इत्यादि–तयोरत्यन्ताधःपातहेतुत्वादसच्छब्दवाच्यत्वमित्यर्थः । ३. सच्छास्त्रीयेति–ते शास्त्रीये सती देवत्वस्य हेतुत्वात् सच्छब्दवाच्ये इति भावः । ४. अमरणहेतुत्वादिति–तयोरध्यात्मिकपरिच्छेदाभिमानत्यागेन देवभावापत्तिहेतुतयाऽमरणहेतुत्वादित्यर्थः । ५ पदार्थमुक्त्वा वाक्यार्थमाह–तस्मादिति । ६. देवभावसाधने । ७. देवभावसाधनरूपताम् । ८ तत्रेति–पदार्थादीनां त्रयाणां मध्ये । वाक्यार्थम् वाक्यतात्पर्यार्थमित्यर्थः । ९. अमृतमित्यादि—अमृतम् अमृतत्वसाधनयोग्यस्वभावम् । कुरु सम्पादय माम् । १०. ननूक्तमन्त्रस्य पुनरुक्तिरनर्थिका इत्याशङ्क्याह–तथेति । अनुवादस्य व्याख्यानार्थत्वान्न वैयर्थ्यमिति भावः । ११. अस्मिन्मन्त्रे तमःशब्देन सर्वं शास्त्रीयाशास्त्रीयज्ञानकर्ममूलमज्ञानमुच्यते सर्वमूलत्वादेव तत्सर्वमित्युच्यते तस्यावरणात्मकत्वात्तमस्त्वमित्यभिप्रेत्याह—सर्वमिति । १२. उपास्यरूपम् । १३. उपासनम् । १४. अमरणहेतुत्वात् । १५. मृत्योर्मेत्यादि–अज्ञानात्मकादासुरभावाद् व्युत्थाप्य । अमृतम्–अमरणात्मकज्ञानसाध्यं देवभावं प्रापयेति वाक्यार्थः । १६. तात्पर्यम् । १७. पूर्वोक्ततात्पर्यवाक्यार्थतः ।

प्राजापत्यं फलमावमापादयेत्यर्थः । पूर्वो मन्त्रोऽसाधनस्वभावात्साधनभावमापादयति । द्वितीयस्तु साधनभावादप्यज्ञानरूपात्साध्यभावमापादयति । मृत्योर्माऽमृतं गमयेति पूर्वयोरेव मन्त्रयोः समुच्चितोऽर्थस्तृतीयेन मन्त्रेणो'च्यत 'इति प्रसिद्धार्थतैव । नात्र तृतीये मन्त्रे तिरोहितमन्तर्हितमिवार्थरूपं 'पूर्वयोरिव मन्त्रयोरस्ति यथाश्रुत एवार्थः ।

'याजमानमुद्गानं कृत्वा पवमानेषु त्रिष्वथानन्तरं यानीतराणि 'शिष्टानि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् । प्राणविदुद्गाता प्राणभूतः प्राणवदेव यस्मात्स एष उद्गातैवं प्राणं 'यथोक्तं वेत्त्यतः' प्राणवदेव 'तं कामं साधयितुं समर्थस्त'स्माद्यजमानार्'तेषु स्तोत्रेषु" प्रयु-

स्माद्विशेषं दर्शयति—अमृतमिति । प्रथमद्वितीयमन्त्रयोरर्थभेदाप्रतीतेः पुनरुक्तिमाशङ्क्याथान्तरमेवमाह —पूर्वो मन्त्र इति । तथाऽपि तृतीये मन्त्रे पुनरुक्तिस्तदवस्थेत्याशङ्क्याऽऽह—पूर्वयोरिति ।

वृत्तमनूद्योत्तरवाक्यमवतार्य व्याचष्टे—याजमानमिति । यथा प्राणस्त्रिषु पवमानेषु "साधारण-मागानं" कृत्वा शिष्टेषु स्तोत्रेषु स्वार्थमागानमकरोत्तथेत्याह—प्राणविदिति । तद्विदोऽपि तद्वदागाने योग्यतामाह—प्राणभूत इति । "हेतुवाक्यमादौ योजयति—यस्मादिति । "प्रतिज्ञावाक्यं व्याचष्टे—

स्वरूप उपासनारूप ज्योति की ओर ले जाओ" । उपरोक्त (दोनो मन्त्रो के वाक्यार्थ के समान) 'मृत्योर्माऽमृत गमय' इस मन्त्र की व्याख्या करते है—। 'अमरणात्मक-ज्ञानसाध्य देवभाव की प्राप्ति कराओ', यही जप करने वाला मन्त्र मे कहता है। अर्थात् मुझे देवभाव और प्रजापतिभावरूप फल की प्राप्ति कराओ। पहला मन्त्र 'असाधन स्वभाव से साधनभाव की प्राप्ति कराओ" यह कहता है। दूसरा मन्त्र कहता है "अज्ञानात्मक साधनभाव से भी मुझे साध्यभाव की प्राप्ति कराओ"। 'मृत्यो-र्माऽमृत गमय' इस तृतीय मन्त्र द्वारा पूर्वस्थ दोनो यजुर्मन्त्रो का समुच्चित अर्थ ही कहा जाता है। इसलिए (समुच्चितार्थक मन्त्र होने से) उसका अर्थ प्रसिद्ध ही है। यहाँ तृतीय मन्त्र मे पूर्व के दोनो मन्त्रो की तरह 'तिरोहितम्' अर्थात् अन्तर्लीन अर्थ का रूप नहीं है, इसलिए उसका अर्थ यथाश्रुत ही है।

तीनो पवमान स्तोत्रो मे यजमानगामी फल का उद्गान करके इसके बाद 'यानीतराणि' अर्थात् जो अवशिष्ट नौ स्तोत्र है, उनमे प्राणोपासक उद्गाता प्राणभूत होकर प्राण के समान अपने लिए अन्नाद्य का उद्गान करे। क्योंकि वह उद्गाता ही इस प्रकार बृहस्पत्यादि गुणवाले प्राण को

१ उच्यत इति—सक्षेपेणेति शेष । तथा च वार्तिकम्—'पूर्वयोर्मन्त्रयोर्योऽर्थो विस्तरेणोदित पुन । मन्त्रेण स तृतीयेन सक्षेपेणाभिधीयते" ॥३६२॥ इति । अतएव हि सग्रहविवरणरूप ग्रन्थनारचयन्ति शास्त्रकृत । २ समु-च्चितार्थत्वात् । ३ पूर्वयोरिवेति—तृतीयमन्त्रस्थ इवशब्दो दृष्टान्तार्थक इतिभाव । ४ यजमानगामि-फलकम् । ५ नवसख्याकानि । ६ बृहस्पत्यादिगुणकम् । ७ अत प्राणात्मकत्वात् । ८ तमिति—स्वीय याजमान वा फलमागानेन सपादयितुमित्यर्थ । ९ तस्मादिति—उद्गातु स्वार्थफलसपत्तौ शक्तत्वादित्यर्थ । १० नवसु । ११ उद्गीयमानेषु । १२ अविशेषेण । १३ सर्वप्राणोपकारकम् । १४ हेतुवाक्यमि-त्यादि—ननु परकर्मस्थस्योद्गातु स्वार्थमागानमयुक्तमित्याशङ्क्य तस्यात्मार्थमागान सभवतीत्यत्र स एष इत्यादि तमागायतीत्यन्तम् हेतुवाक्यमादौ योजयतीत्यर्थ । १५ हेतुमद्वाक्यम् ।

ज्यमानेषु 'वरं वृणीत' यं 'कामं कामयेत तं कामं वरं वृणीत प्रार्थयेत । यस्मात्स एव एवंविदुद्गातेति तस्माच्छब्दात्प्रागेव संबध्यते । आत्मने वा यजमानाय वा यं कामं कामयत इच्छत्युद्गाता तमागायत्यागानेन साधयति ।

एवं तावज्ज्ञानकर्मभ्यां प्राणात्मापत्तिरित्युक्तम् । तत्र नास्त्याशङ्कासंभवः । अतः 'कर्मापाये प्राणापत्तिर्भवति वा न वेत्याशङ्क्यते तदा शङ्कानिवृत्त्यर्थमाह—तद्धैतल्लोकजिदेवेति । तद्ध तदेतत्प्राणदर्शनं कर्मवियुक्तं केवलमपि लोकजिदेवेति 'लोकसाधनमेव ।

तस्मादिति । किमिति व्यत्यासेन वाक्यद्वयव्याख्यानमित्याशङ्क्य 'र्थाच्चेति न्यायेन पाठक्रममनादृत्येति परिहरति—यस्मादित्यादिना । स एव एवंविदुद्गाताऽऽत्मने यजमानाय वा यं कामं कामयते तमागानेन साधयति यस्मादिति हेतुग्रन्थस्तस्मादिति प्रतिज्ञाग्रन्थात्प्रागेव संबध्यत इति योजना ।

वृत्तं कीर्तयति—एवं तावदिति । तत्र कर्मसमुच्चिते ज्ञाने' देवताप्तौ शङ्कासंभवो नास्ति मिथः सहकृतयोर्ज्ञानकर्मणोस्तदाप्तिहेतुत्वादित्याह—तत्रेति । समनन्तरं वाक्यमवतारयति—अत इति । मुमुक्षुयात्फलाप्ते'र्हं पूर्त्वादिति यावत् । न हेत्यादिना पदानि च्छित्त्वा वाक्यमादाय व्याकरोति—अलोकाह-

जानता है, इसलिए (प्राणात्मक होने से) प्राण के समान ही वह उस कामना को सम्पादन करने में समर्थ है । (उद्गाता के स्वार्थ और परार्थ फल-संपत्ति में समर्थ होने के कारण) इसलिए उन भी स्तोत्रों का उद्गान किये जाने पर (उद्गाता से) यजमान को वर माँगना चाहिए । उसे जिस फल की इच्छा हो, उसी फल के लिए वर माँगे । क्योंकि मन्त्र में 'स एव एवंविदुद्गाता' इसका सम्बन्ध 'तस्मादु तेषु वरं वृणीत' इस पूर्वभाग से है । अर्थात् वह यह इस प्रकार जानने वाला उद्गाता अपने या यजमान के लिए जिस फल की "कामयते" अर्थात् इच्छा करता है, उसी को "आगायति" अर्थात् आगान के द्वारा प्राप्त कर लेता है ।

इस प्रकार कर्मसमुच्चित ज्ञान से प्राणात्मत्व की प्राप्ति बतलायी गयी । इसमें शङ्का के लिए कोई स्थान नहीं है । इसलिए कर्माभाव अर्थात् केवल उपासना द्वारा प्राणात्मभाव की प्राप्ति होती है अथवा नहीं । इस शङ्का का समाधान श्रुति इस वाक्य से करती है—"तद्धैतल्लोकजिदेव" । 'तद्ध' अर्थात् वह यह प्राणविज्ञान कर्माभाव वाला अकेला होने पर 'लोकजिदेव' अर्थात् देवभावप्राप्ति का साधन है । 'अलोक्यताया' अर्थात् देवभावप्राप्ति की अयोग्यता की 'आशा' अर्थात् संकल्प या प्रार्थना तो होती नहीं है । ऐसा कभी लोक में नहीं होता कि ग्राम में रहने वाला हो वन में रहने वाले पुरुष

१ वर—शुभ परलोकपथ्य फलमुद्गातुः सकाशादवृणीत । २ फलम् । ३ ज्ञानकर्मभ्यामिति—कर्मसमुच्चितज्ञानेनेत्यर्थः । उद्गीथोपासनस्य ज्योतिष्टोमप्रकरणपठितत्वादिति ध्येयम् । ४ कर्मापाय इति । कर्माभाव इत्यर्थः । केवलयोपासनयेति भावः । ५ हनिपातस्यार्थोऽयम् । ६ देवभावप्रापकम् । ७ 'अर्थाच्च' ५ । १ । २ जैमिनीयसूत्रमिदम् । अस्यार्थः क्रमस्य क्वचिदार्थिकत्वाच्चेति । यथा अग्निहोत्रं जुहोति यवागूं पचतीत्यत्र क्त्वाप्रत्ययादीनामभावादनियमेनानुष्ठानमिति पूर्वपक्षे क्रमप्रापकं प्रमाणान्तरमुक्तमुक्तसूत्रेण । यवागूपाकस्याग्निहोत्रहोमफलकत्वात्पूर्वं साधनं सम्पाद्य पश्चाद्धोमनिर्वृत्तिरिति भावः । ८ पाठक्रममनादृत्येति—यवागूं पक्त्वाऽग्निहोत्रं जुहोतीति वदति ध्येयम् । ९ सति । १० निश्चितत्वात् ।

न ह एवालोक्यतया अलोकार्हत्वायाऽऽशाऽऽशंसनं प्रार्थनं नैवास्ति ह । न हि प्राणात्मन्युत्पन्नात्माभिमानस्य तत्प्राप्त्याशंसनं संभवति । न हि ग्रामस्थः कदा ग्रामं प्राप्नुयामित्यरण्यस्थ इवाऽऽशास्ते । असंनिकृष्टविषये ह्यनात्मन्याशंसनं न तत्स्वात्मनि संभवति । तस्मान्नाऽऽशास्ति कदाचित्प्राणात्मभावं न प्रपद्येयमिति ।

कस्यैतत् । य एवमेतत्साम प्राणं यथोक्तं निर्धारितमहिमानं वेदाहस्मि प्राण

स्वायेति । तदेव स्फुटयति—न हीति । तत्र दृष्टान्तमाह—न हीति । दृश्यमानमाशंसनं तर्हि कस्मिन्विषये स्यादित्याशङ्क्याऽऽह—असंनिकृष्टेति । प्राणात्मना व्यवस्थितस्य विदुषस्तदात्मभावं कदाचिदहं न प्रपद्येयमित्याशंसनं नास्तीति निगमयति—तस्मादिति ।

कर्मसमुच्चितादुपासनात्केवलाच्च प्राणात्मत्वं फलमुक्तं तत्र समुच्चितादुद्गातुर्यजमानस्य वा फलं केवलाच्चोपासनात्तयोरन्यतरस्यान्यस्य वा कस्यचिदिति जिज्ञासमानः शङ्कते—कस्येति । ॐज्ञानकर्मणोरुभयत्र समभावादुभयोरपि वचनात्फलसिद्धिः । आश्रमान्तरविषयं तु केवलज्ञानस्य लोकत्रय-

के समान कहे कि 'कब मैं ग्राम जा पाऊंगा' । अप्राप्त अनात्मवस्तुओं में ही सकल्प होता है, अपनी आत्मा के लिए उसका होना सभव नही है । (प्राणात्मभाव से विद्वान् के व्यवस्थित होने के कारण) इस लिए वह 'कभी मैं प्राणात्मभाव को प्राप्त हो जाऊं' ऐसा सकल्प नही करता ।

यह फल किसको प्राप्त होता है ? जो इस प्रकार "साम" अर्थात् यथोक्त निर्धारित महिमा वाले

१ सकल्पोऽपि । २ नन्वपरिच्छिन्नदेवताभावो वर्तमाने देहेन प्राप्तु शक्यते परिच्छेदाभिमानप्रतिबन्धात्तत्राह—स्वात्मनीति । तदुक्त वार्त्तिके—'इहैवाऽऽसुरभावस्य प्राणोऽस्मीत्यभिमानत । प्रध्वस्तत्वात्कुत शङ्का तन्मूलासद्भवाद्भवेदिति" ॥३७७॥ आसुरभाव परिच्छेदाभिमान । ३ विदुष प्राणात्मना व्यवस्थितत्वात् । ४ लोके प्रतीयमानम् । ५ आदौ समुच्चयफलिनि विचार दर्शयति—तत्रेति । स्वस्वप्रतिष्ठाज्ञानादुद्गातृगामिफलोपगमादयास्याङ्गिरसदूरगुणकप्राणज्ञानाद्याजमानफलाङ्गिकारादात्मने वा यजमानाय वेत्यादिश्रुतेश्च समुच्चितात्प्राणध्यानात्कस्य फल भवतीति चिन्तावतरतीति भाव ॥ ६ विचारान्तर दर्शयति—केवलाच्चेति । ७ उभयत्रेति—उद्गातृयजमानयोरित्यर्थं । समभावात्—समत्वात् । तथाहि—पूर्वं यत्प्राणोपासनमुक्त तत्सर्वमुद्गातृकर्तृकमेवेति स्फुट प्रतिभाति । यथा चोद्गातारमन्तरेण ज्योतिष्टोमादिकर्म न सिध्यति, तथा कर्म विना नोद्गाताऽपि सिध्येत् कर्मास्त्वम्येव तद्भावादतो यजमानवदुद्गातुरपि कर्मकल्प्यम् तथा चोद्गातरि ज्ञानकर्मणो सत्त्वसिद्धि. । एव यजमानेऽपि ज्योतिष्टोमादिकर्मप्रसिद्धमेव उद्गातृकर्तृक यत् पूर्वमुक्त विज्ञान तद्याजमानमिष्टमुद्गातुर्यजमानेन क्रीतत्वात् इत्थ यजमानेऽपि ज्ञानकर्मणो सत्त्वसिद्धम् । तथा चोभयोरपि उद्गातृयजमानयो वचनात्—'य एवमेतत्साम वेदेति' वचनोपदिष्टसमुच्चयानुष्ठानात्फलसिद्धि देवभावापत्तिरित्यर्थ । ८ श्रुते । ९ ननु समुच्चयानुष्ठानादुभयोरुद्गातृयजमानयोर्देवभावश्चेत्तर्हि केवलज्ञानाद्देवत्वाप्तिस्तयोरेवान्यस्य वा, नाद्यस्तयो समुच्चयाधि-

ॐज्ञानकर्मणोरुभयत्र समभावादुभयोरपि वचनात्फलसिद्धिरिति । अत्राहु — 'न समुच्चय उद्गातु कर्माभावादिहेष्यते । परकर्मप्रवेशात् स्यादुद्गाता न स्वकर्मणि ॥ क्रियायोगाच्च तद्याम्नो ज्ञानाभ्यासोऽपि दुर्लभ । साक्षात्कृतिश्च सन्तत्या सन्ततिश्च न विद्यते ॥ न च धीजन्ममात्रेण परमात्मप्रबोधवत् । सभाव्यो देवभावोऽस्य देवो भूत्वेति च श्रुते ॥ उद्गातुर्विदुषो नापि परकीयेन कर्मणा । समुच्चयप्रसिद्धि स्यात्तयोर्भिन्नाश्रयत्वत ॥ यजमानस्य कर्मास्ति ज्ञानन्तूद्गातृसश्रयम् । समुच्चयोऽस्तस्यापि भिन्नाधिष्ठानतो न च ॥ मत तद्याजमान स्याज्ज्ञान यत्प्रागुदीरितम् । स्वयमेव कृतार्थत्वात् नाऽपेक्षाऽस्यर्त्विज प्रति ॥ कर्मण्युद्गात्रपेक्षावज्ज्ञानेऽपीति मत

इन्द्रियविषयासङ्गजैरासुरैः पाप्मभिरघर्षणीयो विशुद्धो वागादिपञ्चकं च मदाश्रयत्वा-
दग्न्याद्यात्मरूपं स्वाभाविकविज्ञानोत्थेन्द्रियविषयासङ्गजनितासुरपाप्मदोषवियुक्तं सर्व-
भूतेषु च मदाश्रयान्नाद्योपयोगसंबन्धनमात्मा चाहं सर्वभूतानामाङ्गिरसत्वादृग्यजुःसामो-

हेतुत्वमित्यभिप्रेत्याऽऽह—य एवमिति। एवंशब्दस्य प्रकृतपरामर्शित्वात्पूर्वोक्तं सर्वं वेद्यस्वरूपं संक्षिपति—अहमस्मीत्यादिना। तस्य वागादिभ्यो विशेषं दर्शयति—इन्द्रियेति। किमिदानीं प्राणस्यैवोपास्यतया वागादिपञ्चकमुपेक्षितमिति नेत्याह—वागादीति। तस्य प्राणाश्रयत्वेऽपि कुतो देवतात्वमासङ्गपाप्मवियुक्तत्वादित्याशङ्क्याऽऽह—स्वाभाविकेति। अन्नकृतोपकारं प्राणद्वारा वागादौ स्मारयति—सर्वेति। रूपकर्मात्मके जगति प्राणस्य स्वरूपमनुसंधत्ते—आत्मा चेति। नामात्मके जगति प्राणस्याऽऽत्मात्वमुक्तं स्मार-

प्राण को जानता है। मैं इन्द्रियों के विषयों की आसक्तिरूप आसुर पापों से अप्रहसनीय विशुद्ध प्राण हूँ। वागादि पाँचो प्राण मेरे आश्रित होने के कारण शास्त्रानाधेय विज्ञान से अन्य, इन्द्रिय और विषयों की आसक्ति से होने वाले, आसुर-पापरूप दोष रहित अग्न्यादि देवतास्वरूप, और (वही वागादि पाँच प्राण) सम्पूर्ण भूतों में मेरे आश्रित होने से अन्नाद्य के उपयोग में हेतु हैं। (रूपकर्मात्मक जगत् में) आङ्गिरस होने के कारण मैं समस्त भूतों का आत्मा हूँ। (नामात्मक जगत् में) ऋक्, यजुष्, साम

कारित्वात्। नेतर तस्याप्रस्तुतत्वादित्याशङ्क्याह—आश्रमान्तरविषय त्विति। गृहस्थाश्रमेतरब्रह्मचर्याद्याश्रमस्थविषयकमित्यर्थः। कर्मानधिकृतविधुरादिसंग्रहीत् तुशब्द। १ प्राणस्य सर्ववेदमयत्वेन तदाश्रितानां तेषामाधिदैविकरूपतापन्निर्जाताऽऽध्यात्मिकपरिच्छेदविगमादिति भाव। २. प्राणशब्देन गौणानामग्रहणं टीकयति-वागिति।

यदि। उद्गातुरपि तत्तुल्य नोद्गातर्ते क्रिया यत॥ याजमान यथा कर्म ह्याश्रित्य फलमश्नुवेत्। अशाद्यागानमुद्गातुस्तज्ज्ञान तद्वदाश्रितम्॥ समुच्चयाच्चेदुभयोरुद्गातृयजमानयो। देवभाव विमर्थ्य तद्वैतदिति हि श्रुति॥ सर्वाश्रमाणा तर्हीद सामान्येनाभिधीयते। तद्वैतदिति निर्द्दत्वादुद्गातृयजमानयो॥ देवभावेन विज्ञान सस्करोत्येव तद्विमम्। परार्थमपि सत्कस्मादनपेक्ष न सिद्धये'॥१७६-८६॥ इति। उद्गातु समुच्चमाद्देवभावपक्ष दूषयति—नेत्यादिना। इहेति उद्गीथप्रकरणस्य फलस्वस्य चोक्ति। ननु कर्मणि प्रविष्टस्य कथ कर्माभाव उपास्तृत्वासौ कर्ता ह्युद्गातु समुच्चयात्फलमिति तत्र किं तस्योपास्तिस्तदीयेन कर्मणा समुच्चीयत याजमानेन वा नाद्य इत्याह—परेति॥ उद्गातृज्ञानमुपेत्य कर्माभावमुक्त्वा ज्ञानमपि तस्य नास्तीत्याह—क्रियेति। उद्गानक्रियायोगादुद्गातृमन्त्रस्यर्त्विज स्वकीयक्रियाऽनुपपत्तेस्तत्काले कर्तव्यज्ञानाभ्यासासिद्धेस्तदधीनदेवतासाक्षात्कारो न स्यादित्यर्थ। ननु विनापि ज्ञानाभ्यासेन यथाशास्त्रमुद्गानाद्देवतासाक्षात्कारो भविष्यति नेत्याह-साक्षादिति। कर्मानुष्ठानाद्वस्तुसाक्षात्कारस्यादृष्टत्वादभ्यासाच्चाभ्यस्यमानसाक्षात्कारस्य क्वचिद्दृष्टत्वादित्यर्थ। अस्तु तर्हि ज्ञानसन्तत्या देवतासाक्षात्कृतिर्मैवमुद्गातु स्वीयकर्माभावात्तत्काले कर्तव्यज्ञानसतत्यनुपपत्तेरुक्तत्वादित्याह—सन्ततिरश्चेति॥ ननु ज्ञानमात्रादेव ब्रह्मभाववद्देवभावोऽपि स्यात्किमभ्यासेनेत्याशङ्क्याऽऽह स्मारयति—न चेति। ज्ञानमात्रादभ्यास विना न देवभावो मानाभावादित्युक्त्वा मानाविरोधाच्च तथेत्याह—देव इति॥ उद्गातुर्ज्ञानभावाभावयो स्वीयकर्माभावान्न तन समुच्चयस्तज्ज्ञानस्येत्युक्तम्। अथ द्वितीयमाशङ्क्याह—उद्गातुरिति। यद्यपि विद्वानुद्गाता तथापि तस्य यजमानगामिना कर्मणा न स्वकीयविद्याया समुच्चय सिध्यति कर्मणो याजमानत्वाद्विद्यायाश्चोद्गातृस्थत्वाद्भिन्नाधारयोस्तयो समुच्चयस्य दुर्वचत्वादित्यर्थ॥ समुच्चयादुद्गातुर्देवाप्तिरिति पक्ष निरस्य यजमानस्य ततस्तद्भावपक्ष निरस्यति—यजमानस्येति। यजमानस्यापि ज्ञानकर्मणो समुच्चयो देवभाव-

द्गीथभूतायाश्च वाच आत्मा तद्व्याप्तेस्तन्निर्वर्तकत्वाच्च मम साम्नो गीतिभावमापद्यमानस्य बाह्यं धनं भूषणं सौस्वर्यं ततोऽप्यान्तरं सौवर्णं लाक्षणिकं सौस्वर्यं गीतिभावमापद्यमानस्य मम कण्ठादिस्थानानि [1]प्रतिष्ठा । एवंगुणोऽहं पुत्तिकादिशरीरेषु [2]कार्त्स्न्येन

यति—ऋगिति । सति सामत्वे गीतिभावावस्थाया प्राणस्योक्तं बाह्यमान्तरं च सौस्वर्यं सौवर्ण्यमिति गुणद्वयमनुवदति—ममेति । तस्यैव संकल्पिकीं प्रतिष्ठामुक्तामनुस्मारयति—गीतीति । यद्वेत्यादिनोक्त'

और उद्गीथरूपा वाक्—इनमे व्याप्त और इनका निष्पादक होने के कारण मैं (प्राण) ही आत्मस्वरूप हू । गीतिभाव को प्राप्त हुई अवस्था मे मुझ साम का सुस्वरतारूप धन बाह्य भूषण है । उससे भी आन्तर धन सुस्वरतारूप सुवर्णता है, जो लाक्षणिक है । गीतिभाव को प्राप्त हुए मुझ प्राण के कण्ठादि स्थान (और अन्नपरिणामी देह) प्रतिष्ठा हैं । इस प्रकार गुणों वाला आधिदैविक स्वरूप से अमूर्त एव सर्वगत होने के कारण मैं पुत्तिकादिशरीरो मे सर्वावयव—अवच्छेदरूप से व्याप्त हूँ । इस

१ प्रतिष्ठति—अन्नपरिणामो देहश्चेति शेष । २ सर्वावयवावच्छेदेन । ३ सर्वसमत्वम् ।

प्राप्तिहेतुरनुष्ठयो नास्तीत्यनात सन्दपरामृष्ट पूर्वार्द्धोपदिष्ट हेतुमेव स्पष्टयति—भिन्नेति ॥ उभयो समुच्चयाद्देवभाव पूर्ववादिना निरस्ते सिद्धान्ती यजमानस्य ततस्तद्भाव साधयति—मतमिति । यत्पूर्वं प्राणोपासनमुक्त तद्याजमानमिष्टमुद्गातुर्यजमानेन क्रीतत्वात् कर्म च यजमानस्योभयसम्मतमत समुच्चयाद्देवत्व तस्य युक्तमित्यर्थ । असमुच्चयवादी शङ्कते—स्वयमिति । कर्मवज्ज्ञानमपि याजमान चेत्तर्हि तस्योभयत्र स्वयमेव शक्तत्वादुद्गातार प्रति नापेक्षा स्यादृश्यते च तदपेक्षा तस्मादौद्गात्रमेवोपासनमिति न समुच्चयाद्देवत्व यजमानस्येत्यर्थं ॥ सिद्धान्ती समुच्चय साधयति—कर्मणीति । यदि कर्मणि याजमाने निष्पत्त्ययमुद्गात्रपेक्षति मत तर्हि तद्वदेव ज्ञानेऽपि याजमाने तन्मार्गमितरापेक्षा तथा च समुच्चयाद्यजमानस्य देवत्वमित्यर्थ । सम्प्रत्युद्गातुरपि समुच्चयाद्देवत्व साधयति—उद्गातुरिति । यथोद्गातार विना ज्योतिष्टोमादिक्रिया न सिध्यति तथा सा विना नाद्गात्रापि सिध्यति क्रियारूढस्यैव तदभावादतो यजमानवदुद्गातुरपि कर्मवत्त्व ज्ञानन्तु तत्त्व क्रीतत्वेऽप्युद्गातुस्तदाश्रयत्वात्तस्मात्तस्यापि समुच्चयाद्देवत्व युक्तमित्यर्थ ॥ ननु भिन्नाधिष्ठानत्वान्न समुच्चयो ज्ञानकर्मणोरिति तत्राह—याजमानमिति । यथा यजमानस्वामिक कर्माऽऽश्रित्य तत्र समुच्चित तदुद्गातुराध्यान फल साधयति तथा तदीयज्ञानमाश्रित्य तेन समुच्चितमितरत्कर्मफल साधयति यजमानकर्माश्रित तेन समुच्चितमितरज्ञानमपि स्वफल साधयदतो भिन्नाधिकरणयोरपि ज्ञानकर्मणो समुच्चयादुभयोर्देवभाव सम्भवतीत्यर्थ । उद्गातृयजमानसव धवत्तदीयज्ञानकर्मणोरपि सम्बन्धपत्यर्थो [illegible] ॥ द्वयो समुच्चयाद्देवत्वमिति सिद्धान्तिना समर्थिता पूर्ववाद्यनुवदति—समुच्चयादिति । केवलज्ञानाद्देवाप्तिरुद्गातृयजमानयोरन्यस्य वा माऽस्त्वनयो समुच्चयाधिकारित्वान्नेतरस्य स्यात्प्रत्युत्वादिति मत्वाऽऽह—विमर्येति ॥ तमस्यूयाना सर्वेषा त्रैवर्णिकाना केवलज्ञानाद्देवाप्तिरित्युत्तरमाह—सर्वेति । प्रवृत्तवाक्यप्रामाण्यात्केवलज्ञानात् फलमिष्ट चेत्तर्हि तत्र सर्वाधिकृताना कर्मिणामविशेषाद ज्ञान फलवदुच्यत इत्यर्थ । प्रवृत्तयोरेव द्वयोरिद ज्ञान [illegible] न स्यादित्याशङ्क्याह—सिद्धत्वादिति । तयो समुच्चयाधिकारित्वस्य स्थितत्वान्न केवलज्ञानेऽधिकारितेत्यर्थ ॥ केवलज्ञानस्य देवाप्तिहेतुत्वमयुक्त समुच्चितस्यैव तद्दृष्टेरित्याशङ्क्य संमुनिश्चन्यायदाह—देवेति । उद्गीथज्ञानमुद्गातृकर्तृक यजमानस्वामिकमपि कर्तार देवभावेन योजयति विमुनानपेक्ष कर्तृं स्वामिनमेव तदुपासन वसुदेवभावमापादयति इत्यता ज्ञान केवलमपि तस्मात तद्भावलाभाय भवेदित्युपपन्न केवलस्यापि ज्ञानस्य देवाप्तिहेतुत्वमित्यर्थ ॥

अथ प्रथमाध्यायस्य चतुर्थं ब्राह्मणम्।

आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदा-
त्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभव-
त्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथा-
न्यन्नाम प्रब्रूते यदस्य भवति स 'यत्पूर्वोऽस्मात्सर्व-

उत्पत्ति से पूर्व यह पुरुष की तरह शिरपादादि वाला विराडात्मा ही था। उस प्रजापति ने आलोचना करने पर भी अपने से भिन्न किसी को नहीं देखा। (सर्वात्मरूप से अपने को ही देखने के कारण इस श्रौत विज्ञानजनित संस्कार से युक्त) उस प्रजापति ने "अहमस्मि" मैं हूं ऐसा कहा, इसीलिए वह 'अहम्' नाम वाला हो गया। अतएव इस समय भी सम्बोधन करने पर पहले प्रत्येक

---

परिसमाप्तो'ऽमूर्तत्वात्सर्वगतत्वाच्चेत्या एवमभिमानाभिव्यक्तेर्वेदोपास्त इत्यर्थः ॥२८॥

इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

आत्मैवेदमग्र आसीत्। ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजापतित्वप्राप्तिर्व्याख्याता। केवलप्राणदर्शनेन च तद्वैतल्लोकजिदेवेत्यादिना। प्रजापतेः 'फलभूतस्य सृष्टिस्थितिसंहारेषु जगतः स्वातन्त्र्यादिविभूत्युपवर्णनेन ज्ञानकर्मणोर्वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवम-

---

परामृशति—एवंगुणोऽहमिति। इत्येवमभिमानाभिव्यक्तिपर्यन्तं यो ध्यायति 'तस्येदं फलमित्युपसंहरति—इतीति ॥२८॥

इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

ब्राह्मणान्तरमवतार्य पूर्वेण संबन्धं वदन् वृत्तं कीर्तयति—आत्मैवेत्यादिना। केवलप्राणदर्शनेन च प्रजापतित्वप्राप्तिर्व्याख्यातेति संबन्धः। इदानीमात्मेत्यादेस्तद्धेदमित्यत प्राक्तनग्रन्थस्या'ऽऽपाततस्तात्पर्यमाह—प्रजापतेरिति। आदिपदेन सर्वात्मत्वादि गृह्यते'। फलोत्कर्षोपवर्णनं कुत्रोपयुज्यते तत्रा-

---

रीति से अभिमान की अभिव्यक्तिपर्यन्त जो प्राणों को जानता है, उसकी उपासना करता है, (कर्म से अनधिकृत होने पर भी) उसको उपरोक्त फल मिलता है, यह अर्थ है ॥२८॥

इस प्रकार प्रथम अध्याय का तृतीय ब्राह्मण पूर्ण हुआ ॥३॥

प्रथम अध्याय चतुर्थ ब्राह्मण

"पहले यह आत्मा ही था'। समुच्चित ज्ञान और कर्म से तथा 'यह प्राणविज्ञान कर्माभाव वाला अकेला होने पर देवभावप्राप्ति का साधन है' इत्यादि श्रुतिवाक्य द्वारा केवल प्राणविज्ञान से प्रजापतित्व की प्राप्ति का प्रतिपादन किया गया। समुच्चयादिफल-भूत प्रजापति की जगत् की सृष्टि,

---

१. यजमानावस्य। २ अमूर्तत्वादिति—आधिदैविकस्वरूपणेति बोध्यम्। ३ समुच्चयादे। ४ कर्मानधिकृतस्यापीति भाव। ५ तद्धेदमितिसप्तमक मन्त्रम्। ६ आपातत इति—अविवक्षात इत्यर्थ। स्वानभिमततात्पर्यमिति यावत्। ७ आदिना सर्वनियन्तृत्वादि।

संभूतोऽनुवीक्ष्यान्वालोचनं कृत्वा कोऽहं किंलक्षणो वाऽस्मीति नान्यद्वस्त्वन्तरमात्मनः प्राणपिण्डात्मकात्कार्यकरणरूपान्नापश्यन्न ददर्श। केवलं त्वात्मानमेव सर्वात्मानमपश्यत्। तथा पूर्वजन्मश्रौतविज्ञानसंस्कृतः सोऽहं प्रजापतिः सर्वात्माऽहमस्मीत्यग्रे व्याहरद्व्याहृतवान्।

ततस्तस्माद्यतः पूर्वज्ञानसंस्काराद्आत्मानमेवाहमित्यभ्यधादग्रे तस्मादहंनामाऽभवत्तस्योपनिषदहमिति श्रुतिप्रदर्शितमेव नाम वक्ष्यति। तस्माद्यस्मात्कारणे प्रजापतावेवं

---

एवेति। स्वरूपधर्मविषयौ द्वौ विमर्शौ। नान्यदिति वाक्यमादायाक्षराणि व्याचष्टे—वस्त्वन्तरमिति। दर्शनशक्त्यभावादेव वस्त्वन्तरं प्रजापतिर्न दृष्टवानित्याशङ्क्याऽऽह—केवलं त्विति। सोऽहमित्यादि व्याचष्टे—तथेति। यथा सर्वात्मा प्रजापतिरहमिति पूर्वस्मिञ्जन्मनि श्रौतेन विज्ञानेन संस्कृतो विराडात्मा तथेदानीमपि फलावस्थः सोऽहं प्रजापतिरस्मीति प्रथमं व्याहृतवानिति योजना।

व्याहरणफलमाह—तत इति। किमिति प्रजापतेरहमिति नामोच्यते साधारणं हीदं सर्वेषामित्याशङ्क्योपासनार्थमित्याह—तस्येति। आध्यात्मिकस्य चाक्षुषस्य पुरुषस्याहमिति रहस्य नामेति यतो वक्ष्यत्यतः श्रुतिसिद्धमेवैतन्नामास्य ध्यानार्थमिहोक्तमित्यर्थः। प्रजापतेरहंनामत्वे लोकप्रसिद्धिं प्रमाणयितुमुत्तरं वाक्यमित्याह—तस्मादिति।

---

आदि लक्षण वाले मनु आदि का स्रष्टा वह ही विराट् था। पहले उत्पन्न हुए उस प्रजापति ने "अनुवीक्ष्य" अर्थात् (अपने को त्रैलोक्यात्मक विराट्स्वरूप देखने के अभ्यस्त पश्चात् यथोक्तरूप में) अन्वालोचन करके "मेरा क्या स्वरूप है? मैं किस धर्म वाला हूं?" इस प्रकार विचार करके अपने प्राणसमुदायात्मक और देहेन्द्रिय-संघात से भिन्न (स्वतन्त्र या परतन्त्र) कोई पदार्थ नहीं देखा। अपने को ही अद्वितीय, सर्वात्मरूप से देखा। (दूसरा कोई पदार्थ न देखकर विराडात्मा ने क्या किया?)। इस तरह पूर्वजन्म के श्रौतविज्ञानजनित संस्कार से युक्त होने के कारण (प्राचीन अभ्यास के बल से प्रत्यगात्मा में ही मति हुई) 'वह सर्वात्मा प्रजापति मैं हूं', यह पहले "व्याहरत्" अर्थात् कहा।

---

१. अनुशब्द. पादवात्यवाची-तथा च त्रैलोक्यात्मकं वैराजरूपमहमस्मीति यद्दर्शनमस्य यजमानावस्थायामभ्यस्त तादृशदर्शनादनु पश्चात्तयोक्तदर्शनफलं यथोक्तरूपं वीक्ष्येत्यानयेनाह—अन्विति। २. किंस्वरूप.। ३ किंधर्मकः। ४. तदानीं विराड्देहादृहन्तरस्यानुत्पत्तेरात्मीयं पिण्डमात्रं स दृष्टवांस्ततोऽन्यत् स्वतन्त्रं परतन्त्रं वा न किंचिदित्यभिप्रेत्याह—नान्यदिति। ५. प्राणसमुदायात्मकात्। ६ अद्वितीयम्। ७ अपरमपश्यन् विराडात्मा किं कृतवानित्यपेक्षायामाह—तथेति। ८. प्राचीनाभ्यासबलात्प्रत्यगात्मन्येवास्य मतिरभूदित्यानयेनाह—सर्वात्मेति। तथा च वार्तिके—"त्रैलोक्यात्मकदेहात्मा नापश्यदपरं पृथक्। भिन्नार्थानभिसम्बन्धात् प्रतीच्यैवास्य धीरभूत्॥ सशब्दं दर्शनं यादृक् प्रागभ्यस्तं तथैव स। व्याजहार फलावस्थो ह्यहमित्यात्मवाचकमिति" ॥४१-४२॥ ९. इति-आत्मवाचिना शब्देन। १०. प्रथमम्। ११. इति वक्ष्यतीति सम्बन्ध.। १२. बृ० उ० ५. ७. २। १३. गोप्यम्। १४. ध्यानार्थमिति-एतेन सत्स्वपि नामान्तरेषु किमित्यनेनैवात्मानमुक्तवानित्युक्तमपास्तम् उपासनार्थत्वादस्येत्युक्तत्वादिति ध्येयम्। १५. प्रजापतिरहमित्यग्रे व्याजहार ततोऽहंनामाभूदित्यत्र किं मानमिति।

'वृत्तं तस्मात्तत्कार्यभूतेषु प्राणिष्वेतर्ह्यं तस्मिन्नपि काल आमन्त्रितः कस्त्वमित्युक्तः सन्नहमयमित्येवाग्र उक्त्वा कारणात्माभिधानेनाऽऽत्मानमभिधायाग्रे पुनर्विशेषनामजिज्ञासवेऽथानन्तरं विशेषपिण्डाभिधानं देवदत्तो यज्ञदत्तो वेति प्रब्रूते कथयति यन्नामास्य विशेषपिण्डस्य मातापितृकृतं भवति तत्कथयति।

स च प्रजापतिः पूर्वंजन्मनि सम्यक्कर्मज्ञानभावनानुष्ठानैः साधकावस्थायां यद्यस्मात्कर्मज्ञानभावनानुष्ठानैः प्रजापतित्वं प्रतिपित्सूना पूर्वं प्रथमः सन्नस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्सर्वस्मादादावौषददहदिकिमासङ्गाज्ञानलक्षणान्सर्वान्पाप्मनः प्रजापतित्वप्रतिबन्धकार-

---

'उपासनार्थं प्रजापतेरहनामोक्त्वा' पुरुषनामनिर्वचनं करोति—स चेत्यादिना। पूर्वस्मिञ्जन्मनि साधकावस्थायां कर्माद्यनुष्ठानैरहमहमिकया प्रजापतित्वप्रेप्सूनां मध्ये पूर्वो य सम्यक्कर्माद्यनुष्ठानैः सर्वं प्रतिबन्धकं यस्मादददहत्तस्मात्स प्रजापतिः पुरुष इति योजना। 'उक्तमेव स्फुटयति—प्रथम सन्निति। सर्वस्मादस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्प्रथमः सन्नौषदिति सबन्धः। आकाङ्क्षापूर्वकं बाह्यं

---

'तत' अर्थात् इसी से, क्योंकि पूर्वज्ञान के सस्कारो से अपने को ही उसने प्रारम्भ मे 'अहम्' इस (आत्मवाची शब्द) से कहा, इसलिये वह अहनाम वाला हुआ। श्रुतिप्रतिपादित अहनामा उस आत्मा को उपनिषद् आगे बताएगी। इसलिए जिस कारण से प्रजापति 'अह' नामत्व से निष्पन्न हुआ, इसी से 'एतर्हि' अर्थात् इस समय भी उसके कार्यभूत जीवो मे 'तू कौन है', ऐसा किसी को जब पूछा जाता है, तो वह पहले 'यह मैं हू,' इस प्रकार अपने को कारणात्मा विराड अभिधायक शब्द से बतलाता है। फिर जब विशेष नाम को पूछा जाता है, तो वह उसे विशेष पिण्डात्मक शरीर का 'देवदत्त या यज्ञदत्त' इस प्रकार नाम कहता है, अर्थात् वह विशेषनाम जो इसके विशेषपिण्डात्मक शरीर के माता पिता द्वारा रखा जाता है, बतलाता है।

उस प्रजापति ने पूर्वजन्म की साधक अवस्था मे सम्यक कर्म और ज्ञान के अभ्यासरूप अनुष्ठानो द्वारा इन कर्म और ज्ञान के अभ्यासरूप अनुष्ठानो से प्रजापतित्व चाहने वालो मे 'पूर्व' अर्थात् प्रधान होने के कारण, इस प्रजापतित्व प्राप्ति के इच्छुक "सर्वस्मात्' अर्थात् पूरे समुदाय से "औषत्" अर्थात् दग्ध कर दिया। क्या दग्ध कर दिया? प्रजापतित्व मे प्रतिबन्धक कारणभूत आसक्ति और अज्ञान लक्षण वाले सम्पूर्ण पापो को दग्ध कर दिया। ऐसा होने से पुरुष हुआ अर्थात् पूर्व मे दग्ध कर दिया, इसलिए पुरुष हुआ।

---

जिज्ञासायां प्रत्यक्षं तत्र मानमित्यभिप्रेत्य तस्मादित्यादिवाक्यमवतारयति प्रजापतेरिति। तथा च वार्तिके—"तत्कार्येण लिङ्गेन ज्ञापयन् कारणाभिधाम्। तस्मादपीति वक्त्येता प्रसिद्धिं लोकसाक्षिकीमिति' ॥४५॥ प्रजापतिकार्यभूतप्रजास्वपगतेनाहमिति व्याहरणेन प्रथमप्रवृत्तेन लिङ्गेन कारणेऽपि तस्मिन्नहमित्यभिधानं तस्मादित्यादिना ज्ञापयन् वेदस्तस्याह नामत्वे लोकप्रसिद्धिं च प्रमाणयतीत्यर्थ। १ अहमिति व्याहरणेनाह नामत्वं निष्पन्नमित्यर्थः। २ कारणात्मनो विराजोऽभिधायकेन शब्देनेत्यर्थः। ३ भावना—अभ्यास। ४ प्रधान। ५ उपासनार्थमिति—विराज सर्वात्मत्वस्य दर्शितत्वात् पुरुषत्वानियमात् स वै पुरुष इति स्मृतिविरोध इत्याशङ्क्येत्यादौ दोष। ६ तदर्थमेव। ७ अहमहमिति अस्यामिति व्रीह्यादित्वाद् ठन्। ८ उक्तमिति—पूर्वशब्दोक्तं मुख्यत्वमेवेत्यर्थः।

णभूतान् । यस्मादेवं तस्मात्पुरुषः पूर्वमौषदिति पुरुषः ।

यथाऽयं [1]प्रजापतिरोषित्वा प्रतिबन्धकान्पाप्मनः सर्वान्पुरुषः [2]प्रजापतिरभवत् । [3]एवमन्योऽपि ज्ञानकर्मभावनानुष्ठानवह्निना केवलं ज्ञानबलाद्वोषति भस्मी करोति ह वै स तं कं योऽस्माद्विदुषः पूर्वः प्रथमः प्रजापतिर्बुभूषति भवितुमिच्छति तमित्यर्थः । तं दर्शयति—य एवं वेदेति सामर्थ्याज्ज्ञानभावनाप्रकर्षवान् । नन्वनर्थाय प्राजापत्यप्रतिपित्सैवंविदा चेद्दह्यते । नैष दोषः । ज्ञानभावनोत्कर्षाभावात्प्रथमं प्रजापतित्वप्रतिपत्त्यभावमात्रत्वा-

दर्शयति—किमित्यादिना । पूर्वं प्रजापतित्वप्रतिबन्धकप्रध्वंसित्वे सिद्धमर्थमाह—यस्मादिति ।

[4]पुरुषगुणोपासकस्य फलमाह—यथेति । अयं प्रजापतिरिति भविष्यद्वृत्त्या साधकोक्तिः, पुरुषः प्रजापतिरिति फलावस्थः स कथ्यते । कोऽसावोषतीत्यपेक्षायामाह—त दर्शयतीति । पुरुषगुणः प्रजापतिरहमस्मीति यो विद्वान्सोऽन्यानोषतीत्यर्थः । विद्यासाम्ये कथमेषा व्यवस्थेत्याशङ्क्याऽऽह—सामर्थ्यादिति । हेतुसाम्ये दाहकत्वानुपपत्तेस्तत्प्रकर्षवानितरान्दहतीत्यर्थः । प्रसिद्धं दाहमादाय चोदयति—नन्विति । [6]तथा च तत्प्रेप्साऽयोगात्तदुपास्त्यसिद्धिरित्यर्थः । विवक्षितं दाहं दर्शयन्नुत्तरमाह—

जिस प्रकार (साधकावस्था वाला) यह प्रजापति सम्पूर्ण प्रतिबन्धक पापों को जला कर (फलावस्था वाला) प्रजापति पुरुष हुआ । इस प्रकार (साधकावस्थासम्पन्न प्रजापति के समान) दूसरा भी, ज्ञान और कर्म के अभ्यास की अनुष्ठानमयी अग्नि द्वारा केवल ज्ञान के बल से उसको "ओषति" अर्थात् भस्मसात् कर देता है। किसे (भस्मसात् करता है) ? जो इस विद्वान् से "पूर्व" अर्थात् प्रधान प्रजापति होना चाहता है, उसको भस्मसात् कर देता है ऐसा इसका आशय है । उसे ही श्रुति कहती है 'य एवं वेद' अर्थात "जो इस प्रकार जानता है" (हेतुसाम्य से दाहकत्व-शक्ति असिद्ध होने पर भी) सामर्थ्य से वह ज्ञान भावना से उत्कर्षवान् है। यदि वह इस प्रकार उपासना करने वाले से भस्म हो जाता है, तब तो प्रजापतित्व प्राप्ति की इच्छा ही अनर्थ का कारण है। (शङ्का समाधान करते हैं—)इसमें कोई दोष नही है। क्योंकि ज्ञानभावना के उत्कर्ष का अभाव होने से प्रधान प्रजापतित्व न प्राप्त कर सकना ही उसका दाह है । उत्कृष्टसाधनसम्पन्न (उपासक) प्रधान प्रजापतित्व की प्राप्ति करता है, न्यूनसाधनसम्पन्न (साधक) नहीं प्राप्त कर सकता, इस कारण से वह उसे भस्म कर देता है। यह प्रसिद्ध नहीं है कि उत्कृष्टसाधनसम्पन्न अपने से इतर न्यून-

१ साधकावस्थ । २ फलावस्थ । ३ साधकावस्थप्रजापतिवत् । ४ नामान्तरेषु सत्स्वपि किमिति पुरुषनामनिरुक्तिरित्याशङ्क्य तथाम्नातस्योपास्त्यर्थमिति मत्वा । फलमाध्यमवतारयति—पुरुषगुणोपासकस्येति । ५ ननु यागादौ पेन्द्रादिधीवत् पुरुषगुणे विराजि धीर्नहि तत्र ध्यातुस्तादात्म्यम् अन्यस्यान्यत्वायोगादिति चेदत्राहुर्वार्तिके—"पुरुषोऽस्मीत्युपास्त्यर्थं पुरुषार्थोऽयमुच्यते । ओषतीत्युक्तितः साक्षात् गुणोपास्तिफलश्रवात्" ॥५२॥ पुरुषगुणे विराज्यहम्ग्रहोपास्तिरिष्टत्यत्र पुरुषनिरुक्तिं प्रमाणयति—इत्युपास्त्यर्थमिति । फलान्तरादृष्टेर्ध्यानार्थपुरुषनामनिर्वचनेऽपि कथं तद्गुणे विराज्यहम्ग्रहोपास्तिरित्याशङ्क्य आह—ओषतीति । साक्षात्सूत्रभावस्य पुरुषगुणविराडुपास्तिफलस्य यथोक्तवाक्यतः श्रुतत्वात्तन्न्यायेन विराज्यहम्ग्रहोपास्तिसिद्धिरित्यर्थः । ६ प्राजापत्यप्रेप्साया अनर्थहेतुत्वे च ।

**सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षां चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति ॥२॥**

वह पुरुषाकार प्रथम शरीरी प्रजापति भयभीत हो गया। इसीलिए आज भी अकेला पुरुष डरता है। पुन उस प्रजापति ने यह विचार किया, यदि मुझसे भिन्न कोई नही तो फिर मैं किससे डरता हूं ? इतना विचार करते ही उसका भय जाता रहा, क्योंकि भय का कोई कारण दीखता नही था। भय तो सदा दूसरे से होता है (आत्मैकत्व दर्शन से प्रजापति का भय मिट गया। अत आज भी आत्मैकत्व दर्शन ही भय से मुक्त कराने वाला है) ॥२॥

दाहस्य। उत्कृष्टसाधनः प्रथमं प्रजापतित्वं प्राप्नुवन्न्यूनसाधनो न प्राप्नोतीति स त दहतीत्युच्यते न पुनः प्रत्यक्षमुत्कृष्टसाधनेनेतरो दह्यते। यथा लोके आजिसृतां यः प्रथममाजिमुपसर्पति तेनेतरे दग्धा इवापहृतसामर्थ्या भवन्ति तद्वत् ॥१॥

यदिदं तुष्टूषितं कर्मकाण्डविहितज्ञानकर्मफलं प्राजापत्यलक्षणं नैव तत्संसारविष-

नैष दोष इति। तदेव स्पष्टयति—उत्कृष्टेति। प्राप्नुवन्भवतीति शेषः। औपचारिकं दाहं दृष्टान्तेन साधयति—यथेति। आजिर्मर्यादा तां सरन्ति धावन्तीत्याजिसृतस्तेषामिति यावत् ॥१॥

ज्ञानकर्मफलं सौत्रं पदमुत्कृष्टत्वान्मुक्तिस्तदन्यमुक्त्यभावात्तद्धेतुसम्यग्धीसिद्धये प्रवृत्तिरनर्थिकेत्याशङ्क्य सोऽबिभेदित्यस्य तात्पर्यमाह—यदिदमिति। तुष्टूषितं स्तोतुमभिप्रेतमिति यावत्। आह

साधन वाले को जला ही डालता हो। लोक मे जिस प्रकार 'आजि' अर्थात बालकादि द्वारा क्रीडा विशेष मे की हुई सीमा को जो 'आजिसृत्' अर्थात् सीमा तक पहुचने के लिए दौडने वाला पहले प्राप्त कर लेता है, उस पुरुष से दूसरे पुरुष दग्ध से हो जाते है, अर्थात् अपने को सामर्थ्यहीन सा अनुभव करने लगते हैं, उसी प्रकार यहाँ भी समझना चाहिए ॥१॥

यहाँ जिस प्रजापतित्व लक्षण वाले कर्मकाण्डविहितज्ञान और कर्म के फल की स्तुति करनी

१ प्र.सद्धम्। २ कर्मप्रधानं तृतीयब्राह्मणमपि कर्मकाण्डशब्दितम्। ३ नैवमि—ननु ज्ञानकर्मभ्यामाप्तसूत्रत्वादशेषनार्थध्वस्तेर्न सौत्रं फलं संसारान्तर्गतमित्याशङ्क्य समादधुर्वार्तिके— "प्रत्यग्याथात्म्यविज्ञानविरहादन्यसाधनं। यावत्किञ्चित्फलं नादः सर्वानर्थनिवृत्तये॥ निरस्तातिशयं कर्म ज्ञानं चाऽप्यपि बालवत्। यतोऽविभेदविद्यावानतोऽसावस्मदादिवत् ॥ न ह्यविद्यामनादाय वस्तुयाथात्म्यसंश्रयात्। कश्चिदबिभेत्यबिभेच्च तेनाविद्याप्रजापतिः॥ प्रत्यग्याथात्म्यविज्ञानं निःशेषपुरुषार्थकृत्। इत्येतत्प्रतिपत्त्यर्थं विराट्स्थानस्य कुत्सनमिति ॥" ५४-५७॥ ज्ञानादिफलस्य प्रजापतेर्न भयादि युक्तं तद्धेत्वविद्याऽभावादित्याशङ्क्याह—निरस्तेति। तस्य च विद्यमानापि विद्याऽऽरब्धकर्मप्रतिबन्धात्र भवाहमनाऽविद्या निवर्तयत्यधुनातनजीवन्मुक्तवदिति भावः॥ विराजो भयहेतुरविचारतीत्यन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाह—नहीति॥ कर्मज्ञानफलभूतोऽपि विराडुत्कृष्टत्वेन प्रागुक्तोऽधुना निन्द्यते तत्कथं पङ्क्तिप्रशानन्याय्यो नावतरेदित्याशङ्क्याह—प्रत्यगीति। ४ संसाररूपं विषमर्थम्। ५ तदेव—दाहस्योत्कर्षरूपत्वमेव। ६ आजिर्मर्यादेति—बालादिभिः क्रीडाविशेषे कृता सीमेति यावत्।

यमत्यक्रामदितीममर्थं प्रदर्शयिष्यन्नाह—

सोऽबिभेत्स प्रजापतिर्योऽयं प्रथमः [1]शरीरी पुरुषविधो व्याख्यातः सोऽबिभेद्भीतवानस्मदादिवदेवेत्याह। यस्मादयं पुरुषविधः शरीरकरणवानात्मनाशविपरीतदर्शनवत्त्वादबिभेत्तस्मात्तत्सामान्यादद्यत्वेऽप्येकाकी बिभेति। किंचास्मदादिवदेव भयहेतुविपरीतदर्शनापनोदकारणं [2]यथाभूतात्मदर्शनं सोऽयं प्रजापतिरीक्षामीक्षणं चक्रे [3]कृतवान्ह स्म। कथमित्याह—यद्यस्मान्मत्तोऽन्यदात्मव्यतिरेकेण वस्त्वन्तरं [4]प्रतिद्वंद्वीभूतं नास्ति तस्मिन्नात्मविनाशहेत्वभावे [5]कस्मान्नु बिभेमीति।

विवक्षितार्थसिद्ध्यर्थं हेतु भयभावत्वमिति शेषः। ज्ञानकर्मफलं त्रैलोक्यात्मकसूत्रत्वमुत्कृष्टमपि संसारान्तर्मूतमेव न कैवल्यमिति वक्तुमुत्तरं वाक्यमित्यर्थः। अहमेकाकी कोऽपि मा हनिष्यतीत्यात्मनाशविषयविपरीतज्ञानवत्त्वात्प्रजापतिर्भीतवानित्यत्र किं प्रमाणमित्याशङ्क्य कार्यगतेन भयलिङ्गेन कारणे प्रजापतौ तदनुमेयमित्याह—यस्मादिति। तत्सामान्यादेकाकित्वाविशेषादिति यावत्। प्रजापतेः संसारान्तर्मूतत्वे हेत्वन्तरमाह—किंचेति। यथाऽस्मदादिभी रज्जुस्थाण्वादौ सर्पपुरुषादिभ्रमजनितभयनिवृत्तये विचारेण तत्त्वज्ञानं सपाद्यते तथा प्रजापतिरपि भयस्य तद्धेतोश्च विपरीतधियो ध्वस्तिहेतुं तत्त्वज्ञानं विचार्य संपादितवानित्यर्थः। परमार्थदर्शनमेव प्रश्नपूर्वकं विशदयति—कथमित्यादिना। तस्मिन्नित्यत्र तस्मादित्यादौ पठितव्यम्।

मच्छब्दोपलक्षित प्रत्यक्चैतन्यमद्वितीयब्रह्मरूपेण ज्ञात्वा अहेतु भीति प्रजापतिरक्षिपविरयुक्त-

अभीष्ट है, वह समाररूप अर्थ से बाहर नहीं है। इसी को स्पष्ट करने के लिए श्रुति कहती है—

'सोऽबिभेत्' वह डर गया। 'स' अर्थात् वह प्रजापति, जिसकी पुरुषविध प्रथम शरीरी के रूप में व्याख्या कर चुके है, वह 'अबिभत्' अर्थात् हम लोगो के समान ही भययुक्त हो गया—ऐसा श्रुति कहती है। यह पुरुषविध शरीर और इन्द्रियो वाला प्रजापति विपरीतज्ञान से अपना नाश देखकर डर गया था, इसीलिए उससे समानता होने के कारण आज भी अपने को अकेला पाकर मनुष्य डरता है। इसके अतिरिक्त हमारे समान ही प्रजापति को भी भय-हेतुक विपरीतज्ञान की निवृत्ति यथार्थ आत्मदर्शन से हुई। उस प्रजापति ने 'ईक्षाचक्र' अर्थात् विचार किया। कैसे विचार सम्पादित किया ? इस पर कहा जाता है—'यत्' अर्थात् यदि मुझसे "अन्यत्" अर्थात् भिन्न अनात्मभूत प्रतिद्वन्द्वी कोई अनात्म वस्तु नहीं है तो आत्मविनाश का कोई कारण न होने पर (प्रत्यक्, अभिन्न, अद्वितीय, चैतन्य, आनन्द ब्रह्मस्वरूप) मैं किससे भयभीत होता [illegible] ?

१ "स वै शरीरी प्रथम" इत्यादिश्रुत्युक्त। २ ईक्षणव्याख्यानमिदम्। ३ विचारेण संपादितवान्। ४ अनात्मभूतम्। ५ कस्मान्न्विति प्रत्यगभिन्नाद्वितीयचैतन्यानन्दब्रह्मस्वरूपोऽहमतः कस्मादित्यर्थः। तदुक्तं वार्तिके—'प्रत्यक्ता ब्रह्मणो यस्माद्ब्रह्मत्वं चाऽऽत्मनः स्वतः। एवं सति कुतो मे भीरिति विद्वान्स्वपायते'॥६७॥ इति। तस्माद्द्वितीयाभावाद्भयहेतोरभावादिति शेषः। ६ श्रुत्यतिरिक्तमित्यर्थः। ७ भयेति—प्रजापतिकार्यभूतान्जनगत भय कारणपूर्वकम् कार्यत्वाद्घटादिवदित्यनुमानेनेत्यर्थः। न च प्रजायते भय प्राजापत्य भय विना हेत्वं तदेव स्यात् कारणानुविधायित्वात्कार्यस्येति।

तत एव यथाभूतात्मदर्शनादेवास्य प्रजापतेर्भयं वीयाय विस्पष्टमपगतवत् । तस्य प्रजापतेर्यद्भयं तत्केवलाविद्यानिमित्तमेव परमार्थदर्शनेऽनुपपन्नमित्याह—कस्माद्ध्यभेष्य-त्किमित्यसौ भीतवान्परमार्थनिरूपणायां भयमनुपपन्नमेवेत्यभिप्रायः । यस्माद्द्वितीयाद्व-स्त्वन्तराद्वै भयं भवति । द्वितीयं च वस्त्वन्तरमविद्याप्रत्युपस्थापितमेव । नह्यदृश्यमानं द्वितीयं भयजन्मनो हेतुः "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति मन्त्रवर्णात् । यच्चैकत्वदर्शनेन भयमपनुनोदापनोदितं तद्युक्तम् । कस्मात् । द्वितीयाद्वस्त्वन्तराद्वै भयं

मिदानीं तत्त्वज्ञानफलमाह—तत इति । कस्माद्धीत्यादेरुत्तरस्य पूर्वेण पौनरुक्त्यमित्याशङ्क्य विदुषो हेत्वभावान्न भयमित्युक्तसमर्थनार्थत्वादुत्तरस्य नैवमित्याह—तस्येत्यादिना । अनुपपत्तौ हेतुमाह—यस्मादिति । परमार्थदर्शनेऽपि वस्त्वन्तरात्किमिति भयं न भवतीत्याशङ्क्याऽऽह—द्वितीयं चेति । अन्वयव्यतिरेकाभ्यां द्वैतस्याविद्याप्रत्युपस्थापितत्वेऽपि कुतस्तद्धेत्वद्वैतदर्शनं भयकारणं न भवतीत्याशङ्क्याऽऽह—न हीति । तत्त्वज्ञाने सत्यज्ञानायोगात्तद्धेतुर्द्वैतं तद्दर्शनं चायुक्तमित्यतो हेत्वभावाद्भयानुपपत्तिरित्यर्थः । अद्वैतज्ञाने भयनिवृत्तिरित्यत्र मन्त्रं संवादयति—तत्रेति । 'विराडवयवज्ञानेनैव प्रजापतेर्भयमपनीतं नाद्वैतदर्शनेनेत्यस्मिन्नर्थेऽपि यन्मदन्यन्नास्तीत्यादि शक्यं व्याख्यातुमित्याशङ्क्याङ्गीकुर्वन्नाह—

"तत एव" अर्थात् यथार्थ-आत्मज्ञान से ही इस प्रजापति का भय "वीयाय" विस्पष्ट रूप से चला गया। उस प्रजापति का जो भय था, वह केवल अविद्या के कारण से था, परमार्थदृष्टि हो जाने पर उसका होना अनुपपन्न था। इसे श्रुति कहती है—"कस्माद्ध्यभेष्यत्" अर्थात् वह क्या था जिससे उसे भय हुआ ? परमार्थदृष्टि में तो भय होना ठीक नहीं है। क्योंकि 'द्वितीयाद्' अर्थात् दूसरी वस्तु से, ही भय होता है। (आत्मा से व्यतिरिक्त) दूसरी वस्तु तो अविद्या अवस्था में ही प्रतिष्ठापित की हुई है। "अद्वैतज्ञान हो जाने पर मोह और शोक चला जाता है" इस श्रुतिवचन से सिद्ध होता है, कि जो वस्तु दिखाई नहीं देता, ऐसी दूसरी वस्तु भय की उत्पत्ति में हेतु नहीं हो सकती। ब्रह्मात्मैक्य-दर्शन से प्रजापति ने जो भय को दूर किया, वह ठीक है। क्यों ठीक है ? क्योंकि "द्वितीयाद्" अर्थात् दूसरी

१ अपनोदनम् । २ आहेति—अस्मात्प्रतिश्रुतिरिति शेषः तदुक्तम्— 'ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत् । सम्भाव्यमिति न प्राह तत एवेति च श्रुतिः" ॥६८॥ इति । किं तद्भयकारणमितिचेत् प्रत्यगज्ञानमेव तदुक्तम्—"प्रत्यगज्ञानमेवैकं भीतिहेतुर्भवेद्यदि । तत एवेति वचनं तदेव स्यात्समञ्जसमिति" ॥६९॥ ३ अविद्यातत्कार्ययो-र्ध्वस्तत्वात् । ४. विराडैक्यदर्शनेनैवेति—त्रैलोक्यात्मा जीवाविष्टो देहो विराट्शब्दार्थः तथा च वार्तिके-"एष एवाहमस्मीह द्वितीयाद्धि भयात्स्थिति । द्वितीयो न मदन्योऽस्ति कस्माद्भीतोऽभयं ममेति" ॥९३॥ प्रतीतिर्हि प्रत्येतव्ये मानं न च द्वितीयो भात्यतो हेत्वभावान्न भीतिरिति निगमयति—कस्मादिति ।

ऽऽङ्गीकुर्वन्नाहेति । अत्राहुर्वार्तिककाचार्यास्तथाहि—"एकाकिनो विराजो वाऽप्रवत्तासवीनचेतसः । पूर्वजन्मोत्थसंस्काराद्भयमाविरभूदिह ॥ भयप्रध्वंसिनं हेतुमीक्षाञ्चक्रेऽथ आत्मभीः । मत्तो यन्नान्यदस्तीति ह्यथ कस्माद्बिभेम्यहम् ॥ एक एवाहमस्मीह द्वितीयाद्धि भयोत्थिति । द्वितीयो न मदन्योऽस्ति कस्माद्भीतोऽभयं मम ॥ तत एव विराडैक्यविज्ञानादेव तद्भयम् । वीयाय न परज्ञानादतोऽरतिरपीष्यते ॥ एकाक्यस्मीति विज्ञानात्त्रैलोक्यात्मैकगोचरात् । अगाद्भयं यतोऽतोऽभूदरतिस्तस्य कामिनः ॥ सम्यग्विज्ञानजिध्वंस्यावविद्याया कुतोऽरतिः । ध्वस्तास्यापि सा चेत् स्यादनिर्मोक्ष प्रसज्यते ॥ नाविद्यापानिविज्ञानाद्भयध्वस्तिरभूद्विभोः । अरत्युद्भूतिलिङ्गेन

भवति तदेकत्वदर्शनेन द्वितीयदर्शनमपनीतमिति नास्ति' यतः । ॥

'अत्र चोदयन्ति—'कुतः प्रजापतेरेकत्वदर्शनं जातं को वाऽस्मा उपदिदेश ।

---

यच्चेति । 'तदेव प्रश्नद्वारा प्रकटयति—कस्मादित्यादिना ।

'प्रथमव्याख्यानानुसारेण चोद्यमुत्थापयति—अत्रेति । प्रजापतेर्ब्रह्मात्मैक्यज्ञानाद्भीतिध्वस्ति-रुक्ता न च तस्य तज्ज्ञानं युक्तं हेत्वभावादित्याह—कुत इति । यस्मादस्माकमैक्यधीस्तस्मादेव तस्यापि

---

वस्तु से, जो भय होता है, वह द्वितीयदर्शन एकत्वदर्शन से चला जाता है; इस प्रकार वास्तव में भय मुझमें है ही नहीं ।

(ब्रह्मात्मैक्यरूप ज्ञान से प्रजापति का भय चला गया, इस प्रथम पक्ष में) यहाँ शङ्का करते हैं—(कारण के न होने से) प्रजापति को एकत्वज्ञान किससे हुआ और किसने उसे उपदेश दिया ?

---

१. भय ममेति । २ प्रथमपक्षे । ३. कारणासम्भवात्कुत इत्याक्षेपः गुर्वाद्यात्मादि हि तत्कारणं न चास्य तदिति भावः । ४ युक्तत्वमेव । ५ प्रजापतेर्ब्रह्मात्मैक्यज्ञानेन भीतिध्वस्तिरिति व्याख्यानम् ।

---

द्वयमर्थोऽवसीयते ॥ न चेहावसरोऽस्त्यस्य सम्यग्ज्ञानस्य कश्चन । पिण्डसृष्टौ प्रवृत्ताया नाकस्माज्ज्ञानगीः क्षुधा ॥ प्रविभागुणित वस्तु सुतान्वपि समीरितम् । अथान्यकुसुमानीव नैव प्रीतिकरं सताम् ॥ मिथुनारतिसंहारे प्रत्य-ग्याथात्म्यवेदिनः । आगमैस्तु निषिद्धत्वात्कुतस्तस्येह सम्भवः ॥ आत्मक्रीड आत्मरतिः क्रियावानिति चाऽऽगमः । तथाऽऽत्ममिथुन इति यस्त्वात्मरतिरित्यपि ॥ कार्यकारणसम्बन्धः साक्षित्वस्यैव युक्तिमान् । अपूर्वानपरादुक्तेर्न ध्वस्तान्यस्य युज्यते ॥ अप्युत्पन्नात्मबोधानामधिकारासमाप्तितः । अरत्यादि यथा दृष्टं तथैव स्यात्प्रजापतेः ॥ अप्रविष्टस्वभावस्य सशब्देन परिग्रहात् । स एव इत्यत्र वाक्ये नैयाऽऽरम्भिकवाक्यतामिति" ॥६१-१०४॥ वेदान्तमा-त्मैक्यज्ञानमननिदिध्यासनसाधनात्प्रणिपातादनपेक्षाज्जन्मान्तरीयतपोऽपेक्षादैक्यज्ञानाद्विराजो भयध्वस्तिरुक्ता । इदानीं केवलविराडैक्यज्ञानाद्भीतिध्वस्तिरिति पूर्वपक्षयन्नादौ सोऽबिभेदित्यस्य तात्पर्यमाहैकाकिन इति । चाशब्दः सिद्धान्तव्यावृत्त्यर्थः । नन्वेकाकित्वं भयध्वस्तिहेतुर्द्वितीयाद्धि भयोत्पत्तिस्तत्कथमेकाकिनो विराजो भीतिस्तत्राऽऽह—अविद्येति । सापि न केवला भीतिहेतुः सुषुप्तावदृष्टेरित्याशङ्क्याह—पूर्वेति । भजमानकालीनभयजनितवासनासंस्कारानुसारादिति यावत् । इह कलावस्थायाम् ॥ स हायमित्यादे-रर्थमाह—भयेति । ईक्षाकारणं पृच्छति—अथेति । आर्तो जिज्ञासुरिति स्मृतेरर्तिरपि भयाभिभवोचने हेतुरिति मत्वाऽऽह—जातभीरिति । यन्मदन्यदित्यादेरर्थमाह—मत्तो यदिति । यन्मत्तोऽन्यन्मे भयकारणं तदन्यद्व-स्त्वास्ति तस्मादहं कस्माद्धेतोर्बिभेमीति योजना । इति पदमीक्षासमाप्त्यर्थम् । अथशब्दस्तस्मादर्थे ॥ कस्माद्धी-त्यादिवाक्यं व्याकरोति—एक इति । अहंशब्दस्त्रैलोक्यात्मा जीवाविष्टो देहः । इह संसारमण्डले तथापि कथं भीतिराहित्यं तत्राह—द्वितीयादिति । चोरादिदर्शने भयजन्मप्रसिद्धमिति हिशब्दार्थः । तर्हि तद्धेतुर्द्वितीयोऽपि कल्प्यतां नेत्याह—द्वितीय इति । प्रतीतिर्हि प्रत्येतव्ये मानं न च द्वितीयं प्रतीयतेऽतो हेत्वभावान्न भीतिर्युक्तेति नियमयति—कस्मादिति ॥ तत एवेत्यादेरर्थमाह—तत इति । सिद्धान्तं परात्मैक्यज्ञानं सत्यदेन परामृष्टं तन्नि-राचष्टे—नेति । तत्र हेतुमाह—अत इति । मर्त्यविषमेऽपि प्रजापतेररतिश्चेत्यादि दृश्यते परज्ञाने च तदयोगो निमित्ताभावादतो न तस्य तज्ज्ञानाद्भीतिध्वस्तिरित्यर्थः ॥ कथं पुनर्ध्वस्तभीतेस्तस्यारतिरित्याशङ्क्योक्तमनुवदति —एकाकीति । अद्वैतज्ञानं व्यावर्तयति—त्रैलोक्येति । यस्मादेकाकित्वज्ञानाद्भयमपगतं तस्मादेतस्यारतिरासी-दित्याह—यत इति । ननु भीतिनिवर्तकमैक्यज्ञानमरतिमपि निवर्तयेन्न तु तामुपजनयेदत आह—कामिन इति । असहायमेकाकित्वज्ञानं भीतिध्वंसि काममहितमरतिहेतुरिति भावः ॥ परज्ञानाद्भीतिध्वस्तावपि कामुकस्यारतिः स्यादित्याशङ्क्याह—सम्यगिति । ज्ञानिनो ध्वस्ताज्ञानस्य न कामोऽपि युक्तो हेत्वभावात्तत्कथमरतिरित्यर्थः ।

अथानुपदिष्टमेव प्रादुरभूत् । अस्मदादेरपि तथा प्रसङ्गः । अथ जन्मान्तरकृतसंस्कारहेतुकम् । एकत्वदर्शनानर्थक्यप्रसङ्गः । यथा प्रजापतेरतिक्रान्तजन्मावस्थस्यैकत्वदर्शनं विद्यमानमप्यविद्याबन्धकारणं नापनिन्ये । यतोऽविद्यासंयुक्त एवायं जातोऽबिभेत् । एवं

---

स्यादित्याशङ्क्याऽऽह—को वेति । न हि तस्य शास्त्रश्रवणमाचार्याभावान्नापि संन्यासस्तस्य त्रैवर्णिकविषयत्वान्नापि शमाद्यैश्वर्यासक्तत्वादतोऽस्मासु प्रसिद्धश्रवणादिविद्याहेत्वभावान्न प्रजापतेरैक्यधीर्युक्तेत्यर्थः । उपदेशानपेक्षमेव प्रजापतेरैक्यज्ञानं प्रादुर्भूतमिति शङ्कते—अथेति । अतिप्रसक्त्या प्रत्याह—अस्मदादेरिति । प्रजापतेर्यजमानावस्थायामाचार्यस्य सत्त्वाच्छ्रवणाद्यावृत्तेरैक्यज्ञानोदयात्तत्संस्कारोत्थं तथाविधमेव तज्ज्ञानं फलावस्थायामपि स्यादिति चोदयति—अथेति । दूषयति—एकत्वेति । अज्ञानध्वंसित्वेनार्थवत्त्वमित्याशङ्क्याऽऽह—यथेति । तत्र [1]गमकमाह—यत इति । दार्ष्टान्तिकमाह—एवमिति ।

---

बिना उपदेश के उसकी उत्पत्ति हुई, तब तो हमारे लिए भी वैसा प्रसङ्ग हो सकता है । यदि पूर्वजन्म के संस्कार से होने वाला माना जाय, तो एकत्वज्ञान की अनर्थता का प्रसङ्ग उपस्थित होता है । जिस प्रकार अपने पूर्वजन्म में प्रजापति एकत्वविज्ञान के विद्यमान रहने पर भी अविद्यारूप बन्धन के कारण को दूर न कर पाया, क्योंकि अविद्यासंयुक्त पैदा होने के कारण ही यह भय को प्राप्त हुआ

---

१ हेतुम् ।

---

विपक्ष दोषमाह—ध्वस्तेति । निवृत्ताविद्यस्यापि यद्यरतिरस्ति तथा सत्यनर्थत्वात्तस्य मुक्तेरनुपपत्ति स्यादित्यर्थ ॥ प्रजापतेर्भीतिध्वस्तिर्न परैक्यज्ञानादिति फलित निगमयति—नाविद्येति । उक्तेऽर्थे पूर्वोक्तमेव श्रौत लिङ्ग स्मारयति—अरतीति । परदर्शनराहित्यमरतिमता प्राणभृता प्रसिद्धमिति हिशब्दार्थ । इतश्च न परज्ञानाद्विराजो भीतिध्वस्तिरित्याह—न चेति । विराजो मन्वादिसर्गाधिकार परज्ञानस्य निरवकाशत्व स्फोरयति—पिण्डेति । पिण्डशब्देन मन्वादिदेहो गृह्यते । अकस्मात्प्रकरणविच्छेद विनेत्यर्थ ॥ विराट्प्रकरणेऽपि परज्ञान विशिष्टफलत्वादुपदिश्यतामित्याशङ्क्याह—प्रक्रियेति । अथात्र परैक्यज्ञान भीतिध्वस्तीति भाष्यकृतोक्त तत्कथ भवाननुमन्यते तत्राह—समीरितमिति । भाष्यकारोक्त विशिष्टफलमपि परैक्यज्ञानमनवसरदुःस्थ विदुषा न हृदयगममित्यत्र दृष्टान्तमाह—अकालेति ॥ अरत्युद्भूतिलिङ्गाद्विराट्प्रकरणाच्च परधियोऽनवकाशत्वमुक्त तत्रैव लिङ्गान्तरमाह—मिथुनेति । आदिशब्देन द्वितीयेच्छादिग्रह । इह प्रजापतिसृष्टिप्रकरणे । तस्य प्रकृतविदुष ॥ परज्ञानवतो मिथुनादिदुर्व्यापारवारकश्रुतिस्मृतिरूपागममानुदाहरति—आत्मेति । आत्मन्येव क्रीडा यस्य न त्वनात्मनि पुत्रादाविति तथोच्यते आत्मनि रतिरेव क्रिया तद्वानिति क्रियान्तर निरस्यते । मिथिमिच्छन्तस्य भागावयादेवात्मयसमाहीतु चशब्द । तथेति—उक्तागमानुसारेणेति यावत् । आत्मन्येव मिथुन न द्वितीय वस्तुनीति यथात्मन् स्मृतेरर्थस्तु वक्ष्यते ॥ विराड्ज्ञानमेवात्र भयध्वंसि न परज्ञानमित्यत्र सिद्धान्तरमाह—कार्येति ॥ एव पूर्वपक्षयित्वा सिद्धान्तमाहापीति । वसिष्ठवामदेवादीनामुत्पन्नसम्यग्ज्ञानानामपि स्वाधिकारसमाप्तिपर्यन्तमविद्यालेशादरत्यादिदर्शनात्प्रजापतेरपि समुत्पन्नसम्यग्बोधस्यैव यावदधिकारमबोधलेशेनारत्यादिमत्त्वात् परज्ञानादेव तस्य भयनिवृत्तिर्यावदधिकारमवस्थितिराधिकारिकाणामिति न्यायादित्यर्थ ॥ यत्तु प्रक्रियाऽनुचितमित्यादि तत्राऽऽह—अप्रविष्टेति । स एष इह प्रविष्ट इति वाक्य सशब्देनाऽऽत्मैवेदमग्र आसीत्तन्मदन्यन्नास्तीत्यत्रोक्तब्रह्मणोऽप्रविष्टस्य भावस्य परामर्श । न ह्यप्रकृत सर्वनाम्ना शक्य परामष्टु न चान्यत्र ब्रह्म प्रस्तुत तद्वेदमिति च सन्निहितमेप शब्देनानुकृष्यते । न चाव्याकृतवाक्येऽपि तच्छब्देन प्रकृतत्व विना कारणतया ब्रह्मपरामर्शोऽस्तो यन्मदन्यदित्यादौ न प्रक्रियानुचितस्य परस्योक्ति । न च विराजोऽपि पर परिहृत्य स्रष्टृत्वादिदिलिष्टमिति भाव ॥

सर्वेषामेकत्वदर्शनानर्थक्यं प्राप्नोति । अन्त्यमेव निवर्तकमिति चेत् ? न । पूर्ववत्पुनः प्रसङ्गेनानैकान्त्यात् । तस्मादनर्थकमेवैकत्वदर्शनमिति ।

नैष दोषः । उत्कृष्टहेतूद्भवत्वाल्लोकवत् । यथा पुण्यकर्मोद्भवं विविषतः कार्य-

---

न्वस्मिन्नेव जन्मनि प्रजापतेरैक्यधीरनपेक्षा जायते 'ज्ञानमप्रतिघं यस्य' इति स्मृतेः । न च 'तदुत्पत्त्यनन्तरमेव सहेतुं बन्धं निरुणद्धि भयारत्यादिफलेन प्रारब्धकर्मणा प्रतिबन्धादतो मरणकालिकं तदज्ञानध्वंसीति शङ्कते—अन्त्यमेवेति । प्रवृत्तफलस्य कर्मणः स्वोपपादकाज्ञानलेशनाशिज्ञानशक्तिप्रतिबन्धकत्वेऽपि जन्मान्तरादिमयसंसारहेत्वज्ञानध्वंसिज्ञानसामर्थ्यप्रतिबन्धकत्वे मानाभावान्मध्ये जातं ज्ञानमनिवर्तकमित्यशक्यं वक्तुमन्त्यस्य च ज्ञानस्य निवर्तकत्वे नान्त्यत्वं हेतुः । यजमानान्तरस्यान्त्ये ज्ञाने तद्ध्वंसित्वादृष्टेरन्त्यत्वस्याज्ञानध्वंसित्वेनानियमात् । न च यजमानान्तरे प्रजापतौ चान्त्यं ज्ञानं ज्ञानत्वादज्ञानध्वंसि पूर्वज्ञानेषु बन्धहेत्वज्ञानध्वंसित्वादृष्टेर्ज्ञानत्वहेतोरनैकान्त्यात् । न चान्त्यमैक्यज्ञानमैक्यज्ञानत्वादज्ञानध्वंसीति युक्तम् । उपान्त्यतादृग्ज्ञानमयदन्त्येऽपि तदयोगादुपान्त्ये हेतोरनैकान्त्यादित्यभिप्रेत्य दूषयति—नेत्यादिना । क्लृप्तकारणाभावात्तदन्तरेण चोत्पत्तावतिप्रसङ्गात्संस्काराधीनत्वेऽपि विशेषाभावादन्त्यस्य च ज्ञानस्याज्ञानध्वंसित्वासिद्धेरयुक्तं प्रजापतेरैकत्वदर्शनमित्युपसंहरति—तस्मादिति ।

प्रजापते सुप्तप्रतिबुद्धवदुत्कृष्टादृष्टोत्थकार्यकरणवत्त्वात्पूर्वकल्पीयपदपदार्थवाक्यस्मरणवत स्मृतिविपरिवर्तिनो वाक्याद्विचार्यमाणादृष्टसहकृतात्तत्त्वज्ञानं स्याल्लोके विशिष्टादृष्टोत्थकार्यकरणानां

---

था । इसी प्रकार हम सभी के एकत्वदर्शन की व्यर्थता प्राप्त होती है । यदि कहो कि 'अन्त में होने वाला एकत्वज्ञान अविद्या का नाश करता है तो ऐसा कहना भी ठीक नहीं, क्योंकि ऐसा कहने से प्रथमादिज्ञान में, प्रथमादिज्ञान की उत्पत्ति के बाद भी अज्ञान का प्रसङ्ग सुस्थिर हो जाने के कारण व्यभिचार हो जायगा । इससे एकत्वज्ञान अयुक्त ही है ।

---

१ सर्वेषामिति—अस्मदादीनामिति शेषः । तथा च वार्तिके—"दग्धाशेषान्तरायस्य विराजोऽपि महात्मनः । नाक्षीदात्मविद्या न काऽस्याऽविद्यापनुत्तये इति" ॥७४॥ विद्याप्रतिबन्धविधुरस्यैव विराजो जन्मान्तरे सत्यपि विद्या यद्यविद्या संसारहेतुं नाहन्त तर्हि बहुप्रतिबन्धवतामस्माकं तादृशात्तादृग्रूपमाशापि न युक्ता तस्मान्न जन्मान्तरे तस्यैक्यज्ञानजातमित्यर्थः । २ पूर्वेत्यादि । पूर्ववत्—प्रथमादिज्ञानेष्विव । पुनः—प्रथमादिज्ञानोत्पत्त्यनन्तरमपि । प्रसङ्गेन—अज्ञानस्य प्रसक्तत्वेनेत्यर्थः सुस्थिरत्वेनेति यावत् ॥ अनैकान्त्यात्—हेतोर्व्यभिचारित्वादित्यर्थः । प्रथमादिज्ञानेषु सत्स्वपि अज्ञानमचलं चेत् तदा तज्जातीयं तदन्त्यं ज्ञानमपि तत्कालीयं बन्धमुत्सहन्नति त्वदभिमतहेतोर्व्यभिचारित्वं सुस्थिरमित्यर्थः । ३ अयुक्तम् । ४ विशुद्धे । ५ साधननिरपेक्षा । ६ ऐक्यज्ञानम् । ७ तस्य प्रतिबद्धत्वात् । ८ ज्ञानम् । ९ स्वस्यापनेत्यर्थः । १० मूलाज्ञानम् । ११ प्रजापत्यमन्त्यमैक्यज्ञानमज्ञाननिवर्तकम् इत्यनुमाने अन्त्यस्य च ज्ञानस्य निवर्तकत्वे किमन्त्यत्वं हेतुः किं वा ज्ञानत्वमाहोस्विदैक्यज्ञानत्वमिति विकल्प्याद्ये दोषमाह—अन्त्यस्य चेति । १२ अनेन दृष्टान्तसिद्धिरपि ध्वनिता । १३ व्याप्त्यभावात् । १४ द्वितीयं दूषयति न चेति । १५ तृतीयं प्रत्याह—न चान्त्यमिति । १६ समर्थं । १७ अस्मदादिष्वपि तथात्वस्य तुल्यत्वादित्यर्थः । पूर्वानुभववत्स्मृतावपि वैषम्यादिदोषादिति परमार्थः । १८ सुप्तप्रतिबुद्धवदिति—यथा सुप्तः पुमान् प्रबोधजनकोच्चैराह्वानादिकारणान्तराभावेऽपि प्राक्तनजागरणसंस्कारसहकृतादृष्टवशादेव प्रबोधमाप्नोति तद्वदित्यर्थः । १९ स्मृतिविषयात् । २० तत्त्वमादिवाक्यात् ।

करणैः संयुक्ते जन्मनि सति प्रज्ञामेधास्मृतिवैशारद्यं दृष्टं तथा प्रजापतेर्धर्मज्ञानवैराग्यैश्वर्यविपरीतहेतुसर्वपाप्मदाहाद्विशुद्धैः कार्यकरणैः संयुक्तमुत्कृष्टं जन्म तदुद्भवं चानुपदिष्टमेव युक्तमेकत्वदर्शनं प्रजापतेः । तथाच स्मृतिः—

"ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम्" इति ॥

सहसिद्धत्वे भयानुपपत्तिरिति चेत् । न ह्यादित्येन सह तम उदेति । न, 'अन्या-

प्रज्ञाद्यतिशयदर्शनात्तेन च ज्ञानेन जन्मान्तरहेत्वविद्याक्षयेऽप्यारब्धं कर्म तज्जं च भयारत्याद्यविद्यालेशतो भविष्यतीति परिहरति—नैष दोष इति । संगृहीतमर्थं समर्थयते—यथेत्यादिना । धर्मादिचतुष्टयाद्विपरीतमधर्मादिचतुष्टयं तत्र हेतोः सर्वस्य पाप्मनो ज्ञानाद्यतिशयेन नाशादिति यावत् । उत्कृष्टत्वं प्रकृष्टज्ञानादिशालित्वम् । उक्तजन्मफलमाह—तदुद्भवं चेति । तस्य ज्ञानादिवैशारद्ये पौराणिकीं स्मृतिमुदाहरति—तथा चेति । अप्रतिघमप्रतिबद्धं निरङ्कुशमित्येतत्प्रत्येकं संबध्यते यस्यैतच्चतुष्टयं सहसिद्धं स निरवर्ततेति संबन्धः ।

सहसिद्धत्वस्मृतेः 'सोऽबिभेत्' इति श्रुतिविरुद्धत्वादप्रामाण्यमिति 'विरोधाधिकरणन्यायेन शङ्कते—सहसिद्धत्व इति । सत्येव सहजे ज्ञाने 'स्वहेतोर्भयमपि स्यादिति चेन्नेत्याह—न हीति । अन्येनाऽऽचार्येणानुपदिष्टमेव प्रजापतेर्ज्ञानमुदेतीत्येवमर्थंपरत्वात्सहसिद्धवाक्यस्य तत्त्वज्ञानात्प्राक्तस्य भयमविरुद्धमूर्ध्वं चाज्ञानलेशादसौ न विरोधः श्रुतिस्मृत्योरिति समाधत्ते—नेत्यादिना । ज्ञानोत्पत्तेरा-

(शङ्का का परिहार करते हैं) यह कोई दोष नहीं है। क्योंकि लोकव्यवहार के समान प्रजापति का जन्म उत्कृष्टहेतु से हुआ है। जिस प्रकार पुण्यकर्मों से उत्पन्न विशुद्ध-देह और इन्द्रियों से संयुक्त जन्म होने पर भी, बुद्धि, धारणशक्ति, और स्मृति की विशदता देखी जाती है, उसी प्रकार धर्म, ज्ञान, वैराग्य और ऐश्वर्य से विपरीत होने वाले समस्त पापों के भस्म हो जाने प्रजापति का विशुद्ध-देह और इन्द्रियों से संयुक्त उत्कृष्ट जन्म है। उससे होने वाला प्रजापति का एकत्वदर्शन भी अनुपदिष्ट है—ऐसा मानना ठीक ही है। स्मृति भी इसका समर्थन करती है—

१ अन्यानुपदिष्टेत्यादि । विरोधे चाप्रामाण्यं परस्परव्याघातात्' इत्याचार्याः । न चात्र सर्वावेष्टनस्मृतेः स्पृष्ट्वोद्गानश्रुतेश्च मिथोविरोधवत् विरोधोऽस्तीति भावः । आचार्या जैमिनयः । २ आदिना वैराग्यादि । ३ विरोधाधिकरणन्यायेनेति—"औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः । अमितिर्वेति सन्देहे मितिः स्यादष्टकादिवत् ॥ औदुम्बरीं स्पृशन् गायदिति प्रत्यक्षवदतः । विरोधान्मूलवेदस्याननुमानादमानता ॥ प्रत्यक्षानुमितश्रुत्योर्यद्वा व्याघातदर्शनात् । अमात्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते ॥ परप्रत्यक्षवदोऽत्र मूलं चेद्वेष्टनस्य तत् । अस्त्वेवमनुष्ठानं स्वप्रत्यक्षानुरोधतः" ॥ इत्यधिकरणमालोक्तन्यायेनेत्यर्थः । मितिः प्रमा । अष्टकाकर्मविशेषः तस्याः स्मृतिसिद्धत्वेऽपि प्रामाणिकत्वं यथा तद्वत् ॥ स्मृत्यानुमीयमानः स्मृतेर्मूलभूतो वेदः ॥ अमात्वम्—अप्रमात्वम् ॥ अत्र यथा—औदुम्बरीं स्पृशन् गायदिति प्रत्यक्षश्रुतिविरोधात् औदुम्बरी सर्वावेष्टनीयेति स्मृतेः तदनुमिततन्मूलभूतश्रुतेश्चाप्रामाण्यं तद्वदित्यर्थः । विरोधेति—तथा च जै०सू० 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' । १ ३ २ इति । श्रुतिविरोधे सति स्मृतिप्रामाण्यमनपेक्षितमसति तु तस्मिन् स्मृतिमूलश्रुत्यनुमानमित्यर्थः । ४. स्वस्य भयस्य, हेतोः अज्ञानात् । ५ वाक्यस्य यथोक्तपरत्वात् ।

नुपदिष्टार्थत्वात्सहसिद्धवाक्यस्य । श्रद्धातात्पर्यप्रणिपातादीनामहेतुत्वमिति चेत् । स्यान्मतम्––"श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः" "तद्विद्धि प्रणिपातेन" इत्येवमादीनां श्रुतिस्मृतिविहितानां ज्ञानहेतूनामहेतुत्वं प्रजापतेरिव जन्मान्तरकृतधर्महेतुत्वे ज्ञानस्येति चेत् । न । निमित्तविकल्पसमुच्चयगुणवदगुणवत्त्वभेदोपपत्तेः ।

लोके हि नैमित्तिकाना कार्याणां निमित्तभेदोऽनेकधा विकल्प्यते । तथा निमित्तसमुच्चयः । तेषा च विकल्पिताना समुच्चितानां च पुनर्गुणवदगुणवत्त्वकृतो भेदो भवति ।

---

चार्याद्यनपेक्षत्वे श्रद्धाविविधानानर्थक्यादनेकश्रुतिस्मृतिविरोध स्यादितिशङ्कते—श्रद्धेति । आदिपदेन शमादिग्रह । अस्मदादिषु तेषा हेतुत्वमिति चेन्नेत्याह—प्रजापतेरिवेति । चोदितं विरोधं निराकरोति—नेत्यादिना । निमित्ताना विकल्प समुच्चयो गुणवत्त्वमगुणवत्त्वमित्यनेन प्रकारेण कार्योत्पत्तौ विशेषसंभवान्न श्रद्धाविविध्यानर्थक्यमित्यर्थ ।

सग्रहवाक्य विवृणोति—लोके हीति । तद्धि सर्वं विकल्पादि यथा ज्ञातु शक्यं तथैकस्मिन्नेव

---

"जिस जगत् के पालक प्रभु के अप्रतिबद्धज्ञान, अप्रतिबद्ध वैराग्य, अप्रतिबद्ध ऐश्वर्य और अप्रतिबद्ध धर्म—ये चारो सहजसिद्ध है (वह निरवर्तित हुआ)" इत्यादि ।

किन्तु इनके सहजसिद्ध होने पर प्रजापति को भय होना अयुक्त है । सूर्य के साथ अन्धकार का उदय कभी नही होता । ऐसी शङ्का करना ठीक नही । क्योकि स्मृतिप्रोक्त इस सहजसिद्धवाक्य के प्रयोजन ज्ञान को आचार्यादि से अनुपदिष्ट बतलाना है । (फिर शङ्का होती है) ऐसा होने पर तो श्रद्धा, तत्परत्व एव नमस्कारादि को (ज्ञानोत्पत्ति मे) अहेतुता हो जायगी । (सगृहीत श्रद्धादि गुणो को स्पष्ट करते हैं —)यदि प्रजापति के समान जन्मान्तरकृत धर्म ही ज्ञान का हेतु होगा तो "श्रद्धावान तत्पर और जितेन्द्रिय पुरुष को ही ज्ञान प्राप्त होता है", (तत्त्वदर्शियो को) नमस्कार करके उस ज्ञान को जानो" इत्यादि श्रुतिस्मृति-समर्थित वाक्यो द्वारा ज्ञान के हेतुओ की अहेतुता-पुष्टि हो जावेगी । (शङ्का परिहार करते हैं—) ऐसा कहना ठीक नही, क्योकि ज्ञान के साधनो के विकल्प, समुच्चय, गुणवत्त्व और अगुणवत्त्व इस प्रकार से कार्य-उत्पत्ति मे विशेष होने के कारण श्रद्धादि की अयुक्तता का बाध हो जाता है ।

लोक व्यवहार मे सहेतुक कार्यों का निमित्तभेद विकल्प से अनेक प्रकार का होता है । उसी प्रकार निमित्तसमुच्चय भी अनेक प्रकार का होता है । और पुन उन विकल्पित और संमुच्चितों का भी गुणवत्त्व और अगुणवत्त्व कृत भेद होता है । उसी को बताते हैं । पहले नैमित्तिकरूप ज्ञान कार्य

---

१ तत्परत्वेत्यर्थ । २ श्रद्धेत्यादिना सगृहीत विवृणोति स्यादिति । ३ मत स्यादिति सम्बन्ध । ४ प्रजापतेरिवेत्यादि–अस्मदादिष्वपि ज्ञानस्य प्रजापतेरिव जन्मान्तरकृतधर्महेतुत्व मति श्रुत्यादिविहिताना ज्ञानहेतूनामहेतुत्व मत स्यादिति सम्बन्ध । तथा च तद्विधानमनर्थक स्यात् । पुरुषभेदेन (अधिकारिभेदेन) अथवत्वे च विशेष-(समुच्चयविधायक) श्रुत्यादिविरुद्धमिति भाव । ५ महेतुकानाम् । ६ विकल्पेनानेकधाभवतीत्यर्थ । ७ अनेकधाभवतीत्यन्वय । ८ तद्विधायकश्रुतिरित्यर्थं । ९ अस्मदादिनिष्ठज्ञान प्रतीत्यर्थ । १० ज्ञानसाधनानाम् ।

तद्यथा रूपज्ञान एव तावन्नैमित्तिके कार्ये तमसि विनाऽऽलोकेन चक्षूरूपसंनिकर्षो [1]नक्तं-चराणां रूपज्ञाने निमित्तं भवति [2]मन एव केवलं रूपज्ञाननिमित्तं योगिनामस्माकं[3] तु[4] संनिकर्षालोकाभ्यां [5]सह। [6]तथाऽऽदित्यचन्द्राद्यालोकभेदैः समुच्चिता निमित्तभेदा भवन्ति। तथाऽऽलोकविशेषगुणवदगुणवत्त्वेन भेदाः स्युः।

एवमेवाऽऽत्मैकत्वज्ञानेऽपि क्वचिज्जन्मान्तरकृतं [7]कर्म निमित्तं भवति। [8]यथा प्रजापतेः। क्वचित्तपो निमित्तम्। "तपसा ब्रह्म विजिज्ञासस्व" इति श्रुतेः। क्वचित्

---

नैमित्तिके रूपज्ञानाख्यकार्ये दर्शयामीत्याह—तद्यथेति। तत्र [9]विकल्पमुदाहरति—तमसीत्यादिना। समुच्चयं दर्शयति—अस्माकं त्विति। विकल्पितानां समुच्चितानां च निमित्तानां गुणवदगुणवत्त्वप्रयुक्तं भेदं कथयति—तथेति। आलोकविशेषस्य गुणवत्त्वं बहुलत्वमगुणवत्त्वं मन्दप्रभत्वं [10]चक्षुरादेर्गुणवत्त्वं निर्मलत्वादि [11]तिमिरोपहतत्वादि चागुणवत्त्वमिति भेदः।

दृष्टान्तं प्रतिपाद्य दार्ष्टान्तिकमाह—एवमिति। तथाऽन्यस्यापि प्रजापतितुल्यस्य वामदेवादेर्ज-न्मान्तरीयसाधनवशादीश्वरानुग्रहावस्मिञ्जन्मनि स्मृतवाक्यादैक्यज्ञानमुदेतीति शेषः। भृगुस्तत्तुल्यो वाऽधिकारी क्वचिदित्युच्यते। तपो[12]ऽन्वयव्यतिरेकाख्यमालोचनम्। श्वेतकेतुप्रभृतिषु ज्ञाननिमित्ताना समुच्चयं दर्शयति—क्वचिदित्यादिना। एकान्तं [13]नियतमावश्यकं ज्ञानलाभे निमित्तत्वमिति यावत्।

---

मे (मार्जारादि) रात्रि मे विचरण करने वालो को बिना प्रकाश के अन्धकार मे होने वाला, चक्षु-रूप सन्निकर्ष रूपज्ञान मे कारण होता है (नही तो मार्जारादि रात्रि के अन्धकार मे रहने वाले मूषकादि को कैसे पकडते ?)। दूसरा विकल्प न होने से योगियो का मन ही रूपज्ञान मे हेतु है। हम अयोगियो को तो चक्षु-सन्निकर्ष और प्रकाश होने पर रूप ज्ञान होता है। इसी प्रकार सूर्य और चन्द्रादि आलोकभेद से विकल्पित और समुच्चित निमित्तो के भेद होते है। तथा आलोकविशेष के गुणत्व और अगुणत्व निमित्त भेद हो जाते है।

---

१ नक्तञ्चराणामिति—मार्जारादीनामित्यर्थ। कथमन्यथाऽन्धकारमध्यवर्तिनस्त मूषकादिगृह्णीयुरिति भाव। २. विधान्तरेण विकल्पार्थमाह—मन इति। ३ अयोगिनाम्। ४ मनोरूपज्ञाननिमित्तमित्यन्वय। ५ समुच्चये प्रकारान्तर दर्शयति-तथेति। चन्द्राद्यालोके सह चक्षुरादि वैयाचित्तत्र निमित्तमित्यर्थ। ६ श्रवणादिरूपम्। ७ यथा प्रजापतेरिति। न चात्र नियामकाभाव "यो ब्रह्माण विदधातीति" श्रुतौ प्रजापतिबुद्धावीश्वरानुग्रहाज्जन्मतो वेदाविर्भावोक्तेरिति भाव। ८ उदितानुदितहोमवद्व्यवस्थितविकल्पमित्यर्थ। ९ प्रमात्रादीना धीहेतूना गुणवत्त्वदोषवत्त्वाभ्यामनेकधा निमित्तविकल्पं दर्शयति—चक्षुरादेरिति। आदिना प्रमातृप्रमेययोर्ग्रह। तत्र प्रमाता ज्ञानपरिणामी साभासान्तःकरणाख्य तस्य गुणवत्त्व अदृष्टप्रजत्वादि। वैपरीत्य दोषवत्त्वम्। प्रमेयो घटादि तस्य दोषो दूरत्वादि गुण सन्निकृष्टत्वादि। दार्ष्टान्तिके श्रद्धादिषु गुणवत्त्वम्—उत्कर्ष। दोषवत्त्व निकर्ष इति द्रष्टव्यम्। १० चक्षुर्गतदोषविशेषस्तिमिर। ११ अन्वयेत्यादि- अन्नप्राणादिव्यभिचारित्वादनात्मा स्रगा-दिवत् आत्मा तु रज्ज्वादिवदव्यभिचारी यद्वा उत्पत्त्यादिभावत्वाद्भूतानामनात्मत्वम् ब्रह्मणस्तु तद्राहित्यादात्म-त्वमित्येवविधान्वयव्यतिरेकाभ्यांविचारोऽत्र तपःशब्देन विवक्षित इत्यर्थ। तदुक्त वार्तिके— "अन्वयव्यतिरेकादि-चिन्तन वा तपो भवेत्। अह ब्रह्मेति वाक्यार्थबोधायालमिद यत इति॥" वाक्यतात्पर्यालोचनं साधनविशेषानु-सधान फलविशेषचिन्तन चादिशब्देन गृह्यते। १२ नैर्विना ज्ञान संभवतीति भाव।

"आचार्यवान्पुरुषो वेद" "श्रद्धावाँल्लभते ज्ञानम्" "तद्विद्धि प्रणिपातेन" "आचार्याद्धैव" "द्रष्टव्यः श्रोतव्यः" इतिश्रुतिस्मृतिभ्य एकान्तज्ञानलाभनिमित्तत्वं [1]श्रद्धाप्रभृतीनाम् । [2]अधर्मादिनिमित्तवियोगहेतुत्वात्। वेदान्तश्रवणमननिदिध्यासनानां च [3]साक्षाज्ज्ञेयविषयत्वात् । पापादिप्रतिबन्धक्षये [4]चाऽऽत्ममनसोर्भूतार्थज्ञाननिमित्तस्वाभाव्यात् । तस्मादहेतुत्वं न जातु ज्ञानस्य[5] श्रद्धाप्रणिपातादीनामिति ॥२॥

---

अथ प्रणिपातादिव्यतिरेकेण न प्रजापतेरपि ज्ञानं संभवति सामग्र्यभावादत आह—अधर्मादीति । प्रणिपातादेर्ज्ञानोदयप्रतिबन्धकनिवर्तकत्वात्प्रजापतेश्च तन्निवृत्तेर्जन्मान्तरीयसाधनायत्तत्वादाधुनिकप्रणिपातादिना विना स्मृतवाक्यार्थविषयधीः संभवतीत्यर्थः । [6]तर्हि श्रवणादिव्यतिरेकेणापि प्रजापतेर्ज्ञानं स्यादित्याशङ्क्याऽऽह—वेदान्तेति । न तैर्विना ज्ञानं कस्यचिदपि स्यात्प्रजापतेस्तु जन्मान्तरीयश्रवणवशादिदानीमनुस्मृतवाक्यात्तदुत्पत्तिरिति शेषः । तर्हि श्रद्धादिकमपि प्रतिबन्धकनिवर्तकत्वेन प्रजापतेरादरणीयं तन्निवृत्तिमन्तरेण ज्ञानोत्पत्त्यनुपपत्तेरित्याशङ्क्याऽऽह—पापादीति। आत्ममनसोर्मिथः [7]संयुक्तयोः संबन्धि यत्पापं तत्कार्यं च रागादि तस्यात्मज्ञानोत्पत्तौ प्रतिबन्धस्य पूर्वोक्तेन न्यायेन क्षये सति प्रजापतेरीश्वरानुग्रहात्स्मृतवाक्यस्य परमार्थज्ञानोत्पत्तौ केवलस्य [8]निमित्तत्वात्तस्याऽऽधुनिकश्रद्धाद्यतिरेकेण ज्ञानोदयेऽपि न [9]तद्विधिवैयर्थ्यम् । अस्माकं तद्वशादेव तदुत्पत्तेर्वाक्यतात्पर्यादिज्ञानं सर्वेषामेव [10]ज्ञानसाधनमाचार्यादिषु पुनर्विकल्पसमुच्चयाविरयर्थः । अधिकारिभेदेन ज्ञानहेतुषु विकल्पेऽपि तेषामस्मासु समुच्चयात्र श्रुतिस्मृतिविरोधोऽस्तीत्युपसंहरति[11]—तस्मादिति ।

---

इसी प्रकार आत्मैकत्वज्ञान मे भी कभी-कभी पूर्वजन्मकृत श्रवणादिरूप कर्म निमित्त होता है। जैसे प्रजापति की बुद्धि मे ईश्वर के अनुग्रह से वेद आविर्भूत हुए । कभी-कभी आत्मैकत्वज्ञान मे तप निमित्त होता है । "उस निर्विकल्पक ब्रह्म को तप से जानने की इच्छा करो" ऐसा श्रुति द्वारा सिद्ध होता है। कहीं-कहीं श्रुतियाँ "आचार्यवान् पुरुष को ज्ञान प्राप्त होता है", "श्रद्धावान् पुरुष को ज्ञान प्राप्त होता है", "(तत्त्वदर्शी महात्माओ को) नमस्कार करके उसे जानो", "आचार्य के द्वारा ही (विद्या स्थिर होती है)", एव "इस आत्मा का ही दर्शन करना चाहिये, श्रवण करना चाहिये" ऐसा कह कर अधर्मादिरूप जो ज्ञान प्रतिबन्धक है, उनके निमित्त का नाश हो जाने से श्रद्धा आदि को अद्वितीय ज्ञानलाभ निमित्त कहा है ।

वेदान्त के श्रवण, मनन और निदिध्यासन तो साक्षात् ज्ञानसाधन होने के कारण ब्रह्म को श्रद्धादि की तरह परम्परा रूप से नही, अपितु साक्षात् विषय करते है । पापादि प्रतिबन्ध के नाश होने पर आत्मा और मन का भी तत्त्वार्थज्ञान मे निमित्तो का स्वाभाविकत्व है । इसलिए ज्ञान की उत्पत्ति मे श्रद्धा, प्रणिपातादिको का अहेतुकत्व कभी नही हो सकता ॥२॥

---

१. पूर्वोत्तरान्वयीदम् । २. अधर्मादिरूपाणि यानि ज्ञानप्रतिबन्धनिमित्तानि तेषाम् । ३. साक्षाज्ज्ञानसाधनत्वादन्तरङ्गसाधनत्वान्नतु श्रद्धादिवत् परम्परया । ४. तत्त्वार्थज्ञाने निमित्ताना स्वाभाविकत्वादित्यर्थ. । ५. उत्पत्ताविति शेष । ६. प्रजापते. श्रवणादिपूर्वकज्ञानाङ्गीकारे । ७ तादात्म्यापन्नयोः । ८. एवं ज्ञानजन्मनिमित्ताना विकल्पसमुच्चयसंभवादिति शेष । ९. श्रद्धादिविधिरित्यर्थ. । १०. ज्ञानसाधनीभूतेषु । ११. स्यान्मतमित्यादिनोपक्रान्तस्योपसंहार ।

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमाꣳसौ संपरिष्वक्तौ स इममेवाऽऽत्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताꣳ समभवत्ततो मनुष्या अजायन्त ॥३॥**

उस प्रजापति ने आनन्द का अनुभव नहीं किया, इसीलिये आज भी एकाकी पुरुष रति का अनुभव नही करता (इष्ट वस्तु के सयोग से होने वाली क्रीडा का नाम ही रति है, ऐसी रति के लिये और अरति की निवृत्ति के लिये) उस प्रजापति ने दूसरे की अर्थात् स्त्री की अभिलाषा की, जैसे परस्पर स्त्री पुरुष आलिङ्गित होते है वैसे ही परिणाम वाला वह सत्य सकल्प प्रजापति भी हो गया । उससे इस अपने शरीर को ही दो भागो मे बाँट दिया । उसी से पति और पत्नी हुये । इसीलिये लौकिक शरीर द्विदल अन्न के एक दल के समान है अर्थात् अकेला पुरुष अर्ध द्विदल के समान है ऐसा याज्ञवल्क्य ने कहा । अत यह पुरुष का अर्ध आकाश स्त्री से पूर्ण होता है, विवाह के पश्चात् वह पुरुष उस स्त्री से सयुक्त हुआ पूर्ण माना जाता है । उसी मैथुन की प्रवृत्ति से मनुष्य उत्पन्न हुये है ॥३॥

---

इतश्च संसारविषय एव प्रजापतित्वं यतः स प्रजापतिर्वै नैव रेमे रतिं नान्वभवदरत्याविष्टोऽभूदित्यर्थोऽस्मदादिवदेव यत इदानीमपि तस्मादेकाकित्वादिधर्मवत्त्वादेकाकी न रमते रतिं नानुभवति । रतिर्नामेष्टार्थसंयोगजा क्रीडा । तत्प्रसङ्गिन इष्टवियोगान्मनस्याकुलीभावोऽरतिरित्युच्यते । स तस्या अरतेरपनोदाय द्वितीयमरत्यपघातसमर्थं

---

प्रजापतेर्भयाविष्टत्वेन ससारान्तर्भूतत्वमुक्तमिदानीं तत्रैव हेत्व तरमाह—इतश्चेति । अरत्याविष्टत्वे प्रजापतेरेकाकित्व हेतू करोति—यत इति । कार्यस्यारतिः कारणस्यारतेर्लिङ्गमि'त्यनुमानं सूचयति—इदानीमपीति । आदिपदेन भयाविष्टत्वादिग्रह । अरतिं प्रतियोगिनिरुक्तिद्वारा निर्वक्ति—रतिर्नामेति । कथं 'तर्हि यथोक्त रतिनिरसनमित्याशङ्क्य स द्वितीयमैच्छदित्येतद्व्याचष्टे—स तस्या

---

इसलिए प्रजापति होना भी ससार के अन्तर्गत है, क्योंकि "स" अर्थात् उस प्रजापति ने "वै नैव रेमे" अर्थात् आनन्द अनुभव नही किया । (एकाकी होने से) हम लोगो के समान ही उदास हो गया, यह भाव है । इसलिए इस समय भी "तस्मात्" अर्थात् एकाकित्वादि धर्मों से युक्त होने के कारण "एकाकी न रमते" अर्थात् आनन्द अनुभव नही करता । इष्टवस्तु के सयोग से होने वाली मानसोल्लासविशेष क्रीडा का नाम ही रति है । उस इष्टवस्तु मे सयुक्त पुरुष के मन से इष्टवस्तु के वियोग होने पर जो व्याकुलता होती है, उसे अरति कहा जाता है । उस व्याकुलता को दूर करने

---

१ ससारान्तर्गतम् । २ एकाकित्वादिति शेष । ३ मानसोल्लासविशेष । ४ अनुमानमिति—विराडात्माऽरत्याविष्टोऽभूदेकाकित्वादस्मदादिवदित्याकारकमित्यर्थं । निवृत्ताविद्यस्य पुम स्वाधिकारसमाप्तिपर्यन्तमाधिकारिक जीवन्मुक्तानामिव प्रारब्धहेत्वविद्यालेशानुवृत्त्याऽरत्याद्युपपद्यत इति भाव । ५ अरत्याविष्टत्वे ।

[1]स्त्रीवस्त्वैच्छद्गृद्धिमकरोत्। तस्य चैवं स्त्रीविषयं गृध्यतः स्त्रिया परिष्वक्तस्येवा[2]ऽन्तःमनो [3]भावो बभूव। स तेन [4]सत्येप्सुत्वाद्[5]तावानेतत्परिमाण आस बभूव ह।

किं परिमाण इत्याह—यथा लोके स्त्रीपुमांसावरत्यपनोदाय संपरिष्वक्तौ यत्परिमाणौ स्यातां तथा तत्परिमाणो बभूवेत्यर्थः। स [5]तथा तत्परिमाणमेवेम[6]मात्मानं द्वेधा द्विप्रकारमपातयत्पातितवान्। इममेवेत्यवधारणं [7]मूलकारणाद्विराजो [8]विशेषणार्थम्। न क्षीरस्य सर्वोपमर्देन दधिभावापत्तिवद्विराड्भावोपमर्देनैतावानास। किं तर्ह्यात्मना

इति। स हेत्यस्य वाक्यस्य पातनिका करोति—तस्येति। तेन भावेनेति यावत्। कथमभिमानमात्रेण यथोक्तपरिमाणत्वं तत्राऽऽह—सत्येति। निपातोऽवधारणे। तस्यैव पुनरनुवादोऽन्वयार्थः।

परिमाणमेव प्रश्नपूर्वकं विवृणोति—किमित्यादिना। सम्प्रति स्त्रीपुंसयोरुत्पत्तिमाह—स तथेति। ननु द्वेधाभावो [9]विराजो वा सतस्त[10]स्त्रीपुंसात्मनस्य [11]पिण्डस्य वा नाऽऽद्य सशब्देन विराड्ग्रहायोगात्तस्य कर्मत्वाद्द्वितीये त्वात्मशब्दानुपपत्तिस्तत्राऽऽह—इममिति। [12]तथा च सशब्देन कर्तृतया विराड्ग्रहणमविरुद्धमित्यर्थः। [13]तदेव स्फुटयति—नेत्यादिना। कस्य [14]तर्हि द्विधाकरणमित्याशङ्क्याऽऽह—किं तर्हीति। तच्च द्विधाकरणकर्मेति शेष। कथं तर्हि तत्राऽऽत्मशब्द. संभवतीत्याशङ्क्याऽऽह—स एव चेति।

के लिए उसने "द्वितीयम्" अर्थात् अरति को नाश करने म उपयुक्त स्त्रीरूप वस्तु की "ऐच्छत्" अर्थात् लालसा की। इस तरह स्त्री के लिए लालसा होने पर स्त्री से आलिङ्गन करते हुए उसे अपने अन्त-करण का अभिमान उत्पन्न हुआ। सत्यसङ्कल्प होने के कारण उस अभिमान से वह "एतावान्" अर्थात् इस परिमाण वाला "आस" अर्थात् हो गया।

किस परिणाम वाला हो गया? इस पर कहते हैं। जिस प्रकार लोक व्यवहार मे स्त्री और पुरुष (एकाकी मे आनन्द अनुभव न करने से) मन की उत्कण्ठा को दूर करने के लिए परस्पर आलिङ्गित होते है, वे दोनो जिस परिणाम वाले हाते हैं, वह उसी परिमाण वाला हो गया—यह आशय है।

१ स्त्रीवस्त्विति—स द्वितीयमैच्छदिति द्वितीयमात्रस्येष्टत्वश्रुतेस्तस्य क्व स्त्रीत्वमित्याशङ्क्याऽऽह—अरत्यपघातसमर्थमिति। तथा चोक्त वार्तिके— इच्छामात्रमरत्युत्थ पुस्यतश्चरिथातस्त्रियम्। प्रयुङ्क्त योग्यतस्तस्यास्तदलब्ध्याऽरति प्रभो" ॥१११॥ इति। एकाकित्वादरतिलता द्वितीयेच्छा तस्मात स्त्रीविशेषणाहते द्वितीयमात्रविषय तदरत्यपनोदनासमर्थं पुस्यनवस्थ द्वितीयत्वेन स्त्रियमुपस्थापयति तदलाभाद्धि प्रजापतेररतिस्तस्मादरत्यपघाते स्त्रियो योग्यत्वात्सैव तदिच्छाकम। अतएव दृष्टान्तेऽपि स्त्रीग्रहणमिति वार्तिकार्थ। २ अन्त करणस्य। ३ अभिमान। ४ सत्यसङ्कल्पत्वात्। ५ सपरिष्वक्तस्त्रीपुमप्रकारेण। ६ स्वशरीरम्। ७ मूलकारणादित्यादि—मनुगतरूपोत्पत्तिबीजभूताद् सपरिष्वक्तस्त्रीपुसपरिमाणकाच्छरीरान्तरादित्यथ। यद्वा विराज इत्यनन्तर द्विधाकरणक्रियाकर्मण पिण्डस्येति शेष। विशेषणार्थमित्यस्य व्यावृत्त्यर्थमित्यर्थ। तथा चेममेवेत्यवधारण जगतो मूलकारणतो विराडात्मन सकाशाद्द्विधाकरणक्रिया कर्मीभूतस्य परिष्वक्तस्त्रीपुसपरिमाणस्य पिण्डस्य व्यावृत्त्यर्थमित्यर्थ। एव च स इममेवात्मान द्वेधाऽपातयदित्यस्यायमर्थ। स जन्ममूलकारणीभूत पुरुषविध प्रथमशरीरी प्रजापतिर्विराडात्मा, इममेव स्वस्माद्व्यावृत्त पुरोवर्तिन परिष्वक्तस्त्रीपुसपरिमाण पिण्डमात्मानमात्मीयत्वेनाभिमत द्वेधाऽपातयत् द्विप्रकार पातितवान् स द्विधाऽकरोत्तस्य भागद्वय कृतवानिति यावत्। ८ व्यावृत्त्यर्थम्। ९ विराट्शरीरस्य। १० स्त्रीपुसमानस्य। स्त्रीपुसात्मकस्य इति पाठान्तरे। ११ तद्रूपेणोत्पन्नदेहान्तरस्य। १२ विराजो द्वधाभावानभ्युपगमे च। १३ तस्य ततो व्यावर्तनमेव। १४ विराजो द्वेधाभावकर्मत्वानभ्युपगमे।

व्यवस्थितस्यैव विराजः । सत्यसंकल्पत्वादात्मव्यतिरिक्तं स्त्रीपुंसपरिष्वक्तपरिमाणं शरीरान्तरं बभूव। स एव च विराट् तथाभूतः स हैतावानासेति सामानाधिकरण्यात्।

ततस्तस्मात्पातनात्पतिश्च पत्नी चाभवतामिति दंपत्योर्निर्वचनं लौकिकयोरत एव तस्माद्यस्मादात्मान एवार्धः पृथग्भूतो येयं स्त्री तस्मादिदं शरीरमात्मनोऽर्धबृगलमर्धं च तदर्धबृगलं विदलमर्धविदलमिवेत्यर्थः। प्राक्स्त्र्युद्वहनात्कस्यार्धबृगलमित्युच्यते स्व आत्मन इति। एवमाह स्मोक्तवान्किल याज्ञवल्क्यो यज्ञस्य वल्को वक्ता यज्ञवल्कस्तस्यापत्यं

---

तथाभूतः संसक्तजायापुंपरिमाणोऽभूदिति यावत्।

न केवलं मनुः शतरूपेत्यनयोरेव दंपत्योरिदं निर्वचनं किंतु लोकप्रसिद्धयोः सर्वयोरेव तयोरेतद्द्रष्टव्यं सर्वत्रास्य संभवादित्याह—लौकिकयोरिति। उक्ते निर्वचने लोकानुभवमनुकूलयति—तस्मादिति। प्रागिति सहधर्मचारिणीसंबन्धात्पूर्वमित्यर्थः। आकाङ्क्षाद्वारा वक्ष्यमाणायामनुभवमयसम्बन्ध व्याचष्टे—कस्येत्यादिना। वृगलशब्दो विकारार्थः। अनुभवसिद्धेऽर्थे प्रामाणिकसंमतिमाह—

---

एक दूसरे से आलिङ्गित स्त्री-पुरुष की तरह उसने उस परिणाम वाले अपने इस शरीर को ही "द्वेधा" अर्थात् दो प्रकार से, "पातयत्" अर्थात्—पात कर दिया। मूलकारण से विराट् की व्यावृत्ति के लिए "इमम् एव" अर्थात् 'इस शरीर को ही' यह निश्चयार्थक प्रयोग है। तो क्या अपने स्वरूप का सर्वथा नाश कर दूध से दधिभाव प्राप्ति की तरह पूर्वस्वरूप को सर्वथा विनष्ट कर विराट् ऐसे परिमाण वाला नहीं हुआ? तो फिर कैसा हुआ? अपने स्वरूप में अवस्थित रहते हुए ही विराट्, सत्यसङ्कल्प होने के कारण अपने से भिन्न आलिङ्गित-स्त्रीपुरुष के परिमाण वाला दूसरा शरीर हो गया। वही पूर्वरूप में अवस्थित विराट् था, संयुक्त-स्त्रीपुरुष के भी विराडाकार होने से वह इस प्रकार परिमाण वाला हो गया। एक ही अधिकरण में रहने से "सः" और "एतावान्" का समानाधिकरण है।

'ततः' अर्थात् उस पातन से, मनु नाम के पति हुए और शतरूपा नाम वाली पत्नी हुई। यह सार्वत्रिक पति-पत्नी का निरूपण है। क्योंकि अपने शरीर से ही आधार्ध में विभक्त हुई यह स्त्री है। "तस्मादिदम्" अर्थात् इसी से यह शरीर अपनी आत्मा का अर्धबृगल है अर्थात् अर्ध विभाग है। उस विभाग में से जो अर्द्धविभाग है, उसे अर्धबृगल उसी प्रकार कहते हैं, जिस प्रकार शुक्ति और बांस को दो भागों में विभक्त करने पर एक भाग को अर्धविदल कहते हैं। यदि ऐसा है तो विवाह से पूर्व स्त्री किसकी अर्द्धबृगल कही जाती है? इस पर श्रुति कहती है—'अपनी आत्मा की ही अर्धबृगल होती है?' ऐसा याज्ञवल्क्य ने कहा है। (याज्ञवल्क्य नाम क्यों पड़ा?) "याज्ञवल्क्य." अर्थात् यज्ञ का वल्क या वक्ता यज्ञवल्क, उसकी सन्तान याज्ञवल्क्य हुई, उसे देवराति भी कहा है। ब्रह्मा का

---

१. मनु। २ शतरूपा। ३ निरूपणम्। ४. अतएवेति—अस्य निर्वचनस्य सार्वत्रिकत्वादेवेत्यर्थः। ५ स्वशरीरादेव भागो विभक्त इत्यर्थः। ६ स्वस्य। ७ विदलमिति शुक्तिवंशाद्यर्धभागवदित्यर्थः। ८. पुरुषस्य। ९. तस्यापि विराडाकारत्वादिति भाव.। १०. व्यभिचारिण. परस्त्रीप्रापणेन न भवति पूर्णतेत्याशयेन स्त्र्युद्वहनादितिभाष्यं व्याचष्टे-सहधर्मचारिणीसंबन्धादिति। ११ विभागार्थं।

**सो हेयमीक्षांचक्रे कथं नु माऽऽत्मन एव जनयित्वा संभवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ताᳪं समेवाभवत्ततो गावोऽजायन्त वडवेतराऽभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्ताᳪं**

उस शतरूपा ने (कन्या-गमन निषेध स्मृति वाक्य का) विचार किया कि अपने से उत्पन्न कर मेरे साथ सभोग कैसे करता है ? अच्छा हो ! ऐसी परिस्थिति में। मैं छिप जाऊँ। अत वह गौ हो गयी, इसे देख दूसरा मनुरूप पुरुष वृषभ होकर उससे सभोग करने लगा। इससे गाय और बैल उत्पन्न हुए। फिर वह शतरूपा घोडी हो गयी और मनु अच्छा घोडा बन गया। पुन. वह गर्दभी हो

---

याज्ञवल्क्यो दैवरातिरित्यर्थः। ब्रह्मणो वाऽपत्यं यस्मादयं पुरुषार्धं आकाशः स्त्र्यर्धशून्यः पुनरुद्वहनात्तस्मात्पूर्यते स्त्र्यर्धेन पुनः संपुटीकरणेनेव विदलार्धः। तां स प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवन्मैथुनमुपगतवान्। ततस्तस्मात्तदुपगमनान्मनुष्या अजायन्तोत्पन्नाः ॥३॥

सा शतरूपो हेयं सेयं दुहितृगमने स्मार्तं प्रतिषेधमनुस्मरन्तीक्षांचक्रे। कथं न्विद-

---

एवमिति। द्वेधापतने सत्येको भागः पुरुषोऽपरस्तु स्त्रीत्यत्रैव हेत्वन्तरमाह—यस्मादिति। उद्वहनात्प्रागवस्थायामाकाशः पुरुषार्धः स्त्र्यर्धशून्यो यस्मादसंपूर्णो वर्तते तस्मादुद्वहनेन प्राप्तस्त्र्यर्धेन पुनरितरो भाग. पूर्यते यथा विदलार्धोऽसंपूर्णः संपुटीकरणेन पुन. संपूर्णः क्रियते तद्वदिति योजना। पूर्वमपि स्वाभाविकयोग्यतावशेन संसर्गोऽभूदनादित्वात्संसारस्येति सूचयितु पुनरित्युक्तम्। पुरुषार्धस्येतरार्धस्य च मिथ. संबन्धान्मनुष्यादिसृष्टिरित्याह—तामित्यादिना।

स्मार्तं प्रतिषेधमिति। न सगोत्रां समानप्रवरां भार्यां विन्देतेत्यादिकमिति यावत्। अकृत्यं हीदं यद्दुहितृगमनं मातृतश्चाऽऽपञ्चमात्पुरुषात्पितृतश्चाऽऽसप्तमादिति स्मृतेरिति मत्वाऽऽह—कथमिति।

---

पुन याज्ञवल्क्य है—ऐसा भी प्रसिद्ध है। क्योंकि यह पुरुषार्ध शून्यत्वसादृश्य से आकाश स्त्र्यर्ध-शून्य है, इसलिए विवाह करने पर पुन यह स्त्र्यर्ध से पूरित होता है। जैसे (शुक्ति-वेणु आदि के) विदलार्ध पुन सम्पुटित कर देने पर पूर्ण हो जाता है। "ताम्" अर्थात् उस मनुनामक प्रजापति ने पत्नीरूप से कल्पना की हुई अपनी शतरूपानाम की कन्या से "समभवत्" अर्थात् मैथुन किया, "ततः" अर्थात् उस मैथुन धर्म से मनुष्य "अजायन्त" अर्थात् उत्पन्न हुए ॥३॥

स्मृतिप्रोक्त पुत्रीगमन सम्बन्धी प्रतिषेधवाक्य का स्मरण कर वह यह शतरूपा सोचने

---

१ प्रसिद्धो याज्ञवल्क्य। २ शून्यत्वसादृश्यादाकाश। ३ तामिति—ननु मनुशतरूपाभ्यां मनुष्यादिसृष्टिर्वर्ण्यते न च तयो सृष्टिर्माशिष्ट्वा ताभ्यामन्यसृष्टिर्वक्तु युक्तेत्याशङ्क्याऽऽह वार्तिके—'विराजमसृजद्ब्रह्मा सोऽसृजत्पुरुष विराट्। पुरुष तु मनु विद्धि यस्येय मानवी प्रजा' ॥११७॥ इति। स्रष्टा हि पुरुषो न सृज्यकोटिमनुप्रविशेदित्याशङ्क्याह—पुरुषमिति। द्वेधाऽऽपातयदित्यत्र द्वेधापातनव्याजेन मनुशतरूपयो सृष्टिरुक्तेति भाव इत्यादि। ४ आविवाहयोग्यता। ५ एवविधकन्या भार्यात्वेन नाङ्गीकुर्यादित्यर्थः।

**समेवाभवत्तत एकशफमजायताजेतराऽभवद्वस्त इतरो-ऽविरितरा मेष इतरस्ताᳪं समेवाभवत्ततोऽजावयो-ऽजायन्तैवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्य-स्तत्सर्वमसृजत ॥४॥**

गयी, तब मनु गर्दभ हो गया और उससे सभोग करने लग गया। इस मैथुन से एक खुर वाले पशु उत्पन्न हुए। पुन. शतरूपा बकरी हो गयी और मनु बकरा हो गया। जब वह भेड हो गयी, तब मनु भेडा हो गया और उससे सभोग करने लग गया। इसी से भेड़ बकरे उत्पन्न हुए। ऐसे ही चीटी से लेकर जितने स्त्रीपुरुषरूप जोडे है, उन सभी की इसी प्रकार उन दोनो ने सृष्टि की ॥४॥

---

मकृत्यं यन्मा मामात्मन एव जनयित्वोपाद्य संभवत्युपगच्छति। यद्यप्ययं निर्घृणोऽहं हन्तेदानीं तिरोऽसानि जात्यन्तरेण तिरस्कृता भवानीत्येवमीक्षित्वाऽसौ गौरभवत्। उत्पाद्यप्राणिकर्मभिश्चोद्यमानायाः पुनः पुनः सैव मतिः शतरूपाया मनोश्चाभवत्। ततश्च ऋषभ इतरः। ता समेवाभवदित्यादि पूर्ववत्। ततो गावोऽजायन्त। तथा बडवेतराऽभवदश्ववृष इतरः। तथा गर्दभीतरा गर्दभ इतरः। तत्र वडवाश्ववृषादीनां संगमात्तत एकशफमेकखुरमश्वाश्वतरगर्दभाख्यं त्रयमजायत। तथाऽजेतराऽभवद्वस्तश्छाग इतरः। तथाऽविरितरा मेष इतरः। तां समेवाभवत्। तां तामिति वीप्सा। तामजां तामविं चेति

---

तयोर्जात्यन्तरगमनं कथमित्याशङ्क्याऽऽह—यद्यपीति। शतरूपायां गोभावमापन्नायामृषभादिभावो मनोर्भवतु तावता यथोक्तदोषपरिहारस्तयोर्वडवादिभावे तु न कारणमस्तीत्याशङ्क्याऽऽह—उत्पाद्ये ति। ततस्तस्या गोभावादनन्तरमिति यावत्। गवां जन्मार्थं मिथःसंभवनं तत शब्दार्थः। तत्र तेषामुत्पत्तौ सत्यामिति यावत्। वाक्यद्वये वीप्सा विवक्षितेत्याह—तामिति। तामेवाभिनयति—तामजामिति। तां

---

लगी। 'कथ नु' अर्थात् यह अशास्त्रीय कृत्य है, जो अपने से ही उत्पन्न करके मुझमे "सभवति" अर्थात् ग्राम्य धर्म करता है। यद्यपि यह तो निर्लज्ज है, मैं "हन्त" अर्थात् अब "तिरोऽसानि" जात्यन्तर रूप से अपने को छिपाये लेती हू—यह सोचकर वह गाय हो गयी। उत्पन्न किय जाने वाले प्राणियो के कर्मों से उदित हुई बुद्धि के समान मनु और शतरूपा की पुन पुन. वैसो बुद्धि होती रही। शतरूपा के गोभाव के अनन्तर मनु बैल हो गया। वह पूर्ववत् गाय के साथ ग्राम्यधर्म करने लगा। गो वृषभ के सम्बन्ध के बाद गाय बैल उत्पन्न हुए। फिर शतरूपा घोडी हो गयी और मनु अश्वश्रेष्ठ हो गया। इसके बाद शतरूपा गर्दभी हो गयी और मनु गर्दभ हुआ। उन घोडी और अश्वश्रेष्ठ के समागम से घोड़ा खच्चर और गर्दभाख्य तीनो एक खुर वाले पशु उत्पन्न हुए। इसी प्रकार शतरूपा बकरी हो गयी और मनु बकरा हो गया, शतरूपा भेड़ हो गयी और मनु भेड़ा हो गया और उस उस शरीर से सङ्गम करने लगा। "ता" शब्द की "ताम्, ताम्" अर्थात् "वह-वह" यह द्विरुक्ति समझ लेनी

---

१. निर्लज्ज.। २ गोवृषभसम्बन्धानन्तरम्। ३. गर्दभाश्वजातीयादश्वतर इति बोध्यम्। ४. आदिशब्द प्रधानवाची। ऋषभोत्तम इति यावत्। ५. यथोक्तदोषेति—स्मार्तप्रतिषेधातिक्रमणप्रयुक्तप्रत्यवायरूपदोषेत्यर्थ। ६ दर्शयति।

**सोऽवेदहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याꣳ हास्यैतस्यां भवति य एवं वेद ॥५॥**

इस प्रकार सम्पूर्ण जगत् की रचना करने के बाद उस प्रजापति ने जाना कि "मैं ही सृष्टि हूं" मैंने ही इस सम्पूर्ण जगत् की रचना की है। अतएव वह प्रजापति सृष्टि नाम वाला हुआ। जो ऐसा जानता है वह इस प्रजापति की सृष्टि मे प्रजापति के समान ही स्रष्टा होता है ॥५॥

---

सममवदेवेत्यर्थः । ततोऽजाश्चावयश्चाजावयोऽजायन्त । एवमेव यदिदं किञ्च यत्किचेदं मिथुनं स्त्रीपुंसलक्षणं द्वंद्वमा पिपीलिकाभ्यः पिपीलिकाभिः सहानेनैव न्यायेन तत्सर्वमसृजत जगत्सृष्टवान् ॥४॥

स प्रजापतिः सर्वमिदं जगत्सृष्ट्वाऽवेत् । कथम् । अहं वावाहमेव सृष्टिः सृज्यत इति सृष्टं जगदुच्यते सृष्टिरिति । यन्मया सृष्टं जगन्मदभेदत्वादहमेवास्मि न मत्तो व्यतिरिच्यते । कुत एतत् । अहं हि यस्मादिदं सर्वं जगदसृक्षि सृष्टवानस्मि तस्मा-

---

वडवां तां गर्दभीं चेत्यपि द्रष्टव्यम् । ततो मिथ संभवनाद्ययोक्तादिति यावत् । विशेषाणामानन्त्यात्प्रत्येकमुपदेशासंभव मन्वान. मक्षिप्योपसंहरति—एवमेवेति । सद्विभजते—इद मिथुनमिति । पशुकर्मप्रयोगो न्याय ॥४॥

यद्यपि मन्वादिसृष्टिरेवोक्ता तथाऽपि सर्वा सृष्टिरुक्तैवेति सिद्धवत्कृत्याऽऽह—स प्रजापतिरिति । अवगतिं प्रश्नपूर्वकं विशदयति—कथमित्यादिना । कथं सृष्टिरस्मीत्यवधार्यते कर्तृक्रिययोरेकत्वायोगादित्याशङ्क्याऽऽह—सृज्यत इतीति । पदार्थमुक्त्वा वाक्यार्थमाह—यन्मयेति । जगच्छब्दादुपरि तच्छब्दमध्याहृत्याहमेव तदस्मीति संबन्ध । तत्र हेतुमाह—मदभेदत्वादिति । एवकारार्थमाह—नेति । मदभेदत्वादिरयुक्तमाक्षिप्य समाधत्ते—कुत इत्यादिना । न हि सृष्टं स्रष्टुरर्थान्तरं तस्यैव तेन तेन मायावि-

---

चाहिये अर्थात् बकरारूप मनु और भेडारूप मनु उस बकरीरूपा शतरूपा और भेडरूपा शतरूपा से समागम करने लगा। उससे बकरी और भेडो की उत्पत्ति हुई। इस प्रकार जो कुछ भी है, चीटी से लेकर स्त्रीपुरुष-द्वन्द्वात्मक जगत् है, उसने इन सबकी इसी तरह से "असृजत" अर्थात् उत्पत्ति की ॥४॥

उस प्रजापति ने यह सब जगत् उत्पन्न करके समझा। किस प्रकार समझा ?—"अहं वाव" अर्थात् मैं ही, सृष्टि हूं। "सृजन की जाती है" इस व्युत्पत्ति से सृष्ट जगत् को "सृष्टि" इस शब्द से कहा जाता है। जिस जगत् की मैंने सृष्टि की है, विवर्तरूप से जगत् मुझसे अभिन्न होने के कारण

---

१ आङोऽभिव्याप्त्यर्थकत्व मत्वाक्त पिपीलिकाभि सहेति। २ अवगतवान्। ३ इति व्युत्पत्तेरर्थ। ४ इति शब्देनेत्यर्थ। ५ मदभेदत्वादिति—मद्विवर्तत्वे न जगतो मदभिन्नत्वादित्यर्थं। ६ कुत एतदिति—जगतस्त्वदभेदत्वेऽपि को हेतुरित्याक्षेपार्थं। ७ मैथुनात्मकादित्यर्थं। ८ उपसंहारवाक्य विवृणोतीत्यर्थ। ९ रीति। १० ननु पूर्णां सृष्टिमसृष्ट्वा सृष्टिरस्मीति स्रष्टा कथ सर्वां सृष्टिमवधारयतीत्याऽऽशङ्क्य या वक्ष्यमाणा सोमाग्नीन्द्रादिरूपाऽनुग्राहकसृष्टि साप्युक्तानुग्राह्यमन्वादिसृष्टिवदुक्तेति विराड् मन्यते अतस्तामपेक्ष्य सृष्टिरस्मीत्यवधारितवानित्यभिप्रेत्योत्तरवाक्यमवतारयति—यद्यपीति। ११ तत्रेति—सृष्टिरस्मीत्यवधारण इत्यर्थ। १२ रूपेणेत्यर्थ.।

**अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः । 'तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमे-**

इस प्रकार फिर उस प्रजापति ने मन्थन किया । उससे मुखरूप योनि से दोनो हाथो के द्वारा अच्छी प्रकार मन्थन करके अग्नि को उत्पन्न किया । इसीलिए ये दोनो ही हाथ भीतर की ओर से लोम-रहित है, क्योकि स्त्रियो की योनि भीतर से लोम शून्य ही होती है (अत ये हाथ और मुख दोनो ही दाहक अग्नि की योनि माने जाते हैं । याज्ञिक लोग अग्नि, इन्द्रादि को) इसीलिए भिन्न-भिन्न देवता

---

त्यर्थः । यस्मात्सृष्टिशब्देनाऽऽत्मानमेवाभ्यधात्प्रजापतिस्ततस्तस्मात्सृष्टिरभवत्सृष्टिनामाभवत् । सृष्ट्यां जगति ह्यस्य प्रजापतेरेतस्यामेतस्मिञ्जगति स प्रजापतिवत्स्रष्टा भवति स्वात्मनोऽनन्यभूतस्य जगतः । कः । य एवं प्रजापतिवद्यथोक्तं स्वात्मनोऽनन्यभूतं जगत्साध्यात्माधिभूताधिदैवं जगदहमस्मीति वेद ॥५॥

एवं स प्रजापतिर्जगदिदं मिथुनात्मकं सृष्ट्वा ब्राह्मणादिवर्णनियन्त्रीर्देवताः सिसृक्षुरादौ । 'अथेति शब्दद्वयमभिनयप्रदर्शनार्थम् । अनेन प्रकारेण मुखे हस्तौ प्रक्षिप्याभ्यमन्थदा-

---

यदवस्थानादित्यर्थः । ततः सृष्टिरित्यादि व्याचष्टे—यस्मादिति । किमर्थं स्रष्टुरेषा 'विभूतिरुपदिष्टेत्याशङ्क्याऽऽह—सृष्ट्यामिति । जगति भवतीति सबन्धः । वाक्यार्थमाह—प्रजापतिवदिति ॥५॥

ननु सर्वा सृष्टिरुक्तोक्तं च प्रजापतेर्विभूतिसंकीर्तनफलं किमवशिष्यते यदर्थमुत्तरं वाक्यमित्याशङ्क्याऽऽह—एवमिति । आदावभ्यमन्थदिति 'सबन्ध । अभिनयप्रदर्शनमेव विशदयति—अनेनेति ।

---

"मैं ही हूँ" वह मुझसे भिन्न नही है । ऐसा क्यो है ? क्योकि मैंने ही इस सम्पूर्ण जगत् को "असृक्षि" अर्थात् उत्पन्न किया है । इसलिए यह मुझसे अभिन्न है—यह इसका आशय है । क्योकि प्रजापति ने अपने का ही सृष्टि शब्द से कहा था, 'तत" अर्थात् इसलिए "सृष्टिरभवत्' अर्थात् सृष्टि नाम वाला हुआ । "ह्यस्य' अर्थात् इस प्रजापति की "सृष्टयाम् ' अर्थात् सृष्ट जगत् मे "एतस्याम्" अर्थात् इस जगत् मे । वह प्रजापति के समान अपने से अभिन्न जगत् का स्रष्टा होता है । कौन स्रष्टा होता है ? जो 'एवम्' अर्थात् प्रजापति के समान पूर्वकथित अपने से अभिन्न जगत् को (प्रजापति के तादात्म्यरूप से) "अध्यात्म, अधिभूत और अधिदैव के सहित जगत् मै हू" इस प्रकार जानता है ॥५॥

इस प्रकार मिथुनात्मक सृष्टि की उत्पत्ति कर प्रजापति ने ब्राह्मणादि चार वर्णों को नियमाधीन करने वाली देवताओ की इच्छा से पहले अग्निदेवता को उत्पन्न किया । "अथ" शब्द अनुग्राह्य सृष्टि के अनन्तर का बोधक है । "इति" शब्द मन्थनप्रकारक अभिनय प्रदर्शन के

---

१. तत्-तत्र-कर्मकाण्डे इत्यर्थः । आहुरिति मुग्धकर्मिण देवताभेद पारमार्थिक मन्यमाना आहुरित्यर्थ । देवमिति तद्यादरणीममिति शेष. । २. स्रष्टा भवतीति–प्रजापतिना तादात्म्यापन्नतया तद्रूपेणैव स्रष्टा भवतीत्यर्थः । ३ अथेति–अत्राथशब्दोऽनुग्राह्यसृष्ट्यानन्तर्यार्थः । इतिशब्दस्तु मन्थप्रकाराभिनयप्रदर्शनार्थ इति विवेकः । ४. सृष्टिरूपा विभूति. । ५ सम्बन्ध इति–तथा चानुग्राह्यब्राह्मणादिसृष्ट्यनन्तरमनुग्राहकाग्न्यादिसृष्टिं वक्तुमुत्तर वाक्यमिति भाव ।

**तस्यैव सा [1]विसृष्टिरेष उ ह्येव सर्वे देवाः । अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदꣳ सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः**

मानते हुए भी ऐसा कहते देखे जाते हैं कि इस अग्नि का यजन करो, इस इन्द्र का यजन करो, क्योंकि यह एक ही प्रजापति देव की विसृष्टि है। यह प्रजापति ही निखिल देवस्वरूप है, तत्पश्चात् उस प्रजापति ने वीर्य से उस वस्तु को उत्पन्न किया, जो कुछ भी यह संसार में गीला दीखता है वही सोम है। यह सब इतना ही है, यही अन्न और अन्नाद है। सोम ही अन्न है और अग्नि ही अन्नाद है। यह

---

[2]सिमुख्येन मन्थनमकरोत् । मुखं हस्ताभ्यां मथित्वा स मुखाच्च योनेर्हस्ताभ्यां च योनिभ्यामग्निं ब्राह्मणजातेरनुग्रहकर्तारमसृजत सृष्टवान् । यस्माद्दाहकस्याग्नेर्योनिरेतदुभयं हस्तौ मुखं च तस्मादुभयमप्येतदलोमकं लोमविवर्जितम् । किं [3]सर्वमेव । न अन्तरतोऽभ्यन्तरतः । अस्ति हि योन्या सामान्यमुभयस्यास्य । किम् । अलोमका हि योनिरन्तरतः स्त्रीणाम् । [4]तथा ब्राह्मणोऽपि मुखादेव जज्ञे प्रजापतेः । तस्मादेकयोनित्वाज्ज्येष्ठेनेवानुजोऽनुगृह्यतेऽग्निना ब्राह्मणः । [5]तस्माद्ब्राह्मणोऽग्निदेवत्यो [6]मुखवीर्यश्चेति श्रुतिस्मृतिसिद्धम् ।

---

मुखादेरग्निं प्रति योनित्वे गमकमाह–यस्मादिति । [7]प्रत्यक्षविरोधं शङ्कित्वा दूषयति–किमित्यादिना । हस्तयोर्मुखे च योनिशब्दप्रयोगे निमित्तमाह–अस्ति हीति । प्रजापतेर्मुखादित्यग्निः सृष्टोऽपि 'कथं ब्राह्मणमनुगृह्णाति तत्राऽऽह–तथेति । [8]उक्तेऽर्थे श्रुतिस्मृतिसंवादं दर्शयति–तस्मादिति । 'आग्नेयो वै ब्राह्मण.' इत्याद्या श्रुतिस्तदनुसारिणी च स्मृतिर्द्रष्टव्या ।

---

लिए है। इस प्रकार मुख मे हाथ डाल कर "अभ्यमन्थत्" अर्थात् पूरे प्रयत्न से मन्थन किया। उसने मुख को हाथों से मथकर मुख और हाथरूप योनियों से "अग्निम्" अर्थात् ब्राह्मण जाति पर अनुग्रह करने वाले अग्नि देवता को "असृजत्' अर्थात् उत्पन्न किया। क्योंकि दो हाथ और मुख यह दोनों दाहकगुण वाले अग्नि की योनि है। इसलिये यह दोनों ही "अलोमकम्" अर्थात् रोमरहित हैं। क्या बाहर और भीतर सब जगह लोमरहित है? ऐसा नहीं है। 'अन्तरत' अर्थात् अन्दर से ही लोमरहित हैं। (हस्त द्वय और मुख के लिए 'योनि" शब्द का प्रयोग करने में हेतु दिखाते हैं।) इन दोनों की योनि से समानता है। क्या समानता है? स्त्रियों की योनि भी अन्दर से रोमशून्य होती है। अग्नि के समान ब्राह्मण भी प्रजापति के मुख से उत्पन्न हुआ है। इसलिए एक ही योनि से, उत्पन्न होने के कारण अग्नि, ब्राह्मण पर उसी प्रकार अनुग्रह करता है, जिस प्रकार बड़ा भाई अपने छोटे भाई पर अनुग्रह करता है। ब्राह्मण के अग्नि से अनुग्राह्य होने के कारण अग्नि ही ब्राह्मण का देवता है और वह मुखरूप वीर्य वाला है। इस प्रकार ("आग्नेयो वै ब्राह्मण") श्रुति और स्मृति से सिद्ध होता है।

अग्निदेवता की तरह बल की आश्रयभूता भुजाओं से उसने क्षत्रियजाति के नियन्ता

---

१ विभूति । २ सर्वप्रयत्नेन । ३ सबाह्याभ्यन्तरमित्यर्थ । ४ अग्निवत् । ५ ब्राह्मणस्यानुग्राह्यत्वात् । ६ तेज सामर्थ्यं च वीर्यम् । ७ प्रत्यक्षेण हि मुखोपरि श्मश्र्वादिलोमानि दृश्यन्ते हस्तपृष्ठभागे चेति प्रत्यक्षविरोध । ८ अग्नेर्ब्राह्मणानुग्राहकत्वस्ये ।

**सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्टचा७ हास्यैतस्यां भवति य एवं वेद ॥६॥**

प्रजापति की अतिसृष्टि है—अर्थात् अपने से भी बढी हुई सृष्टि है कि जो उसने अपने से उत्कृष्ट देवताओ की रचना की । क्योकि स्वय मरणधर्मा होने पर भी अमरणधर्मा देवताओ की रचना इसने ही की है, अतएव अतिसृष्टि है । जो इस प्रकार इसकी उपासना करता है, वह इस अतिसृष्टि मे इस प्रजापति के समान ही जगत् का स्रष्टा हो जाता है ॥६॥

---

तथा बलाश्रयाभ्यां बाहुभ्या बलभिदादिक क्षत्रियजातिनियन्तारं क्षत्रियं च । 'तस्मादैन्द्रं क्षत्रं बाहुवीर्यं चेति श्रुतौ स्मृतौ चावगतम् । तथोरुत ईहाश्रयाद्वस्वादिलक्षरण विशो नियन्तारं विश च । 'तस्मात्कृष्यादिपरो वस्वादिदेवत्यश्च वैश्यः । तथा 'पूषणं पृथ्वीदेवतां शूद्रं च पद्भ्या परिचरणक्षममसृजतेति श्रुतिस्मृतिप्रसिद्धम् । 'तत्र क्षत्रादिदेवतासर्गमि'हानुक्तं वक्ष्यमाणमप्युक्तवदुपसंहरति 'सृष्टिसाकल्यानुकीर्त्यै । 'यथेयं श्रुति-

---

'अग्निमसृजत' इत्येतदुपलक्षणार्थमित्यभिप्रेत्य सृष्ट्यन्तरमाह—तथेति । बलभिदिन्द्रः । आदिशब्देन वरुणादिर्गृह्यते । क्षत्रिय चासृजतेत्यनुवर्तते । उक्तमर्थं प्रमाणेन द्रढयति—तस्मादिति । "ऐन्द्रो राजन्य.' इत्याद्या श्रुतिस्तदनुसारिणी च स्मृतिरवधेया । विशं चासृजेति पूर्ववत् । ईहाश्रयादूरुतो जातत्वं वस्वादेर्ज्येष्ठत्वं च तच्छब्दार्थ. । 'पद्भ्या शूद्रो अजायत' इत्याद्या श्रुतिस्तथाविधा च स्मृतिरनुसर्तव्या । 'अग्निसर्गस्य "वक्ष्यमाणेन्द्रादिसर्गोपलक्षणत्वे सति "सृष्टिसाकल्यादेव उ एव सर्वे देवा इत्युपसंहारसिद्धिरिति फलितमाह—तत्रेति । "उक्तेन "वक्ष्यमाणोपलक्षणं सर्वशब्दः सूचयतीति भावः । किञ्च सृष्टिरत्र"न विवक्षिता किंतु येन प्रकारेण सृष्टिश्रुति. स्थिता तेन प्रकारेण देवतादि सर्व

---

इन्द्रादिको और क्षत्रियो को उत्पन्न किया । (इन्द्र और क्षत्रियो के बाहु से उत्पन्न होने से) क्षत्रिय इन्द्र देवता से अनुग्राह्य और बाहुरूप वीर्य वाला होता है ।—यही बात ("ऐन्द्रो राजन्य") श्रुति

---

१ तस्मादिति—इन्द्रक्षत्रयोर्बाहुजत्वादित्यर्थ । २ ईहाश्रयोरुजत्वाद् वस्वाद्यनुजत्वाच्च । ३ पुष्यतीतिव्युत्पत्त्या पोषणकर्त्री पृथ्व्यभिमानिदेवताम् । ४ तत्र छन्दार्थंष्टीकोक्त । ५ इहानुक्तमपीति । साऽग्निमसृजतेत्यग्नेरेव सृष्टिरुक्ता तद्रेतसोऽसृजतेति चन्द्रस्य द्रवात्मन सोमस्य न तु क्रमानुसारेण देवक्षत्रस्येन्द्रादे सर्गमिहोक्तमित्यर्थ । इन्द्रादीना स्रष्टव्यत्वाभावादत्र नोक्ता सृष्टिरित्याशङ्क्याह—वक्ष्यमाणमपीति । इन्द्रादीनामप्यविद्याप्रकरणे कर्मसंनिधौ सा वक्ष्यत इत्यर्थ । ननु तत्रेन्द्रादीना सृष्टेरुक्तावत्रानुक्तौ च श्रुत कोऽभिप्राय इति चेदुच्यत । अविद्याधिकारे कर्माम्नानवत्कर्मसंनिधौ देवसर्गाम्नान तपामाविद्यककर्मसु सम्प्रदानत्वेनाधिकृनाना तत्रैवाह्नत न तु ब्रह्मविद्यायामित्यभिप्रेत श्रुतरिति । तदुक्त वार्तिके—'अनुग्राहकदेवाना सर्गोऽत्र प्रस्तुतो महान् । तत्राग्नेरुदितोत्पत्तिन िन्द्रादेरिहोच्यते ॥ अविद्याधिकृतौ तेषा सृष्टिरूर्ध्वं प्रवक्ष्यते । कर्माधिकृतसम्बन्धप्रतिपत्त्यर्थमेव हि'ति'॥ १२७-१२८॥ अत्र देवसर्गस्य महत्त्वम् अनवच्छिन्नदेवताविषयत्वाद् अनुग्राह्यसृष्ट्यपेक्षयोत्कृष्टत्वाच्च बोध्यम् । ६ सृष्टिपरिपूर्तिकथनाय । ७ यथेयमिति । यथा स्रष्टा प्रजापति सृष्ट जगदित्येव प्रकारेण । इम-प्रकृतसृष्टिश्रुति, व्यवस्थिता—प्रतिष्ठिता उक्तार्थंकतयाऽचलप्रतिष्ठा वर्तेति यावत् । ८ इन्द्रादिसर्गस्य वक्ष्यमाणत्वादेव उ ह्येव सर्वे देवा इत्युपसंहारोऽप्युक्तो देवसृष्टे साकल्यनानुक्तत्वादित्याशङ्क्याह—इन्द्रनिय तृकक्षत्रिय । ९. नन्विन्द्रादिसर्गस्य... १० बृ०उ० १।४।११ । ११ सृष्टिसाकल्यस्य सम्पन्नत्वात् । १२ अग्निसर्गेण । १३ अग्निसर्गस्यति । १४ प्रकरणे । इन्द्रादिसर्गोपलक्षणमवबोधनम् ।

र्व्यवस्थिता तथा प्रजापतिरेव सर्वे देवा इति [1]निश्चितोऽर्थः । स्रष्टुरनन्यत्वात्सृष्टानाम् । प्रजापतिनैव तु सृष्टत्वाद्देवानाम् ।

अथैवं प्रकरणार्थे व्यवस्थिते तत्स्तुत्यभिप्रायेणा[2]विद्वन्मतान्तरनिन्दोपन्यासः । अन्यनिन्दाऽन्यस्तुतये । तत्तत्र कर्मप्रकरणे ॐकेवलयाज्ञिका यागकाले यदिदं वच आहुर-

प्रजापतिरेवेति विवक्षितमित्याह—यथेति । [3]तत्र हेतुमाह—स्रष्टुरिति । तथाऽपि कथं देवतादि सर्वं प्रजापतिमात्रमित्याशङ्क्याऽऽह—प्रजापतिनेति ।

तद्यदिदमित्यादिवाक्यस्य तात्पर्यमाह—अथेति । स्रष्टा प्रजापतिरेव सृष्टं सर्वं कार्यमिति प्रकरणार्थे पूर्वोक्तप्रकारेण व्यवस्थिते सत्यन्तरं [4]तस्यैव स्तुतिविवक्षया तद्यदिदमित्याद्यविद्वन्मतान्तरस्य निन्दार्थं वचनमित्यर्थः । मतान्तरे निन्दितेऽपि कथं प्रकरणार्थः स्तुतो भवतीत्याशङ्क्याऽऽह—अन्येति ।

और स्मृति से जानी जाती है । इसी प्रकार चेष्टा के आश्रय होने के कारण ऊरुओं से वैश्य जाति के नियन्ता वसु आदि देवता को और वैश्य को उत्पन्न किया । (ईहाश्रय और वसु आदि के अनुज होने के कारण) इसीलिए कृषि आदि कर्मों में तत्पर वैश्य, वसु आदि देवताओं से अनुगृहीत होता है । इस प्रकार चरणों से पोषणकर्त्री पृथ्व्यभिमानीदेवता एवं सेवापरायण शूद्र की सृष्टि की । यही बात ("पद्भ्यां शूद्रोऽजायत") श्रुति और स्मृति से सिद्ध होती है ।

उनमें (सृष्टिसाकल्य के सम्पन्न होने से) क्षत्रियादि देवताओं की सृष्टि का यद्यपि उपनिषद् मन्त्र में कथन नहीं है । तो भी आगे कहे जाने वाले प्रकरण का सृष्टिपरिपूर्ति कथन के लिए कहे हुए के समान वह उपसंहार करती है । जिस प्रकार प्रजापति स्रष्टा है, जगत् सृष्ट कार्य है, इस सृष्टि श्रुति की अचल प्रतिष्ठा है, उसी प्रकार प्रजापति ही सर्वदेवमय है, ऐसा इसका विवक्षित अर्थ है, क्योंकि उत्पन्न पदार्थ स्रष्टा से अन्य नहीं होते, और प्रजापति ही देवताओं की सृष्टि करने में कारण है ।

१ विवक्षित । २ अविद्वन्मतेति । तथा च वार्तिके— 'अविद्वद्देवताभिद्धीप्रतिषेधाय साम्प्रतमिति" ॥१२६॥ अविदुषां परस्यामेकस्यामेव हि देवताया या भेदधीस्तन्निषेधायाधुना तद्यदिदमित्यादिवाक्यं प्रवृत्तमिति योजना । ३ प्रदर्शितविवक्षितऽर्थे । ४ प्रकरणार्थस्यैव ।

ॐकेवलयाज्ञिका इति शुद्धकर्मिण इति यावत् । तथा च वार्तिकाचार्या आहु —'यदिदं कर्मिण प्राहु कर्मभूमावमेधस । अमुमग्निममुं सोमं यजेति यजिसश्रयात् ॥ यजेति लिङ्गान्निर्देशा कर्मिणामेव गम्यते । न तु विध्वस्तमोहानां प्रत्यङ्मात्रैकदायिनाम् ॥ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानव । आत्मन्येव च सतुष्टस्तस्य कार्यं न विद्यते ॥ उत्पन्नैकात्म्ययाथात्म्यभास्वद्विज्ञानभास्कर-सम्प्लुष्टाविद्यावहलतमसां कर्मनिह्नुतिम् ॥ सर्वकर्माधिकाराणां निषेधं प्रत्यपीदत् । पुराणं शाश्वतो विष्णु प्रपन्नाय किरीटिने ॥१३१-१३५॥ इति । देवतास्वरूपधीवैधुर्यमेवामेधस्त्वम् । नन्वाहुरिति क्रियापदं कर्तृमात्रमपेक्षते तद्विद्याप्रकरणत्वाद्विदुषामेव तत्र कर्तृत्वं न कर्मिणामिति नेत्याह—यजीति ॥ नन्वस्मिन्वाक्ये देवताभेदानुवादमात्रं गम्यते न कर्मिनिन्दा न च ते निन्दितुं शक्यन्ते श्रेयोमार्गे प्रवृत्तत्वात् । यथाऽऽहु —यो यागमनुतिष्ठति स धार्मिकमिति हि समाचक्षत इति । अन्यथा विदुषामपि निन्दा स्यात् तथाच पूर्वपक्षस्तत्राह—यजेतीति । यद्यपि कर्मिणः श्रेयोमार्गे प्रवृत्तान् यो हि पुरुषान्निःश्रेयसे न समुनक्ति स धर्मस्तथाऽपि तेषामेषा निन्दैव भेदानुवादव्याजेन सूच्यते । अमुमग्निं यजामुमिन्द्रं यजेति हि वदन्तो देवता भिन्दानास्ते दृश्यन्ते । तथा च योऽन्यथा सन्तमात्मानमित्यादिन्यायादन्यथाज्ञानलिङ्गान्निन्दायोग्यास्ते भवन्ती-

मुमग्नि यजामुमिन्द्रं यजेत्यादि ¹नामशस्त्रस्तोत्रकर्मादिभिन्नत्वाद्भिन्नमेवाग्न्यादिदेवमेकैकं

एकैकं देवमित्यस्य तात्पर्यमाह—नामेति । ²काठकं कालापकमितिवन्नामभेदात्क्रतुषु तत्तद्देवता³स्तुति-

अब इस प्रकार प्रकरण का अर्थ प्रतिष्ठित हो जाने के कारण उसकी स्तुति के अभिप्राय से

१ नामेत्यादि । नाम इन्द्रादि, शस्त्रस्तोत्रे स्तुतिविशेषौ तेषा प्रतिदेव भिन्नत्वाद्भेद इत्यर्थ । २ कठप्रोक्त कर्म । ३ स्तुतिभेदादिति—शस्त्रस्तोत्रादिरूपस्तुतिभेदादित्यर्थ । स्तुतिभेदश्चाऽन्यथाऽनुपपन्न स्तुत्यान् भिनत्तीति भाव ।

त्यर्थं । यत्तु विदुषामपि निन्दा स्यादिति तत्राऽऽह—नत्विति । निन्दायोग्यतेति शेष । मोहव्वसे हेतुमाह—प्रत्यगिति ।। 'न हि कश्चित्क्षणमपि' इत्यादिस्मृतेर्ज्ञानिनामपि कर्मित्वान्निन्दा स्यादित्याशङ्क्य तेषामकर्मित्वे भगवद्वाक्यमेव प्रमाणयति—यस्त्विति । उल्लासो मानसो रतिस्तदनन्तरभाविसुख तृप्ति सैव प्रकृष्टा सतुष्टिरित्यवान्तरभेद ।। अथात्र मुक्तस्य कर्माभावो वर्ण्यते विदुषस्तदभावस्तु कथमित्याशङ्क्योक्तवाक्यतात्पर्यमाह—उक्तेति । कर्मनिवृत्ति प्रत्यपीपददिति सम्बन्ध । तामेव व्याचष्टे—सर्वेति । अधिकारपदेन प्रवृत्त्यादिग्रह । न च भगवदुक्तवस्तुन्यविश्वासोऽधिकारिलक्षणविशिष्टाय प्रतिपादितत्वादित्याह—प्रपन्नायेति । अनाद्यनन्तो व्यापनशीलश्च भगवानिति वस्तु वैशिष्ट्यमाह—पुराण इति ।। 'मिथो भिन्न यदाहुस्त एकैक देवमध्वरे । तदसत्प्रतिपत्तव्य यतोऽभिन्नैव देवता ।। भेदग्राहि न नो मान घटादावपि विद्यते । किमु निःशेषभिन्नार्थव्यापिन्यात्मन्यसौ मयि ।। विविधाऽस्यैव सा सृष्टिर्नाभावरादिवद्विश्वमध्यात्मादिविभागवत् । ओतप्रोतात्मना तस्थौ विराट्सूत्रादिवस्तुषु ।। यत एवमतो देवा सर्वेऽपि स्यु प्रजापते । तस्यारिति हेतुमभीरणम् । कारण न विहायेह कार्यमन्यत्र वर्तते ।। एक एव तु विश्वात्मा मायया मोहयञ्जगत् । एकता बहुतामेति कुम्भवन्मणिसश्रयात् ।। अभिन्न एव भूतात्मा प्रतिभूतसमाश्रित । एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति ।।१३६-१४२।।" तस्यामधिकृतो तत्तद्रूप प्रपद्यते ।। तद्यदिदमित्यादिना पूर्वपक्षानुवादद्वारा कर्मिणा निन्दा न विदुषामित्युक्तमिदानी तन्नेत्यादिभाष्य व्याकुर्वन्निन्दाफलनिषेध दर्शयति—मिथ इति । विश्व भूत भुवन चित्र बहुधा जात जायमान च यत्सर्वो ह्येष रुद्र इतिश्रुतेरात्मैव देवता सर्वा इति स्मृतेरेक वा सयोगरूपचोदनाख्याविशेषादिति(जै० २४६) न्यायाच्चात्मत्वेन देवतैक्यादितिहेतुमाह—यत इति ।। आत्मन्यपि प्रतिदेह भेदात् कथ तदभेदेन देवतैक्यमित्याशङ्क्याऽऽह—भेदेति । हिरण्यगर्भेऽसौ प्राणस्यापि स्वरूपभूते सर्वप्रत्यगात्मनि भेदग्राहि मान नेति किं वाच्यमित्यर्थ ।। श्रुत्यन्तरावष्टम्भेनापि देवताभेदाभाव साधयति—नाभाविति । यथा रथस्य नाभावरा समर्पितास्तथा तेष्वाध्यात्माधिभूताधिदैवभिन्नमशेषमपि जगद्दीपतन्तुवत्तियक्ततुवच्च विराट्सूत्राव्याकृतात्मसु स्थितम् । भौतिक हि सर्वं भूतव्यतिरेकेण नास्ति तान्यपि पञ्चीकृतान्यपञ्चीकृतातिरेकेण न सन्ति, तान्यपि नाव्याकृतातिरेकेण विद्यन्ते तदपि न प्रत्यगतिरेकेणास्त्यतो न क्वचिद्भेदसिद्धिरित्यर्थ ।। श्रुतियुक्तिभ्या देवताभेद निरस्यैतस्यैव सा विसृष्टिरित्यस्यार्थमाह—विविधेति । या सृष्टिरस्याद्या नाना प्रस्तुता सा प्रकृतस्य स्रष्टुरेवेति योजना । एष उ ह्येवेत्युत्तरवाक्यार्थ हेतुत्वेनोच्यत इति तात्पर्यमाह—इति हेत्विति । स्रष्टु सर्वदेवताहेतुत्वमत्र दृष्ट कथमेतत्तस्य सर्वदेवतात्मकत्व कारणमित्याशङ्क्याह—कारणमिति ।। हेतुवाक्यार्थमुक्त्वा प्रतिज्ञामादत्ते—यत इति । सर्वस्य जगतो देवादिरूपस्य प्रजापतिकार्यत्वात्कारणादन्यत्र च तदयोगात्तन्मात्र सर्वं जगदित्यर्थ । प्रतिमा विभजते—तस्यामिति ।। एकस्य नानारूपत्व विरुद्धमित्याशङ्क्याह—एक इति । विश्वात्मा विराडुक्तो विश्वस्याऽऽत्मा तदस्याऽऽत्मेति वा निरुक्ते स वस्तुतोऽद्वयस्त्वात्माऽपि मायया जग मोहयन्समष्टिव्यष्टिता याति । यथा कुम्भो नीललोहितादिमणिसमर्पितत्तद्रूपो दृश्यते तथेत्यर्थ ।। उक्तमर्थं स्मृत्या समर्थयते—अभिन्न इति । भूतानामात्मा वस्तुतुल्यैकोऽपि सन्नेकधा सर्वेषु भूतेषु खण्डादौ गोत्ववत्समाप्य वर्तमानो बहुधा दृश्यते यथा तत्तज्जलपात्रेष्वेकधैव प्रतिबिम्बितश्चन्द्रो बहुधा गम्यते तथेति स्मृत्यर्थं ।।

मन्यमाना आहुरित्यभिप्रायः। [1]तन्न तथा विद्यात्। [2]यस्मादेतस्यैव प्रजापतेः सा [3]विसृष्टिर्देवभेदः सर्व एष उ ह्येव प्रजापतिरेव प्राणः सर्वे देवाः।

[4]अत्र विप्रतिपद्यन्ते। [5]पर एव हिरण्यगर्भ इत्येके। संसारीत्यपरे। पर एव तु मन्त्रवर्णात्। [6]"[7]इन्द्रं मित्रं वरुणमग्निमाहुः" इति। "एष ब्रह्मैव इन्द्र एष प्रजापतिरेते सर्वे देवाः" इति च श्रुतेः। स्मृतेश्च—

"[8]एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्" इति,

---

भेदाद्घटशकटादिवदर्थक्रियाभेदाच्च प्रत्येकं देवानां भिन्नत्वात्कर्मिणामेतद्वचनमित्यर्थः। आदिशब्देन [8]रूपादिभेदास्तद्भिन्नत्वं संगृह्णाति। नन्वत्र कर्मिणां निन्दा च प्रतिभाति तन्मतोपन्यासस्यैव प्रतीतेरित्याशङ्क्याऽऽह—तन्नेति। एकस्यैव प्राणस्यानेकविधो देवताप्रभेदः [10]शाकल्यब्राह्मणे वक्ष्यत इति विवक्षित्वा विशिनष्टि—प्राण इति।

अग्न्यादयो देवाः सर्वे प्रजापतिरेवेत्युक्तं संप्रति तत्स्वरूपनिर्दिधारयिषया [11]तत्र [12]विप्रतिपत्तिं दर्शयति—अत्रेति। हिरण्यगर्भस्य परत्वमाद्ये द्वितीये कल्पे संसारित्वं [13]विधेयमिति विभागः। [14]तत्र [15]पूर्वपक्षं गृह्णाति—पर एव त्विति। नन्वेकस्यानेकात्मकत्वं मन्त्रवर्णादवगम्यते न तु परमात्मत्वं प्रजापतेरित्याशङ्क्य ब्राह्मणवाक्यमुदाहरति—एष इति। ब्रह्मप्रजापती सूत्रविराजौ। एषशब्दः

---

अज्ञानी के मतान्तर की निन्दा के लिए मत प्रस्तुत करते हैं—क्योंकि किसी एक की निन्दा दूसरे की स्तुति के लिए होती है। तात्पर्य यह है कि वहाँ कर्म प्रकरण मे केवल याज्ञिक यज्ञ के समय "इस अग्नि देवता का यजन करो, उस इन्द्र देवता का यजन करो" इस प्रकार अग्नि आदि देवताओ के नाम, शस्त्र, स्तोत्र और कर्म भिन्न भिन्न होने के कारण सबको अलग मानते हुए वचन बोलते है। मुमुक्षु कर्ममार्गी के समान देवताभेद न माने। (आत्मस्वरूप से देवता-ऐक्य होने पर) यह समस्त अग्न्यादिरूपा विभूति इस प्रजापति का ही देवभेद है, अत. प्राणरूप प्रजापति ही सर्वदेवमय है।

प्रजापति के स्वरूप मे बहुत से मत प्रस्तुत किये जाते है। कुछ कहते हैं—ब्रह्म ही हिरण्यगर्भ है। दूसरे कहते है कि हिरण्यगर्भ ससारी है। दोनो मे से (ब्रह्म ही हिरण्यगर्भ है, यह) आद्यपक्ष ही मन्त्रों से सिद्ध होता है। इस सम्बन्ध मे श्रुतियाँ प्रमाण है जैसे—"उस परमात्मा को ही इन्द्र, मित्र, वरुण और अग्नि आदि नामो द्वारा पुकारा जाता है", "यह ब्रह्म है, यह इन्द्र है, यह प्रजापति है और

---

१ तन्नेति। तत् देवताभेदम्। तथा कर्मिवत् न विद्यात् मुमुक्षु। २. "विश्व भूत भुवन चित्र बहुधा जात जायमान च यत् सर्वो ह्येष रुद्र" इति श्रुते। "आत्मैव देवता सर्वा" इति स्मृते.। "एक वा सयोगरूपचोदनाऽऽख्याऽविशेषादिति" न्यायाच्चात्मत्वेन देवतैक्यादिति हेतुमाह—यस्मादिति। अत्र सयोग. फलम्, रूपम् इतिकर्त्तव्यता। चोदना पुरुषप्रयत्न। आख्या नाम एतेषामविशेषादेकमभिन्न कर्मेति (जै० २४९.) सूत्रार्थ। ३ विसृष्टि—विविधाऽग्न्यादिरूपा विभूतिरित्यर्थ। ४ प्रजापतिस्वरूपे। ५. ब्रह्मैव। ६. इन्द्रमिति—परमात्मानमेवेन्द्रादिनामभिराहुरित्यर्थ। ७. परमात्मानम्। ८ रूप—वज्रहस्तत्वादि। आदिना गुणोत्पत्त्यादिग्रह:। ९ आहेति—निन्दाफलक निषेधमाहेत्यर्थ। १० बृ० उ० ३.९.९.। ११. प्रश्नरूपे। १२ विप्रतिपत्तिमिति—यद्यपि प्रजापते ससारित्वासंसारित्वे सिद्धान्तेऽभ्युपेते पर विप्रतिपत्तारस्त्वतद्विच्छन्तस्तद्वारयन्त्येवेति विशेष. इति ध्येयम्। १३ उपपाद्यम्। १४ द्वयोर्मध्ये। १५ आद्यम्।

"[1]योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ" इति च ।

संसार्येव वा स्यात् । "सर्वान्पाप्मन औषत्" इति श्रुतेः । न ह्यसंसारिणः पाप्मदाहप्रसङ्गोऽस्ति । भयारतिसंयोगश्रवणाच्च । "अथ यन्मर्त्यः सन्न[2]मृतानसृजत" इति च । "हिरण्यगर्भं पश्यति[3] जायमानम्" इति च मन्त्रवर्णात् । स्मृतेश्च [4]कर्मविपाकप्रक्रियायाम्—

"ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ।
उत्तमां [5]सात्विकीमेतां गतिमाहुर्मनीषिणः" इति ।

---

परमात्मविषयः । स्मृतेश्च पर एव हिरण्यगर्भ इति संबन्धः । तत्रैव वाक्यान्तरं पठति—योऽसाविति । कर्मेन्द्रियाविषयत्वमतीन्द्रियत्वम् । अग्राह्यत्वं ज्ञानेन्द्रियाविषयत्वम् । तत्र हेतुमाह—सूक्ष्मोऽव्यक्त इति । न च तस्यासत्त्वं [6]प्रमात्रादिभावाभावसाक्षित्वेन सदा सत्त्वादित्याह—सनातन इति । इतश्च तस्य नासत्त्वं सर्वयामात्मत्वादित्याह—सर्वेति । अन्तःकरणाविषयत्वमाह—अचिन्त्य इति । योऽसौ परमात्मा यथोक्तविशेषणः स एव स्वयं विराडात्मना भूतवानित्याह—स एवेति ।

मन्त्रब्राह्मणस्मृतिषु परस्य सर्वदेवतात्मत्वदृष्टेरत्र[7] च सूत्रस्य तत्प्रतीतेस्तस्य परत्वमित्युक्तमिदानीं पूर्वपक्षान्तरमाह—संसार्येवेति । सर्वपाप्मदाहश्रवणमात्रेण कथं प्रजापतेः संसारित्वं तत्राऽऽह—न हीति । 'अन्तस्तद्धर्मोपदेशादित्यत्र[8]' परस्यापि सर्वपाप्मो[9]दयाङ्गीकारान्नेद संसारित्वे लिङ्गमित्याशङ्कयाऽऽह—भयेति । असृजतेति च श्रवणादिति संबन्धः । न केवलं मर्त्यत्वश्रुतेरेव संसारित्वं किंतु जन्मश्रुतेश्चेत्याह—हिरण्यगर्भमिति । यथोक्तहेतूनां संसार्येव स्यादिति प्रतिज्ञयाऽन्वयः । "कर्मफलदर्शना[11]धिकारे ब्रह्म[12]ख्याद्यायाः स्मृतेश्च "तत्फलभूतस्य प्रजापतेः संसारित्वमेवेत्याह—स्मृतेश्चेति । विराड्ब्रह्मेत्युच्यते । विश्वसृजो मन्वादयः । धर्मस्तदभिमानिनी देवता यमः । महान्प्रकृतेराद्यो विकारः सूत्रम् ।

---

यह सब देवता हैं" । स्मृतियों में भी इसे कहा है जैसे—"इस परमात्मा को ही कोई अग्नि, कोई मनु और कोई प्रजापति कहते हैं ।" "परमात्मा जो यह अतीन्द्रिय, अग्राह्य, सूक्ष्म, अव्यक्त, सनातन, सर्वभूतमय और अचिन्त्य है, वह ही स्वय अवतरित हुआ" इत्यादि ।

अथवा हिरण्यगर्भ ससारी ही है । "उसने सब पापों को भस्म कर दिया" यह श्रुति है । क्योंकि परमात्मा तो असंसारी है, अत.उसमे पापदाह का प्रसङ्ग नही है । वह भय अरति वाला भी सुना जाता है । श्रुतियाँ कहती हैं—"उसने स्वय मर्त्य होकर अमर्त्य देवताओं की सृष्टि की". "परमात्मा उत्पन्न हुए हिरण्यगर्भ को देखता है ।" कर्मफलप्रकरण मे स्मृति भी कहती है—"हिरण्यगर्भ, प्रजापतिसमूह, धर्म, महत्तत्व और अव्यक्त की गति को विद्वान् लोग श्रेष्ठ सत्वपरिणाम ज्ञानकर्मफलयुक्त बतलाते हैं ।"

---

१. परमात्मा । २. देवान् । ३. पश्यति परमात्मा । ४. कर्मेत्यादि—कर्मफलप्रकरणे । तथा च तत्रस्था स्मृतिर्न ह्यसंसारिरूपफलं वक्तुमर्हतीति भावः । ५. सत्त्वपरिणामज्ञानकर्मफलभूताम् । ६. प्रमाता—अन्तःकरणम् । ७ तद्यदिदमाहुरितिप्रवृत्तवाक्ये । ८. अन्तरित्यादि । अन्तः शब्दार्थः परमात्मा भवितुमर्हति । अत्र हेतुस्तद्धर्मोपदेशादिति हेत्वर्थः । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण इत्यादि(छा० १।६।७-८) श्रुतिस्थादि—तस्य परमेश्वरस्य ये सर्वपाप्मराहित्यादिधर्मास्तेषामस्मिन् वाक्य उपदेशादिति हेत्वर्थः । ९. बृ० उ० १.१.२० । १०. उदय—असत्त्वः । ११. कर्मफलस्य दर्शनं यत्र तादृशप्रकरणे । १२ कर्मफलभूतस्येत्यर्थः ।

* अथैवं [१]विरुद्धार्थानुपपत्तेः [२]प्रामाण्यव्याघात इति चेन्न ।

कल्पनान्तरोपपत्तेरविरोधात् । उपाधिविशेषसंबन्धाद्विशेषकल्पनान्तरमुपपद्यते ।

"आसीनो दूरं व्रजति शयानो याति सर्वतः ।

कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति"

अव्ययवत् प्रकृतिरिति भेदः । [४]अस्तु [५]तर्हि द्विविधवाक्यवशात्प्रजापतेः संसारित्वमसंसारित्वं चेत्याशङ्क्याऽऽह—अथेति । [६]तद्द्विविधवाक्यश्रवणानन्तर्यमथशब्दार्थः । एवशब्दः संसारित्वासंसारित्वप्रकारपरामर्शार्थः । विरोधकृतमप्रामाण्यं निराकरोति—नेत्यादिना । स्वतोऽसंसारित्वं कल्पनया च संसारित्वमिति कल्पनान्तरसंभवाद्द्विविधश्रुतीनामविरोधात्प्रामाण्यसिद्धिरित्यर्थः । कल्पनया संसारित्वमित्येतद्विशदयति—उपाधीति । औपाधिकी परस्य विशेषकल्पनेत्यत्र प्रमाणमाह—आसीन इति । स्वारस्येन कूटस्थोऽप्यात्मा मनसः शीघ्रं दूरगमनदर्शनात्तदुपाधिको दूरं व्रजति । यथा स्वप्ने [७]शयानोऽपि मनसो गतिभ्रान्त्या सर्वत्र यातीव भाति तथा जागरेऽपीत्यर्थः । कल्पितेन हर्षादिविकारेण स्वाभाविकेन तद-

इस तरह तो विरुद्ध अर्थ असंगत है, इससे श्रुतिप्रामाण्य का उभयविध वाक्यों में व्याघात होता है। ऐसा कहना ठीक नहीं, क्योंकि अपने असंसारित्व-कल्पना से दूसरी संसारित्व-कल्पना संभव हो जाने से दोनों प्रकार की श्रुतियों में अविरोध होने से प्रामाण्य की सिद्धि हो जायगी। उपाधिविशेष के सम्बन्ध से अन्य संसारित्व-विशेषकल्पना युक्तिसंगत है।

"वह एक स्थान में प्रतिष्ठित होने पर भी दूर चला जाता है। सोता हुआ भी सब ओर जाता

१ बहुव्रीहिर्वा । २ उभयविधवाक्य इत्यर्थः । ३ संसारित्वकल्पना । ४ एवं पूर्वपक्षयित्वा सिद्धान्तयितुं प्रसङ्गमाह—अस्त्विति । ५ अन्यतरपक्षे निर्णायकाभावे । ६ तत् तत्र प्रजापतिविषयवेति यावत् । ७ अचल ।

*अथैवमित्याद्युपपद्यत इत्यन्तभाष्य इमानि पञ्चवार्तिकानि द्रष्टव्यानि तथाहि—"मिथोविरुद्धवादित्वाद्द्वयोरागमयोरपि । अप्रामाण्यप्रसक्तिश्चेन्न कल्प्यन्तरसंश्रयात् ॥ प्रत्यगज्ञानगाऽनेकविविधोपाधिसंगते । विरुद्धार्थत्ववचना स्यादकत्रापि संभवः ॥ अपास्ताविद्यातज्जत्वादस्थूलाद्युक्तिगोचरः । स्वाभासाविद्योपाधिः सन्साक्ष्यन्तर्यामितां व्रजेत् ॥ तथा हिरण्यगर्भत्वं बुद्ध्युपाधिः स एव तु । तमः सत्त्वरजोयोगाद्याति क्षेत्रज्ञतामजः ॥ अभिन्नबुद्ध्युपाधिस्त्वं भिन्नधीभिश्च भिन्नताम् । एति चित्स्वतमाहतोर्न किंचिदपि दुःस्थितमिति ॥ १४९-१५३ ॥ एवं पूर्वपक्षयित्वा सिद्धान्तयितुं प्रसङ्गमाह—मिथ इति । स्वतोऽसंसारित्वेऽपि सूत्रस्य संसारित्वमौपाधिकमिति विधान्तरसिद्धेर्द्विविधागमाविरोध इति सिद्धान्तमाह—नेति ॥ कथं संसारित्वासंसारित्वविरुद्धार्थवाक्यानामेकत्रात्मनि प्रामाण्यमित्याशङ्क्य संग्रहवाक्यं विवृणोति—प्रत्यगिति । संसारितेति शेषः । स्वतस्त्वसंसारितेत्यङ्गीकारे फलितमाह—विरुद्धेति । विरुद्धार्थत्वेन प्रतीयमानोदाहृतवाक्यानामिति यावत् ॥ तथाप्येकस्मिन्नात्मनि संभवमेव साधयन्नादावसंसारित्ववाक्यानामुपपत्तिमाह—अपास्तेति । तत्रैव सविशेषवाक्यानामपि संभवमाह—स्वाभासेति । चिदाभासविशिष्टाविद्योपाधेः साक्षित्वं तस्यैव मायान्तःकार्यनियन्तृत्वेनान्तर्यामितेति भेदः ॥ तस्यैव मायामयापञ्चीकृतभूतपञ्चकारब्धसमष्टिबुद्ध्युपाधित्वेन ज्ञानशक्तिमतो हिरण्यगर्भत्वमाह—तथेति । व्रजेदिति पूर्वेण सम्बन्धः । तस्यैव समष्टिप्राणोपाधेः क्रियाशक्तिमतः सूत्रत्वं तस्यैव पञ्चीकृतभूतपञ्चकारब्धसमष्ट्युपाधेर्विराट्त्वं तस्यैव प्राकृतभूतारब्धसात्त्विकराजसतामसव्यष्टिबुद्ध्युपाधिसम्बन्धान्नानाजीवरूपतत्वमभिप्रेत्याह—तम इति ॥ विरुद्धार्थवचनमेकत्र संभवमुपसंहरति—अभिन्नेति ॥

इत्येवमादिश्रुतिभ्यः।

उपाधिवशात्संसारित्वं न परमार्थतः। स्वतोऽसंसार्येव। एवमेकत्वं नानात्वं च हिरण्यगर्भस्य। तथा सर्वजीवानाम्। "तत्त्वमसि" इति श्रुतेः। हिरण्यगर्भस्तूपाधिशुद्धयतिशयापेक्षया प्रायशः पर एवेति श्रुतिस्मृतिवादाः प्रवृत्ताः। संसारित्वं तु क्वचिदेव दर्शयन्ति जीवानां तूपाधिगताशुद्धिबाहुल्यात्संसारित्वमेव। प्रायशोऽभिलप्यते। व्यावृत्तकृत्स्नोपाधिभेदापेक्षया तु सर्वः परत्वेनाभिधीयते श्रुतिस्मृतिवादैः।

तार्किकैस्तु परित्यक्तागमबलैरस्ति नास्ति कर्ताऽकर्तेत्यादि विरुद्धं बहु तर्कयद्भि-

---

भावेन च युक्तमात्मानं न कश्चिदपि निश्चेतुं शक्नोतीत्याह—कस्तमिति। आदिपदेन ध्यायतीवेत्यादिश्रुतयो गृह्यन्ते।

उदाहृतश्रुतीनां तात्पर्यमाह—उपाधीति। किं तर्हि पारमार्थिकं तदाह—स्वत इति। हिरण्यगर्भस्य वास्तवमवास्तवं च रूपं निरूपितमुपसंहरति—एवमिति। तस्याप्यस्मदादिवन्न स्वतो ब्रह्मत्वं किंतु संसारित्वमेव स्वाभाविकमित्याशङ्क्य दृष्टान्तस्य साध्यविकलतामाह—तथेति। सर्वजीवानामेकत्वं नानात्वं चेति पूर्वेण सबन्धः। तेषां स्वतो ब्रह्मत्वे प्रमाणमाह—तत्त्वमिति। कस्तर्हि हिरण्यगर्भे विशेषो येनासावस्मदादिभिरुपास्यते तत्राऽऽह—हिरण्यगर्भस्त्विति। ननु श्रुतिस्मृतिवादेषु क्वचित्तस्य संसारित्वमपि प्रदर्श्यते सत्यं तत्तु कल्पितमित्यभिप्रेत्याऽऽह—संसारित्व त्विति। अस्मदादिष्वपि तुल्यमेतदित्याशङ्क्याऽऽह—जीवाना त्विति। कथं तर्हि 'तत्त्वमसि' 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादिश्रुतिस्मृतिवादाः संगच्छन्ते तत्राऽऽह—व्यावृत्तेति।

नन्वेकजीववादेऽपि सर्वंव्यस्वमते तत्त्वनिश्चयमुक्त्वा परमते तदभावमाह—तार्किकैस्त्विति।

---

है, वह हर्ष से रहित है, उस देव को मेरे अतिरिक्त दूसरा कौन जान सकता है ?" इत्यादि श्रुतियों से सिद्ध होता है।

उसमें संसारित्व हो जाना परमार्थ दृष्टि से नहीं, उपाधि के कारण ही होता है। पारमार्थिक दृष्टि से वह असंसारी ही है। इस प्रकार हिरण्यगर्भ का एकत्व भी है और नानात्व भी है। इसी प्रकार सब जीवों में एकत्व और नानात्व है। "वह तू है" यही श्रुति बताती है। हिरण्यगर्भ तो उपाधि की शुद्धि की अतिशयता की अपेक्षा (भय-अरति आदि संसार-प्रतीति में स्तुत कभी-कभी सृष्ट्यादि काल में) प्रायशः ईश्वर ही है। इस प्रकार (हिरण्यगर्भ को परमात्मा सिद्ध करने वाली) श्रुति स्मृतिवाद प्रवृत्त हुए हैं। (हिरण्यगर्भ का) संसारित्व तो कहीं-कहीं ही दिखाते हैं। जीवों का तो उपाधिगत अशुद्धिबाहुल्य के कारण प्राय संसारित्व ही प्रतिपादन किया जाता है। निखिल उपाधिभेद के बाध की आलोचना से श्रुति-स्मृति-वाद द्वारा जीव का भी परमात्मभाव से निरूपण किया जाता है। जिन्होंने आगम का आश्रय त्याग दिया है ऐसे (निर्मूल उत्प्रेक्षामात्र से तत्त्वनिर्णय में

---

१. भयारत्यादिसंसारप्रतीतिस्तुतस्य कदाचिदेव सृष्ट्यादिकाले इत्युक्तं प्रायश इति। २ हिरण्यगर्भस्यपरत्वबोधका पूर्वोक्ता। ३ अपेक्षा—आलोचना। ४ जीव। ५ तार्किकैः निर्मूलोत्प्रेक्षामात्रेण तत्त्वनिर्णये प्रवृत्तैः। ६. आकुलीकृत—तत्प्रयुक्तनिश्चयविषयतामापादित। ७. जीवत्वादिति भावः।

राकुलीकृतः शास्त्रार्थः । तेनायं निश्चयो दुर्लभः । ये तु केवलशास्त्रानुसारिणः शान्तदर्पास्तेषां प्रत्यक्षविषय इव निश्चितः शास्त्रार्थो देवतादिविषयः ।

तत्र प्रजापतेरेकस्य देवस्यान्नादिलक्षणो भेदो विवक्षित इति । तत्राग्निरुक्तोऽत्ताऽद्यः सोम इदानीमुच्यते । अथ यत्किंचेदं लोक आर्द्रं द्रवात्मकं तद्रेतस आत्मनो बीजादसृजत । "रेतस आपः" इति श्रुतेः । द्रवात्मकश्च सोमः ।

---

वस्त्वनुपपत्तेस्तत्त्वनिश्चयदौर्लभ्यं तुल्यमिति चेन्नेत्याह—ये त्विति । स्वप्रदर्प्रयोपास्त्यागदोषव्ययस्पासंभवात्पूर्वं च तदभावस्येष्टत्वादेवमेव महानात्मविद्यावत्तादशोषव्यवहारास्पदमिति पक्षे न काचन दोषश्चेति भावः ।

सर्वदेवतात्मकस्य प्रजापतेः स्वतोऽसंसारित्वं कल्पनया वैपरीत्यमिति स्थिते तत्त्वेत्याद्युत्तरग्रन्थस्य तात्पर्यमाह—तत्रेति । विवक्षित इत्युत्तरग्रन्थप्रवृत्तिरिति शेषः । "तस्य विषयं "परिशिनष्टि—तत्राग्निरिति । "अत्त्राद्ययोर्निर्धारणार्थां सप्तमी । संप्रति प्रतीकमादायाक्षराणि व्याकरोति—अथेति । अथ तु सर्गानन्तर्यमथशब्दार्थः । रेतसः सकाशादपां सर्गेऽपि सोमसर्गं किमायातमित्याशङ्क्याऽऽह—द्रवात्मकश्चेति । "श्रद्धायाहुते सोमोत्पत्तिश्रवणात्तत्र शंस्योपलब्धेश्चेति भाव ।

---

प्रवृत्त) तार्किक "आत्मा की सत्ता है, आत्मा की सत्ता नहीं है, वह कर्ता है, वह अकर्ता है" इत्यादि बहुत से विरुद्ध तर्क प्रस्तुत करते हैं । इन्होंने परमात्मा को तर्क से प्रयुक्त निश्चय की विषयता वाला बना दिया है । निर्मूल शुष्कतर्क से तात्पर्य का निश्चय होना असम्भव हो जाता है । किन्तु जो केवल शास्त्र का अनुसरण करने वाले दर्परहित पुरुष हैं, उन्हें शास्त्रमात्रगम्य देवतादिरूप प्रमेय का तात्पर्य (घट) प्रत्यक्ष के समान निश्चय होता है ।

इस प्रकार निश्चय हो जाने पर एक प्रजापति देवता के अन्न और अन्नाद्यादिरूप विशेष का प्रतिपादन करना इष्ट है । उसमें 'अत्ता' रूप अग्नि का निरूपण कर दिया, अब 'आद्य' रूप सोम का वर्णन किया जाता है । जो कुछ भी लोक में 'आर्द्रम्' अर्थात् तरल पदार्थ है, 'तद्रेतस' अर्थात् उसने वह अपने बीज से उत्पन्न किया । श्रुति कहती है—"वीर्य से जल हुआ" । सोम भी द्रवात्मक है ।

---

१ परमात्मा । २ तेनेति–निर्मूलशुष्कतर्केणेत्यर्थः । ३ यदर्थमुद्योग कृतश्चोऽपि न लब्ध इति सद्गुणभक्षणन्यायमभिप्रेत्याह–तेनेति । ४ केवलेति–शास्त्रप्रतिकूलतर्कराहित्यं कैवल्यम् । ५ तर्कोद्भावकविद्यादिप्रयुक्तमदराहित्यं शान्तदर्पत्वम् । ६ घटादिवत् । ७ शास्त्रैकगम्यो देवतादिरूपो विषय । प्रमेय इत्यर्थः । ८ टीकोक्तार्थम् । [illegible] अन्नाद्यादिरूपो विशेष । १०. विवक्षित इति । अन्नाद्यादरूपेणोपास्यत्वायेति शेष । अत्र वार्तिके । इत्थं सङ्गतिमाह — "अशनायावदुत्पत्तेस्तासां प्राणिनोऽखिला । अन्नारोऽत्नोऽन्नविरहान्नालस्थानाय सहना ॥ तस्मात्सोमान्नसृष्ट्यर्थं परो ग्रन्थोऽवतार्यते" ॥१५४॥ इति । अशनायावत प्रजापतेरत्तृत्वादत्तार स्थानाय–स्यातु जीवितु नालम् । ११ तस्य उत्तरग्रन्थस्य । १२ परिशिनष्टि पूर्वग्रन्थविषयात्पृथक्करोति । १३ अत्ता आद्य च तयो । १४ किमायातमिति–नैतावता प्रभातसोमोत्पत्तिरुक्ता भवतीत्यर्थं । १५ तस्मिन्नेतस्मिन्नग्नौ देवा श्रद्धा जुह्वति तस्या आहुत्यै सोमो राजा सम्भवतीति श्रुते । अत्र श्रद्धा जलम् श्रद्धा वा आप इति श्रुते ।

'तस्माद्यदार्द्रं प्रजापतिना रेतसः सृष्टं तदु सोम एव। एतावद्वा एतावदेव नातोऽधिकमिदं सर्वम्। 'किं तत्। अन्नं चैव सोमो द्रवात्मकत्वादा'प्यायकम्। अन्नादश्चाग्निरौष्ण्याद्रूक्षत्वाच्च। तत्रैवमवध्रियते। 'सोम एवान्नं यदद्यते तदेव सोम इत्यर्थः। य एवात्ता स एवाग्निः। अर्थबलाद्ध्यवधारणम्। अग्निरपि क्वचिद्धूयमानः' सोमपक्षस्यैव। सोमोऽपीज्यमानोऽग्निरेवात्तृत्वात्। एवमग्नीषोमात्मकं 'जगदात्मत्वेन पश्यन्न केनचिद्दोषेण लिप्यते। प्रजापतिश्च भवति। सैषा ब्रह्मणः प्रजापतेरतिसृष्टिरात्मनोऽप्यतिशया।

सोमस्य द्रवात्मकत्वे फलितमाह—तस्मादिति। अग्नीषोमयोरन्नान्नादयोः सृष्टावपि जगति स्रष्टव्यान्तरमवशिष्टमस्तीत्याशङ्क्याऽऽह—एतावदिति। आप्यायकः सोमो द्रवात्मकत्वादन्नं चाऽऽप्यायकं प्रसिद्धं तस्मादुपपन्नं सोमस्यान्नत्वमित्याह—द्रवात्मकत्वादिति। सोम एवान्नमग्निरन्नाद इत्यवधारणस्य विवक्षितमर्थमाह—तत्रेति। यथोक्तं वाक्यं सप्तम्यर्थः। यथाश्रुतमवधारणमवधीर्य कुतो विधान्तरेण तद्व्याख्यानमित्याशङ्क्याऽऽह—अर्थबलाद्धीति। अन्नादस्य संहर्तृत्वादग्नित्वमन्नस्य च संहरणीयतया सोमत्वमवधारयितुं युक्तमित्यर्थः। नन्वन्नस्य सोमत्वेन न नियमोऽग्नेरपि जलादिना संहाराच्च चात्तुरग्नित्वेन नियमः 'सोमस्यापि कदाचिदिज्यमानत्वेनात्तृत्वात्तत्कुतोऽर्थबलमित्याशङ्क्याऽऽह—अग्निरपीति। सोऽपि संहार्यश्चेत्सोम एव स च संहर्ता चेदग्निरेवेत्यवधारणसिद्धिरित्यर्थः। प्रजापतेः सर्वात्मत्वमुपक्रम्य जगतो द्वेधाविभक्तत्वाभिधानं 'कुत्रोपयुक्तमित्याशङ्क्य 'तस्य सूत्रे 'पर्यवसाना''त्तस्मिन्नात्मबुद्ध्योपासकस्य सर्वदोषराहित्यं फलमत्र विवक्षितमित्याह—एवमिति। अनुग्राहकदेवसृष्टिमुक्त्वा ''तदुपासकस्य फलोक्त्यर्थमादौ देवसृष्टिं स्तौति—सैषेति।

(सोम के द्रवात्मक होने से) इसलिए प्रजापति ने जो कुछ भी अपने वीर्य से द्रवात्मक पदार्थ रचा, वह सोम ही है। यह सब 'एतावद्वा' अर्थात् इतना ही है, इससे अधिक नहीं है। 'एतावत्' पद वाच्य वह क्या है? यही कि तरलरूप होने से सोम तृप्ति-प्रद अन्न है। उष्णस्वभाव और रूक्ष होने के कारण अग्नि अन्नाद है। इससे यहां निश्चित होता है कि 'सोम एवान्नम्' अर्थात् जो खाया जाता है, वही सोम है। जो अत्ता है, वही अग्नि है। अर्थ के बल से ही ऐसी धारणा होती है। यजन किया जाने वाला होने से कहीं-कहीं अग्नि भी (लतारसात्मक) सोम पक्षात्मक हो जाता है। कहीं-कहीं सोम भी यजन किया जाने वाला और अत्ता होने के कारण अग्नि मान लिया जाता है। इस प्रकार (अभिन्न सूत्रात्मा) अग्निषोमात्मक जगत् को आत्मस्वरूप देखने वाला पुरुष सर्वदोषरहित हो जाता है और वह प्रजापति हो जाता है। यह यह 'ब्रह्मण' अर्थात् प्रजापति की 'अतिसृष्टि' अर्थात् अपनी अनुग्राह्य और अतिमाध्वी सृष्टि है।

१ सोमस्य द्रवात्मकत्वात्। २ एतावत्पदवाच्यं किम्। ३. तृप्तिप्रयोजकम्। ४ जगदभिन्नसूत्रात्मानम्।
५ अग्निनाऽनुग्राह्यसृष्टिसग्रह। अतिशया—अतिमाध्वी। ६. सोमस्य—लतारसात्मकस्य। इज्यमानत्वेन—हूयमानत्वेन अग्निकर्मकसंहारकर्तृत्वमापाद्यमानत्वेनेति यावत्। ७ कुत्रोपयुक्तमिति—तस्मिन् विषये फलवद्भवतीत्यर्थः।
८. तस्येति द्वेधाविभागाभिधानस्येत्यर्थः। ९ पर्यवसानात्—तात्पर्यात्। १०. तस्मिन्निति—द्वेधाविभक्तजगदात्मसूत्रात्मनीत्यर्थः। ११. देवतोपासकस्य तत्स्रष्टृसूत्रोपासकस्य वा।

का सेत्याह—यच्छ्रेयसः प्रशस्यतरानात्मनः सकाशाद्यस्मादसृजत देवांस्तस्माद्देवसृष्टिरतिसृष्टिः। कथं पुनरात्मनोऽतिशया सृष्टिरित्यत आह—अथ यद्यस्मान्मर्त्यः सन्मरणधर्मा सन्नमृतानमरणधर्मिणो देवान्कर्मज्ञानवह्निना सर्वानात्मनः पाप्मन ओषित्वाऽसृजत, तस्मादियमतिसृष्टिरुत्कृष्टज्ञानस्य फलमित्यर्थः। तस्मादेतामतिसृष्टिं प्रजापतेरात्मभूतां यो वेद स एतस्यामतिसृष्ट्यां प्रजापतिरिव भवति प्रजापतिवदेव स्रष्टा भवति ॥६॥

"तद्धेदं तर्ह्यव्याकृतमासीत्" सर्वं वैदिकं साधनं ज्ञानकर्मलक्षणं कर्त्राद्यनेककार-

---

'अग्निर्मूर्धा' इत्यादिश्रुतेरग्न्यादयोऽस्यावयवास्तत्कथं तत्सृष्टिस्ततोऽतिशयवतीत्याशङ्क्यते—कथमिति। प्रजापतेर्यजमानावस्थापेक्षया देवसृष्टेरुत्कृष्टत्ववचनमविरुद्धमिति परिहरति—अत आहेति। [1]देवसृष्टेरतिसृष्टित्वाभावशङ्कानुवादार्थोऽथशब्दः। ज्ञानस्येत्युपलक्षणं कर्मणोऽपीति द्रष्टव्यम्। अतिसृष्ट्यामित्यादि व्याचष्टे—तस्मादिति। देवादिस्रष्टा [2]तदात्मा प्रजापतिरहमेवेत्युपासितुस्तद्भावापत्त्या तत्स्रष्टृत्वं फलतीत्यर्थः ॥६॥

पूर्वोत्तरग्रन्थयोः संबन्धं वक्तुं प्रतीकमादाय सूत्रं कीर्तयति—तद्धेत्यादिना। [3]तस्याऽऽदेयत्वार्थं [4]वैदिकमित्युक्तम्। साधनमित्युच्यते मुक्तिसाधनं [5]पुरः स्फुरति तन्निरस्यति—ज्ञानेति। एकरूपस्य मोक्षस्यानेकरूपं न साधनं भवतीति भावः। मुक्तिसाधनं 'मानवस्तुतन्त्रं तत्त्वज्ञानमिदं तु कारकसाध्यमतोऽपि न तद्धेतुरित्याह—कर्त्रादीति। किंचेदं प्रजापतित्वफला[9]वसानम् 'मृत्युरस्या[10]ऽऽत्मा भवति' [11]इति श्रुतेः। न च [12]"तदेव कैवल्यं भवा"रत्यादिश्रवणादतोऽपि नेद मुक्त्यर्थमित्याह—प्रजापतित्वेति। किंच नित्यसिद्धा

---

वह कौनसी अतिसृष्टि है? "यच्छ्रेयस." अर्थात् जिसे अपने से अधिक उत्तम 'देवान्' अर्थात् देवताओं ने रचा है—इसलिए देवसृष्टि अतिसृष्टि है। यह सृष्टि अपने से श्रेष्ठ क्यों है? इस पर श्रुति कहती है—'अथ यद्' अर्थात् क्योंकि इसने "मृत्यु सन्" मरणधर्मा होकर, कर्मज्ञानरूप अग्नि से अपने समस्त पापों को भस्म कर अमरणधर्मा देवताओं की सृष्टि की है। इसलिए यह 'अतिसृष्टि.' अर्थात् उत्कृष्टज्ञान का फल है। (देवसृष्टि के उत्कृष्टज्ञानकर्मफलरूप होने से) इसलिए प्रजापति की आत्मस्वरूप इस अतिसृष्टि को जो जानता है वह इस अतिसृष्टि में प्रजापति के समान हो जाता है, अर्थात् प्रजापति के समान जगत् का स्रष्टा होता है ॥६॥

"वह यह जगत् उत्पत्ति से पूर्व अव्यक्त था।" कर्ता आदि अनेक कारकों की अपेक्षा करने वाला, ज्ञान और कर्मात्मक सम्पूर्ण वैदिक साधनरूप-प्रजापति में प्रयोजन वाला, साध्यफलक इतना ही

---

१ देवसृष्टेरुत्कृष्टज्ञानकर्मफलत्वात्। २ अविद्यापटलसंवीतचक्षुषामिति शेषः। अज्ञानाच्छन्नचित्तानामिति तदर्थः। पटलम्—आच्छादनम्। ३ नन्वर्थक इति यावत्। ४ देवादिसृज्याभिन्नः। ५ साधनस्य। ६ तस्याऽऽदेयत्वशङ्का वारयति वैदिकमितीति पाठान्तरम्। ७ पुरः स्फुरतीति—झटित्युपस्थितं भवतीत्यर्थः। तत्प्रकरणत्वादिति भावः। ८ प्रमाणप्रमेयाधीनमित्यर्थः। ९ अवसानम्—अवधिः। १०. समुच्चयोपासकस्य, मृत्युः हिरण्यगर्भः। ११ बृ०उ० १२७। १२ हैरण्यगर्भं पदमेव।

कापेक्षं प्रजापतित्वफलावसानं 'साध्यमेतावदेव यदेतद्व्याकृतं जगत्संसारः । 'अथैतस्यैव साध्यसाधनलक्षणस्य व्याकृतस्य जगतो व्याकरणात्प्राग्बीजावस्था या तां निर्दिदिक्षत्य-ङ्कुरादिकार्यानुमितामिव वृक्षस्य 'कर्मबीजोऽविद्याक्षेत्रो 'ह्यसौ संसारवृक्षः समूल 'उद्धर्तव्य इति । 'तदुद्धरणे 'हि पुरुषार्थपरिसमाप्तिः । तथाचोक्तम्—"ऊर्ध्वमूलोऽवाक्शाखः"

मुक्तिरिव' तु 'साध्यफलमतोऽपि न मुक्तिहेतुरित्याह—साध्यमिति । किंच "मुक्तिर्व्याकृतादर्थान्तरमन्यदेव तद्विदितादित्यादिश्रुते. । "इद तु "नामरूपं "व्याकृतमतो"ऽपि "न तद्धेतुरित्याह—एतावदेवेति । संप्रत्य-व्याकृतकण्डिकामवतारयन्प्रवेशवाक्यात्प्राक्तनस्य तद्धेदमित्यादेर्वाक्यस्य तात्पर्यमाह—अथेति । ज्ञानकर्मफ-लोक्त्यानन्तर्यमथशब्दार्थः" । बीजावस्था साभासप्रत्यगविद्या" तस्या निर्देष्टुमिष्टत्वमेव न साक्षान्निर्देश्य-त्वमनिर्वाच्यत्वादिति वक्तुं निर्दिदिक्षतीत्युक्तम् । वृक्षस्य बीजावस्थां लोको निर्दिदिक्षतीति संबन्धः । यज्ज्ञाने पुमर्थाप्तिस्तदेव वाच्यं किमिति प्रत्यगविद्योच्यते तत्राऽऽह—कर्मेति । उद्धर्तव्य इति तन्मूलनि-रूपणमर्थवदिति शेषः । अथ पुरुषार्थमर्थयमानस्य तदुद्धारोऽपि क्वोपयुज्यते तत्राऽऽह—तदुद्धरणे हीति । ननु संसारस्य मूलमेव नास्ति "स्वभाववादात्प्रधानाद्येव वा तन्मूल नाज्ञात ब्रह्मेत्याशङ्क्य श्रुतिस्मृति-भ्या परिहरति—तथा चेति । ऊर्ध्वमुत्कृष्टं कारणं कार्यापेक्षया परमव्याकृत मूलमस्येत्यूर्ध्वमूलो हिरण्य-गर्भादयो मूलापेक्षयाऽ"वाच्यः "शाखा यस्य इत्यवाक्शाख । एवम् 'ऊर्ध्वमूलमध.शाखम्' इत्यादिगीता अपि नेतव्या. । अस्ति हि संसारस्य मूलम् '"नेदममूलं भविष्यति' इति श्रुतेस्तच्चाज्ञातं ब्रह्म चेति श्रुति-स्मृतिप्रसिद्धमिति "भावः ।

यह अव्यक्त जगत् है, यानी ससार है । कर्मनिमित्त अविद्या के उपादान इस प्रसिद्ध ससाररूपी वृक्ष को समूल काटना है—इसलिए अकुर आदि कार्य से अनुमित होने वाली वृक्ष की पूर्वबीजावस्था के समान इस (ज्ञानकर्मफलभूत) साध्यसाधनरूप व्यक्त जगत् के व्याकृत होने से पूर्व जो बीजावस्था थी, उसका श्रुति निर्देश करना चाहती है । उस (प्रमातृत्वादिरूप महा-अनर्थरूप ससार वृक्ष) के काटने मे ही पुरुषार्थ की परिसमाप्ति हो जाती है । ऐसा ही कठोपनिषद् मे कहा गया है—"जिस (व्यापक परमात्मा के परमपदरूप) का मूल ऊपर की ओर तथा (देव, नर, तिर्यक् आदि शरीररूप)

१ साध्यमिति करणव्युत्पत्त्या साध्यफलकमित्यर्थ । २ ज्ञानकर्मफलभूतस्यैव । ३ कर्मनिमित्तोऽविद्योपादानक इत्यर्थ । ४ प्रसिद्ध । ५ उच्छेत्तव्य । ६ तदुद्धरणे—तस्य प्रमातृत्वादिरूपमहानर्थरूपससारवृक्षस्य उद्धरणे सति । ७ हिशब्दोऽन्वयव्यतिरेकसूचक । ८ ज्ञानकर्मात्मक साधनम् । ९ उत्पाद्यफलकम् । १० कार्यादित्यर्थ । ११ ज्ञानकर्मरूपम् । १२ नामरूपत्वात् । १३. कार्यम् । १४ अतोऽपीत्यत्र अतो व्याकृतस्यैव हेतुर्न मुक्तेरित्याऽऽहेति पाठान्तरम् अर्थस्त्वभिन्न । १५ न तद्धेतुरिति—तत्त्वज्ञानस्य व्याकृतान्तःपातित्वेऽपि तस्य मुक्तिहेतुत्वानुपगमान्न दोष व्यञ्जकमेव हि तत् व्यङ्ग्यव्यञ्जकयोश्च न व्याकृतत्वादिसाजात्यनियम अती-न्द्रियैरपीन्द्रियैः स्थूलार्थव्यञ्जनात् मिथ्याभूतैरपि गुरुशास्त्रादिभि सत्यात्मव्यञ्जनादिति ध्येयम् । १६ अथ-शब्दार्थ इत्यनन्तरम् उक्त फल परामृशत्यतस्यैवेति इति शेषो द्रष्टव्य । १७ प्रत्यगाश्रयविषया । १८ स्व-भाववादाश्रयणात् । १९. निकृष्टा । २० नानादिक्षु प्रसृतत्वाच्छाखा इव । २१ छा०मु० । २२ भाव इति—साभासप्रत्यगविद्याख्यबीजावस्थोक्तिद्वारा नित्यशुद्धबुद्धमुक्तस्वभाव परमात्मैव प्रत्यग्भूतो ज्ञो ज्ञान चेति निश्चितु प्रवेशवाक्यात्प्राचीनवाक्य प्रवृत्तमिति तु परमार्थ ।

तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव [1]व्याक्रियतासौनामाऽयमिदꣳरूप इति [2]तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिदꣳरूप इति स एष इह प्रविष्टः । आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम

वह यह (प्रत्यक्षादि प्रमाणों से प्रतीयमान) जगत् उत्पत्ति से पूर्व अव्यक्त था । वही नामरूप के योग से व्याकृत हो गया अर्थात् "यह इस नाम और इस रूप वाला है" इस प्रकार से वह अव्यक्ततत्त्व, नाम और रूप के द्वारा व्यक्त हो गया । अत अब इस सृष्टि के समय भी यह अव्याकृत वस्तु "इस नाम और इस रूप वाला है" इसी प्रकार व्यक्त होता है । वह यह व्यावर्ता पुरुष इस वर्तमान देह मे नख से शिख पर्यन्त प्रवेश किये हुए है । जैसे छुरा छुरे के अधिकरण से छिपा रहता है, या विश्व का भर्ता अग्नि अपने आश्रय काष्ठादि मे गुप्त रहता है, इसीलिए लोग उसे देख नही पाते । वह असम्पूर्ण है, प्राणन क्रिया के कारण होने से वह प्राण है, वदन का कारण होने से वाणी है । दर्शन का कारण होने से नेत्र है, श्रवण का कारण होने से श्रोत्र है और मनन का कारण होने से मन है । ये सब

---

इति काठके । गीतासु च "ऊर्ध्वमूलमधःशाखम्" इति । पुराणे च—"[3]ब्रह्मवृक्षः सनातन." इति ।

तद्धेदं तदिति बीजावस्थं जगत्प्रागुत्पत्तेस्तर्हि तस्मिन्काले परोक्षत्वात्सर्वनाम्नाऽप्रत्यक्षाभिधानेनाभिधीयते । भूतकालसंबन्धित्वादव्याकृतमासीदिति[4] जगतः । सुखग्रहणार्थ-

---

संप्रति प्रतीकमादाय पदानि व्याचष्टे—तद्धेत्यादिना । [5]अप्रत्यक्षाभिधानेन तदिति सर्वनाम्ना [6]बीजावस्थं जगदभिधीयते परोक्षत्वादिति संबन्ध । कथं जगतो बीजावस्थत्वमित्याशङ्क्य तर्हीत्यस्यार्थमाह—प्रागिति । कथं तस्य परोक्षत्वं तत्राऽऽह—भूतेति । निपातार्थमाह—सुखेति । हशब्दार्थं[7]मभिन-

---

शाखाएँ नीचे की ओर हैं ।" इसी को श्रीमद्भगवद्गीता मे भी कहा है—"उसका मूल ऊपर की ओर तथा शाखाएँ नीचे की ओर हैं ।" पुराण मे भी कहा है—"ब्रह्माधिष्ठानरूप वृक्ष (तत्त्वज्ञान के बिना काटना असम्भव होने के कारण) सनातन है ।"

'तत् ह इदम्' मे "तत्" अर्थात् उत्पत्ति से पूर्व बीजरूप मे स्थित 'तर्हि' अर्थात् उस समय मे (अव्यक्त था) । यहाँ अव्यक्तरूप वाला जगत् भूतकाल से सम्बद्ध होने के कारण एव परोक्ष होने से

---

१ व्याक्रियतेति—नामरूपावधारणपर्यन्त व्यक्तीभावमापद्यतेत्यर्थं । २ तदिदमिति—सुषुप्तौ प्रसुप्त सदव्याकृत वस्तु । एतर्हि—अस्मिञ्जागरणकाल इत्यर्थं । ३ ब्रह्माधिष्ठानको वृक्षो ब्रह्मवृक्ष । तत्त्वज्ञानमन्तरेणोच्छेत्तुमशक्यत्वात्सनातन इति । ४ रूपस्य । ५ परोक्षार्थवाचकेन । ६ बीज साभासप्रत्यगविद्यातद्रूपम् । ७ दर्शयति ।

भवति । वदन्वाक्पश्यꣳश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैक-मुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्या-त्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति । तदेतत्पद-नीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविन्देदेवं कीर्तिꣳ श्लोकं विन्दते य एवं वेद ॥७॥

इसके कर्मानुसार ही नाम है। अतएव इनमे से एक-एक की उपासना जो करता है वह यह नही जानता, वस्तुतः वह असम्पूर्ण ही है । वैसी परिस्थिति मे वह केवल एक-एक विशेषण से युक्त है। "अतः आत्मा है" इसी प्रकार से उस प्रजापति की उपासना करे, क्योकि इसी आत्मा मे वे सभी एक हो जाते हैं। यह जो सर्वानुभव सिद्ध आत्मा है, वही इन सब जीवो का प्राप्तव्य है। वस्तुत. यह आत्मा है और इस आत्मा के जानने से ही इस सम्पूर्ण जगत् को जानता है। जैसे खोये हुए पशु को पदचिन्हो के द्वारा प्राप्त कर लेते है, वैसे ही जो पुरुष ऐसा जानता है, वह इसके द्वारा कीर्ति और इष्ट पुरुषो का समा-गम प्राप्त करता है ॥७॥

---

[1]ऐतिह्यप्रयोगो हशब्दः । एवं ह तदाऽऽसीदित्युच्यमाने सुखं तां परोक्षामपि जगतो बीजावस्थां प्रतिपद्यते युधिष्ठिरो ह किल राजाऽऽसीदित्युक्ते यद्वत् । इदमिति [2]व्याकृतनाम-रूपात्मकं साध्यसाधनलक्षणं यथावर्णितमभिधीयते । तदिदंशब्दयोः परोक्षप्रत्यक्षावस्थ-जगद्वाचकयोः सामानाधिकरण्यादेकत्वमेव परोक्षप्रत्यक्षावस्थस्य जगतोऽवगम्यते । तदेवे-

---

यति—किलेति । यथावर्णितमित्यनर्थत्वेन संसारेऽसारस्योक्तिः । पदद्वयसामानाधिकरण्यलब्धमर्थमाह —तदिदमिति । [3]एकत्वमभिनयेनोदाहरति—तदेवेति । एकत्वावगतिफलं कथयति—यथेति । सामाना-

---

कारण सर्वनाम द्वारा परोक्षार्थवाचक ('तत्') पद से कहा गया है। (परोक्ष जगत् की) सुखबुद्धि परम्परागत उपदेश के आधीन होती है इसलिए 'ह' शब्द का प्रयोग उस अर्थ मे है । "उस समय वह ऐसा था" इस प्रकार कहने पर परोक्ष होने पर भी उस जगत् की बीजावस्था को श्रोता सुगमता से ग्रहण कर लेता है । जैसे लोकव्यवहार मे भी कहा जाता है—"युधिष्ठिर एक राजा था" । नाम और रूपादि से व्यक्त उस साध्य और साधनरूप पूर्ववर्णित जगत् का ही "इदम्" इस शब्द से अभिधान होता है। अप्रत्यक्ष और प्रत्यक्षरूप मे जगत् के वाचक 'तत्' और 'इदम्' (वह और यह)

---

१ ऐतिह्येति परोक्षस्य जगत सुखधीरैतिह्याधीना तेनात्र हशब्दप्रयोग ऐतिह्यम् परम्परागतो प्रदेश. तदर्थोऽत्र हशब्दप्रयोग इत्यर्थः । इयमाम्नायिकाऽऽचार्यपरम्परया श्रूयत इति यावत् । "पारम्पर्योपदेशे स्यादैतिह्यमिति ह्याव्ययमित्यमर" । ऐतिह्य हशब्दश्चेति द्वय पारम्पर्योपदेशार्थक तत्र हशब्दोऽव्ययमिति तदर्थं इति । २. नामात्मना विवृतम् । ३. स्वरूपप्रदर्शनेन स्पष्टयति ।

'दमिदमेव च तदव्याकृतमासीदिति । अयंवं सति नासत' उत्पत्तिर्न सतो विनाशः कार्यस्येत्यवधृतं भवति ।

※ 'तदे'वंभूतं 'जगदव्याकृतं 'सन्नामरूपाभ्यामेव 'नाम्ना 'रूपेणैव च व्याक्रियत ।

धिकरणवशादेकत्वे निश्चिते सत्यनन्तरम्—

'नासतो विद्यते भावो नाभावो विद्यते सत.'

इति स्मृति'रनुसृता भवतीति भावः ।

"अज्ञात ब्रह्म जगतो मूलमित्युक्त्वा सद्विवर्तो जगदिति "निरूपयति—तदेवभूतमिति । तृतीया-

इन दोनो शब्दो का एक अधिकरण होने से अप्रत्यक्ष और प्रत्यक्ष अवस्था वाले जगत् की एकता ज्ञात होती है । वह अव्याकृत ही व्याकृत (कार्यरूप जगत्) था । यही अव्याकृत था । एकस्वरूप होने से 'कार्य अव्याकृत है' ऐसा कहे जाने पर असत् की उत्पत्ति नही हो सकती और सत्कार्य का विनाश नही हो सकता—ऐसा निर्णय हो जाता है ।

"तत्" अर्थात् प्रकृत अज्ञात जगत् अनभिव्यक्त होकर "नामरूपाभ्यामेव" अर्थात् नाम और रूप के द्वारा व्याकृत हुआ । "व्याक्रियते" अर्थात् इसमें कर्मकर्तृ प्रयोग होने से वह अव्याकृत स्वय

१ अव्याकृतमेव, व्याकृत—कार्यम् । २ नासत उत्पत्तिरिति । कार्यमव्याकृतमित्युक्त न तस्य सतो नाश प्रलयेऽप्यव्याकृतस्य स्थितेर्नापि तस्याऽसतो जनिरव्यक्तव्यक्तेरव जनित्वादिति भाव । ३ तत् प्रकृतम् । ४ एवभूतम्—अज्ञातम् । ५ अनभिव्यक्तनामादि । ६ नामरूपाभ्यामिति—अत्र वाचकसामान्य नामशब्दार्थं । तदुक्त वार्तिके—'अभिधानावृतिर्नामशब्देनेहाभिधीयते । अभिधेयावृतिस्तद्वद्रूपमित्युपदिश्यत इति" ॥ ३६१ ॥ अत्राकृति सामान्यम् । ७ यद्वा नामरूपाभ्या समुच्चिताभ्यामेव व्याकरण नत्वेकैकेनेत्येतदर्थमवधारणमिति केचित् (भर्तृ प्र०) तन्नेत्याह—नाम्नेति । ८ रूपेणैवेति—न तु प्रत्यगात्मस्वरूपेणेत्यथ । तथा च नामाद्यात्मना जगद्व्यक्तमपि अधिष्ठानात्मनाऽव्यक्तमेव यथा सर्पाद्यात्मना व्यक्तापि रज्जु स्वरूपेणाव्यक्तैव तद्वदित्यर्थं । ९ अङ्गीकृता । १० अज्ञातात्मविवर्तो जगदिति निरूपयितुमुत्तर वाक्यमित्यभिप्रेत्य तदेवमिति भाष्यमवतारयति—अज्ञात ब्रह्मे ति । ११ उपपादयति ।

※तदेवभूत जगदव्याकृत सन्नामरूपाभ्यामेव नाम्ना रूपेणैव चेति । अत्र भाष्ये चत्वारि वार्तिकानि । तथाहि—'कार्यकारणभेदेन प्रपञ्चो य पुरोदित । यश्चोर्ध्वं वक्ष्यते तस्मात्परस्तादेतदुच्यते ॥ प्रथते वैश्वरूपेण यतोऽविद्यैव सर्वथा । अविद्यामात्रयाथात्म्यादतस्तद्वदमुच्यते ॥ मा भूद्व्याकृतधी पुसा नामरूपात्मवस्तुनि । ऐकात्म्यव्यक्तितोऽत्र तस्मादेवेति गीरियम् ॥ सामानाधिकरण्योक्तिर्व्यक्तस्याव्यक्तसिद्धय । न हि कार्त्स्न्यमभिव्यक्तेर्व्यक्तस्यात्रास्त्यदर्शनादिति' ॥२०६-२०९॥ तन्नामरूपाभ्यामित्यादिवाक्यतात्पर्यमाह—कार्येति । कार्यकारणभेदेन तस्मादुक्तवक्ष्यमाणप्रपञ्चादपरिशिष्टत्तमुभयविधप्रपञ्चमाश्रित्य तदित्याद्युच्यते । तत्र नामरूपशब्दाभ्यामाकाशादि गृह्यते, न प्रसिद्धे नामरूपे न च तद्व्याकरणमृते मूलकारणादिति न तद्ग्रहणमत्र युक्तमित्यर्थ ॥ कार्यकारणयोर्नित्यमभेद इत्युक्त्वा कार्यकारणभेदेन वदतो व्याहृतिरित्याशङ्क्याऽऽह—प्रथत इति । वैश्वरूपेण कार्यं कारणमित्यनेकाकारेणेत्यर्थ । सर्वदा त्रिष्वपि कालेष्विति यावत् । कार्यकारणयोरविद्यकत्वादुक्तसामानाधिकरण्यात्तयोरभेदोपपत्तिर्भेदेन चानुवादस्तद्रूपेणाविद्याया भानादिन्द्रो मायाभिरित्यादिश्रुतेर्न्तत्र व्याहृतिरित्यर्थ ॥ तदित्यादिवाक्यस्यैव शब्द व्याकरोति—मा भूदिति । आत्मव्यक्ति विना जगद्व्यक्तमिति पुसा भ्रान्तिरूपा धीर्मा भूदिति यतो मन्यते श्रुतिस्तस्मान्नामरूपाभ्यामेव जगदभिव्यक्त न स्वरूपेण प्रत्यगात्मनेति वदती नामाद्यात्मना तद्व्यक्तमप्यव्यक्तमेव

व्याक्रियतेति कर्मकर्तृप्रयोगा'त्तत्स्वयमेवाऽऽत्मैव व्याक्रियत वि आ अक्रियत विस्पष्टं नामरूपविशेषावधारण'मर्याद व्यक्तीभावमापद्यत । सामर्थ्यादाक्षिप्तनियन्तृकर्तृसाधन-क्रिया'निमित्तम् । असौनामेति सर्वनाम्नाऽविशेषा'भिधानेन 'नाममात्रं व्यपदिशति । देवदत्तो यज्ञदत्त इति वा नामास्येत्यसौनामाऽयम् । तथेदमिति शुक्लकृष्णादीनामवि

मित्यंभावार्थत्वेन व्याचष्टे—नाम्नेति । क्रियापदप्रयोगाभिप्रायं तदनुवादपूर्वकमाह—व्याक्रियतेति । तत्र पदच्छेदपूर्वकं तद्वाच्यमर्थमाह—व्याक्रियतेत्यादिना । स्वयमेवेति कुतो विशेष्यते कारणमन्तरेण कार्योत्पत्तिरयुक्तेत्याशङ्क्याऽऽह—सामर्थ्यादिति । निर्हेतुकार्यसिद्धचनुपपत्त्याऽऽक्षिप्तो नियन्ता जनयिता कर्ता चोत्पत्तौ साधनक्रिया कारकव्यापारस्तन्निमित्तं तदपेक्ष्य व्यक्तीभावमापद्यतेति योजना । नामसामान्यं देवदत्तादिना विशेषनाम्ना संयोज्य सामान्यविशेषवानर्थो नामव्याकरणवाक्ये विवक्षित इत्याह—असावित्यादिना । असौशब्दः श्रौतोऽव्ययत्वेन नेयः । रूपसामान्यं शुक्लकृष्णादिना विशेषेण संयोज्योच्यते रूपव्याकरणवाक्येनेत्याह—तथेत्यादिना । अव्याकृतमेव व्याकृतात्मना व्यक्तमित्येतत्सुप्त-

अपने द्वारा ही व्याकृत होता है। 'वि आङ् उपसर्गपूर्वक अक्रियत' अर्थात् स्पष्टतः नामरूपविशेष निश्चय-पर्यन्त अभिव्यक्त होता है। वह अव्याकृत, सामर्थ्य से आक्षिप्त प्रयोजक और प्रयोज्य की उत्पत्ति में साधनक्रिया की अपेक्षा से जगत्रूप में व्यक्त होता है। 'असौनामा' इस वाक्य में 'असौ' इस नाम-सामान्यवाचक सर्वनाम से वाचकसामान्य को बतलाया गया है । देवदत्त या यज्ञदत्त इत्यादि इनके नाम है इसलिए यह "असौनामा" है। इसी प्रकार 'इद' यह शुक्ल और कृष्णादि का सामान्याकार है। यह शुक्ल अथवा कृष्ण इसका रूप है इसलिए इदरूप है। (सुप्तप्रबुद्ध दृष्टान्त से) "तदिदम्" अर्थात्

१. अव्याकृतम् । २. आत्मनैव । ३ पर्यन्तम् । ४ निमित्तमिति–अव्याकृतशब्दस्य नियन्त्रादियुक्तजगद्वा-चकत्वादितिभाव । व्याक्रियतेति कर्मकर्तृप्रयोगाज्जगत् कर्तुरविवक्षितत्व प्रतीयते इति चेत्सत्यम् मुच्यत वत्सः इतीति-इतिवत्स्वयमेवेतिवत् कर्मकर्तृलकारो व्याकरणलौकमपेक्षया सत्यव कर्तरि निर्वहतीति बोध्यम् । ५ इत्यर्थः । ६ नामसामान्यवाचकेन । ७ वाचकसामान्यम् । ८ क्रियापदे । ९ प्रयोजक । १०. प्रयोज्य. ।

रज्जुरिव सर्परूपेणेत्यभिप्रायेणैवकार प्रयुङ्क्ते इत्यर्थं ॥ इमश्च जगद्व्यक्तमिव न व्यक्तमेवेत्याह—सामानाधिकरण्येति । इद तदिति सामानाधिकरण्यगवधारणाभिप्रायमुपोद्बलयतीत्यथ । अव्यक्तेति भावप्रधानोक्ति. । आत्म-व्यक्ति विना जगतः साक्षाद्व्यक्तत्वाभावे हेत्वन्तरमाह—न हीति । व्यक्त जगति व्यक्तेरपूर्णत्वे हेतुमाह—व्यक्त-स्येति । आत्मैव वस्तु न जगदिति तदुपलब्धी नोपलभ्यते । अतो यावद्ब्रह्म प्रत्यङ्न भीयते तावज्जगदव्यक्तमेवे-त्यर्थ. ॥ नामरूपाभ्या समुच्चिताभ्यामेव व्याकरण न त्वेकैकेनत्येतदथमवधारणमिति केचित्तान्प्रत्याहुर्वार्तिकाचार्या-स्तथाहि—"नामरूपाभ्यामेवेति न समुच्चयनिश्चितो । समस्ताभ्यां व्यस्ताभ्या सार्वेऽपि व्याकृतिर्यत. ॥ जातितो वर्णितस्येह व्यक्ति. स्याद्रूपमात्रजा । जात्यन्यादेश्च नाम्नैव तथा चोभयथाऽप्यसौ ॥ अज्ञातार्थैर्हेतुना भिधापेक्षा-त्मना श्रुतौ । नेयत्ताऽस्तीह तत्त्वानामानन्त्यान्न क्रमस्तथेति" ॥३९८-४००॥ अपिशब्द समस्तव्यस्ताभ्यामित्यनेन सबध्यते ॥ व्यस्तेन रूपमात्रेण व्याकरणमुदाहरति—जातित इति । इह प्रकृतत्वे । नाममात्रेण व्याकरण दर्शयति—जात्यन्येति । आदिपदेन नैमित्तिकान्योक्तिः समुच्चयमाह—तथेति । उभयथेति नाम्ना रूपेण चेत्यर्थ । असावित्ति व्यक्तिरत्ता तत्रोदाहरणमस्मदादय ॥ समस्ताभ्या व्यस्ताभ्या च नामरूपाभ्या व्याकरणेऽपि व्याक्रियमाणस्याक्रमो वाच्याविरयाशङ्क्याऽऽह—अज्ञातेति । गृह्यमाणाना हेतुभाव वस्तिकारमुताया स्वरूपतोऽपि तदाह—नेय इति । तेषा तत्त्वानामानन्त्यादिह श्रुतौ नेयत्ताऽस्त्यत एव न क्रमश्चेति योजना ॥

[1]शेषः। इदं शुक्लमिदं कृष्णं वा रूपमस्येतीदंरूपः। [2]तदिदमव्याकृतं वस्त्वेतर्ह्यपि तस्मिन्नपि काले नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिदंरूप इति।

[3]यदर्थः [3]सर्वशास्त्रारम्भो यस्मिन्नविद्यया [4]स्वाभाविक्या कर्तृक्रियाफलाध्यारोपणा कृता यः कारणं सर्वस्य जगतो यदात्मके नामरूपे सलिलादिव स्वच्छात्[5]मलमिव [5]फेनम-

प्रबुद्धदृष्टान्तेन स्पष्टयति—तदिदमिति।

सद्वेत्यत्र मूलकारणमुक्त्वा तन्नामरूपाभ्यामित्यादिना तत्कार्यमुक्तमिदानीं प्रवेशवाक्यस्थस-शब्दापेक्षितमर्थमाह—यदर्थ इति। काण्डद्वयात्मनो वेदस्याऽऽरम्भो यस्य परस्य प्रतिपत्त्यर्थो [7]विज्ञायते कर्मकाण्डं हि स्वार्थानुष्ठानाहितचित्तशुद्धिद्वारा तत्त्वज्ञानोपयोगीष्यते ज्ञानकाण्ड तु साक्षादेव तत्रोप-युज्यते 'सर्वे वेदा यत्पदमामनन्ति' इति च श्रूयते स परोऽत्र प्रविष्टो देहादावित्ति योजना। सर्वस्याऽऽ-म्नायस्य ब्रह्मात्मनि [8]समन्वयमुक्त्वा तत्र विरोधसमाधानार्थमाह—यस्मिन्निति। अध्यासस्य [9]चतुर्विधख्यातीनामन्यतमत्वं वारयति—अविद्ययेति। तस्या [10]मिथ्याज्ञानत्वेन सादित्वादनाद्यध्यास-हेतुत्वासिद्धिरित्याशङ्क्याऽऽह—स्वाभाविक्येति। [11]विद्याप्रागभावत्वमविद्याया व्यावर्तयति—कर्त्रिति। [12]न हि तदुपादानत्वमभावत्वे संभवति नचोपादानान्तरमस्तीति भावः। अन्वयस्तु सर्वत्र यच्छब्दस्य पूर्ववद्द्रष्टव्यः। आत्मनि कर्तृत्वाध्यासस्याविद्याकृतत्वोक्त्या समन्वये विरोधः समाहितः संप्रत्य[13]ध्या-सकारणत्वोक्तत्वेऽपि निमित्तोपादानभेदं [14]साख्यवादमाशङ्क्योक्तमेव कारणं तद्भेदनिराकरणार्थं कथय-ति—य कारणमिति। [15]श्रुतिस्मृतिवादेषु परस्य तत्कारणत्वं प्रसिद्धमिति भावः। नामरूपात्मकस्य द्वैतस्याविद्याविद्यमानदेहत्वाद्विद्यापनोद्यत्वं सिध्यतीत्याह—यदात्मके इति। व्याकर्तुरात्मन. स्वभावतः शुद्धत्वे दृष्टान्तमाह—सलिलादिति। व्याक्रियमाणयोर्नामरूपयो. स्वतोऽशुद्धत्वे दृष्टान्तमाह—मल-

अव्याकृत वस्तु 'एतर्हि' अर्थात् उस समय भी नाम और रूप के द्वारा ही 'इस नाम वाली है', 'इस रूप वाली है' इस प्रकार व्याकृत होती है।

जिसके लिए वैदिक-अवैदिक सर्वशास्त्रो का आरम्भ हुआ है, जिसमे अनादिसिद्ध अविद्या के

१ सामान्याकार। २ तदिदमिति—वर्तमानकाले सुषुप्तावव्याकृतवस्तुजातं जागरादौ व्याक्रियमाणं दृष्टमतः सर्गादावपि पूर्वमव्याकृतस्य व्याकरणं दृष्टानुसाराल्लभ्यमिति भाव। ३ वैदिकावैदिकसाधारणशास्त्रम्। ४ अनादिसिद्धया। ५ मलिनम्। ६ अविद्यात्मके। ७ निश्चीयते। ८ तात्पर्यम्। ९ चतुर्विधख्या-तीति—असत्ख्यातिर्माध्यमिकानाम्। अख्यातिः प्राभाकराणाम्। अन्यथाख्यातिः तार्किकाणाम्। आत्मख्या-तिर्योगाचाराणाम्। अविद्यायास्त्वनिर्वाच्यतयाऽनिर्वचनीयख्यातिः सैद्धान्तिकानामिति। १० शुक्तिरजतज्ञानवत्। ११ अविद्याया विद्याप्रागभावत्वादनादित्वेऽपि नाध्यासोपादानत्वमित्यभिप्रेत्याह—विद्येति। १२ उभयविधाध्या-सस्याभावेतरत्वात्तदुपादानाज्ञानस्यापि नाभावत्वम् उपादानान्तराभावादित्यभिप्रेत्याह—न हीति। १३ अज्ञान-स्य। १४. योगमन्तर्भाव्याह—साख्यवादमिति। १५ श्रुतिस्मृतिवादेष्विति। 'आत्मन आकाश सभूत'। 'एतस्माज्जायते प्राण' इत्याद्या श्रुतय। 'अहम् सर्वस्य जगत प्रभव प्रलयस्तथा।', 'मत्त सर्वं प्रवर्तते'' इत्यादि-स्मृतेश्च। परिच्छिन्नस्य कार्यत्वेन मूलकारणत्वायोग इत्यादियुक्तिसग्राहको वादशब्द। अतोऽज्ञात ब्रह्मैव कारण न प्रधानादीनि तत्र तत्रोक्त वक्ष्यते च मधुब्राह्मणादावतो न प्रधानवाद साधु। तथा च वार्तिकम्—"श्रुतितो युक्तितश्चापि स्वयमेव प्रवक्ष्यति। उदर्के इममेवार्थं नातोऽन्यत्कारण तत" ॥५८१॥ इति। उदर्के—अग्रे।

व्याकृते व्याक्रियेते यश्च ताभ्यां नामरूपाभ्यां विलक्षणः स्वतो नित्यशुद्धबुद्धमुक्तस्वभावः स एषोऽव्याकृते आत्मभूते नामरूपे व्याकुर्वन्ब्रह्मादिस्तम्बपर्यन्तेषु देहेष्विह कर्मफलाश्रयेष्वशनायादिमत्सु ❀प्रविष्टः ।

---

मिवेति । यथा फेनादि जलोत्थं तन्मात्रमेव तथाऽज्ञातब्रह्मोत्थं जगद्ब्रह्ममात्रं तज्ज्ञानबाध्यं चेति भावः । नित्यशुद्धत्वादिलक्षणमपि वस्तु न स्वतोऽज्ञाननिवर्तकं केवलस्य तत्साधकत्वाद्वाक्योत्थबुद्धिवृत्त्यारूढं तु तथेति मन्वानो ब्रूते—यश्चेति । "आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुतिमाश्रित्याऽऽह—ताभ्यामिति । नामरूपात्मकद्वैतासंस्पर्शित्वादेव नित्यशुद्धत्वमशुद्धेर्द्वैतसंबन्धाधीनत्वात्तत्राविद्या प्रयोजिकेत्यभिप्रेत्य तत्संबन्धं निषेधति—बुद्धेति । तस्मादेव दुःखाद्यनर्थासंस्पर्शित्वमाह—मुक्तेति । विद्यावस्थायां शुद्धधादिसद्भावेऽपि बन्धावस्थायां नैवमिति चेन्नेत्याह—स्वभाव इति । अव्याकृतवाक्योक्तमज्ञातं परमात्मानं परामृशति—स इति । तमेव कार्यस्थं प्रत्यक्त्वं निर्दिशति—एष इति । आत्मा हि स्वतो नित्यशुद्धत्वादिरूपोऽपि स्वाविद्यावष्टम्भान्नामरूपे व्याकरोतीति तत्सर्जनस्याविद्यामयत्वं विवक्षित्वाऽऽह—अव्याकृते इति । तयोरात्मना व्याकृतत्वे तदतिरेकेणाभावः फलतीति मत्वा विशिनष्टि—आत्मेति । जनिमन्मात्रमिहशब्दार्थं कथयति—ब्रह्मादीति । तत्रैव दुःखादिसंबन्धो नाऽऽत्मनीति मन्वानो विशिनष्टि—कर्मेति । ब्रह्मात्मैक्ये पदद्वयसामानाधिकरण्याधिगते हेतुमाह—प्रविष्ट इति ।

---

द्वारा कर्ता, क्रिया और फल का आरोप किया गया है, जो सारे जगत् का कारण है, जिसके स्वरूपभूत नाम और रूप स्वच्छजल से मलिनतारूप फेन के समान अविद्यात्मक रूप में व्याकृत होते हैं। और जो उन नाम और रूप से विलक्षण स्वतः नित्यशुद्धबुद्धमुक्तस्वरूप है, वह यह आत्मा अव्याकृत एवं आत्मस्वरूप-नामरूपों को व्याकृत करता हुआ ब्रह्मा से स्तम्बपर्यन्त कर्मफल के आश्रयभूत अशनाया-

---

१ अज्ञोऽहमित्यादिप्रतीत्यर्थं व्ययम् । २ आकाश इति । आसमन्तात्काशत प्रकाशत इत्याकाशः परमात्मा । ३ निर्वहितेति—उत्पत्तिस्थितिहेतुरित्यर्थः । ४ यदन्तरेति—यस्माद्भिन्ने । यस्मिन्कल्पितत्वेनाध्यस्ते स्त इति भावः । ५ एवेति—अप्ययके नैवकारेण बोधैकरसत्वं वार्तिकाभिमत हेत्वन्तरं समुच्चीयते । ६ तमेवेत्यादि—परोक्षाभिहितपरमात्मानमेव । कार्यं बुद्धिस्तत्स्थं तदुपहितमिति यावत् । ७ तत्सर्जनस्येति । क्रमव्युत्पत्त्या नामरूपात्मकद्वैतस्येत्यर्थः । ८ स्वरूपेण । ९ उक्तदेहादावव । १० प्रविष्ट इति—स्वाविद्याविष्टम्भात्सूर्यादिवत्प्रतिबिम्बीभूत इत्यर्थः । तथा च वार्तिकम्— 'सूत्रादिस्थाणुपर्यन्तं जगत्सृष्ट्वा स्वमायया । स्वाभासेनैव सहायात्मा तदेव प्राविशद्धरिः" ॥५१४॥ इति । आभास प्रतिबिम्बस्तद्द्वारेत्यर्थः ।

---

❀प्रविष्ट इति । अत्राष्टौ वार्तिकानि द्रष्टव्यानि । तथाहि—"इत्युक्तप्रतिपत्त्यर्थं हेतुरेषोऽभिधीयते । प्रविष्ट इत्यनन्तात्र स्वाभासेनैवमोऽन्वयात् ॥५०१॥ स्वात्माभासप्रवेशो यः प्रत्यङ्मोहनिबन्धनः । तज्जेष्वपि स एव स्यान्मदादुद्धपर्णादिरूपिषु ॥ पयोभावत्सूत्ररूपः क्रियाविज्ञानशक्तिमत् । कर्तृत्वभावकः स्यात्तु चलं समस्तमादरम् ॥ बुद्ध्यात्मनोऽभिनिर्वृत्तिर्व्यवसायात्मनस्ततः । हिरण्यगर्भं य आहुरुपादानं जगद्धियाम् ॥ वैराजं स्थानमासाद्य क्षमादिदेशविभागवान् । देवतात्मा स देव एष एवाच्यते विराट् ॥ तथा च मन्त्रवर्णोऽत्र ह्यग्निर्मूर्धेति दृश्यते । तदुपादानमात्रा स्युर्देवता स्वाभिमानजा ॥ आधिभौतिकभूताना तथैवाध्यात्मरूपिणाम् । पूर्वोक्तानां परिच्छेदा ह्यविद्याकामकर्मभिः ॥ सूत्रादिस्थाणुपर्यन्तं जगत्सृष्ट्वाऽऽत्ममायया । स्वाभासेनैव सहायात्मा तदेव प्राविशद्धरिरिति" ॥५०८-१४॥ प्रविष्टपदस्यार्थमाह—इत्युक्तानि । इतिना पदद्वयसामानाधिकरण्यात्तत्त्वतोत्तमैक्यं तन्निश्चयार्थमपेक्षितो हेतुः प्रविष्टशब्देनोच्यत इत्यर्थः । परस्य प्रवेशश्चेत् प्रविष्टस्य जीवत्वात्तेन तदैक्यं युक्तं न तु

नन्वव्याकृतं स्वयमेव व्याक्रियतेत्युक्तं 'कथमिदमिदानीमुच्यते 'पर एव त्वात्माऽव्याकृतं व्याकुर्वन्निह प्रविष्ट इति । नैष दोषः । 'परस्याप्यात्मनोऽव्याकृतजगदात्मत्वेन

परमात्मा स्रष्टा सृष्टे प्रविष्टो जगतीत्यादिष्टमाक्षिपति—नन्विति । 'पूर्वापरविरोधं समाधत्ते—नेत्यादिना । व्याक्रियतेति कर्मकर्तृप्रयोगाज्जगत्कर्तुरविवक्षितत्वमुक्तमित्याशङ्क्याऽऽह—प्राक्षिप्तेति ।

दिमान् समस्त शरीरो मे प्रविष्ट हुआ ।

यहाँ शङ्का होती है कि 'अव्याकृत स्वय ही व्याकृत होता है' जब ऐसा कह चुके हो तो अब ऐसा क्यो कहने लगे हो कि परमात्मा ही अव्याकृत को व्याकृत करता हुआ इसमे प्रविष्ट है । (इस

१. कथमिति—कर्मकर्तृलदर्शनाज्जगत. स्वयमेव व्याक्रियेत्येव सति द्रष्टुरभावाच तस्य प्रवेष्टृत्वमितिभाव । २. पर एवेति । परस्याप्रवेशो हेत्वन्तरम् वार्तिकम् "परात्मन प्रवेशोऽपि न्याय सगच्छते न च । नेहासौ प्रसृतो यस्माद्दतो नासौ प्रवेशभागिति" ॥५१६॥ न्याय युक्ति न सहते । इह-अव्याकृतप्रकरणे । ३. परस्यापि । अव्याकृतवदित्यपि शब्दार्थ । अव्याकृतशब्दस्यनियन्त्रादिविशिष्टजगद्वाचकत्वादितिभाव. । ४. पूर्वेति—परस्य-प्रकृतस्य दर्शयमित्यादौ दोष ।

परस्य प्रवेशास्तस्यासङ्गत्वादित्याशङ्क्याऽऽह—अत्रेति । सृष्टे कार्ये प्रत्यगाभास यदखण्ड तमस्तत्सबन्धात्प्रवेश इत्यर्थ ॥ ननु तस्मार्थो नैवमर्थान्तरे इहत्वादित्याशङ्क्याह—स्वात्मेति । यो हि प्रत्यङ्मोहस्तत्तस्मिन्मोहे प्रत्यगाभासाख्य प्रवेश स एव प्रत्यगज्ञानजन्येष्वपि सर्वोपाधिषु प्रवेश. प्रवेशान्तरस्यापरिच्छिन्ने परस्मिन्नयोगाश्च चाऽऽभासस्याऽऽभासिनोऽन्यत्र सत्त्वमित्यैक्ये प्रविष्टशब्द पर्यवस्यतीत्यर्थ ॥ मरुद्बुद्ध्यादिरूपिष्विति प्रवेशाधिकरणान्युक्तानि तेषा स्वरूपमाह—पय इति । व्यतिकीर्णक्षीरनीरवन्मायोपाधिकारण नानारूप तस्य सर्वकार्यात्मकस्यात्तस्मादुत्पन्न सूक्ष्ममपञ्चीकृतभूतात्मक क्रियाप्रधानज्ञानोपसर्जनशक्तियुक्तमित्यर्थ । कारणस्यावान्तरविशेषमाह—कर्तृरूपेति । कर्तृरूपेण जनकत्वेन स्थित यत्स्वरूप सूत्रकारण तदुद्भवनिमित्त स्थास्न्वविचलमतादित्वादित्यर्थ । कार्यस्य सूत्रस्यावान्तरविशेषमाह—चलमिति । कर्मरूपेण जन्यत्वेन स्थितं यत्कार्यरूप सूत्र तच्चलमाद्यन्तवदित्यर्थः ॥ क्रियोपसर्जनज्ञानशक्तिकहिरण्यगर्भस्य परस्मादुत्पत्तिमनुवदन्नवान्तर स्वरूपमाह—बुद्ध्यात्मन इति । तमेव विशिनष्टि—व्यवसायात्मन इति । सूत्र व्यावर्तयति—तत इति । अज्ञातात्परस्मादित्यर्थ । ततो बुद्ध्यात्मोत्पत्तावपि हिरण्यगर्भस्य विभागात तदाह—हिरण्यगर्भमिति । तत्र श्रुतिस्मृती प्रमाणयति—प्राहुरिति । तस्मिन्नेव कार्यलिङ्गकमनुमान सूचयति—उपादानमिति ॥ विराज स्वरूपमाह—वैराजमिति । परात्मैव सूत्रादिहेतुर्मायावी सूक्ष्म पृथिव्यादिपञ्चकाद्देशविभागवान्वैराज स्थूलप्रपञ्चात्मक स्थान प्राप्य विराडुच्यत स चाग्निमूर्धाद्यवयववानित्यर्थ ॥ उक्त विराजि पूर्वोक्तमेव मान स्मारयति—तथा चेति । द्यौर्मूर्धानमस्य विप्रा वदन्तीत्याद्या स्मृतिरपि दर्शिते विराजि यथोक्तश्रुतिमूला भवति मानमिति वक्तु हिशब्द । विराज मकाशादुत्पत्तिमनुवदन्निन्द्रादिदेवतास्वरूप सगृह्णाति—तदुपादानेति । इन्द्रोऽहमित्याद्यभिमानित्वेन साधकावस्थाया पुमानवस्थितस्तन तद्वासनापि देवतासु फलभूतासु हेतुरित्याह—स्वाभिमानेति ॥ भवन्त्वेवविधानि प्रवेशाधिकरणानि तेषु प्रविष्ट चैतन्यमेवमनेक याऽऽद्ये जीवभेदव्यवहारायोगाद्द्वितीय त्वद्वैतहृतिरित्याशङ्क्याऽऽह—आधिभौतिकेति । तथैवेति—आधिदैविकभूतसमुच्चयार्थं । पूर्वोक्ताना प्रत्यङ्मोहमरुद्बुद्धीत्यादावुक्तानामिति यावत् । तत्तदुपाधिषु प्रविष्टचैतन्यस्यैक्येऽपि जीवभेदव्यवहारोऽविद्यादिवशादित्यर्थ । अविद्यादेरविद्यमानपरिच्छेदपरिनिर्माणनिपुणताद्योतनार्थो हिशब्द ॥ प्रवेशवाक्यार्थमुपसहरति—सृष्ट्वादीति । एक. स्वाभास सहायोऽस्य ॥ स्वाभासैकसहाय स चासावात्मा च स्वसृष्ट जगत्प्राविशदिति योजना । सृष्टौ प्रवेशे च साधारण हेतुमाह—आत्मेति । प्रविष्टस्य तत्र तत्र पालयितृत्व सूचयति—हरिरिति ॥

विवक्षितत्वात् । आक्षिप्तनियन्तृकर्तृक्रियानिमित्तं हि जगदव्याकृतं व्याक्रियतेत्यवोचाम । 'इदंशब्दसामानाधिकरण्याच्चाव्याकृतशब्दस्य ।

'यथेदं जगन्नियन्त्राद्यनेककारकनिमित्तादिविशेषवद्व्याकृतं तथाऽपरित्यक्तान्यतमविशेषवदेव 'तदव्याकृतम् । व्याकृताव्याकृतमात्रं तु विशेषः । 'दृष्टश्च लोके विवक्षातः शब्दप्रयोगो ग्राम आगतो ग्रामः शून्य इति । कदाचिद्ग्रामशब्देन 'निवासमात्रविवक्षायां

---

'मुच्यते वत्सः स्वयमेवेतिवत्कर्मकर्तरि लकारो व्याकरणसौकर्यापेक्षया सत्येव कर्तरि निर्वहतीति भावः । अव्याकृतशब्दस्य नियन्त्रादियुक्तजगद्वाचित्वे हेत्वन्तरमाह—इदंशब्देति ।

कथमुक्तसामानाधिकरण्यमात्रादव्याकृतस्य जगतो नियन्त्रादियुक्तत्वं तत्राऽऽह—यथेति । नियन्त्रादीत्यादिशब्देन कर्तृकरणादिग्रहणम् । निमित्तादीत्यादिपदेनोपादानमुच्यते । 'विमतं नियन्त्रादिसापेक्षं कार्यत्वा'दसंप्रतिपन्नवदित्यर्थः । 'कस्तर्हि प्रागवस्थे संप्रतितने च जगति विशेषस्तत्राऽऽह—व्याकृतेति । कथं पुनरव्याकृतशब्देन जगद्वाचिना परो गृह्यत एकस्य शब्दस्यानेकार्थत्वायोगादत आह—दृष्टश्चेति । उक्तमेव स्फुटयति—कदाचिदिति । उभयविवक्षया ग्रामशब्दप्रयोगस्य दार्ष्टान्तिकमाह—

---

शङ्का का निराकरण करते हैं—) इसमें कोई दोष नहीं है, क्योंकि यहाँ परमात्मा ही अव्याकृत-नियन्तादिविशिष्ट जगत्‌रूप से विवक्षित है। आक्षिप्त हुए नियन्ता और कर्ता (प्रयोज्य और प्रयोजक) उत्पत्ति में साधन क्रिया की अपेक्षा से अव्याकृत जगत् ही व्याकृत होता है—ऐसा हम पहले कह चुके हैं। इसके अतिरिक्त 'अव्याकृत' शब्द का 'इदम्' शब्द से समानाधिकरण है।

जिस प्रकार यह व्याकृत जगत नियन्ता आदि अनेक कारक-निमित्तादि विशेष से युक्त है, उसी प्रकार श्रुतिस्थ तत्पदवाच्य अव्याकृत भी उनमें से किसी विशेष का बिना त्याग किए उनसे युक्त ही है। (दोनों के नियन्तादि सापेक्ष होने से) उनमें व्याकृत और अव्याकृत होना मात्र ही विशेष है। लोकव्यवहार में भी देखा जाता है कि शब्द का प्रयोग विवक्षा से होता है। जैसे—'ग्राम आ गया' 'ग्राम शून्य है'। (इन वाक्यों में) कभी तो ग्रामशब्द से अधिकरणमात्र की विवक्षा होने पर 'ग्राम

---

१ इदमिति। अव्यक्तजगदभिधानस्याव्याकृतपदस्य व्यक्तजगदभिधाने नेदंशब्देन सामानाधिकरण्यश्रवणात् सर्वेष्वेव जगति नियन्त्रादिसाहित्यमुचितमित्यर्थः । २ यथेदमिति—तथा च वार्तिके—'इदं जगन्नियन्त्रादि विभिन्नानेकरूपवत् । यथाऽधुना निश्चिनुमः प्रागप्येतदभूत्तथा ॥ नामरूपाद्यभिव्यक्तं प्राग्व्यक्तापह्नवेऽप्यभूत् । अध्यक्षाद्यक्षाध्यक्ष एकाकी व्यक्तं मत्साक्षिकं जगत् ॥ जन्मजनिस्थितिध्वसनं तत्साक्ष्यतिरेकतः । शिष्टस्येह प्रवेशत्वात्परएवाऽऽविशेदतः" ॥५१९-५२१॥ इति । इदमिति-दृष्टानुसारिणी कल्पनेति भावः ॥ अव्याकृतं जगति नियन्त्रादियुक्तं साधकवैधुर्यमाशङ्क्याऽऽह—नामेति । नामरूपाभ्यां व्यक्तं जगद्येन साक्षिणा नियन्त्रादियुक्तमनुभूयते ॥ एवं तदुत्पत्तेः प्राक् तदपह्नवानन्तरं च तद्व्यक्ताव्यक्तत्वसाधको न च तस्यान्यसाधकापेक्षा एकत्वात् स्वप्रकाशत्वाच्चेत्यर्थः । परस्य प्रकृतत्वोक्त्या तस्यैव प्रवेशमुक्त्वा तत्रैव हेत्वन्तरमाह—जगदिति । साक्षिणो भेदेन श्रुतं दृष्टं वा यदवशिष्टं तस्य सर्वस्य प्रवेशविषयान्तर्भावात् परमात्मैव जगति प्रवेष्टा तद्भेदमङ्गत्यर्थः । ३ श्रुतिस्थतत्पदवाच्यम् । ४ दार्ष्टान्तिकानुरोधे दृष्टान्तयितुं चशब्दः । ५ अधिकरणमात्रविवक्षयामित्यर्थः । ६ मुच्यत इति । अव्याकृतजगद्व्याकरणस्य नियन्त्राद्यतिरेकेणायोगान्नियन्त्रादियुक्तं जगदव्याकृतशब्देनोच्यत इत्यादौ शेषः । ७ अव्याकृतम् । ८ व्याकृतवत् । ९ उभयोर्नियन्त्रादिसापेक्षत्वे ।

ग्रामः शून्य इति शब्दप्रयोगो भवति कदाचिन्निवासिजनविवक्षायां ग्राम आगत इति कदाचिदुभयविवक्षायामपि ग्रामशब्दप्रयोगो भवति ग्रामं च न प्रविशेदिति यथा। तद्वदिहापि जगदिदमव्याकृतं व्याकृतं चेत्यभेदविवक्षायामात्मानात्मनोर्भवति व्यपदेशः। तथेदं जगदुत्पत्तिविनाशात्मकमिति केवलजगद्व्यपदेशः। तथा महानज आत्माऽस्थूलोऽनणुः स एव नेति नेतीत्यादि केवलात्मव्यपदेशः।

ननु परेण व्याकर्त्रा व्याकृतं सर्वतो व्याप्तं सर्वदा जगत्स कथमिह प्रविष्टः परिकल्प्यते। अप्रविष्टो हि देशः परिच्छिन्नेन प्रवेष्टुं शक्यते। यथा पुरुषेण ग्रामादिर्नाऽऽकाशेन किंचिन्नित्यप्रविष्टत्वात्। पाषाणसर्पादिवद्धर्मान्तरेणेति चेत्। अथापि स्यान्न

तद्वदिति। इहेत्यप्राकृतवाक्योक्तिः। निवासमात्रविवक्षया ग्रामशब्दप्रयोगस्य दार्ष्टान्तिकमाह— तथेति। निवासिजनविवक्षया तत्प्रयोगस्यापि दार्ष्टान्तिकं कथयति—तथा महानिति।

अव्याकृतवाक्ये परस्य प्रकृतत्वात्तस्य प्रवेशवाक्ये सशब्देन परामृष्टस्य सृष्टे कार्ये प्रवेश उक्तस्तं च प्रकारान्तरेणाऽऽक्षिपति—नन्विति। कथमितिसूचितामनुपपत्तिमेव स्पष्टयति—अप्रविष्टो हीति। दृष्टान्तावष्टम्भेन प्रवेशवादो शङ्कते—पाषाणेति। तदेव विवृणोति—अथापीत्यादिना। परस्य परिपू-

शून्य है' ऐसे शब्द का प्रयोग होता है और कभी ग्रामवासी लोगों की विवक्षा होने पर 'ग्राम आ गया' ऐसा प्रयोग होता है तथा कभी दोनों की विवक्षा में भी ग्राम शब्द का प्रयोग होता है, जैसे 'ग्राम (नगर या जनसमूह) में प्रवेश न करे'। उसी तरह यहाँ भी 'यह जगत् व्याकृत और अव्याकृत है' इस वाक्य में अभेद की विवक्षा होने पर आत्मा और अनात्मा का निर्देश होता है। तथा 'यह जगत् उत्पत्तिविनाशस्वभाव वाला है' इस वाक्य में (आत्मोपसर्जन) केवल अनात्मजगत् का निर्देश है। तथा 'यह आत्मा महान् और जन्मरहित है', 'यह अस्थूल और अनणु है', "वह यह आत्मा ऐसा (कारणरूप) नहीं है, ऐसा (कार्यरूप) नहीं है' इत्यादि श्रुतिवाक्यों में केवल आत्मा का निर्देश है।

(पुनः शङ्का होती है ) किन्तु जब व्याकृत करने वाले परमात्मा द्वारा यह व्याकृत जगत् सर्वदा सब ओर से व्याप्त किया गया है, तो बुद्ध्यादि में प्रविष्ट हुआ' ऐसी कल्पना क्यों करते हो? क्योंकि किसी परिच्छिन्न वस्तु द्वारा उसी जगह प्रवेश किया जा सकता है, जिसमें उसका प्रवेश न हुआ हो। जैसे पुरुष द्वारा ग्रामादि में प्रवेश होता है। (सब में) नित्यप्रविष्ट होने के कारण आकाश के द्वारा किसी वस्तु में प्रवेश नहीं किया जा सकता। (सिद्धान्त्येकदेशी प्रवेशवादी कहता है- )

१ नगर जनसमूह चेत्यर्थः। २ आत्मानात्मनोरिति। तथा च वार्तिके— "अव्याकृतं व्याकृतं विश्वं यत्र चाप्यभिधीयते। आत्मानात्मद्वयार्थेव विवक्षा तत्र गम्यते" ॥५२७॥ इति। ३ वाक्ये। ४ केवलेति जगच्छब्देन प्राधान्येनानात्मव्यवहारः। तथा च वार्तिके—"अस्थूलोऽजोऽजरः शुद्धो यत्र चाप्यभिधीयते। प्रत्यगात्मविवक्षैव तत्र ज्ञेयाभिधानतः ॥५२६॥ यत्र निषेध्यत्वेन स्थूलादिजगल्लक्ष्यते तत्र प्रत्यगात्मैव निषेध्यार्पणद्वारा जगच्छब्देन विवक्ष्यते इत्यर्थः। ५ वाक्ये। ६ केवलेति-आत्मोपसर्जनानात्मव्यवहारः। ७ बुद्ध्यादौ। ८ उक्त इति—यदि तस्य तत्र प्रकृतत्वं नेष्टं तथापि यन्मदन्यदस्ति, इत्यत्र प्रकृतत्वात् तस्यात्र सशब्देन परामर्शात् तस्यैव स्रष्टुः सृष्टे जगति प्रवेशो युक्त इति शेषः। 'यन्मदन्यदिति चोक्ते परस्य प्रकृतत्वतः। सशब्देन परामर्शः परस्येह भवेदतः" ॥५२८॥ इति वार्तिकोक्तेः। ९ सिद्धान्त्येकदेशी। १० सर्वगतवाक्यम्।

पर आत्मा स्वेनैव रूपेण प्रविवेश किं तर्हि तत्स्थ एव [1]धर्मान्तरेणोपजायते [2]तेन प्रविष्ट [3]इत्युपचर्यते। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। [4]यः स्रष्टा स भावान्तरमनापन्न एव कार्यं सृष्ट्वा पश्चात्प्राविशदिति हि श्रूयते।

यथा भुक्त्वा गच्छतीति भुजिगमिक्रिययोः पूर्वापरकालयो[5]रितरेतरविच्छेदो[6]ऽविशिष्टश्च कर्ता तद्वदिहापि[7] स्यान्नतु तत्स्थस्यैव भावान्तरेणोपजनन[8]मेतत्संभवति। न च स्थाना-

स्यांस्य क्वचित्प्रवेशाभावेऽपीति यावत्। तच्छब्दः सृष्टकार्यविषयः। धर्मान्तरं जीवाख्यम्। दृष्टान्तं व्याचष्टे—यथेति। पाषाणाद्य[?]ह्यः सर्पादिस्तत्र प्रविष्ट इति शङ्कापोहार्थं सहजविशेषणम्। "सर्पादिरस्मादिरूपेण स्थितभूतपञ्चकपरिणामत्वात्तत्र "सहजत्वं "पाषाणादौ यानि भूतानि "स्थितानि तेषां परिणामः सर्पादिस्तद्रूपेण तत्र भूतानामनुप्रवेशवदपरिच्छिन्नस्यापि परस्य जीवाकारेण बुद्ध्यादौ प्रवेशसिद्धिरित्यर्थः। आक्षेप्ता ब्रूते—नेति। "तदेव स्पष्टयति—यः स्रष्टेति।

ननु तक्ष्णा निर्मिते वेश्मनि ततोऽन्यस्यापि प्रवेशो दृश्यते तथा परेण सृष्टे जगत्यन्यस्य प्रवेशो भविष्यति नेत्याह—यथेति। "पाषाणसर्पन्यायेन कार्यस्थस्यैव परस्य जीवाख्ये परिणामे" तत्सृष्ट्वेत्यादिश्रवणमनुपपन्नमिति "व्यतिरेकं दर्शयति—नत्विति। अस्तु "तर्हि परस्य मार्जारादिवत्पूर्व"वस्थानत्यागेनावस्थानान्तरसंयोगात्मा प्रवेशो नेत्याह—न चेति। निरवयवोऽपरिच्छिन्नश्चाऽऽत्मा तस्य स्थानान्तरेण वियोगं प्राप्य स्थानान्तरेण सह संयोगलक्षणो यः प्रवेशः स सावयवे परिच्छिन्ने च मार्जारादौ दृष्टप्रवेश-

किन्तु यदि उसने पाषाण और सर्पादि के सदृश धर्मान्तर से प्रवेश किया हो तो? (भावाशय यह है कि) यह भी हो सकता है कि परमात्मा ने अपने ही रूप से प्रवेश नही किया? तो फिर क्या हुआ? वह उसमें स्थित हुआ ही जीवरूप धर्मान्तर मे परिणत हो गया। इसलिए (जीवाख्य परिणाम द्वारा) 'प्रविष्ट हो गया' ऐसा कहा जाता है। जिस प्रकार पत्थर मे उसके साथ उत्पन्न होने वाला व उसके अन्दर रहने वाला सर्प अथवा नारियल मे जल है। (इसपर आक्षेप्ता कहता है–) ऐसा कहना ठीक नही है। क्योंकि श्रुति कहती है—"उसे सृजन कर वह परमात्मा उसी मे जीवभाव से प्रविष्ट हो गया"। "जो स्रष्टा है, वह बिना कोई भावान्तर प्राप्त किये कार्य का सृजन कर बाद मे प्रविष्ट हो गया" ऐसा श्रुति मे कहा गया है।

जैसे "भोजन करके जाता है" इस वाक्य मे पहले होने वाली भोजन क्रिया और बाद मे होनेवाली गमन-क्रिया मे परस्पर भेद है, और उनका कर्ता एक ही है, उसी तरह यहां भी हो जायेगा, उस मे स्थित का हो भावान्तर को प्राप्त होना (श्रुति द्वारा कथित अविकृत का ही प्रवेश होना) यह सभव नही है।

१. जीवरूपेण परिणमते। २ जीवाख्यपरिणामद्वारा। ३ उच्यते। ४. य. स्रष्टेति-यथा देवदत्तोऽनेकशिल्पसपर्यवदातः (शुद्ध) (निष्णात.) स्वकृत वेश्म प्रविशति तथैव स्रष्टा सृष्टकार्ये बुद्ध्यादावप्राप्तपरिणामविशेष सन् प्रविष्टोऽस्तीति तत्सृष्ट्वेत्यादिश्रुत्या मत उच्यतेऽतो नोक्तदृष्टान्तवशाच्छङ्का सावकाशेत्यर्थ.। ५. पृथक् परस्परभेद। ६. एक। ७. अविरेवकारार्थ.—तद्वदेव। ८. श्रुत्युक्तमविकृतस्यैव प्रवेशनम्। ९. ...... सिद्धः। १०. पाषाणादौ सर्पादि. सहजत्वे हेतुमाह—सर्पादिरिति। ११. तद्रूपत्वम्। १२. कथमस्माधारमवभूतपञ्च (रूपेण) तस्य सर्पादिपरिणाम इत्याऽऽशङ्क्य मालादिपाकवशात्पृथ्व्यादिपञ्चकस्य सर्पादिपरिणाममनुभवेन साधयति—पाषाणादाविति। १३. उपादानत्वेन। १४. मग्रहवाक्यमेव। १५. न्यायेन-दृष्टान्तरूपया युक्त्या। १६. स्वीकृते सति। १७. व्यावर्त्यम्। १८. पूर्वोक्तप्रवेशप्रकारासंभवे। १९. अवस्थानमत्र स्थानमेव।

न्तरेण वियुज्य स्थानान्तरसंयोगलक्षणः प्रवेशो निरवयवस्यापरिच्छिन्नस्य दृष्टः।

सावयव एव प्रवेशश्रवणादिति चेन्न। "दिव्यो ह्यमूर्तः पुरुषः" "निष्कलं निष्क्रियम्" इत्यादिश्रुतिभ्यः। [1]सर्वव्यपदेश्यधर्मविशेषप्रतिषेधश्रुतिभ्यश्च। प्रतिबिम्बप्रवेशवदिति चेन्न। [2]वस्त्वन्तरेण विप्रकर्षानुपपत्तेः। द्रव्ये गुणप्रवेशवदिति चेत्। न। अनाश्रितत्वात्। नित्यपरतन्त्रस्यैवाऽऽश्रितस्य गुणस्य द्रव्ये प्रवेश [3]उपचर्यते। न तु ब्रह्मणः [4]स्वातन्त्र्यश्रवणात्तथा प्रवेश उपपद्यते।

फले बीजवदिति चेन्न। सावयवत्ववृद्धिक्षयोत्पत्तिविनाशादिधर्मवत्त्वप्रसङ्गात्। न

---

सदृशो न भवतीति योजना। वियुज्येति पाठे तु स्फुटैव योजना।

प्रवेशश्रुत्या निरवयवत्वासिद्धिं शङ्कते—सावयव इति। प्रवेशश्रुतेरन्यथोपपत्तेर्वक्ष्यमाणत्वान्नैवमिति परिहरति—नेत्यादिना। अमूर्तत्वं निरवयवत्वम्। पुरुषत्वं पूर्णत्वम्। प्रकारान्तरेण प्रवेशोपपत्तिं शङ्कते—प्रतिबिम्बेति। आदित्यादौ जलादिना सन्निकर्षादिसंभवात्प्रतिबिम्बाख्यप्रवेशोपपत्तिः। आत्मनि तु परस्मिन्ननङ्गेऽनवच्छिन्ने केनचिदपि [5]तदभावान्न यथोक्तप्रवेशसिद्धिरित्याह—न वस्त्वन्तरेणेति। प्रकारान्तरेण प्रवेशं चोदयति—द्रव्य इति। परस्यापि कार्ये प्रवेश इति शेषः। गुणापेक्षया परस्य वैलक्षण्यं दर्शयन्परिहरति—नेत्यादिना। स्वातन्त्र्यश्रवणमेव सर्वेश्वर इत्यादि।

पनसादिफले बीजस्य प्रवेशवत्कार्ये परस्य स्यादिति शङ्कित्वा दूषयति—फल इत्यादिना।

---

निरवयव और अपरिच्छिन्न पदार्थ का एक स्थान से वियोग प्राप्त कर दूसरे स्थान मे सयोग।लक्षणरूप प्रवेश नही देखा जाता है।

उसका प्रवेश होना तो सुना गया है इसलिये यदि वह अवयव युक्त कहा जाए तो? ऐसा नही हो सकता। '(वह अक्षरब्रह्म स्वयप्रकाश होने के कारण) निश्चय ही दिव्य, आकाररहित पुरुष है" "जो कला रहित और क्रिया शून्य है (उस देव की मैं शरण हूँ)" इत्यादि श्रुतियाँ और ('नेति-नेति' इस प्रकार) सब व्यपदेश्य धर्म विशेष के प्रतिषेध करने वाली श्रुतियाँ इसमे प्रमाण हैं। (सिद्धान्त्येकदेशी शका करता है-)यदि प्रतिबिम्ब के प्रवेश के समान उसका प्रवेश मान लें तो? (इसका परिहार पूर्वपक्षी करता है—) ऐसा कहना ठीक नही है, क्योंकि स्वभिन्न वस्तु द्वारा वियोगादि होना असभव है। (पुन सिद्धान्त्येकदेशी कहता है—) जैसे द्रव्य मे गुण का प्रवेश होता है उसी तरह उसका प्रवेश मान लें तो? (इस पर पूर्वपक्षी कहता है—)ऐसा यहा मानना ठीक नही क्योकि वह किसी के आश्रित नही है। नित्य परतन्त्र और आश्रित गुण का ही द्रव्य मे प्रवेश कहा जाता है। ब्रह्म का द्रव्य मे गुण की तरह प्रवेश सभव नही है क्योकि ईश्वर का स्वतन्त्र होना सुना जाता है।

(पुन प्रवशवादी कहता है—)यदि ईश्वर का प्रवेश फल मे बीज के समान मान लिया जाय

---

१ सर्वेति। नेति नेतीति सर्वव्यवह्रियमाणधर्मविशेषप्रतिषेधश्रुतिभ्यश्चानुकूल्यमिति—सर्वेति। न परस्य सावयवत्वादिसंभावनेति भाव। २ वस्त्वन्तरेणेत्यादि। स्वभिन्नवस्तुना वियोगाद्यसंभवादित्यर्थः। तदुक्तं वार्तिके—'संयोगश्च वियोगश्च यस्य येनेह वीक्ष्यते। प्रतिबिम्बप्रवेशोऽत्र तत्र नत्विह युज्यते ॥५४१॥ इति। ३ उच्यते। ४ स्वातन्त्र्येति—नहि कारणं कार्यतन्त्रं वैपरीत्यादतो द्रव्यं गुणवदीश्वरस्य प्रवेशो न कार्ये युक्तः स्वतन्त्रतया गुणवैधर्म्यादित्यर्थः। ५ सन्निकर्षाद्यभावात्।

चैवं धर्मवत्त्वं ब्रह्मणः "अजोऽजरः" इत्यादिश्रुतिन्यायविरोधात्। [1]अन्य एव संसारी परिच्छिन्न इह प्रविष्ट इति चेन्न। "सेयं देवतैक्षत[2]" इत्यारभ्य "नामरूपे व्याकरवाणि" इति तस्या एव प्रवेशव्याकरणकर्तृत्वश्रुतेः। तथा तत्सृष्ट्वा तदेवानुप्राविशत्। स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत। "सर्वाणि रूपाणि [4]विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" "त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन [5]वञ्चसि" "पुरश्चक्रे द्विपदः[6]" "रूपं रूपम्[7]" इति च मन्त्रवर्णान्न परादन्यस्य प्रवेशः।

---

विनाशादीत्यादिशब्देनानात्मत्वानीश्वरत्वादि गृह्यते। प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे—न चेति। जन्मादीनां धर्माणां धर्मिणो [8]भिन्नत्वाभिन्नत्वासंभवादित्यर्थः। [9]बीजफलयोरवयवावयविवत् पाषाणसर्पयोराधाराधेयतेत्यपुनरुक्तिः। परस्य सर्वप्रकारप्रवेशासंभवे प्रवेशश्रुते[10]रालम्बनं वाच्यमित्याशङ्क्य पूर्वपक्षमुपसंहरति—अन्य एवेति। जगतो हि परः स्रष्टेति वेदान्त[11]मर्यादा स्रष्टैव च प्रवेष्टा [12]प्रविश्य व्याकरवाणीति प्रवेशव्याकरणयोरेककर्तृत्वश्रुतेस्तस्मात्परस्मादन्यस्य प्रवेशो न युक्तिमानिति सिद्धान्तयति—नेत्यादिना। [13]तत्रैव तैत्तिरीयश्रुतिं संवादयति—तथेति। ऐतरेयश्रुतिरपि यथोक्तमर्थमुपो[14]द्वलयतीत्याह—स एतमेवेति। [15]श्रीनारायणाख्यमन्त्रमप्यत्रानुकूलयति—सर्वाणीति। वाक्यान्तरमुदाहरति—त्वं कुमार इति। अत्रैव वाक्यशेषस्याऽऽनुगुण्यं दर्शयति—पुर इति। उदाहृतश्रुतीनां तात्पर्यमाह—न परादिति।

---

तो? (पूर्वपक्षी कहता है—) ऐसा मानना भी ठीक नही। ऐसा कहने से ईश्वर मे सावयवत्व, वृद्धि, क्षय, उत्पत्ति और विनाशादि धर्म होने का प्रसङ्ग आ जायगा। परन्तु ब्रह्म इस प्रकार के धर्मो वाला नही है। यह मानने से "वह अजन्मा और अजर है" इत्यादि श्रुति और युक्ति से विरोध होने लगेगा। (लोक व्यवहार मे परिच्छिन्न का ही प्रवेश देखा जाता है) अत यदि ऐसा मानो कि ईश्वर से भिन्न किसी परिच्छिन्न ससारी ने ही इसमे प्रवेश किया है तो? (पूर्वपक्षी की उपसहार उक्ति का सिद्धान्ती खण्डन करता है—)ऐसा मानना ठीक नही। (इस जगत् का स्रष्टा परमात्मा है और वही प्रवेष्टा है ऐसा वेदान्त का परम सिद्धान्त है इसलिए अन्य का प्रवेश होना सर्वथा अनुपयुक्त है) क्योकि (छान्दोग्य उपनिषद मे) "उस इस (सत् नाम वाली तेज, अप् और अन्न की योनिरूपा) देवता ने ईक्षण किया" यहाँ से लेकर "मैं नाम और रूपो की अभिव्यक्ति करूँ" यहा तक की श्रुति से उसी का प्रवेष्टा और स्रष्टा होना सिद्ध होता है। तथा "उसे सृजन कर बाद मे (स्रष्टा परमेश्वर) उसी मे प्रविष्ट हो गया", वह सृष्टिकर्ता ईश्वर इस मूर्धा को ही विदीर्ण कर इस मार्ग से ही इस सघात मे प्रविष्ट हो गया" "जो धीर है वह समस्त रूपो को रचकर, उनके नाम रखकर उनमे आसीन हुआ बोलता रहता

---

१ अन्य एवेत्यादि इह श्रुतौ या जगत्प्रविशदित्युक्त स परस्मादन्य परिच्छिन्न ससार्येव इति योजना। परिच्छिन्नस्यैव प्रवेशो लोके दृष्ट। न च श्रुतिविरोध परस्यैव जीवभावमापन्नस्य प्रवेशवादित्वादिति भाव। २ छान्दोग्य। ३ विरचय्य। ४ सत्-य धीर। आसीनोऽभिवदतीति यावत्। ५ गच्छसि। ६ बृ०उ० २-५-१८। ७ बृ०उ० २-५-१९। ८ भिन्नत्वेत्यादि। अत्यन्तभिन्नत्व [illegible] धर्मधर्मिभाव यथा घटपटयो। अभिन्नत्वेपि नाभिन्नत्वाभिन्नत्व चैकत्र विरुद्धत्वादशक्याभ्युपगमम्। ९ ननु बीजदृष्टान्तस्य पाषाणसर्पदृष्टान्तेन पुनरुक्तिमाशङ्क्याऽऽह—बीजेति। १० विषय। ११ परमसिद्धान्त। १२ अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि। १३ स्रष्टृप्रवेष्टोरैक्ये। १४ द्रढयति। १५ नारायणोपनिषदीयम्।

प्रविष्टानामितरेतरभेदात्¹ परानेकत्वमिति चेत् । न । "एको देवो ²बहुधा संनिविष्टः" "एकः सन्बहुधा विचार" "त्वमेकोऽसि बहूननुप्रविष्टः" "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" ³इत्यादिश्रुतिभ्यः । प्रवेश उपपद्यते नोपपद्यत इति ⁴तिष्ठतु तावत्प्रविष्टानां संसारित्वात्तद⁵नन्यत्वाच्च परस्य संसारित्वमिति चेत् । न । ⁶अशनायाद्यत्ययश्रुतेः⁷ ।

सुखित्वदुःखित्वादिदर्शनान्नेति चेत् । न । "न लिप्यते ⁸लोकदुःखेन ⁹बाह्यः" इति श्रुतेः । प्रत्यक्षादिविरोधादयुक्तमिति चेत् । न । उपाध्याश्रयजनितविशेषविषयत्वात्

परस्य प्रवेशे प्रविष्टाना मिथो भेदात्तदभिन्नस्य तस्यापि नानात्वप्रसक्तिरिति शङ्कते—प्रविष्टानामिति । न परस्यानेकत्वमेकत्वश्रुतिविरोधादिति परिहरति—नेत्यादिना । विचार विचचारेति यावत् । परस्य प्रवेशे नानात्वप्रसङ्ग प्रत्याख्याय दोषान्तरं चोदयति—प्रवेश इति । तेषा ससारित्वेऽपि परस्य किमायातं तदाह—तदनन्यत्वादिति । श्रुत्यवष्टम्भेन दूषयति—नेति ।

अनुभवमनुसृत्य शङ्कते—सुखित्वेति । नासंसारित्वमिति शेषः । गूढाभिसधिरुत्तरमाह—नेति । आगमो हि परस्याससारित्वे मान त्वयोच्यते स चाध्यक्षविरुद्धो न स्वार्थे मानं न च वैपरीत्यं ज्येष्ठत्वेन" बलवत्वादिति शङ्कते—प्रत्यक्षादीति । पूर्ववादिनि स्वाशयमाविष्कृतवति सिद्धान्ती स्वाभिसधिमाह—नोपाधीति । उपाधिरन्त करण तदाश्रयत्वेन जनितो विशेषश्चिदाभासस्तद्गतदु खादिविषय-

है", "तुम ही कुमार या कुमारी हो तू ही बूढा होकर लकडी के सहारे चलता है।" "परमात्मा ने दो पैर वाले शरीर बनाये", "(एक ही सम्पूर्ण भूतो का अन्तरात्मा उनके) रूप के अनुरूप हो रहा है" इत्यादि मन्त्रवर्णों से भी परमात्मा से भिन्न सृष्टि मे किसी दूसरे का प्रवेश सिद्ध नही होता।

यदि शका करो कि प्रविष्ट पदार्थों का परस्पर भेद होने से परमात्मा मे नानात्व प्राप्त होने लगेगा तो ऐसा कहना ठीक नही। "एक ही वह परमात्मा बहुरूप से प्रविष्ट हुआ", "एक ही होकर उस परमात्मा ने बहुरूप से विचरण किया", "तुम एक ही हो और अनेको मे प्रविष्ट हो', "समस्त प्राणियो मे सर्वव्यापक सम्पूर्ण भूतो का अन्तरात्मा, एव परमात्म देव ही गुप्त भाव से स्थित है।" इत्यादि श्रुतियाँ इसमे प्रमाण हैं। (पूर्वपक्षी पुन दोषान्तर ढढकर कहता है—) अच्छा, इस कार्यभूत सृष्टि मे परमात्मा का प्रवेश होता है या नही, इस बात को छोडो। प्रविष्ट हुए पदार्थों के ससारी होने से एव परमात्मा उससे अभिन्न होने से श्रुति परमात्मा को अशनाया, पिपासा, शोक, मोह, जरा, मृत्यु आदि सासारिक धर्मों से परे बताती है।

यदि कहो परमात्मा का सुखी और दु खी होना देखा जाता है इसलिए परमात्मा

१ परानेकत्वमिति । पर स्वगतभेदवान् अनेकाभिन्नत्वात् अनेकवदिति शङ्कितुराशय ।। २ बहुरूपेण । ३ इत्यादीति । अनेके तत्त्वत स्वगतभेदहीना एकाभिन्नत्वादेकवदिति प्रत्यनुमान तथा लोकेऽपि नाऽभेदा नानात्वकारी दृष्ट । तस्याऽभेदकत्वादेव तद्विरोधित्वादित्यभिन्नत्वस्य भेदमाधकत्वे लोकविरोधश्चादिशब्दार्थ । तदुक्त वार्त्तिके— "बहूनामेकयोगित्वादेकत्व किं न चोद्यत इति ।।५२२।। एकस्य बहुभिरभेदादनेकत्व चेद्बहूनामेकेनाभेदादेकत्व किं न स्यादिति तदर्थ । पर स्वगततात्त्विकभेदहीनो मेयत्वादाकाशवदिति वास्तविकभेदाभावबोध्यमान च द्रष्टव्यम् । तथा च परभेदसाधन लोकागमानुमानविरुद्धमिति भाव । ४ तिष्ठत्विति-येन केनापि प्रकारेण प्रवेशोऽस्तु श्रुतिवशादित्यर्थ । श्रुत्यवष्टम्भेन सक्षिप्त प्रवेश प्रपञ्चयितव्य पश्चादिति तावच्छब्दार्थ । ५ तदनन्यत्वादिति । पर ससारी तदभिन्नत्वात्तद्वदिति भाव । ६ बृ०उ० ३-५-१ । ७ योऽशनायापिपासे शोक मोह जरा मृत्युमत्येतीत्यादिश्रुते । ८ जीवदु खेन । ९ अविद्याद्यस्पृष्ट । १० अध्यक्षस्य ।

*प्रत्यक्षादेः। "[1]न दृष्टेर्द्रष्टारं पश्येर्विज्ञातारमरे[2] केन विजानीयादविज्ञातं विज्ञातृ[3]" [4]इत्यादिश्रुतिभ्यो नाऽऽत्मविषयं [5]विज्ञानं किं तर्हि बुद्ध्याद्युपाध्यात्मप्रतिच्छायाविषयमेव सुखि-

त्वा[6]द्प्रत्यक्षादेराभासत्वा[7]त्तेनाऽऽत्मन्यसंसारित्वागमस्य [8]न विरोधोऽस्तीत्यर्थः। किंच प्रत्यक्षादीनामनात्मविषयत्वादात्मविषयत्वाच्चाऽऽगमस्य भिन्नविषयतया नानयोर्मिथो विरोधोऽस्तीत्यभिप्रेत्याऽऽत्मनोऽध्यक्षाद्यविषयत्वे श्रुतीरुदाहरति—न दृष्टेरिति। सुख्यहमित्यादि[9]प्रतिभासस्य [10]"तर्हि का गतिरित्याशङ्क्य पूर्वोक्तमेव स्मारयति—किं तर्हीति। बुद्ध्यादिरुपाधिस्तत्राऽऽत्मप्रतिच्छाया तत्प्रतिबिम्बस्त-

का सासारिक धर्मो से परे होना नही बनता, तो ऐसा कहना ठीक नही। "(सम्पूर्ण भूतो का अन्तरात्मा) अविद्या से अस्पृष्ट वह परमात्मा जीव के दुःख से लिप्त नही होता" यह श्रुति इसमे प्रमाण है। यदि कहो कि प्रत्यक्षादि प्रमाणो से इसका विरोध होने से परमेश्वर का अशनायाद्यतीत मानना उचित नही तो ऐसा कहना भी ठीक नही है क्योकि प्रत्यक्षादि का उपाधि के आश्रय से होने वाले विशेष को विषयत्व करना होता है। "तुम (अन्तःकरण की वृत्तिरूप) दृष्टि के द्रष्टा को (घटादि के समान) नही देख सकते हो", "(अरी मैत्रेयी!) विज्ञाता को किससे जाने", "(हे गार्गी!) यह अक्षर बुद्धि का अविषय होने से स्वय अविज्ञात होता हुआ भी विज्ञानस्वरूप होने से दूसरो का विज्ञाता है" इत्यादि श्रुतियो से 'मैं सुखी हूँ" आदि विज्ञान आत्मा को विषय नही करता। तो फिर किसको

१ बृ०उ० ३-४-२। २ बृ०उ० ४-५-१५। ३ बृ०उ० ३-८-११। ४ इत्यादीत्यादिना "पराञ्चि खानि"। "अन्यदेवमद्विदितादि" ग्रहणम्। ५ विज्ञानमिति—सुख्यहमित्यादिविज्ञानमित्यर्थः। स्पष्टमात्मनो दृष्टिविषयत्वप्रतिषेधादिति शेषः। ६ प्रत्यक्षादेराभासत्वादिति—मिथ्याज्ञानजनकत्वेन मिथ्यात्वादित्यर्थः। ७ तेनेति--प्रत्यक्षादिना सहेत्यर्थः। ८ न विरोधोऽस्तीति। प्रत्यक्षागमयोर्भिन्नविषयत्वादित्यर्थः। ९ प्रत्यक्षस्य। १० तर्हि का गतिरिति--आत्मविषयत्वाभावे को विषय इत्यर्थः।

*प्रत्यक्षादेरिति। तथा च साभासा बुद्धिरेव सुखदुःखादिमती नात्मा आत्मनि तु तद्द्वारा दुःखित्वादिकल्पितमिति भावः। तथा च वार्तिकम्—"शरीरेन्द्रियसघात आत्मत्वेन गता धियम्। नित्यात्मज्योतिषा दीप्ता विशिषन्ति सुखादयः ॥५६३॥ दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत्। दुःखिनः साक्षिताऽयुक्ता साक्षिणो दुःखिता तथा ॥ नर्ते स्याद्विक्रिया दुःखी साक्षिता का विकारिणः। धीविक्रियासहस्राणा साक्ष्यतोऽहमविक्रियः ॥ सुखदुःखादिसबद्धा यथा दण्डेन दण्डिमम्। राधको वीक्षते बुद्धि साक्षी तद्वदसहत ॥५६०-६२॥" इति, सुखादिमती बुद्धिरेव नाऽऽत्मेत्युपपादयति—शरीरेति। देहादावात्मत्वेन स्थिता साभासा बुद्धि सुखादयो व्यावर्तयन्ति तद्बोद्धसुखादिविषयमध्यक्षमिति न चित ससारितत्पय। सुखादीना चेतनधर्मत्वप्रसिद्धेर्बुद्धिस्यत्वमयुक्तमिति चेन्नेत्याह—नित्येति। आत्मचैतन्यव्याप्तबुद्धिधर्मत्वादात्मधर्मत्वप्रसिद्धिरित्यर्थः ॥ बिम्बित्याभासद्वारा चैत ये दुःखित्वादि कल्प्यते साक्षादेव तत्र तत्कि न स्यादित्याशङ्क्याऽऽह—दुःखीति। दुःख्येव कश्चिद्दुःखिनः साक्षी स्यादित्यत आह—दुःखिन इति। तथेति-अयुक्तेति यावत् ॥ दुःखित्वसाक्षित्वयोरेकत्रायोगे हेतुमाह—नेति। परिणामित्व विना न दुःखितेत्यर्थः। परिणामित्वेऽपि साक्षित्वमाशङ्क्याऽऽह—साक्षितेति। तस्य जाड्यादसाक्षितेत्यर्थः। विकारिणोऽसाक्षित्वे फलितमाह—धीविक्रियेति। प्रत्यगात्मा निर्विकारो बुद्धितद्वृत्तिसाक्षीत्युक्तम् ॥ तदानो तस्य साक्ष्येण योगश्चेदसङ्गत्वक्षतिरयोगश्चेदसाक्षितत्याशङ्क्याऽऽह—सुखेति। राधक साधको द्रष्टेति यावत्। यथा द्रष्टा दण्डेन युक्त मेत्रमीक्षमाणो स्वय दण्डी भवति तथा सुखादिमती बुद्धिमसहत.। सन्पश्यन्साक्षी न सुखादिना युज्यतेऽतो वस्तुतोऽसङ्गस्य कल्पितमबन्धात्साक्षितेत्यर्थः ॥

तोऽहं दुःखितोऽहमित्येवमादि प्रत्यक्षविज्ञानम् । 'अयमहमिति विषयेण विषयिणः सामानाधिकरण्योपचारात्' "नान्यदतोऽस्ति द्रष्टृ" इत्यन्यात्मप्रतिषेधाच्च । देहावयवविशेष्यत्वाच्च सुखदुःखयोर्विषयधर्मत्वम् ।

"आत्मनस्तु कामाय" इत्यात्मार्थत्वश्रुतेरयुक्तमिति चेन्न । "यत्र वा अन्यदिव स्यादि"त्यविद्याविषयात्मार्थत्वाभ्युपगमात् । "तत्केन कं पश्येत्" "नेह नानाऽस्ति किंचन"

---

विषयमेव सुख्यहमित्यादि विज्ञानमिति योजना । आत्मनो दुःखित्वाभावे हेत्वन्तरमाह—अयमिति । अयं देहोऽहमिति दृश्येन द्रष्टुस्तादात्म्याध्यासदर्शनाद्दृश्यविशिष्टस्यैव प्रत्यक्षविषयत्वान्न केवलस्याऽऽत्मनो दुःखादिसंसारोऽस्तीत्यर्थः । किंचास्थूलादिविशेषणमक्षरं प्रक्रम्य तस्यैव प्रत्यगात्मत्वं दर्शयन्ती श्रुतिरात्मनः संसारित्वं वारयतीत्याह—नान्यदिति । किंच पादयोर्दुःखं शिरसि दुःखमिति देहावयवावच्छिन्नत्वेन तत्प्रतीतेस्तद्धर्मत्वनिश्चयान्नाऽऽत्मनि संसारित्वं प्रामाणिकमित्याह—देहेति ।

श्रुतिवशादात्मनः संसारित्वं शङ्कते—आत्मनस्त्विति । सुखं तावदात्माश्रयमात्मनस्तु कामायेति" सुखसाधनस्याऽऽत्मार्थत्वश्रुते"स्तत्तदविनाभूतं" दुःखमपि तत्रेत्यात्मन्यसंसारित्वमयुक्तमित्यर्थः । आविद्यकसंसारित्वानुवादेनाऽऽत्मनोऽनतिशयानन्दत्वप्रतिपादकमात्मनस्तु कामायेत्यादिवाक्यमिति मत्वाऽऽह—नेति । तदाविद्यकसंसारानुवादोऽत्र गमकमाह—यत्रेति । अनेन हि वाक्येनाविद्यावस्थायामेवाऽऽत्मार्थत्वं सुखादेरभ्युपगम्यते । अतो न तस्याऽऽत्मधर्मत्वमित्यर्थः । आत्मनि "संसारित्वस्या-

---

विषय करता है? "मैं सुखी हूं, मैं दुःखी हूं" इत्यादि प्रत्यक्षविज्ञान बुद्धि आदि उपाधि में होने वाले आत्मा के प्रतिबिम्ब को विषय करता है। क्योंकि "यह मैं हूं" इस वाक्य मे विषय के साथ विषयी का सामानाधिकरण्य-दर्शन होने से "इससे भिन्न कोई द्रष्टा नही है" इस श्रुति से असंसारी अक्षर आत्मा से अन्य का प्रतिषेध किया है। ('पैर मे पीडा है, सिर मे दर्द है' इत्यादि प्रतीति मे) देहावयव विशेष्यत्व होने से सुख-दुःख दृश्यधर्मत्व होने से आत्मा मे संसारित्व कल्पना प्रामाणिक नही है।

यदि कहो कि "आत्मा के लिए ही सभी प्रिय होते है" ऐसी आत्मार्थत्व प्रतिपादन करने वाली श्रुति होने से आत्मा मे संसारित्व की शंका होती है तो ऐसा मानना उचित नही। क्योंकि "जहाँ कोई अन्य सा होता है" इस श्रुति के अनुसार आविद्यक आत्मार्थता मानी जाती है, "(इसके विपरीत जहाँ

---

१ अयमिति इद भाष्य प्रकारान्तरेण व्याकृत वार्त्तिके । तथाहि— 'तथा दुःख्यहमित्यादौ प्रत्यक्षमुपचारत ॥ सामानाधिकरण्यस्य तथैवेहोपचारत । अयं दुःख्यहमस्मीति विषयेण तदीक्षणादिति" ॥५६६-५६७॥ भिन्नविषयसामानाधिकरण्यस्य तथैवेहोपचारत । ... हेत्वन्तरमाह-तथेति । हेत्वन्तरमेव स्पष्टयति—दुःखीति । यथा ब्राह्मणोऽहमित्याद्यध्यक्ष कल्पिततादात्म्यविषय तथा दुःख्यहमित्यादौ यत्प्रत्यक्ष तदपि मिथ्याज्ञानमेव उपचारशब्देन विषयस्य मिथ्यात्वोक्तेरित्यर्थ ॥ प्रकृताध्यक्षस्य मिथ्यात्व हेतु साधयति—सामानाधिकरण्यस्येति । ब्राह्मणोऽहमित्यैक्यस्य मिथ्यात्वात्तद्विषयकाध्यक्षस्य मिथ्याज्ञानत्ववद्दुःखिन्यात्मनि च यत्सामानाधिकरण्यमैक्यमध्यक्षविषयस्तस्योपचारतो मिथ्यात्वाद्विषयिणोऽपि तस्य मिथ्याज्ञानतेत्यर्थ । २ दर्शनात् । ३ बृ०उ० ३-८-११ । ४. असंसार्यक्षरादन्येत्यर्थ । ५ दृश्यधर्मत्वम् । ६ बृ० उ० २-४-५ । ७ बृ० उ० ४-३-३१ । ८ इति श्रुतेरित्यर्थ । ९ बृ० उ० २-४-१४ । १० बृ०उ० ४-४-१९ । ११ वाक्ये । १२. सुखस्यात्माश्रयत्वात् । १३ तदविनाभूतमिति—सुखाव्यभिचरितम् । पूर्वापरभावेन सुखसमानाधिकरणमिति यावत् । १४ आत्मनस्तु कामायेतिवाक्येनेति शेष ।

"तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादिना विद्याविषये तत्प्रतिषेधान्न नाऽऽत्मधर्मत्वम् ।

'तार्किक'समयविरोधादयुक्तमिति चेन्न । युक्त्याऽप्यात्मनो दुःखित्वानुपपत्तेः । 'न हि दुःखेन प्रत्यक्षविषयेणाऽऽत्मनो विशेष्यत्वं प्रत्यक्षाविषयत्वात् । आकाशस्य शब्दगुण-

---

प्रतिपाद्यत्वेऽपि गमकमाह—तत्केनेति । आत्मनोऽसंसारित्वे 'विद्वदनुभवमनुकूलयितुं चशब्दः ।

तर्कशास्त्रप्रामाण्यादात्मनः संसारित्वमिति शङ्कते—तार्किकेति । बुद्ध्यादिचतुर्दशगुणवानात्मेति तार्किकसमयस्तेन विरोधात्तस्यासंसारित्वमयुक्तं तर्काविरुद्धो हि सिद्धान्तो भवतीत्यर्थः । सर्वतर्काविरोधी वा कतिपयतर्काविरोधी वा सिद्धान्तः । नाऽऽद्य । तार्किकादिसिद्धान्तस्यापि 'मिथो वैविकतर्कैश्च विरोधादसिद्धिप्रसङ्गात् । द्वितीये तु श्रौततर्काविरोधादात्मासंसारित्वसिद्धान्तोऽपि सिध्येदित्यभिसंधायाऽऽह—न युक्त्याऽपीति । किंच दुःखादिरात्मधर्मो न भवति वेद्यत्वाद्रूपादिवदित्याह—न हीति । प्रत्यक्षाविषयत्वोक्त्या प्रतीचस्तद्विषयदुःखादिविशेष्यत्वमयुक्तं प्रत्यक्षाप्रत्यक्षयोः शब्दाकाशयोरिव दुःखात्मनोरपि गुणगुणित्वसंभवादिति शङ्कते—आकाशस्येति । यत्र धर्मधर्मिभावस्तत्रैकज्ञान-

---

पर इस विद्वान् की दृष्टि में सब आत्मा ही हो गया) वहाँ पर किससे किसको देखे?", "उस ब्रह्म में नाना कुछ भी नहीं है", "उस आत्मा में एकत्व देखने वाले को, क्या शोक और क्या मोह हो सकता है? अर्थात् नहीं (ये तो आत्मा का यथार्थ स्वरूप न जानने वालों को होते हैं)" इत्यादि श्रुतिवाक्यों से विद्यावस्था में उनका निषेध होने के कारण आत्मधर्मत्व होना असम्भव है।

(पूर्वपक्षी पुनः शंका करता है–) किन्तु तार्किकों के सिद्धान्त से विरोध होने के कारण (आत्मा का असंसारित्व) यह मानना ठीक नहीं है। (इसके समाधान में कहा जाता है–) ऐसा भी कहना ठीक नहीं। क्योंकि युक्ति से भी आत्मा में दुःखित्व होना असिद्ध है (पूर्व से पश्चिम, शीत से उष्ण का परस्पर विरोध होने से, इनमें जिस प्रकार विशेष्यविशेषणभाव मानना अयुक्त है, उसी प्रकार) प्रत्यक्ष के विषय दुःख से आत्मा विशेष्य नहीं हो सकता, क्योंकि आत्मा स्वयं प्रत्यक्ष का अविषय है। यदि आकाश के गुणवत्त्व के समान आत्मा में भी दुःखित्व माना, तो ऐसा मानना ठीक नहीं, क्योंकि दुःख

---

१ तार्किकेत्यादि—इच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपवत्, इच्छादयः पृथिव्याद्यनाश्रिता चेतनत्वसामानाधिकरण्येन प्रतीयमानत्वात् यन्नैवं तन्नैवं यथा रूपादि । तेषामेव च बहुलानर्थात्मतया संसारित्वादात्मनोऽसंसारित्वं तन्मते विरोधः स्यात् न च प्रामाणिकसमयविरोधे तत्त्वव्यवस्थेत्यर्थः । २ सिद्धान्तः । ३ न हीत्यादे—प्राक्प्रतीचो शीतोष्णादिवन्मिथो विरोधाद्विशेष्यविशेषणभावायोगादिति भावः । ४ विद्वदनुभवमिति—तदुक्तं वार्तिके "मम तावदिदं बुद्धौ भवद्भ्यो यन्न रोचते । प्रत्यक्प्रवणया दृष्ट्या संसारो नाऽऽत्मनीक्ष्यते" ॥५७२॥ यदनर्थात्मकं दुःखादि भवता स्वार्थं नेष्टं तदिदं विदुषा तावत्साभासाया बुद्धावनुभूयते तत्र तदात्मस्थमनुभवविरोधादित्यर्थः । ५ मिथ इति । ननु तर्कशास्त्राणामात्मनः संसारित्वे आत्मस्थत्वेनापि तदनुभवोऽस्तीति चेन्नेत्याह—प्रत्यगिति । विवादाभावात्तस्मिन्नंशे मानत्वात्तदुक्तास्वाधितयुक्त्या तत्संसारित्वसिद्धिस्तथाच तदसंसारित्वं युक्तिभयान्मुमुक्षुभिरुपगन्तुमशक्यमित्याशङ्क्य समाहितं वार्तिके—"न च तार्किकयुक्त्यापि प्रतीचोऽसंसारिता । यतोऽवगम्यते तस्माद्भिर्भीति सुखमास्यतामिति" ॥५७५॥ इच्छादीनां मनोधर्मतया पारिशेष्यासिद्धेस्तदीययुक्त्यापि प्रतीचः संसारित्वानवगमात्तदसंसारित्वं मुमुक्षुभिर्निर्भयैरभ्युपगन्तुं शक्यमित्यर्थः ॥

वत्त्ववदात्मनो दुःखित्वमिति चेन्न । एकप्रत्ययविषयत्वानुपपत्तेः[1] ।

न हि सुखग्राहकेण प्रत्यक्षप्रत्ययेन नित्यानुमेयस्याऽऽत्मनो विषयीकरणमुपपद्यते । तस्य च विषयीकरण आत्मन एकत्वाद्विषय्यभावप्रसङ्गः । एकस्यैव विषयविषयित्वं दीपवदिति चेन्न । युगपदसंभवादात्मन्यंशानुपपत्तेश्च[2] ।

---

गम्यत्वं दृष्टं यथा शुक्लो घट इति तद्व्यापक व्यावर्तमानं दुःखात्मनोर्धर्मधर्मित्वं व्यावर्तयति शब्दाकाशयोरपि गुणगुणिभावो नास्माकं संमतः शब्दतन्मात्रमाकाशमिति स्थितेरित्याशयेनाऽऽह—नैकेति ।

कथं तदनुपपत्तिस्तत्राऽऽह—न हीति । नित्यानुमेयस्येति जरत्तार्किकमतानुसारेण सांख्यसमयानुसारेण चोक्तम् । आधुनिकं तार्किकं प्रत्याह—तस्य चेति । सुखादिवदात्मनोऽपि प्रत्यक्षेण विषयीकरणे सत्येकस्मिन्देहे तदेवयसंमतेरात्मान्तरस्य तत्राप्रयोगादेकत्र भोक्तृद्वयानिष्टेः 'पुरुषान्तरस्यान्यं प्रत्यप्रत्यक्षत्वाद्द्रष्टृभावादात्मदृश्यत्वासिद्धिरित्यर्थः । दीपस्य स्वव्यवहारहेतुत्वेन विषयविषयित्ववदेकस्यैवाऽऽत्मनो द्रष्टृदृश्यत्वसिद्धेर्द्रष्टृभावो नास्तीति शङ्कते—एकस्यैवेति । आत्मनो विषयविषयित्वं कात्स्र्न्येनांशाभ्यां वा । आद्येऽपि युगपत्क्रमेण वा । नाऽऽद्य इत्याह—न युगपदिति । 'क्रियायां गुणत्वं कर्तृत्वं तत्र प्राधान्यं कर्मत्वमतो युगपदेकक्रियां प्रत्येकस्य साकल्येन गुणप्रधानत्वायोगान्नैवमित्यर्थः । न [5]द्वितीयः । एकभावेऽन्याभावादिति [6]मत्वा [7]कल्पान्तरं प्रत्याह—आत्मनीति । [8]एतेन प्रदीपदृष्टान्तोऽपि प्रतिनीतस्तस्यांशाभ्यां [9]तद्भावे प्रकृताननुकूलत्वात् ।

---

और आत्मा का एक ज्ञान का विषय होना सम्भव नहीं है ।

सुखग्राहक प्रत्यक्षविषयक ज्ञान के द्वारा (प्राचीन नैयायिक एवं साख्यमतानुसार) नित्यानुमेय आत्मा को विषय करना असम्भव है । यदि आत्मा मे विषयीकरण मानते है, तो आत्मा के एक होने के कारण उसमे विषयी के अभाव का प्रसङ्ग आ जायगा । यदि कहो कि दीप के समान एक का ही विषय और विषयी होना सम्भव है, तो यह बात भी यहाँ नहीं घटती । क्योकि एक साथ ही होना असम्भव है और आत्मा मे अंश होना असम्भव है, इस कारण प्रदीप दृष्टान्त अननुकूल है ।

---

१ दुःखात्मनोरिति शेषः । २ आत्मनो द्रव्यरूपेण विषयत्वं बोधरूपेण च विषयित्वमिति ( उभयरूपात्मवादिभाट्टमत ) चकारनिरास्यम् । ३ शरीरान्तर्वर्त्यात्मन । ४. मीमांसकसमयोऽयं—क्रियाया कर्तुर्गौणतयाऽन्वय कर्मणश्च प्राधान्येन तथा च घट पश्यतीत्यादे एककर्तृकवर्तमानदर्शनकर्म घट इति तन्मतेऽर्थ । ५ आद्ये द्वितीय । ६ मनसैव प्रत्याख्यायेत्यर्थः । ७ कल्पान्तरमिति—अंशाभ्यामेकस्याप्यात्मनो विषयविषयित्वपक्षमित्यर्थ । ८ एतेनेति—एकस्य विषयविषयित्वनिरसनेन । प्रतीचो निरंशत्वकथनेनेति वार्थ । प्रतिनीत इति—विघटितो विषम इति वार्थ । तथा च वार्तिके— "न व्यनक्ति प्रदीपोऽपि स्वतो भास्वररूपत । विषयत्वाच्च पुंबुद्धेर्न दीपस्योभयात्मता ॥ प्रतीचश्च निरंशत्वान्न दीपेन सधर्मतेति" ॥५८३-८४॥ यथा दृष्टान्त प्रतिपत्तेर्विकल्पासहत्वमित्याशङ्क्य दृष्टान्तं विघटयति—नेति । न हि दीपो दीप प्रकाशयति प्रकाशैकरसत्वादतो न तस्यैकरसस्यैव विषयविषयितेत्यर्थ । अस्तु तर्हि तस्य स्वप्रकाशता त्वदिष्टाऽऽत्मवन्नेत्याह—विषयत्वादिति । पुंबुद्धि स्वरूपस्फुरण तद्व्याप्यत्वाद्दीपस्य न स्वप्रकाशतेत्यर्थ । दृष्टान्ताभाव निगमयति—नेति ॥ किंच प्रदीपस्य जडत्वान्न तेनाऽजडप्रकाशस्याऽऽत्मन समतेत्याह—प्रतीचश्चेति । ९ त्वदीत्या विषयविषयित्वेऽभ्युपगम्यमाने सति ।

एतेन विज्ञानस्य ग्राह्यग्राहकत्वं प्रत्युक्तम् । प्रत्यक्षानुमानविषययोश्च दुःखात्मनोर्गुणगुणित्वे नानुमानम् । दुःखस्य नित्यमेव प्रत्यक्षविषयत्वाद्रूपादिसामानाधिकरण्याच्च । मनःसंयोगजत्वेऽप्यात्मनि दुःखस्य सावयवत्वविक्रियावत्त्वानित्यत्वप्रसङ्गात् । न ह्यविकृत्य संयोगि द्रव्यं गुणः कश्चिदुपयन्नपयन्वा दृष्टः क्वचित् । न च निरवयवं विक्रियमाणं दृष्टं क्वचिदनित्यगुणाश्रयं वा नित्यम् ।

ननु विज्ञानवादिनो युगपदेकस्य विज्ञानस्य साकल्येन ग्राह्यग्राहकत्वमुपयन्ति तथा त्वदात्मनोऽपि स्यात्तत्राऽऽह—एतेनेति । एकस्योभयत्वनिरासेनेत्यर्थः । मा भूत्प्रत्यक्षमागमिक पारिभाषिकं वाऽऽत्मनः संसारित्वम् । आनुमानिकं तु भविष्यति दुःखादि क्वचिदाश्रितं गुणत्वाद्रूपादिवदित्याश्रये सिद्धे परिशेषादात्मनस्तदाश्रयत्वादित्याशङ्क्याऽऽह—प्रत्यक्षेति । न हि मिथोविरुद्धयोर्गुणगुणित्वमनुमेयं दुःखादेश्च साभासबुद्धिस्थत्वात्पारिशेष्यासिद्धिरित्यर्थः । साभासान्तःकरणनिष्ठं दुःखादीत्यत्र प्रमाणाभावात्कथं सिद्धसाधनत्वमित्याशङ्क्य दुःख्यहमित्यादिप्रत्यक्षस्य तत्र प्रमाणत्वादुक्तानुमानस्य सिद्धसाध्यतया परिशेषासिद्धिरित्याह—दुःखस्येति । यत्र रूपादिमति देहे दाहच्छेदादि दृष्टं तत्रैव तत्कृतदुःखाद्युपलम्भान्नाऽऽत्मनस्तद्वत्त्वमिति हेत्वन्तरमाह—रूपादीति ।

यस्वात्ममनःसंयोगादात्मनि बुद्ध्यादयो नव वैशेषिका गुणा भवन्तीति तद्दूषयति—मनःसंयोगजत्वेऽपीति । दुःखस्याऽऽत्मनि मनःसंयोगजत्वेऽभ्युपगतेऽपि मनोवदात्मनः संयोगित्वात्सावयवत्वादिप्रसङ्गादात्मत्वमेव न स्यादित्यर्थः । तत्र संयोगित्वेन सक्रियत्वं साधयति—न हीति । संप्रति सक्रियत्वेन सावयवत्वं प्रतिपादयति—न चेति । यद्वा दुःखाद्यात्मनो विक्रियेति कैश्चिदिष्टत्वात्तस्य सक्रियत्वमविरुद्धमित्याशङ्क्याऽऽह—न चेति । आत्मा न परिणामी निरवयवत्वान्नभोवदिति भावः । किंचाऽऽत्मा न गुणी नित्यत्वात्सामान्यवदित्याह—अनित्येति । नित्यं पश्याम इति शेषः । वाशब्दो नञनुकर्षणार्थः ।

इससे विज्ञानवादियो के युगपद् एक विज्ञान के ग्राह्य-ग्राहक उभयरूप होने का खण्डन हो जाता है । प्रत्यक्ष प्रमाण के विषय दुःख और अनुमान प्रमाण के विषय आत्मा के गुण और गुणित्व मे अनुमान प्रमाण भी नही हो सकता (विभिन्न ज्ञान विषयो का वैसा होना असभव है) । क्योकि दुःख तो नित्य ही प्रत्यक्ष का विषय है और रूपादिसामानाधिकरण्य है (इसलिए रूप के समान वेद्यत्व होने से दुःख आत्मधर्मी नही है) ।

दुःख को आत्मा मे मनःसंयोगजन्य मानने पर आत्मा मे सावयवत्व, विकारित्व और अनित्यत्व का प्रसङ्ग होने लगेगा । क्योकि संयोगी द्रव्य को विकृत किए बिना कोई गुण कही उत्पन्न या

१ विभिन्नज्ञानविषययोस्तथात्वाऽसभवादिति भाव । २ दुःख नात्मधर्मो वेद्यत्वाद्रूपवदिति पक्षार्थ । ३ न हीति—यत्संयोगि तत्सावयव सक्रियादि च घटादिदृष्ट आत्मनोऽपि संयोगित्वे त स्यातामिति भाव । ४ उदयन् । ५ विनश्यन् । ६ विज्ञानवादिपरिभाषासिद्धम् । ७ साभासबुद्धेरेवाऽहमर्थत्वादित्यर्थ । ८ प्रयोज्यप्रयोजकयो सामानाधिकरण्यनियमात् । ९ संयोगित्वादिति—संयोगित्वाद्घटादिवत्सावयवत्व ततो विक्रियावत्त्वादनित्यत्वानात्मत्वादिप्रसक्तिरित्यर्थ । १० सावयवत्वादिमध्य । ११ भाट्टै । १२ सिद्धान्ते सत्तैव सामान्य सा च ब्रह्मैव । १३ आश्रयशब्द नियतलिङ्गमनुरुध्याह—पश्याम इति शेष इति । १४ तथा च वाशब्दस्य दृष्टमित्यन्वयार्थत्वानुपपत्तिमभिप्रेत्याह—वाशब्द इति ।

न ह्याऽऽकाश आगमवादिभिर्नित्यतयाऽवगम्यते । न चान्यो[1] दृष्टान्तोऽस्ति । विक्रियमाणमपि तत्प्रत्ययानिवृत्तेर्नित्यमेवेति[2] चेन्न । द्रव्यस्यावयवान्यथात्वव्यतिरेकेण विक्रियानुपपत्तेः ।

सावयवत्वेऽपि नित्यत्वमिति चेन्न । सावयवस्यावयवसंयोगपूर्वकत्वे सति[3] विभागो-

आकाशे व्यभिचारमाशङ्क्याऽऽह—न चेति । आकाशस्य नित्यत्वं चेत् 'आत्मन आकाशः संभूतः' इत्यादिश्रुतिविरोधः स्यादिति सूचयितुमागमवादिभिरित्युक्तम् । परमाण्वादौ व्यभिचारमाशङ्क्याऽऽह—न चान्य इति । न तावदणवः सन्ति व्यणुकेतरसत्त्वे मानाभावाद्दिशश्चा'ऽऽकाशेऽन्तर्भवन्ति कालस्तु सर्वे निमेषा जज्ञिर इत्यादिश्रुतेरुत्पत्तिमान्मनोऽप्यन्नमयं श्रुतिप्रसिद्धमतो न क्वचिद्व्यभिचार इति भावः । यस्मिन्विक्रियमाणे तदेवेदमिति बुद्धिर्न विहन्यते 'तदपि 'नित्यमिति न्यायेन परिणामवादी शङ्कते—विक्रियमाणमिति । तत्प्रत्ययस्तदेवेदमिति[1] प्रत्ययः । विक्रियां वदता द्रव्यस्यावयवान्यथात्वं वाच्यं तदेव तस्यानित्यत्व'मत्यन्ताभावस्याप्रामाणिकत्वेन दुर्वचत्वादिति परिहरति—न द्रव्यस्येति ।

आत्मनः सक्रियत्वं सावयवत्वं 'चाऽस्तु तथाऽपि नानित्यत्वमिति 'स्याद्वादी शङ्कते—सावयवत्वेऽपीति । यत्सावयवं तदवयवसंयोगकृतं यथा पटादि तथा सति संयोगस्य 'विभागावसानत्वादवयवविभागे द्रव्यनाशोऽवश्यंभावीति दूषयति—न सावयवस्येति । यत्सावयव तदवयवसंयोगपूर्वकमिति न

विनष्ट होते हुए नही देखा जाता। निरवयव वस्तु को विकृत होते और न ही वही नित्य वस्तु को अनित्य गुणो का आश्रय होते देखा जाता है।

आगमवादियो ने आकाश को तो अनित्य माना है। सामान्य के अतिरिक्त कोई दूसरा दृष्टान्त भी नही है। (जिसके विकृत होने पर यह वही है ऐसी बुद्धि विनष्ट नही होती, वह भी नित्य है; इस न्याय से अब परिणामवादी शङ्का करता है) विकृत होने पर भी तद्बुद्धि निवृत्त न होने से वह नित्य ही है, ऐसा मानें तो क्या हानि है? (शङ्का परिहार करते हैं) ऐसा कहना ठीक नही है। क्योकि द्रव्य पदार्थ के अवयवो मे अन्यथारूपत्व (अनित्यत्व) लाये बिना विकार होना असम्भव नही है।

(अब स्याद्वादी शङ्का प्रस्तुत करते हैं) यदि कहो कि वह सावयव भी है और नित्य भी है तो ऐसा भी मानना उचित नही है। क्योकि अवयवसयोगपूर्वक उत्पन्न सावयव द्रव्य के अवयवो का सयोगनाश होना सभव है। यदि कहो वज्रादि मे ऐसा नही देखा जाता तो ऐसा मानना भी ठीक नही, क्योकि

१ सामान्यातिरिक्त । २ विक्रियाऽनुपपत्तेरिति । अवयवान्यथात्वरूपमनित्यत्व तु प्रतीचो निरवयवत्वादसभवीति भाव । ३ अनन्तावाशप्रदेशत्वाद्दिशाम् । ४ सैवेय गङ्गा सैवेय दीपकलिका इत्यादि । ५ परिणामिनित्यम् न तु कूटस्थनित्यम् तत् । ६ एवकारव्यावर्त्यमाह—अत्यन्ताभावस्यति । ननु शून्यवादिभिरवयवाऽन्यथात्वव्यतिरेकेणानित्यत्वशब्दार्थोऽत्यन्ताभाव (अत्यन्ताभावप्रतियोगित्वम्) अभ्युपेयत स किमिति त्वया नेष्यत इत्यत आह—अप्रमाणिकत्वेनेति । तथाहि समानसिद्धो न वा आद्ये घटादिवत्सत्त्वापत्त्याऽभावत्वव्याघातो द्वितीये स्वप्रकाशो न वा (साधकमानान्तराभावे तेन स्वयमेव सेध्यम् सिद्धिश्चेदिष्टेति भाव ) न चेत् तदसत्त्व सर्वसत्त्वापत्तिरिति सर्वशून्यवादिनामिष्टो योऽभावरूपोऽयं सोऽपि सन्नेव स्यात् तस्य स्वप्रकाशत्व तु वक्तुमशक्य सवित्स्वरूपव्यतिरेकेण लौकिक वैदिक वा न किंचिदपि स्वप्रकाश प्रामाणिकैर्दृष्टमतोऽत्यन्ताभावस्य स्वप्रकाशत्वे सविद्भेद एव स्यादिति सक्षेप ॥ ७ चार्वाको वाकार. । ८ जैन । ९ अवश्यभाविविभागवत्त्वात् ।

पपत्तेः । वज्रादिष्वदर्शनान्नेति चेन्न । अनुमेयत्वात्संयोगपूर्वत्वस्य तस्मान्नाऽऽत्मनो दुःखाद्यनित्यगुणाश्रयत्वोपपत्तिः ।

परस्यादुःखित्वेऽन्यस्य च दुःखिनोऽभावे दुःखोपशमनाय शास्त्रारम्भानर्थक्यमिति चेन्न । अविद्याध्यारोपितदुःखित्वभ्रमापोहार्थत्वात् । *आत्मनि प्रकृतसंख्यापूरण-

---

व्याप्तिः । सावयवेष्वेव वज्रादिष्ववयवसंयोगपूर्वकत्वे प्रमाणाभावादिति शङ्कते—वज्रादिष्विति । विमतमवयवसंयोगपूर्वकं सावयवत्वात्पटवदित्यनुमानेन परिहरति—नानुमेयत्वादिति । आत्मनो मनःसंयोगजन्यदुःखादिगुणवत्त्वे सावयवत्वसक्रियत्वानित्यत्वादिप्रसङ्गं प्रतिपाद्य प्रकृतमुपसंहरति—तस्मादिति ।

आत्मनोऽनर्थध्वंसार्थशास्त्रारम्भान्यथानुपपत्त्या संसारितेत्यर्थापत्त्या शङ्कते—परस्येति । अविद्याविद्यमानमात्मस्थमनर्थभ्रमं निराकर्तुं तदारम्भः संभवतीत्यन्यथोपपत्त्या समाधत्ते-नाविद्येति । परस्यैवाविद्याकृतसंसारित्वभ्रान्तिध्वंसार्थं शास्त्रमित्येतद्दृष्टान्तेन स्पष्टयति—आत्मनीति । यत्तु

---

वहाँ अवयवसंयोग पूर्व में हुआ है—ऐसा अनुमान किया जाता है। इसलिए आत्मा के असंसारित्व होने के कारण उसमें अनित्य गुणों का आश्रय होना असंभव है।

(इस पर शङ्का होती है—) यदि ईश्वर दुःखी नहीं है, (जीवात्मा की दुःखनिवृत्ति की लिए ही शास्त्र आरम्भ करना चाहिए) और न ही दूसरा कोई दुःखी है, तो दुःख की निवृत्ति के लिए शास्त्र आरम्भ की व्यर्थता सिद्ध होती है। (शङ्का का समाधान किया जाता है—) ऐसा कहना ठीक नहीं। आत्मा में दशमत्व संख्या की अपूरणतारूप भ्रमनिवृत्ति के समान शास्त्र का आरम्भ अविद्या

---

१. तस्मादिति—यत सावयवस्यानित्यत्वादिदुर्वारम् अतोऽवयवकल्पनाऽयोगादात्मनो मनःसंयोगोऽनुपपत्तेस्तस्मिन् दुःखाद्युत्पत्तिहेत्वभावादसंसारित्वं तस्मात् आत्मनोऽसंसारित्वादिति यावत् । २ जीवात्मनो दुःखनिवृत्त्यर्थं शास्त्रमारभ्यमित्याशङ्क्य नान्यदतोऽस्ति द्रष्टेत्यादिश्रुतिमनुसरन्नाह—अन्यस्येति । ३ बुद्धिगतदुःखनिवृत्त्यर्थशा-स्त्रारम्भोऽयुक्तस्तस्या अचैतन्यादिति चार्थः । ४ शास्त्रारम्भस्येति शेषः । ५ दशमे । ६ आत्मनीत्यादि । यथा दशमस्त्वमसीत्याप्तवाक्यं दशमेऽदशमत्वभ्रमनिवृत्त्यर्थमेवमसंसारिणि परस्मिन् संसारित्वभ्रमनिवृत्त्यर्थं शास्त्र-मित्यर्थः । ७ दशमत्वसंख्या । ८ अपूरणेतिच्छेदः । ९ पटवदिति । ननु सावयवत्वेऽप्यवयवसंयोगपूर्वक-त्वाभावे किं बाधकमिति चेत् सावयवत्वानुपपत्तिरेवेति गृहाण । १० आत्माऽसंसारित्वम् । ११ ■ तथापि वास्तवं दुःखमुपेत्य तद्ध्वंसार्थं शास्त्रमिति मत्वाह—अविद्येति । वास्तवस्याऽनिवर्त्यत्वादिति भावः ।

---

*आत्मनि प्रकृतसंख्याऽपूरणभ्रमापोहवदित्यादि । अत्र वार्तिकानि पञ्च । तथाहि — 'नवसंख्यमात्रधी दशमो विभ्रमाद्यया । न वेत्ति दशमोऽस्मीति स्वीक्षमाणोऽपि तान्नव ॥ निःशेषानात्मदृक्तद्वदनिर्ज्ञातात्मतत्त्वकः । न वेत्त्यैकात्म्यमस्मीति वीक्षमाणोऽप्यनात्मनः ॥ दशमोऽसीति वाक्योत्थसम्यग्ज्ञानानलार्चिषा । प्लुष्ट्वाऽज्ञं दशमाज्ञानं दशमोऽस्मीति वीक्षते ॥ यथा तत्त्वमसीत्यादिवाक्योत्थज्ञानवह्निना । प्लुष्ट्वेहाऽज्ञमतमःतज्जं तथैकात्म्यं प्रपद्यते ॥ प्रत्यग्ज्ञानहेतुत्वशास्त्राचार्यादिसाधनं । तद्विरुद्धमर्थैकात्म्यं प्रत्यपद्यत मायया' ॥६००-६०४॥ परस्यैवाविद्याकृतसंसारित्वभ्रान्तिध्वंसार्थं शास्त्रमित्येतद्दृष्टान्तेन साधयन्नादौ तस्याविद्यावत्त्वे दृष्टान्तमाह—नवेति । वस्तुतो दशमो माणवको नवसंख्याकानेव माणवकानुपलभमानस्तद्दर्शनापहृतदशमदृष्टिर्नष्टोऽभावमिति भ्रान्त्या स्वस्य दशमत्वं न पश्यतीत्यर्थः । दशमत्वधीप्राप्तिमाह—स्वीक्षेति । स्वातिरिक्तानपश्यन्स्वज्ञानं प्राप्तमपि

भ्रमापोहवत्कल्पितदुःख्यात्माभ्युपगमाच्च ।

जलसूर्यादिप्रतिबिम्बवदात्मप्रवेशश्च प्रतिबिम्बवद्व्याकृते कार्ये उपलभ्यत्वम् । ※'प्रागुत्पत्तेरनुपलब्ध आत्मा पश्चात्कार्ये च सृष्टे व्याकृते बुद्धेरन्तरुपलभ्यमानः सूर्यादि-

परस्यादुःखित्वमन्यस्य च दुःखिनोऽसत्त्वं तत्राऽऽह—कल्पितेति । न तावत्परस्मादन्यो दुःखी 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेः । स पुनरनाद्यनिर्वाच्याज्ञानसंबन्धात्तज्जन्यैर्बुद्ध्यादिभिरध्यासमापन्नः संसरति । 'तथा च 'कल्पिताकारद्वारा दुःखिनः परस्याऽऽत्मनोऽङ्गीकारान्नार्थापत्तेरुत्थानमित्यर्थः ।

परस्य प्रवेशे प्राप्तां दोषपरम्परां पराकृत्य तत्प्रवेशस्वरूपं निरूपयति—जलेति । यथा जले सूर्यादेः प्रतिबिम्बलक्षणः प्रवेशो दृश्यते तथाऽऽत्मनोऽपि सृष्टे कार्ये 'काल्पनिकः प्रवेश इत्यर्थः । अनवच्छिन्नात्मचिदात्मनोर्वस्त्वन्तरेण संनिकर्षासंभवान्न प्रतिबिम्बाख्यप्रवेशः संभवतीत्याशङ्क्य वस्त्वन्तरकल्पनया कल्पितसंनिकर्षाद्यादाय प्रतिबिम्बपक्षं साधयति—आत्मेति । 'तदेव प्रपञ्चयति—प्रागुत्पत्ते-रित्यादिना ।

से अध्यारोपित दुःखित्वरूप भ्रम की निवृत्ति के लिए है तथा कल्पित (बुद्ध्यादि में स्वप्रतिबिम्ब चिदाभासाख्य आकार द्वारा) दुःखी आत्मा स्वीकार भी किया गया है।

जल में पड़े हुए सूर्यादि के प्रतिबिम्ब के समान व्याकृत कार्य में आत्म-प्रतिबिम्ब के समान उपलब्ध होना आत्मा का उस कार्य में प्रवेश है। जगत् की उत्पत्ति के पूर्व अनुपलब्ध आत्मा व्याकृत कार्य की सृष्टि के पश्चात् बुद्धि के अन्दर उपलब्ध होने से जलादि में सूर्यादि के प्रतिबिम्ब के

१ जगदुत्पत्तेः पूर्वम् । २ तथाचेति—परस्मादन्यस्य दुःखिनोऽभावे चेत्यर्थः । ३ कल्पिताकारद्वारेति । कल्पितबुद्ध्यादिस्वरूपद्वारा । यद्वा कल्पितेषु बुद्ध्यादिष्वाकारः स्वप्रतिबिम्बश्चिदाभासाख्यस्तद्द्वारा । यद्वा—कल्पितो यः स्वीयाकारश्चिदाभासाख्यस्तद्द्वारेत्यर्थः । ४. काल्पनिक इति—शास्त्रादिवत् प्रवेशस्यापि कल्पितत्वाच्च तमाश्रित्य काचिदाशङ्केति भावः । तथा च वार्तिके—"शास्त्राचार्यादयो यद्वन्मोहोत्थत्वान्न वस्तुतः । प्रवेशोऽप्यस्य तादृक् स्यादैकात्म्यप्रतिपत्तये ॥ व्याकृताव्याकृतावस्थे जगतोऽस्य स्वभावतः । अनूद्य लोकतो दृष्टे तथाऽऽत्मा प्रवोच्यते' ॥६०५-६०६॥ ननु प्रकृतश्रुतिषु व्याकृताव्याकृते जगदुच्यते न स्वैक्य प्रतिपाद्यते तत्कथं तत्प्रतिपत्त्यर्थं प्रवेशकल्पनेत्याशङ्क्याह—व्याकृतेति । लोकतः—लोके । ५ संग्रहेणोक्तमुपलभ्यत्वम् ।

न लभतेऽज्ञानसामर्थ्यादित्यर्थः ॥ दार्ष्टान्तिकमाह—नि दोषेति । उक्तदृष्टान्तानुसारेणानिर्ज्ञातात्मयाथात्म्यो मुमुक्षुः सर्वानात्मद्रष्टा स्वातिरिक्तानहंकारादीन्साक्षात्कुर्वन्नपि ब्रह्माऽऽत्मत्वमस्मीत्यनेन प्रकारेण न वेत्तीत्यन्वयः ॥ परस्याविद्यां दृष्टान्तेनोक्त्वा विद्यया तद्ध्वंसे दृष्टान्तमाह—दशम इति । आप्तवाक्योत्थसम्यग्ज्ञानाग्निना स्वकीयदशमत्वाज्ञानं दग्ध्वा दशमोऽस्मीति दशमत्वमात्मनोऽनुभवन्माणवको यथा निर्वृणोतीत्यर्थः ॥ दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति—तत्त्वमिति । इह जीवदवस्थायामेव ॥ उक्तमर्थं सोपस्कारमुपसंहरति—प्रत्ययीति । आदिपदेन ब्रह्मविद्याहेतवोऽनुक्ता सर्वे गृह्यन्ते । अज्ञानकृतशास्त्राचार्यादिद्वारोत्पन्नया मायया ब्रह्मविद्यया तत्त्वार्थविरुद्धमैक्यं यदा पुमान्प्रतिपन्नवांस्तदैव तस्य सर्वानर्थध्वस्तिरित्यर्थः ॥

※प्रागुत्पत्तेरनुपलब्ध इत्यादि । अत्र वार्तिकद्वयमस्ति— "निर्धूताशेषमायात्वात्तद्धेतुरविभागवान् । अनन्यसाक्षिकप्रत्यङ्ङासीन्नामादिजन्मतः ॥ द्रष्ट्रादिरूपतस्तावद्व्यतिरेकोऽभवत्पुरा । नामादिजन्मनि द्रष्टेत्यादिरूपान्वयोऽप्यभूदिति" ॥ ६११-१२ ॥ प्रतिबिम्बस्थानीयाज्जीवाद्ब्रह्मणो बिम्बस्थानीयस्याभेदं साधयति — निर्धूतेति ।

प्रतिबिम्बवज्जलादौ कार्यं सृष्ट्वा प्रविष्ट इव लक्ष्यमाणो निर्दिश्यते "स एष इह प्रविष्टः" "तत्सृष्ट्वा तदेवानुप्राविशत्" "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इत्येवमादिभिः।

न तु सर्वगतस्य निरवयवस्य दिग्देशकालान्तरापक्रमणप्राप्तिलक्षणः प्रवेशः कदाचिदप्युपपद्यते । न च परादात्मनोऽन्योऽस्ति "नान्यदतोऽस्ति द्रष्टृ" "नान्यदतोऽस्ति श्रोतृ" इत्यादिश्रुतेरित्यवोचाम । उपलब्ध्यर्थत्वाच्च सृष्टिप्रवेशस्थित्यप्ययवाक्यानाम् । उपलब्धेः पुरुषार्थत्वश्रवणात् । "आत्मानमेवावेत्" "तस्मात्तत्सर्वमभवत्" "ब्रह्मविदाप्नोति

स्वाभिप्रेतं प्रवेशं प्रतिपाद्य परेष्टं पराचष्टे—न त्विति । कुतश्चिद्दिशो देशात्कालाच्चापक्रमणेन दिगन्तरे देशान्तरे कालान्तरे च प्राप्तिलक्षण इति यावत् । यत्तु परस्मादन्यस्य प्रवेष्टृत्वमिति तत्राऽऽह—न चेति । अथेदं प्रवेशादि वस्तुतो विद्यमानमस्तु किमित्यविद्यं कल्प्यते तत्राऽऽह—उपलब्धीति । आत्मज्ञानार्थत्वेन प्रवेशादीनां कल्पितत्वात्तद्वाक्यानां न स्वार्थे पर्यवसानमित्यर्थः । फल-

समान कार्य को रचकर उसमे प्रविष्ट हुआ सा लक्षित होता है–) ऐसा निर्देश किया जाता है। "वह व्याकर्ता पुरुष इस वर्तमान देह मे (नख से शिखा पर्यन्त) प्रवेश किए हुए है।", "उन शरीरो को रचकर वह स्रष्टा उनमे ही प्रविष्टहो गया", "वह सृष्टिकर्ता ईश्वर इस मूर्धा को ही विदीर्ण कर इस मार्ग से ही इस सघात मे प्रविष्ट हो गया।", "उस इस (सत् नामवाली तेज अप् और योनिरूपा) देवता ने ईक्षण किया। मैं इस जीवात्मरूप से इन तीनो देवताओ मे अनुप्रविष्ट हो नाम और रूपो की अभिव्यक्ति करू।" इत्यादि श्रुतियाँ इसमे प्रमाण हैं।

सर्वगत और निरवयव आत्मा का दिशा, देश और काल से अपक्रमण और पुन. प्राप्त होना रूप प्रवेश असम्भव है। (अखिल परिच्छेदशून्य और परिपूर्ण ईश्वर का कार्य मे प्रवेश बिल मे सर्प के समान वास्तविक नही है)। "हे गार्गी! इस अक्षर से भिन्न कोई द्रष्टा नही, इस अक्षर से भिन्न कोई श्रोता नही" इत्यादि श्रुतिवाक्यो से सिद्ध होता है कि परमात्मा से अन्य कोई नही है जो प्रवेष्टा

१ उपदिश्यते। २ कदाचिदिति—न हि परिपूर्णस्य पराकृताखिलपरिच्छेदस्य बिले सर्पवत् कार्ये प्रवेशो वास्त-
वोऽस्तीति भाव । ३ अस्तीति य प्रविशेदिति शेष । ४ बृ०उ० ३-८ ११ । ५ श्रवणादिति-सृष्ट्यादि-
श्रुतीना स्वार्थे विफलत्वेनापर्यवसानात्तत्स्वदृष्टेश्च फलवत्स्वश्रवणात्फलवत्संनिधावफलं तदङ्गमिति न्यायेन पुनस्तासां तादर्थ्य-
मिति भाव.। ६ आत्मवदनात्। ७ यत्परः शब्द स शब्दार्थ इति न्यायात्। ८ तात्पर्यम्।

तस्य नानात्वस्य हतुर्धर्मिग्रहादि । निर्धूत निरस्तमशेष निखिल नानात्व तद्धेतुश्च यत्र स तथा। सहना केवलभेदस्याभावेऽपि अभेदसहितस्य तस्य सत्त्वमाशङ्क्याऽऽह—अविभागवानिति। प्रकाश्यप्रकाशकत्वेन भेदमाशङ्क्याऽऽह—अननेति। आत्मनात्मत्वेन भेद शङ्कित्वाऽऽह—प्रत्यङ्ङिति । द्रष्टृदृश्यादिभावन तमाशङ्क्याऽऽह—नामादीति। जगत्सर्गात्पूर्वं द्रष्ट्रादिरूपतस्तस्य व्यतिरेकोऽसत्त्वमतो निर्विशेष प्रत्यङ्मात्र तावत्प्रागवस्थायामासीदित्यर्थं ॥
द्रष्ट्रादेस्तर्हि प्रतीचोऽर्थान्तरत्वान्नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतिविरोधोऽन्यथाप्रावरणे द्रष्ट्रादिव्यतिरेकासिद्धि-
रात्मभावे तदभिन्नद्रष्ट्रादेरपि भावादित्याशङ्क्याऽऽह—नामादीति । जगत्सर्गे बुद्धिस्थप्रतिबिम्बद्वारा चक्षुरादिकरणदर्शनादिशब्दितरूपाद्याकारधीवृत्तीरनुभवन्नात्मैव द्रष्टा श्रोतेत्यादिदशामापिद्यतीत्यर्थः ।

परम्" "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" "आचार्यवान्पुरुषो वेद" "तस्य तावदेव चिरम्" इत्यादिश्रुतिभ्यः । "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" "तद्धचग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः" इत्यादिस्मृतिभ्यश्च । भेददर्शनापवादाच्च सृष्ट्यादिवाक्यानामात्मैकत्वदर्शनार्थपरत्वोपपत्तिः । तस्मात्कार्यस्थस्योपलभ्यत्वमेव प्रवेश इत्युपचर्यते ।

आ नखाग्रेभ्यो नखाग्रमर्यादमात्मनश्चैतन्यमुपलभ्यते । तत्र कथमिव प्रविष्ट इत्याह-- यथा लोके क्षुरधाने क्षुरो धीयतेऽस्मिन्निति क्षुरधानं तस्मिन्नापितोपस्कराधाने

---

वत्संनिधायफलं तदङ्गमिति न्यायमाश्रित्योक्तमेव प्रपञ्चयति—उपलब्धेरित्यादिना । तत शब्दो भक्तियोगपरामर्शी । तदित्यात्मज्ञानमुच्यते । तस्याग्र्यत्वं साधयति—प्राप्यते हीति । सृष्ट्यादिवाक्यानामैक्यज्ञानार्थत्वे हेत्वन्तरमाह—भेदेति । कल्पितं प्रवेशं प्रतिपादितमुपसंहरति—तस्मादिति ।

का पुनरस्य प्रवेशस्य मर्यादेत्याशङ्क्याऽऽह—आ नखाग्रेभ्य इति । सम्भवति मर्यादान्तरे निर्मितं प्रवेशस्येयमेव मर्यादेत्याशङ्क्याऽऽह—नखाग्रेति । दृष्टान्तद्वयमाकाङ्क्षापूर्वकमुत्थापयति—तत्रेति । प्रवेशाधारो देहादि मस्तम्यर्थः । प्रथमोदाहरणप्रतीकोपादानम्—यथेति । तद्व्याचष्टे—लोक इति ।

---

हुआ हो—ऐसा हम पहले कह आए हैं। एवं सृष्टि, प्रवेश, स्थिति और लय का प्रतिपादन करने वाले श्रुतिवाक्य आत्मज्ञानके लिए हैं, क्योंकि (सृष्टि आदि श्रुतियों का स्वार्थ में पर्यवसान न होने के कारण) आत्मज्ञान ही परम पुरुषार्थ है—ऐसा सुना गया है। "उसने अपने को ही जाना", "(मैं ब्रह्म हूँ) इसी विज्ञान से वह सर्वरूप हो गया", ब्रह्मज्ञानी परतत्त्व को प्राप्त कर लेता है", "लोक में जो कोई उस परब्रह्म को जान लेता है, वह ब्रह्म ही हो जाता है", "आचार्यवान् पुरुष ही सत्य को जानता है", "उस तत्त्ववेत्ता के लिए विदेहकैवल्य प्राप्त करने में उतनी ही देर है, (जब तक कि वह प्रारब्ध कर्म को भोगकर वर्तमान देह के बन्धन से मुक्त नहीं हो जाता।) इत्यादि श्रुतियों से यही सिद्ध होता है। और "तब मुझे तत्त्व से जानकर तुरन्त मुझ में ही प्रविष्ट हो जाता है", "वही आत्मज्ञान समस्त विद्याओं में श्रेष्ठ है, क्योंकि उससे अमृतत्व की प्राप्ति होती है" इत्यादि स्मृतिवचनों से भी यही सिद्ध होता है। इस अतिरिक्त भेदज्ञान की निन्दा होने से भी सृष्टयादि श्रुतियों का आत्मैक्य ज्ञानार्थक होना उचित है। अतः कार्यस्थ आत्मा का ज्ञान होना ही प्रवेश है—ऐसा उपचार होता है।

"आ नखाग्रेभ्य" अर्थात् नखाग्रपर्यन्त ही देह में पुरुष का चैतन्य स्फुरित होता है। वह चैतन्य उसमें किस तरह प्रविष्ट होता है? इस पर श्रुति कहती है—'यथा' अर्थात् लोक व्यवहार में जिस प्रकार 'क्षुरधाने' जिसमें छुरा रखा जाता है, उसका नाम क्षुरधान है—उसमें अर्थात् हजामत बनाने की सामग्री वाले नापित की सन्दूक के एकदेश में रखा छुरा 'अवहित' उपलब्ध होता है या

---

१ तत्त्वज्ञानस्य फलवत्त्वे श्रुतेस्तात्पर्यलिङ्गमभ्यासं सूचयति—इत्यादिश्रुतिभ्य इति । २ चैतन्यं हि देहे पुरुषस्य नखाग्रपर्यन्तं स्फुरतीति । ३ तदेकदेशे । ४ प्रवेशादीनामात्मज्ञानार्थत्वम् । ५ कल्पितमिति तथा च वार्तिके—"तमसैव यथा सर्पं स्रक्प्रविष्टा न तु स्वतः । प्रत्यगज्ञानहेतुत्थमात्मैव मायया जगत्" ॥६२३॥ इति । स्वाज्ञानादेव स्रजो भुजगप्रवेशो न वस्तुतोऽस्तीति यथातिरिक्तसर्पासत्त्ववत् प्रतीचोऽपि स्वाज्ञानोत्थे जगति तद्वशादेव प्रवेशो न परमार्थत इति प्रत्यगात्मैव वस्तु न तु जगदिति स्थिरमित्यर्थः ।

क्षुरोऽन्तःस्थ उपलभ्यतेऽवहितः प्रवेशितः स्याद्यथा वा विश्वंभरोऽग्निर्विश्वस्य भरणाद्विश्वंभरकुलाये नीडेऽग्निः काष्ठादाववहितः स्यादित्यनुवर्तते । तत्र हि स मथ्यमान उपलभ्यते । यथाच क्षुरः क्षुरधानैकदेशेऽवस्थितो यथा चाग्निः काष्ठादौ सर्वतो व्याप्यावस्थित एव सामान्यतो विशेषतश्च देहं संव्याप्यावस्थित आत्मा । तत्र हि स प्राणनादिक्रियावान्दर्शनादिक्रियावांश्चोपलभ्यते । तस्मात्तत्रैवं प्रविष्टः तमात्मानं प्राणनादिक्रियाविशिष्टं न पश्यन्ति नोपलभन्ते ।

नन्वप्राप्तप्रतिषेधोऽयं तं न पश्यन्तीति दर्शनस्याप्रकृतत्वात् । नैष दोषः । सृष्ट्यादि-

---

तत्र प्रवेशितत्वं क्षुरस्य कथं सिद्धमत आह—अन्तःस्थ उपलभ्यत इति । विश्वंभरशब्दस्याग्नि-विषयत्वं व्युत्पादयति—विश्वस्येति । तस्य तद्भर्तृत्वं महाभूतत्वाज्जाठरत्वाद्वा द्रष्टव्यम् । काष्ठादावग्नेरवहितत्वे युक्तिमाह—तत्रेति । दृष्टान्तद्वये विवक्षितमंशमनूद्य दार्ष्टान्तिकमाह—यथेत्यादिना । आत्मनो जाग्रत्स्वप्नयोर्देहे द्वयी वृत्तिः स्वापे तु सामान्यवृत्तिरेवेत्यवान्तरविभागमाह—तत्र हीति । अवस्थाद्वयं सप्तम्यर्थः । न केवलं विशेषवृत्तिरेव तदोपलब्धा किंतु सामान्यवृत्तिश्चेति चकारार्थः । अवस्थान्तरे संवेत्यपि तस्यैवार्थः । वाक्यान्तरमवतारयितुं भूमिकामाह—तस्मादिति । यस्मादुभयी वृत्तिरात्मनः शरीरे दृश्यते तस्मात्तत्रैव जलसूर्यवदविद्यया प्रविष्टोऽयमिति योजना । व्याकृताज्जगतः सकाशादात्मानं पृथक्कर्तुं तं न पश्यन्तीति वाक्यं तद्व्याचष्टे—तमात्मानमिति । विशिष्टं पश्यन्तोऽपि केवलमात्मानं न पश्यन्तीति यावत् । चाक्षुषत्वनिषेधस्येष्टत्वमाशङ्क्य व्याचष्टे—नोपलभन्त इति ।

उक्तनिषेधमाक्षिपति—नन्विति । प्रतिषेधस्य प्राप्तिं दर्शयन्परिहरति—नेत्यादिना । तत्राम-

---

प्रविष्ट होता है। अथवा जिस प्रकार "विश्वम्भर" अर्थात् विश्व का भरण करने वाला अग्नि 'विश्वम्भरकुलाये' अर्थात् विश्वम्भर के नीड में, काष्ठादि में स्थित अग्नि के समान व्याप्य होकर स्थित है, इस प्रकार इसकी अनुवृत्ति होती है। वहाँ वह अग्नि मथन करने पर उपलब्ध हो जाती है। जिस प्रकार क्षुरधान के एकदेश में छुरा रहता है और जिस प्रकार काष्ठादि में अग्नि सब ओर व्याप्त रहती है, उसी प्रकार आत्मा स्फूर्त्यात्मा द्वारा इस देह को सामान्यरूप से एवं द्रष्टा-श्रोतारूप आत्मा द्वारा विशेष रूप से देह को व्याप्त करके उसके एकदेश चक्षु-श्रोत्रादि नीडों में स्थित है। वहाँ वह प्राणनादि और दर्शनादि क्रियावान् देखा जाता है। इसलिए उस शरीर में ही प्रविष्ट 'तम्" अर्थात् उस प्राणनादिक्रियाविशिष्ट आत्मा को लोग 'न पश्यन्ति' अर्थात् नहीं जानते हैं।

---

१ व्याप्य स्थितः । २ सामान्यतः स्फूर्त्यात्मना देहं सव्याप्य । ३ विशेषतः—द्रष्टा श्रोतेत्याद्यात्मना देहम-सव्याप्य तदेकदेशे चक्षुः श्रोत्रादिनाडिषु स्थित इत्यर्थः । अत्र वार्तिकम्—'मिथो विभक्ता एवात्र क्षुरधाने यथा क्षुराः । क्षुरधानादिमध्यस्ते तथाऽऽत्मा नाडिभेदत इति ॥' ४ न जानन्ति । ५ विश्वंभरेति-ननु नाय शब्दोऽग्निं गोचरयति तत्र रूढ्यभावादित्याशङ्क्यत्यादि । ६ न केवलमित्यादिवार्तिकानुसारात् । ७ सुषुप्ते । ८ सामान्यवृत्तिरेव । ९ चकारस्यैव । १० पूर्णम् । ११ न पश्यन्तीति शृण्वनुक्रोश (अनुकम्पामूलकखेद) स च पश्यन्तिशब्दस्य चाक्षुषायत्वेनापद्यत इत्यभिप्रेत्याऽऽह—चाक्षुषेति । १२ उक्तनि-षेधमिति-व्याकृताज्जगतः सकाशादात्मानं पृथक्कर्तुं नियमवाक्यमित्युक्तस्याहर्शनस्याप्रकृतत्वाद्दर्शननिषेधमाक्षि-पतीत्यर्थः ॥

वाक्यानामात्मैकत्वप्रतिपत्त्यर्थपरत्वात्प्रकृतमेव तस्य दर्शनम् । "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय" इति मन्त्रवर्णात् ।

तत्र प्राणनादिक्रियाविशिष्टस्य दर्शने हेतुमाह—अकृत्स्नोऽसमस्तो हि यस्मात्स प्राणनादिक्रियाविशिष्टः । कुतः पुनरकृत्स्नत्वमिति । उच्यते । प्राणन्नेव प्राणनक्रियामेव कुर्वन्प्राणो नाम प्राणसमाख्यः प्राणाभिधानो भवति । प्राणनक्रियाकर्तृत्वाद्धि प्राणः प्राणितीत्युच्यते नान्या क्रियां कुर्वन् । यथा लावकः पाचक इति । तस्मात्क्रियान्तरवि-

रूपाभ्या स एव इत्यादिवाक्यानां ज्ञानार्थत्वे मानमाह—रूपमिति ।

विशिष्टस्य दर्शनेऽपि पूर्णस्यादर्शने हेतूक्तिरनन्तरवाक्यमित्याह—तत्रेति । प्रतिज्ञावाक्यार्थे स्थिते सतीति यावत् । तस्मात्तद्दर्शनेऽपि पूर्णस्यादर्शनमिति शेष । विशिष्टस्यापि पूर्णत्वमात्मत्वादन्यथा प्राणनादिकर्तृत्वायोगादिति शङ्कते—कुत इति । प्राणनादिक्रियाकर्ता प्राणादिभिः संहतत्वात्पूर्णो न भवतीत्युत्तरथार्थस्तत्माह—उच्यत इति । आत्मनि प्राणशब्दप्रवृत्तिमुपपादयति—प्राणनक्रियाकर्तृत्वादिति । तत्कर्तृत्वादात्मा प्राण उच्यते प्राणितीति व्युत्पत्तेरिति योजना । सदृष्टान्तमेवकारार्थमाह—नान्यामिति । एवकारार्थमनूद्य हेत्वर्थमुपसंहरति—तस्मादिति ।

(इस पर पूर्वपक्षी शङ्का करता है—) "उस आत्मा को नहीं देखते हैं" इस श्रुति से अप्राप्त का प्रतिषेध होता है क्योंकि इस प्रकरण मे दर्शन की कोई बात नहीं है। (इस पर समाधान देते हैं—) इसमे कोई दोष नहीं है। क्योंकि सृष्ट्यादि वाक्यो का आत्मैकत्व-प्रतिपत्तिरूपार्थ तात्पर्य होने के कारण उसका दर्शन प्रकरणानुसारी ही है। "वह परमात्मा रूप के प्रतिरूप हो गया । इसका वह रूप अभिव्यक्त करने के लिए (वह परमेश्वर) माया से अनेक रूप वाला दीखता है।" इत्यादि श्रुति मन्त्र इसमे प्रमाण है।

अब श्रुति प्राणनादिक्रियाविशिष्ट के दिखायी देने पर भी निष्प्रपञ्च के न दीखने मे हेतु बताती है—"अकृत्स्नो" अर्थात् असमस्त, 'हि' क्योंकि "स" अर्थात् वह प्राणनादिक्रियाविशिष्ट है। उसकी असमस्तता का क्या कारण है ? इस पर श्रुति बताती है—'प्राणन्नेव' अर्थात् प्राणन क्रिया को (अज्ञानवश) करता हुआ ही वह 'प्राणो नाम' अर्थात् प्राणसमाख्या या प्राणाभिधान वाला होता है। क्योंकि प्राणन क्रिया का कर्ता होने से 'प्राण प्राणनक्रिया करता है' ऐसा कहा जाता है, अन्य दर्शनादि-रूप क्रिया को करने के कारण नहीं। जैसे लवण क्रिया से लावक कहा जाता है, न कि पचित क्रिया से,

१ प्रतिपत्तिरूपार्थतात्पर्यवत्त्वात् । २ प्रकृतमेवेति—तन्नामरूपाभ्यामिति प्रकृत सर्ग स एष इहेति प्रवेशश्च तस्यात्मज्ञानशेषत्वात्तदपि प्रकृतमेवेति भाव । ३ रूप रूपमिति—प्रत्युपाधिप्रतिबिम्बरूपो बभूव तत्प्रतिबिम्बवस्तु अस्य निरुपाधिकस्यात्मन रूप स्वरूप प्रतिचक्षणाय आत्मयाथात्म्यप्रतिख्यापनाय अन्यथाऽनादनिर्वचनीयाविद्यापटावृतस्य बुद्धिवृत्त्युपाधिप्रतिबिम्बाभावे स्वरूपप्रकाशानुपपत्तेरिति । ४ बृ० उ० २-५-१९ । ५ निष्प्रपञ्चस्यादर्शने इत्यर्थः । ६ 'अकृत्स्नोऽसमस्त इति परिच्छिन्नो व्यभिचारी अपूर्ण इति यावत् । द्रष्टा श्रोता मन्तत्यादिविशिष्टस्वरूपाणां परस्पर व्यावृत्ततया व्यभिचारित्वेनापूर्णत्वमकात्स्न्यमित्यर्थं । ७ अज्ञानवशादिति बोध्यम् । ८ दर्शनादिरूपाम् । ९ लवनक्रियर्यैव लावको न तु पक्त्या तथैव च पाचक इति । १० आक्षेपत्वे । ११ न पश्यन्तीति प्रतिज्ञावाक्यार्थे । १२ अनात्मत्वे । १३ अकृत्स्नो हि स इति हेतुवाक्यार्थम् ।

शिष्टस्यानुपसंहारादकृत्स्नो हि सः ।

तथा वदन्वदनक्रियां कुर्वन्वक्तीति । वाक्पश्यंश्चक्षुश्चष्टे इति चक्षुर्द्रष्टा शृण्वञ्शृणोतीति श्रोत्रम् । प्राणन्नेव प्राणो वदन्वागित्याभ्यां क्रियाशक्त्युद्भवः प्रदर्शितो भवति, पश्यंश्चक्षुः शृण्वञ्श्रोत्रमित्याभ्यां विज्ञानशक्त्युद्भवः प्रदर्श्यते । नामरूपविषयत्वाद्विज्ञानशक्तेः । श्रोत्रचक्षुषी विज्ञानस्य साधने विज्ञानं तु नामरूपसाधनम् । न हि नामरूप-

---

"स्वापावस्थायां समस्तकरणोपसंहारेऽपि प्राणस्य व्यापारदर्शनात्प्राधान्यावगमात्प्राणन्नित्यादिवाक्यमादौ व्याख्याय क्रियाशक्तित्वेन प्राणसादृश्याद्वाचो वदन्नित्येतत्पूर्वकमुत्तरवाक्यानि व्याचष्टे—तथेत्यादिना । प्राणनवदनाभ्यामनुक्तकर्मेन्द्रियव्यापारमुपलक्ष्य वाक्यद्वयतात्पर्यमाह—प्राणन्नेवेति । प्राणवागाद्युपाधिद्वारेणाऽऽत्मनीति शेषः । दृष्टिश्रुतिभ्यामनुक्तज्ञानेन्द्रियव्यापारोपलक्षणं कृत्वाऽनन्तरवाक्ययोस्तात्पर्यमाह—पश्यन्निति । चक्षुराद्युपाधिद्वाराऽऽत्मनीति पूर्ववत् । उक्तबुद्धीन्द्रियव्यापाराभ्यामनुक्तं तद्व्यापारमुपलक्ष्याऽऽत्मन स्प्रष्टृत्वादिपरिच्छेदो न सिध्यति "संबन्धं विनोपलक्षणायोगाविस्याशङ्क्याऽऽह—नामरूपेत्यादिना । "प्रकाश्य"प्रकाशकातिरिक्तज्ञेयाभावात्"तदुपलम्भे च चक्षुःश्रोत्रयोरिव त्वगादेरपि करणत्वाद्"कार्यत्वरूपसंबन्धादुपलक्षणसंभवादात्मनः स्प्रष्टृत्वादिसिद्धिरित्यर्थः ।" तथाऽप्यु-

---

इसी तरह पकित-क्रिया से ही पाचक कहा जाता है । इसलिए क्रियान्तरविशिष्ट का प्राणपद से बोध न होने के कारण प्राणनादिविशिष्ट वह अपूर्ण ही है ।

तथा इसी प्रकार 'वदन्' अर्थात् बोलता है, इस व्युत्पत्ति से वदन-क्रिया करता हुआ, यह वक्ता कहा जाता है । 'पश्यश्चक्षु' 'चक्षिङ' अदादिगणीय धातु से (व्यक्त रूप से बोलने और दर्शन अर्थ में) चष्टे अर्थात् देखता है, इस व्युत्पत्ति के कारण चक्षु नाम पड़ा यानी द्रष्टा का नाम चक्षु है । "शृण्वन्" अर्थात् सुनता है, इस व्युत्पत्ति से जो सुनता है, वह श्रोता है । 'प्राण-क्रिया को करता हुआ प्राणाभिधान वाला है' एवं 'वदन-क्रिया को करता हुआ ही वह वक्ता कहलाता है' इन दोनो श्रुतिवाक्यो द्वारा आत्मा मे क्रिया शक्ति का गमनादिव्यापार दिखाया गया है । "देखने के कारण वह द्रष्टा है" एवं "सुनने के कारण वह श्रोता है' इन दोनो श्रुतिवाक्यों द्वारा विज्ञान शक्ति का स्पर्शनादि व्यापार दिखाया गया है । क्योंकि विज्ञानशक्ति नाम और रूप को विषय करती है । श्रोत्र और नेत्र विज्ञान मे करण हैं और विज्ञान नामरूप का प्रकाशक है । क्योंकि नामरूप से भिन्न कोई विज्ञेय नहीं

---

१ प्राणपदेनानवबोधात् । २ अपूर्ण । ३ प्राणनादिविशिष्ट । ४ व्युत्पत्त्या । ५ वक्तेत्युच्यते । ६ श्रोता । ७ गमनादिव्यापार । ८ स्पर्शनादिव्यापार । ९ करणे । १० प्रकाशकम् । ११ ननु श्रोत्रचक्षुः करणकविज्ञानस्य स्वविज्ञेयप्रकाशकत्वात् कथं विज्ञानं नामरूपप्रकाशकमित्युच्यते इत्याशङ्क्याऽऽह—न हीति । १२ प्राणनक्रियाविशिष्टस्य श्रुतौ प्रथमोपन्यासे हेतुमाह—स्वापेत्यादिना । १३ दर्शनश्रवणाभ्याम् । १४ उपलक्ष्योपलक्षकयोः । १५ लक्षणायोगात् । १६ रूपस्येत्यर्थः । १७ नामेत्यर्थः । १८ विज्ञेयज्ञाने । १९ एकार्थस्वरूपसम्बन्धादिति—चक्षुरादेस्त्वगादेश्च एकविज्ञेयविज्ञापकस्वरूपसम्बन्धादित्यर्थः । तथा च तद्द्वारक उपलक्ष्योपलक्षकयोः (चक्षुरादिव्यापारत्वगादिव्यापारयोः) तुल्यविज्ञाप्यविज्ञापकत्वरूपसम्बन्धोऽपि सिद्धो द्रष्टव्यः । एतेनोपलक्ष्योपलक्षणयोः सम्बन्धे वक्तव्ये चक्षुरादेस्त्वगादेस्तद्वृत्तिसद्भिलष्टति निरस्तम् । २० तथापीति—उक्तबुद्धीन्द्रियव्यापाराभ्यामनुक्ततद्व्यापारमुपलक्ष्य आत्मन स्प्रष्टृत्वादिव्यवहारे सिद्धमित्यर्थः ।

व्यतिरिक्तं विज्ञेयमस्ति [1]तयोश्चोपलम्भे करणं चक्षुःश्रोत्रे । क्रिया च नामरूपसाध्या प्राणसमवायिनी । तस्याः प्राणाश्रयाया अभिव्यक्तौ वाक्करणम् । तथा पाणिपादपायूपस्थाख्यानि[2] । सर्वेषामुपलक्षणार्था वाक् । एतदेव हि सर्वं व्याकृतम् "अयं वा [3]इदं नाम रूपं [4]कर्म" इति हि [5]वक्ष्यति । मन्वानो मनो मनुत इति [6]ज्ञानशक्तिविकासानां साधारणं करणं मनो [7]मनुतेऽनेनेति पुरुषस्तु कर्ता सन्मन्वानो *मन [8]इत्युच्यते ।

क्तकर्मेन्द्रियव्यापारेणानुक्ततद्व्यापारोपलक्षणादात्मनो न गन्तृत्वादिपरिच्छेद." संगच्छते विना संबन्धमुपलक्षणासिद्धेरित्याशङ्क्याऽऽह—क्रिया चेत्यादिना । "सर्वा क्रिया "नामरूपव्यङ्ग्या प्राणाश्रया "च तत्र प्राणाश्रयनामविषयोच्चारणक्रियाव्यञ्जकत्वं वाचो हस्तादीनां तदाश्रयादानादिव्यञ्जकता "तस्मादेकाश्रयक्रियाव्यञ्जकत्वयोगादुपलक्षणसंभवादात्मनो गन्तृत्वादिसिद्धिरित्यर्थः । शक्तिद्वयोद्भवोक्त्या समस्तससारस्य प्रतीच्यध्यासोऽत्र" विवक्षित इत्याह—एतदेवेति । उद्भूतशक्तिद्वयमेतच्छब्दार्थः । "उक्तेऽर्थे वाक्यशेषमनुकूलयति—अयमिति । आत्मा मन्वानः सन्मन इत्युच्यते मनुत इति व्युत्पत्तेरिति" वाक्यान्तर व्याचष्टे—मन्वान इति । करणे प्रसिद्धस्य मन शब्दस्य कथमात्मनि वृत्तिरित्याशङ्क्य व्युत्पत्तिभेदमाह—ज्ञानशक्तीत्यादिना ।

है । विज्ञेयात्मक नामरूप की उपलब्धि मे नेत्र और श्रोत्र साधन है । और नाम और रूप से साध्या क्रिया प्राण की आश्रया है । उस प्राण की आश्रिता क्रिया की अभिव्यक्ति मे वाक् करण है । इसलिए हाथ, पैर, पायु और उपस्थ नाम की कर्मेन्द्रियां हैं । इन सबके उपलक्षण के लिए वाक् है । यही सब व्याकृत जगत् है ।"व्याकृत अव्याकृत रूप सारा जगत् नाम,रूप, क्रिया सामान्य त्रयरूप है" इसे श्रुति आगे बतलाएगी । 'मन्वानो मन' (अर्थात् रुधादिगणीय अवबोधनार्थक 'मनु' धातु से) अवबोधन करता है, इस व्युत्पत्ति से ज्ञानशक्ति के विकार दर्शनादि का साधारण साधन मन है । क्योंकि इसके द्वारा अवबोधन करता है । पुरुष ही कर्ता होने पर जब अवबोधन करता है तो 'मन' इस नाम से कहा जाता है ।

१ विज्ञेयात्मकनामरूपयो । २ तस्मादिति शेष । ३ सर्वं व्याकृतमेतदेव । ४ व्याकृताव्याकृत जगत् । ५ क्रियासामान्यम् । ६ बृ० उ० १-६-१ । ७ ज्ञानशक्तिविकाराणा दर्शनादीनाम् । ८ व्युत्पत्तेरिति शेष । ९ मनुते इति व्युत्पत्ते । १० व्यवहार । ११ वदनादि । १२ नामरूपात्मकवागादिव्यङ्ग्या । १३ वदनादिक्रियाणा मध्ये । १४ तस्मादित्यादे —उपपादितादेकाश्रयक्रियाव्यञ्जकस्वरूपवाग्घस्ताद्यो सम्बन्धात् तद्द्वारत्वादुपलक्ष्योपलक्षणयोरेकाश्रयक्रियाव्यञ्जकव्यङ्ग्यत्वरूपसम्बन्धाच्चेत्यर्थ । १५ प्रकृतवाक्य प्रकरणे वा । १६ सवस्य जगत प्रतीच्यध्यस्तत्वरूपेऽर्थे । १७ एवप्रकारेण ।

*मन इत्युच्यत इति । स प्राणन्नेवत्यादिमन्वानो मन इत्यन्तश्रुतिभाष्यतात्पर्यग्राहकाणि चैव वार्तिकानि सन्ति । तथाहि—'वक्तीति वाग्भवेदात्मा ह्युच्यते वाग्भवेद्ध्वनि । तयाच्यतेऽनयेत्यस्मात् करण वागुदाहृता ॥ पश्यंश्चक्षुस्तथा द्रष्टा शृण्वञ्छ्रोत्र तथैव च । त्रिधा त्रिधा व्यवच्छिन्न एव सर्वत्र लक्षयेत् ॥ चक्षुरालोचनायैव सशय कुरुते मन । बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यत' ॥६८०-६८२॥ इति । यद्यपि श्रुतौ प्राणनादिकर्तृत्वेनैवाऽऽत्मनो व्यवच्छेद श्रुतस्तथाऽपि प्रतीन्द्रियव्यापार कर्तृत्ववत्कर्मत्वेन करणत्वेन च व्यवच्छेदो द्रष्टव्य इत्याह —वक्तीत्यादिना । ध्वनौ वाक्शब्दस्य रूढिद्योतको हिशब्द । अस्माद्व्युत्पादनादिति यावत् ॥ वदन्वागित्यत्रोक्तन्याय वाक्यान्तरेष्वतिदिशति—पश्यन्निति । तत्र हि पश्यन् इति चक्षु शब्देन द्रष्टोच्यते दृश्यत इति कर्म तथा

तान्येतानि प्राणादीन्य[1]स्याऽऽत्मनः [2]कर्मनामानि कर्मजानि नामानि कर्मनामान्येव न तु [3]वस्तुमात्रविषयाणि । अतो न [4]कृत्स्नात्मवस्त्व[5]वद्योतकानि । एवं ह्यसावात्मा [6]प्राणनादिक्रियया [7]तत्तत्क्रियाजनितप्राणादिनामरूपाभ्यां [8]व्याक्रियमाणो[9]ऽवद्योत्यमानोऽपि ।

[10]स [11]योऽतोऽस्मात्प्राणनादि[12]क्रियासमुदायादेकैकं प्राणं चक्षुरिति[13] वा विशिष्ट-[14]मनुपसंहृतेतरविशिष्टक्रियात्मकं मनसाऽयमात्मेत्युपास्ते चिन्तयति न स वेद न स जानाति

आत्मादिशब्देभ्यो विशेषमाह—तानीति । कृत्स्नात्मवस्त्ववद्योतकानि न भवन्तीत्येतदेव स्फुट-यति—एव हीति । प्राणादीनां कर्मनामत्वे सतीति यावत् । अवद्योत्यमानोऽपि न कृत्स्नो [15]दृष्टः स्यादिति शेषः ।

अकृत्स्नदर्शिनोऽप्यात्मदर्शित्वमाशङ्क्याऽऽह—स य इति । आत्मोपासितुरात्मदर्शनासत्त्वमयुक्त-

'तानि, एतानि' अर्थात् वे ये प्राणादि 'अस्य' अर्थात् (अनामरूप) आत्मा के 'कर्मनामानि' अर्थात् (पाचकादि के समान) कर्मजनित नाम है। ये कर्मज नाम ही हैं, चिन्मात्रवस्तुस्वरूप के प्रत्यायक नही है। इसलिए ये अपरिच्छिन्न आत्मवस्तु के (आत्मादि शब्द के समान) अवद्योतक नही है। इस प्रकार यह आत्मा (व्याख्येय) प्राणनादि क्रिया के द्वारा उस उस क्रिया के व्याख्यान से होने वाले प्राणादि नाम और रूपो से विक्रिया को प्राप्त हुआ एव उक्त विकारविशिष्ट रूप से अनुभूत होता हुआ भी पूर्णतया अनुभूत नही होता ।

'स यो' अर्थात् वह लौकिक पुरुष जो याथात्म्य द्रष्टा होकर 'अत' अर्थात् इस प्राणनादि-क्रिया निमित्तक समुदाय से 'एकैकम्' अर्थात् (प्राणन आदि अन्यतम क्रिया से) विशिष्ट प्राण या

१ अनामरूपस्य । २ पाचकादिवत् । ३ चिन्मात्रवस्तुस्वरूपप्रत्यायकानि । ४. अपरिच्छिन्नेत्यर्थ । ५. आत्मादिशब्दवत् । ६ व्याख्येयमिदम् । ७ व्याख्यानमिदम् । ८ नामरूपात्मकविक्रिया प्राप्यमाण । ९ उक्तविकारविशिष्टत्वेनानुभूयमानोऽपि । १० स लौकिको जन । ११. य याथात्म्ये वा द्रष्टा सन् । १२ क्रियानिमित्तकसमुदायात । १३ प्राणनाद्यन्यतमक्रियाविशिष्टमित्यर्थ । १४ अनुपेत्यादि । अविशेष-णीभूतप्राणनाद्यतिरिक्तवदनादिरूपविलक्षणक्रियकमित्यर्थं । १५ अनुभूत ।

दृश्यतऽनेनेति करणमिति विभाग । शृण्वञ्श्रोत्रमित्यत्रापि श्रोत्रशब्देन शृणोतीति श्रोतोक्त श्रूयत इति कर्म श्रूयते-ऽनेनेति करणमिति विवेक्तव्यम् । त्वगादिष्वपि यथोक्तन्याय योजयति—एवमिति ॥ इन्द्रियादिसबन्धादात्मनो-ऽनेकधात्वमुक्त्वेन्द्रियादेरसाधारण व्यापारमाह—चक्षुरिति । चक्षु शब्देन दर्शनेन्द्रियाणि गृह्यन्ते । आलोचनशब्देन दर्शनादयो वचनादयश्च दश व्यापारा । सशय सकल्पस्याप्युपलक्षणम् । जीवस्यासाधारण व्यापारमाह—साक्षीति । आत्मनो वस्तुतो न कर्तृत्वादीति भाव ॥ तान्यस्यैतानि कर्मनामान्येवेति श्रुतिभाष्यतात्पर्यसग्राहक वार्तिकद्वयमस्ति । तथाहि— "अन्योऽन्यापेक्षससिद्धेरन्योन्यव्यभिचारत । परायीनससिद्धो मानाविव तमो भवेत् ॥ यत एवमविद्योत्थ प्राणाद्यस्यातदात्मन । नामरूपमतस्ताभ्यां पश्यन्नपि न पश्यति" ॥ ६८६-६८७ ॥ इति । उक्ताना प्राणादिनामरूपाणां प्राणनादिनिमित्तत्वेऽपि पाचकादिवत्प्रतीचि वस्तुत्वेति चेन्नेत्याह—अन्यो-ऽन्येति । नाम्नो रूपापेक्षस्य तस्य चान्यापेक्षस्य सिद्धे रूपस्यानामत्वाघ्नाम्नश्चारूपत्वान्मिथो व्यभिचारादादित्ये तमोवत्प्रतीचि चिदेकरसे नामरूपमसम्भावितत्वात्कल्पितमित्यर्थ ॥ तस्य कल्पितत्वे फलितमाह—यत इति । इत्थभावे तृतीया । पश्य द्रष्टा-सापेक्षत्वाद्व्यभिचारित्वाच्चेत्येवशब्दार्थं । अतदात्मनो नामरूपहीनस्येति यावत् । ऽप्रमानमिति शेष ।

ब्रह्म । कस्मात् । अकृत्स्नोऽसमस्तो हि यस्मादेष आत्माऽस्मात्प्राणनादिसमुदायात्, अतः प्रविभक्त एकैकेन विशेषणेन विशिष्ट इतरधर्मान्तरानुपसंहाराद्भवति । 'यावदयमेवं वेद पश्यामि शृणोमि स्पृशामीति वा स्वभावप्रवृत्तिविशिष्टं वेद तावदञ्जसा कृत्स्नमात्मानं न वेद ।

कथं पुनः पश्यन्वेदेत्याह—आत्मेत्येवाऽऽत्मेति प्राणादीनि विशेषणानि यान्युक्तानि तानि यस्य स आप्नुवंस्तान्यात्मेत्युच्यते । स तथा कृत्स्नविशेषोपसंहारी सन्कृत्स्नो भवति । वस्तुमात्ररूपेण हि प्राणाद्युपाधिविशेषक्रियाजनितानि विशेषणानि व्याप्नोति ।

मिति शङ्कित्वा परिहरति—कस्मादित्यादिना । तस्माद्विशिष्टात्मदर्शी "न ब्रह्मात्मतत्त्वदर्शीति शेष । उपासितर्ज्ञानमु"पास्त इति जानाति" न स्वभावादुपासनमित्युक्तत्वात्" । तथा च जानन्न जानातीति व्याहतिरित्याशङ्क्याऽऽह—यावदिति । एव वेदेत्येतदेव विव्रियते—पश्यामीत्यादिना ।

आकाङ्क्षापूर्वक "विद्यासूत्रमवतारयति—कथमिति । "तत्र व्याख्येय पदमादत्ते—आत्मेतीति । तद्व्याचष्टे—प्राणादीनीति । तस्मिन्दृष्टे पूर्वोक्तदोषपरिहृत्य दर्शयति—स तथेति । तत्तद्विशेषणव्याप्तिद्वारेणेति यावत् । कथ तत्तद्विशेषोपसहारो तेन तेनाऽऽत्मना "तिष्ठन्कृत्स्न स्यात्तत्राऽऽह—वस्तुमात्रेति ।

चक्षु की अन्य विशिष्ट क्रियात्मक मे आत्मा का उपसहार न करके मन के द्वारा यह आत्मा है' इस प्रकार 'उपास्ते अर्थात चिन्तन करता है, 'न स वेद" अर्थात वह ब्रह्म को नही जानता है । क्यो नही जानता ? "अकृत्स्न" अर्थात असमस्त, 'हि" अर्थात् जिस कारण से 'एष' अर्थात् यह आत्मा है, (क्योकि) प्राणनादि समुदाय से विशिष्ट है । इसलिए वह अन्य धर्मो का उपसहार न करने के कारण परिच्छिन्न है अर्थात् एक एक विशेषण से विशिष्ट है । जब तक यह 'मै देखता हूं, मैं सुनता हूं, मैं स्पर्श करता हूं' इस प्रकार आत्मा को शास्त्र अनपेक्ष प्रवृत्ति से विशिष्ट जानता है, तब तक वह तत्त्व से सम्पूर्ण आत्मा को नही जानता ।

१ परिच्छिन्न । २ निखिलविशेषणासबद्धत्वादिति यावत् । ३ यावदयमेवं वेदेति—अय जन यावदेव प्रसिद्धप्रकारेण प्राणनादिकर्तारमात्मान वेद न तावत्तत्त्वतो वेत्ति यत आत्मवस्तु क्रियाकारकशून्यमिति भाव । तदुक्त वार्तिके— "यावदेवमय वेद प्राणितीत्यादिकर्तृकम् । अक्रियाकारक वस्तु न तावद्वेद तत्त्वत इति ॥ ७१०॥ ४ शास्त्रानपेक्षत्वम् । ५ तत्त्वत साक्षादिति वाय । ६ कथ पश्यन् वेदेत्याकाङ्क्षा । ७ व्याप्नुवन् । ८ प्राणनादिनिखिलोपाध्युपरक्त सत्तदात्मना तिष्ठन् । ९ वस्तुमात्ररूपेणेति—वाङ्मनसातीतमकार्यकारणमं प्रत्यग्भूतेनेत्यर्थ । एतेन व्याप्नोतीति व्यासवाक्योक्तात्मशब्दार्थो दर्शितो भवति । आत्मेत्येवोपासीतेत्यत्रात्मशब्दार्थ उक्त । तस्य शब्दधियोरविषयत्वद्योतक इतिशब्द । सर्वतोऽप्यवधानाभावोपलक्षित प्रत्यक्तत्त्वमुपोपसर्गलक्ष्यम् । आसीतेति स्वरूपावस्थानमुच्यते । तथा च कार्यकारणविलक्षण वाङ्मनसातीत कूटस्थ प्रत्यक्तत्त्वमनुभूयाविकृत समासीत । तदिद स्वरूपावस्थानमासन नैत्वात्मनि काचिद्विक्रियेति वाक्यार्थ । १० विशेषजक्रियानिमित्तानि । ११ नेत्यादि । विशिष्टस्य पूर्णत्वाभावात् ब्रह्मात्मवस्तुनश्च स्वत पूर्णत्वात् विशिष्टात्मदर्शी न तत्त्वदर्शीति भाव । १२ उपास्त इतीति । उपास्त इत्यस्यार्थमाह—इति जानातीति । उपास्त इत्यनेन स्वभावाज्जानातीत्येतदुच्यते । नहि विहितमुपासनम् उत्तरत्र निन्दादृष्टेरित्यर्थ । निन्दा च न स वेदेत्यादि । १३ वा० १-४ ६८८ । १४ वार्तिके । १५ विद्याप्रतिपादक सग्रहवाक्यम् । १६ विद्यासूत्रस्थम् । १७ तत्तदनुस्यूत ।

तथा च वक्ष्यति—"ध्यायतीव लेलायतीव" इति । तस्मादात्मेत्येवोपासीत । एवं कृत्स्नो ह्यसौ स्वेन वस्तुरूपेण गृह्यमाणो भवति । कस्मात्कृत्स्न इत्याशङ्क्याऽऽह—अत्रास्मिन्नात्मनि हि यस्मान्निरुपाधिके जलसूर्यप्रतिबिम्बभेदा इवाऽऽदित्ये प्राणाद्युपाधिकृता विशेषाः प्राणादिकर्मजनामाभिधेया यथोक्ता ह्येत एकमभिन्नतां भवन्ति प्रतिपद्यन्ते ।

✽आत्मेत्येवोपासीतेति नापूर्वविधिः । पक्षे प्राप्तत्वात् । "यत्साक्षादपरोक्षा-

स्वतोऽस्य प्राणनादिसंबन्धे संभवति किमित्युपाधिसंबन्धेनेत्याशङ्क्याऽऽह—तथा चेति । आत्मनि "सर्वोपसंहारवति दृष्टे पूर्वोक्तदोषाभावात्तं पश्यन्नेवाऽऽत्मदर्शीत्युपसंहरति—तस्मादिति । 'यथोक्तात्मोपासने पूर्वोक्तदोषाभावे 'प्रागुक्तमेव हेतुं स्मारयति—एवमिति । "तस्यार्थं स्फोरयति—स्वेनेति । वाङ्मनसातीतेनाकार्यकारणेन प्रत्यग्भूतेनेति यावत् । आकाङ्क्षापूर्वकमुत्तरवाक्यमवतार्य व्याकरोति—कस्मादित्यादिना । "तस्माद्यथोक्तमात्मानमे"वोपासीतेति" शेषः । "अस्यैव द्योतको द्वितीयो हिशब्दः । विद्यासूत्रं "विधिस्पर्शं विना "विवक्षितेऽर्थे व्याख्यायापूर्वविधिरयमिति पक्षं प्रत्याह—आत्मेत्ये-

तो फिर किस प्रकार देखने पर जानता है । इस पर श्रुति कहती है—"आत्मेत्येव" अर्थात् आत्मा पद से पूर्व में प्राणादि विशेषणो द्वारा जिनका वर्णन कर दिया है, वे जिसके हैं, उन्हें व्याप्त करता हुआ होने के कारण आत्मा कहा जाता है । इस प्रकार प्राणनादि समस्त उपाधियों से युक्त तत्तदात्मरूप मे स्थित रहने से वही आत्मा पूर्ण कहा जाता है । वह वाङ्मनसातीत कार्यकारणरहित प्रत्यक्रूप से प्राणादि उपाधि विशेष होने से क्रिया-निमित्त विशेषणो मे व्याप्त है । ऐसा ही "बुद्धिवृत्ति के अनुसार चिन्तन करता हुआ सा और प्राणवृत्ति के अनुसार चेष्टा करता हुआ सा जान पड़ता है" इस प्रकार श्रुति द्वारा आगे कहा जायगा । अत "वह आत्मा है" इस प्रकार ही उसकी उपासना करे । इस प्रकार

१ तस्मादिति—'सर्पादीन् सगिवाऽखिलाननवशेषेण व्यापनादित्यर्थ । २. नापूर्वेति—"विधिरत्यन्तमप्राप्तौ नियम पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते" ॥ इति अत्र विधिशब्दोऽपूर्वविधिवचन । इति त्रिविधविधय पूर्वकाण्डेऽभिता । ३ पक्षे प्राप्तत्वादिति । ' अविशेषे स्मृति प्राप्ता विक्षेपे तु न सा तत । पाक्षिक्या स्मृतिसम्प्राप्तौ तत्सन्तानो नियम्यते ॥ उपस्थित यदा दु ख तदा तस्योपशान्तये । आनन्दात्मकमद्वैत स्मरेद्ब्रह्म पुन पुन ॥ इत्येव मृदुचित्ताना मत भाष्यकृतस्तथा । अङ्गीकृत्य भरञ्चकरपूर्वविधिवारणे ॥ अद्यैव मृतिरायातु कल्पान्तनिचयेन वा । इत्यादि धीरचित्ताना नित्यप्राप्तिरिहोच्यते ॥ यत्साक्षादितिवाक्योत्थप्रत्यग्याथात्म्यलेह्निना । ज्ञानेन तमसो दाहान्नित्यप्राप्तैव तत्स्मृति ॥१ ४ ७७६-७८०॥ देहात्मचिन्ता मूढाना नित्यप्राप्ता यथा तथा । विदुषा ब्रह्मचिन्ताऽपि नातो नैयमिको विधि" रिति वार्तिकसारोक्तम् ॥१.४ ७६६॥ ४. वृत्तिव्यवधानमन्तरेणैव । ५ अपरोक्षम् । ६ उच्यत इति शेष । ७. सर्वोपसहारवतीति । प्राणादिनिखिलविशेषणव्याप्तिमतीत्यर्थ । ८. सर्वोपसहारवदात्मानुभवन इत्यर्थ । ९. तस्मादित्युक्तम् । १०. हेतोः । ११. तस्मादिति—'निरुपाधिकात्मनि प्राणादिसर्वोपाध्युपसहारादित्यर्थः । १२. एवोऽन्यार्थनिवर्तकः । १३. पश्येत् । १४. उक्तस्योपस्यैव । १५. विधिसम्पर्कं विनेत्यर्थः । वेदान्तेषु लिङादीनामर्हार्थत्वात् । १६. विवक्षिते—अभिमते कार्यकारणविलक्षणे वाङ्मनसातीते कूटस्थे प्रत्यग्भूतेऽर्थे ।

✽आत्मेत्येवोपासीतेति नापूर्वविधिरिति । एतद्भाष्यतात्पर्यविवरणपराणि वार्तिकानि सन्ति । तथाहि—"नापूर्वविधिरत्रेष्ट कदाचिदपि गृह्यते । सर्वदैव तु तत्प्राप्तेस्तया नान्योऽपि वर्चन ॥ पुव्यापारानधीनत्वान्नेद सभाव्यते विधि । स्वव्यापारैकविषय सर्व एव यतो विधिः ॥ सत्येम्नेऽस्यैव चार्थस्य पूर्वपक्षोक्तिपूर्वकः ।

द्ब्रह्म" "कतम आत्मेति" "योऽयं 'विज्ञानमयः" इत्येवमाद्यात्मप्रतिपादनपराभिः श्रुतिभिरात्मविषयं विज्ञानमुत्पादितम् । तत्राऽऽत्मस्वरूपविज्ञानेनैव—तद्विषयाऽनात्माभिमान-

---

वेति । अत्यन्ताप्राप्तार्थो ह्यपूर्वविधिर्यथा स्वर्गकामोऽग्निहोत्रं जुहुयादिति नायं तथा पक्षे प्राप्तत्वादात्मोपासनस्य तस्य तत्प्राप्तिश्च पुरुषविशेषापेक्षया विचारावसाने स्पष्टी भविष्यतीत्यर्थः । "इदानीमात्मज्ञानस्याविधेयत्वस्थापनार्थं "वस्तुस्वभावालोचनया नित्यप्राप्तिमाह—यत्साक्षादिति । उत्पाद्यतामुक्तश्रुतिभिरात्मविज्ञानं किं "तावतेत्यत आह—तत्रेति । कारकादीत्यादिपदं तदवान्तरभेदविषयम् ।

---

अपने वाङ्मनसातीत कार्यकारणरहित प्रत्यक्‌रूप में ग्रहण किया जाने से यह पूर्ण है। क्यों पूर्ण है ? इस पर श्रुति कहती है—'अत्र' अर्थात् इस निरुपाधिक आत्मा में, पूर्व बतलाए हुए प्राणादि-कर्म-जनित नामों से अभिधेय प्राणादि उपाधियों से होने वाले समस्त विशेष उसी तरह "एकम्" अर्थात् अभिन्नता को "भवन्ति" अर्थात् प्राप्त हो जाते हैं, जैसे जलगतसूर्य प्रतिबिम्बभेद से सूर्य में एक हो जाता है।

"वह आत्मा है" इसी प्रकार ही उपासना करनी चाहिए, यह अपूर्वविधि नहीं है (अपूर्वविधि अत्यन्त अप्राप्तार्थक होती है) क्योंकि यह दर्शन पक्ष में स्वयंप्राप्त है "जो ब्रह्म साक्षात् अपरोक्ष है

---

१ बुद्ध्यादीनां मध्ये । २ विज्ञानं धीस्तत्प्राय तद्भिन्न इति भाव । ३ ताभिस्तस्मिन्नुत्पादितं । ४ नेदं प्रत्यक्षाद्यधिगतम् । ५ दशनस्य । ६ दर्शनस्य । ७ पक्षे प्राप्ति । ८ पुरुषविशेषेति—विद्वज्जनेत्यर्थं । प्रारब्धकर्मवशात् क्षुत्पिपासादिदोषोद्भवात् आत्मनो विस्मरणमनात्मन स्मरणं च सम्भावितं विदुष इति वदन् भाष्यकृत् । ज्ञानस्य पक्षे प्राप्ति विचारावसाने वक्ष्यतीत्यर्थं । ९ उपसंहारात्मकटीकायां मन्त्रस्य । १० पूर्वमपूर्वविधिनिरासायानियमविधिमङ्गीकृत्यात् । ११ नित्यापरोक्षात्मस्वरूपविचारणया । १२ ताभिस्तदुत्पादने नात्मज्ञानस्य नित्यप्राप्तौ किमायातमित्यर्थं ।

---

भाष्यकृद्भिः कृतो यत्न स काधिक्रियतेऽधुना ॥ यथा कार्यानपेक्षस्य प्रामाण्यं वचस स्फुटम् । ऐकात्म्यवस्तुनिष्ठस्य तथा पूर्वमवादिषम् ॥ लिङ्प्रत्ययश्रुतेरत्र भ्रान्तिं समुपजायते । यजेतत्यादिसामान्याद्विध्यर्थोऽत्र विचार्यते ॥ सिद्धान्तोपक्रम पूर्वं पूर्वपक्ष प्रदर्श्यते । सम्यग्निर्ज्ञातसिद्धान्तो यतो वक्ति बलाबलमिति ॥७५२-५७॥ त्रीनपि विधीन्निराकरोति—नेत्यादिना । अपूर्वविधिर्वानियम परिसंख्या वा कश्चिदपि विधिर्न गृह्यत इति सबन्ध । तत्र हेतुमाह—सर्वदेति । आत्मधिय सदाभावात्तत्प्राप्तवक्ष्यमाणत्वाच्च तत्र विधित्रय न हि सिद्धेऽर्थे विधि साध्ये तन्नियमादित्यर्थं ॥ किञ्च ब्रह्मणि तज्ज्ञाने वा त्रिविधो विधिरयुक्तो ब्रह्मण सदाभावात्तज्ज्ञानस्य च मानवस्तुतन्त्रत्वादित्याह—पुंव्यापारेति । प्रयत्नानधीनेऽपि कादाचित्के ज्ञाने कुतो विधिस्तत्राऽऽह—स्वव्यापारेति । यतो यत्नसाध्यधात्वर्थमात्रविषयस्त्रिविधोऽपि विधिरतो ज्ञाने मानवस्तुमात्रतन्त्रे न सोऽस्तीत्यर्थ ॥ वस्तुनि तज्ज्ञाने वा विध्यसम्भवस्योक्तन्यायेन सिद्धत्वात्तिमुत्तरेण विधिविचारेणत्याशङ्क्याऽऽह—सत्येवमिति । उत्तरो विचाररूपो ग्रन्थो ज्ञानविध्यसम्भवं द्रढयितुमित्यर्थ ॥ ननु ब्रह्मणि तज्ज्ञाने च सर्वप्रकारविध्यसम्भवस्य सबन्धग्रन्थे सिद्धत्वादत्रापि तस्यैवोक्तौ पुनरुक्तिरित्याशङ्क्य सबन्धोक्तमनुवदति—यथेति । कार्यासंस्पर्शिना वेदान्तवचसा कार्यगिराभिवाकार्ये बुद्धे सिद्धे वस्तुनि मानत्वमतिस्फुटमस्तीत्येतावन्मात्र सबन्धग्रन्थे समधिगतमित्यर्थ । उत्तरस्यापुनरुक्तमर्थमाह—लिङ्प्रत्ययेति । आत्मेत्येवोपासीतेत्यत्र विधायकपदश्रवणाद्यजेतेत्यादिना साहृश्यात्तत्र यागादौ विधिवदिहापि वस्तुनि तज्ज्ञाने वा विधिरिति भ्रान्तौ प्राप्तायां विधिपदस्यार्थोऽपूर्वो नियमोऽन्यो वेति विचार्य निरस्यतेऽतो भ्रान्तिनिवृत्त्या वाक्यस्य वस्तुपरत्वं निश्चेतव्यमित्यर्थ ॥ ननु पुनरुक्त्यभावेऽपि प्राप्तिपूर्वकत्वाभिधेयस्य पूर्वं पूर्वपक्ष प्रापय्य पश्चादुत्तरपक्षो वाच्यस्तत्र यथोक्तक्रमातिक्रमे भाष्यकारस्य को हेतुरिति पृच्छति

तिष्ठतु तावत्पाक्षिक्यात्मोपासनप्राप्तिर्नित्या वेति । [1]अपूर्वविधिः स्यात् । ज्ञानोपासनयोरेकत्वे सत्यप्राप्तत्वात् । न स वेदेति विज्ञानं [2]प्रस्तुत्याऽऽत्मेत्येवोपासीतेत्यभिधाना-

अपूर्वविधिवादी शङ्कते—तिष्ठतु तावदिति । सर्वेषां स्वभावतो विषयप्रवणानीन्द्रियाणि नाऽऽत्मज्ञानवार्तामपि मृष्यन्ते [3]तदत्यन्ताप्राप्तत्वादात्मज्ञाने भवत्यपूर्वविधिरिति भावः । [4]विशिष्टस्याधिकारिणः शाब्दज्ञानं [5]शब्दादेव सिद्धमिति कथमप्राप्तिरित्याशङ्क्याऽऽह—ज्ञानेति । न खल्वत्र शाब्दज्ञानं विवक्षितं किंतूपासनमुपासनं नाम मानसं कर्म तदेव [6]ज्ञानावृत्तिरूपत्वाज्ज्ञानमित्येकत्वे सत्यप्राप्तत्वाद्विधेयमित्यर्थः । तयोरेकत्वं विवृणोति—नेत्यादिना । अनेन ह्युत्यादौ [7]वेदशब्दस्यार्थान्तर-

(अपूर्वविधिवादी शङ्का करता है—) आत्मोपासनप्राप्ति पाक्षिक है अथवा नित्य है—इसकी चर्चा अभी रहने दो । ('आत्मा है इस प्रकार ही उपासना करनी चाहिए' । ऐसी आत्मज्ञान में जो सुनी जाती है, वह) यह तो अपूर्वविधि ही है । क्योंकि यहाँ ज्ञान और उपासना का अभिन्न अर्थ होने से वह स्वतः प्राप्त नहीं है । "वह नहीं जानता है" इस श्रुतिवाक्य से (निषेध-प्रतियोगीरूप से) विज्ञान का आरम्भ करके "वह आत्मा है, इस प्रकार ही उपासना करनी चाहिए" ऐसा कहने से ज्ञान और

१ आत्मेत्येवोपासीतेत्यात्मज्ञाने य. श्रूयते स । २ निषेधप्रतियोगितयेति शेषः । ३ तस्मात् ।
४ विशिष्टस्येति—विधितोऽधीतस्वाध्यायस्याधिगतपदपदार्थसंबन्धस्येत्यर्थः । ५ तत्त्वमस्यादिवाक्यादित्यर्थः ।
६ विजातीयानन्तरितप्रत्ययरूपत्वात् । ७ उपासनाभिन्नज्ञानरूपार्थान्तरेत्यर्थः ।

कुत्र तर्हि स्वमते क्रियापेक्षा तत्राऽऽह—अपेक्षेति । यदुःस्वादे सोपादानस्यापह्नवो येन तस्मिञ्ज्ञाने शुद्धिद्वारोत्पत्तौ क्रियापेक्षेत्यर्थः । कल्पान्तरं निराह—न चेति ॥ उत्पन्ने ज्ञाने तेनाज्ञानदाहात्प्रवृत्त्ययोगान्न विधिर्न चाऽनुत्पन्ने तस्मिन्विधिविषयाभावाच्च ज्ञानसहायत्वेन क्रियायां विधिस्तत्सहायत्वाऽसंभवादित्युक्तम् । इदानीं तिष्ठतु तावदित्यादि स्यादित्यन्तस्य भाष्यस्य तात्पर्यं वदन् शाब्दे ज्ञाने ज्ञानान्तरे वा विधिरिति विकल्प्याऽऽद्यं प्रत्याह—"स्वाध्यायाधीतिविधिना ज्योतिष्टोमादिबोधवत् । सदा प्राप्ताऽऽत्मविद्याऽपि नातो विधिरिहेष्यते ॥ देहेन्द्रियमनोबुद्धिसर्वव्यापारभासिनः । लिङ्गतश्चानुमेयत्वान्न सभाव्यो विधिस्ततः ॥ तथाऽहंप्रत्ययात्साक्षादात्मयाथात्म्यनिश्चिते । असंभवादसंप्राप्तेः कुतो विधिरिहेष्यते ॥ नन्विहाऽऽत्माऽसदृष्टाहं प्रत्ययगम्यता । पाक्षिकीति ततोऽप्राप्तेर्भवन्नैयमिको विधिः ॥ पाक्षिकी तावदत्राऽऽस्तामंकारस्यार्थावलेहिनः । ज्ञानस्य प्राप्तिर्नित्या वेत्यस्त्वपूर्वो विधिः स्फुटः" इति ॥७६६-७०॥ सदा स्वविषयविधिं विनेति यावत् । विधितोऽधीतस्वाध्यायस्याधिगतपदपदार्थसंबन्धस्य शब्दादेव कर्मज्ञानवद्ब्रह्मज्ञानस्य विधिमन्तरेण प्राप्तेन शाब्दे ज्ञाने विधिरित्यर्थः ॥ किं च संसारिणोऽसंसारिणो वाऽऽत्मनो ज्ञानं विधेयमाद्येऽपि स नित्यानुमेयः प्रत्यक्षो वेति विकल्प्याऽऽद्यं प्रत्याह—देहेति । देहादिचेष्टा प्रयत्नवत्पूर्विका विशिष्टचेष्टात्वाद्रथादिचेष्टावदित्यनुमानाद्देहादिव्यापारलिङ्गेन तदनुपपत्तेश्च संसार्यात्मनिश्चयान्न तज्ज्ञाने विधिरित्यर्थः । तत तत्रेति यावत् ॥ द्वितीयं दूषयति—तथेति । प्रत्यक्षत्वे सतीत्येतत् । इहेति संसार्यात्मधीग्रहः । अहं प्रत्ययेनाऽऽत्मनः संसारिणो याथात्म्यस्य प्रमातृताप्रमुखस्य कर्तृत्वादिरूपस्य तत्प्रत्यक्षत्वपक्षे निश्चितत्वात्तज्ज्ञानस्याप्राप्त्यभावान्न तत्र विधिरित्यर्थः ॥ असंसार्यात्मधीविधेयेति पक्षमुत्थापयति—नन्विति । अहमिति संसार्यात्मार्थज्ञानस्य सदाप्राप्तत्वेऽप्याह ब्रह्मेत्यहंप्रत्ययेन प्रत्यक्षतयाऽपहतपाप्मादिगुणवत्त्यासंसारिणोऽद्वयस्य ब्रह्मणो ग्रहणं पाक्षिकं क्षुधादिदोषोद्भवकालानियमात्तद्विस्मरणसंभवात्तस्मादुपासीतेत्यसंसार्यात्मधीविषयो नियमविधिरित्यर्थः ॥ तादृग्ज्ञानं विधेयमित्येतदङ्गीकृत्यापूर्वविधिमाह—पाक्षिकीति । ऐकात्म्यावगाहिनो ज्ञानस्य पाक्षिकी नित्या वा प्राप्तिरित्येतत्तावदास्तामैकात्म्यज्ञाने यः स्फुटो विधिरसावपूर्वोऽस्त्विति संबन्धः ॥

द्वेदोपासनशब्दयोरेकार्थताऽवगम्यते । "अनेन ह्येतत्सर्वं वेद" "आत्मानमेवावेत्" इत्यादिश्रुतिभ्यश्च विज्ञानमुपासनम् । तस्य चाप्राप्तत्वाद्विध्यर्हत्वम् ।

न च स्वरूपान्वाख्याने पुरुषप्रवृत्तिरुपपद्यते । तस्मादपूर्वविधिरेवायम् । कर्मविधिसामान्याच्च । यथा "यजेत जुहुयात्" इत्यादयः कर्मविधयो न तैरस्य "आत्मेत्येवोपासीत" "आत्मा वा अरे द्रष्टव्य." इत्याद्यात्मोपासनविधेर्विशेषोऽवगम्यते । मानसक्रियात्वाच्च विज्ञानस्य । यथा यस्यै देवतायै हविर्गृहीत स्यात्ता मनसा ध्यायेद्वषट्करिष्यन्निस्याद्या मानसी क्रिया विधीयते, तथा "आत्मेत्येवोपासीत" "मन्तव्यो निदिध्यासितव्यः"

विषयत्ववन्न 'स वेदेत्यत्रापि किं न स्यादित्याशङ्क्याऽऽह—अनेनेति । उक्तश्रुतिभ्यो यद्विज्ञानं श्रुत तदुपासनमेवेति योजना । 'स योऽत एकैकमुपास्ते' इत्युपक्रमात् 'आत्मेत्येवोपासीत' इत्युपसंहाराच्च न स वेदेत्यत्र तावद्वेदशब्दस्योपासनार्थत्वमेष्टव्यमन्यथोपक्रमोपसंहारविरोधात् । तथा चार्थवंशसंभवादुपासनमेव 'सर्वत्र वेदन 'तच्च सर्वथैवाप्राप्तमिति तस्मिन्नपूर्वविधि. स्यादिति भावः। इतश्च "तस्मिन्नेष्टव्यो विधिरित्याह—न चेति । अत. प्रवर्तको विधिरुपेय इति शेष. । आत्मोपासितविधेयेत्यत्र स चात्यन्ताप्राप्तविषयत्वान्नियमादिरूपो न भवतीत्याह—तस्मादिति । शब्दानुसारेणाविशेषमभिदधाति—यथेत्यादिना । हेत्वन्तरमाह—कर्मविधीति । कर्मात्मज्ञानविध्यो. समत्वर्थतोऽन्यविशेषमाह—मानसेति । तदेव दृष्टान्तेन स्पष्टयति—यथेति । यदि क्रिया विधीयते कथ

उपासना की एकाथता ज्ञात होती है । "इससे इन सबको जान लेता है", 'आत्मा को जाना" इत्यादि श्रुतियो से भी विज्ञान उपासना ही का नाम है । वह (विज्ञान से अभिन्न) उपासना अप्राप्त होने के कारण विधि की अर्हता रखता है ।

इसके अतिरिक्त स्वरूपमात्र कथन मे पुरुष-प्रवृत्ति असम्भव है । इसलिए यह अपूर्वविधि ही है । कार्यविधि से इसका साम्य होने के कारण यही बात सिद्ध होता है । जिस प्रकार 'यजन करे, हवन करे" इत्यादि कर्मविधियां है—उन इन आत्मोपासन विधियो म कोई विशिष्टता नही जान पडती; जैसे "आत्मा है—इस प्रकार उपासना करे", "अरी मैत्रेयी ! नि सन्देह यह आत्मा ही दर्शन के योग्य है" आदि । तथा विज्ञान भी मानसी क्रिया है । जैसे 'जिस देवता के लिए हवि ग्रहण की जाय, उसका 'वषट्' सहित उच्चारण करते हुए मन से ध्यान करे' इत्यादि कर्मकाण्ड म जिस प्रकार मानसी

१ विज्ञानाभिन्नोपासनस्य । २ स्वरूपमात्रकथने । ३ स्वरूपान्वाख्यान इति । वेदान्ताना सिद्धार्थस्वरूपावबोधित्वमात्रे शास्त्रत्वमेव न स्यादत — प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुसा येनोपदिश्येत तच्छास्त्रमभिधीयते ॥" इत्यभियुक्तोक्ति । ४ उपपद्यत इति । सप्तद्वीपा वसुमती राजासौ गच्छतीत्यादिस्वरूपमात्रकथने बुद्धिपूर्वकारिणां न प्रवृत्तिरालक्ष्यत यतोऽत्र प्रवर्तको विधिरुपेय इति शेष । ५ वषट्करिष्यन्निति—ऋग्वेदकर्मकारी ऋत्विक् स हि वषडुच्चरति । ६ उपसंहारविरोधादिति । उपक्रमादिना मध्यस्थवेदशब्दस्याप्युपासनार्थत्वमेव अन्यथा वाक्यभेदप्रसक्त सति संभवे च न वाक्य भेत्तु युक्तमिति भाव । ७ तथा चेति—वेदोपास्त्योरैकार्थ्ये सति । ८ पूर्वोक्तवाक्येषु ।— ९ तच्चेति—ज्ञानाभिन्नमुपासनमित्यर्थ । ऐक्यज्ञान सर्वथैवाप्राप्त तदभिन्नमुपासनमपि तथा । यत्साक्षादित्यादिवाक्याना तत्त्वमाद्यर्थविषयत्वेऽपि महावाक्यत्वाभावाच्च तज्जमखण्डार्थगोचर ज्ञान तस्य महावाक्यैकजन्यत्वात्पूर्वोक्तवाक्यैस्तदप्राप्तमित्याशय । १० आत्मज्ञाने ।

इत्याद्या क्रियैव विधीयते ज्ञानात्मिका । तथाऽवोचाम वेदोपासनशब्दयोरेकार्थत्वमिति ।

[1]भावनांशत्रयोपपत्तेश्च । यथा हि यजेतेत्यस्यां भावनायां किं केन कथमिति [2]भाव्याद्याकाङ्क्षापनयकारणमंशत्रयमवगम्यते, तथोपासीतेत्यस्यामपि भावनायां विधीयमानायां किमुपासीत केनोपासीत कथमुपासीतेत्यस्यामाकाङ्क्षायामात्मानमुपासीत मनसा त्यागब्रह्मचर्यशमदमोपरमतितिक्षादीतिकर्तव्यतासंयुक्त इत्यादि शास्त्रेणैव समर्प्यतेंऽशत्रयम् ।

ज्ञानात्मिकेति विशेष्यते तत्राऽऽह—तथेति ।

इतश्चाऽऽत्मोपासने विधिरस्तीत्याह—भावनेति । वेदान्तेषु भावनापेक्षितांशत्रयोपपत्तिं विशदयितुं दृष्टान्तमाह—यथेति । भावनायां विधीयमानत्वे सतीति शेषः । [4]प्रेरणाधर्मकशब्दव्यापारः स्वज्ञानकरणकः स्तुत्यादिज्ञानेतिकर्तव्यताकः पुरुषप्रयत्नभाव्यनिष्ठः शब्दभावनोच्यते । स्वर्गं यागेन [5]प्रयाजादिभिरुपकृत्य साधयेदिति पुरुषप्रवृत्तिरर्थभावनेति विभागः । दृष्टान्तस्यमर्थं दार्ष्टान्तिके योजयति—तथेत्यादिना । त्यागो निषिद्धकाम्यवर्जनम् । उपरमो [6]नित्यनैमित्तिकत्यागः । तितिक्षादीत्यादिपदं समाधानादिसंग्रहार्थमित्यंशत्रयमिति संबन्धः । शास्त्रं शान्तो दान्त इत्यादि । उक्तप्रकारमंशत्रयमन्यत्रापि सुलभमिति वक्तुमादिपदम् ।

क्रिया का विधान किया जाता है, इसी प्रकार "आत्मा है, इस प्रकार उपासना करे", "(इसे आचार्य तथा शास्त्र द्वारा पहले) श्रवण करना चाहिये, मनन करना चाहिए और निदिध्यासन करना चाहिये ।" इत्यादि रूप से,ज्ञानात्मिका क्रिया का विधान किया जाता है । तथा 'जानना' और 'उपासना' शब्दों की समानार्थता है, ऐसा पहले ही कह चुके हैं ।

इसके अतिरिक्त वेदान्त में भी भावना के (फल, करण और इतिकर्तव्यतारूप) तीनों अंश सम्भव होने के कारण भी यह विधिवाक्य है । जिस प्रकार "यजन करे" इसमें 'किसलिए, किसके द्वारा और किस प्रकार (यजन करे)' इत्यादि साध्यादिसम्बन्धी आकांक्षाओं की निवृत्ति के कारणभूत भावना के तीन अंश ज्ञात होते हैं, उसी प्रकार 'उपासना करे' इस प्रकार विधान करने वाली भावना में भी किसकी उपासना करे ? किसके द्वारा उपासना करे ? और किस प्रकार उपासना करे ? ऐसी आकांक्षा होने पर 'आत्मा की ही उपासना करे, मन से उपासना करे; त्याग, ब्रह्मचर्य, शम-दम, उपरति तथा तितिक्षारूप इतिकर्तव्यता से युक्त होकर उपासना करे' इत्यादि शास्त्र से ही तीनों अंशों का समर्थन होता है ।

१. भावनेति । वेदान्तेष्वपि भावनापेक्षितांशत्रयोपपत्तेश्चात्मोपासने विधिरस्तीत्यर्थः । २. भाव्यादीति—साध्यादीत्यर्थः । साध्यसाधनमितिकर्तव्यतेति यावत् । ३. आत्मनो मुक्तिरूपेण साध्यत्वमुपेत्य किमंशत्वमाह—आत्मानमिति । ४ प्रेरणेत्यादि—प्रेरणाधर्मको यो लिङादिशब्दस्तदीयो व्यापारः प्रेरणाख्यः । स्वेति—स्व लिङादि । स्तुतीति—पूर्णाहुत्या 'सर्वान्' कामानाप्नोतीत्याद्यर्थवादज्ञानेतिकर्तव्यताक । पुरुषेति—पुरुषप्रवृत्तिरूपोऽर्थभावनाख्यो यः पुरुषप्रयत्नस्तद्भाव्यक स्वर्गमित्यादि । स्वर्गादिभाव्यका यागादिकरणिका प्रयाजादीतिकर्तव्यताका पुरुषप्रवृत्तिरूपाऽर्थभावना तादृशार्थभावनाभाव्यका लिङादिज्ञानकरणिका स्तुत्यादिज्ञानेतिकर्तव्यताका लिङादिधर्मप्रेरणाख्या शाब्दभावनेति ध्येयम् । ५. प्रयाजादिरूपमुपकरणं सपाद्य । ६. नित्यं सध्योपासनाग्निहोत्रादि । नैमित्तिकं श्राद्धादीति ज्ञेयम् ।

यथा च कृत्स्नस्य दर्शपूर्णमासादिप्रकरणस्य दर्शपूर्णमासादिविध्युद्देशत्वेनोपयोगः । एवमौपनिषदात्मोपासनप्रकरणस्याऽऽत्मोपासनविध्युद्देशत्वेनैवोपयोगः । 'नेति नेति' 'अस्थूल-मेकमेवाद्वितीयमशनायाद्यतीत' इत्येवमादिवाक्यानामुपास्यात्मस्वरूपविशेषसमर्पणेनोप-योगः । फलं च मोक्षोऽविद्यानिवृत्तिर्वा ।

अपरे वर्णयन्त्युपासनेनाऽऽत्मविषयं विशिष्टं विज्ञानान्तरं भावयेत्तेनाऽऽत्मा ज्ञाय-तेऽविद्यानिवर्तकं च तदेवं नाऽऽत्मविषयं वेदवाक्यजनितं विज्ञानमिति । एतस्मिन्नर्थे

---

विधियुक्तानां वेदान्तानां कार्यपरत्वेऽपि तद्धीनानां तेषां वस्तुपरतेत्याशङ्क्याऽऽह—यथा चेति । विध्युद्देशत्वेन तच्छेषत्वेनेति यावत् । अस्थूलादिवाक्यानामारोपितद्वैतनिषेधेनाद्वयं वस्तु समर्पयतां कथमुपास्तिविधिशेषत्वमित्याशङ्क्याऽऽह—नेत्यादिना । 'ब्रह्म वेद ब्रह्मैव भवति' 'तरति शोकमात्मवित्' इत्यादीनां फलार्पकत्वेनोपास्तिविध्युपयोगमभिप्रेत्याऽऽह—फलं चेति । मोक्षो ब्रह्मप्राप्तिः ।

आत्मोपासनं विधेयमिति पक्षमुक्त्वा पक्षान्तरमाह—अपर इति । तस्यानुपयोगमाशङ्क्याऽऽह—तेनेति । शाब्दस्य ज्ञानस्यासंसृष्टापरोक्षात्मविषयत्वाभावमितिशब्देन हेतूकरोति । ज्ञानान्तरं वेदान्तेषु

---

जिस प्रकार दर्शपूर्णमासादि सम्पूर्ण प्रकरण का दर्शपूर्णमासादिविषयक प्रधानविधिवाक्य-शेषस्वरूप उद्देश्य रूप से ही उपयोग है। उसी प्रकार उपनिषदों के आत्मोपासनसम्बन्धी प्रकरण का भी आत्मोपासन विधि के उद्देश्य से विनियोग है। "यह नहीं, यह भी नहीं", 'वह अक्षर, अस्थूल है" "(सजातीय-विजातीय-स्वगतभेदशून्य) एकमात्र अद्वितीय सत् ही था", "भूखप्यासादि से अतीत वह आत्मा है" इत्यादि श्रुतिवाक्यों का विनियोग उपास्य आत्मा के विशेष स्वरूप को अभिलक्षित करने में है। तथा उसका फल अविद्यानिवृत्ति या मोक्ष है।

---

१. दर्शादिविषयकप्रधानविधिवाक्यशेषत्वेन । २ एवमिति । दर्शादिविषयस्य समस्तस्यैव प्रकरणस्य दर्शादिविधिशेषतया विनियोगवदित्यर्थः । ३ औपनिषदेति—उपास्तिविध्यपेक्षितस्य तत्प्रकरणस्यस्य सर्वस्यैव वाक्यस्य उपास्तिविधिशेषत्वेनैव विनियोग इत्यर्थः । विधिहीनमपि सर्वं वेदान्तवाक्यमात्मोपास्तिविधौ शेषत्वेन विनियुज्यत इति भाव । तत्र तदर्थबोधक देवतास्थानीयोपास्यार्पकत्वेन स्वमधपर च यजमान-स्थानीयोपासकार्पकतया । महावाक्य च स्तावकतयेतिकर्तव्यतात्वेन उपास्तिविधिशेष इत्यभिमानः । ४ विधिशेषत्वेन सम्बन्धः । ५. शाब्दज्ञानविधिवादिभ्योऽन्ये । ६ शाब्दज्ञानाद्विलक्षणम् । ७ विज्ञाना-न्तरमिति । अन्तरशब्देन तस्य शाब्दज्ञानवैजात्य विवक्ष्यते । तथा च विषयज्ञातताऽतिरिक्त यन्मोक्षास्य फल नियोगाधीनं तदुपेत मननादिसहितमात्मविषय विज्ञान वेदान्तेषु विधेयमित्यर्थ । नियोगाधीनमित्यस्य नियोज्य-ज्ञानाधीनमित्यर्थः । ८. सिद्धवस्तु । ९ विधिशेषत्वम् । १० पक्षमिति—मुक्तिफलनाद्दमात्मज्ञान-मुपासनाख्य वेदान्तेषु विधीयत इति पक्षम् । ११. विधेयज्ञानान्तरस्याकिञ्चित्करत्वम् । १२ ननु शब्दस्य मानत्वाधयाविषयमसंसृष्टापरोक्षबोधित्वमेष्टव्यमन्यथाऽमानत्वापत्तेरित्याशङ्क्य समाहित वार्तिके—"शब्दस्वभाव एवैष संसृष्टार्थावबोधनम् । ब्रह्मासंसृष्टरूपत्वात्तेनातो नावगम्यते" ॥८०५॥ इति । बहिरङ्गार्थानुसारादन्तरङ्ग-स्वरूपानुसरणमुचितमिति भावः । बहिरङ्गार्थो लौकिकार्थः । लोके हि संसृष्टमेवार्थं शब्दो बोधयतीति—वेदेऽपि तथा । शब्दस्य संसृष्टपरोक्षबोधित्वे फलितमाह—ब्रह्मेति । तेन शाब्दज्ञानेनेति यावत् ।

---

नाऽऽत्मविषयं वेदवाक्यजनितं विज्ञानमितीति । अत्र भाष्ये पञ्चवार्तिकानि सन्ति । तथाहि—"न हि वाक्या-मुत्थेन ब्रह्मावाक्यार्थरूपकम् । विज्ञानेन परिच्छेत्तुं शक्यते कर्मवत्क्वचित् ॥नानापदार्थसंसृष्टरूपं शब्दात्प्रजायते ।

वचनान्यपि–"विज्ञाय प्रज्ञां कुर्वीत" "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादीनि ।

न, अर्थान्तराभावात् । न च "आत्मेत्येवोपासीत" इत्यपूर्वविधिः । कस्मात् ।

---

विधेयमित्यत्र मानमाह—एतस्मिन्निति ।

पक्षद्वये प्राप्ते प्रथमपक्षं प्रत्याह—नार्थान्तराभावादिति । तत्र नञर्थमेव स्वयं व्याचष्टे—न चेति । शाब्दज्ञानवतो विषयाभावान्न विधिः संभवत्यविद्यातत्कार्यनिवृत्तौ स्वयं फलावस्थत्वाच्चेत्यर्थः । हेतुभागं प्रश्नपूर्वकं विवृणोति—कस्मादित्यादिना । आत्मोपदेशेनानात्मनिषेधद्वारा

---

अन्य शाब्दज्ञानविधिवादी कहते हैं कि उपासना के द्वारा आत्मविषयक शाब्दज्ञान से विलक्षण विजातीय विज्ञान की भावना करना चाहिए। उससे आत्मज्ञान होता है, वही अविद्या निवृत्ति करने वाला है, आत्मविषयक वेदवाक्यजनित विज्ञान उसकी निवृत्ति करने वाला नहीं है। इस अर्थ का प्रतिपादन करने वाले श्रुतिवाक्य भी हैं–"(बुद्धिमान् ब्राह्मण को) ब्रह्म को जानकर उसी में बुद्धि लगानी चाहिए", "अरी मैत्रेयी ! निःसन्देह यह आत्मा ही दर्शन करने के योग्य है (इसे आचार्य तथा शास्त्र द्वारा पहले) श्रवण करना चाहिये, (तत्पश्चात तर्क द्वारा) मनन करना चाहिए फिर निदिध्यासन करना चाहिए", "उसका अन्वेषण करना चाहिए और उसे जानने की इच्छा करनी चाहिए" इत्यादि।

(अपूर्वविधिवादी की शङ्का "शाब्दज्ञान अनुष्ठेय है" इस प्रथम पक्ष का समाधान करते हैं—) ऐसा कहना ठीक नहीं है। क्योंकि इस वचन का अर्थान्तर नहीं हो सकता। "आत्मा है—उसकी ही

---

१ विज्ञायेति । एषु वाक्येषु आत्मोपासनं तत्साक्षात्कारमुद्दिश्य विधीयते । तथा च धीरो धीमान् विज्ञाय आत्मविज्ञानाय प्रज्ञामुपासनां कुर्वीतेति वाक्यार्थः । २ शाब्दं ज्ञानं विधेयमौपासनिकं वा ज्ञानान्तरमिति पक्षद्वयम् । ३ प्रतिज्ञाहेतुभागयोर्मध्ये । ४ अनुष्ठेयाभावात् । ५ फलावस्थत्वाच्चेति । मुमुक्षोरिष्टपुमर्थरूपं यत्कैवल्यं ब्रह्म तस्य तत्स्वरूपत्वात् । अज्ञानमात्रव्यवहितत्वात् ज्ञानादेव तन्निवृत्ते तस्य च वाक्यजत्वेन विध्यनधीनत्वादनुष्ठेयाभावात् विध्यसिद्धर्वेदान्तेषु तदुक्तिरयुक्तेति भावः ।

---

विज्ञानं तेनावाक्यार्थरूपं नैव च गम्यते ॥ शब्दस्वभाव एवैष यत्सृष्टार्थावबोधनम् । ब्रह्मासंसृष्टरूपत्वात्तेनातो नावगम्यते ॥ वाक्यं चातीन्द्रियार्थेषु प्रमाणमिति निश्चितम् । तस्याप्यविषयत्वात्तद्विज्ञानान्तरगोचरः ॥ न चेद्वाक्योत्थविज्ञानपरिच्छेद्यं तदिष्यते । नाऽऽम्नायार्थो भवेत्तर्हि नैव वेदार्थ एव हीति" ॥८०३-८०७॥ वाक्यीयज्ञानेनैव ब्रह्मणः सिद्धत्वात्किं वैधज्ञानान्तरेणेत्याशङ्क्याऽऽह—न हीति । तत्र वैधर्म्यदृष्टान्तमाह—कर्मवदिति । क्वचिद्देशे काले पुंसि वेत्यर्थः ॥ वाक्योत्थज्ञानादब्रह्मणोऽपरिच्छेदे हेतुमाह—नानेति ॥ ननु शब्दस्य मानत्वाद्यथाविषयमसंसृष्टापरोक्षबोधित्वमेष्टव्यमन्यथाऽमानत्वापत्तेरिति । तत्राऽऽह—शब्देति । बहिरङ्गार्थानुसारादन्तरङ्गस्वरूपानुसरणमुचितमिति भावः । शब्दस्य संसृष्टपरोक्षबोधित्वे फलितमाह—ब्रह्मेति । तेन शाब्देन ज्ञानेनेति यावत् ॥ ब्रह्म शब्देनानवगम्यमतीन्द्रियत्वाद्धर्मवदित्याशङ्क्याऽऽह–वाक्यं चेति । यद्यप्यतीन्द्रियार्थेषु धर्मादिषु वाक्यं मानं ब्रह्म चातीन्द्रियं तथाऽपि तस्यासंसृष्टापरोक्षस्य वाक्याविषयत्वाज्ज्ञानान्तरगोचरता तेन चाविद्यानिवृत्तिर्न शाब्दज्ञानेनेत्यर्थः । तदित्यसंसृष्टापरोक्षं ब्रह्मोच्यते ॥ ब्रह्मणो वेदागम्यत्वे तदर्थत्वायोगादौपनिषदत्वविशेषणमनवकाशमिति शङ्कते—न चेदिति । वेदविहितोपायजन्यज्ञानगम्यत्वाद्वेदार्थतेत्यौपनिषदत्वमविरुद्धमित्याह—नैवमिति ॥

आत्मस्वरूपकथनानात्मप्रतिषेधवाक्यजनितविज्ञानव्यतिरेकेणार्थान्तरस्य कर्तव्यस्य मानसस्य बाह्यस्य वाऽभावात्। तत्र हि विधेः साफल्यं यत्र विधिवाक्यश्रवणमात्रजनितविज्ञानव्यतिरेकेण पुरुषप्रवृत्तिर्गम्यते। यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येवमादौ।

न हि दर्शपूर्णमासविधिवाक्यजनितविज्ञानमेव दर्शपूर्णमासानुष्ठानम्। तत्त्वाधिकाराद्यपेक्षानुभावि। न तु "नेति नेति" इत्याद्यात्मप्रतिपादकवाक्यजनितविज्ञानव्यतिरेकेण दर्शपूर्णमासादिवत्पुरुषव्यापारः संभवति। सर्वव्यापारोपशमहेतुत्वात्तद्वाक्यजनितविज्ञानस्य। न ह्युदासीनविज्ञानं प्रवृत्तिजनकमब्रह्मानात्मविज्ञाननिवर्तकत्वाच्च "एकमेवा-

वाक्योत्थज्ञानातिरेकेणेति यावत्। कर्तव्यान्तराभावेऽपि वाक्यजन्यविज्ञानमेव विधेयं स्यादित्याशङ्क्याऽऽह—तत्र हीति।

दृष्टान्तेऽपि वाक्योत्थज्ञानातिरेकेण पुरुषप्रवृत्तिरसिद्धेत्याशङ्क्याऽऽह—न हीति। तदनुष्ठानं तर्हि वाक्यार्थज्ञानाधीनमिति व्यर्थो विधिस्तत्राऽऽह—तच्चेति। अधिकारो विधिपुरुषसम्बन्धस्तत्कृतज्ञानापेक्षमनुष्ठानमित्ययं वाक्यविधिरित्यर्थः। तर्हि प्रकृतेऽपि वाक्योत्थज्ञानव्यतिरेकेण पुरुषव्यापारसंभवाद्विधिसाफल्यमित्याशङ्क्याऽऽह—न त्विति। अथ विमत प्रवर्तकं वैदिकज्ञानत्वाद्विधिवाक्योत्थज्ञानवदित्याशङ्क्य प्रवर्तकविषयत्वमुपाधिरित्याह—न हीति। मिथ्याज्ञानानिवर्तकत्वमुपाध्यन्तर-

उपासना करनी चाहिए" इस वचन मे अपूर्वविधि नही है। किस कारण से नही है ? क्योंकि आत्मस्वरूपकथन और अनात्मप्रतिषेधवचन से होने वाले विज्ञान से भिन्न इसका मानसिक या बाह्य कर्तव्य-सम्बन्धी कोई अन्य अर्थ नही हो सकता। विधि की सफलता वही होती है, जहाँ विधिवाक्य के श्रवण (सिद्धार्थबोधकवाक्य के व्यावर्तन) मात्र से होने वाले विज्ञान के अतिरिक्त पुरुष के अनुष्ठान की कोई दूसरी प्रवृत्ति जानी जाए। जैसे "स्वर्ग की कामना वाला दर्शपूर्णमासादि यागो द्वारा यजन करे" इत्यादि वाक्यो मे हुआ करती है।

उक्त वाक्य मे दर्शपूर्णमाससम्बन्धी विधिवाक्यो से जनित विज्ञान ही दर्शपूर्णमास का अनुष्ठान नही है। उक्त अनुष्ठान तो अधिकारी आदि की अपेक्षा के समान पीछे होने वाला है। किन्तु "नेति नेति" इन आत्मप्रतिपादक वाक्यो से होने वाले विज्ञान के अतिरिक्त दर्शपूर्णमासादि के समान पुरुष-व्यापार सभव नहीं है। इन वाक्यो से होने वाला विज्ञान समस्त व्यापार की निवृत्ति कर देता है। इसलिए उदासीनविज्ञान प्रवृत्ति का जनक नही हो सकता। इसके अतिरिक्त "वह अद्वितीय सत् एक

१ विधिवादिना सप्रतिपत्त्यर्थो हिशब्द। वाक्योत्थज्ञानातिरिक्तस्यैव यागादे विधेयत्व तैरिष्यते न तस्यैवेति भाव। २ सिद्धार्थबोधिवाक्यव्यावर्तनम्। ३ अनुष्ठानम्। ४ उक्तानुष्ठान च। ५ अपेक्षावदिति यावत्। ६ अब्रह्माणि ब्रह्मज्ञान एवमुत्तरत्र। ७ विधिपुरुषसम्बन्ध—नियोज्यनियोजकभावरूप। तत्कृतज्ञान चाय विधि मा प्रवर्तयतीत्याकार बोध्यम्। ८ तर्हीति—पूर्वकाण्डे निरुक्तरीत्या विधिसाफल्ये सतीत्यर्थ। ९ प्रकृतेऽपीति—वेदान्तवाक्येष्वपि। विद्यावस्थायामपीति यावत्। १०. वेदान्तवाक्योत्थ ज्ञानम्। ११. प्रवर्तक साध्य तद्धि स्वसिद्धयर्थं पुरुषप्रवृत्तौ प्रयोजक भवति। तथा च साध्यविषयत्वमुपाधिरित्यर्थ। प्रवर्तकविषयत्वमिति। प्रवर्तकं यद्वाक्य तद्विषयत्व तज्जन्यत्वमित्यर्थ इत्याह।

द्वितीयम्" "तत्त्वमसि" इत्येवमादिवाक्यानाम् । न च तन्निवृत्तौ प्रवृत्तिरुपपद्यते । विरोधात् ।

वाक्यजनितविज्ञानमात्रान्नाब्रह्मानात्मविज्ञाननिवृत्तिरिति चेन्न; "तत्त्वमसि" "नेति नेति" "आत्मैवेदम्" "एकमेवाद्वितीयम्" "ब्रह्मैवेदममृतम्" "नान्यदतोऽस्ति द्रष्टृ" "तदेव ब्रह्म त्वं विद्धि" इत्यादिवाक्यानां तद्वादित्वात् । द्रष्टव्यविधेर्विषयसमर्पकाण्येतानीति चेन्न । अर्थान्तराभावादित्युक्तोत्तरत्वात् । आत्मवस्तुस्वरूपसमर्पकैरेव वाक्यैस्तत्त्वमसीत्यादिभिः श्रवणकाल एव तद्दर्शनस्य कृतत्वाद्द्रष्टव्यविधेर्नानुष्ठानान्तरं कर्तव्यमित्युक्तोत्तरमेतत् ।

माह—अब्रह्मेति । वाक्योत्थज्ञानस्य तन्निवर्तकत्वेऽपि प्रवर्तकत्वं किं न स्यादित्याशङ्क्याऽऽह—न चेति । द्वितीयोपाधेः साधनव्याप्तिं शङ्कते—वाक्येति । ब्रह्मात्मैक्यधीपरवाक्योत्थविज्ञानस्याज्ञानतत्कार्यध्वंसित्वध्रौव्यान्न साधनव्याप्तिरित्याह—नेत्यादिना । तद्वादित्वाद्वस्तुपरत्वादिति यावत् । उक्तानां वाक्यानां विध्यपेक्षितार्थसमर्पकत्वेन तच्छेषत्वं शङ्कितमनुभाषते—द्रष्टव्येति । सिद्धान्तोपक्रमेण समाहितमेतदित्याह—नेति । तदेव स्फुटयति—आत्मेति ।

ही था", 'वही ब्रह्म तू है' इत्यादि श्रुतिवचन अब्रह्म में ब्रह्मज्ञान और अनात्म में आत्मविज्ञान सम्पादन करने वाले है। अब्रह्म और अनात्मविषयकविज्ञान की निवृत्ति होने पर प्रवृत्ति असम्भव है, क्योंकि अनात्मविज्ञाननिवृत्ति और पुरुषप्रवृत्ति में विरोध है।

(फिर शङ्का होती है—) वाक्यजनितविज्ञान के विधिव्यावर्तकमात्र से ही अब्रह्म एवं अनात्मविज्ञान की निवृत्ति नहीं हो सकती। (शङ्का परिहार करते हैं—) ऐसा कहना ठीक नहीं, क्योंकि श्रुतिवाक्य अनात्मविज्ञाननिवृत्ति का ही प्रतिपादन करते हैं—"तू वह है", "यह सब कार्य आत्मा नहीं है यह कारण भी आत्मा नहीं है", "यह सब आत्मा ही है", "वह अद्वितीय एक ही सत है", 'वह अमृतस्वरूप ब्रह्म ही (सबके आगे है)", "(हे गार्गी!) इससे भिन्न कोई द्रष्टा नहीं है', "जिससे वाणी प्रकाशित होती है) उसी को तुम ब्रह्म जानो' इत्यादि। (शङ्का होती है—) ("आत्मा वाऽरे द्रष्टव्य') ये श्रुतिवचन तो द्रष्टव्यविधिविषय को समर्पण करने वाले हैं। (शङ्का परिहार किया जाता है—) ऐसा कहना उचित नहीं। क्योंकि इनका अर्थान्तर नहीं हो सकता'—ऐसा उत्तर हम पहले दे चुके हैं। आत्मवस्तु के स्वरूप के समर्पक 'तत्त्वमसि' आदि महावाक्योंसे ही उनके श्रवणकाल में ही विधि के बिना आत्मसाक्षात्कार के सम्पन्न हो जाने के कारण द्रष्टव्यविधि से अनुष्ठानान्तर का कर्तव्य नहीं है—इस प्रकार उत्तर पहले ही दे चुके हैं।

१ ज्ञानद्वारा वाक्यानां ज्ञानानामिति यावत् । २ विरोधादिति—प्रवृत्तिमिथ्याज्ञाननिवृत्त्योर्मिथो विरोधात् । प्रवृत्तिमिथ्याज्ञाननिवर्तकवाक्योत्थज्ञानयोर्वा विरोधात् सहानवस्थानादित्यर्थः । नहि मिथ्याज्ञानमृते प्रवृत्तिः । न च तत्सम्यग्ज्ञानेन सहावस्थातुमर्हति तन्निवर्त्यत्वादिति भावः । ३ विधिव्यावर्तको मात्रः । ४ निवर्तिरिति । अतो विधिना भाव्यमिति शेषः । विधेयमेव ज्ञानं तन्निवर्तकमित्याशयः । ५ आत्मा वाऽरे द्रष्टव्य इति । ६ आत्मसाक्षात्कारस्य सम्पन्नत्वात् विधिं विनैव । ७ द्वितीयोपाधेः साधनाव्यापकत्वेऽपि प्रथमोपाधेः साधनव्यापकत्वं किं न स्यादित्यर्थः । ८ नापि विध्यपेक्षेति भावः । ९ विषयज्ञानापेक्षितविषयोपस्थापकत्वेन । १० उक्तसमाधानमेव ।

आत्मस्वरूपान्वाख्यानमात्रेणाऽऽत्मविज्ञाने विधिमन्तरेण न [1]प्रवर्तत इति चेन्न। आत्मवादिवाक्यश्रवणेनाऽऽत्मविज्ञानस्य जनितत्वात्कि[2] भोः [3]कृतस्य करणम्। '[4]तच्छ्रवणेऽपि न प्रवर्तत[5] इति चेन्न। अनवस्थाप्रसङ्गात्। यथाऽऽत्मवादि[6]वाक्यार्थश्रवणे विधिमन्तरेण न प्रवर्तते तथा विधिवाक्यार्थश्रवणेऽपि विधिमन्तरेण न प्रवर्तिष्यत इति विध्यन्तरापेक्षा। तथा तदर्थश्रवणेऽपीत्यनवस्था प्रसज्येत।

वाक्यजनितात्मज्ञानस्मृतिसततेः [7]श्रवणविज्ञानमात्रादर्थान्तरत्वमिति चेन्नार्थप्राप्त-

परोक्तमुद्भावयति—आत्मस्वरूपेति। कुत्र 'तर्हि विधिरात्मज्ञाने वा वाक्यश्रवणे वा तदर्थज्ञानस्मृतिसंताने वा चित्तवृत्तिनिरोधे वा नाऽऽद्य इत्याह—नाऽऽत्मवादीति। द्वितीय शङ्कते—तच्छ्रवणेऽपीति। 'अनिष्टार्थवादिवाक्यस्यासत्यादिलक्षणस्य विधिं विना श्रवणात्तएरमादेरपि तस्न हते श्रवणमविरुद्धमित्यभिसधाय" दोषान्तरमाह—नेत्यादिना। तत्त्वमादिश्रवणप्रयोजको "विधिरात्मनोऽपि प्रयुङ्क्ते श्रवणमिति चेन्नैवं स खल्वध्ययनविधिरन्यो वाऽऽद्ये "तदपेक्षया श्रुतस्य तत्त्वमस्यादे. "स्वार्थबोधित्वं कर्मवाक्यवदिति स्वार्थनिष्ठत्वाविशेषो द्वितीये तस्या"प्रमाणत्वात्तदीयस्वपरनिर्वाहकत्व दूरोत्सारितमित्यभिप्रेत्यानवस्था विवृणोति—यथेत्यादिना।

तृतीयमाशङ्कते—वाक्यजनितेति। तत. सा विधेयेति शेष.। तस्या विधेयत्व दूषयति—नेति।

(पुन शङ्का होती है—) किन्तु विधि के विना तो आत्मस्वरूप के अनुवादमात्र से ही आत्म-विज्ञान में पुरुष को प्रवृत्ति नहीं होती (इसलिए प्रवतक के लिए विधि करनी चाहिए)। (सिद्धान्ती इसका खण्डन करता है—) ऐसा कहना ठीक नहीं। आत्मविज्ञान तो आत्मप्रतिपादक श्रुतिवाक्यो क श्रवणमात्र से ही हो जाता है। फिर किए हुए को करने मे कोनसा प्रयोजन सिद्ध होता है? पुरुष उसे श्रवण करने मे भी प्रवृत्त नही होता—ऐसा कहना उचित नही, क्योकि इससे अनवस्था दोष का प्रसङ्ग आ जायगा। जिस प्रकार विधि के विना आत्मवादी वाक्यरूपार्थ श्रवण मे प्रवृत्त नही होता, उसी प्रकार विधि के विना विधिवाक्यरूपार्थ के श्रवण मे भी प्रवृत्त नहीं होगा, इसलिए एक दूसरी विधि की अपेक्षा होगी। उस विध्यन्तर के अर्थ श्रवण मे फिर अन्य विधि के बिना प्रवृत्ति नही होगी—इस तरह अनवस्था का प्रसङ्ग आ जाएगा।

(पूर्वपक्षी शङ्का करता है—) फिर भी वाक्यश्रवणविज्ञान मात्र से वाक्यजनित—आत्मज्ञान की स्मृति का प्रवाह तो इसका अर्थान्तर है (अत उसका विधान करना चाहिए)। (इसका खण्डन

१ प्रवतते इति—पुमानत प्रवतका विधिरुपेय इति शेप। २ कि प्रयोजनम् अकिंचित्करमित्यर्थ। ३ कृतस्य करणमिति। निरस्तसमस्तप्रतिबन्धस्यानुष्ठितसाधनस्याधिकारिणो ज्ञानजन्मैव विधिफल तच्चेद्वाक्य-श्रवणत सिद्ध विध्यानर्थक्य स्पष्टमिति भाव। ४ तच्छ्रवण इत्यादि। यागादावनुष्ठानाय विध्यतिरेकेणा-प्रवृत्तिवत् वाक्यश्रवणायापि विना न प्रवर्ततातो यागादाविव वाक्यश्रवणे विधिरित्यथ। ५ पुमान्। ६ वाक्यरूपार्थ। ७ श्रवणत्यादि—वाक्यश्रवणमात्रात्। तदुत्थज्ञानमात्राच्च स्मृतिसततेरर्थान्तरत्वादुक्त-दोषाभावे न तस्या स्फुट विधयतत्यथ। ८ विधयापयत्व। ९ नद्यास्तीरे पञ्चफलानि सन्तीत्यादि-मिथ्यावाक्यस्य। १० सवस्यापि वाक्यस्य विधे श्रवणमिति पक्ष इति शेप। ११ स्वश्रवण स्वयमेव विधिरित्यर्थ। १२ तत्प्रयुक्तया। १३ स्वार्थतात्पयवत्त्वम्। १४ अप्रमाणत्वादिति—अध्ययनविध्य-तिरिक्तस्य श्रवणविधेरभावात् द्रष्टव्य इत्यादीनामर्हार्थत्वादिति भाव।

त्वात् । यदैवाऽऽत्मप्रतिपादकवाक्यश्रवणादात्मविषयं विज्ञानमुत्पद्यते तदैव तदुत्पद्यमानं तद्विषयं मिथ्याज्ञानं निवर्तयदेवोत्पद्यते । आत्मविषयमिथ्याज्ञाननिवृत्तौ च तत्प्रभवाः स्मृतयो न भवन्ति स्वाभाविक्योऽनात्मवस्तुभेदविषयाः । अनर्थत्वावगतेश्च । आत्मावगतौ हि सत्यामन्यद्वस्त्वनर्थत्वेनावगम्यते । अनित्यदुःखाशुद्ध्यादिबहुदोषवत्त्वादात्मवस्तुनश्च तद्विलक्षणत्वात् ।

तस्मादनात्मविज्ञानस्मृतीनामात्मावगतेरभावप्राप्तिः । पारिशेष्यादात्मैकत्वविज्ञानस्मृतिसंततेरर्थत एव भावात्र विधेयत्वम् । शोकमोहभयाशनायापिपासादिदुःखदोषनिवर्तकत्वाच्च तत्स्मृतेः । विपरीतज्ञानप्रभवो हि शोकमोहादिदोषः । तथा च "तत्र को मोहः

---

अर्थप्राप्तिं विवृणोति—यदैवेति । अनात्मस्मृतिहेत्वज्ञाननिवृत्तौ तत्कार्यस्मृत्यनुपपत्तेः 'स्वभावबलप्राप्तैवाऽऽत्मस्मृति'रित्युक्तमिदानीमनात्मस्मृतेर'नर्थत्वस्यान्वयव्यतिरेकसिद्धत्वाच्चाऽऽत्मस्मृतिः स्वभावप्राप्तेत्याह—अनर्थत्वेति । अनात्मनोऽनर्थत्वनिश्चयाच्च तदीयस्मृत्यनुपपत्तावितरस्मृतिर'र्थप्राप्तेत्याह—आत्मावगताविति । आत्मनश्च 'परमेष्टत्वावगमादयंप्राप्ता' तदीयस्मृतिरित्याह—आत्मवस्तुनश्चेति ।

अर्थप्राप्त्या विधेयत्वाभावमुपसंहरति—तस्मादिति । अनात्मस्मृतिहेत्वज्ञानाभावादिति तच्छब्दार्थः । अर्थतश्चिवेकरसात्मस्वभावबलादिति यावत् । दृष्टफलत्वाच्चाऽऽत्मस्मृतिर्न विधेयेत्याह—शोकेति । मिथ्याज्ञानमेव सा निवर्तयति न शोकादीत्याशङ्क्याऽऽह—विपरीतेति । आत्मस्मृतेः शोकादिनिवर्तकत्वे मानमाह—तथा चेति ।

---

किया जाता है— ) ऐसा कहना ठीक नहीं है। क्योंकि उसकी प्राप्ति तो अर्थतः है ही। जब भी आत्मप्रतिपादक वाक्य के श्रवण से आत्मविषयक ज्ञान उत्पन्न होता है, उसी समय ही वह उत्पन्न होने वाला ज्ञान आत्मविषयक मिथ्याज्ञान की निवृत्ति करता हुए उत्पन्न होता है। तथा आत्मविषयक मिथ्याज्ञान की निवृत्ति होने पर, तज्जनित शास्त्रानपेक्ष, अनात्मवस्तुभेदविषयक स्मृतियाँ भी नहीं होती। इसके अतिरिक्त अनात्मवस्तुभेदविषयक स्मृतियाँ अनर्थफलक है। ऐसा बोध होने पर उनकी निवृत्ति नहीं होती। आत्मज्ञान हो जाने पर (अनात्मवस्तुओं मे अनर्थत्वनिश्चय से) अन्य वस्तुओं मे अनर्थत्वबुद्धि होने लगती है, क्योंकि अनात्म वस्तुएँ अनित्य, दुःख और अशुद्धतादिरूप बहुत दोषों से युक्त हैं। आत्मवस्तु तो (निरतिशय-आनन्दस्वरूप, विधि प्रयत्न के बिना सिद्ध) इससे विलक्षण है।

इसलिए आत्मावबोध हो जाने पर अनात्मविज्ञानजनित स्मृतियों का अभाव हो जाता है। अन्त मे आत्मैकत्वविज्ञानसम्बन्धी स्मृति की सन्तति अर्थतः ही प्राप्त होने से विधि का विषय नहीं है; क्योंकि आत्मस्मृति तो शोक, मोह, भय, भूख-प्यासादि दुःख और दोषों की निवृत्ति करने वाली है। शोकमोहादि दोष तो विपरीतज्ञान से उत्पन्न होते है। इस प्रकार "उस आत्मा मे एकत्व देखने वाले को

---

१. शास्त्रानपेक्षा। २ विवेकरसात्मस्वरूपसामर्थ्यप्राप्तैव। ३ अनर्थफलकत्वस्य। ४ परिशेषप्राप्तेत्यर्थः। ५ निरतिशयानन्दरूपत्वावगमादित्यर्थः। ६ विधिप्रयत्नमन्तरेण सिद्धा।

कः शोको विद्वान्न बिभेति कुतश्चन" "अभयं वै जनक प्राप्तोऽसि" "भिद्यते हृदयग्रन्थिः" इत्यादिश्रुतयः ।

निरोधस्तर्ह्यर्थान्तरमिति चेत् । अथापि स्याच्चित्तवृत्तिनिरोधस्य वेदवाक्यजनितात्मविज्ञानादर्थान्तरत्वात् । तन्त्रान्तरेषु च कर्तव्यतयाऽवगतत्वाद्विधेयत्वमिति चेन्न । मोक्षसाधनत्वेनानवगमात् । न हि वेदान्तेषु ब्रह्मात्मविज्ञानादन्यत्परमपुरुषार्थसाधनत्वेनावगम्यते । "आत्मानमेवावेत्तस्मात्तत्सर्वमभवत्" "ब्रह्मविदाप्नोति परम्" "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" "आचार्यवान्पुरुषो वेद" "तस्य तावदेव चिरम्" "अभयं हि वै ब्रह्म भवति । य एवं वेद" इत्येवमादिश्रुतिशतेभ्यः ।

चतुर्थमुत्थापयति—निरोधस्तर्हीति । यदि वाक्योत्थज्ञानादेरविधेयत्वं तर्हि चित्तवृत्तिनिरोधो मुक्तिसाधनत्वेन विधीयतां तस्योक्तज्ञानादेरर्थान्तरत्वादित्यर्थः । चोद्यमेव विवृणोति—अथापीति । अर्थान्तरत्वात्तस्य विधेयतेति शेषः । तस्य मुक्तिहेतुत्वेन विधेयत्वे योगशास्त्रं संवादयति—तन्त्रान्तरेष्विति । 'अथ योगानुशासनमिति' निःश्रेयसहेतुः समाधिः सूत्रितस्तस्य च लक्षणमुक्तं योगश्चित्तवृत्तिनिरोध इति । तन्निरोधावस्थायां चाऽऽत्मनः स्वरूपप्रतिष्ठत्वं कैवल्यमाख्यातं तदा द्रष्टुः स्वरूपेऽवस्थानमित्येवं योगशास्त्रे मुक्तिहेतुत्वेनेष्टो निरोधविधिरित्यर्थः । योगशास्त्रादपि बलवतीं श्रुतिमाश्रित्योत्तरमाह—नेत्यादिना ।

शोक मोह नहीं हो सकता", "उस ब्रह्म के आनन्द को न जानने वाला विद्वान् किसी से भयभीत नहीं होता।" "(याज्ञवल्क्य ने कहा—) हे जनक ! तुम निःसन्देह अभय पद को प्राप्त कर चुके हो", "(जो कारणरूप से पर और कार्यरूप से अपर है, उस परावर ब्रह्म तत्त्व का साक्षात्कार हो जाने पर इस जीव की) आत्मानात्माध्यासरूप हृदय की ग्रन्थि टूट जाती है" इत्यादि श्रुतियाँ इसमें प्रमाण हैं।

(पुनः चौथी शङ्का होती है—) निरोध भी तो मोक्ष का साधन है अर्थात् वेदवाक्यजनित आत्मविज्ञान से अर्थान्तर होने एवं शास्त्रान्तर में (मोक्ष के लिए) कर्तव्यरूप से अवगत होने के कारण चित्तवृत्तिनिरोध की विधिपरकता तो है ही। (शङ्का का समाधान किया जाता है—) ऐसा कहना ठीक नहीं। क्योंकि निरोध को मोक्ष के साधन के रूप में नहीं जाना जाता है। वेदान्त शास्त्रों में ब्रह्मात्मविज्ञान के अतिरिक्त परम पुरुषार्थ की उपलब्धि के लिए साधनरूप से अन्य किसी को स्वीकृति नहीं दी गई है। "उसने अपने को ही जाना (मैं ब्रह्म हूँ)", "इसी विज्ञान से वह सर्वरूप हो गया", "ब्रह्मज्ञानी परतत्त्व को प्राप्त कर लेता है", "लोक में जो कोई उस परब्रह्म को जान लेता है, वह ब्रह्म ही हो जाता है", "वैसे ही इस लोक में आचार्यवान् पुरुष ही सत्य को जानता है", "उस तत्त्ववेत्ता के लिए विदेह-कैवल्य प्राप्त करने में उतनी देर है, जब तक कि वह (प्रारब्धकर्म को भोग कर वर्तमान देहबन्धन से)

१. आहुरिति शेषः। २. निरोधस्य। ३. आदिना "तमेव विदित्वेत्यादिग्रहः"। ज्ञानमेव केवलं कैवल्यसाधनं न निरोधः श्रुतिविरोधेन योगशास्त्रस्यानवकाशत्वादिति भावः। ४. मनोनिरोधस्य। ५. आरभ्यते। ६. सूत्रेण। ७. अभिमतः।

'अनन्यसाधनत्वाच्च निरोधस्य न ह्यात्मविज्ञानतत्स्मृतिसंतानव्यतिरेकेण चित्त-वृत्तिनिरोधस्य 'साधनमस्ति। अभ्युपगम्येदमुक्तं 'न तु ब्रह्मविज्ञानव्यतिरेकेणान्यन्मोक्ष-साधनमवगम्यते।

आकाङ्क्षाभावाच्च भावनाभावः। यदुक्तं यजेतेत्यादौ किं केन कथमिति 'भावनाकाङ्क्षायां फलसाधनेतिकर्तव्यताभिराकाङ्क्षापनयनं यथा' तद्वदिहाप्यात्मविज्ञान-विधावुपपद्यत इति। तदसत्। एकमेवाद्वितीयं तत्त्वमसि नेति नेत्य'नन्तरमबाह्य-

चित्तवृत्तिनिरोधस्य मुक्तिहेतुत्वेऽपि न विधेयत्वं विधिं विना 'तत्सिद्धेरित्याह—अनन्यति। न तावद्यया'कथंचिन्निरोधो विधेयः सर्वस्यापि तत्सम्भवाद्विधिवैयर्थ्यात्तापि 'सर्वात्मना तन्निरोधो विधेयो ज्ञानादेव तत्सिद्धेर्विध्यानर्थक्यादित्यर्थः'। नान्यः पन्था विद्यते ज्ञानादेव तु कैवल्यमित्यादि-शास्त्रमनुसरन्नुपेत्यवाद त्यजति—अभ्युपगम्येति। निरोधस्य मुक्तिहेतुत्वमिदमा परामृष्टम्। "योगशास्त्रमपि श्रुतिस्मृतिविरोधे "न प्रमाणम्। "एतेन योगः प्रत्युक्त "इति न्यायादिति भावः।

वेदान्तेषु विधेयाभावोक्त्या विधिर्निरस्तः सम्प्रत्यंशत्रयवती भावना तेष्वस्तीत्युक्तं दूषयति—आकाङ्क्षेति। "तदेव स्फुटयितुमुक्तमनुवदति—यदुक्तमिति। आगमावष्टम्भेन निराचष्टे—तदसदिति।

मुक्त नहीं हो जाता', "जो कोई उक्त आत्मा को अभय ब्रह्म समझता है, वह अभय ब्रह्मस्वरूप ही हो जाता है, इसमें किसी प्रकार का सन्देह नहीं" इत्यादि सैंकड़ों श्रुतियाँ इस (ब्रह्मात्मविज्ञानमात्र साधन) में प्रमाण हैं।

चित्तवृत्तिनिरोध में भी ज्ञान ही साधन होने के कारण आत्मविज्ञान एवं उसकी स्मृति की संतति के अतिरिक्त चित्तवृत्तिनिरोध का विधि आदि रूप दूसरा साधन नहीं है। यह केवल अभ्युपगम-वाद ही है, सिद्धान्त नहीं है क्योंकि वस्तुतः (श्रुतियों और स्मृतियों में) ब्रह्मविज्ञान के अतिरिक्त मोक्ष का कोई अन्य साधन नहीं जाना जाता।

(अब अंश त्रयवती भावना का खण्डन करते हैं—) आत्मविज्ञान में किसी प्रकार की आकांक्षा न होने के कारण उसमें भावना का भी अभाव है। जो तुमने कहा कि 'यजन करे' इत्यादि विधि में 'किसका किसके द्वारा और किस प्रकार (यजन करे)' ऐसी भावना की आकांक्षा होने पर जिस प्रकार फल, साधन और इतिकर्तव्यता द्वारा आकांक्षा निवृत्त हो जाती है, उसी प्रकार यहाँ आत्मविज्ञान-सम्बन्धी विधियों में भी उसकी सम्भावना की जाती है—ऐसा तुम्हारा मत उचित नहीं ठहरता, क्योंकि "(हे सोम्य!) नामरूपात्मक जगत् (सजातीय, विजातीय और स्वगत भेदशून्य) एकमात्र अद्वितीय सत् ही था", '(हे श्वेतकेतु!) वही तू है', "ब्रह्म (सर्वोपाधिविशेष निरास द्वारा) नेति नेति है", 'वह यह ब्रह्म जातिव्यक्तिहीन और अबाह्य है", "(सबका अनुभव करनेवाला) यह आत्मा ही ब्रह्म

१ ज्ञानादन्यत्साधनं नास्ति यस्य। २ विध्यादिरूपम्। ३ कस्मादभ्युपगमवादोऽयं सिद्धान्तः कुतो न स्यादित्यत आह—न त्विति। श्रुतौ स्मृतौ चेति शेषः। ४ भावनाया भाव्याद्याकाङ्क्षायां सत्याम्। ५ भवति। ६ जातिव्यक्तिहीनम्। ७ ज्ञानादेव चित्तवृत्तिनिरोधस्य सिद्धत्वादित्यर्थः। ८ कादाचित्कः। ९ सार्वदिकः। १० ननु निरोधस्य मुक्तिहेतुत्वं तदा द्रष्टुः स्वरूपेऽवस्थानमित्यादौ योगशास्त्रे प्रसिद्धमित्यत आह—योगेति। ११ सति। १२ एतेनेति। कपिलमतनिरासेन पातञ्जलमतं निरस्तं वेदितव्यम्। १३ ब्र. सू. २-१-३। १४ सङ्ग्रहवाक्यमेव।

मयमात्मा ब्रह्मे'त्यादिवाक्यार्थविज्ञानसमकालमेव 'सर्वाकाङ्क्षाविनिवृत्तेः । न च वाक्यार्थविज्ञाने विधिप्रयुक्तः 'प्रवर्तते । विध्यन्तरप्रयुक्तौ चानवस्थादोषमवोचाम । न चैकमेवाद्वितीयं ब्रह्मे'त्यादिवाक्येषु विधिर'वगम्यते । आत्मस्वरूपान्वाख्यानेनैवावसितत्वात्' ।

'वस्तुस्वरूपान्वाख्यानमात्रत्वादप्रामाण्य'मिति चेत् । अथापि स्याद्यथा सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्येवमादौ ' वस्तुस्वरूपान्वाख्यानमात्रत्वादप्रामाण्यमेवमात्मार्थवाक्यानामपीति चेन्न । विशेषात् । न वाक्यस्य वस्त्वन्वाख्यानं क्रियान्वाख्यानं वा

विधिमन्तरेण वाक्यार्थज्ञाने प्रवृत्त्ययोगादबुद्धमेव ज्ञानं सर्वाकाङ्क्षानिवर्तकमित्याशङ्क्याऽऽह—न चेति । यथा कर्मकाण्डे स्वाध्यायविधेरर्थावबोधपर्यन्तत्वेन ज्योतिष्टोमादिविध्यर्थज्ञाने विध्यन्तरं नापेक्षते तथा ज्ञानकाण्डेऽपि स्यादित्यर्थः । तत्रापि वेदः 'कृत्स्नोऽधिगन्तव्य इति विध्यन्तरप्रयुक्तमेव वाक्यार्थज्ञानमित्याशङ्क्याऽऽह—विध्यन्तरेति । 'श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च न विधिशेषत्वं वेदान्तानामित्याह—न चेति ।

'वेदान्ताः स्वार्थे न मानं सिद्धार्थवाक्यत्वात्सोऽरोदीदित्यादिवदित्यनुमानात्तेषां विधिशेषत्वं प्रामाण्यार्थमेष्टव्यमिति शङ्कते—वस्तुस्वरूपेति । तदेवानुमानं प्रपञ्चयति—अथापीति । विधेरश्रुतत्वेऽपीति यावत् । फलवन्निश्चितज्ञानाजनकत्वमुपाधिरिति मन्वानः समाधत्ते—न विशेषादिति ।

है।''—इत्यादि श्रुतिवचनों के अर्थ का ज्ञान होने के साथ ही (किं, केन, कथरूपा) सब प्रकार की आकाक्षाएं निवृत्त हो जाती हैं। और एक बात यह भी है कि अधिकारी वाक्यार्थज्ञान में विधि से प्रेरित होकर प्रवृत्त नहीं होता। विध्यन्तर का प्रयोग मानने से अनवस्था दोष होता है—यह पहले ही कह आए है । इसके अतिरिक्त "एकमेवाद्वितीय ब्रह्म" इत्यादि वाक्यों में विधि का श्रवण नहीं होता, क्योंकि उनकी सफलता तो आत्मस्वरूप मात्र के अनुवाद में ही है ।

(पुन शङ्का होती है—) चित् एकरस आत्मस्वरूप के अनुवाद मात्र होने से वेदान्तवाक्यों की अप्रामाणिकता सिद्ध हो जाती है। जैसे "वह रोया, जो रोया, वह रुद्र का रुद्रत्व है" इत्यादि वाक्यों में वस्तुस्वरूप का अनुवादमात्र होने से वह अप्रामाण्य है, वैसे ही आत्मविषयक वाक्य भी अप्रामाण्य हैं—ऐसा कहने में क्या हानि है? (इसका परिहार किया जाता है—) ऐसा कहना ठीक नहीं, क्योंकि आत्मविषयक वाक्यों की विशेषता है । वस्तु का अनुवाद अथवा क्रिया का अनुवाद ही वाक्य के

१. सर्वेत्यादि—किं केन कथमित्याकाङ्क्षासु निरपेक्षहेतुरज्ञानं तस्य वाक्योत्थप्रत्यग्भानेन हानाद्भावत्रयवती भावना वेदान्तेषु सम्भाव्यते अज्ञाने सत्येवाकाङ्क्षाद्वारातादृश्या भावनाया सम्भवात्ततो न तेषु विधिरिति भाव । तदुक्त वार्तिके—"सर्वाकाङ्क्षैकहेतोश्च प्रत्यग्विज्ञानहानत । न भावनेह सम्भाव्या मोहे सत्येव सा यत" इति ॥८५३॥ २ अधिकारी । ३ श्रूयते । ४. सफलत्वात् । ५. वस्त्विति चिदेकरसात्मस्वरूपानुवादमात्रत्वादित्यर्थ. । प्रवर्तकनिवर्तकधीजनकत्वाभावो मात्रशब्दार्थ. । ६. वेदान्तानाम् । ७ सार्थ. । ८. श्रुतस्याविधिशेषत्वरूपस्वार्थस्य हानिरश्रुतविधे' कल्पना । ९ वेदान्ता इति । वेदान्तेषु विधिनिरासे—नात्मस्वरूपमात्रावसायित्वमुक्तमेतावता सप्रतीत्यादि ।

प्रामाण्याप्रामाण्यकारणं किं तर्हि [1]निश्चितफलवद्विज्ञानोत्पादकत्वम् । तद्यत्रास्ति तत्प्रमाणं वाक्यं यत्र नास्ति तदप्रमाणम् ।

किंच भोः पृच्छामस्त्वामात्मस्वरूपान्वाख्यानपरेषु वाक्येषु फलवन्निश्चितं च विज्ञानमुत्पद्यते न वा । उत्पद्यते चेत्कथमप्रामाण्यमिति । किंवा न पश्यस्य[2]विद्याशोकमोहभयादिसंसार[3]बीजदोषनिवृत्तिं विज्ञानफलम् । न शृणोषि वा किं "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" । "मन्त्रविदेवास्मि नाऽऽत्मवित्सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु" इत्येवमाद्युपनिषद्वाक्यशतानि । एवं विद्यते किं

नत्रर्थं स्पष्टयति—न वाक्यस्येति । विशेषं व्याचष्टे—किं तर्हीति । तस्य प्रामाण्यप्रयोजकत्वमन्वयव्यतिरेकाभ्यां दर्शयति—तद्यत्रेति ।

सामान्यन्यायं प्रकृते योजयन्पृच्छति—किं चेति । किं तेषु तादृग्ज्ञानमुत्पद्यते न वेति प्रश्नार्थः । द्वितीये[4]ऽनुभवविरोधः स्यादिति मत्वा पक्षान्तरमनूद्य प्रत्याह—उत्पद्यते चेदिति । प्रामाण्ये हेतुसद्भावान्नाप्रामाण्यमित्यर्थः । निश्चितज्ञानजनकत्वेऽपि फलवत्त्वविशेषणमसिद्धमित्याशङ्क्याऽऽह—किंवेति । विद्वदनुभवफलश्रुतिसिद्धं विशेषणमिति भावः । [5]दृष्टान्तं विघटयितुं प्रश्नान्तरं प्रस्तौति—एवमिति ।

प्रामाण्य या अप्रामाण्य मे कारण नही है । तो फिर क्या कारण है ? निश्चित फल वाले विज्ञान को उत्पन्न करना कारण है । यह जिसमे है, वह वाक्य प्रामाणिक है, जिसमे नही है, वह वाक्य अप्रामाणिक है ।

अच्छाजी तो हम तुमसे पूछते हैं—आत्मस्वरूप के अनुवादपरक वाक्यो (के श्रवण) से फलयुक्त और निश्चित विज्ञान उत्पन्न होता है अथवा नही । यदि उत्पन्न होता है तो अप्रामाण्य कैसे हो सकता है ? अथवा क्या तुम अविद्या, शोक, मोह और भयादि मूलाज्ञान की निवृत्ति होना विज्ञान का ही फल है—ऐसा नही देखते हो ? और क्या तुमने श्रुतिवाक्य भी श्रवण नहीं किए हैं—"उस समय या उस आत्मा मे एकत्व देखने वाले का क्या शोक और मोह हो सकता है ? अर्थात् नही हो सकता (ये तो आत्मा को न जानने वाले को ही हुआ करते है)", "हे भगवन् ! मैं केवल शब्दार्थमात्र ही जानता हूँ, आत्मा को मैं नहीं जानता, (मैने आप जैसे महापुरुषो से सुना है, आत्मज्ञानी शोक को पार कर जाता है) और हे भगवन् ! मैं तो शोक करता हूँ, ऐसे मुझ शोकग्रस्त को शोक से पार कर देवें अर्थात् मुझे अभय प्राप्ति करा देवें"—इस प्रकार सैकडो उपनिषद् वाक्य है । (पुन पूर्वपक्षी से

१ निश्चितेति किम् ? 'योषा वा गौतमाग्निरित्यादौ' मा भूत् । तस्य सफलत्वेऽप्युपासनस्यैवानिश्चयात्मकत्वात् । फलवदिति किम् ? 'सोऽरोदीदित्यत्र' मा भूत् । विज्ञानेति किम् ? हुफडादिशब्दाना मन्त्राङ्गतया फलवत्त्वेन तत्र मा भूदिति ॥ अत्र "सोऽरोदीदित्यस्य बर्हिषि रजतं न देयमिति" वाक्यशेषताऽवगन्तव्या । स—देवैर्निरुद्धोऽग्निः । २ अविद्याऽत्र कार्याविद्या अनित्यादिषु नित्यादिबुद्धिरूपा ग्राह्या । ३. बीजभूता दोषो मूलाज्ञानम् । ४ विद्वदनुभवविरोध फलश्रुतिविरोधश्च । ५ "सोऽरोदीदिति" दृष्टान्तं निरसयितुमित्यर्थः । उक्तानुमानाङ्गत्वं तस्य निरसयितुमिति यावत् ।

सोऽरोदीदित्यादिषु निश्चितं फलवच्च विज्ञानम्। न चेद्विद्यतेऽस्त्वप्रामाण्यम्। तदप्रामाण्ये सत्यपि फलवन्निश्चितविज्ञानोत्पादकस्य किमित्यप्रामाण्यं स्यात्। तदप्रामाण्ये च दर्शपूर्णमासादिवाक्येषु को विश्रम्भः।

ननु दर्शपूर्णमासादिवाक्यानां पुरुषप्रवृत्तिविज्ञानोत्पादकत्वात्प्रामाण्यम्। आत्मविज्ञानवाक्येषु तन्नास्तीति। सत्यमेवम्। नैष दोषः। प्रामाण्यकारणोपपत्तेः।

---

वेदान्तेष्विवेति यावत्। किंवा नेति शेषः। आद्ये साध्यवैकल्यं मत्वा द्वितीयं दूषयति—न चेदिति। तर्हि तद्दृष्टान्तेन तत्त्वमस्यादेरपि स्यादप्रामाण्यमित्याशङ्क्याऽऽह—तदप्रामाण्य इति। विमतं स्वार्थे मानं यथोक्तज्ञानजनकत्वाद्दर्शादिवाक्यवदिति भावः। विपक्षे दोषमाह—तदप्रामाण्ये चेति।

प्रवर्तकज्ञानजनकत्वमुपाधिरिति शङ्कते—नन्विति। साधनव्याप्तिं धुनीते—आत्मेति। प्रवर्तकधीजनकत्वं धर्मिणि नास्तीत्यङ्गीकरोति—सत्यमिति। तर्हि यथोक्तोपाधिसद्भावादनुमानानुत्थानमित्याशङ्क्याऽऽह—नैष दोष इति। न हि प्रवर्तकधीजनकत्वं प्रामाण्ये कारणं निषेधवाक्येष्वप्रामाण्यप्रसङ्गात्। न च निवर्तकधीजनकत्वमपि तथा विधावप्रामाण्यप्रसङ्गात्। नोभयं प्रत्येकमु-

---

पूछते हैं—) क्या 'वह रोया' इत्यादि वाक्यों में इसी प्रकार निश्चित और फलयुक्त विज्ञान है? (दूसरी बात का खण्डन करते हैं—) यदि (आत्मपरक वाक्यों से सफल और निश्चित विज्ञान) उत्पन्न नहीं होता है तो भले ही उनका अप्रामाण्य रहे। उनके अप्रामाण्य होने से फलयुक्त और निश्चित ज्ञान उत्पन्न करने वाले आत्मवाक्यों की अप्रामाणिकता क्या होगी? और उसे अप्रामाणिक मानने से दर्शपूर्णमासादि वाक्यों में विश्वास ही क्या होगा?

(पूर्वपक्षी शङ्का करता है—) दर्शपूर्णमासादि वाक्यों की प्रामाणिकता तो पुरुषप्रवृत्ति के प्रयोजक विज्ञान के उत्पादक होने से है। आत्मविज्ञान वाक्यों में प्रवृत्ति धीजनकत्व नहीं है।

---

१ अप्रामाण्यमिति। तथा चोक्तोपाधिमत्त्वात्प्रागनुमानानुत्थानमिति भावः। २ को विश्रम्भः—का विश्वासः। उक्तज्ञानजनकस्यापि तत्त्वमस्यादेरमानत्वे विधिवाक्यमप्यमानं स्यात्तथा च मानत्वं न क्वापि भवदिति भावः। ३ प्रवृत्तिविज्ञानेति प्रवृत्तिप्रयोजकज्ञानेत्यर्थः। ४ प्रामाण्यमिति—तथा च न दर्शादिवाक्यानां निश्चितफलवद्धीजनकतया मानत्वं किं तु प्रवर्तकधीजनकत्वेनेति भावः। ५ प्रवर्तकधीजनकत्वे। ६ प्रामाण्यकारणोपपत्तेरिति। विमतं मानं तत्कारणवत्त्वात् सम्मतवदित्यर्थः। ७ आद्यं साध्यवैकल्यमिति यथोक्तज्ञानसत्त्वे तत्र स्वार्थे मानत्वस्याभ्युपगन्तव्यत्वप्रौव्यादेव। तत्र स्वार्थे मानत्वाभावाभ्युपगमे साध्यस्याभाव इत्यर्थः। ८ दृष्टान्ते साध्यवैकल्यम्। ९ अप्रामाण्यमिति। यथोक्तज्ञानजनकत्वात्। तथा चोपाधिः साधनव्यापकतेति भावः। १० वेदान्तवाक्यम्। ११ अतिप्रसङ्गरूपम्। १२ पूर्ववादिप्रोक्तं साधनव्यापकत्वं निरस्यति। १३ पक्षे। १४ तर्हीति—धर्मिणि प्रवर्तकधीजनकत्वाङ्गीकारे। दृष्टान्ते च तत्सत्त्वाभ्युपगम इत्यर्थः। १५ किं च विमतमनुमानम् बाधकत्वं भर्ति प्रवर्तकज्ञानजनकत्वात् जरद्गवादिवाक्यवदित्यभीष्ट (पूर्वपक्षाभिमत) व्यतिरेक (सत्प्रतिपक्षत्व) निराचष्टे—नैष इति। १६ न हि प्रवर्तकेत्यादि—तथा च प्रवर्तकधीजनकत्वादीनां प्रामाण्यकारणत्वासंभवान्निश्चितत्वस्य बाधाभावात् फलवन्निश्चितज्ञानजनकत्वस्यैव तथात्वाद्विदां तत्त्वावबोधस्य साम्यवदेव-निश्चयात्तत्र च प्रवर्तकज्ञानजनकत्वस्याभावात् साध्याव्यापकतया तस्योपाधित्वमेव न घटते इति भावः।

प्रामाण्यकारणं च यथोक्तमेव नान्यत् । अलंकारश्चायं यत्सर्वप्रवृत्तिबीजनिरोधफलवद्विज्ञानोत्पादकत्वमात्मप्रतिपादकवाक्यानां नाप्रामाण्यकारणम् ।

यत्तूक्तं विज्ञाय प्रज्ञां कुर्वीतेत्यादिवचनानां वाक्यार्थविज्ञानव्यतिरेकेणोपासनार्थत्वमिति । सत्यमेतत् । किंतु नापूर्वविध्यर्थता पक्षे प्राप्तस्य नियमार्थतैव ।

---

भयकारणत्वाभावेनाप्रामाण्याविति भावः । वेदान्तेषु प्रवर्तकबोधजनकत्वाभावो न केवलमदोषः किंतु गुण इत्याह—अलंकारश्चेति । आत्मानं चेदित्यादिश्रुतेरेतद्बुद्ध्वेत्यादिस्मृतेश्चाऽऽत्मज्ञानं कृतकृत्यतानिदानम् । न च ज्ञानस्य प्रवर्तकत्वे तद्युक्तं प्रवृत्तीनां क्लेशाक्षेपकत्वादतो यथोक्तज्ञानजनकत्वं वाक्यानां भूषणमेवेत्यर्थः ।

शब्दोत्थं ज्ञानं विधेयमिति प्रतिक्षिप्य पूर्वोक्तपक्षान्तरमनुवदति—यत्तूक्तमिति । उपासनार्थत्वमित्यात्मोपासनेन तत्साक्षात्कारं भावयेदित्येवमर्थत्वमित्यर्थः । अभ्युपगमवादेन परिहरति—सत्यमिति । यथोक्तेषु वाक्येष्वात्मोपासनं तत्साक्षात्कारमुद्दिश्य विधीयते चेत्प्रकृतेऽपि वाक्ये तत्संभवात्सापूर्वविधिरिति प्रक्रमो भज्येतेत्याशङ्क्याऽऽह—किंत्विति । कथं तर्हि विध्यङ्गीकारवाचोयुक्तिरित्याशङ्क्याऽऽह—पक्षेति । यथा पक्षे प्राप्तस्यावघातस्य व्रीहीनवहन्तीति नियमरूपो विधिरङ्गीकृतस्तथाऽऽत्मोपासनस्यापि पक्षे प्राप्तस्य तदेव कर्तव्यं नानात्मोपासनमिति यो नियमस्तदर्थता प्रकृतवाक्यस्येति न प्रक्रमविरोधोऽस्तीत्यर्थः ।

---

(सिद्धान्ती समाधान करता है—) यह सत्य है, हमे अङ्गीकार है, किन्तु इसमे कोई दोष नहीं है। क्योंकि (आत्मविषयक वाक्यों में भी) प्रामाण्य का कारण सिद्ध ही है। प्रामाण्य का कारण उपरोक्त ही है, अन्य नही। और यह तो शोभा की बात है कि समस्त प्रवृत्ति के बीज का निवृत्तिफलक विज्ञान आत्मप्रतिपादक वाक्यो से उत्पन्न होता है, यह उसकी अप्रामाणिकता का कारण नहीं है।

इसके अतिरिक्त जो यह कहा गया है कि "बुद्धिमान् ब्राह्मण को उस ब्रह्म को ही जानकर उसी मे बुद्धि लगानी चाहिये" इत्यादि श्रुतिवचन ज्ञान से भिन्न होने से उपासना के लिए है। यह कहना ठीक है। किन्तु यह अपूर्वविधि के लिए नही हो सकते। बल्कि विकल्प से प्राप्त उपासना का

---

१ अत्रासिद्धिमाशङ्क्याऽऽह—प्रामाण्येति । २ अलङ्कारश्चायमिति । ये वेदान्ताना मानत्वमुपयन्ति तेषामेषोऽलङ्कारो यदशेषप्रवृत्तीना कारणीभूतमिथ्याज्ञानरागादिनिवृत्तिफलकविज्ञानजनकत्वं वेदान्तानाम् अन्यथा विधिशेषत्वेन वस्तुनि प्रामाण्यासिद्धिरित्यर्थः । ३ निवृत्तिफलकेत्यर्थः । ४. शब्दोत्थज्ञानभिन्नत्वेन । ५ अप्रामाण्यादिति । न च विधौ प्रवृत्तिजनकत्वं निषेधे च निवृत्तिजनकत्वं प्रामाण्यप्रयोजकं स्यादिति वाच्यं प्रयोजकाननुगमे प्रयोज्यस्य प्रामाण्यस्याननुगमापातात् । अन्यतरत्वमपि निरूप्यमाणं न प्रत्येकातिरिक्तमिति ध्येयम् । तद्धि भेदद्वयावच्छिन्नप्रतियोगिकभेदवत्त्वरूपं प्रत्येकमेव पर्यवस्यतीति भावः । ६ 'बुद्धिमान् स्यात्—।" गी० । ७ क्लेशप्रयोजकत्वात् । ८ अत इति—प्रवर्तनज्ञानस्य कृतार्थताऽप्रयोजकत्वादित्यर्थः । ९. पक्षं निरस्य । १० उपासनाऽभिन्नं ज्ञानान्तरं विधेयमिति पक्षम् । ११. अभ्युपगमवादेनेति—साक्षादेव भाष्यकृता विवक्षितो नियमविधिरिति किं नेष्यत इत्याशङ्क्य समाहितं वार्तिके—"न कश्चिदपि संभाव्यो यथोक्तन्यायगौरवात् । विधिर्यतोऽभ्युपगमान्नियमोक्तिरियं ततः" ॥६२२॥ इति । आत्मधियो नित्यप्राप्तत्वप्रापकन्यायस्य बलीयस्त्वादित्याह—यथोक्तन्यायगौरवादिति । अभ्युपगमादिति—विधिमभ्युपेत्यापि वेदान्तानां वस्तुपरत्वं वदयामीत्येव विवक्षित्वा पक्षे प्राप्तस्य नियमार्थतैवेतीयं नियमभाष्योक्तिरित्यर्थः । १२. विरुध्येत । १३. अवघातेनैव तुषविमोकः कर्तव्यो न नखविदलनादिनेत्याकारो विधिर्नियमः ।

कथं पुनरुपासनस्य पक्षप्राप्तिर्यावता पारिशेष्यादात्मविज्ञानस्मृतिसंततिर्नित्यै-
वेत्यभिहितम् । बाढम् । यद्यप्येवं शरीरारम्भकस्य कर्मणो नियतफलत्वात्सम्यग्ज्ञान-
प्राप्तावप्यवश्यंभाविनी प्रवृत्तिर्वाङ्मनःकायानाम् । लब्धवृत्तेः कर्मणो बलीयस्त्वान्मु-
क्तेष्वादिप्रवृत्तिवत् । तेन पक्षेप्राप्तं ज्ञानप्रवृत्तेर्दौर्बल्यम् ।
तस्मात्त्यागवैराग्यादिसाधनबलावलम्बिनाऽऽत्मविज्ञानस्मृतिसंततिर्नियन्तव्या भवति

पाक्षिकीं प्राप्तिमुक्तामाक्षिपति—कथमिति । का पुनरनुपपत्तिरित्याशङ्क्याऽऽह—यावतेति ।
आत्मनि वाक्योत्थे विज्ञाने सत्यनात्मस्मृतिहेतूनां मिथ्याज्ञानादोषाणामपनीतत्वाद्धेत्वभावे फलाभाव
इतिन्यायेन तासामसंभवादात्मस्मृतिसंततिरेव पुनः सदा स्यात्प्रकारान्तरायोगादिति सिद्धान्तिनो-
ऽभ्युपगमात्तस्यां चात्मोपासनस्य पक्षे प्राप्तिरित्यर्थः । तस्य नित्यप्राप्तिमुक्तामङ्गी करोति—बाढमिति । तर्हि
नियमविधिवाचोयुक्तिरयुक्तेत्याशङ्क्याऽऽह—यद्यपीति । आत्मनि नित्यापरोक्षसंविदेकताने स्मरणं
विस्मरणं वा यद्यपि नोपपद्यते तथाऽपि तयोस्तस्मिन्ननुभवसिद्धत्वान्नियमविधेः सावकाशत्वमित्या-
शयेनाऽऽह—शरीरेति । अथाऽऽरब्धफलस्यापि कर्मणः सम्यग्ज्ञानान्निवृत्तेर्न विदुषो वागादीनां
प्रवृत्तिरत आह—लब्धेति । यथा मुक्तस्येषुपाषाणादेः प्रतिबन्धे याऽऽवेग प्रवृत्तिरवश्यंभाविनी तथा
प्रवृत्तफलस्य कर्मणो ज्ञानेनोपजीव्यतया ततो बलवत्त्वात्तद्वशाद्विदुषोऽपि यावद्भोगं वागादिप्रवृत्ति-
ध्रौव्यमित्यर्थः । प्रारब्धकर्मप्राबल्ये फलितमाह—तेनेति । आरब्धस्य कर्मणो यथोक्तेन न्यायेन
प्राबल्ये तद्वशात्क्षुधादिबोधो यदोद्भवति तदाऽऽत्मनि विस्मरणादिसंभवात्तज्ज्ञानप्राप्तेः पाक्षिकत्वा-
दवश्यंभाविकर्मापेक्षया तद्दौर्बल्यं स्यादित्यर्थः ।
तथाऽपि नियमविध्यङ्गीकारस्य किमायातं तदाह—तस्मादिति । ज्ञानस्य पक्षे प्राप्तत्वं

नियम करने के लिए ही है।
( पुनः पूर्वपक्षी शङ्का करता है— ) परन्तु फिर एक पक्ष में उपासना की प्राप्ति कैसे हो सकती
है ? क्योंकि परिशेषतः आत्मविज्ञानविषयक स्मृतिसन्तति नित्य ही है—यह कहा जा चुका है।
(सिद्धान्ती समाधान करता है—)यह सत्य है । यद्यपि ऐसा है, फिर भी शरीरारम्भक कर्म
नियतफलक होने से सम्यक् ज्ञान की प्राप्ति होने पर वाक्, मन और देहादि की प्रवृत्ति तो
अवश्यम्भावी है । लब्धस्वरूप वाले कर्म का ज्ञान की अपेक्षा बलवान् होना छूटे हुए बाण आदि की
प्रवृत्ति के समान है। इसलिए एक पक्ष में ज्ञान प्रवृत्ति की दुर्बलता प्राप्त हो जाती है।
अतः त्याग, वैराग्य आदि साधनों के बल के आश्रय से आत्मविज्ञान स्मृति की संतति नियम

१ यत । २ सत्यम् । ३ लब्धस्वरूपस्य । ४. ज्ञानापेक्षया । ५ इषु—बाण । ६ प्रारब्धस्य बलित्वेन । ७ प्राप्ते । ८ नियमेन कर्त्तव्या । ९ पक्षप्राप्तौ । १० आदिना रागद्वेषादि ।
११. आत्मोपास्तेर्नित्यप्राप्तिस्वीकारे । १२ स्वीकारवचनम् । १३ नोपपद्यत इति । तथा च वार्तिकम्—
"न स्मृतिर्विस्मृतिर्वेह संभाव्येतापि केनचित् । सकृद्विभातो ह्येवैष रवौ रात्र्यहनी यथा" ॥८४९॥ इति ।
इह—आत्मनि । केनचित्—कर्त्रा । संभावनाभावे निश्चयो दूरादिति वक्तुमपिशब्दः । तत्र हेतुमाह—
सकृदिति । प्रत्यगात्मा सर्वदापरोक्षो यस्मादित्यर्थः । यथोक्तात्मनि तयोः संभावनाभावे दृष्टान्तमाह—रवाविति ।
नोदेता नास्तमेतेत्यादिश्रुतेर्दृष्टान्तसिद्धिः । सूर्यो नोदयमस्तं च गच्छतीति न तत्र रात्र्यहनी स्त इति तदर्थः ।
१४. संचितादिदृष्टान्तार्थकोऽपिशब्दः । १५ क्षुदाद्यादिप्रतिबन्धाभावे । १६ उपजीव्यतयेति—शरीरद्वारा-
ऽऽश्रयणीयतयेत्यर्थः । कर्मणा शरीरम्—ततो ज्ञानमिति । १७. प्रारब्धतो ज्ञानदौर्बल्येऽपि । १८. किं फल
प्राप्तम् ।

न त्वपूर्वा कर्तव्या प्राप्तत्वादित्यवोचाम । तस्मात्प्राप्तविज्ञानस्मृतिसंतान नियमविध्यर्थानि विज्ञाय प्रज्ञां कुर्वीतेत्यादिवाक्यान्यन्यार्थासंभवात् ।

अनात्मोपासनमिदमितिशब्दप्रयोगात् । यथा 'प्रियमित्येतदुपासीतेत्यादौ न प्रियादिगुण एवोपास्य किं तर्हि प्रियादिगुणवत्प्राणाद्येवोपास्यम् । तथेहापीतिपरात्मशब्दप्रयोगादात्मगुणवदनात्मवस्तूपास्यमिति 'गम्यते । 'आत्मोपास्यत्ववाक्यवैलक्षण्याच्च । 'परेण च वक्ष्यत्या'त्मानमेव 'लोकमुपासीतेति । तत्र च वाक्य आत्मैवोपास्यत्वेनाभिप्रेतो 'द्वितीयाश्रवणादात्मानमेवेति । इह तु न द्वितीया श्रूयत इतिपर'श्चाऽऽत्मशब्द आत्मेत्येवोपासी-

तच्छब्दार्थः । आदिपदं ब्रह्मचर्यशमदमादिसंग्रहार्थम् । विज्ञायेत्यादिवाक्यानां नियमविध्यर्थत्वमुपसंहरति—तस्मादिति । आदिपदेन प्रकृतमपि 'वाक्यं संगृह्यते । तच्छब्दार्थमेव स्पष्टयति—अन्यार्थेति ।

"शाब्दज्ञानादेव पुमर्थसिद्धेस्तस्य" "तदावृत्तेस्तृतीयज्ञानस्य वा विधेयत्वाभावाद्वेदान्ताः शुद्धे सिद्धेऽर्थे मानमित्युक्तमिदानीमितिशब्दप्रयुक्तं चोद्यमुत्थापयति—अनात्मेति । आत्मशब्दादूर्ध्वमितिशब्दप्रयोगादात्मशब्दार्थस्योपास्यत्वेनाविवक्षितत्वादात्मगुणकस्यानात्मनोऽव्याकृतशब्दितस्य प्रधानस्योपासनमस्मिन्वाक्ये विवक्षितमित्यर्थः । उक्तमेवार्थं दृष्टान्तेन स्पष्टयति—यथेत्यादिना । अनात्मोपासनमेवात्र विधित्सितमित्यत्र हेत्वन्तरमाह—आत्मेति । तदेव" प्रपञ्चयति—परेणेति । ततो वैलक्षण्यं

से करनी पडती है, अपूर्वरूप मे नही करनी पडती, क्योकि आत्मज्ञान होने पर वह प्राप्त ही है, ऐसा हम कह चुके हैं । इसलिए "बुद्धिमान ब्राह्मण को उस ब्रह्म को जानकर उसी मे बुद्धि लगानी चाहिये" इत्यादि श्रुतिवाक्य, प्राप्तविज्ञान की स्मृति सन्तति की नियमविधि के लिए हैं क्योकि उनका दूसरा कोई अर्थ होना सम्भव नही है ।

(शङ्का होती है—) ("आत्मा इत्येवोपासीत" मन्त्र में) इतिशब्द का प्रयोग होने से यह तो अनात्मोपासना है । जिस प्रकार "प्रियम इति एतद् उपासीत" इत्यादि श्रुतिवाक्यो मे प्रियादि गुण उपास्य नही हैं । तो क्या उपास्य हैं ? प्रियादिगुणयुक्त प्राणादि ही उपास्य है । इसी प्रकार यहाँ भी "आत्मा" शब्द के बाद 'इति' का प्रयोग होने से आत्मा के समान गुण वाली अनात्मवस्तु ही उपास्य है । इसके अतिरिक्त आत्मोपासना सम्बन्धी वाक्यो से प्रकृत वाक्य की विलक्षणता है । वाक्यशेष मे कहेगे—"आत्मा की ही प्रकाशरूप से उपासना करे" । वहाँ उस वाक्य मे आत्माशब्द मे द्वितीया-विभक्ति का प्रयोग होने के कारण उपास्यरूप से आत्मा ही अभिप्रेत है । यहाँ द्वितीया का प्रयोग नहीं

१ बृ उ ४।१३ । २ गम्यत इति । आत्मगुणकमात्मवस्त्वेवोपास्य किं न स्यादित्याशङ्क्य समाहितं वार्तिके—"आत्मैकगुणवत्त्वेन न तत्राऽऽत्मैव चिन्त्यते" ॥६३४॥ इति । एकत्र गुणगुणिभावासंभवाद् आत्मगुणकमनात्मवस्त्वेवोपास्यमित्यर्थः । ३ प्रकृतवाक्यस्येत्यादि । ४ वाक्यशेषेण । ५. बृ. उ १-४-१५ । ६ प्रकाशरूपम् । ७ विभक्ति । ८ तत्र पश्यन्नीति वाक्यादात्मोपास्तेर्निषेधात् पूर्वापरविरोधेनानात्मोपास्तिरेवात्रेति हेत्वन्तरसमुच्चयार्थश्चकार । ९ "आत्मेत्येवोपासीतेति"वाक्यम् । १०. शाब्देति । शब्दस्य असृष्टपरोक्षबोधित्वानियमात् (यथावस्तुप्रकाशकत्वात्) असमृष्टापरोक्षधिय शाब्दत्वोपपत्तेरित्यादि । ११. तस्य—शाब्दज्ञानस्य । १२ तदावृत्ते —तदाऽऽवर्तनस्य तत् स्मृतिसन्तानस्येति यावत् । १३. तृतीयज्ञानम्—उपासनाऽभिधज्ञानान्तरम् । १४. वैलक्षण्यमेवोपपादयति ।

तेति । 'अतो नाऽऽत्मोपास्य : आत्मगुणश्चान्य इति त्ववगम्यते । न । वाक्यशेष आत्मन उपास्यत्वेनावगमात् । अस्यैव वाक्यस्य शेष आत्मैवोपास्यत्वेनावगम्यते । तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽन्तरतरं यदयमात्माऽऽत्मानमेवावेदिति ।

प्रविष्टस्य दर्शनप्रतिषेधादनुपास्यत्वमिति चेत् । यस्याऽऽत्मनः प्रवेश उक्तस्तस्यैव दर्शनं वार्यते तं न पश्यन्तीति । प्रकृतोपादानात् । तस्मादात्मनोऽनुपास्यत्वमेवेति चेन्न । 'अकृत्स्नत्वदोषात् । दर्शनप्रतिषेधोऽकृत्स्नत्वदोषाभिप्रायेण नाऽऽत्मोपास्यत्वप्रतिषेधाभिप्रायेण । प्राणनादिक्रियाविशिष्टत्वेन 'विशेषणात् । आत्मनश्चेदुपास्यत्वमनभिप्रेतं प्राण-

वर्शयति—इह त्विति । वैलक्षण्यान्तरमाह—इतिपरश्चेति । वैलक्षण्यफलमाह—अत इति । 'नाऽऽत्मना-
त्मोपासनं विवक्षितमिति परिहरति—नेत्यादिना । हेत्वर्थं स्फुटयति—अस्यैवेति ।
आत्मनश्चेदुपास्यत्वं तदा प्रक्रमविरोधः स्यादिति शङ्कते—प्रविष्टस्येति । आत्मनो दर्शन-
प्रतिषेधं प्रकटयति—यस्येति । तस्यैवेति नियमे हेतुमाह—प्रकृतेति । तच्छब्दस्य प्रकृतपरामर्शि-
त्वात्प्रविष्टस्य च प्रकृतत्वात्तस्य तेनोपादानादिति हेत्वर्थः । पूर्वपक्षं निगमयति—'तस्मादिति ।
प्राणनादिविशिष्टस्य परिच्छिन्नत्वात्तस्य दृष्टत्वेऽपि पूर्णस्य न दृष्टतेति निषेधश्रुतिपर्यवसानान्नोप-
क्रमविरोधोऽस्तीति परिहरति—नेत्यादिना । 'तदेव विशदयति—दर्शनेति । कथमयमभिप्रायमेदः
श्रुतेरवगम्यते तत्राऽऽह—प्राणनादीति । प्राणन्नेवेत्यादिना क्रियाविशेषविशिष्टत्वेनाऽऽत्मनो विशेष-
णात्तस्य दृष्टत्वेऽपि नासौ परिपूर्णो दृष्टः "स्यादिति श्रुतेराशयो लक्ष्यते केवलस्य तु तस्योपास्य-
त्वमभिसंहितमकृत्स्नत्वदोषाभावादित्यर्थः । उक्तमर्थं व्यतिरेकमुखेन साधयति—आत्मनश्चेदिति ।

है, और "आत्मा इति एव उपासीत" इस प्रकार "आत्मा" शब्द के बाद "इति" शब्द भी है।
उपपादित विलक्षणता से सिद्ध होता है कि यहाँ आत्मा उपास्य नहीं है; अपितु आत्मा के समान गुण
वाला अन्य ही उपास्य है। (इसका समाधान करते हैं—) ऐसा कहना ठीक नहीं है। क्योंकि वाक्यशेष
से आत्मा ही उपास्यरूप से जाना जाता है। इसी वाक्य के अन्त में आत्मा ही उपास्यरूप से अवगत
होता है। "वस्तुतः यह आत्मा है और इस आत्मा के जानने से ही इस सम्पूर्ण जगत् को जानता है",
"क्योंकि यह आत्मा उन धनपुत्रादि की अपेक्षा अत्यन्त समीपवर्ती है", "उसने अपने को ही जाना"
इत्यादि।

(प्रक्रमविरोध होने से शङ्का होती है) किन्तु शरीर के भीतर प्रविष्ट आत्मा के दिखाई न
देने से उसका अनुपास्यत्व सिद्ध होता है। जिस आत्मा का प्रवेश कहा गया है उसका दर्शन निषेध
किया जाता है, जैसे ("तं न पश्यन्ति") "उसे नहीं देखते हैं" इस श्रुति में 'तं' पद के ग्रहण से दर्शन
प्रतिषेध किया है। अत. आत्मा का अनुपास्यत्व ही स्वीकार करो। (शङ्का समाधान सिद्धान्ती करता
है--) ऐसा कहना ठीक नहीं। वह तो अकृत्स्नरूप दोष से है। अर्थात् आत्मा का न देख पाना तो
उसमें अकृत्स्नता दोष के अभिप्राय से है, आत्मा के उपास्यत्व प्रतिषेध के अभिप्राय से नहीं है। क्योंकि

१. उपपादितवैलक्षण्यात् । २. बृ. उ. १.४.८ । ३ बृ. उ. १.४.१० । ४. इतीति । 'आत्मानमेव प्रियमुपासीत न हास्य प्रियं प्रमायुकं भवति'' इत्युपासनवाक्य "स य आत्मानमेव प्रियमुपास्ते न हास्यति"फलवाक्य च सम्प्रोक्तं तिप्रकारः । ५. अकृत्स्नत्वदोषादिति—अकृत्स्नत्वदोषदुष्टस्यात्मनो दर्शनप्रतिषेधान्नोपक्रमविरोध इत्यर्थः । ६. पूर्णात्मना व्यावर्तनात् । ७. उपक्रमोपसंहारालोचनया [illegible] विवक्षितेति मतं निरस्यति—नात्रेति । ८. प्रविष्टस्य दर्शनप्रतिषेधात् । ९. उक्तात्पर्यमेव । १०. स्यादितीति । न [illegible] उपास्य इतीति शेषः ।

नाद्येकैकक्रियाविशिष्टस्याऽऽत्मनोऽकृत्स्नत्ववचनमनर्थकं स्यादकृत्स्नो ह्येषोऽत एकैकेन भवतीति। अतोऽनेकैकविशिष्टस्त्वात्मा कृत्स्नत्वादुपास्य एवेति सिद्धम्।

यस्त्वात्मशब्दस्येतिपरः प्रयोग आत्मशब्दप्रत्यययोरात्मतत्त्वस्य परमार्थतोऽविषयत्वज्ञापनार्थम्। अन्यथाऽऽत्मानमुपासीतेत्येवमवक्ष्यत्। तथा चार्थादात्मनि शब्दप्रत्ययावनुज्ञातौ स्याताम्। तच्चानिष्टम् "नेति नेति" "विज्ञातारमरे केन विजानीयात्" "अविज्ञातं विज्ञातृ" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह", इत्यादिश्रुतिभ्यः। यत्त्वात्मानमेव लोकमुपासीतेति। तदनात्मोपासनप्रसङ्गनिवृत्तिपरत्वान्न वाक्यान्तरम्।

'तस्यानुपास्यत्वार्थं तद्वचनमर्थवदित्याशङ्क्य तदुपास्यत्वनिषेधस्याऽऽत्मोपास्यत्वे पर्यवसानमभिप्रेत्याऽऽह—'अतोऽनेकैकेति।

उपक्रमोपसंहाराभ्यामुपास्यत्वमात्मनो दर्शितमिदानीमितिशब्दप्रयोगादनात्मोपासनमिदमित्युक्तं प्रत्याह—यस्त्विति। प्रयोगशब्दादुपरिष्टादितिशब्दो द्रष्टव्यः। इतिशब्दस्य यथोक्तार्थत्वाभावे दोषमाह—अन्यथेति। न चाऽऽत्मनः "स्वातन्त्र्येणानुपास्यत्वार्थमितिशब्दोऽर्थवान्" पूर्वापरवाक्यविरोधादिति द्रष्टव्यम्। इतिशब्दमन्तरेण वाक्यप्रयोगे दोषमाह—तथेति। तस्य शब्दप्रत्ययविषयत्वमिष्टमेवेति चेत्तत्राऽऽह—तच्चेति। आत्मोपास्यत्ववाक्यवैलक्षण्यादनात्मोपासनमेतदित्युक्तं तद्दूषयति—यत्त्विति।

यहाँ प्राणनादि क्रिया-विशिष्टत्व से पूर्ण आत्मा का व्यावर्तन किया है। आत्मा का उपास्यत्व यदि अवाञ्छनीय होता, तो "अतएव इनमें से एक-एक की उपासना जो करता है, वह नहीं जानता, वस्तुत वह असम्पूर्ण ही है।" इस वाक्य से प्राणनादि एक-एक क्रिया से विशिष्ट आत्मा को 'असम्पूर्ण" बताना व्यर्थ हो जाता। इसलिए यह सिद्ध होता है कि निखिलक्रियाध्यास का अधिष्ठान आत्मा कृत्स्नरूप होने से उपास्य है।

और जो आत्मा' शब्द के आगे "इति" शब्द का प्रयोग है, वह तो आत्मतत्त्व को परमार्थत आत्मशब्द और आत्मप्रत्यय से अविषय ज्ञापन करने के लिए है। नहीं तो "आत्मा की उपासना करे" ऐसा श्रुति न कहा होता। ऐसे शब्द और शब्दाघटितस्वरूप आत्मा में शब्दधीगम्यत्व सम्भव होने के कारण आत्मशब्द और आत्मप्रत्यय की प्रतीति हो जाती। जो कि "यह नहीं है, यह नहीं है", "अरी मैत्रेयी! विज्ञाता को किसके द्वारा जाने', "बुद्धि का अविषय होने से स्वय अविज्ञात होता हुआ भी विज्ञानस्वरूप होने से विज्ञाता है", "जहाँ से मन सहित वाणी उसे प्राप्त न कर लौट आती है", इत्यादि श्रुतियों के द्वारा अनभिमत सिद्ध होता है। और 'आत्म लोक की ही उपासना करे" ऐसी जो

१ निखिलक्रियाध्यासाऽधिष्ठानम्। २ ज्ञापनार्थं इति साधीयान् पाठ। ३ तथा चेति। उक्तशब्दस्येति शब्दाघटितत्व चेत्यर्थ। ४ अर्थादिति—आत्मनि शब्दधीगम्यत्वसम्भवादित्यर्थं। ५ अभ्युपगतौ। ६ अनभिमतम्। ७ न वाक्यान्तरमिति। आत्मानमेवेत्यादिवाक्यस्यानात्मोपास्तिनिवृत्त्यर्थतया पूर्ववाक्येनैकवाक्यत्वमेव तस्य प्रकृतवाक्यान्न वाक्यान्तरत्व प्रकृतवाक्यार्थानुवादित्वादिति भाव। ८. विशिष्टस्य। ९ प्राणनाद्यन्यतमक्रियाविशिष्टस्यात्मनोऽकृत्स्नत्ववचनात्। १० स्वातन्त्र्येणेति—गुणगुणिभावशून्यत्वेनेत्यर्थ। गुणत्वनैवोपास्यत्वायति भाव। ११ पूर्वापरेति—आत्मेत्येवोपासीत तदेतत्पदनीयमित्यनयो पूर्वापरवाक्ययोर्विरोधस्योक्तत्वादित्यर्थं।

अनिर्ज्ञातत्वसामान्यादात्मा ज्ञातव्योऽनात्मा च । तत्र कस्मादात्मोपासन एव 'यत्न आस्थीयत आत्मेत्येवोपासीतेति' नेतरविज्ञान इति । अत्रोच्यते—तदेतदेव 'प्रकृतं पदनीयं गमनीयं नान्यदस्य सर्वस्येति निर्धारणार्था षष्ठी । 'अस्मिन्सर्वस्मिन्नित्यर्थः । यदयमात्मा यदेतदात्मतत्त्वं कि न विज्ञातव्यमेवान्यन्न किं' तर्हि ज्ञातव्यत्वेपि न पृथग्ज्ञानान्तरमपेक्षत आत्मज्ञानात् । कस्मात् । 'अनेनाऽऽत्मना ज्ञातेन हि यस्मादेतत्सर्वमनात्मजातमन्यद्यत्तत्सर्वं

'आत्मैव ज्ञातव्यो नानात्मेति 'प्रतिज्ञायामत्र हीत्यादिना हेतुरुक्तः सम्प्रति तदेतत्पदनीयमित्यादिवाक्यापोह्यं चोद्यमुत्थापयति—अनिर्ज्ञातत्वेति । उत्तरमाह—अत्रेति । निर्धारणमेव स्फोरयति—अस्मिन्निति । नान्यदित्युक्तत्वादनात्मनो विज्ञातव्यत्वाभावश्चेदनेन हीत्यादि"शेषविरोधः स्यादिति शङ्कते—किं नेति । तस्याज्ञेयत्वं निषेधति—नेति । तस्यापि ज्ञातव्यत्वे नान्यदिति वचनमनवकाशमित्याऽऽह—किं तर्हीति । तस्य सावकाशत्वं दर्शयति—ज्ञातव्यत्वेऽपीति । आत्मनः सकाशादनात्मनोऽर्थान्तरत्वात्तस्याऽऽत्मज्ञानाज्ज्ञातव्यत्वायोगाज्ज्ञातव्यत्वे ज्ञानान्तरमपेक्षितव्यमेवेति शङ्कते—कस्मादिति । उत्तरवाक्येनोत्तरमाह—अनेनेति । आत्मन्यनात्मजातस्य कल्पितत्वात्तस्य तदतिरिक्तस्वरूपाभावात्तज्ज्ञानेनैव

श्रुति है, यह अनात्मोपासना प्रसङ्ग की निवृत्ति करने वाली होने से (पूर्ववाक्य से एकवाक्यता होने के
कारण) वाक्यान्तर नही है (प्रकृत वाक्यार्थ का अनुवाद मात्र है) ।
किन्तु अनिर्ज्ञातत्व-सामान्य होने के कारण जिस प्रकार आत्मा ज्ञातव्य है, उसी प्रकार
अनात्मा भी ज्ञातव्य है । फिर इनमे से "आत्मा इत्येव उपासीत" इस श्रुति के अनुसार आत्मोपासना मे
ही (प्रतिज्ञातात्मज्ञान की हेतु द्वारा सिद्धिरूप) पुन. पुन यत्न करना क्यो रह जाता है ? अनात्मो-
पासना मे क्या नही ? (सिद्धान्ती उक्त शका का परिहार करता है—) इस प्रकार हमारा कहना
यह है कि इन सबमे वह प्रकृत आत्मतत्त्व ही 'पदनीयम्' यानी ज्ञातव्य है, अन्य (अनात्म) नही ।
'अस्य सर्वस्य' इन पदो मे निर्धारणार्थक षष्ठी है । इसका अर्थ—('अस्मिन् सर्वस्मिन्') 'इन सबमे'
ऐसा है । 'यदयमात्मा' अर्थात् यह जो आत्म तत्त्व है । तो क्या अन्य ज्ञातव्य कुछ भी नही है ? ऐसा

१ यत्न इति । यत्नस्त्व नामात्र प्रतिज्ञातात्मज्ञानस्य हेतुना साधनम् शक्याशक्ययो शक्योपादानस्य न्याय्यत्वा-
दनायासलभ्य कर्म यावज्जीवादि श्रुत्युक्तमत्याज्यमिति भाव पूर्ववादिन । २. श्रुत्या । ३ आत्मतत्त्वम् ।
४ गमनीयमिति—यस्मादनात्मना ज्ञातत्वाज्ञानत्वयोरभावात् (अज्ञानस्य चिदेकाश्रितत्वात्) तेभ्य सकाशादि-
दमेवात्मतत्त्व पर पदमज्ञात ज्ञातव्य तज्ज्ञाने सर्वेषा ज्ञेयाना पुरुषार्थाना च समाप्ति तस्मान्निरतिशयसुखात्म-
केतरवस्तुस्वभावेन यथोक्तात्मं त्यक्त्वा तदेवावर्तव्यमित्यर्थ । अत एवायाससम्येऽप्यात्मज्ञाने यत्नातिरेक श्रुतरिति
शेष । ५ अस्मिन्निति । सर्वस्मिन् जगति प्रत्यङ्मात्रमेव ज्ञेय नान्यदित्यर्थनिर्धारणाद्युक्ता तदर्था षष्ठीत्यर्थ,
सम्बन्धसामान्ये षष्ठीतिमते अस्य प्रत्यक्षादि सन्निधापितस्य सर्वस्य जगत सम्बन्ध्यात्मतत्त्व पदनीयमित्यर्थो
द्रष्टव्य । ६ अनात्मनोऽपि ज्ञेयत्वेनान्यदिति वचनमनवकाश किमित्यर्थ । ७ अनेन हि सर्वं वेदेति
वाक्येऽनेनेति तृतीया इत्थभूतलक्षणे । तथा च वार्त्तिकम् "अनेनेति तृतीयमित्थभूतार्थलक्षणा । इदधीशब्द-
गम्यस्य प्रत्यङ्मात्रसतत्त्वत." ॥६८३॥ इति । इत्थभूतमर्थम् इदशब्दप्रत्ययविषयमखिल दृश्यजात प्रत्यङ्मात्रम्
इममर्थं लक्षयति गमयतीति तथोच्यत । तत्र हेतुमाह—इदमिति । इदमर्थस्य सर्वस्यानुभवात्मकप्रत्यङ्मात्र-
स्वभावत्वात् इत्थभूतलक्षणे युक्ता तृतीयेत्यर्थ । तथा च अनेन सर्वाभिन्नतया ज्ञातेनात्मनेत्यर्थमभिप्रेत्याह—
अनेनेति ॥ ८ शब्दप्रत्ययागम्य प्रत्यक्तत्त्वमेवानुसन्धेयम् । ९. आत्मेत्येवोपासीतेति वाक्यकृतायामिति
बोध्यम् । १०. वाक्यशेष ।

समस्तं वेद जानाति। नन्वन्यज्ञानेनान्यन्न ज्ञायत इति। अस्य परिहारं [1]दुन्दुभ्यादिग्रन्थेन वक्ष्यामः।

*[2]कथं पुनरेतत्पदनीयमिति। उच्यते—यथा ह वै लोके पदेन [3]गवादिखुराङ्कितो

---

ज्ञातव्यसिद्धेर्नास्ति ज्ञानान्तरापेक्षेत्यर्थः। [4]लोकदृष्टिमाश्रित्यानेनेत्यादिवाक्यार्थमाक्षिपति—नन्विति। आत्मकार्यत्वादनात्मनस्तस्मिन्नन्तर्भावात्तज्ज्ञानेन ज्ञानमुचितमिति परिहरति—अस्येति।

सत्योपायाभावादात्मतत्त्वस्य पदनीयत्वासिद्धिरिति शङ्कते—कथमिति। असत्यस्यापि श्रुत्याद्यादि[5]रर्थक्रियाकारित्व[6]संभवादात्मतत्त्वस्य पदनीयत्वोपपत्तिरित्याह—उच्यत इति। विवित्सितं

---

कहना ठीक नहीं? तो अन्य अनात्मा भी क्या ज्ञातव्य है?—ज्ञातव्यरूप होने पर भी उसे आत्मतत्त्वज्ञान से भिन्न किसी ज्ञानान्तर की अपेक्षा नहीं है। क्यों अपेक्षा नहीं है? 'अनेन' अर्थात् आत्मज्ञान होने पर 'हि' अर्थात् क्योंकि, यह 'सर्वम्' अर्थात् अन्य जो कुछ भी अनात्मजात है, उस सभी को, पुरुष 'वेद' अर्थात् जान लेता है। किन्तु अन्य पदार्थ के ज्ञान से अन्य का ज्ञान तो हुआ नहीं करता? इसका निराकरण (बृहदारण्यक उपनिषत् के द्वितीय अध्याय चतुर्थ ब्राह्मण के सातवें मन्त्र में) दुन्दुभ्यादि ग्रन्थ से आगे करेंगे।

यह आत्मा पदनीय (ज्ञातव्य) किस प्रकार है? इस पर कहा जाता है। जिस प्रकार लोक

---

१. बृ. उ. २-४-७। २ कथमिति। आत्माज्ञानजनितत्वात्कल्पितस्तावदाचार्यादिरुपायस्तेनाज्ञानतत्कार्यासंस्पृष्टं सत्यं ब्रह्म न ज्ञातुं शक्यं मिथ्याविरोधादिति भावः। ३ गवादीति। यथाज्ञातखुराङ्कितदेशाहेतुकः खुराङ्कितदेशज्ञानहेतुको वा नष्टे (अदृश्य) विवक्षित (अभिमत) गवादौ बोधो जायते स च ताभ्यामस्पृष्टगवादिमात्रविषयः तथा नामरूपादि प्रपञ्चोपायहेतुकोऽप्रपञ्चात्मके भूम्नि प्रतीचि बोधः प्रजायते तथा च कार्यकारणासंबन्धिप्रत्यगर्थप्रज्ञप्त्यर्थं यथा हेत्यादिदृष्टान्त इति द्रष्टव्यम्। यद्वा अवस्थाद्वये न वस्तुधीः अज्ञानतत्कार्यविरोधात् स्वापेऽपि न तद्धीः अज्ञानप्रतिबन्धात्ततो मेयत्वासिद्धिरिति चोद्यापनुत्तये दृष्टान्तोऽयम्। अत्र पक्षेऽयमर्थः यथा गवादिखुराङ्कितं देशं दृष्ट्वा तदनुरोधेन गतो गवादिकमन्वेषमाणो गवाद्यात्मना साक्षाद्गवादिकं लभते तथा स्वमयस्य प्रतीचः शोधनेन मुमुक्षुः प्रत्यगात्मना ब्रह्म जानातीत्यर्थः। ४. अज्ञप्रसिद्धिम्। ५ अर्थक्रियेति—उपायानामर्थक्रियाकारित्वरूपं सत्यत्वं त्यक्त्वा परमार्थसत्यता नोपेयबोधनोपयोगिनी सत्सूपायेष्वर्थक्रियाकारिषु। ६ कार्यजनकत्वसंभवादित्यर्थः।

---

*कथं पुनरित्यादीत्यर्थं एतदन्तभाष्यगतगूढार्थाविष्करणपराणि पञ्चदशवार्तिकानि सन्ति। तथाहि—"कथं पुनरबोधोत्थक्लृप्तोपायेन तत्परम्। गम्यते सत्यमित्यस्य परिहृत्यै परं वचः॥ परमार्थात्मनाऽसत्यं पदं तदपि बोधकम्। स्वार्थस्यैवमुपायत्वमसत्यस्याऽऽत्मनीक्ष्यताम्॥ उपायसत्यतां मुक्त्वा नान्याऽपेक्ष्युपयुज्यते। सत्यताऽत्र ह्युपायानामुपेये किं तयेष्यते॥ गवादिखुरबिम्बो वा पदमित्युपदिश्यते। अनन्वितार्थासिद्ध्यर्थं दृष्टान्तोऽत्र तथा सति॥ गवादिबोधनिर्वृत्ति पदज्ञानहेतुतः। अनन्वितपदज्ञानगोपिण्डैकावसायिनी॥ यथैव नामरूपादिप्रपञ्चोपायहेतुतः। अप्रपञ्चात्मके भूम्नि प्रत्यग्बोधः प्रजायते॥ प्रमाणभूमावैकात्म्यं विरोधान्न प्रतीयते। तमोऽन्वयाप्रमेयत्वात्तदभावेऽपि नेक्ष्यते॥ न हि वस्त्वात्मनैवाऽऽत्ममोहायुच्छित्तये क्वचित्। प्रमाणनिरपेक्षं सद्वस्त्वलं स्वप्रसिद्धये॥ ससाधनवतारं स्यान्मानवैफल्यमेव च। इत्यतस्येह चोद्यस्य परिहाराय चोत्तरम्॥ यथा गवात्मना साक्षाद्गां विन्देद्गोपदानुगः। प्रत्यक्चैतन्यसूत्यैवं विन्देत्तत्परमं पदम्॥ प्रत्यक्तया यदाभाति ह्यागमापायिसाक्षितः। देहेन्द्रियमनोधीषु चैतन्याभासरूपतः॥ जडष्वकमनेकेषु कूटस्थं क्षणभङ्गिषु। अनात्मसु तथा चाऽऽत्मा सहतेष्वप्यसंहतः॥ तस्यावाक्यार्थरूपस्य पदमेतत्प्रचक्षते। पद्यतेऽनेन तद्यस्मात्तेनेदं पदमुच्यते॥ स्वमहिम्नैव चेत्सिध्येदुपायः परमार्थवत्। स्वतः सिद्धेन मिथ्यात्वं तस्य स्यात्परमार्थवत्॥ परमार्थादभिन्नश्चेदि-

देशः पदमित्युच्यते तेन पदेन [1]नष्टं विवित्सितं पशुं पदेनान्वेषमाणोऽनुविन्देल्लभेत [3]। एवमात्मनि [2]लब्धे सर्वमनुलभत[4] इत्यर्थः। नन्वात्मनि ज्ञाते सर्वमन्यज्ज्ञायत इति ज्ञाने प्रकृते

लब्धुमिष्टम्। 'अन्वेषणोपायत्वं दर्शयितुं पदेनेति पुनरुक्तिः। अनेनेत्यत्र वेदेति ज्ञानेनोपक्रम्यानुविन्देदिति लाभमुक्त्वा कीर्तिमित्यादिश्रुतौ पुनर्ज्ञानार्थेन विदिनोपसंहारादनुविन्देदिति श्रुतेरुपक्रमोपसंहारविरोध' स्यादिति शङ्कते—नन्विति। 'शङ्कितं विरोधं निराकरोति—नेति। कथं तयोरैकार्थ्यं

व्यवहार में गौ आदि के खुर से अंकित देश को "पद" ऐसा कहा जाता है। अदृश्य एवं जिसको प्राप्त करना अभीष्ट है; ऐसे पशु को 'पदेन' अर्थात् पद से ढूंढता हुआ 'अनुविन्देत्' अर्थात् प्राप्त कर लेता है, इसी प्रकार (कल्पित श्रुत्यादि के द्वारा) आत्मप्राप्ति से सबकी प्राप्ति हो जाती है (यानी पुरुष सब कुछ जान लेता है) यह इसका अर्थ है। (यह शका होती है—) क्योंकि 'आत्मज्ञान होने पर अन्य सबका ज्ञान हो जाता है' इस प्रकार यहाँ ज्ञान का प्रकरण होने से ('वेद' श्रुतिवाक्य कहकर फिर

१ अदृश्यम्। २ कल्पितश्रुत्यादिना। ३. जानाति। ४ अन्वेषणमेवोपायोऽस्येति दर्शयितुम्।
५. आभ्यां सह विरोधः।

तराममृपात्मता। इत्यादिपूर्वमुक्त यदनुसधेयमत्र तदिति" ॥६६१-१००५॥ व्यावर्त्यं चोद्यमनूद्य यथा हेत्यादितरवाक्यमवतारयति—कथमिति। आत्माज्ञानजनितत्वात्कल्पितस्तावदाचार्यादिरुपायस्तेनाविद्यातदुत्थासंसृष्टं सत्यं ब्रह्म न जातु शक्यं मिथो विरोधादिति चोद्यं परिहर्तुं यथा हेत्यादिवाक्यमित्यर्थः ॥ तद्व्याकरोति—परमार्थेति। गवाश्वादिवर्णात्मकं पदं दैवगत्या कल्पितमपि स्वार्थस्य गोत्वादेर्बोधकं नहि तदकल्पितं क्रमवतां वर्णानां तद्भावात्क्रमस्य च तेष्वारोपं विनाऽयोगान्न हि नित्या विभवश्च वर्णाः स्वारस्येन क्रमवन्तस्तथाऽसत्यानि श्रुत्याचार्यादीन्तद्बोधोपायत्वं द्रष्टव्यमित्यर्थः ॥ किं चोपायानामर्थक्रियाकारित्वं सत्यत्वं त्यक्त्वा परमार्थसत्यता नार्पेयबोधनोपयोगिनी तत्र तेषां तादृशी सत्यतेत्याह—उपायेति। अत्र उपेयबोधने। सत्सूपायेष्वर्थक्रियाकारिषु तदीयपरमार्थसत्यत्वाभावापराधेनानुपायत्वानुपलम्भादिति हिशब्दार्थः। कार्योत्पत्तावनुपयोगित्वं परमार्थसत्यताया व्यनक्ति—उपेय इति ॥ ननु गवादिपदं स्वार्थं बोधयदप्यस्तमित्यसिद्धं तस्य तु बोधयतस्तेनास्ति सगतिस्तथा श्रुत्यादेरपि ब्रह्मबोधकत्वेन संगतिः स्यादतस्तदसङ्गत्वहानिरित्याशङ्क्य पदशब्दस्यार्थान्तरमाह—गवादीति। तदीयखुरबिम्बशब्देन तदङ्कितो देशो गृह्यते। तथापि कथमुपायेन श्रुत्यादिना गम्यमानं ब्रह्मासङ्गमङ्गीकर्तुं शक्यमित्याशङ्क्याऽऽह—अनन्वितेति। गवादिखुराङ्किते देशे पदशब्दिते सति कार्यकारणासंबन्धिप्रत्यगर्थं शक्यमिति। यथा हेत्यादिदृष्टान्त इत्यर्थः ॥ विवक्षितार्थसिद्ध्यै दृष्टान्तं विवृणोति—गवादीति। यथा ज्ञातखुराङ्कितदेशहेतुकस्तद्धीहेतुको वा नष्टे विवक्षिते गवादौ बोधो जायते स च ताभ्यामस्पृष्टगवादिमात्रविषय इत्यर्थः। दार्ष्टान्तिकमाह—एवमिति। आदिपदनान्विते पदतज्ज्ञाने येन गोपिण्डेन तस्मिन्पर्यवसितेति यावत् ॥ कल्पितस्य ज्ञानसाधनक्रियार्थम्। प्रत्यक्प्रतीचीति यावत्। प्रत्यगाकारत्वाद्वा प्रत्यगिति बोधो विशेष्यते ॥ व्याख्यातमिदानीमात्मेत्येवोपासीतेतिसूत्रावतितारयिषया स्वमाधनाय ब्रह्मणो द्वैतासंबन्धाय च यथा हेत्यादि प्रसञ्जितचोद्योत्तरत्वेन व्याकर्तुं चोद्यमनुद्रवति—प्रमाणेति। अवस्थाद्वये न वस्तुधीरज्ञानतत्त्वार्थविरोधात्तदभावो मानाभावं स्वापस्तत्रापि न तद्धीरज्ञानप्रतिबन्धात्तन्मेयत्वासिद्धेरित्यर्थः ॥ मा भूदात्मधीः स तु स्वयमेव स्वाज्ञानतज्जे निवर्तयिष्यति बोधात्मत्वात्तस्मादप्रतिबन्धात्तस्मिन्प्रमाऽपि सदा स्यादित्याशङ्क्य सामान्यन्यायमाह—न हीति। शुक्त्यादिवस्तुस्वरूपेणैव प्रमाणानपेक्षं सत्स्वाविद्यातज्जापनुत्तये स्वज्ञप्तये वा न क्वचिदपि देशादौ यावत् दृष्टम्। किन्तु प्रमाणमपेक्ष्यैव यथोक्तकार्याय पर्याप्तमित्यर्थः ॥ शुक्त्यादौ जडे मानापेक्षायामप्यात्मनि स्वप्रकाशे तदपेक्षा विना स्वरूपबोधादबोधादिध्वस्तिरित्याशङ्क्याऽऽह—सत्यरेति। यथेत्याद्यु-

'कथं लाभोऽप्रकृत उच्यते इति । न । ज्ञानलाभयोरेकार्थत्वस्य विवक्षितत्वात् । आत्मनो ह्यलाभोऽज्ञानमेव । तस्माज्ज्ञानमेवाऽऽत्मनो लाभो नानात्मलाभवदप्राप्तप्राप्तिलक्षण आत्मलाभो लब्धृलब्धव्ययोर्भेदाभावात् ।

यामादौ तदेकत्वाप्रसिद्धेरित्याशङ्क्याऽऽह—आत्मन इति । ग्रामादावप्राप्ते प्राप्तिरेव लाभो न ज्ञानमात्रं तथाऽत्रापि किं न स्यादित्याशङ्क्याऽऽह—नेत्यादिना ।

लाभार्थक 'अनुविन्देत्' इस श्रुतिवाक्य का) जिसका प्रकरण नहीं है, उस लाभ की बात क्यों यहाँ आती है? ऐसा कहना ठीक नहीं क्योंकि (वेद) ज्ञान और (अनुविन्देत्) लाभ शब्द एकार्थत्व की विवक्षा करते हैं। (आत्मा में लाभ का ज्ञानमात्ररूप होना दृष्टान्त से सिद्ध करते हैं—) आत्मा का अज्ञान ही अलाभ है। उक्त दृष्टान्त से (नित्यलब्धस्वरूप) आत्मा का ज्ञान ही (अपने कण्ठाभरण की तरह) लाभ है, अनात्मलाभ के समान अप्राप्त की प्राप्ति होना आत्मलाभ नहीं है। (प्रत्यक्ब्रह्म में अभेद होने पर) प्रापक और प्राप्य वस्तु में भेदाभाव होने के कारण ज्ञान से भिन्न कोई लाभ नहीं होता है।

१ कथमिति । वेदेति ज्ञानार्थे शब्दे प्रकृते सति मध्य विन्देदिति लाभार्थे न शब्दनावत्वा पुनस्य एव वर्तित ज्ञानार्थेन शब्देन कथमुपसंह्रियत इति शङ्कितुराशयः । २ ज्ञानलाभपदयोः । ३ नास्तिविरोध इति शेषः । ४ आत्मनि लाभस्य ज्ञानमात्रत्व दृष्टान्तेन साधयति—आत्मन इति । ५ उक्तदृष्टान्तात् । ६ नित्यलब्धैकस्वरूपस्य स्वकण्ठाभरणवत् । ७ प्रत्यग्ब्रह्मणो । ८ नहि प्रत्यग्ब्रह्मणोरभेदे ज्ञानाद्न्यो लाभस्तत्रास्तीत्यर्थः । ९ एकार्थत्वानुपलम्भात् ।

सत्त्वेनाऽऽदत्ते—इत्येतस्येति । पूर्वोक्तस्य सोपस्कारमनूदितस्य चोद्यस्यात्र परिहारायानन्तरवाक्यमित्यर्थः । तस्योक्तार्थेन वक्ष्यमाणार्थस्य समुच्चयार्थश्चकारः ॥ परिहारं स्फुटयितुं वाक्यं व्याचष्टे—यथेति । गवादिखुराङ्कितं देशं दृष्ट्वा तदनुरोधेन गतो गामन्विष्यमाणस्तद्रूपेणाध्यक्षतो लभते तथा प्रत्यक्चैतन्यस्य त्वमर्थस्य सृत्या शोधनया तद्रूपेण मुमुक्षुर्ब्रह्म जानातीत्यर्थः ॥ त्वमर्थं विविच्याऽऽह—प्रत्यक्त्वेति । देहादिषु बाह्येष्वागमापायवत्सु यत्प्रत्यक्त्वेन तत्साक्षित्वेन चान्वयव्यतिरेकाभ्यां भाति तदेतत्त्वमिति सम्बन्धः । साक्षित्वे चिदाभासस्य द्वारत्वद्योतनार्थं विशिनष्टि—चैतन्येति ॥ साक्ष्यावैलक्षण्ये कथं साक्षित्वं तत्राऽऽह—जडेष्विति । अजडमित्यध्याहारः । तथाऽपि भिन्नत्वे देहादिवदसाक्षित्वमित्याशङ्क्याऽऽह—एवमिति । सक्रियत्वेनासाक्षित्वमाशङ्क्याऽऽह—कूटस्थमिति । प्रत्यक्तया यदाभातीत्युक्तं प्रत्यक्त्वं व्यनक्ति—अनात्मस्विति । तावदवस्थाद्देहादिवदप्रत्यक्त्वमाशङ्क्याऽऽह—सहतेष्विति ॥ शोधितं त्वमर्थमुक्त्वा तस्य ब्रह्मैक्यं प्रति पदस्य प्रतिजानीते—तस्येति । ब्रह्मणस्तदर्थस्याखण्डस्य प्रत्यक्त्वेन शोधितं प्रत्यक्चैतन्यं हेतुरित्यर्थः । कथं त्वमर्थस्तदर्थस्य पदमित्याशङ्क्य करणव्युत्पत्त्याऽऽह—पद्यत इति । शोधितेन हि त्वमर्थेन तदर्थः स्वरूपतया ज्ञायते पदार्थज्ञानाधीनत्वाद्वाक्यार्थज्ञानस्येत्यर्थः ॥ प्रत्यक्चितो ब्रह्माधीनत्वात्तार्थात्यव्यवदाचार्यादेरपि तद्धीहतोस्तद्वादास्तमिथ्यात्वयुक्तमित्याशङ्क्याऽऽचार्यादि स्वतोऽन्यतो वा सिध्यतीति विकल्प्याऽऽद्यमनुवदति—स्वमहिम्नेति । तदा स्वतःसिद्धे स चैतन्यवन्न जडः स्यादिति दूषयति—परमार्थवदिति । परतः सिद्धौ तस्य मिथ्यात्वं स्यादाध्यासिकसम्बन्धादृते दृशा तदसिद्धेरिति द्वितीयं प्रत्याह—मिथ्यात्वमिति । किं चोपायः परमार्थादभिन्नो भिन्नो वा नाऽऽद्य इत्याह—परमार्थवदिति । स्वरूपेणोपायस्य त्वया सत्यत्वेष्टेस्तदभिन्नोपगमाच्चेत्यतिप्रसक्तं मृषार्थाभावाद्धस्तस्वत्वाभावाच्च तद्वयमिति भावः ॥ न द्वितीयो भेदस्याप्रामाणिकत्वाद्य च कुर्वतोऽकुर्वतश्चोपायत्वमत एवं स्योपायस्याद्वये चिदात्मनि कल्पितत्वमध्यात्मविचारादावुत्तमनोपायासत्यत्वं हेतुत्वेन ज्ञेयमित्याह—इत्यादीति ॥

ज्ञानमात्रमेव विपरीतज्ञानव्यवधानापोहार्थत्वाज्ज्ञानस्य। एवमिहाप्यात्मनोऽलाभोऽविद्यामात्रव्यवधानम्। 'तस्माद्विद्यया तदपोहनमात्रमेव लाभो नान्यः कदाचिदप्युपपद्यते। 'तस्मादात्मलाभे 'ज्ञानादर्थान्तरसाधनस्याऽऽनर्थक्यं वक्ष्यामः। तस्मान्निराशङ्कमेव ज्ञानलाभयोरेकार्थत्वं विवक्षन्नाह—'ज्ञानं प्रकृत्यानुविन्देदिति। विन्दतेर्लाभार्थत्वात्।

'गुणविज्ञानफलमिदमुच्यते—यथाऽयमात्मा नामरूपानुप्रवेशेन 'ख्यातिं गत आत्मेत्यादिनामरूपाभ्यां प्राणादिसंहतिं च श्लोकं प्राप्तवानित्येवं यो वेद स कीर्तिं ख्यातिं श्लोकं च संघातमिष्टैः सह विन्दते लभते। 'यद्वा यथोक्तं वस्तु यो वेद मुमुक्षूणामपेक्षितं कीर्तिशब्दितमैक्यज्ञानं तत्फलं श्लोकशब्दितां मुक्तिमाप्नोतीति मुख्यमेव फलम् ॥७॥

---

तस्मादिति। अविरोधमुपसंहरति—तस्मादित्यादिना। तयोरेकार्थत्वेऽपि कथमनुविन्देदिति मध्ये प्रयुज्यते तत्राऽऽह—विन्दतेरिति।

आविमध्यावसानानामविरोधमुक्त्वा कीर्तिमित्यादिवाक्यमवतार्य व्याकरोति—गुणेत्यादिना। इतिशब्दादुपरिष्टाद्यथेत्यस्य संबन्धः। 'ज्ञानस्तुति"श्चात्र विवक्षिता "ज्ञानिनामीदृक्फलस्यानभिलषितत्वादिति द्रष्टव्यम् ॥७॥

---

से अतिरेक होने से) इसलिए विद्या से उस (अविद्या) को दूर कर दना ही आत्मलाभ है, इसके अतिरिक्त और किसी का लाभ होना कदापि सम्भव नही है। इसलिए आत्मलाभ मे ज्ञान से भिन्न दूसरे साधन की अनर्थकता हम बतलाएँगे। (प्रदर्शित रीति से लाभ और ज्ञान मे एकता होने से) इसलिए 'ज्ञान' और 'लाभ' इन दोनो शब्दो की एकार्थता में कुछ भी शंका नही है—इसी को बतलाने की इच्छा से श्रुति ने ज्ञान का उपक्रम करके "अनुविन्दत्' (प्राप्त करे) यह कहा, क्योंकि 'विद्' धातु लाभार्थक है।

इस गौण विज्ञान का यह फल बतलाया जाता है। जिस प्रकार यह आत्मा नाम और रूप के अनुप्रवेश द्वारा ख्याति को प्राप्त हुआ है, एव आत्मा इत्यादि नाम और रूपो के कारण प्राणादिसहति-

---

१. आत्मलाभस्याज्ञानातिरेकात्। २ प्रदर्शितरीत्या ज्ञानलाभयोरैक्यात्। ३ शब्दयो। ४ ज्ञान प्रकृत्येति। अनेन हीति ज्ञानार्थेन विदिनोपक्रम्य अनुविन्देदिति लाभार्थेन विदिना मध्ये लाभमुक्त्वा भूयोफलवाक्ये ज्ञानार्थेन विदिनोपसंहृतिमाहेति योज्यम्। ५ इद गौण विज्ञानस्य फलम्। ६ ख्यातिं गत इति। दुक्त वार्तिके—"अप्रख्यातो यथैवाऽऽत्मा व्याकृत ख्यातिमेयिवान्। एव तदवबोधाद्वा ख्यातिमेत्यनिन्दरीम् ॥ याऽऽत्मा संहतिं प्रापद्व्याकृत करणादिभि। एव विद्वानवाप्नोति पुत्रामात्यादिसंहतिम्" ॥१०२०-१०२१॥ ति। अव्याकृते नामरूपाभ्यामप्रख्यातोऽपि व्याकृत जगति ताभ्यामाख्यानस्तथा यथोक्तात्मज्ञानादधिकृतो भवतीत्यसिद्धां ख्यातिमेतीत्यर्थः। ७ न हि संभवन्त्या मुख्यफलोक्तौ स्तुतिकल्पना युक्तेत्यभिप्रेत्याऽऽह—द्वेति। ८ उपपाद्य। ९ ननु नोक्त फलमात्मज्ञानानुकूल तस्य निरतिशयफलोपायत्वादित्यत आह—ज्ञानस्तुतिरिति। तदुक्त वार्तिके—' उक्तज्ञानप्रवृत्त्यर्थमर्थवादोऽयमिष्यत" ॥१०२२॥ इति। १०. फलवाक्ये। ११ ननु ब्रह्म वेदेत्यादिवत् फलविवक्षयैवाय वाद कि न स्यादत आह—ज्ञानिनामिति। तदुक्तम्—' निरेषणानां नेदृग्घि संसार प्रजिहासताम्। फल युक्त प्रवृत्त्यङ्गमर्थवादो भवेदत " ॥१०२३॥ इति। एषणात्रयविनिर्मुक्तानां तदन्तस्य संसार त्यक्तुमिच्छतां तदन्तर्भूत ख्यात्यादिफल नोचितमित्यर्थः। फलविवक्षाऽयोगे वाक्यस्य ज्ञानस्तुत्यर्थत्व फलतीत्याह—प्रवृत्तीति ॥

**तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियꣳ रोत्स्यतीतीश्वरो ह**

वह यह आत्मतत्त्व (लोकप्रसिद्ध प्रिय) पुत्र से अधिक प्रिय है। [1]सुवर्णादिरूप से अधिक प्रिय है और लोक में प्रियरूप से प्रसिद्ध अन्य सभी वस्तु से भी प्रियतर है, क्योंकि यह आत्मा उनकी अपेक्षा अत्यन्त समीपवर्ती है। वह जो आत्मा को प्रिय देखने वाला है, यदि आत्मा से भिन्न अनात्मा को प्रिय कहने वाले पुरुष से कहे कि 'तेरा प्रिय नष्ट हो जाएगा" तो वैसा ही हो जाएगा, क्योंकि वह ऐसा कहने

---

*कुतश्चाऽऽत्मतत्त्वमेव ज्ञेयमनादृत्यान्यदित्याह—तदेतदात्मतत्त्वं प्रेयः प्रियतरं

---

आत्मनः पदनीयत्वे [2]तस्यैवाज्ञातत्वसंभवो हेतुरुक्तोऽधुना तत्रैव हेत्वन्तरत्वेनोत्तरवाक्यमवतारयति—कुतश्चेति। [3]अन्यदनात्मेति यावत्। [4]विरक्तस्य पुत्रे प्रीत्यभावात्कथमात्मनस्तस्मात्प्रिय-

---

रूप श्लोक को प्राप्त हुआ है, इस प्रकार जो ऐसा जानता है, वह 'कीर्तिम्' अर्थात् ख्याति 'श्लोकम्' अर्थात् इष्टजनों से मिलन को 'विन्दते' अर्थात् प्राप्त करता है। अथवा जो उपर्युक्त वस्तु को जानता है, वह मोक्षकामी अपेक्षित कीर्तिरूप से कथित ऐक्यज्ञान तथा उसके फल श्लोकशब्द से कथित मुक्ति

---

१ हेत्वन्तरात्। २ अनात्मनामज्ञानरूपत्वेनावरणैकरूपतयाऽज्ञानाऽनाश्रयत्वादज्ञातत्वासंभवात्। ३ अनात्मानमिति युक्तम्। ४ विरक्तस्यैवात्राधिकारादुपदेश्यत्वम्।

---

*कुतश्चेत्याद्याहेत्यन्तं भाष्यं तदेतत्प्रेय इत्यादिवाक्यस्य तात्पर्योद्घाटनपरम्। तथा च वार्तिकम्—'ह्यवन्त-रोपदेशो या पदनीयत्वमात्मनः। तदेतदितिवाक्येन भण्यते तदथुमुच्यते ॥१०२७॥ "अव्याहृतव्याकरण-प्रत्यग्दर्शनं ध्वये। तदन्तरायस्तत्सक्तिस्तन्निवृत्तौ परा श्रुतिः ॥ शब्दादिविडिशाकृष्टचेतसः प्रत्यगीक्षणं। न सामर्थ्यं यतस्तेभ्यो व्यावृत्त्यर्थं परा श्रुतिः' ॥१०२५-२६॥ साख्यमुक्तिनिवृत्त्यर्थमथवाऽस्तूत्तरा श्रुतिः। प्रेयोगिराऽऽत्मनो यस्मान्निष्ठाऽऽनन्दस्य भण्यते' ॥१०२८॥ इति। आत्मनः पदनीयत्वे तस्यैवाज्ञातत्वसंभवो हेतुरुक्तोऽधुना निरतिशयप्रियत्वं हेत्वन्तरमननोच्यत इति भाष्योक्तं तात्पर्यमाह—हेत्वन्तरेति। तदथुमुत्सवे हेत्वन्तरमात्मानं वा जिज्ञासमानैरित्यर्थः ॥ भर्तृप्रपञ्चोक्तं तात्पर्यान्तरमाहाव्याकृतेति। आत्मज्ञानार्थं सृष्टिरुच्यते तदस्य रूपमित्यादिश्रुतस्तस्यात्मदर्शनस्यान्तराय प्रतिबन्धस्तत्र सृष्टे जगत्यासक्तिस्तन्निवृत्त्यर्थमुत्तरं वाक्यमित्यर्थः ॥ ननु न तदासक्तिरात्मधीप्रतिबन्धः राह् सम्भवादित्यत आह—शब्दादीति। शब्दादयो हि दृश्यमानाश्चित्तस्याऽऽकर्षत्वाद्बडिशवदाकृष्यन्ते तत्प्रवणचेतसो न प्रत्यगर्थायुक्ता पराक्प्रत्यग्दृष्ट्याविरोधात्तस्माद्विषयेभ्यो मनो व्यावर्त्य प्रतीचि प्रवेशयितुमुत्तरा श्रुतिरित्यर्थः ॥ प्रकृतिपुरुषाविवेकृतबन्धध्वस्तिमात्रं मुक्तिर्नातिशयसुखव्यक्तिरिति साङ्ख्याः। यथाऽऽह "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इति ॥ 'प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ। ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति' इति च ॥ तन्निवृत्त्यर्थमिदमिति स्वाभिमतं तात्पर्यान्तरमाह—साङ्ख्येति। एवमनया श्रुत्या सर्वस्मात्प्रियतमत्वमात्मनो वदन्त्या साङ्ख्यमुक्तिनिवृत्तिस्तत्राऽऽह—प्रेयोगिरेति। आत्मनः प्रियतमत्वोक्त्या तस्मिन्नानन्दस्यावसानं यतोऽनया श्रुत्योच्यतेऽतो दुःखत्रयध्वस्तिमात्रं साङ्ख्यीयं मोक्षं न मृष्यते श्रुतिरित्यर्थः ॥

**तथैव--स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥ ८ ॥**

मे समर्थ है। अत (सम्पूर्ण अनात्मवस्तु का परित्याग कर) आत्मरूप प्रिय की ही उपासना करे। जो पुरुष आत्मरूप प्रिय की उपासना करता है अर्थात् आत्मा ही प्रिय है, अन्य लौकिक पदार्थ प्रिय होने पर भी अप्रिय ही हैं। ऐसा निश्चय करके चिन्तन करता है, उसका अत्यन्त प्रिय मरणशील नही हो सकता ॥८॥

---

पुत्रात्। पुत्रो हि लोके प्रियः प्रसिद्धस्तस्मादपि, ॐप्रियतरमिति निरतिशयप्रियत्वं दर्शयति। तथा वित्ताद्धिरण्यरत्नादेस्तथाऽन्यस्माद्यद्यल्लोके प्रियत्वेन प्रसिद्धं तस्मात्ॐ सर्व-

---

तरत्वमित्याशङ्क्याऽऽह--पुत्रो हीति। प्रियतरमात्मतत्त्वमिति शेष। लोकदृष्टिमेवावष्टभ्याऽऽह--तथेति। वित्तपदेन मानुषवित्तवद्दैवं वित्तमपि गृह्यते। विशेषाणामानन्त्यात्प्रत्येकं प्रदर्शनमशक्य-

---

को प्राप्त करता है। अर्थात् उसे मुख्यफल प्राप्त हो जाता है ॥७॥

और हेत्वन्तर से अन्य सबका अनादर करके आत्मतत्त्व ही श्रेय है, इस पर श्रुति कहती है--'तदेतत्' अर्थात् वह यह आत्मतत्त्व, पुत्र से 'प्रय' अर्थात प्रियतर है। क्योकि लोकदृष्टि मे पुत्र

---

१ पुत्रो हि लोके प्रिय इति तथा च लोकदृष्ट्याऽऽत्मानस्तस्मात् प्रियतरत्वमुक्तं न तु वीतरागमुमुक्षुदृष्टयेत्यर्थं।

२ गृह्यत इति। ननु मानुषं वित्तं धनादि बन्धफलकमत्रवित्तशब्देन गृह्यतां दैवं वित्तं ध्यानाख्यं मुक्तिफलकं न तेन ग्राह्यमिति चेन्न। यथा पुत्रकर्मणोर्मनुष्यलोकः पितृलोकश्च फलमेव देवलोकोऽपरविद्याख्यदैववित्तस्यापि फलं विद्यया देवलोक इतिश्रुतेर्न मुक्तिस्तत्फलं प्रतिषेधश्रुतेस्ततस्तदपि ग्राह्यम्। तदुक्तं वार्तिके--'देवलोकः फलं यस्माद्दैवस्यापि न तत्पदमिति" ॥१०३२॥ इति।

---

ॐप्रियतरमितीति। वार्तिकाचार्यास्त्वीयसु प्रत्ययस्य तमबर्थकत्वमाहुस्तथाहि--'ईयसुस्तमबर्थे स्यात्पुत्रादीनां बहुत्वत। छान्दसत्वात्प्रियतमस्तथाऽऽत्मा सम्भवत्यपीति' ॥१०३०॥ बहूनामेकस्य निर्धारणे तमपो विधानादात्मनश्च प्रियत्वे पुत्रादिभ्यो बहुभ्योऽतिशयस्य विवक्षितत्वादिति हेतुमाह--पुत्रादीनामिति। ननु द्विवचनविभज्योपपदे तरबीयसुनाविति स्मरणात्तमबर्थत्वं तस्यायुक्तं तत्राऽऽह--छान्दसत्वादिति। ईयसुनस्तरपा समानार्थत्वस्मृतावप्यस्य छान्दोगतत्वात्स्वायमविवक्षित्वा तमबर्थत्वमेष्टव्यमित्यर्थः। छान्दसत्वेऽपि किमित्यस्यातिशयमात्रमादाय तमबर्थतेष्टा मुख्यसंभवे लक्षणायोगादित्याशङ्क्य प्रियतमत्वस्यैवाऽऽत्मनि सम्भवादन्यस्य तादृशोऽभावात्तस्मिन्नीयसुनस्तमबर्थत्वमेवेत्याह--प्रियतम इति। अपिरवधारणे। आत्मैव प्रियतमो न तथाऽनात्मा तस्मिन्प्रियतमत्वमेव सम्भवति पुत्राद्यनात्मापेक्षया प्रियत्वादिति योजना ॥

ॐसर्वस्मादिति। ननु आत्मनि प्राणादौ च प्रीते समत्वात् कथमात्मनः प्रियतमत्वं तत्राहुर्वार्तिकाचार्याः--"प्रीतिसाधनहेतुत्वात्प्राणादौ प्रीतिरिष्यते। बन्धकीप्रीतिवन्मुख्या नैवानात्मसु युज्यते ॥ व्याध्याद्युपप्लुतो यस्मादक्ति निर्विण्णमानसः। अद्यैव मरणं श्रेयो मम दुःखार्दितात्मनः ॥ प्रतीचि निर्निमित्तैव सर्वावस्थास्वपीष्यते। प्रीतिरव्युच्छितस्तस्मादात्मा प्रेयाननात्मनः" ॥१०३३-१०३५॥ इति। उल्लासो मानसः प्रीतिस्तस्याः साधनमुत्पादनं तत्र हेतुत्वादिति यावत्। बन्धकी वारवनिता। बर्धकीति पाठे [illegible] वर्धकी असती

स्मादित्यर्थः । तत्कस्मादात्मतत्त्वमेव सर्वस्मात्प्रियतरं न प्राणादीति । उच्यते—अन्तर-
तरं बाह्यात्पुत्रवित्तादेः प्राणपिण्डसमुदायो ह्यान्तरोऽभ्यन्तरः सन्निकृष्ट आत्मनः । तस्माद-
भ्यन्तरादन्तरतरं यदयमात्मा यदेतदात्मतत्त्वम् । यो हि लोके निरतिशयप्रियः स सर्व-
प्रयत्नेन लब्धव्यो भवति । तथाऽयमात्मा सर्वलौकिकप्रियेभ्यः प्रियतमः । तस्मात्तल्लाभे
महान्यत्न आस्थेय इत्यर्थः । कर्तव्यताप्राप्तमप्यन्यप्रियलाभे यत्नमुज्झित्वा ।
कस्मात्पुनरात्मानात्मप्रिययोरन्यतरप्रियहानेनेतरप्रियोपादानप्राप्तावात्मप्रियोपादा-

मित्याशयेनाऽऽह—तथाऽन्यस्मादिति । पुत्रादौ प्रीतिव्यभिचारेऽपि प्राणादौ तदव्यभिचारादात्मनो न
प्रियतमत्वमिति शङ्कते—तत्कस्मादिति । पदान्तरमादाय व्याकुर्वन्परिहरति—उच्यत इत्यादिना ।
'अन्तरतरत्वे प्रियतमत्वसाधने हेतुरात्मत्वमित्यभिप्रेत्य विशेष्य व्यपदिशति—यदयमिति । आत्मनो
निरतिशयप्रेमास्पदत्वेऽपि कुतस्तस्यैव यतनीयत्वमित्याशङ्क्य वाक्यार्थमाह—यो हीत्यादिना । पुत्रादिलाभे
दारादीनां कर्तव्यत्वेन प्राप्तप्रयत्नविरोधादात्मलाभे प्रयत्नः सुकरो न भवतीत्याशङ्क्याऽऽह—
कर्तव्यतेति ।
आत्मनो निरतिशयप्रेमास्पदत्वे युक्तिं पृच्छति—कस्मादिति । आत्मप्रियस्योपादानमनुसधान-
मितरस्यानात्मप्रियस्य हानमननुसधानम् । विपर्ययोऽनात्मनि पुत्रादावभिनिवेशेनाऽऽत्मप्रियस्याननु-

प्रियरूप से प्रसिद्ध है। आत्मा उससे भी ज्यादा प्रिय है। इस प्रकार श्रुति आत्मा की निरतिशय
प्रियरूपता बताती है। उसी प्रकार 'वित्तात' अर्थात् सुवर्णरत्नादिरूप से जो कुछ भी लोकदृष्टि मे
प्रियत्वरूप से प्रसिद्ध है, उन सबसे यह ज्यादा प्रिय है। तो किस कारण से आत्मतत्त्व ही प्रियतर है,
प्राणादि नही है? इस पर कहते हैं—'अन्तरतरम्' अर्थात पुत्र-वित्त आदि बाह्य पदार्थों की तुलना मे
कार्यकरणसघातरूप प्राण और पिण्ड समुदाय 'अन्तर' यानी अभ्यन्तर है, आत्मा का निकटवर्ती है।
उस निकटवर्ती से ज्यादा निकट जो है वह आत्मतत्त्व है। लोकव्यवहार मे जो अत्यधिक प्रिय होता
है उसकी प्राप्ति के लिए सारे उपाय किए जाते है, उसी प्रकार लोकदृष्टि मे सभी प्रिय वस्तुओ मे
यह आत्मा सर्वाधिक प्रिय है। भाव यह है कि अन्य अनात्मपदार्थों की प्राप्ति के लिए अवश्यकर्तव्यता-
रूप प्रयत्न करना त्याग कर आत्मप्राप्ति के लिए महान् यत्न करना चाहिए।
तो ऐसा क्यो है कि आत्मा और अनात्मरूप प्रिय पदार्थों से से किसी एक प्रिय पदार्थ के त्याग

१ हेतौ। २ प्राणपिण्डेति। प्राणा करणानि पिण्डः स्थूलं शरीरं कार्यरूपम् तथा च कार्यकरणसंघात इत्यर्थः। तदुक्तं वार्तिके— वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम्। इन्द्रियेभ्यः प्रियः प्राणः प्राणादात्मा प्रियः परः॥ ३ अनात्मप्रियलाभे। ४ आत्मानात्मरूपप्रियपदार्थयोरित्यर्थः।
प्रियतमस्ततः" ॥१०३६॥ इति। ३ अनात्मप्रियलाभे। ४ आत्मानात्मरूपप्रियपदार्थयोरित्यर्थः।

१ हेतौ। २ प्राणपिण्डेति। प्राणा करणानि पिण्डः स्थूलं शरीरं कार्यरूपम् तथा च कार्यकरणसंघात
इत्यर्थ। तदुक्तं वार्तिके— वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम्। इन्द्रियेभ्यः प्रियः प्राण आत्मा
प्रियतमस्ततः" ॥१०३६॥ इति। ३ अनात्मप्रियलाभे। ४ आत्मानात्मरूपप्रियपदार्थयोरित्यर्थः। ■ सामर्थ्यम्। ८ सुकर इति।
५ प्रातिकूल्ये सतीति बोध्यम्। ६ प्रियतरत्वहेतावन्तरतरत्वे इत्यन्वयः। ९ प्रेम्णा।
स्वल्पोऽपीति यावत्। स्वल्प हि सुकरं भवतीति।

प्रसिद्धैव॥ प्राणादिषु प्रीतेरमुख्यत्वे लोकप्रसिद्धिमाह—व्याध्यादीति। आदिना दरिद्रताराजपीडादि गृह्यते।
तस्मात्प्राणादावमुख्या प्रीतिरिति शेषः॥ तथैव प्रतीच्यपि प्रीतिरमुख्या स्यादित्याशङ्क्यानुभवविरोधमाह—
प्रतीचीति। तत्र स्वाभाविकी प्रीतिरित्यत्र दृष्टान्तमाह—अग्नीति। प्राणादावात्मनि च प्रीतेरेकरूपत्वाभावे
फलितमाह—तस्मादिति॥

नेनैवेतरहानं क्रियते न विपर्यय इति । उच्यते—स यः [1]कश्चिदन्यमनात्मविशेषं पुत्रादिकं प्रियतरमात्मनः सकाशाद्ब्रुवाणं ब्रूयादात्मप्रियवादी । किम् । प्रियं तवाभिमतं पुत्रादिलक्षणं रोत्स्यत्यावरणं प्राणसंरोधं प्राप्स्यति [2]विनङ्क्ष्यतीति । स कस्मादेवं ब्रवीति । यस्मादीश्वरः समर्थः पर्याप्तोऽसावेवं वक्तुं ह [3]यस्मात्तस्मात्तथैव स्याद्यत्तेनोक्तं प्राणसंरोधं प्राप्स्यति । यथाभूतवादी हि सः । तस्मात्स ईश्वरो वक्तुम् । ईश्वरशब्दः [4]क्षिप्रवाचीति केचित् । भवेद्यदि प्रसिद्धिः स्यात् । [5]तस्मादुज्झित्वाऽन्यत्प्रियमात्मानमेव [7] प्रियमुपासीत ।

संधानमिति विभागः । [6]युक्तिलेशं दर्शयितुमनन्तरवाक्यमवतारयति—उच्यत इति । यः कश्चिदात्मप्रियवादी स [7]तस्मादन्यं प्रियं ब्रुवाणं प्रति ब्रूयादिति संबन्धः । वक्तव्यं प्रश्नपूर्वकं प्रकटयति—किमित्यादिना । आत्मप्रियवादिन्येवं वदत्यपि पुत्रादिनाशस्तद्वाक्यार्थो नियतो न सिध्यतीत्याशङ्क्य परिहरति—स कस्मादित्यादिना । हशब्दोऽवधारणार्थः समर्थपदादुपरि संबध्यते । तस्मादेवं वक्तीति शेषः । उक्तं सामर्थ्यमनूद्य फलितमाह—यस्मादिति । यथाऽऽत्मप्रियवादिना यथोक्तं सामर्थ्यमेव कथं लब्धमित्याशङ्क्याऽऽह—यथेति । अतोऽन्यदार्तमित्यनात्मनो विनाशित्वाद्विनाशिनश्च दुःखात्मकत्वात्तत्प्रियत्वस्य भ्रान्तिमात्रत्वादात्मनस्तद्विपरीत्यान्मुख्या प्रीतिस्तत्रैवानात्मन्यमुख्येति भावः । [8]पक्षान्तरमनूद्य वृद्धप्रयोगाभावेन दूषयति—ईश्वरशब्द इति । अनात्मन्यमुख्या प्रीतिरिति स्थिते फलितमाह—

से अन्य प्रिय पदार्थों की उपलब्धि होने पर आत्मरूप प्रिय पदार्थ को प्राप्त करके अनात्मपदार्थ का त्याग किया जाता है इसके विपरीत नहीं होता। इस पर श्रुति कहती है—वह यह आत्मप्रियवादी (आत्मप्रियवादित्व की दुर्लभता प्रदर्शन के लिए) अन्यम्' अर्थात् किसी दूसरे पुत्रादि-अनात्मविशेष को आत्मा की अपेक्षा प्रियतर बतलाने वाले से कहे। क्या कहे? 'प्रियम्' अर्थात् पुत्रादिरूप तुम्हारा अभीष्ट पदार्थ 'रोत्स्यति' अर्थात् आवरण या प्राणसरोध को प्राप्त हो जाएगा अथवा विनाश को प्राप्त हो जाएगा। वह किस सामर्थ्य से ऐसा कहता है? क्योंकि वह ऐसा कहने में 'ईश्वर' अर्थात् समर्थ यानी पर्याप्त है। क्योंकि वह ऐसा है, इसलिए वैसा ही होगा जैसा उसने कहा है, वह प्राणसरोध को प्राप्त हो जाएगा, क्योंकि वह यथाभूतवादी है, इसलिए वह ऐसा कह सकता है। किन्हीं के मत में ईश्वर शब्द शीघ्रतावाचा है (यानी शीघ्र विनाश हो जाएगा)। किन्तु यदि इस अर्थ की प्रसिद्धि होती तो ऐसा अर्थ हो सकता था। इसलिए (अनात्मप्रीति के गौण होने से) अन्य प्रिय पदार्थों को छोड़कर

१ आत्मप्रियवादित्वस्य दौर्लभ्यद्योतनायदम् । २ विनङ्क्ष्यतीति । स चात्मनोऽन्य, प्रियतयाऽभीष्टो विनश्यन् सन् त्वां दुःखकृद्भवेदिति शेषः । ३ यस्मात्सामर्थ्यात् । ४ क्षिप्रवाचीति । तत्पक्षे ईश्वरो रोत्स्यतीति क्षिप्रं विनङ्क्ष्यतीत्यर्थः । तदुक्तम् वार्तिके—"यस्ते प्रियतयाऽभीष्टः सोऽचिराद्दुःखकृद्भवेत् । यतो नङ्क्ष्यति स क्षिप्रं नश्यंश्चासुखकृत्प्रियः" ॥१०४८॥ इति । प्रियस्य नश्यतो दुःखकरत्वं प्रसिद्धमिति वक्तुं चशब्दः । ५ अनात्मप्रीतेर्गौणत्वात् । ६ युक्तिलेशमिति—आत्मत्वस्याऽऽत्मनाऽन्यानपेक्षत्वादनात्मनश्चाऽऽत्मापेक्षत्वात् सोऽन्तरतम इति महती युक्तिरपि द्रष्टव्या तथा चोक्तं वार्तिके—"प्रत्यक्त्वाऽन्यानपेक्षा हि तदन्यस्तदपेक्षया । यतोऽन्तरतमः प्रत्यङ्क्तस्मादेवावगम्यते" ॥१०४२॥ इति । अपेक्षणीयवस्त्वसंभवो हिशब्दार्थः । अनात्मनाऽनात्मत्वादेव स्वातन्त्र्यायोगः । प्रत्यक्त्वस्याऽऽत्मनि स्वाभाविकत्वे फलितमाह—यस्त इति । ७ आत्मन । ८ श्रुत्या । ९ ईश्वरशब्दार्थत्वे पक्षान्तरम् ।

स य आत्मानमेव प्रियमुपास्त आत्मैव प्रियो नान्योऽस्तीति 'प्रतिपद्यतेऽन्यल्लौकिकं प्रियमप्य-
प्रियमेवेति निश्चित्योपास्ते चिन्तयति न हास्यैवंविदः 'प्रियं प्रमायुकं प्रमरणशीलं भवति ।
'नित्यानुवादमात्रमेतदात्मविदोऽन्यस्य प्रियस्याप्रियस्य चाभावात् । आत्मप्रियग्रहणस्तुत्यर्थं
वा प्रियगुणफलविधानार्थं वा 'मन्दात्मदर्शिनस्ताच्छील्यप्रत्ययोपादानात् ॥८॥

---

तस्मादिति । उपास्तिमनूद्य तत्फलं कथयति—स य इति । अनुवादद्योतको हशब्दः । प्रियमात्मसुखं
तस्यापि लौकिकसुखवन्नाशः सुखत्वादित्याशङ्किते तन्निरासार्थमनुवादमात्रमत्र' विवक्षितमित्याह-
नित्येति । फलश्रुते'र्गत्यन्तरमाह—आत्मप्रियेति । महद्धीवमा'त्मप्रियग्रहणं यत्तन्निष्ठस्य' 'प्रियं न
प्रणश्यति तस्मात्तदनुसंधानं कर्तव्यमिति स्तुत्यर्थं फलकीर्तनमित्यर्थः । पक्षान्तरमाह—प्रियगुणेति ।
यो मन्दः सन्नात्मदर्शी तस्य प्रियगुणविशिष्टात्मोपासने प्रियं प्राणादि न नश्यतीति फलं विधातुं फल-
वचनमित्यर्थः । मन्दात्मानं प्रियमुपासीनस्य प्रियं प्राणादि विद्यासामर्थ्यान्न नश्यति "तथा
च मन्दविशेषणं "मन्दमित्याशङ्क्याऽऽह—ताच्छील्येति । ताच्छील्येऽर्थे विहितस्योकञ्प्रत्ययस्य "श्रुत्यो-
पादानात्स्वभावहानायोगाच्च प्रमरणशीलत्वाभावेऽपि प्राणादेरात्यन्तिकमप्रमरणम्"विवक्षितमित्यर्थः ।

---

आत्मरूप प्रियपदार्थ की ही उपासना करनी चाहिए। जो पुरुष आत्मरूप प्रियपदार्थ की ही उपा-
सना करता है—अर्थात् 'आत्मा ही प्रिय है; दूसरे लौकिक पदार्थ प्रिय होने पर भी अप्रिय ही हैं'—
ऐसा निश्चय करके 'उपास्ते' अर्थात् चिंतन करता है, 'हास्य' अर्थात् इस प्रकार जानने वाले का आत्मसुख
'प्रमायुकम्' अर्थात् प्रकृष्टतया मरणशील नहीं होता। आत्मज्ञानी के लिए तो न तो कोई प्रिय है, न
अप्रिय ही है। इसलिए (आत्मसुख के स्वरूपतः अविनाशी होने के कारण) यह नित्यवस्तु का अनुवाद
मात्र है। अथवा यह आत्मप्रियग्रहण की स्तुति के लिए है या प्रियगुणविशिष्ट (सुखमात्र) फलविधान
के लिए है अथवा मन्द आत्मदर्शी के लिए है, क्योंकि ('प्रमायुक' पद में) ताच्छील्यप्रत्यय का ग्रहण
किया गया है'॥८॥

---

१. निश्चिनोति । २. आत्मसुखम् । ३ आत्मसुखस्य स्वरूपत एवाविनाशित्व न तूपास्त्या तदित्यनुवाद
एवायम् । ४. मन्दात्मदर्शिन इति । एवं चात्र पक्षत्रयप्रदर्शनमधिकारित्रैविध्याभिप्रायेणेति ध्येयम् ।
प्रथमपक्ष उत्तमाधिकारिणि द्वितीयो मध्यमाधिकारिणि तृतीयो मन्दे इत्या श्रमात्मनैव सुख-सुखमात्र-पुत्र दिसुख-
प्रियत्वादिति ध्येयम् । ५ अत्र विवक्षितमिति । अत्र वाक्ये फलोक्त्या अनुवादमात्रमभिमतम् । तथा
चोक्तानुमाने जन्यत्वमुपाधिरिति भाव । ६. तात्पर्यान्तरम् । ७ आत्मरूपस्य प्रियवस्तुनो ग्रहण ज्ञानम् ।
८. आत्मनिष्ठस्य । ९. सुखम् । १०. तन्नाशाभावे च । ११. मन्दमिति— न युक्तमित्यर्थः ।
प्राणाद्यनाशस्य विद्याफलस्य विदुषः सम्भवादिति तदाशयः । १२ श्रुत्योपादानादिति—तथा च तत्प्रत्ययोक्त-
मरणशीलस्यामरणशीलत्व विरुद्धम् । प्रत्ययोपात्तमरणशीलत्वाभावेऽपि (प्रत्ययस्य ताच्छील्यार्थकत्वानभ्यु-
पगमेऽपि) प्रत्यक्षत एव मरणशीलत्वेन प्रतीयमानप्राणादेर्मरणरूपस्वभावत्यागायोगादमरणशीलत्वमसम्भवीत्यर्थ-
वादमात्रं मन्दाधिकारिणो रुच्युत्पादनार्थमित्यर्थः । १३. अविवक्षितमिति—"प्रमायुकत्व मर्त्यत्वात्प्राणादेर्न
तु वार्यते" इति वार्तिकात् ॥१०५१॥ न हि विरक्तस्य ज्ञानिनो ज्ञानफल प्राणाद्यनाशित्वमनेनोच्यते ।
न च नाशिनोऽनाशित्वोक्तिर्ज्ञानफलम् मिथ्याज्ञानमूलत्वात् । अतोऽन्यदार्तमितिश्रुत्या प्राणादेर्विनाशित्वावगमात्
अतो मन्दात्मदर्शिन एवेदं फलमिति भावः ।

**तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते । किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ६ ॥**

(उसके विषय मे ब्रह्म की जिज्ञासा करने वाले ब्राह्मणा ने) यह कहा है कि ब्रह्मविद्या के द्वारा मनुष्य "हम सवरूप हो जायेंगे" ऐसा मानत हैं । उसके विषय म यह प्रश्न हाता है कि उस ब्रह्म ने क्या जाना, जिस विज्ञान स वह ब्रह्म सवरूप हो गया ? ॥६ ॥

* सूत्रिता ब्रह्मविद्याऽऽत्मेत्येवोपासीतेति' 'यदर्थोपनिपरकृत्स्नाऽपि तस्यैतस्य सूत्रस्य व्याचिख्यासु' प्रयोजनाभिधित्सयोपोज्जिघासति–तदिति वक्ष्यमाणमनन्तरवाक्यम् ।

तदाहुरित्यादेर्गतेन ग्रन्थेन सबन्ध वक्तु वृत्त कीर्तयति—सूत्रितेति । तस्या प्रमाणमाह—यदर्थेति । 'तर्हि सूत्रव्याख्यानेनैव सर्वोपनिषदर्थसिद्धेस्तदाहुरित्यादि वृथेत्याशङ्क्याऽऽह—तस्येति । विद्यासूत्र व्याख्यातुमिच्छन्ती श्रुति सूत्रितविद्याविवक्षितप्रयोजनाभिधानायोपोद्घात चिकीर्षति । प्रतिपाद्यमर्थं बुद्धौ सगृह्य तादर्थ्येनार्थान्तरोपवर्णनस्य 'तयात्वाच्चिन्ता प्रकृतसिद्धयर्थामुपोद्घात प्रचक्षते इति 'न्यायाविरुपर्थं । यद्ब्रह्मविद्ययेत्यादिवाक्यप्रकाश्य चोद्य तच्छब्देनोच्यते 'प्रकृतसबन्धासभवा-

जिसकी शेषीभूत समस्त उपनिषद है उस ब्रह्मविद्या का श्रुति न "वह आत्मा है—इस प्रकार उपासना करे" इस वाक्य से सूत्ररूप से व्याख्यान किया है । उस इस सूत्र का व्याख्यान करने की इच्छुक श्रुति उसका तात्पर्य बतलाने की इच्छा से उपक्रम करना चाहती है । (मूल मन्त्र मे) 'तत्' इस

१ किम्विति— श्रुतौ किश दमाघस्य चोद्यद्वयमुदीरयेत् । किं तद्ब्रह्मा स्वयमेक किमवेदिति चापरम्' इति वार्तिकसारे ॥ २ इति वाक्येनेत्यर्थ । ३ यदर्थेति । यच्छेषीभूतत्यर्थ । सूत्रितब्रह्मविद्याजनकत्वेनोपनिषदस्त च्छेषत्वमिति भ्रमम् । ४ तर्हीति—सर्वस्या उपनिषद सूत्रितविद्यानेपरत्वाभ्युपगम इत्यर्थं । ५ अभिमतत्यर्थ । ६ उपोद्घातत्वात् । ७ स्मृते । ८ पूर्वोपक्रान्तेन सह सम्बन्धस्यर्थ ।

*सूत्रितेत्याद्युपोद्घातसतीत्यन्तभाष्याभिप्रायाविष्करणपराणि षड्वार्तिकानि सन्ति । तथाहि— आत्मेत्यनेन वाक्येन ब्रह्मविद्यापसूत्रिता । यदर्थोपनिषत्कृत्स्ना वृत्तिस्तस्या भविष्यति ॥ आत्मत्येकमिद सूत्र काण्डिकाद्वयमेव वा । अध्यायो वा समस्तो यमध्यायद्वयमेव वा ॥ अव्याकृतव्याकरणप्रमुतीन्यपरे विदु । पञ्चैव किल सूत्राणि तथाऽपीष्ट न बाध्यते ॥ अव्याकृत स एवह तथाऽऽत्मैवति चापर । पदनीय तथा प्रेम पदाया पञ्च सूत्रिता ॥ यथोक्तानां च सूत्राणामा शास्त्रस्य समापनात् । वृत्ति स्यादुत्तरो ग्रन्थस्तत्र तथा समन्वयात् ॥ व्याचिख्यासुरयदानी सूत्रार्थाञ्श्रुतिरञ्जसा । प्रयोजनाभिधित्साया उपोद्घात प्रवर्तते ॥१०६३ १०६८॥ इति । उपसूत्रितेति । विद्यासूत्रस्य तामाप्यादुपाब्द सूत्रिताविद्याजनकत्वनोपनिषदस्त च्छेषत्वमाह—यदर्थेति । तर्हि सूत्रव्याख्यानेनैव सर्वोपनिषदर्थसिद्धेस्तदाहुरित्यादिवृथेत्याशङ्क्याऽऽह—वृत्तिरिति । तदाहुरित्यादिर्यो ग्रन्थो भविष्यत्यसौ सूत्रिताया विद्याया वृत्तिरिति योजना ॥ आत्मेत्येवोपासीतेत्यतदय सूत्रमुत्तर सर्वं तद्विवरणमित्युक्तमनुवदति—आत्मत्येकमिति । तद्वयवा काण्डिका तदर्तादयपरा तदुभय सूत्रमपरमस्य विवरणमित्याह—काण्डिकेति । तृतीयाध्याय सर्वोऽपि सूत्रमुत्तर प्रपञ्चस्तस्येत्याह—अध्यायो वेति । तृतीयाध्यायश्चतुर्थाध्यायश्च सूत्रमुत्तर विवरणमित्याह—अध्यायेति ॥ स्वाभीष्टा सूत्रक्लृप्ति विकल्पद्वारोक्त्वा मतृप्रपञ्चेष्ट तद्विभागमाह

वद्योत्यं[1] वस्त्वाहुर्ब्राह्मणा[2] ब्रह्म विविदिषवो जन्मजरामरणप्रबन्धचक्रभ्रमणकृतायासदुःखोदकापारमहोदधिप्लवभूतं गुरुमासाद्य तत्तीरमुत्तितीर्षवो[3] धर्माधर्मसाधनतत्फललक्षणात्साध्यसाधन[4]रूपान्निर्विण्णास्तद्विलक्षणनित्यनिरतिशयश्रेयः प्रतिपित्सवः । किमाहुरित्याह-

दित्याह—तदितीति । ब्राह्मणमात्रस्य[5] चोद्यकर्तृत्वं व्यावर्तयति—ब्रह्मेति । [6]उत्प्रेक्षया ब्रह्मवेदनेच्छावत्त्वं व्यावर्तयितुं तदेव विशेषणं [7]विभजते—जन्मेति । जन्म च जरा च मरणं च तेषां प्रबन्धे प्रवाहे चक्रवदनवरत भ्रमणेन कृतं यदायासात्मकं दुःखं तदेवोदकं यस्मिन्नपारे संसाराख्ये महोदधौ तत्र प्लवभूतं तरणसाधनमिति यावत् । तत्तीरं तस्य संसारसमुद्रस्य तीरं परं ब्रह्मेत्यर्थः । तेषां विविदिषायाः साफल्यार्थं [8]तत्प्रत्यनीके संसारे वैराग्यं दर्शयति—धर्मेति । [9]निर्वेदस्य निरङ्कुशत्वं द्योतयति—तद्विलक्षणेति । उत्तरवाक्यमवतार्य व्याचष्टे—किमित्यादिना । अथ परा यया तदक्षरम-

पद से वक्ष्यमाण अनन्तरवाक्य प्रकाश्यवस्तु का ग्रहण होता है । ब्रह्मजिज्ञासु ब्रह्म के जानने की इच्छा वाले हैं, जन्म-वृद्धावस्था-मरणरूप प्रवाह में चक्र की तरह अनवरत भ्रमण से उत्पन्न आयासात्मक-दुःखरूपी जल है जिसमें, ऐसे अपार संसाररूपी महासमुद्र को तरण के लिए नौकारूप गुरु की शरण में जाकर उस समुद्र के तीर को पार करने के इच्छुक धर्माधर्म साधन और फल वाले साध्यसाधनरूप संसार से वैराग्य धारण करने वाले और उससे विलक्षण नित्य निरतिशय श्रेय के जानने वाले उन ब्रह्म-जिज्ञासुओं ने ऐसा कहा । क्या कहा ? इस पर कहते हैं । "यद्ब्रह्मविद्यया" इस पद से ब्रह्म परमात्मा का नाम है, वह जिससे जाना जाता है, उसे ब्रह्मविद्या कहते हैं । उस ब्रह्मविद्या के द्वारा, "सर्वम्" 'मनुष्य' जिसे मानते हैं । इसप्रकार मनुष्य जिसे मानते हैं । 'मनुष्य' अर्थात् निरवशेष मोक्षरूप "भविष्यन्त" अर्थात हो जायंगे,

१ अवद्योत्य वस्त्विति । ब्रह्मधी सर्वात्मत्वे हेतुरित्यत्र मुमुक्षवो विविदिषवो गुरुसंनिधौ यच्चोद्यमाहुस्तदनन्तर-वाक्यप्रकाश्यमत्र यच्छब्दितमित्यर्थः । २ ब्रह्मजिज्ञासवः । ३ तेऽस्य । ४ धर्मादिरूपं यत्साधनं तत्फल-स्वर्गादि तद्रूपात्संसारात् । ५ पूर्वस्यैव विवरणमिदम् । ६ जातिमात्रविशिष्टस्य । ७ निर्मूलकल्पनया । ८ विवृणोति । ९ विविदिषाप्रतिद्वन्द्विनि । १० निर्वेदस्येति—संसारादिव मोक्षादपि वैराग्यं स्यात् फलत्वस्योभयत्राविशेषादित्याशङ्क्यत्यादि । निरङ्कुशत्वम्—असङ्कुचितत्वम् ।

—अव्याकृतेति । उक्तविभागस्य तदीयसम्प्रदायावगतत्वद्योतनार्थं किन्त्वित्युक्तम् । अस्यामपि कल्पनायामैक्य-ज्ञानान्मोक्षस्य न क्षतिरित्यङ्गीकारं सूत्रविभागस्य सूचयति—तथाऽपीति ॥ तान्येव परोक्तसूत्राणि प्रदर्शयति —अव्याकृतमिति । एषेहेति च्छान्दस्या प्रक्रियया सन्धिरनादृत । अज्ञातमात्मतत्त्वं जगतो निदानं तदेव सृष्टे जगति प्रविष्टं तदेव चानात्मनो हित्वा ज्ञातव्यं तस्यैव ज्ञातव्येन पदनीयत्वं तदेव च प्रियतममिति पदार्थ-पञ्चकमत्र सूचितमित्यर्थः ॥ उत्तरग्रन्थस्योक्तसूत्रवृत्तित्वेन प्रवृत्तिमाह—यथोक्तानामिति । सूत्रिताव्याकृता-दीनामुत्तरग्रन्थे सम्यगनुगतेरिति हेतुमाह—तत्रेति । उक्तं च—एतेषां यथोपन्यस्तानां वृत्तिस्थानीय उत्तरो ग्रन्थ आरभ्यत आ परिसमाप्तेः शास्त्रस्येति ॥ स्वपरपक्षयोः सूत्रं विभज्य स्वपक्षे तदाहुरित्यादेस्तात्पर्यमाह —व्याचिख्यासुरिति । सूत्रप्रवृत्तेरनन्तरमवसरे सत्यात्मत्यादिसूत्रार्थमात्मज्ञानं तदुपायं च वक्तुं तदपेक्षितानपि विवेकादीनु-पायभेदानञ्जसा व्याख्यातुमिच्छन्ती श्रुतिः सूचितज्ञानफलकथनायोपोद्घातं [1]चिन्ता प्रकृतसिद्धयर्थामुपोद्घातं प्रचक्षते' इत्युक्तलक्षणं करोतीत्यर्थः । अथेति सूत्रविभागाख्यानन्तर्योक्तिः । आदौ सूत्रं ततो वृत्तिरिति क्रमार्थ-मिदानीमित्युक्तम् । सूत्रभेदे तदंशे च तदवज्ञानेऽप्यपि तत्र तत्र तदुक्तिव्याख्याभेदं दृष्ट्वा बहूक्तिरिति द्रष्टव्यम् । इच्छायास्त्वविवक्षितत्वं ॥

यद्ब्रह्मविद्यया ब्रह्म परमात्मा [1]तद्यया वेद्यते स ब्रह्मविद्या तया ब्रह्मविद्यया [2]सर्वं निरवशेषं भविष्यन्तो भविष्याम इत्येवं मनुष्या यन्मन्यन्ते । मनुष्यग्रहणं [3]विशेषतोऽधिकारज्ञापनार्थम् । मनुष्या एवं [4]हि [5]विशेषतोऽभ्युदयनिःश्रेयससाधनेऽधिकृता इत्यभिप्रायः[6] । यथा [7]कर्मविषये फलप्राप्तिं [8]ध्रुवां कर्मभ्यो मन्यन्ते तथा ब्रह्मविद्यायाः सर्वात्मभावफलप्राप्तिं ध्रुवामेव मन्यन्ते [9]। [10]वेदप्रामाण्यस्योभयत्राविशेषात् ।

धिगम्यत, इति श्रुत्यन्तरमाश्रित्याऽऽह—तद्ययेति । मनुष्या यन्मन्यन्ते "तत्र विरुद्धं "वस्तु भातीति शेषः । मनुष्यग्रहणस्य कृत्यमाह—मनुष्येति । ननु देवादीनामपि विद्याधिकारो "देवताधिकरणन्यायेन वक्ष्यते तत्कुतो मनुष्याणामेवाधिकारज्ञापनमित्यत आह—मनुष्या इति । विशेषतः सर्वाविसंवादेनेति यावत् । "तथाऽपि किमिति "ते ज्ञानान्मुक्ति "सिद्धवद्ब्रुवन्तीत्याशङ्क्याऽऽह—यथेति । उभयत्र कर्मब्रह्मणोरिति यावत् ।

पद का ग्रहण सर्वाविसंवादरूप से ज्ञान और कर्म का अधिकार ज्ञापन करने के लिए है । भावाशय यह है कि अभ्युदय और निःश्रेयससिद्धि के लिए ज्ञान और कर्मरूपसाधनों में विशेषतः मनुष्यों का ही अधिकार है । जिस प्रकार कर्मकाण्ड में कर्मों से होने वाली फलप्राप्ति को अव्यभिचारी मानते हैं, उसी प्रकार ब्रह्मविद्या से सर्वात्मभावफलप्राप्ति को भी अव्यभिचारी ही मानते हैं । (दूसरा हेतु यह है कि) वेद के प्रामाण्य में दोनों ही के विषय में समानता है ।

१. तद्ययेति । यया बुद्ध्या तद्ब्रह्म सच्चिदानन्दाख्यं प्रत्यक्त्वेन साक्षाद्वेद्यते सा वाक्योत्था बुद्धिवृत्तिः ब्रह्मविद्या तया ब्रह्मविद्यया सर्वं कृत्स्नं भविष्याम इति यन्मनुष्या मन्यन्ते सभावयन्ति तत्र (सभावितेऽर्थे) विद्याफलमधिकृत्य विरोधं चोदयामो इति । अद्वैते वस्तुनि यत्प्रमाणं तत्परिशोधनार्थं मुमुक्षुणा चोद्यं द्रष्टव्यम् । २ मोक्षरूपम् । ३ विशेषतः—सर्वाविसंवादेन । अधिकारेति—ज्ञानकर्मणोरिति शेषः । ४ तेषामेव वेदार्थेऽधिकृतिरिति पूर्वकाण्डे प्रदर्शितमिति हिशब्दार्थः । ५ ज्ञानकर्माख्ये । ६ अभिप्राय इति—अत्र मनुष्यग्रहणस्य कृत्यान्तरमाहुर्वार्तिके । तथाहि—'दृष्टायतो वा विद्यायां मनुष्यग्रहणं कृतम् । तावन्मात्रोऽधिकारोऽत्र नाग्निहोत्राधिकारवत् ॥ प्रत्यबुध्यत यो यस्तदिति चोर्ध्वं प्रवक्ष्यति । नातः कर्माधिकारोऽत्र दृष्टार्थत्वादपेक्ष्यते" ॥१०८५-१०८६॥ इति । विद्याया शोकादिनाशाख्यदृष्टफलत्वात्तत्कामी सर्वोऽपि साधारणाधिकारिलक्षणाक्रान्तोऽत्र विद्यायामधिकारी न त्वविशेषात्राधिकारिनियमवदत्र तन्नियमोऽस्तीति वक्तुमेव मनुष्याक्तिरित्यर्थः ॥ कर्माधिकारिविज्ञाने नापेक्षितो विशिष्टोऽधिकारीत्यत्र मानमाह—प्रत्येति । प्रवक्ष्यतीति—विद्याधिकार्यनियममिति शेषः । मनुष्यग्रहणं विशेषतोऽधिकारज्ञापनार्थमित्यादिभाष्यं तर्हि कथमित्याशङ्क्य वाक्यदोषविरोधप्रसङ्गादेयमित्याह—नात इति । अतो दृष्टार्थत्वादिति संबन्धः । कर्माधिकारी तद्वद्विशिष्टोऽधिकारीत्यर्थः । अत्रेति विद्यायामित्यर्थः ॥ ७ कर्मकाण्डे । ८ अव्यभिचरिताम् । ९ एवेति—उभयत्र साधनत्वशक्त्यविशेषादित्यर्थः । १० हेत्वन्तरमाह—वदति । ११ मनुष्यमते । १२ मोक्षाख्यफलम् । १३. देवताधिकरणम्—तदुपर्यपि बादरायणः संभवात् (ब्र सू १।३।२६) इत्येवमादि । देवताधिकरणेति—प्रमाणान्तरसंवादविसंवादाभावे सति तत्र मन्त्रादौ विग्रहादिरूपोऽर्थः सिध्यति स देवताधिकरणन्यायः । यथा 'वज्रहस्तः पुरंदर' इत्यत्र तात्पर्याविषयीभूतमपि (ऐन्द्रयागप्राशस्त्यविषयत्वात्तात्पर्यस्य) देवताविग्रहत्वं वज्रहस्तत्वं च सिध्यति तथा 'यो यो देवानामि'त्यादिश्रुतितात्पर्यस्य ब्रह्मविदस्तद्भावापत्तिविषयत्वेऽपि तदविषयभूतोऽपि देवादीनां विद्याधिकारः सिध्यतीति । १४ मनुष्यग्रहणस्योक्ततात्पर्यवत्त्वेऽपि । १५ ब्राह्मणाः । १६ निश्चिन्वन्त इव ।

तत्र विप्रतिषिद्धं वस्तु लक्ष्यतेऽतः' पृच्छामः—'किमु तद्ब्रह्म यस्य विज्ञानात्सर्वं भविष्यन्तो मनुष्या मन्यन्ते 'तत्किमवेद्यस्माद्विज्ञानात्तद्ब्रह्म सर्वमभवत् । ब्रह्म च 'सर्वमिति श्रूयते । 'तद्यद्यविज्ञाय किंचित्सर्वमभवत्तथाऽन्येषामप्यस्तु किं ब्रह्मविद्यया । अथ विज्ञाय सर्वमभवद्विज्ञानसाध्यत्वात्कर्मफलेन 'तुल्यमेवेत्यनित्यत्वप्रसङ्गः सर्वभावस्य ब्रह्मविद्याफलस्य । अनवस्यादोषश्च 'तदप्यन्यद्विज्ञाय सर्वमभवत्ततः 'पूर्वमप्यन्यद्विज्ञाय

उत्तरवाक्यमुपादत्ते—तत्रेति । मनुष्याणां मत तच्छब्दार्थः । वस्तुशब्देन ज्ञानात्फलमुच्यते । 'आक्षेपगर्भस्य चोद्यस्य प्रवृत्तौ विरोधप्रतिभासो हेतुरित्यतःशब्दार्थः । "तद्ब्रह्म परिच्छिन्नमपरिच्छिन्नं वेति "कुतो ब्रह्मणि चोद्यते तत्राऽऽह—"यस्येति । प्रश्नान्तरं करोति—तत्किमिति । ब्रह्म स्वात्मानमवेति "सर्वस्य व्यतिरिक्तविषये ज्ञानं प्रसिद्धं ह्यासीदतिरिक्तं वेति प्रश्नस्य "प्रसङ्गं दर्शयति—यस्मादिति । सर्वं खल्विदं ब्रह्मेत्यादौ ब्रह्मणः सर्वात्मत्वश्रवणादतितर्कि विचारेणेत्याशङ्क्याऽऽह—ब्रह्म चेति । किंशब्दस्य प्रश्नार्थत्वमुक्त्वाऽऽक्षेरिक्तविषयाभावादात्मानमेवावेदिति "पक्षस्य सावकाशतेरर्थः । पार्थमाह—तद्यदीति । ब्रह्म हि किंचिदज्ञात्वा सर्वमभवज्ज्ञात्वा वा नाऽऽद्यो ब्रह्मविद्यानर्थक्यादिस्युक्त्वा द्वितीयमनुवदति—अथेति । स्वरूपमन्यद्वा ज्ञात्वा ब्रह्मणः सर्वापत्तिरिति विकल्प्योभयत्र साधारणं दूषणमाह—विज्ञानेति । "द्वितीये दोषान्तरमाह—अनवस्थेति । "बहिरेवाऽऽक्षेपं परिहरति—

किंतु (ज्ञान मनुष्य द्वारा सभावित अर्थ मे है, उसमे फलात्मक वस्तु मोक्ष है) यह बात विरुद्ध 'सी प्रतीत होती है। इसलिये हम पूछते है—वह ब्रह्म क्या है, जिसको जानने से 'सर्वरूप हो जायगे' ऐसा मनुष्य मानते हैं ? उसने क्या जाना, जिसके जानने से वह ब्रह्म सर्वरूप हो गया ? ब्रह्म का सर्वरूप (तदन्याभाव) होना सुना जाता है। वह ब्रह्म यदि कुछ भी न जानकर सर्वरूप हुआ है, तो फिर दूसरों के लिए भी यही बात होनी चाहिए। ऐसे मे ब्रह्मविद्या से क्या प्रयोजन है ? और यदि जानकर वह ब्रह्म सर्वरूप हुआ तो विज्ञानसाध्य होने से उसकी सर्वरूपता कर्मफल के समान ही है, इससे ब्रह्मविद्या के फल की सर्वरूपता मे अनित्यत्व का प्रसंग आता है । वह ब्रह्म अपने से भिन्नपदार्थ को जानकर सर्वरूप हुआ, इससे पहले भी वह ब्रह्म किसी अन्य को जानकर सर्वरूप हुआ था—इस प्रकार अनवस्था

१. मनुष्यसभावितऽर्थे ज्ञाने फलात्मक वस्तुविरुद्ध प्रतीयत। अत —विरोधप्रतीते । २ किं तच्चाद्यमित्याशङ्क्य वाक्य व्याचष्टे—किमिति । यस्य ब्रह्मणो विज्ञानान्मोक्ष तदनुमुक्षवो तत् किं परिच्छिन्नमुतापरिच्छिन्नमिति प्रश्नार्थ. । ३. तत्किमिति—यज्ज्ञानाद्ब्रह्म सर्वत्व गच्छति तत् किं स्वरूपमेव विदित्वा सर्वं भवत्युतान्यदित्यर्थः । ४ यदीयात । ५ सर्वमिति—तत्सर्व तदन्याभाव इति भाव. । ६ ब्रह्म । ७. तुल्यमेवेति—विज्ञानफलमिति शेष. । ८. ज्ञानहेतुकफलम् । ९—आक्षेपेत्यादि । तथा च आक्षेपगर्भस्य चोद्यस्य प्रवृत्तौ विरोधप्रतीतरेव हेतुत्वादाक्षेपगर्भं चोदयाम इत्यर्थं मुमुक्षून्प्रति शिष्याणामाक्षेपगर्भं घोद्य प्रसरेदिति भाव । १०. तद्ब्रह्मेति—परिच्छिन्नत्वे ब्रह्मशब्दानर्हत्वम् । अपरिच्छिन्नत्वे तु वेद्यत्वानुपपत्तिरित्याक्षेप्तुरभिप्रायः । ११ कुतो ब्रह्मणीति—ब्रह्मशब्दावयवार्थपर्यालोचनयैव ब्रह्मणोऽपरिच्छिन्नत्वानवगमाच्चोद्यानुपपत्तिरिति भाव । १२ यस्येतीति—तथा च वेद्यत्वेन परिच्छिन्नत्वशङ्का भावशालिनी भाव. घटादिवत् । १३. अवसरम् । १४. प्राणिजातस्य । १५. अतिरिक्तज्ञानपक्षस्य तु सावकाश एवेत्युक्तम् । १६ द्वितीय इति—प्रथमेऽपि स्वेनैव स्वज्ञाने कर्तृकर्मविरोधो दूषण' द्रष्टव्यम् । १७ बहिरेवेति—श्रोताक्षेपपरिहारादबहिरेवेत्यर्थं ।

**ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् । अहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृ-**

उत्पत्ति से पहले यह नामरूपात्मक जगत् ब्रह्मस्वरूप ही था। उसने अपने को ही जाना कि "मैं ब्रह्म हूँ"। इसी विज्ञान से वह सर्वरूप हो गया। उसे देवताओं में से जिस जिसने जाना, वही तद्रूप हो गया। ऐसे ही ऋषियों और मनुष्यों में से भी (जिस जिसने उस ब्रह्म को उक्त प्रकार से जाना वह ब्रह्मरूप हो गया) ऋषि वामदेव ने उस तत्त्व को आत्मभाव से देखते हुए ही जाना। "मैं ही मनु और सूर्य भी हुआ था", इस प्रकृतब्रह्म को इस समय भी जो इस प्रकार से जानता है कि 'मैं ब्रह्म हूँ" तो वह इस

ततः पूर्वतरमप्यन्यद्विज्ञायेति। न तावदविज्ञाय सर्वमभवत्। शास्त्रार्थवैरूप्यदोषात्। फलानित्यत्वदोषस्तर्हि, नैकोऽपि दोषोऽर्थविशेषोपपत्तेः ॥६॥

यदि किमपि विज्ञायैव तद्ब्रह्म सर्वमभवत्पृच्छामः किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वम-

न तावदिति। अज्ञात्वैव ब्रह्मणः सर्वभावोऽस्मदादेस्तु ज्ञानादिति 'शास्त्रार्थे वैरूप्यम्। न चास्मदादेरपि' तदन्तरेण तद्भावः शास्त्रानर्थक्यात्। ज्ञानाद्ब्रह्मणः सर्वभावपक्षे स्वोक्तं दोषमाक्षेप्ता स्मारयति—फलेति। 'स्वतोऽपरिच्छिन्नं ब्रह्माविद्यातत्कार्यसम्बन्धात्परिच्छिन्नवद्भाति 'तन्नि'वृत्त्योपाधिकं सर्वभावस्य साध्यत्वं न चानवस्था ज्ञेयान्तरानङ्गीकारान्नापि 'क्रियाविरोधो 'विषयत्वमन्तरेण वाक्यीयबुद्धिवृत्तौ स्फुरणादिति परिहरति—नैकोऽपीति। "एतेन विद्यावैयर्थ्यमपि परिहृतमित्याह—अर्थेति। यद्यपि ब्रह्मापरिच्छिन्नं नित्यसिद्धं तथाऽपि तत्राविद्यातत्कार्यध्वंसरूपस्यार्थविशेषस्य ज्ञानादुपपत्तेर्न तद्वैयर्थ्यमित्यर्थः ॥६॥

इदानीं प्रश्नमनूद्य तदुत्तरत्वेन ब्रह्मेत्यादिश्रुतिमवतारयति—यदीत्यादिना। "तत्र वृत्तिकृतां मतानुसारेण ब्रह्मशब्दार्थमाह—ब्रह्मेति। तस्य परिच्छिन्नत्वाज्ज्ञानेन सर्वभावस्य साध्यत्वसंभवादिति

दोष आ जाता है। किंतु वह बिना जाने तो सर्वरूप नहीं हुआ, क्योंकि इससे शास्त्र की अनर्थकता सिद्ध होने लगेगी। तो फिर (ज्ञान से सर्वभावप्राप्तिरूप) फल की अनित्यता का दोष बना रहा? नहीं, ऐसा नहीं कह सकते। विशेषार्थ की सिद्धि होने से एक भी दोष नहीं रहेगा ॥६॥

यदि वह ब्रह्म कुछ जानकर ही सर्वरूप हुआ तो हम पूछते हैं कि उस ब्रह्म ने क्या जाना, जिससे

१. तर्हीति। ज्ञानात्सर्वभावाभ्युपगम इत्यर्थः। २. तर्हि। ३ शास्त्रार्थे वैरूप्यमिति—सर्वभावापत्तिरूपशास्त्रार्थः कस्यचिज्ज्ञानजन्यः कस्यचिच्च तदजन्य इति तत्र विरुद्धधर्मवत्त्वं वैरूप्यमित्यर्थः। ४. ब्रह्मण इवेत्यपि शब्दार्थः। अज्ञात्वैव किंचिद्ब्रह्मण सर्वभावोऽभ्युपगम्यतामिति भावः। ५. स्वरूपतः। परिच्छिन्नापरिच्छिन्नविषयमाद्य चोद्यमपवदति—स्वत इति। ६. ज्ञात्वा सर्वमभवदिति पक्षोक्तमाक्षेपं प्रतिक्षिपति—तन्निवृत्त्योपाधिकमिति। ७. कल्पितपरिच्छेदनिवृत्तिप्रयुक्तम्। ८. क्रियाविरोध इति—एकस्या क्रियायामेकस्यैव कर्मत्वकर्तृत्वविरोध इत्यर्थः। ९. फलविषयत्वं विना। १०. वक्ष्यमाणेन। ११. श्रुतिघटकमिति यावत्।

षिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति।
तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स
इद౮ सर्वं भवति तस्य ह न देवाश्चनाभूत्या
ईशते। आत्मा ह्येषा स भवति अथ योऽ-
न्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति

विज्ञान से सर्वरूप हो जाता है। ऐसे तत्त्ववेत्ता के पराभव करने में द्योतनशील देवता भी समर्थ नहीं
होते, क्योंकि वह तत्त्वज्ञानी इन देवताओं का भी आत्मा हो जाता है। यह आराध्यदेव भिन्न है और
मैं उससे भिन्न हूँ, इस प्रकार जो अपने से भिन्न देवता की उपासना करता है, वह अज्ञानी परमार्थतत्त्व
को नहीं जानता। जैसे लोक में भारवाही पशु होता है, वैसे ही वह भेदवादी देवताओं का पशु है। जैसे

भवदिति। एवं चोदिते सर्वदोषानाघ्रातं प्रतिवचनमाह—ब्रह्मापरं सर्वभावस्य साध्यत्वोपपत्तेः। न हि परस्य ब्रह्मणः सर्वभावापत्तिर्विज्ञानसाध्या। विज्ञानसाध्यां च सर्वभावापत्तिमाह, तस्मात्तत्सर्वमभवदिति। 'तस्माद्ब्रह्म वा इदमग्र आसीदित्यपरं ब्रह्मेह ब्राह्मणः स्यात्। सर्वं भविष्यन्तो मनुष्या भवितुमर्हन्ति। मनुष्याधिकाराद्वा तद्भावी

हेतुमाह—सर्वभावस्येति। सिद्धान्ते यथोक्तहेत्वनुपपत्तिं दोषमाह—न हीति। सा तर्हि विज्ञानसाध्या मा भूदित्यत आह—विज्ञानेति। हिरण्यगर्भस्य नोपदेशजन्यज्ञानाद्ब्रह्मभावः 'सहसिद्धं चतुष्टयम्' इति स्मृतेः स्वाभाविकज्ञानवत्त्वात्तत्सर्वमभवदिति चोपदेशाधीनधीसाध्योऽसौ श्रुतो न चाऽऽसीदित्यतीतकाला-वच्छेदश्रवणात्त्रिकाले" तस्मिन्नुच्यते। "समवर्ततेति च जन्ममात्रं श्रूयते। कालात्मके तत्संबन्धस्य "स्वाश्रय-पराहतत्वान्मनुष्याणां प्रकृतत्वाच्च नापरं ब्रह्मेह ब्रह्मशब्दमित्यपरितोषाद्वृत्तिकारमतं हित्वा ब्रह्मेति "ब्रह्मभावी पुरुषो निर्दिश्यत इति भर्तृप्रपञ्चोक्तिमाश्रित्य "तन्मतमाह—मनुष्येति। "तदेव प्रपञ्चयति

वह सर्वरूप हो गया? ऐसा प्रश्न होने पर श्रुति इस प्रकार उत्तर देती है, जिसमें लेशमात्र भी दोष का स्पर्श नहीं है।—ब्रह्मशब्द अपरब्रह्म यानी हिरण्यगर्भ का बोधक है, क्योंकि (ज्ञान द्वारा) सर्वभाव का साध्यत्व संभव है। परब्रह्म की सर्वभावप्राप्ति विज्ञानसाध्य नहीं है। 'इसी से वह ब्रह्म सर्वरूप हो गया' इस श्रुतिवाक्य से सर्वभावप्राप्ति विज्ञानसाध्य बतलाई गयी है। (परब्रह्म की सर्वभावप्राप्ति में विद्या की अपेक्षा न होने से) इसलिए 'वह ब्रह्म ही आदि में था' इस श्रुतिवाक्य में 'ब्रह्म'शब्द अपरब्रह्म

१. उपोद्घातोक्तसर्वदोषास्पृष्टम्। २ हिरण्यगर्भः। ३. परब्रह्मणः सर्वभावापत्तेर्विद्यानपेक्षत्वात्। ४. विद्याया मनुष्यस्यैवाधिकारात्। ५. मनुष्यः। ६. ब्रह्मशब्दार्थः। ७. परस्यैव ब्रह्मशब्दार्थत्वपक्षे। ८. ज्ञानादिचतुष्टयम्। ९. सम्बन्धः। १०. त्रिकालस्वरूपे। ११. ननु "हिरण्यगर्भः समवर्तताग्रे" इति कालसम्बन्धोऽपि तत्र श्रूयत इत्याशङ्क्याऽऽह—हिरण्यगर्भ इति। १२. आत्माश्रयदोषेण निरस्तत्वात्। १३. इदानीमब्रह्मापि भाविवृत्त्या। १४. तन्मतमिति—ज्ञानात्प्रागवस्तुतोऽब्रह्मैव जीवो ज्ञानाद्ब्रह्मभूयं भजतीति तन्मतम्। १५. तन्मतमेव।

न स वेद यथा पशुरेव स देवानाम्। यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ १० ॥

लोक मे बहुत से पशु जीविका प्रदाता का भार वहन करते हुए पालन करते हैं, वैसे ही हविष्यान्न प्रदान कर एक-एक मनुष्य देवताओं का पालन करता है। उनमें से एक पशु का भी अपहरण किये जाने पर मनुष्य को अप्रिय जान पड़ता है, फिर भला बहुतों के अपहरण किये जाने पर तो कहना ही क्या ? । अतः यह देवताओं को सर्वथा प्रिय नहीं है कि मनुष्य ब्रह्मस्वरूप आत्मतत्त्व को जानें ॥१०॥

मन्यन्त 'इति हि मनुष्याः प्रकृतास्तेषां चाभ्युदयनिःश्रेयससाधने' 'विशेषतोऽधिकार इत्युक्तम्। 'न परस्य ब्रह्मणो नाप्यपरस्य प्रजापतेः। 'अतो द्वैतैकत्वापरब्रह्मविद्यया कर्मसहितयाऽपरब्रह्मभावमुपसम्पन्नो भोज्यादपावृत्तः सर्वप्राप्त्योच्छिन्नकामकर्मबन्धनः परब्रह्मभावी 'ब्रह्मविद्याहेतोर्ब्रह्मेत्यभिधीयते। दृष्टश्च लोके भाविनीं वृत्तिमाश्रित्य शब्द-

—सर्वमित्यादिना। 'द्वैतैकत्वं सर्वजगदात्मकमपरं हिरण्यगर्भाख्यं ब्रह्म तस्मिन्विद्या हिरण्यगर्भोऽहमित्यहंग्रहोपासितस्तया समुच्चितया तद्भावमिहैवोपगतो हिरण्यगर्भपदे यद्भोग्यं ततोऽपि दोषदर्शनाद्विरक्तः 'सर्वकर्मफलप्राप्त्या निवृत्तकामादिनिगडः साध्यान्तराभावाद्विद्यामेवार्थयमानस्तद्वशाद्ब्रह्मभावी जीवोऽस्मिन्वाक्ये ब्रह्मशब्दार्थ इति फलितमाह—अत इति। कथं ब्रह्मभाविनि जीवे ब्रह्मशब्दस्य

का बोधक हो सकता है। अथवा विद्या मे मनुष्य का ही अधिकार होने से ब्रह्मशब्द से ब्रह्मभाव को प्राप्त होने वाला मनुष्य हो सकता है। 'हम सर्वरूप हो जाएंगे, ऐसा मनुष्य मानते हैं।' इस वाक्य से यहाँ मनुष्यों का प्रकरण है क्योंकि उन्हीं का अभ्युदय निःश्रेयसरूप ज्ञान-कर्म के साधनों में विशेषरूप से अधिकार है—ऐसा पहले कहा गया है। परब्रह्म या अपरब्रह्म हिरण्यगर्भ का नहीं। परिशेषतः कर्मसहित द्वैतैकत्वरूप अपरब्रह्मविद्या द्वारा अपरब्रह्मभाव को प्राप्त हुआ। भोगों से निवृत्त सर्वकर्मफल की प्राप्ति होने से जिसके काम और कर्मरूप बन्धन क्षीण हो गये है वह परब्रह्म को प्राप्त होने वाला मनुष्य

१ यथा हेति—यथा पशुरित्यनेनैवेष्टसिद्धौ किं यथेत्यादिवाक्येनेति चेन्नरगोगर्दभादिवैसादृश्यं दर्शयितुमिति गृहाण। तदुक्तम् वार्तिके—'एकैकस्वामिको लोके यथादि पशुरिष्यते। ततोऽप्यतिशयं पुमान् सर्वलोकोपकारितेति" ॥१५७२॥ २ इतिवाक्यात्। ३ ज्ञानकर्मणोः। ४. सर्वाविसंवादेन। ५. ननु परापरब्रह्मणोरन्यतरग्रहणमिह कुतो न स्यात्तयोरपि मनुष्यशब्दप्रयोगसंभवात् (पुरुषशब्दप्रयोगवत्) अत आह—नेति। परस्य अपरस्य वा ज्ञानानर्थित्वादप्रकृतत्वाच्च नात्र ग्रहणमिति भावः। किंच तथो यो देवानामित्यादिना सर्वेषामविशेषतः पुरुषार्थहेतुतया ब्रह्मविद्योक्ता न हि हिरण्यगर्भादिमात्रस्य तथा च वाक्यदोषादेव ब्रह्मशब्दो न सदाचीत्यपि द्रष्टव्यम्। ६ पारिशेष्यात्। ७ ब्रह्मविद्यारूपाद्धेतोः। ८ द्वैतैकत्वमिति—द्वैतरूपमद्वैतरूपं च। नानात्वमित्यर्थः। ९ सूत्रपदप्राप्त्या।

प्रयोगो यथौदनं पचतीति, शास्त्रे च परिव्राजकः सर्वभूताभयदक्षिणामित्यादिस्तथेहेति केचिद्ब्रह्म ब्रह्मभावी पुरुषो ब्राह्मण इति व्याचक्षते।

तन्न, सर्वभावापत्तेरनित्यत्वदोषात्। न हि सोऽस्ति लोके परमार्थतो यो निमित्तवशाद्भावान्तरमापद्यते नित्यश्चेति। तथा ब्रह्मविज्ञाननिमित्तकृता चेत्सर्वभावापत्तिर्नित्या चेति विरुद्धम्। अनित्यत्वे च कर्मफलतुल्यतेत्युक्तो दोषः। अविद्याकृतासर्वत्वनिवृत्तिं चेत्सर्वभावापत्तिं ब्रह्मविद्याफलं मन्यसे ब्रह्मभाविपुरुषकल्पना व्यर्था स्यात्।

प्राग्ब्रह्मविज्ञानादपि सर्वो जन्तुर्ब्रह्मत्वान्नित्यमेव सर्वभावापन्नः परमार्थतोऽविद्यया

---

प्रवृत्तिरित्याशङ्क्याऽऽह—दृष्टश्चेति। आदिशब्देन 'गृहस्थः सदृशीं भार्यां विन्देतेत्यादि गृह्यते। इहेति प्रकृतवाक्यकथनम्।

भर्तृप्रपञ्चव्याख्यानं दूषयति—तन्नेति। ब्रह्मशब्देन परस्मादर्थान्तरस्य ग्रहे तस्य सर्वभावापत्तेः साध्यत्वादनित्यत्वापत्तेर्न तन्मतमुचितमित्यर्थः। साध्यस्यापि मोक्षस्य नित्यत्वमाशङ्क्य "यत्कृतकं तदनित्यमिति न्यायमाश्रित्याऽऽह—न हीति। सामान्यन्यायं प्रकृते योजयति—तथेति। भवतु सर्वभावापत्तेरनित्यत्वं का हानिस्तत्राऽऽह—अनित्यत्वे चेति। किंच जीवस्याब्रह्मत्वं तदविद्याकृतं पारमार्थिकं वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अविद्याकृतेति। ब्रह्मभाविपुरुषकल्पना व्यर्थेत्युक्तं व्यक्तीकरोति "तत्रानुवादभागं विभजते—प्रागित्यादिना।

---

ब्रह्मविद्यारूप हेतु से "ब्रह्म" इस शब्द से कहा जाता है। भविष्यवृत्ति को आश्रित करके लोकव्यवहार में भी शब्द का प्रयोग देखा जाता है। जैसे "भात पकाता है" इस वाक्य में (पकते हुए चावलों को भात कहा जाता है) तथा शास्त्र में भी 'संन्यासी समस्त प्राणियों को अभयरूप दक्षिणा दे (कर संन्यास ग्रहण करे)' इत्यादि वाक्य में ऐसा ही प्रयोग है। उसी प्रकार यहाँ भी कुछ लोग "ब्रह्मभाव को प्राप्त होने वाला मनुष्य ही ब्रह्म है" ऐसी व्याख्या करते हैं।

(उक्त भर्तृप्रपञ्च के मत का खण्डन करते हैं—) ऐसा कहना ठीक नहीं है। क्योंकि इससे सर्वभावप्राप्तिरूप मोक्ष में अनित्यत्व दोष आ जायगा। लोक या शास्त्र में ऐसा कोई वास्तविक पदार्थ नहीं है जो किसी कारणवश भावान्तर को प्राप्त हो और नित्य भी हो। ऐसे ही यदि सर्वभावापत्ति भी ब्रह्मज्ञानरूपकारणजन्या हो, तो वह नित्य भी है— ऐसा कहना युक्तिसंगत न होगा। यदि उसे अनित्य कहा जाय तो कर्मफलतुल्यता होती है। यह अपसिद्धान्तरूप दोष पहले बतला चुके हैं। यदि तुम अविद्याकृत असर्वत्वनिवृत्ति को ब्रह्मविद्या का सर्वभावप्राप्तिरूप फल मानते हो तो ब्रह्मीभूत मनुष्य की कल्पना करना वृथा है।

---

१ तण्डुल पचतीति प्रयोक्तव्ये। पाकानन्तरभावित्वादोदनस्य। २ दक्षिणामिति दद्यादिति शेषः। दक्षिणादानानन्तरं हि परिव्रजनमिति भावः। ३ लोके इति शास्त्रस्याप्युपलक्षणम्। ४ प्रथमान्तात्तसिः। ५ दोषः—अपसिद्धान्तरूपः। ६ गृहस्थ इत्यादि—गार्हस्थ्यस्य भार्यात्वस्य विवाहानन्तरभावित्वेऽपि प्राग्व्यवहारः। ७ सदृशीमिति—सादृश्यं प्रति नियतगोत्रत्वकुलीनत्वादिनेति बोध्यम्। ८ मोक्षस्य। ९ ज्ञानातिरिक्तसाध्यस्यानित्यत्वमिति भावः। १० यत्कृतकमिति—न च ज्ञानातिरिक्तसाध्यत्वमुपाधिरिति वाच्यम्। तर्हि ज्ञानसाध्यभिन्नत्वं तदा पक्षेतरत्वमेव। यदि तु ज्ञानातिरिक्ते न साध्यत्वरूपं तदा प्रागादिसान्तेऽविद्यादौ साध्याव्यापकमिति। ११ तत्रेति—अविद्याकृतेत्यादिपूर्वोक्तौ। अनुवादभागं मन्यसेपर्यन्तम्।

त्वब्रह्मत्वमसर्वत्वं चाध्यारोपितं यथा शुक्तिकायां रजतं व्योम्निवा 'तलमलवत्त्वादि तथेह ब्रह्मण्यध्यारोपितमविद्ययाऽब्रह्मत्वमसर्वत्वं च ब्रह्मविद्यया निवर्त्यत इति मन्यसे यदि तदा युक्तं यत्परमार्थत आसीत्परं ब्रह्म ब्रह्मशब्दस्य मुख्यार्थभूतं 'ब्रह्म वा इदमग्र आसीदित्यस्मिन्वाक्य उच्यत इति वक्तुम् । 'यथाभूतार्थवादित्वाद्वेदस्य' । न त्वियं कल्पना युक्ता ब्रह्मशब्दार्थविपरीतो ब्रह्मभावी पुरुषो ब्रह्मेत्युच्यत इति । श्रुतिहान्यश्रुतकल्पनाया अन्याय्यत्वात् ।

महत्तरे प्रयोजनान्तरेऽसत्य विद्याकृतव्यतिरेकेणाब्रह्मत्वमसर्वत्वं च विद्यत एवेति

---

—तदेति । तस्मिन्पक्षे यद्ब्रह्मज्ञानात्पूर्वमपि परमार्थतः परं ब्रह्माऽऽसीत्तदेव प्रकृते वाक्ये ब्रह्मशब्देनोच्यत इति युक्तं वक्तुं तद्धि ब्रह्मशब्दस्य मुख्यमालम्बनमिति योजना । 'गौर्बाहीक इतिवदमुख्यार्थोऽपि ब्रह्मशब्दो 'निर्वहतीत्याशङ्क्याऽऽह—यथेति । निरतिशयमहत्त्वसंपन्नं वस्तु ब्रह्मशब्देन श्रुतमश्रुतस्तु ब्रह्मभावी पुरुष 'श्रुतहान्यश्रुतकल्पना न "न्यायवती तस्मात्तत्कल्पना न युक्तेति "व्यावर्त्यमाह—न त्विति ।

"अग्निरधीते"ऽनुवाकमित्यादौ श्रुतहान्यश्रुतोपादानं दृष्टमित्याशङ्क्याऽऽह—महत्तर इति । तत्राग्निशब्दस्य मुख्यार्थत्वे सत्य"न्विताभिधानानुपपत्त्या वाक्यार्थासिद्धेस्तज्ज्ञाने प्रयोजने श्रुतमपि हित्वाऽश्रुतं गृह्येत प्रकृते त्वसति प्रयोजनविशेषे श्रुतहान्यादिर्न युक्तिमतीत्यर्थः । मनुष्याधिकारं

---

ब्रह्मविज्ञान होने से पूर्व भी सभी प्राणी ब्रह्मस्वरूप होने के कारण पारमार्थिक दृष्टि से नित्य ही सर्वभाव को प्राप्त है—अब्रह्मत्व और असर्वत्व तो अविद्या के द्वारा अध्यस्त हैं। जिस प्रकार सीप मे चाँदी और आकाश मे तलमलिनतादि दोष आरोपित है उसी प्रकार यहाँ ब्रह्म मे अविद्या से अध्यारोपित अब्रह्मत्व और असर्वत्व की ब्रह्मज्ञान से निवृत्ति हो जाती है। यदि ऐसा तुम मानते हो, तब तो यह कहना ठीक है कि जो परमार्थत ब्रह्मशब्द का मुख्यार्थभूत परब्रह्म है वही "ब्रह्म ही सृष्टि के पूर्व विद्यमान था" इस श्रुतिवाक्य मे कहा गया है। क्योंकि वेद मुख्यार्थवादी है। अत यह कल्पना करनी युक्तिसगत नही है कि ब्रह्मशब्द मे ब्रह्मशब्द के अर्थ से विपरीत ब्रह्म होने वाला मनुष्य कहा गया है। क्योंकि श्रुतार्थ का त्याग करना और अश्रुतार्थ की कल्पना करना युक्तिसगत नही है।

दूसरे किसी महान् प्रयोजन के विना भी यदि कहो कि अनाविद्यक अब्रह्मत्व और असर्वत्व है—तो

---

१ तलम्—इन्द्रनीलकटाहकल्पता । २ ब्रह्मेति—सदित्यादि । ३ मुख्यार्थवादित्वात् । ४ यथाभूतार्थवादित्वाद्वेदस्येति । ब्रह्मशब्दस्य मुख्यार्थोऽस्ति न वाऽऽद्ये अमुख्य तथापेयम् गौणमुख्यन्यायात् । न हि क्वचिदश्व मुख्ये गवि सति बाहीकमालभन्ते । द्वितीये असति मुख्ये नास्ति गौणमित्युक्त वार्तिके—'मुख्य ब्रह्म न चेदस्ति गौण स्यात्तद्विना कुत । मुख्यमग्नि विना गौण न लोकोऽप्यवगच्छतीति' ॥१०९२॥ परीक्षकसमुच्चयार्थोऽपिशब्द ॥ ५ अनाविद्यकमिति यावत् । ६ अनिपाद्यम् । ७ गौर्बाहीक इति । बहिर्भवो बाहीक जाङ्गलिको जन ग्रामीण इति यावत् । स गौ अनडवान् इति व्यवह्रियते नागरिकैः । ८ स्वार्थसमर्पको भवति । ९ श्रुतहान्येति—श्रुतहानिपूर्विकाऽश्रुतकल्पनेत्यर्थ । १० युक्तिसहिष्णु । ११ व्यावर्त्यमिति—वेदस्य यथाभूतार्थवादित्वोक्तिप्रयोजनमित्यर्थ । यद्वा व्यावर्त्यं—पूर्वोक्तानुवादग्रन्थेन व्यावर्त्यं खण्डयमंशमित्यर्थं । १२ गौण्या माणवक । १३ ऋक्समुदायोऽनुवाक । १४ अन्वितेति—मिथोऽन्वितानामग्न्यादिपदार्थाना वचनानुपपत्त्येत्यर्थ ।

चेन्न । तस्य ब्रह्मविद्ययाऽपोहानुपपत्तेः । न हि क्वचित्साक्षाद्वस्तुधर्मस्यापोढ़ो दृष्टा कर्त्री वा ब्रह्मविद्या । अविद्यायास्तु सर्वत्रैव निवर्तिका दृश्यते । तथेहाऽप्यब्रह्मत्वमसर्वत्वं चाविद्याकृतमेव निवर्त्यतां ब्रह्मविद्यया । न तु पारमार्थिकं वस्तु कर्तुं निवर्तयितुं वाऽर्हति ब्रह्मविद्या । तस्माद्व्यर्थैव श्रुतहान्यश्रुतकल्पना ।

ब्रह्मण्यविद्यानुपपत्तिरिति चेन्न । ब्रह्मणि विद्याविधानात् । न हि शुक्तिकायां रजताध्यारोपणेऽसति शुक्तिकात्व ज्ञाप्यते चक्षुर्गोचरापन्नायामियं शुक्तिका न रजत-

निर्वोढुं ब्रह्मभावविपुरुषकल्पनेत्याशङ्क्य महत्तरविशेषणम् । यद्ब्रह्मविद्ययेति परस्यापि तुल्यमधि-कृतत्व तस्य चाविद्याद्वाराऽधिकारित्वमविरुद्धमित्यग्रे भविष्यतीति भावः । द्वितीय कल्पमुत्थापयति —अविद्येति । ब्रह्मविद्यायंयम्यंप्रसङ्गान्मैवमिति दूषयति—न तस्येति । अनुपपत्तिमेव साधयति—न हीति । साक्षादारोपमन्तरेणेति यावत् । वस्तुधर्मस्य परमार्थभूतस्य पदार्थस्येत्यर्थः । विद्यायास्तर्हि कथमर्थवत्त्व तत्राऽऽह—अविद्यायास्त्विति । सर्वत्र शुक्त्यादाविति यावत् । विमतमविद्यात्मकं विद्यानिवर्त्यत्वाद्रजतादिवदित्यभिप्रेत्य दार्ष्टान्तिकमाह—तथेति । विमतं न कारकं विद्यात्वाच्छुक्ति-विद्यावदित्याशयेनाऽऽह—न त्विति । अब्रह्मत्वादेर्वास्तवत्वायोगादयुक्ता ब्रह्मभावविपुरुषकल्पनेत्युपसहरति —तस्मादिति ।

ब्रह्मण्यविद्यानिवृत्तिविद्याफलासंभवं चोदयति—ब्रह्मणीति । न हि सर्वज्ञे प्रकाशैकरसे ब्रह्मण्यज्ञानमादित्ये तमोवदुपपन्नमिति भावः । तस्या ज्ञातत्वमज्ञत्वं वाऽऽक्षिप्यते नाऽऽद्य इत्याह—न ब्रह्मणीति । न हि तत्त्वमसीति विद्याविधानं विज्ञाते ब्रह्मणि युक्तं पिष्टपिष्टिप्रसङ्गात् । अतस्तद्व-ज्ञातमेष्टव्यमित्यर्थः । ब्रह्मात्मैक्यमज्ञातं शास्त्रेण ज्ञाप्यते तद्विषयं च श्रवणादि विधीयते तेन

ऐसा कहना ठीक नहीं क्योंकि उसकी ब्रह्मज्ञान द्वारा निवृत्ति असम्भव है। ब्रह्मविद्या के द्वारा आरोप के बिना साक्षात् ही किसी परमार्थभूत पदार्थ के धर्मों का लोप या प्रादुर्भाव हुआ हो-ऐसा नहीं देखा जाता। किन्तु वह ब्रह्मविद्या अविद्या की सदा ही निवृत्ति करती हुई देखी जाती है। लोकव्यवहार के समान ब्रह्म में भी जो अविद्याकृत अब्रह्मत्व और असर्वत्व है, उसकी ब्रह्मविद्या से निवृत्ति कर देनी चाहिये। ब्रह्मविद्या पारमार्थिक वस्तु को उत्पन्न या विनष्ट करने में समर्थ नहीं है। इसलिये श्रुतार्थ-त्याग और अश्रुतार्थकल्पना अयुक्त ही है।

किन्तु ब्रह्म में अविद्या का रहना तो युक्तिसंगत नहीं है। ऐसी शङ्का करना उचित नहीं है। क्योंकि ब्रह्म में ब्रह्मविषयक विद्या का उपदेश किया गया है। यदि सीप में चाँदी का अध्यास न हो तो उसके चक्षु-इन्द्रिय के विषय होने पर 'यह सीप है, चांदी नहीं है' इस प्रकार शुक्तित्व का ज्ञान न कराया

१ ब्रह्मविद्येति । अब्रह्मत्वादवस्तुत्व ज्ञानाच्च ध्वस्तियतो ज्ञानमज्ञानस्यैव निवर्तकमित्युक्तेः उपायान्तराभावाच्च तन्निवृत्तिरत्र न स्यादित्यपि द्रष्टव्यम् । २ लोकवत् ब्रह्मणि । ३. अयुक्तैव । ४. ब्रह्मविषयकविद्या-पदेशात् । ५. इतिवाक्यावगतमिति शेष । ६. इतिवाक्यावगतमधिकृतत्व तत्परस्यापि तुल्यमित्यन्वय । ७. परस्य । ८. अब्रह्मत्वादिकम् । ९ ब्रह्मज्ञानम् । १० न कारकमिति—कार्यनिकस्य तु नित्यनिवृत्तस्व-रूपत्वेन न तन्निवर्तकत्व वस्तुत. कारकत्वमिति भाव । ११ अज्ञानविषयत्वम् । १२ अज्ञानाश्रयत्वम् । १३. विद्यापदशान्यथाऽनुपपत्ते. । १४. शास्त्रज्ञाप्याज्ञातब्रह्मविषयकश्रवणादिविधानेन ।

मिति। तथा सदेवेदं सर्वं ब्रह्मैवेदं सर्वमात्मैवेद सर्वं नेदं द्वैतमस्त्यब्रह्मेति ब्रह्मण्येकत्वविज्ञान न [1]विधातव्यं ब्रह्मण्यविद्याध्यारोपणायामसत्याम् । न ब्रूमः शुक्तिकायामिव ब्रह्मण्यत[3]द्धर्माध्यारोपणा नास्तीति किं तर्हि [4]न ब्रह्म स्वात्मन्य तद्धर्माध्यारोपनिमित्तमविद्याकर्तृ चेति।

भवत्वेव नाविद्याकर्तृ भ्रान्तं च ब्रह्म । किंतु नैवाब्रह्माविद्याकर्ता चेतनो भ्रान्तोऽन्य इष्यते । "नान्योऽतोऽस्ति विज्ञाता" "नान्यदतोऽस्ति विज्ञातृ" "तत्त्वमसि" "आत्मानमेवावेत्" "अहं ब्रह्मास्मि" "अन्योऽसावन्योऽहमस्मीति न स वेद" इत्यादिश्रुतिभ्यः ।

तस्मिन्नज्ञातत्वमेष्टव्यमित्युक्तमर्थं दृष्टान्तेन साधयति—न हीति । [5]मिथ्याज्ञानस्याज्ञानाव्यतिरेकाद्ब्रह्मण्यविद्याध्यारोपणायां शुक्तौ रूप्यारोपणं दृष्टान्तितमिति द्रष्टव्यम् । कल्पान्तरमालम्बते—न ब्रूम इति ।

ब्रह्माविद्याकर्तृ न भवतीत्यस्य यथाश्रुतो वाऽर्थस्तदन्यस्तदाश्रयोऽस्तीति वा तत्राऽऽद्यमङ्गीकरोति—भवत्विति । [6]अनादित्वादविद्याया कर्त्रपेक्षाभावाद्विना च [7]द्वारं ब्रह्मणि भ्रान्त्यनभ्युपगमादित्यर्थः । द्वितीयं प्रत्याह—किंत्विति । ब्रह्मणोऽन्यश्चेतनो नास्तीत्यत्र श्रुतिस्मृतीरुदाहरति—

जाता । ऐसे ही यदि ब्रह्म में अविद्या का अध्यास न होता तो 'यह सब सत् ही है', 'यह सब ब्रह्म ही है' 'यह सब आत्मा ही है', 'यह अब्रह्मरूप द्वैत नहीं है'—इन श्रुतिवाक्यों के अनुसार ब्रह्म में एकत्वविज्ञान का उपदेश नहीं किया जाता। इस पर पुनः शङ्का होती है—सीप में चाँदी के समान ब्रह्म में अज्ञातत्वादि धर्मों का अध्यास नहीं है—ऐसा हमारा मत नहीं है । तो क्या है ? हमारे मत में (सर्वज्ञ होने के कारण) ब्रह्म अपने में अब्रह्मधर्मों के आरोप का निमित्त और अविद्या का कर्ता नहीं है ।

(शङ्का का समाधान दिया जाता है-) ऐसा तो हो सकता है कि ब्रह्म अविद्या का कर्ता और भ्रान्त नहीं हो, किन्तु (अनादि) अविद्या का कर्ता अन्य कोई अब्रह्म भ्रान्त चेतन है–ऐसा मानना इष्ट नहीं है । जैसा कि "जो विशेषरूप से ज्ञात नहीं होता, किन्तु विशेषरूप से जानता है", "और न इससे भिन्न कोई विज्ञाता ही है", "वह तू है", "उसने अपने को ही जाना कि मैं ब्रह्म हूँ", "वह आराध्यदेव भिन्न है और मैं उससे भिन्न हूँ, इस प्रकार जो अपने से भिन्न देवता की उपासना करता है, वह अज्ञानी

१. उपदेष्टव्यम् । २ अज्ञातत्वमिति यावत् । ३. अतद्धर्मो भ्रान्तत्वम् । तदारोपे च निमित्त भवत्यज्ञत्वं तद्ब्रह्मणि [illegible] । ब्रह्म न भ्रान्तमिति यावत् । ४ अविद्याकर्तृ चेति—न ब्रह्म स्वात्मन्यन्यत्र वाऽविद्यां करोति सर्वज्ञत्वादित्यर्थः । ननु सर्वकर्तृत्वात्तदविद्यामपि करिष्यत्यन्यथा तदयोगादित्याशङ्क्याऽऽह वार्तिके—"न हि धीपूर्वकारी सन्विद्यामनर्थदायिनीम् । प्रतीच्यविद्यां विसृजेद्यान्यत्राऽपि न काम्यते" ॥१२१६॥ इति । प्रतीचि—स्वात्मनि । विसृजेत्—कुर्यात् परमात्मेत्यर्थः । ५ ननु दृष्टान्ते शुक्तौ मिथ्याज्ञानमारोप्यते न तु सद्धेत्वज्ञानम् । दार्ष्टान्ते ब्रह्मणि तु अज्ञानारोपणमिष्टं न तु मिथ्याज्ञानमतो विषमोऽयं दृष्टान्त इत्यत आह—मिथ्येति । ६ अनादित्वादिति । तस्या [illegible] कार्यत्वे कारणं वाच्यं निष्कारणकार्यायोगात् न चात्मा तथा कौटस्थ्यात् न चाविद्यैव तथा एकत्र कार्यकारणत्वायोगात् । तद्भेदस्य चासिद्धत्वाच्चतोऽकार्यत्वात्तस्या ब्रह्म न तां करोतीति । ननु तस्या ब्रह्मातिरेकात् कार्यत्वमिति चेन्न अनिर्वचनीयत्वादतिरेकोऽपीति । ७ अज्ञस्वरूपं द्वारम् ।

स्मृतिभ्यश्च—"समं सर्वेषु भूतेषु" "अहमात्मा गुडाकेश" "शुनि चैव श्वपाके च," "यस्तु सर्वाणि भूतानि" "यस्मिन्सर्वाणि भूतानि" इति च मन्त्रवर्णात् ।

नन्वेवं शास्त्रोपदेशानर्थक्यमिति । बाढमेवम्, अवगतेऽस्त्वेवाऽऽनर्थक्यम् । अवगमानर्थक्यमपीति चेन्न । अनवगमनिवृत्तेर्दृष्टत्वात् । तन्निवृत्तेरप्यनुपपत्तिरेकत्व इति चेन्न ।

नान्योऽतोऽस्तीत्यादिना । ब्रह्मणोऽन्याऽचेतनोऽपि नास्तीत्यत्र मन्त्रद्वयं पठति—यस्त्विति ।

ब्रह्मणोऽन्यस्याभावे दोषमाशङ्कते—नन्विति । किमिदमानर्थक्यमवगतेऽनवगते वा चोद्यते तत्राऽऽद्यमङ्गी करोति—बाढमिति । द्वितीये नोपदेशानर्थक्यमवगमार्थत्वादिति द्रष्टव्यम् । उपदेशावगमस्यापि स्वप्रकाशे वस्तुनि नोपयोगोऽस्तीति शङ्कते—अवगमेति । अनुभवमनुसृत्य परिहरति—नानवगमेति । सा वस्तुनो भिन्ना चेद्द्वैतहानिरभिन्ना चेज्ज्ञानाधीनत्वासिद्धिरिति शङ्कते—तन्निवृत्तेरिति । अनवगमनिवृत्तेर्दृश्यमानतया स्वरूपापलापायोगात्प्रकारान्तरासंभवाच्च "पञ्चमप्रकारत्वमेष्ट-)

परमार्थतत्त्व को नहीं जानता" इत्यादि श्रुतियों से एवं 'जो सम्पूर्ण प्राणियों में मुझे समभाव से देखता है", "हे अर्जुन ! मैं आत्मा हूँ", "कुत्ते और चाण्डाल में ज्ञानी समदृष्टि वाले होते हैं" "जो समस्त प्राणियों को अपने में देखता है" इत्यादि स्मृतियों से और "जिस काल में अथवा जिस आत्मा में (परमार्थतत्त्व के दर्शन हो जाने से) तत्त्वदर्शी के लिए सम्पूर्ण भूत आत्मा ही हो गये" इत्यादि मन्त्रवर्ण से भी यही सिद्ध होता है।

फिर तो ऐसे (अनर्थनिवृत्ति प्रयोजन न होने पर) शास्त्र की कोई उपयोगिता नहीं रह जाती। (सिद्धान्ती इसे स्वीकार करते हुए समाधान करता है—) यह सत्य ही है। तत्त्वज्ञान होने पर शास्त्रारम्भ की व्यर्थता तो है ही। (शंका होती है—) ऐसे में तो तत्त्वज्ञान की भी अनर्थता सिद्ध होने लगेगी। (समाधान दिया जाता है—) ऐसा कहना उचित नहीं, क्योंकि तत्त्वज्ञान का अज्ञाननिवृत्तिरूप प्रयोजन

१ इति च मन्त्रवर्णादिति—'पुरुष एवेदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' इत्यादिश्रुती समुच्चेतुं चकार । एतेन ब्रह्मणः सर्वज्ञत्वेनाज्ञत्वायोगात्तदन्यदज्ञमिति पक्षो मानविरोधेन निरस्तः । तथा च वार्त्तिके—'नानुभूतं प्रमाणाद्वा तदन्यद्वस्तु लभ्यते" ॥१२२४॥ इति । न हि ब्रह्मणोऽन्यद्वस्त्वनुभूतेरवगम्यते तथाभूतानुभूतेरप्रसिद्धत्वान्नापि मानात्तदन्यस्य ब्रह्मणोऽन्यत्राज्ञातत्वाभावेन मानप्रवृत्त्ययोगात् (अज्ञाते हि प्रवर्तमानं मानं सकलं मानत्वभाक्) अतो न तदन्यदज्ञमस्तीति तदर्थः । २ आनर्थक्यमिति—न च ब्रह्मण्यनर्थनिवृत्त्यर्थमुपदेशोऽर्थवान् तस्य नित्यमुक्तत्वात् । अन्यस्यासंभवो मानयुक्तिभ्यां सम्पन्नः । अतः शास्त्रारम्भे वैयर्थ्यं फलितमित्याशयः । ३ सत्यमेव । ४ अद्वैतवादे । ५ शास्त्रारम्भानर्थक्यरूपं दोषम् । ६ स्वप्रकाशे ब्रह्मणि । ७ आत्मनः । ८ अद्वैतहानिरिति—सा च न सती ब्रह्मवज्ज्ञानसाध्यत्वायोगात् अद्वैतहानेश्च नाप्यसती खपुष्पवज्ज्ञानसाध्यत्वासंभवात् अनिर्वचनीया ज्ञाने सत्त्वासत्त्वयोरभावेन तत्प्रतियोगिकनिवृत्तौ सत्त्वासत्त्वयोरसंभवाच्च नाप्युभयरूपा सदसदात्मकत्वस्यैकत्रविरोधेनासंभवादुक्तदोषापरिहाराच्च । नाप्यनिर्वचनीया अज्ञानातिरिक्ता निर्वचनीयस्याज्ञानाधीनसत्ताकतयाऽज्ञानस्थितिमन्तरा तन्निवृत्तेरनिर्वचनीयत्वायोगात् तत्स्थितौ च तन्निवृत्तिव्याघातादिति भावः । ९ ज्ञानाधीनत्वासिद्धिरिति—वस्तुस्वरूपाया अज्ञाननिवृत्तेर्नित्यसिद्धत्वेन ज्ञानसाध्यत्वानुपपत्तिरित्यर्थः । १० प्रकारान्तरासंभवादिति । प्रदर्शितरीत्योक्तप्रकारचतुष्टयायोगादित्यर्थः । ११ पञ्चमेति—सा हि न भिन्ना नाभिन्ना यथोक्तदोषात् भिन्नाभिन्नत्वं चैकत्र विरुद्धम् भिन्नाभिन्नविलक्षणत्वं चानिर्वचनीयधर्मो ॥ विद्यामन्तरेण निर्वक्तुमशक्यत्वाद् निरुक्तप्रकारचतुष्टयाद्विलक्षणप्रकारकत्वम् ।

दृष्टविरोधात् । दृश्यते ह्येकत्वविज्ञानादेवानवगमनिवृत्तिः । दृश्यमानमप्यनुपपन्नमिति ब्रुवतो दृष्टविरोधः स्यात् । न च दृष्टविरोधः केनचिदप्यभ्युपगम्यते । न च दृष्टेऽनुपपन्नं नाम दृष्टत्वादेव । दर्शनानुपपत्तिरिति चेत्तत्राप्येवमेव युक्तिः ।

"पुण्यो वै पुण्येन कर्मणा भवति" "तं विद्याकर्मणी समन्वारभेते" "मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इत्येवमादिश्रुतिस्मृतिन्यायेभ्यः परस्माद्विलक्षणोऽन्यः संसार्यवगम्यते । तद्विलक्षणश्च परः "स एष नेति नेति" "अशनायाद्यत्येति" "य

स्यमिति मत्वाऽऽह—न दृष्टेति । दृष्टमपि युक्तिविरोधे त्याज्यमित्याशङ्क्याऽऽह—दृश्यमानमिति । दृष्टविरुद्धमपि कुतो नेष्यते तत्राऽऽह—न चेति । 'अनुपपन्नत्वमङ्गीकृत्योक्त तदेव नास्तीत्याह—न चेति । युक्तिविरोधे दृष्टिराभासो' भवतीति शङ्कते—दर्शनेति । दृष्टिविरोधे युक्तेरेवाऽऽभासत्वं स्यादिति परिहरति—तत्रापीति । अनुपपन्नत्वं हि 'सर्वस्य दृष्टिबलादिष्टं दृष्टस्य त्वनुपपन्नत्वे न किञ्चिन्निमित्तमस्तीत्यर्थः' ।

ब्रह्मभाविपुरुषकल्पनां निराकृत्य स्वपक्षे शास्त्रस्यार्थवत्त्वमुक्तं संप्रति प्रकारान्तरेण 'पूर्वपक्षयति—पुण्य इति । आदिशब्देन 'योऽयं विज्ञानमयः प्राणेषु' इत्याद्या श्रुतिर्गृह्यते । 'कुरु कर्मैव तस्मात्त्वम्' इत्याद्या स्मृतिः । न्यायो मिथो विरुद्धयोरेकत्वायोगः । विलक्षणत्वमन्यत्वे हेतुः । जीवस्य परस्मादन्यत्वेऽपि न तस्य ततोऽन्यत्वमित्याशङ्क्याऽऽह—तद्विलक्षणश्चेति । परस्य तद्विलक्षणत्वं श्रुतितो दर्शयित्वा

देखा जाता है । (शंका—) किन्तु अद्वैतवाद मे अविद्यानिवृत्ति मानना भी असगत है । (समाधान—) ऐसा कहना उचित नही । अविद्यानिवृत्ति तो देखी जाती है, उसमे विरोध आने लगेगा । लोकव्यवहार मे देखा जाता है, अद्वैतविज्ञान से ही अविद्या की निवृत्ति होती है । देखी जाने वाली वस्तु को भी असगत मानने से दृष्टविरोध दोष उपस्थित होगा । दृष्टविरोध को कोई भी नही मानता । कोई भी वस्तु अनुभूत होने पर दृष्ट होने मात्र से असिद्ध नही हो सकती । यदि कहो (युक्तिविरोध होने पर) दर्शन की भी अनुपपत्ति हो सकती है, तो उसमे भी यही युक्ति है ।

(इस पर शंका करते हैं—) "पुरुष पुण्यकर्म से धर्मात्मा होता है", "उस समय इसके साथ-साथ ज्ञान, कर्म (और पूर्वानुभवजन्य सस्कार) जाता है", "यही (देखने वाला, स्पर्श करने वाला, सुनने वाला, सूंघने वाला, चखने वाला,) मनन करने वाला, जानने वाला और कर्ता विज्ञानात्मा पुरुष है"

१ अनुभूते । २ युक्तिविरोधे सतीत्यादि । ३ विद्याकर्मणी—उपासनकर्मणी । पूर्वप्रज्ञा चेति श्रुतिशेष । ४ मृतम् । समन्वारभेते अनुगच्छत । पूर्वप्रज्ञा वासना । ४ बुद्धिप्रधानो जीव । ५ निषेधाधिष्ठानम् । ६ न दृष्टविरोधादित्यादिना यदुक्त तदज्ञाननिवृत्तेरनुपपन्नत्वाभ्युपगमवादेन । इदानीमनवगमनिवृत्तेरनुपपन्नत्वमेव नास्ति दृष्टिवशादनुपपत्तिनिरासादित्याशयेनाह—अनुपपन्नत्वमिति । ७ अकिञ्चित्करी भवति । ८ सर्वनिष्ठम् । ९ पूर्वपक्षयतीति—ननूक्तरीत्या पूर्वपक्षस्याक्षिप्तत्वात् पुनस्तदुद्भावनमफलमिति चेन्न ब्रह्मभावी जीवो ब्रह्मेतिपक्षनिरासस्य दार्ढ्यार्थं पुनरपि पूर्वपक्षाय यत्न । न च तन्निरासो यथा युक्त्या दृढो भवति सैव वाच्या । निरस्तपक्षोत्थापनं त्वकिंचित्करमिति वाच्यम् । वक्ष्यमाणवाक्यानि जीवपरयोर्भेदपराणीत्युत्पन्नभ्रमनिवृत्तये निरस्तस्यापि तस्योत्थापनं वाक्यीयसम्यगर्थे जिज्ञासूनां बुद्धिस्थैर्यं तात्पर्यादिति भाव ।

आत्माऽपहतपाप्मा विजरो विमृत्युः " एतस्य वा अक्षरस्य प्रशासने " इत्यादिश्रुतिभ्यः। कणादाक्षपादादितर्कशास्त्रेषु च संसारिविलक्षण ईश्वर उपपत्तितः साध्यते। संसारदुःखापनयार्थित्वप्रवृत्तिदर्शनात्स्फुटमन्यत्वमीश्वरात्संसारिणोऽवगम्यते। "अवाक्यनादरः" "न मे पार्थास्ति " इतिश्रुतिस्मृतिभ्यः। " सोऽन्वेष्टव्यः स विजिज्ञासितव्यः " " तं विदित्वा न लिप्यते" "ब्रह्मविदाप्नोति परम्" "एकधैवानुद्रष्टव्यमेतत्" "यो वा एतदक्षरं गार्ग्यविदित्वा" "तमेव धीरो विज्ञाय" "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते" इत्यादिकर्मकर्तृनिर्देशाच्च।

---

तत्रैवोपपत्तिमाह—कणादेति। क्षित्यादिकमुपलब्धिमत्कर्तृकं कार्यत्वाद्घटवदित्याद्योपपत्तिः। तयोर्मिथो भेदे हेत्वन्तरमाह—संसारेति। जीवस्य स्वगतदुःखध्वंसे दुःखमेव मा भूदित्यर्थित्वेन प्रवृत्तिर्दृष्टा नेशस्य साऽस्ति दुःखाभावादतो भेदस्तयोरित्यर्थः। इतश्चेश्वरस्य न प्रवृत्तिर्हेतुफलयोरभावादित्याह—अवाकीति। मिथो भेदे श्रौतं लिङ्गान्तरमाह—सोऽन्वेष्टव्य इति।

---

इत्यादि श्रुति, स्मृति और न्याय से संसारी जीव परमात्मा से भिन्न जाना जाता है। उससे विलक्षण परमात्मा "वह यह 'नेति नेति' बतलाया गया (आत्मा अगृह्य है)", "वह आत्मा क्षुधादि से रहित है", "जो आत्मा धर्म अधर्मादिरूप पाप से रहित, वृद्धावस्था से रहित व मृत्यु से रहित है (उसकी खोज करके ज्ञान प्राप्त करना चाहिये)", "(हे गार्गी !) इसी अक्षर के प्रशासनमें (सूर्य चन्द्र विशेषरूप से धारण किये हुए स्थित है)", इत्यादि श्रुतियों से सिद्ध होता है। महर्षि कणाद और महर्षि गौतम आदि के न्याय-वैशेषिक दर्शनों में संसारी जीव ईश्वर से विलक्षण है—ऐसा युक्ति द्वारा सिद्ध किया है। संसारदुःख के ध्वंस के लिये जीव की (स्वाभाविक) प्रवृत्ति देखने से परमात्मा से जीवात्मा की भिन्नता स्पष्ट प्रतीत होती है। जैसा कि "(वह ब्रह्म) वाणी-रहित आत्मकाम होने से असम्भ्रान्त है", "हे अर्जुन ! (तीनों लोकों में) मेरा कोई कर्तव्य शेष नहीं है" इत्यादि श्रुति स्मृतियों से सिद्ध होता है। "उसे (शास्त्र और आचार्य के उपदेशों से) खोजकर ज्ञान प्राप्त करना चाहिये", "उसे जानकर मनुष्य धर्माधर्मरूप कर्म से लिप्त नहीं होता" "ब्रह्म को जानने वाला परमतत्त्व को प्राप्त कर लेता है", "(आचार्य उपदेश के बाद) उस ब्रह्म को (आकाश के समान अन्तर-बाह्य शून्य) एकमात्र विज्ञानघनरूप से ही देखना चाहिये", "पर हे गार्गी ! जो इस अक्षर को जानकर (इस लोक से मरकर जाता है, वह संसारबन्धन से मुक्त हुआ पुरुष ब्राह्मण है", "बुद्धिमान् ब्राह्मण को उस ब्रह्म को ही जानकर (उसी में बुद्धि लगानी चाहिये)", "ओंकार धनुष है, सोपाधिक आत्मा बाण है, और अक्षरब्रह्म उसका लक्ष्य कहा गया है" इत्यादि श्रुति-वाक्यों से जीव और ब्रह्म में कर्तृत्व और कर्मत्व बतलाये जाने से भी उनमें भेद सिद्ध होता है।

---

१ अवगम्यत इति—अभेदे क्वचित्प्रवृत्तिरन्यत्र नेति वैधर्म्यायोगादिति भावः। २ अवाकीति—वागुपलक्षितसकलेन्द्रियशून्य अनादर इति। आदरः—सम्भ्रमस्तच्छून्य इत्यर्थः। असम्भ्रान्त इति यावत्। ३ लिप्यते कर्मणा पापकेनेति शेषः। ४ एतदप्रमयं ध्रुवमिति श्रुतिशेषः। ५ कर्मकर्तृनिर्देशाच्चेति—कर्मकर्तृभेदेन जीवेश्वरयोर्निर्देशादित्यर्थः। निरुक्तश्रुतिस्मृतिवाक्यकदम्बे प्रायो जीवस्य कर्तृत्वेनेश्वरस्य च कर्मत्वेन निर्देशादिति विवेकः। ६ उपलब्धिमत्कर्तृकमिति। ज्ञानवत्कर्तृकमित्यर्थः। न च जीवानामेवादृष्टद्वारा क्षित्यादिकर्तृत्वं तेषां तदुपकरणोपादानादिसाक्षात्कारविरहित्वादतः संसारिभ्यो विलक्षणस्तत्कर्तेति भावः।

मुमुक्षोश्च गतिमार्गविशेषदेशोपदेशात् । असति भेदे कस्य कुतो गतिः स्यात्तदभावे च दक्षिणोत्तरमार्गविशेषानुपपत्तिर्गन्तव्यदेशानुपपत्तिश्चेति । भिन्नस्य तु परस्मादात्मनः सर्वमेतदुपपन्नम् । कर्मज्ञानसाधनोपदेशाच्च । भिन्नश्चेद्ब्रह्मणः संसारी स्याद्युक्तस्तं प्रत्यभ्युदयनिःश्रेयससाधनयोः कर्मज्ञानयोरुपदेशो नेश्वरस्याऽऽप्तकामत्वात् । तस्माद्युक्तं ब्रह्मेति ब्रह्मभावी पुरुष उच्यत इति चेन्न । ब्रह्मोपदेशानर्थक्यप्रसङ्गात् । संसारी चेद्ब्रह्मभाव्यब्रह्म सन्विदित्वाऽऽत्मानमेवाह ब्रह्मास्मीति सर्वमभवत्तस्य संसार्यात्मविज्ञानादेव सर्वात्मभावस्य फलस्य सिद्धत्वात्परब्रह्मोपदेशस्य ध्रुवमानर्थक्यं प्राप्तम् ।

---

तत्रैव लिङ्गान्तरमाह—मुमुक्षोश्चेति । गतिर्देवयानाद्या तस्या मार्गविशेषोऽर्चिरादिर्देशो गन्तव्यं ब्रह्म तेषामुपदेशात्तेऽर्थवन्तो भवन्तीत्यादयस्तथाऽपि कथं भेदसिद्धिस्तत्राऽऽह—असतीति । मा भूद्गतिरित्याशङ्क्याऽऽह—तदभावे चेति । कथं तर्हि गत्यादिकमुपपद्यते तत्राऽऽह—भिन्नस्येति । जीवेश्वरयोर्मिथो भेदे हेत्वन्तरमाह—कर्मेति । भेदे सत्युपपन्ना भवन्तीति शेषः । तदेव स्फुटयति—भिन्नश्चेदिति । तद्भेदे प्रामाणिकेऽपि कथं ब्रह्मभाविपुरुषकल्पनेत्याशङ्क्योपसंहरति—तस्मादिति । ब्रह्मभाविनो जीवस्य ब्रह्मशब्दवाच्यत्वे ब्रह्मोपदेशस्याऽऽनर्थक्यप्रसङ्गान्नैवमिति दूषयति—नेत्यादिना । प्रसङ्गमेव प्रकटयति—संसारी चेदिति ।

---

मुमुक्षु के लिए देवयानादि गति एवं अर्चिरादि मार्गविशेष देश का उपदेश होने के कारण भेद सिद्ध होता है। भेद न होने से किसका कहाँ गमन होगा ? और गमन के स्वीकार करने से दक्षिणायन और उत्तरायण मार्गविशेष एवं गन्तव्यदेश की प्रसिद्धि हो जायगी। परमात्मा से भिन्न जीवात्मा में तो यह सब संभव हो सकता है। कर्म और ज्ञानकाण्ड साधनों के उपदेश होने से भी जीव और ईश्वर में परस्पर भेद है। यदि संसारी जीव का ईश्वर से भेद होगा, तभी उसके लिए अभ्युदय और निःश्रेयस के साधन कर्मकाण्ड और ज्ञानकाण्ड का उपदेश होगा। ईश्वर के आप्तकाम होने के कारण उसके लिए साधनों का उपदेश नहीं किया जा सकता। इसलिए (जीव ब्रह्म का भेद अतिदृढतापूर्वक प्रामाणिक होने से) यही मानना उचित है कि 'ब्रह्म' पद से ब्रह्मभावी पुरुष का बोध होता है। (शङ्का का समाधान करते हैं—) ऐसा कहना ठीक नहीं, क्योंकि फिर तो ब्रह्मोपदेश वृथा सिद्ध होने लग जायगा। यदि ब्रह्मभाव संसारी ही अब्रह्म होते हुए अपने को 'मैं ब्रह्म हूँ' ऐसा जानकर सर्वरूप हो गया, तब उसे

---

१ तदभाव इति—गत्यनङ्गीकारे धूमाद्युपलक्षित दक्षिणमार्गस्येष्टादिकारिण प्रत्युक्तिवज्ज्ञानिन प्रत्यर्चिराद्युपलक्षितोत्तरमार्गयोरुक्तिर्विरुध्येतातो गतिदुरपह्नवेति भाव । अस्तु तर्हि गति सा च सकर्मकत्वाद्गन्तारमपेक्षते ततो विलक्षणगन्तव्यलाभस्तु कुतस्तत्राह—गन्तव्येति । तस्या हि कर्तृकर्मणोरपेक्षा तुल्या तयोर्भेदाभावे नैव सा सिध्येदित्यभिप्राय । २ अर्थतानि परस्यैव विधास्यन्त तत्कथं भेदस्तत्राह—नेति । न तावदीश्वरस्याभ्युदयार्थं साधनं विधेयं तस्य बन्धान्तर्गतस्वर्गाद्यभ्युदयसंबन्धायोगात् नित्यमुक्तत्वात् कैवल्यं तु तस्य नित्यसिद्धं साधनासमता न तं प्रति साधनद्वयविधि जीवं प्रति च सोऽस्ति तद्भेदस्तयोरित्यर्थं । ३ प्रामाणिकजीवब्रह्मभेदस्यातिदृढत्वात् । ४ तर्हीति शेष । ५ आनर्थक्यमिति—'ब्रह्म वा इदमि'त्यत्र यद्ब्रह्मशब्दितं तज्ज्ञानादेव मुक्तिरिहेष्टा तदात्मानमेवेत्यादिश्रुतेरतो जीवोऽब्रह्म चेज्जीवज्ञानादेव तत्सिद्धे सत्यज्ञानादिब्रह्मोपदेशो वृथा स्यादित्यर्थ । ६ इत्यादय इति । अतो गन्तृगन्तव्यभेदसिद्धिरिति शेष । ७ अभेदेऽनुपपन्नत्वे ।

तद्विज्ञानस्य क्वचित्पुरुषार्थसाधनेऽविनियोगात्संसारिण एवाहं ह्यस्मीति ब्रह्मत्वसंपादनार्थ उपदेश इति चेत् । अनिर्ज्ञाते हि ब्रह्मस्वरूपे किं संपादयेदहं ब्रह्मास्मीति । निर्ज्ञातलक्षणे हि ब्रह्मणि शक्या संपत्कर्तुम् । "नायमात्मा ब्रह्म" "यत्साक्षादपरोक्षाद्ब्रह्म" "य आत्मा" "तत्सत्यं स आत्मा" "ब्रह्मविदाप्नोति परम्" इति प्रकृत्य "तस्माद्वा एतस्मादात्मनः" इति सहस्रशो ब्रह्मात्मशब्दयोः सामानाधिकरण्यादेकार्थत्वमेवेत्यवगम्यते । अन्यस्य ह्यन्यत्वे संपत्क्रियते नैकत्वे । "इदं सर्वं यदयमात्मा" इति च

विधिशेषत्वेन ब्रह्मोपदेशोऽर्थवानिति चेत्तत्र किं कर्मविधिशेषत्वेनोपास्तिविधिशेषत्वेन वा तदर्थत्वमिति विकल्प्याऽऽद्यं दूषयति—तद्विज्ञानस्येति । अविनियोगाद्विनियोजकश्रुत्याद्यभावादिति शेषः । कल्पान्तरमादत्ते—संसारिण इति । उपदेशस्य ज्ञानार्थत्वात्तदनपेक्षत्वाच्च संपत्तेस्तस्य कथं तादर्थ्यमित्याशङ्क्याऽऽह—अनिर्ज्ञाते हीति । व्यतिरेकमुक्त्वाऽन्वयमाचष्टे—निर्ज्ञातेति । पदयोः सामानाधिकरण्येन जीवब्रह्मणोरभेदावगमान्न संपत्पक्षः संभवतीति समाधत्ते—नेत्यादिना । कथमेकत्वे गम्यमानेऽपि संपदोऽनुपपत्तिरित्याशङ्क्याऽऽह—अन्यस्य हीति । एकत्वे हेत्वन्तरमाह—इदमिति ।

संसारी जीवात्मा के बोध से ही सर्वात्मभावरूप फलप्राप्ति होने से परब्रह्म के उपदेश की निश्चय ही अनर्थता सिद्ध हुई ।

(इस पर शङ्का होती है)— ब्रह्मज्ञान का कहीं भी अग्निहोत्रादि में पुरुषार्थरूप स्वर्गसाधन में सम्बन्ध न होने से संसारी जीव को ही 'मैं ब्रह्म हूँ' ऐसा ब्रह्मत्वसम्पादन के लिये (सत्य, ज्ञान, अनन्त वह ब्रह्म है) यह उपदेश हो तो ? ब्रह्म के स्वरूप के सम्यक्ज्ञान बिना 'मैं ब्रह्म हूँ' इससे जीवात्मा क्या निश्चय कर सकता है ? क्योंकि ब्रह्म के स्वरूप का सम्यक् ज्ञान होने पर ही ब्रह्मभाव का सम्पादन किया जाना सभव है । (इस पर सिद्धान्ती समाधान देता है—) ऐसा कहना ठीक नहीं है । "यह आत्मा ही (सब का अनुभव करने वाला) परमात्मा है", "जो ब्रह्म साक्षात् अपरोक्ष है (और जो सबका अन्तरात्मा है, उसकी व्याख्या तुम मेरे प्रति करो)", "जो आत्मा धर्माधर्मादिरूप पाप से रहित है" "(एतद्रूप ही सम्पूर्ण जगत् है) वह सत्य है, वही आत्मा है", "ब्रह्मज्ञानी परतत्त्व को प्राप्त कर लेता है"—यहाँ से प्रकरण आरम्भ कर "उस इस उक्तलक्षण वाले आत्मा से ही (सर्वप्रथम शब्दगुण वाला

१. तत्-ब्रह्म । २. क्वचित् अग्निहोत्रादौ । ३. स्वर्गसाधने । ४. असम्बन्धात् । ५ उपदेश इति—जीवे एवाहं ब्रह्मास्मीत्येवं यद्ब्रह्मत्वसम्पादनं तदर्थ एव सत्यज्ञानादिवाक्येन ब्रह्मज्ञानोपदेश इत्यर्थः । ६. स्वरूपे । ७. अथर्व० । ८. यजु० । ९. साम० । १०. तस्माद्वा एतस्मादात्मन इति—ब्राह्मणमन्त्रप्रतिपादितादित्यर्थः । आत्मनः प्रतीचः । अत्र तदेतच्छब्दाभ्यां मन्त्रब्राह्मणोक्तं ब्रह्म परामृश्य आत्मन इति प्रत्यक्सामानाधिकरण्येनाभिहितमिति तयोरभेद इति भावः । ११. नैकत्व इति—अन्यत्वे मनोगमनादावन्यस्य ब्रह्मणः संपद्दृष्टा नत्वद्वये निष्प्रपञ्चे ब्रह्मणि सा युक्तेत्यर्थः । १२. नन्वद्वयमेवासिद्धं सामानाधिकरण्यस्य वेदाः संपद्दृष्टा नत्वद्वये... प्रमाणमितिवदन्यथासिद्धेरत आह—इदमिति । १३. इति चेति । दृष्टान्तार्थश्चकारः । "आत्मा वा अरे द्रष्टव्य" इति प्रकृतात्मनो ब्रह्मत्ववदिदं सर्वमिति श्रुतिरद्वयत्वमाह । अतः संपदनवकाशेत्यर्थः । १४ श्रुतिलिङ्गादिप्रमाणाभावात् । १५. संपदुपास्तेः । १६. ब्रह्मज्ञानाभावे ब्रह्मत्वसंपत्तेरभाव इति व्यतिरेकमाहेत्यर्थः । १७. संपदुपास्तेः ।

प्रकृतस्यैव द्रष्टव्यस्याऽऽत्मन एकत्वं दर्शयति। तस्मान्नाऽऽत्मनो ब्रह्मत्वसंपदुपपत्तिः।

न चाप्यन्यत्प्रयोजनं ब्रह्मोपदेशस्य गम्यते "ब्रह्म वेद ब्रह्मैव भवति" "अभयं वै जनक प्राप्तोऽसि" "अभयं हि वै ब्रह्म भवति" इति च तदापत्तिश्रवणात्। संपत्तिश्चेत्तदापत्तिर्न स्यात्। नह्यन्यस्यान्यभाव उपपद्यते। वचनात्संपत्तेरपि तद्भावापत्तिः स्यादिति चेन्न। संपत्तेः प्रत्ययमात्रत्वात्। विज्ञानस्य च मिथ्याज्ञाननिवर्तकत्वव्यतिरेकेणाकारकत्वमित्यवोचाम। न च वचनं वस्तुनः सामर्थ्यजनकम्। ज्ञापकं हि शास्त्रं न कारकमिति

---

एकत्वे फलितमाह—तस्मादिति।

किंच संपत्तिपक्षे तदापत्तिः फलमन्यद्वेति विकल्प्य द्वितीयं प्रत्याह—न चेति। आद्यं दूषयति—संपत्तिश्चेदिति। तं यथा यथेत्याविश्रयमाश्रित्य शङ्कते—वचनादिति। संपत्तेरमानत्वान्न तद्बलादन्यस्यान्यत्वमित्याह—नेति। तस्या मानत्वेऽप्येवं मानस्याकारकत्वात्। न च सूत्राद्युपासनावन्यस्यान्याभाव "स्थितस्य नष्टस्य वा"ऽनुपपत्तेः। श्रुतिश्च न "पूर्वसिद्ध"सूत्रादिभावाभिधायिनी "तत्सादृश्यात्या तद्भावोपचारादतो ब्रह्मभावः स्वतः सिद्धो न सांपादिक इत्याह—विज्ञानस्येति। अथान्यस्यान्यभावे यथोक्तं वचनमेव शक्त्याधायकमित्याशङ्क्याऽऽह—न चेति। ब्रह्मोपदेशानर्थक्य-

---

आकाश उत्पन्न हुआ)" इत्यादि सहस्रों श्रुतियों में 'ब्रह्म' और 'आत्मा' शब्दों का समानाधिकरण होने से एक ही अर्थ है—यह बात सिद्ध होती है तथा (मन गगनादि) एक पदार्थ के दूसरे पदार्थ से भिन्न होने पर ही (उसकी अद्वितीयता का) सम्पादन किया जाता है, एक होने पर नहीं। "ये सब जो कुछ है, एकमात्र आत्मतत्त्व ही है (क्योंकि आदि, मध्य और अन्त में आत्मा को छोड़कर पृथक् इनकी उपलब्धि नहीं होती है)" यह श्रुतिवाक्य प्रकृत द्रष्टव्य आत्मा का ही एकत्व सिद्ध करता है। इसलिए आत्मा के लिए ब्रह्मत्व सम्पादन युक्तिसंगत नहीं है।

इसके अतिरिक्त ब्रह्मव्याख्यान का दूसरा प्रयोजन भी विवक्षित नहीं होता है। "ब्रह्मवेत्ता ब्रह्म ही हो जाता है", 'हे जनक! तू निश्चय ही अभय पद को प्राप्त हो गया है', "(जो कोई उक्त आत्मा को अभय ब्रह्म समझता है) वह अभय ब्रह्मरूप ही हो जाता है, इसमें किसी प्रकार का सन्देह नहीं" इत्यादि श्रुतिवाक्यों से ब्रह्म की प्राप्ति सुनी गयी है। यदि आत्मा की संपत्ति पक्ष का आश्रय लिया जायगा तो उसे ब्रह्मत्वप्राप्ति नहीं होगी, क्योंकि एक वस्तु का अन्यभाव हो जाना सिद्ध नहीं

---

१ संपत्त्यसंश्चेदाश्रीयते। २ उपपद्यत इति। अन्यत्र संपदुपास्तिश्चित्तशुद्धिमात्रफलकत्वादिति भावः। ३. हिरण्यगर्भभावापत्तिर्वदिति दृष्टान्तार्थोऽपि। ४ शास्त्राणामादित्यवदर्थज्ञापकत्वं सर्वसंप्रतिपन्नमिति हिशब्दार्थः। [illegible] महात्मनोरेकत्वादित्यर्थः। ६ तयोरभेदेऽपि भेदं कल्पयित्वा संपत्प्रवर्तताम् इत्याशयेन शङ्कते—किंचेति। ७ ब्रह्मत्वापत्ति। ८ ब्रह्मोपदेशस्य फलम्। ९ एवमिति—अन्यस्यान्यत्वाभावः। १०. ज्ञापकं हि मानं न कारकम्। ११ उपासितु। १२ सूत्रत्वानुपपत्तेः। १३ 'तं यथा यथेति' श्रुतिः। १४ पूर्वसिद्धसूत्रेति—उपास्यमानवर्तमानसूत्रव्यक्त्यभेदाभिधायिनी नेत्यर्थः। तथाभिधाने हि स्यादन्यस्यान्यत्वम्। १५ सूत्ररूपता। १६ कथं तर्हि तदेव भवतीति तत्राऽऽह—तत्सादृश्येति। तथा च, तत्सदृशो भवतीत्येव तदर्थः। तत्सदृशाकारत्वं चास्मिन्नेव कल्पे तल्लोकवासिनः कल्पान्तरादौ वा हिरण्यगर्भभाविन इति भावनातारतम्यानुसारेण कल्पनीयमिति भावः। १७ 'ब्रह्म वेद ब्रह्मैव भवती'तिवचनं 'तं यथा यथे'त्यादिकमेव वा युक्तम्।

स्थितिः । स एष इह प्रविष्ट इत्यादिवाक्येषु च परस्यैव प्रवेश इति[1] स्थितम् । तस्माद्-ब्रह्मेति न ब्रह्माभाविपुरुषकल्पना साध्वी ।

इष्टार्थबाधनाच्च सैन्धवघनवदनन्तरमबाह्यमेकरसं ब्रह्मेति विज्ञानं सर्वस्यामुपनिषदि प्रतिपिपादयिषितोऽर्थः काण्डद्वयेऽप्यन्तेऽवधारणादवगम्यत 'इत्यनुशासनमेतावदरे' 'खल्वमृतत्वमिति । तथा सर्वशाखोपनिषत्सु च ब्रह्मैकत्वविज्ञानं निश्चितोऽर्थः । तत्र यदि संसारी ब्रह्मणोऽन्य आत्मानमेवावेदिति कल्प्येत, इष्टस्यार्थस्य बाधनं स्यात् । तथा च

प्रसङ्गान्न ब्रह्मभाविपुरुषकल्पनेत्युक्त्वा तत्रैव हेत्वन्तरमाह—स एष इति ।

ब्रह्मोपदेशस्य संपच्छेपत्वे दोषान्तरमाह—इष्टार्थेति । तदेव विवृण्वन्निष्टमर्थमाचष्टे—सैन्धवेति । यथोक्तं वस्तु तात्पर्यगम्यमस्यामुपनिषदीत्यत्र हेतुमाह—काण्डद्वयेऽपीति । मधुकाण्डावसानगतमवधारणं दर्शयति—इत्यनुशासनमिति । मुनिकाण्डान्ते व्यवस्थितमुदाहरति—एतावदिति । न केवलमुपदेशस्य संपच्छेपत्वे बृहदारण्यकविरोधः किं तु सर्वोपनिषद्विरोधोऽस्तीत्याह—तथेति । इष्टमर्थमित्थमुक्त्वा तद्बाधनं निगमयति—तत्रेति । ननु बृहदारण्यके ब्रह्मकण्डिकायां जीवपरयोर्भेदोऽभिप्रेत उपसंहारे त्वभेद इति व्यवस्थाया तद्विरोधः शक्यः समाधातुमित्यत आह—तथा चेति ।

होना । (यहाँ शङ्का होती है—) श्रुतिवाक्यों से सम्पत्ति से भी (हिरण्यगर्भभावाप्ति के समान) ब्रह्मरूपता की प्राप्ति हो सकती है—ऐसा मान लिया जाय तो ? (समाधान देते हैं—) ऐसा कहना उचित नहीं, क्योंकि सम्पत्ति तो केवल प्रतीतिमात्र की होती है । ज्ञान तो अविद्या की निवृत्ति करने के अतिरिक्त और कुछ नहीं करता— ऐसा हम पहले बतला चुके हैं । (ब्रह्मवेत्ता ब्रह्म ही हो जाता है) श्रुतिवचन किसी वस्तु में सामर्थ्य उत्पन्न करने वाला नहीं होता क्योंकि शास्त्रों का (आदित्य के समान) अर्थज्ञापक होना सर्वत्र सिद्ध है, कारक होना नहीं । "वह यह ब्रह्म इसमें प्रविष्ट हुआ" इत्यादि श्रुतिवाक्यों में परमात्मा का ही प्रवेश होता है, यह सिद्ध हुआ । इसलिए (उक्त सिद्धान्त के विरोध से) "ब्रह्म" यह शब्द ब्रह्मभावी पुरुष का वाचक है—ऐसी कल्पना करना उचित नहीं है ।

इसके अतिरिक्त अभिमत अर्थ का बाध होने के कारण भी ब्रह्मभावी पुरुष की कल्पना करना अनुचित है । लवणखण्ड के समान ब्रह्म अविच्छिन्न, अबाह्य और एकरस है—यह विज्ञान ही समस्त उपनिषदों द्वारा प्रतिपादन करना अभिमत है । "यही अनुशासन है", "यही अमृतत्व है, इसमें कोई सन्देह नहीं है" इन श्रुतिवाक्यों से मधुकाण्ड एवं याज्ञवल्क्यकाण्ड के अन्त में निर्णय करने से भी यही ज्ञात होता है । इसी प्रकार समस्त शाखा के उपनिषदों में भी ब्रह्मैकत्व-विज्ञान ही निर्णीत अर्थ है । वहाँ यदि 'ब्रह्म से अन्य संसारी जीवात्मा ने अपने को जाना" ऐसी कल्पना की जाए, तो अभिमत अर्थ का बाध होने लग जायगा । इसके अतिरिक्त उपक्रम और उपसंहार में विरोध होने के कारण शास्त्र में अनिष्ट कल्पना होने लग जायगी । (ब्रह्मविद्या) संज्ञा की अनुपपत्ति होने से भी वैसा नहीं

१. सिद्धान्तितम् । २ उक्तसिद्धान्तविरोधात् । ३. अभिमतार्थबाधापत्तेः । ४. इत्यसर्वबदोरदश. । ५ असन्यासमारमज्ञानम् । ६. बृ उ. ४–५–१५ । ७ अमृतत्वसाधनम् । ८. तत्रेति—सर्वोपनिषत्सु ब्रह्मैकत्वविज्ञानस्पष्टत्व सतीत्यर्थः । ९. तथा चेति—उपक्रमोपसंहारयोस्त्वदिच्छया भिन्नार्थत्वनष्टाथवाधन चेत्यर्थः । १०. बाधनमेव । ११. तात्पर्यविषय. । १२. 'ब्रह्म वा इदमग्र' इति ब्रह्मकण्डिकायामित्यर्थः ।

शास्त्रमुपक्रमोपसंहारयोर्विरोधाद[1]समञ्जसं कल्पितं स्यात् । व्यपदेशानुपपत्तेश्च । यदि चाऽऽत्मानमेवावेदिति संसारी कल्प्येत, ब्रह्मविद्येतिव्यपदेशो न स्यात् । आत्मानमेवावेदिति [2]संसारिण एव वेद्यत्वोपपत्तेः ।

आत्मेति वेदितुरन्यदुच्यत इति चेन्न । अहं ब्रह्मास्मीति [3]विशेषणात् । अन्यश्चेद्वेद्यः स्यादयमसावित्ति वा विशेष्येत नत्वहमस्मीति । अहमस्मीति विशेषणादात्मानमेवावेदिति चावधारणान्निश्चितमात्मैव ब्रह्मेत्यवगम्यते । तथा च सत्युपपन्नो ब्रह्मविद्याव्य-

ब्रह्मभावित्वरूपकल्पनायामुपदेशानर्थक्यमिष्टार्थबाधश्चेत्युक्तमिदानीं ब्रह्मेत्यादिवाक्ये ब्रह्मशब्देन परस्याग्रहणे तद्विद्याया ब्रह्मविद्येति सञ्ज्ञानुपपत्तिं दोषान्तरमाह—व्यपदेशानुपपत्तेश्चेति ।

[4]यथोक्तब्रह्मशब्दार्थद्वैतुर्जीवादन्यस्तदात्मानमित्यत्राऽऽत्मशब्देन परो गृह्यते तद्विद्या च ब्रह्मविद्येति सञ्ज्ञासिद्धिरिति शङ्कते—आत्मेतीति । वाक्यशेषविरोधान्नैवमित्याह—नाहमिति । तदेव प्रपञ्चयति—अन्यश्चेदिति । [5]यथोक्तावगमे [6]फलितमाह—तथा च सतीति । अत्यन्ताभेदे व्यपदेशा-

हो सकता । "उसने आत्मा को ही जाना" यदि इस श्रुतिवाक्य में जानने वाला, संसारी जीव माना जाय, तो इस विद्या की ब्रह्मविद्या संज्ञा नहीं होगी ; क्योंकि 'अपने को ही जाना' इस श्रुतिवाक्य में संसारी जीव का वेद्य होना सिद्ध होता है ।

यदि कहो, 'आत्मा' इस शब्द से प्रतिपादित वेद्य, वेत्ता से भिन्न कहा गया है, तो ऐसा कहना ठीक नहीं । क्योंकि "मैं ब्रह्म हूँ" इस वाक्य में उसे अहंरूप से विशेषित किया गया है । यदि जानने योग्य वस्तु और जानने वाला भिन्न होते, तो इस 'यह' अथवा 'वह' शब्द से विशेषित किया जाता ? 'मैं (ब्रह्म) हूँ'—ऐसा कह कर नहीं । 'मैं (ब्रह्म) हूँ' इस विशेषण से 'अपने को ही जाना' ऐसा निर्णय होने से यह निःसन्देह सिद्ध होता है कि स्वयं आत्मा ही ब्रह्म है । ऐसा (परस्पर अत्यन्त अभेद) होने

१ असमञ्जसमिति—अविरुद्धार्थनिष्ठत्वनैकवाक्यत्वस्य सम्भवति सति विरुद्धार्थनिष्ठतया तद्भेदकल्पनमयुक्तमतश्चोपसंहारवशादुपक्रमेऽप्यद्वयवस्तुप्रतिपाद्यमिति भावः ॥ २ संसारिण एवेति—ननु शालादिमति गौणब्रह्मजीवकाले ब्रह्मविद्याशब्दस्य रूढिरस्त्वित्याशङ्क्याऽऽह वार्तिके—"नापि" रूढिस्तदन्यस्मिन्नश्वकर्णादिवद्भवेदिति' ॥१२६६॥ ब्रह्मज्ञानादन्यस्मिञ्जीवज्ञाने ब्रह्मविद्याशब्दस्य न रूढिस्तथाविधवृद्धव्यवहाराभावादित्यर्थः । अश्वकर्णशब्दः शाल्मलिवृक्षे रूढः ॥ ३ विशेषणादिति—अत्र वाक्ये प्रतीचो ब्रह्मणा विशेषणादित्यर्थः । ननु ब्रह्माऽऽत्मा भवत्वात्मा ततोऽयं सर्पस्य रज्ज्वभेदेऽपि (तत्सर्पस्य रज्जुदृश एव सत्वात्) रज्जोस्तदयत्वदृष्टे (सर्पव्यतिरेकेणापि रज्जोस्सत्वात्) इति चेन्न परस्परविशेषणतात्पर्यात् । तदुक्तं वार्तिके—"प्रतीचो ब्रह्मवत्प्रत्यग्ब्रह्मणोऽपि विशेषणमिति ॥१२७०॥ तयोरन्योऽन्यविशेषणत्वेनान्योन्यात्मकत्वमुक्तं तत्रैव । तथाहि— ब्रह्मता न मदन्यत्र कौटस्थ्यं मम नान्यतः । ब्रह्मणो नान्यत प्रत्यक्साक्षात्त्वादब्रह्मवस्तुनः ॥१२७१॥ इति । ब्रह्मधर्मस्यात्मनि दृष्टेः कौटस्थ्यात्मनस्य आत्मा ब्रह्म तद्धर्मस्याऽपरोक्षस्य प्रत्यक्षादिति' ब्रह्मणि श्रुतेर्ब्रह्माऽऽत्मेत्यर्थः ॥ अन्योन्याभेदे निःसामान्यविशेषं ब्रह्म सिध्यति तत्सिद्धौ च तद्विद्याया ब्रह्मविद्येत्युक्तिर्मुख्या स्यान्मिथो भेदे तु न ब्रह्मशब्दो मुख्यो नापि व्यपदेशस्तथेति फलितमुक्तं तत्रैवेति द्रष्टव्यम् ॥ ४ अत्र प्रकृतकण्डिकायाम् । ५ तयोर्मिथोऽत्यन्ताभेदे निश्चिते । ६ सिद्धमर्थमिति यावत् ।

पदेशो नान्यथा[1]। संसारिविद्या ह्यन्यथा स्यात् । न च ब्रह्मत्वाब्रह्मत्वे ह्येकस्योपपन्ने परमार्थतस्तमःप्रकाशाविव भानोर्विरुद्धत्वात् ।

न चोभयनिमित्तत्वे ब्रह्मविद्येति निश्चितो व्यपदेशो युक्तस्तदा ब्रह्मविद्या संसारिविद्या च स्यात् । न च वस्तुनोऽर्धजरतीयत्वं कल्पयितुं युक्तं तत्त्वज्ञानविवक्षायाम् । श्रोतुः संशयो हि तथा स्यात् । निश्चितं च ज्ञानं पुरुषार्थसाधनमिष्यते यस्य स्याद्ब्रह्म

---

नुपपत्तिं विशदयति—संसारीति । जीवब्रह्मणोर्भेदाभेदोपगमाद्भेदेन ब्रह्मविद्येति व्यपदेशः सेत्स्यतीत्याशङ्क्याऽऽह—न चेति ।

स्यातां वा ब्रह्मात्मनोर्भेदाभेदौ तथाऽपि भिन्नाभिन्नविद्याया ब्रह्मविद्येति नियतो व्यपदेशो न स्यादित्याह—न चेति । निमित्तं विषयः । भिन्नाभिन्नविषया विद्या ब्रह्मविषयाऽपि भवत्येवेति व्यपदेशसिद्धिमाशङ्क्याऽऽह—तदेति । उभयात्मकत्वाद्वस्तुनस्तद्विद्याऽपि तथेति समुच्चयमाशङ्क्याऽऽह—न चेति । अस्तु तर्हि वस्तु ब्रह्म वाऽब्रह्म वा वैकल्पिकमित्याशङ्क्याऽऽह—श्रोतुरिति । संशयितमपि ज्ञानं वाक्यादुत्पद्यते चेत्तावतैव पुरुषार्थं श्रोतुः सिध्यतीत्याशङ्क्याऽऽह—निश्चितं चेति ।

---

पर ब्रह्मविद्या का नाम सार्थक सिद्ध होता है, अन्य किसी तरह नहीं । अन्यथा मानने से यह ब्रह्मविद्या न होकर संसारी विद्या कहलाने लग जायगी । जिस प्रकार अन्धकार और प्रकाश परस्पर विरोधी स्वभाव वाले होने के कारण सूर्य के धर्म नहीं हो सकते, उसी प्रकार एक ही आत्मा के ब्रह्मत्व और अब्रह्मत्व ये दोनों धर्म परमार्थतः सिद्ध नहीं हो सकते ।

इसके अतिरिक्त यदि ज्ञान के संसारीविद्या और ब्रह्मविद्या दोनों विषय स्वीकार कर लिए जायँ तो फिर 'ब्रह्मविद्या' यह निश्चयपूर्वक व्यपदेश संभव नहीं है । ऐसा मानने से (कभी) ब्रह्मविद्या और (कभी) जीवविद्या कहलायेगी । ब्रह्मात्मवस्तु संसारी भी है और असंसारी भी है, ऐसा अर्धजरतीय समुच्चय तत्त्वज्ञान के निरूपण करते समय अभिमत नहीं है । क्योंकि वस्तु के द्वयरूप होने में सुनने वाले को संशय हो जायगा और पुरुषार्थ का साधन तो निश्चित ज्ञान माना जाता है । (मैं देह से मर कर या गमन करने पर इसी ब्रह्म को प्राप्त होऊँगा—) ऐसा जिसका निश्चय है और जिसे इस विषय में

---

१ अत्यन्तभिन्नत्वोक्तिवदिति दृष्टान्ते हिशब्दः । २ भानोः । ३ परमार्थत इति । यत्र प्रतीचि परमार्थता धर्मभावेनास्थूलादिश्रुत्याऽस्ति तत्र श्रुतौ विरुद्धभेदभेदधर्मद्वयस्य तथा भावेऽभिमानं सहासाधनमयुक्तमिति भावः । ४ उभयोः—द्वयविषयं ज्ञानं स्वीकृत्याऽपि व्यपदेशो न घटते तयोर्भिन्नाभिन्नत्वेन द्वयोर्विद्याविषयत्वे ब्रह्मविद्येति ब्रह्मणैव विद्याया विशेष्यत्वायोगादित्यर्थः । ५ द्वयोर्विद्याविषयत्वाविशेषात् कदाचिद्ब्रह्मविद्या कदाचिज्जीवविद्येति व्यपदेशो विकल्पितः स्यादित्यर्थः । ६ तत्त्वज्ञानेति । ब्रह्मात्मवस्तु संसारि चासंसारि चेति समुच्चयो न हि युक्तस्तत्त्वज्ञानस्य विवक्षितत्वात् विरुद्धस्यातथात्वादित्यर्थः । ७ श्रोतुरिति—विकल्पाद्वस्तुनो द्वयात्मकत्वे तद्वाक्यात् संशयः श्रोतुः स्यात् ब्रह्म वाऽब्रह्म वा द्वयात्मकं वा वस्त्विति संशयितार्थस्य वाक्यस्य संशयजनकत्वं प्रसिद्धमिति वक्तुं हिशब्दः । ८ निश्चितज्ञानस्य फलवत्त्वे श्रुतिं प्रमाणयति—यस्येति । ९ अब्राह्मणस्य ब्रह्मणः । ९ तयोरन्यतरभेदे व्यपदेशः सामञ्जस्याद् । १० अभेदाशमादाय । ११ संसारासंसारोभयत्वस्य । १२ उभयरूपतया । १३ विरुद्धयोः समुच्चयायुक्तत्वं । १४ प्रत्यक् । १५ कदाचिद्ब्रह्म कदाचिदब्रह्मेत्यर्थः ।

न विचिकित्साऽस्ति" "संशयात्मा विनश्यति" इति श्रुतिस्मृतिभ्याम् । अतो न संशयितो वाक्यार्थो वाच्यः परहितार्थिना ।

ब्रह्मणि 'साधकत्वकल्पनाऽस्मदादिष्विवापेशला' तदात्मानमेवावेत्तस्मात्तत्सर्वमभवदिति चेन्न । शास्त्रोपालम्भात् । न ह्यस्मत्कल्पनेयं शास्त्रकृता तु तस्माच्छास्त्रस्यायमुपालम्भः । न च ब्रह्मण इष्टं चिकीर्षुणा शास्त्रार्थविपरीतकल्पनया स्वार्थपरित्यागः कार्यः ।

श्रोतुर्निश्चितज्ञानस्य फलवत्त्वेऽपि वक्तुः संशयितमर्थं वदतो न काचन हानिरित्याशङ्क्याऽऽह—अत इति । निश्चितस्यैव ज्ञानस्य पुमर्थसाधनत्वं न संशयितस्येत्यतःशब्दार्थः ।

जीवपरयोरत्यन्तमेदस्य भेदाभेदयोश्चायोगात्परमेव ब्रह्म ब्रह्मशब्दवाच्यं न जीवस्तद्द्वारोत्युक्तं संप्रत्यत्यन्ताभेदपक्षे दोषमाशङ्कते—ब्रह्मणीति । तदात्मानमेवावेदिति ज्ञातृत्वं ब्रह्मण्युच्यते तदयुक्तं तस्य ज्ञानमूर्तित्वादत एव न सर्वमत्वमपि । न च स्वकर्तृकर्मकज्ञानान्मुक्तिः परस्य क्रियाकारकफलविलक्षणत्वादतो न परं ब्रह्म ब्रह्मशब्दितमित्यर्थः । शास्त्रं ब्रह्मणि साधकत्वादि दर्शयति तच्चापौरुषेयमदोषं नोपलम्भार्हं तथाच तस्मिन्नादिष्टं साधकत्वाद्यविरुद्धमिति समाधत्ते—न शास्त्रेति । स चायुक्तस्तस्यापौरुषेयत्वेनासंभावितदोषत्वादिति शेषः । ननु ब्रह्मणो नित्यमुक्तत्वपरिरक्षणार्थं शास्त्रमप्युपालभ्यते नेत्याह—न चेति । शास्त्राद्धि ब्रह्मणो नित्यमुक्तत्वं गम्यते साधकत्वादि च तस्य तेनैवोच्यते न "चार्धजरतीयमुचितं "तथाच वास्तवं नित्यमुक्तत्वं कल्पितमितरदित्यास्थेयम् । यदि तस्य नित्यमुक्तत्वार्थं सर्वथैव साधकत्वादि नेष्यते तदा स्वार्थपरित्यागः स्यात्साधकत्वाविना विनाऽभ्युदयनि श्रेयसयोरसंभवात् । न च ब्रह्मणोऽन्यश्चेतनोऽचेतनो वाऽस्ति 'नान्योऽतोऽस्ति द्रष्टा' 'ब्रह्मं वेद सर्वम्' इत्यादिश्रुतेः"तस्माद्यथोक्ता व्यवस्थाऽऽस्थेयेत्यर्थः ।

किंचित् भी सन्देह नहीं है (उसे अवश्यमेव ईश्वर की प्राप्ति होती है)", "(हे अर्जुन ! इतना निश्चय जानो) संशयालु जीव विनष्ट हो जाता है" इत्यादि श्रुति-स्मृति वाक्यों से यही सिद्ध होता है। इसलिए श्रोता शिष्य के हित के लिए संशययुक्त वाक्यार्थ नहीं कहना चाहिए।

(अब अत्यन्ताभेद पक्ष में दोष की आशङ्का होती है —) किन्तु "उसने अपने को ही जाना; अत. वह सर्वरूप हो गया" इस श्रुतिवाक्य के अनुसार हम लोगों की तरह ब्रह्म में जिज्ञासुत्व की कल्पना करना अशोभनीय है । (समाधान करते हैं—) ऐसा कहना ठीक नहीं है। क्योंकि यह उपालम्भ शास्त्र के लिए है। यह कल्पना हमारी नहीं है; बल्कि शास्त्र द्वारा की हुई है। इसलिए (ब्रह्म में साधकत्वादि कल्पना शास्त्रीय होने से) वह उपालम्भ शास्त्र का ही है। अभीष्ट परिपालन

१. संशयस्यापि निश्चयवत्फलजनकत्वमाशङ्क्याऽऽह—संशयेति । २ श्रोतृशिष्यहितार्थिना । ३. जिज्ञासुत्व-कल्पना । ४. अशोभना । ५. ब्रह्मणि साधकत्वादिकल्पनाया शास्त्रीयत्वात् । ६. ब्रह्मण इष्टमित्यादि—ब्रह्मनिष्ठ नित्यमुक्तत्व परिपालयता । ७ स्वार्थ. अभ्युदयनि श्रेयसरूप । ८. तत्र ज्ञातृत्वादिकल्पनाऽयोगात् । ९. उपालम्भार्हमित्यर्थ । १०. अर्धजरतीयमिति—शास्त्रोक्तमर्धं तु मन्तव्य नित्यमुक्तत्वादि, अर्धं च न मन्तव्यं साधकत्वादीत्येवमर्धजरतीय न न्याय्यमित्यर्थ. । ११. नित्यमुक्तत्वसाधकत्वादेः शास्त्रीयत्वे । १२ तस्मादिति—उक्तव्यवस्थाया. सर्वथा निर्दोषत्वादित्यर्थः ।

न [1]चैतावत्येवाक्षमा युक्ता भवतः। सर्वं हि नानात्वं ब्रह्मणि कल्पितमेव "[2]एकधैवानुद्रष्टव्यम्", "नेह नानाऽस्ति किंचन" "यत्र हि द्वैतमिव भवति" "एकमेवाद्वितीयम्" इत्यादिवाक्यशतेभ्यः। सर्वो हि लोकव्यवहारो ब्रह्मण्येव कल्पितो न परमार्थः सन्नित्यल्पमिदमुच्यत इयमेव कल्पनाऽपेशलेति।

[3]तस्माद्यत्प्रविष्टं स्रष्टृ तद्ब्रह्म। [4]वैशब्दोऽवधारणार्थः। [5]इदं शरीरस्थं [6]यद्गृह्यतेऽग्रे [7]प्राक्प्रतिबोधादपि ब्रह्मैवाऽऽसीत्सर्वं चेदम्। किंत्वप्रतिबोधादब्रह्मास्म्यसर्वं चेत्यात्मन्य-

---

किंच सर्वस्यापि संसारस्य ब्रह्मण्यविद्ययाऽध्यासात्तदन्तर्भूतं साधकत्वाद्यपि तत्राध्यस्तमित्यभ्युपगमे काऽनुपपत्तिरित्याह—न चेति। तस्य तस्मिन्कल्पितत्वं कुतोऽवगतमित्याशङ्क्याऽऽह—एकधेति। उक्तश्रुतितात्पर्यं [8]सकलयति—सर्वो हीति। सर्वस्य द्वैतव्यवहारस्य ब्रह्मणि कल्पितत्वे प्रकृतचोद्यस्याऽऽभासत्वं [9]फलतीत्याह—इत्यल्पमिति।

"[10]परपक्षं" निराकृत्य "[11]स्वपक्षं दर्शयति—तस्मादिति। "[12]तद्व्यतिरेकेण जगन्नास्तीति सूचयति—वैशब्द इति। तत्पदार्थमुक्त्वा त्वंपदार्थं कथयति—इदमिति। "[13]तयोर्वस्तुतो भेदं शङ्कित्वा पदान्तरं व्याचष्टे—प्रागिति। "[14]तस्यापरिच्छिन्नत्वमाह—सर्वं चेति। कथं तर्हि विपरीतधीरित्याशङ्क्याऽऽह—

---

करने की इच्छा वाले ब्रह्मनिष्ठ नित्यमुक्त पुरुष को शास्त्र के अर्थ से विपरीत कल्पना करके अभ्युदय-निःश्रेयसरूप स्वार्थ का परित्याग नहीं करना चाहिए।

साधकत्वकल्पनामात्र निमित्ता असहिष्णुता आपके लिए उचित नहीं है। सम्पूर्ण नानात्व ब्रह्म में ही कल्पित है। "आचार्य उपदेश के बाद उस ब्रह्म को (आकाश के समान अन्तर-बाह्य शून्य) एकमात्र विज्ञानघनरूप देखना चाहिये", "उस ब्रह्म में नाना कुछ भी नहीं है (फिर भी जो इसमें नाना के समान देखता है, अज्ञान के कारण उसे बार-बार मरना पड़ता है)", "जिस अविद्या अवस्था में (परमार्थतः अद्वैत ब्रह्म) में द्वैत सा प्रतीत होता है (वहाँ अन्य अन्य को जानता है)", "(उत्पत्ति से पूर्व सजातीय-विजातीय स्वगतभेद शून्य) एकमात्र अद्वितीय सत् ही था।" इत्यादि शतशः श्रुतिवाक्य इसमें प्रमाण हैं। क्योंकि यह समस्त लोकव्यवहार ब्रह्म में ही कल्पित है, परमार्थतः सत् नहीं है। अतः यह कल्पना अशोभनीय है, यह तो तुम तुच्छ बात कहते हो।

उक्त न्याय से (ब्रह्मभावी जीव के "ब्रह्म" शब्दार्थक न होने से) जो स्रष्टा ब्रह्म प्रविष्ट हुआ था, वही यह ब्रह्म है। "वै" शब्द (अपरिच्छिन्न ब्रह्म का) निश्चयार्थक है। ('प्रमात्रादि-साक्षित्व' पद से लक्ष्य) यह जो शरीर में स्थित (अपरोक्ष) प्रतीत होता है, 'अग्रे' अर्थात् तत्त्वज्ञान उदय होने के पूर्व भी ब्रह्म ही था, तथा यह सर्वरूप था। किन्तु अविद्यावस्था में 'मैं अब्रह्म हूँ, असर्व हूँ' ऐसा आरोप

---

१ एतावतीति—निमित्तसप्तमी। तथा च साधकत्वकल्पनमात्रनिमित्तेत्यर्थः। अक्षमाऽसहिष्णुता। २ एकधैव—अद्वयरूपेणैव। नानात्वस्य कल्पितत्व एवाद्वयरूपेण दर्शनं घटत इति। ३ उक्तन्यायेन ब्रह्मभाविनो जीवस्य ब्रह्मशब्दार्थत्वाभावात्। ४ सर्वं जगद्ब्रह्मैव न तदन्यत् किंचिदस्तीति यावत्। ५. अपरिच्छिन्नं प्रमात्रादि-साक्षि त्वंपदलक्ष्यम्। ६ अपरोक्षं प्रतीयते। ७ तत्त्वज्ञानोदयात्। ८ निष्कृष्य दर्शयति। ९ अनुपपन्नत्व तुच्छत्वमिति यावत्। १० परेष्टं ब्रह्मभाविपुरुषब्रह्मशब्दार्थम्। ११ भर्तृप्रपञ्चपक्षनिरासेनैव तुल्यदोषतया वृत्तिकारपक्षोऽपि निरस्त एवेत्यभिप्रेत्याह—परपक्षं निराकृत्येति। १२ स्वेष्टं सत्। १३ पूर्वोक्तं ब्रह्म। १४ तत्त्वंपदार्थयोः। १५ त्वमर्थस्य।

ध्यारोपात्कर्ताऽहं क्रियावान्फलानां च भोक्ता सुखी दुःखी संसारीति ह्यध्यारोपयति । परमार्थतस्तु ब्रह्मैव तद्विलक्षणं सर्वं च तत्कथंचिदाचार्येण दयालुना प्रतिबोधितं नासि संसारीत्यात्मानमेवावेत्स्वाभाविकम् । अविद्याध्यारोपितविशेषवर्जितमित्येवशब्दस्यार्थः ।

ब्रूहि कोऽसावात्मा स्वाभाविको यमात्मानं विदितवद्ब्रह्म । ननु न स्मरस्यात्मानं दर्शितो ह्यसौ य इह प्रविश्य प्राणित्यपानिति व्यानित्युदानिति समानितीति । नन्वसौ गौरसावश्व इत्येवमसौ व्यपदिश्यते भवता नाऽऽत्मानं प्रत्यक्षं दर्शयसि । एवं तर्हि द्रष्टा श्रोता मन्ता विज्ञाता स आत्मेति ।

किंचिति । यथाप्रतिभासं कर्तृत्वादेर्वास्तवत्वमाशङ्क्य शास्त्रविरोधान्मैवमित्याह—परमार्थतस्त्विति । तद्विलक्षणमध्यस्तसमस्तसंसाररहितमिति यावत् । किमु तद्ब्रह्मेति चोद्यं परिहृत्य किं तदवेदिति चोद्यान्तरं प्रत्याह—तत्कथंचिदिति । पूर्ववाक्योक्तमविद्याविशिष्टमधिकारित्वेन व्यवस्थितं ब्रह्म नासि संसारीत्याचार्येण दयावता कथंचिद्बोधितमात्मानमेवावेदिति संबन्धः । आत्मैव प्रमेयस्त-ज्ज्ञानमेव प्रमाणमित्येवमर्थत्वमेवकारस्य विवक्षन्नाह—अविद्येति ।

प्रकृतमात्मशब्दार्थं विविच्य वक्तुं पृच्छति—ब्रूहीति । स एष इह प्रविष्ट इत्यत्राऽऽत्मनो दर्शितत्वात्प्राणनादिलिङ्गस्य तस्य स्वयंवानुसंधातुं शक्यत्वान्नास्ति वक्तव्यमित्याह—नन्विति । आत्मानं प्रत्यक्षयितुं पृच्छतस्तत्परोक्षवचनमनुत्तरमिति शङ्कते—नन्वसाविति । आत्मानं चेत्प्रत्यक्ष-यितुमिच्छसि तर्हि प्रत्यक्षमेव तं दर्शयामीत्याह—एवं तर्हीति ।

आत्मा मे करने से 'मैं कर्ता हूँ, मैं क्रियावान् हूँ, मैं फलों का भोक्ता हूँ, सुखी हूँ, दुःखी हूँ, संसारी हूँ' ऐसा अध्यास कर लेता है । परमार्थतः वह उससे विलक्षण ब्रह्म और सर्वस्वरूप ही है । तब किसी तरह उसने कारुणिक आचार्य द्वारा तत्त्वज्ञान कराये जाने पर "तू संसारी नहीं है" ऐसे पारमार्थिक आत्म-तत्त्व को ही जाना । 'आत्मा को ही जाना' इसमें 'एव' शब्द का अर्थ है कि उसने अविद्या द्वारा अध्यस्त कर्तृत्वादिविशेष से रहित आत्मा को जाना ।

(वेद्यस्वरूप से उपस्थित आत्मशब्दार्थ को अनात्मा से पृथक् करके शङ्का होती है—) कृपया बत-लाइये, वह पारमार्थिक आत्मतत्त्व कौन सा है जिसे ब्रह्म ने जाना ? (उत्तर देते है—) क्या तू उस आत्मा का स्मरण नहीं करता जिसे "जो यह शरीर में प्रविष्ट होकर (जड भी जिसकी सत्ता से) प्राण, अपान, व्यान, उदान और समान की चेष्टाएं करता है' इस प्रकार दिखाया गया था ? (पुनः शङ्का होती है—) किन्तु 'वह गौ है, वह अश्व है' इस प्रकार तुम उसका व्यपदेश तो करते हो, आत्मा का

१ पारमार्थिकम् । २ कर्तृत्वादि । ३ प्राणितीत्यादि—प्राणादयो जडा अपि यत्सत्तया चेष्टन्त इति यावत् । ४. नन्वसाविति—यथा कश्चिद्गामश्वं वा प्रत्यक्षं दर्शयामीत्युक्त्वा यदचलत्यसौ गौ यो धावत्यसावश्व इति चलनादिलिङ्गं व्यपदिशेत् । एवमात्मानं प्रत्यक्षं दर्शयामीत्युक्त्वा प्राणनादिलिङ्गं एसावात्मा व्यपदिश्यत इति प्रतिज्ञाहानिरूपं निग्रहस्थानं त्वं प्राप्तमित्याशयः । ५ प्रतीत्यनुरोधात् । ६ स्वरूपभ्रष्टा । ७ किन्तु सर्वधर्मशून्यं चिदानन्दैकरसं ब्रह्मैवासि । ८ द्यातिरिक्तकारणाभावेन । ९ आत्मैवेति—आत्माज्ञानमेवा-नात्माज्ञानम् । आत्मज्ञानमेवानात्मज्ञानम् । अतो नान्यात्माऽऽत्मव्यतिरेकेणास्तीत्यर्थः । स्पष्टं चैतद्वार्तिके । १० नाऽन्यात्मा । ११ वेद्यत्वेनोपस्थितम् । १२. अनात्मना पृथक्कृत्य ।

ननु त्वत्रापि दर्शनादिक्रियाकर्तुः स्वरूपं न प्रत्यक्षं दर्शयसि। न हि गमिरेव गन्तुः स्वरूपं छिदिर्वा छेत्तुः। एवं तर्हि दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता स आत्मेति।

नन्वत्र को विशेषो द्रष्टरि। यदि दृष्टेर्द्रष्टा यदि वा घटस्य द्रष्टा सर्वथाऽपि द्रष्टैव द्रष्टव्य एव तु भवान्विशेषमाह दृष्टेर्द्रष्टेति। द्रष्टा तु यदि दृष्टेर्यदि वा घटस्य द्रष्टा[1] द्रष्टैव। न, विशेषोपपत्तेः। अस्त्यत्र विशेषो यो दृष्टेर्द्रष्टा स दृष्टिश्चेद्भवति नित्यमेव[3] पश्यति दृष्टिं न कदाचिदपि दृष्टिर्न दृश्यते द्रष्ट्रा[2] तत्र द्रष्टुर्दृष्टचा नित्यया भवितव्यम्।

---

नैव प्रतिज्ञानुरूपं प्रतिवचनमिति चोदयति—नन्वत्रेति। प्रत्यक्षत्वाद्दर्शनादिक्रियायास्तत्कर्तुः स्वरूपमपि तथेत्याशङ्क्याऽऽह—न हीति। यदि दर्शनादिक्रियाकर्तृस्वरूपोक्तिमात्रेण जिज्ञासा नोपशाम्यति तर्हि दृष्ट्यादिसाक्षित्वेनाऽऽत्मोक्त्या तुष्यतु भवानित्याह—एवं तर्हि दृष्टेरिति।

पूर्वस्मात्प्रतिवचनादस्मिन्प्रतिवचने द्रष्टृविषयो विशेषो नास्तीति शङ्कते—नन्विति। विशेषाभावं विशदयति—यदीत्यादिना। घटस्य द्रष्टा दृष्टेर्द्रष्टेति विशेषे प्रतीयमाने तदभावोक्तिर्व्याहतेत्याशङ्क्याऽऽह—द्रष्टव्य एवेति। तथा द्रष्टर्यपि विशेषो भविष्यतीत्याशङ्क्याऽऽह—द्रष्टा त्विति। वृत्तिमदन्तःकरणावच्छिन्नः सविकारो घटद्रष्टा कूटस्थचिन्मात्रस्वभावः सन्निधिसत्तामात्रेण बुद्धितद्वृत्तीनां द्रष्टेति विशेषमङ्गीकृत्य परिहरति—नेत्यादिना। एतदेव स्फुटयति—अस्तीति। सप्तमी द्रष्टारमधिकरोति। दृष्टेर्द्रष्टुस्तावदन्वयव्यतिरेकाभ्यां विशेषं विशदयति—यो दृष्टेरिति। भवतु दृष्टिसद्भावे द्रष्टुः सदा तद्द्रष्टृत्वं तथाऽपि कथं कूटस्थदृष्टित्वमित्याशङ्क्याऽऽह—तत्रेति।

---

प्रत्यक्षदर्शन तो कराते नहीं। (इसका समाधान देते है—) (प्रत्यक्षदर्शन करना हो) तो ऐसा समझो वह आत्मा द्रष्टा, श्रोता, मन्ता और विज्ञाता है।

किन्तु प्रत्युत्तर मे भी तो तुम दर्शनादिक्रिया के कर्ता का स्वरूप प्रत्यक्ष नहीं दिखाते। गन्ता का गमनक्रिया ही एवं छेत्ता का छेदनक्रिया ही स्वरूप नहीं है। (उत्तर देते है—) तो फिर जो दृष्टि का द्रष्टा, श्रुति का श्रोता, मति का मन्ता एवं विज्ञप्ति का विज्ञाता है, उसे ही आत्मा समझो।

(पूर्वपक्षी शङ्का करता है—) तो इस से द्रष्टा के विषय मे क्या विशेषता हुई? चाहे दृष्टि का द्रष्टा रहे, चाहे घट का द्रष्टा, वह तो सब प्रकार से द्रष्टा ही ठहरा। 'दृष्टि का द्रष्टा' इस प्रकार कहने से तो आप केवल द्रष्टव्य मे ही विशेषता बतलाते हो। द्रष्टा चाहे दृष्टि का हो अथवा घट का, द्रष्टा द्रष्टा ही है। (सिद्धान्ती समाधान करता है—) ऐसा कहना ठीक नहीं है। क्योंकि दोनों मे विशेषता सम्भव है। द्रष्टा में एक विशेषता होती है, जो दृष्टि का द्रष्टा है, वह दृष्टि होने पर नित्य ही देखता है। ऐसा नहीं होता कि द्रष्टा को कभी दृष्टि न भी दिखाई पड़े। द्रष्टा के साक्षात्दृष्टि व द्रष्टृत्व होने पर द्रष्टा की दृष्टि नित्य होनी चाहिये। यदि द्रष्टा की दृष्टि अनित्य होगी, तब दृश्या-

---

१ प्रतिवचने। २, द्रष्टरि। ३ नित्यमेवेति—दृष्टिसत्ताकाल इति यावत्। तथा च यदा दृष्टिस्तदा द्रष्टेत्यन्वय उक्तः। अग्रे व्यतिरेकः। ४ द्रष्टुः साक्षाद्दृष्टिद्रष्टृत्वे सति। ५ द्रष्टव्यवत्। ६ सद्भावेन। ७ घटादिद्रष्टृप्रमातृव्यकाशाद्विशेषम्। ८ स्वरूपभूतदृष्टेः कौटस्थ्य कथम्।

अनित्या चेद्द्रष्टुर्दृष्टिस्तत्र [१]दृश्या या दृष्टिः सा कदाचिन्न दृश्येतापि यथाऽनित्यया दृष्ट्या घटादि वस्तु । न च [२]तद्वद्दृष्टेर्द्रष्टा कदाचिदपि न पश्यति दृष्टिम् ।

किं द्वे दृष्टी द्रष्टु[३]र्नित्याऽदृश्याऽन्याऽनित्या दृश्येति । बाढम् । प्रसिद्धा तावद[४]नित्या दृष्टिरन्धानन्धत्वदर्शनात् । नित्यैव चेत्सर्वोऽनन्ध एव स्यात् । द्रष्टुस्तु नित्या दृष्टिः "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेरनुमानाच्च । अन्धस्यापि [५]घटाद्याभासविषया स्वप्ने दृष्टिरुपलभ्यते । सा [६]तर्हीतरदृष्टिनाशे न नश्यति सा द्रष्टुर्दृष्टिस्तयाऽविपरिलुप्तया नित्यया दृष्ट्या स्वरूपभूतया स्वयंज्योतिःसमाख्ययेतरामनित्यां दृष्टि

---

नित्यत्वमुपपादयति—अनित्या चेदिति । [७]उक्तपक्षपरामर्शार्था सप्तमी । कादाचित्के द्रष्टृदृश्यत्वे दृष्टान्तमाह—यथेति । घटादिवद्दृष्टिरपि कदाचिदेव द्रष्ट्रा दृश्यते न सर्वदेत्यनिष्टापत्त्यभावमाशङ्क्याऽऽह—न चेति । विकारिणश्चित्तस्याद्रष्टृत्वं [८]क्रमदृष्टृत्वमन्यथा द्रष्टृत्वं च दृष्टं तत्साक्षिणो व्यावर्तमानं तस्य निर्विकारत्वं गमयतीति भावः ।

दृष्टिद्वयं प्रमाणाभावादश्लिष्टमिति शङ्कते—किमिति । तदुभयमङ्गी करोति—बाढमिति । तत्रानित्यां दृष्टिमनुभवेन साधयति—प्रसिद्धेति । उक्तमर्थं युक्त्या व्यक्ती करोति—नित्यैवेति । संप्रति नित्यां दृष्टिं श्रुत्या समर्थयते—द्रष्टुरिति । तत्रैवोपपत्तिमाह—अनुमानाच्चेति । तदेव विवृणोति—अन्धस्यापीति । जागरिते चक्षुरादिहीनस्यापि पुंसः स्वप्ने वासनामयघटादिविषया दृष्टिरुपलब्धा या च सा तस्मिन्काले चक्षुरादिजनितदृष्ट्यभावेऽपि स्वयमविनश्यन्त्यनुभूयते सा द्रष्टुः स्वभावभूता दृष्टिर्नित्यैवेष्टव्या । [९]विमतं नित्यमव्यभिचारित्वात्परेष्टात्मवदिति प्रयोगोपपत्तेरित्यर्थः । नन्वात्मा दृष्टिस्वभावश्चेत्कथं दृष्टेर्द्रष्टेत्युक्तमत आह—तयेति । नित्यत्वे हेतुः—अविपरिलुप्तयेति । नित्यद्वयं परिहर्तुं स्वरूपभूतयेत्युक्तम् । तस्या दृष्ट्यन्तरापेक्षां वारयति—स्वयमिति । उक्तमविपरिलुप्तत्वं व्यनक्ति—इतरामिति । आत्मा दृष्टेर्द्रष्टेति स्थिते फलितमाह—

---

दृष्टि कभी नहीं देखी जायगी, जैसे अनित्य दृष्टि से घटादि वस्तु । किन्तु घटादि के समान दृष्टि का द्रष्टा कभी दृष्टि को देखता नहीं—ऐसा कहना ठीक नहीं ।

(दृष्टिद्वय में कोई प्रमाण न होने के कारण पूर्वपक्षी शङ्का करता है—) तो क्या द्रष्टा को दो दृष्टियाँ प्राप्त है, एक स्वरूपभूता और अदृश्या, दूसरी अनित्या और दृश्या । (सिद्धान्ती इसे स्वीकार करता है—) ऐसा ही है, लोकव्यवहार मे अन्धत्व और अनन्धत्व दोनो देखे जाने से अनित्या दृष्टि प्रसिद्ध ही है । यदि नित्या दृष्टि ही होती तो कोई भी नेत्रविहीन न होता । किंतु "द्रष्टा की दृष्टि का लोप नहीं होता" इस श्रुतिवाक्य द्वारा एवं अनुमान द्वारा 'द्रष्टा की दृष्टि तो नित्य है', यह सिद्ध होता है । अन्धे पुरुष की भी स्वप्न मे घटादिरूप मिथ्यावस्तुविषयक दृष्टि देखी जाती है । वह दृष्टि स्वप्न के समय इतरदृष्टि के विनष्ट होने पर भी नष्ट नहीं होती । वह द्रष्टा की दृष्टि है, उसे विलुप्त न होने

---

१. द्रष्टुः दृष्टेरनित्यत्वे । २. घटादिवत् । ३. स्वरूपभूता । ४. अनित्येति—नश्यतीत्यन्धत्वम् । ५. घटादिरूपमिथ्यावस्तुविषया । ६. स्वप्नसमये । ७. द्रष्टृदृष्टेरनित्यत्वपक्षे । ८. घटदर्शनकाले न पटदर्शनमिति क्रमिक तद्दर्शन वृत्या । ९. विमतमिति—द्रष्टव्यादीना द्रष्ट्रादिरूपं प्रकृत ब्रह्मात्मतत्त्वम् । नित्यत्व त्रिकालाबाध्यत्वम् । अव्यभिचारित्व सर्वानुगतत्वम् ।

स्वप्नबुद्धान्तयोर्वासनाप्रत्ययरूपां नित्यमेव पश्यन्दृष्टेर्द्रष्टा भवति । एवं च सति दृष्टिरेव स्वरूपमस्याग्न्यौष्ण्यवन्न काणादादीनामिव दृष्टिव्यतिरिक्तोऽन्यश्चेतनो द्रष्टा ।

तद्ब्रह्माऽऽत्मानमेव नित्यदृग्रूपमध्यारोपितानित्यदृष्ट्यादिवर्जितमेकावेद्विदितवत् । ननु विप्रतिषिद्धम् । "न विज्ञातेर्विज्ञातारं विजानीयाः" इति श्रुतेर्विज्ञातुर्विज्ञानम् । न, एवं विज्ञानान्न विप्रतिषेधः । एवं दृष्टेर्द्रष्टेति विज्ञायत एव । अन्यज्ञानानपेक्षत्वाच्च । न च द्रष्टुर्नित्यैव दृष्टिरित्येवं विज्ञाते द्रष्टृविषयां दृष्टिमन्यामाकाङ्क्षते । निवर्तते हि द्रष्टृविषयदृष्ट्याकाङ्क्षा तदसंभवादेव । न ह्यविद्यमाने विषय आकाङ्क्षा

एव चेति । 'अन्यश्चेतनोऽचेतनो वेति शेषः ।

नित्यदृष्टिस्वभावमात्मपदार्थं परिशोध्य श्रुत्यक्षराणि योजयति—तद्ब्रह्मेति । वाक्यशेषविरोधं चोदयति—नन्विति । किं कर्मत्वेनाऽऽत्मनो ज्ञानं विरुध्यते किं वा साक्षित्वेनेति वाच्यं नाऽऽद्योऽनभ्युपगमादित्याह—नेति । न द्वितीय इत्याह—एवमिति । तदेव स्पष्टयति—एव दृष्टेरिति । तर्हि तद्विषयं ज्ञानान्तरमपेक्षितव्यमिति कुतो विरोधो न प्रसरतीत्याशङ्क्याऽऽह—अन्यज्ञानेति । न विप्रतिषेध इति पूर्वेण संबन्धः । संगृहीतमर्थं विवृणोति—न चेति । नित्यैव स्वरूपभूतेति शेषः । विज्ञातत्वं वाक्यीयबुद्धिवृत्तिव्याप्यत्वम् । अन्या दृष्टिं स्फुरणलक्षणाम् । आत्मविषयस्फुरणाकाङ्क्षाभावं प्रतिपादयति—निवर्तते हीति । आत्मनि स्फुरणरूपे स्फुरणस्यान्यस्यासंभवेऽपि कुतस्तदाकाङ्क्षोपशान्तिरित्याशङ्क्याऽऽह—न हीति । किं च द्रष्टरि दृश्याऽदृश्या वा दृष्टिरपेक्ष्यते नाऽऽद्य

स्वप्न में प्रातिभासिकी और जाग्रत् अवस्था में व्यावहारिकी अनित्यदृष्टि को नित्य ही देखते रहने के कारण वह दृष्टि का द्रष्टा है। ऐसा होने से अग्नि की उष्णता के समान इस आत्मा का स्वरूप है। काणाद मत के समान दृष्टि से व्यतिरिक्त कोई अन्य चेतन (या अचेतन) द्रष्टा नहीं है।

(अधिकारीरूप में स्थित) उस ब्रह्म ने, जो अध्यारोपित अनित्यदृष्टि आदि से परे है उस नित्य दृग्रूप आत्मा को ही 'अवेत्' अर्थात् जाना। (पूर्वपक्षी शङ्का करता है—) "तुम बुद्धिवृत्तिरूप विज्ञाति के विज्ञाता को नहीं जान सकते।" इस श्रुतिवाक्य द्वारा विज्ञाता आत्मा का जानना तो विरुद्ध बात जान पड़ती है। (सिद्धान्ती समाधान करता है-) ऐसा कहना ठीक नहीं। इस प्रकार (साक्षीरूप) जानने से कोई विरोध नहीं होता। उक्तविधि से 'वह दृष्टि का द्रष्टा है' ऐसा जाना ही जाता है। इतरज्ञान की अपेक्षा न होने से भी विरोध नहीं है। 'द्रष्टा की दृष्टि नित्य ही है'—इस प्रकार जान लेने पर द्रष्टाविषयिणी अन्यदृष्टि की द्रष्टा को आकाङ्क्षा नहीं रहती, अपितु द्रष्टाविषयिणी दृष्टि की आकाङ्क्षा निवृत्त हो जाती है, क्योंकि उसका होना संभव ही नहीं है। असंभावित विषय के लिए

१ वासनेति—स्वप्ने वासनारूपां प्रातिभासिकीम् । बुद्धान्ते जागरिते प्रत्ययरूपां व्यावहारिकीमित्यर्थः । २ अधिकारितया स्थितम् । ३ साक्षित्वेन । ४ उक्तविधया । ५ द्रष्टा । ६ तदसंभवादिति—तस्मिन् स्फुरणरूप आत्मनि स्फुरणान्तरासंभवादित्यर्थः । ७ असंभाविते । ८ भट्टमते चिदचिद्रूपत्वादात्मनः चेतन इत्युक्तं नैयायिकमते अचेतनतयाऽचेतन इति । ९ स्वमर्थम् । १० निर्णीय । ११ एव ज्ञानम् । १२ आत्मनि साक्षित्वेनापि विज्ञानस्वीकारः । १३ फलरूपाम् ।

कस्यचिदुपजायते । न च दृश्या दृष्टिर्द्रष्टारं [1]विषयीकर्तुमुत्सहते । यतस्तामाकाङ्क्षेत । न च स्वरूपविषयाकाङ्क्षा स्वस्यैव । [2]तस्मादज्ञानाध्यारोपणनिवृत्तिरेवाऽऽत्मानमेवावेदित्युक्तं नाऽऽत्मनो विषयीकरणम् ।

तत्कथमवेदित्याह—अहं [3]दृष्टे[4]र्द्रष्टाऽऽत्मा ब्रह्मास्मि भवामीति । ब्रह्मेति यत्साक्षादपरोक्षात्सर्वान्तर आत्माऽशनायाद्यतीतो नेति नेत्यस्थूलमनण्वित्येवमादिलक्षणं [5]तदेवाहमस्मि नान्यः संसारी यथा भवानाहेति । तस्मादेवं विज्ञानात्तद्ब्रह्म[6] सर्वमभवत् । अब्रह्माध्यारोपणापगमात्तत्कार्यस्यासर्वत्वस्य निवृत्त्या सर्वमभवत् । [7]तस्माद्युक्तमेव

इत्याह—न चेति । आदित्यप्रकाश्यस्य रूपादेस्तत्प्रकाशकत्वाभावादिति भावः । न द्वितीय इत्याह—न चेति । आत्मनो वृत्तिव्याप्यत्वेऽपि स्फुरणव्याप्यत्वानङ्गीकरणान्न वाक्यशेषविरोधोऽस्तीत्युपसंहरति—तस्मादिति ।

वाक्यान्तरमाकाङ्क्षापूर्वकमादत्ते—तत्कथमिति । तदक्षराणि व्याचष्टे—दृष्टेरिति । इतिपदमवेदित्यनेन सबध्यते । ब्रह्मशब्दं व्याचष्टे—ब्रह्मेतीति । ब्रह्माहंपदार्थयोर्मिथो विशेषणविशेष्यभावमभिप्रेत्य वाक्यार्थमाह—तदेवेति । आचार्योपदिष्टेऽर्थे स्वस्य निश्चयं दर्शयति—यथेति । इतिशब्दो वाक्यार्थज्ञानसमाप्त्यर्थः । इदानीं फलवाक्यं व्याचष्टे—तस्मादिति । सर्वभावमेव व्याकरोति—अब्रह्मेति । ब्रह्म वाविद्यया संसरति विद्यया च मुच्यत इति पक्षस्य निर्दोषत्वमुपसंहरति—

आकाङ्क्षा किसी को नही हुआ करती । इसके अलावा दृश्यभूता दृष्टि द्रष्टा को प्रकाशित करने मे समर्थ नही है, जिससे उसकी आकाङ्क्षा की जाय । और अपने स्वरूप के विषय मे अपने को ही आकाङ्क्षा नही हुआ करती । इसलिए (आत्मा के स्व व इतरज्ञान मे अनपेक्ष होने के कारण) 'आत्मा को ही जाना" इस श्रुतिवाक्य से अज्ञान के अध्यास की निवृत्ति ही कही गयी है, आत्मा का विषयीकरण नही बताया गया ।

उस ब्रह्म ने किस प्रकार जाना ? इस पर श्रुति कहती है—"अहम्" अर्थात् चाक्षुषीवृत्ति का साक्षी आत्मा मैं, ब्रह्म हूँ—ऐसा जाना । 'ब्रह्म' अर्थात् जो साक्षात् अपरोक्ष, सर्वान्तर आत्मा क्षुधादि से अतीत, नेति नेति, अस्थूल, अनणु इत्यादि लक्षणो वाला है, वही मैं हूँ, मैं अन्य ससारी नही हूँ जैसा

१ प्रकाशयितुम् । २ आत्मन स्वेतरज्ञानानपेक्षत्वात् । ३ चाक्षुष्या वृत्ते । ४ साक्षी । ५ 'अह ब्रह्मास्मी'त्यत्राऽस्मीतिपदमहब्रह्मणयो सामानाधिकरण्यार्थम् । तथाहि—अस्मीति वर्तमानापदेशात् ऐक्यस्य सदा सत्त्वमुच्यते नाभूतभवनम् असंसर्गवादता भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थ्यं सामानाधिकरण्यमिति न्यायेनाहब्रह्मपदयोरैक्यवृत्तितया तल्लिङ्गपर्यायिपदर्शिनि । तदेव दर्शयति—तदेवाहमस्मीति । ६ ब्रह्म सर्वमभवदिति । ब्रह्म ब्रह्मैवाभवदित्यर्थ । स्वतो ब्रह्मैवाविद्यातत्कार्याभ्यामब्रह्मवदभिगत विद्यया तन्निवृत्तौ स्वाभाविक ब्रह्मैवाभवदित्यर्थ । सर्वशब्दस्य ब्रह्मपर्यायत्वाद्ब्रह्मभाव एव ज्ञानफलमुच्यते । यथा रज्ज्वविद्याजनितभुजङ्गादीना रज्जुरेव तत्त्व तथा ब्रह्माविद्याप्रसूतप्रपञ्चस्य ब्रह्ममात्रतया प्रपञ्चविषय सर्वशब्दब्रह्मशब्दस्य पर्याय इति । ७. ब्रह्मविद्याया सर्वात्मभावापत्तिफलकत्वात् । ८ 'अह ब्रह्मास्मीति'वाक्यम् । ९ 'ब्रह्म वा इद'मित्यनया श्रुत्या सर्वत्रैक एव जीवो विवक्षित इत्येकजीववादस्यैव श्रोतत्व सूचयन्नाह—ब्रह्मैवेति ।

मनुष्या मन्यन्ते यद्ब्रह्मविद्यया सर्वं भविष्याम इति । यत्पृष्टं किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति तन्निर्णीतं ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति ।

तत्तत्र यो यो देवानां मध्ये प्रत्यबुध्यत प्रतिबुद्धवानात्मानं यथोक्तेन विधिना स एव प्रतिबुद्ध आत्मा तद्ब्रह्माभवत्तथर्षीणां तथा मनुष्याणां च मध्ये । देवानामित्यादि 'लोकदृष्ट्यपेक्षया न ब्रह्मत्वबुद्ध्योच्यते । पुरः पुरुष आविशदिति सर्वत्र ब्रह्मैवानुप्रविष्टमित्यवोचाम । 'अतः शरीराद्युपाधिजनितलोकदृष्ट्यपेक्षया देवानामित्याद्युच्यते ।

---

तस्माद्युक्तमिति । वृत्तं कीतयति—यत्पृष्टमिति ।

यथाऽग्निहोत्रादि मनुष्यत्वादि'जातिमन्तम'र्थित्वादिविशेषणवन्तं चाधिकारिणमपेक्षते न तथा ज्ञानमिति 'वक्तुं तद्यो यो देवानामित्यादिवाक्यं तदक्षराणि व्याचष्टे—तत्तत्रेति । यथोक्तेन विधिनाऽन्वयादिकृतपदार्थपरिशोधनादिनेत्यर्थः । ज्ञानादेव मुक्तिर्न' साधनान्तरादित्येवकारार्थः । विवक्षितमधिकार्यनियमं प्रकटयति—तथेत्यादिना । यो य प्रत्यबुध्यत स एव तदभवदिति पूर्वेण संबन्धः । ब्रह्मैवाविद्यया संसरति मुच्यते च विद्ययेत्युक्तत्वाद्देवादीनां विद्याविद्याभ्यां बन्धमोक्षोक्तिः 'तद्विरुद्धेत्याशङ्क्याऽऽह—देवानामित्यादीति । तत्त्वदृष्ट्यै'व भेदवचने का हानिरित्याशङ्क्याऽऽह—पुर इति' । आविद्यक ''भेदमनूद्य तत्तदात्मना स्थितब्रह्मणः एव विद्याविद्याभ्यां बन्धमोक्षोक्तेः

---

कि आप कहते है । 'तस्मात' अर्थात ऐसा जानने से 'तत' अर्थात् वह ब्रह्म सर्वरूप हो गया । अब्रह्मरूप अध्यारोप के बाध से उसके कार्यभूत असर्वत्व की निवृत्ति हो जाने से वह सर्वरूप हो गया । इसलिए (ब्रह्मविद्या के सर्वात्मभावापत्तिरूप फल वाला होने से) मनुष्य ठीक ही मानते है कि ब्रह्मविद्या से हम सर्वरूप हो जायगे । यह जो पूछा था कि 'उस ब्रह्म ने क्या जाना जिससे वह सर्वरूप हो गया ?'' उसका निर्णय ' उत्पत्ति से पहले यह नामरूपात्मक जगत ब्रह्मस्वरूप ही था । उसने अपने को ही जाना कि 'मैं ब्रह्म हूँ' इसी विज्ञान से वह सर्वरूप हो गया ।'' इस श्रुतिवाक्य द्वारा कर दिया गया ।

'तत्' अर्थात वहाँ देवताओं के मध्य में जिस जिसने 'प्रत्यबुध्यत' अर्थात् यथोक्त प्रकार से आत्मा को जाना, वही प्रतिबुद्ध आत्मा ब्रह्म हो गया । इसी प्रकार ऋषियों और मनुष्यों में हुआ । 'देवताओं में'' इत्यादि जो कहा गया है, वह अज्ञलोकदृष्टि की अपेक्षा से है, तत्त्वदृष्टि से ऐसा नहीं कहा जाता । क्योंकि पुरुष ने पुर में प्रवेश किया इस वाक्य में सर्वत्र ब्रह्म का ही अनुप्रवेश हुआ,

---

१ अज्ञलोकदृष्ट्येति यावत् । २ तत्त्वदृष्ट्या । ३ सर्वत्र ब्रह्मण एव प्रवेशात् । ४ जात्यभिमानवन्तम् । ५ अर्थित्वादीनि । अर्थी दक्षो द्विजोऽहं बुध इति मतिमान् कर्मसूक्तोऽधिकारीति स्वाराज्यसिद्धयुक्तानि विशेषणानि वदितव्यानि । ६ अर्थित्वादिविशेषणस्य साधारणत्वेऽपि मनुष्यत्वादिविशेषणमनियतमिति वक्तुमित्यर्थः । ७ साधनान्तराभावात् ज्ञानादेव मुक्तिरित्याशयेनाह—न साधनेति । कर्मोपासनादिकं सर्वमाविद्यकमिति न मोक्षसाधनमविद्याकार्यस्याविद्यानिवर्तकत्वासंभवादुपजीव्यत्वात्तस्या इत्येवकारसामर्थ्यान्निश्चितम् । ब्रह्मविद्यायास्त्वाविद्यकत्वेऽपि विषयसामर्थ्यादेवाविद्यानिवर्तकत्वेन मोक्षसाधनत्वं निरणाय्याकरे । ८ एकस्यैव ब्रह्मणो जीवत्वे देवादिभेदानुपपत्तिरित्यर्थः । ९ तथा च तात्त्विकभेदे उक्तश्रुतिविरोध एव हानि अनिष्टमिति यावत् । १० देवादिभेदम् ।

परमार्थतस्तु तत्र तत्र ब्रह्मैवाग्र आसीत्प्राक्प्रतिबोधाद्देवादिशरीरेष्वन्यथैव 'विभाव्यमानम्। तदात्मानमेवावेत्तथैव च सर्वमभवत् ।

अस्या ब्रह्मविद्यायाः सर्वभावापत्तिः फलमित्येतस्यार्थस्य 'द्रढिम्ने मन्त्रानुदाहरति श्रुतिः'। कथम् । तद्ब्रह्म तदात्मानमेवाहमस्मीति पश्यन्नेतस्मादेव ब्रह्मणो दर्शनादृषिर्वामदेवाख्यः प्रतिपेदे ह प्रतिपन्नवान्किल । स एतस्मिन्ब्रह्मात्मदर्शनेऽवस्थित एतान्मन्त्रान्ददर्श—अहं मनुरभवं सूर्यश्चेत्यादीन् । तदेतद्ब्रह्म पश्यन्निति ब्रह्मविद्या 'परामृश्यते ।

पूर्वापरविरोधोऽस्तीति फलितमाह—अत इति । अविद्यादृष्टिमनूद्य तत्त्वदृष्टिमन्वाचष्टे—परमार्थतस्त्विति । प्रबोधात्प्रागपि तत्र तत्र देवादिशरीरेषु परमार्थतो ब्रह्मैवाऽऽसीच्चेदौपदेशिकं 'ज्ञानमनर्थकमित्याशङ्क्याऽऽह—अन्यथैवेति । 'नानाजीववादस्य तु नावकाश.' 'प्रक्रमविरोधादित्याशयेनाऽऽह—तदिति । तथैवेत्युत्पन्नज्ञानानुसारित्वपरामर्शः ।

'तद्धैतदित्यादिवाक्यमवतार्य व्याकरोति—'अस्या इति । मन्त्रोदाहरणश्रुतिमेव प्रश्नद्वारा व्याचष्टे—कथमित्यादिना । ज्ञानान्मुक्तिरित्यस्यार्थवादोऽयमिति द्योतयितुं किलेत्युक्तम् । आदिपदं समस्तवामदेवसूक्तग्रहणार्थम् । "तत्रावान्तरविभागमाह—तदेतदिति । शतृप्रत्ययप्रयोगप्राप्तमर्थं

ऐसा हम पहले बता चुके है। इसलिए शरीरादि-उपाधिजनित अज्ञलोकदृष्टि को लेकर "देवताओ मे से" इत्यादि श्रुतिवाक्य कहा गया है। तत्त्वदृष्टि से तो उन उन देवशरीरो मे ज्ञान होने से पूर्व अन्यरूप से अध्यस्त किया जाता हुआ ब्रह्म ही था। 'उसने अपने को ही जाना और इसी प्रकार वह सर्वरूप हो गया।'

इस ब्रह्मविद्या का फल सर्वभावापत्ति है। इसी अर्थ की दृढता के लिए श्रुति मन्त्र उद्धृत करती है ? 'तत्' अर्थात् उस ब्रह्म को 'एतत्' अर्थात् अपने को ही 'मैं ब्रह्म हूँ' देखने वाले, इसी प्रकार ब्रह्म के दर्शन से वामदेव नामक ऋषि को 'प्रतिपेदे ह' अर्थात ज्ञान हुआ। वह इसी ब्रह्मात्मदर्शन मे प्रतिष्ठित

१ विभाव्यमानमिति—अध्यस्तसमस्तानात्मधर्मविशिष्टतयैव प्रतीयमानमित्यर्थः । २ ननु ब्रह्मविद्या सर्वभावापत्तिफलेति श्रुत्यर्थे श्रुतेरेव निश्चायकत्वात्किं मन्त्रैरित्याशङ्क्याऽऽह—द्रढिम्न इति । ज्ञानं देवादीनामधिकरोति विहितसाधनत्वात्कर्मादिवदित्याशङ्क्य मन्त्रब्राह्मणविरोधान्मैवमित्यभिप्रेत्याह—मन्त्रानिति । ३ ब्राह्मणवाक्यम् । अतो मन्त्रोदाहृतिरर्थवतीति भाव । तदुक्तं वार्तिके—'श्रुत्युक्तार्थस्य वा स्थेम्ने मन्त्रोदाहृतिरिष्यते । प्रमाणान्तरसंवादात्पुंसा विश्वासधीर्यतः" ॥१४४४॥ इति । ४ प्रदर्श्यते ॥ ५ ज्ञानं विनापि ब्रह्मत्वादेव । ६ 'तद्यो यो देवानामिति" जीवानां बहुत्वावगमान्नानाजीववाद एव श्रौत स्यादित्याशङ्कामपनुदन्नाह—नानाजीवेति । ७ "ब्रह्म वा इदमग्र आसीदि"त्येवमनेनोपक्रमादेक एव जीव । ८ प्रक्रमविरोधादिति—"तद्यो यो देवानामि"त्यादेस्त्वर्थवादत्वं मन्त्रस्य उपसहारटीकायां वक्ष्यत इति भाव । ९ तद्धैतदिति । यथाऽग्निहोत्रादिकर्म मनुष्यत्वादिजातिमन्तमधिकारिणमपेक्षते न तथा ज्ञानमिति पूर्वत्र निर्णीतमिदानीं विमतं विशिष्टाधिकार्यपेक्षं विशिष्टपुमर्थहेतुत्वात् कर्मवदित्याशङ्कामपनुदन्नित्यादि । १० अस्या इतीति । जन्मान्तरानुष्ठितान्तरङ्गबहिरङ्गसाधनसंस्कृतबुद्धेर्वामदेवस्य यथोक्तसंस्काराद् ब्रह्मज्ञानं जातमतो न तस्य मनुष्यत्वादिजातिमदधिकार्यपेक्षेति भाव इति शेष । ११ तत्रेति—प्रकृतवाक्ये । अवान्तरविभाग त्रिविधमवान्तरविभागमित्यर्थ ।

अहं मनुरभवं सूर्यश्चेत्यादिना सर्वभावापत्तिं ब्रह्मविद्याफलं परामृशति । पश्यन्सर्वात्मभावं फलं प्रतिपेद इत्यस्मात्प्रयोगाद्[1]ब्रह्मविद्यासहायसाधनसाध्यं मोक्षं दर्शयति । भुञ्जानस्तृप्यतीति यद्वत् ।

सेयं ब्रह्मविद्यया सर्वभावापत्तिरासीन्महतां देवादीनां वीर्यातिशयान्नेदानीमैदंयुगीनानां विशेषतो मनुष्याणामल्पवीर्यत्वादिति स्यात्कस्यचिद्बुद्धिस्तद्व्युत्थापनायाऽऽह— तदिदं प्रकृतं ब्रह्म यत्सर्वभूतानुप्रविष्टं [2]दृष्टिक्रियादिलिङ्गमेतर्ह्येतस्मिन्नपि वर्तमानकाले यः कश्चिद्[3]व्यावृत्तबाह्यौत्सुक्य आत्मानमेवैवं वेदाहं ब्रह्मास्मीति अपोह्यो[4]पाधिजनितभ्रान्तिविज्ञानाध्यारोपिता[5]न्विशेषान्संसारधर्मानागन्धितमनन्तरमबाह्यं ब्रह्मैवाहमस्मि

---

कथयति—पश्यन्निति । "लक्षणहेत्वोः क्रियायाः" (पा० सू० ३।२।१२६) इति हेतौ शतृप्रत्ययविधानान्नैरन्तर्ये च सति हेतुत्वसंभवात्प्रकृते च प्रत्ययबलाद्ब्रह्मविद्यामोक्षयोर्नैरन्तर्यप्रतीतेस्तया साधनान्तरानपेक्षया लभ्यं मोक्षं दर्शयति श्रुतिरित्यर्थः । [6]अत्रोदाहरणमाह—भुञ्जान इति । भुजिक्रियामात्रसाध्या हि तृप्तिरत्र प्रतीयते तथा पश्यन्नित्यादावपि ब्रह्मविद्यामात्रसाध्या मुक्तिर्भातीत्यर्थः ।

तद्धैतदित्यादि व्याख्याय तदिदमित्याद्यवतारयितुं शङ्कते—सेयमिति । ऐदंयुगीनानां कलिकालवर्तिनामिति यावत् । उत्तरवाक्यमुत्तरत्वेनावतार्य व्याकरोति—तद्व्युत्थापनायेति । तस्य [7]ताटस्थ्यं वारयति—यत्सर्वभूतेति । प्रविष्टे प्रमाणमुक्तं स्मारयति—दृष्टीति । व्यावृत्तं बाह्येषु विषयेषूत्सुकं साभिलाषं मनो यस्य स तथोक्तः । एवंशब्दार्थमेवाऽऽह—अहमिति । तदेव ज्ञानं विवृणोति—अपोह्येति । यद्वा मनुष्योऽहमित्यादिज्ञाने परिपन्थिनि कथं ब्रह्माहमिति ज्ञानमित्याशङ्क्याऽऽह—अपोह्येति । अहमित्यात्मज्ञानं सदा सिद्धमिति न तदर्थं प्रयतितव्यमित्याशङ्क्याऽऽह—संसारेति ।

---

"उस तत्त्व को आत्मभाव से देखते हुए ही जाना" इससे ब्रह्मविद्या का फल सर्वभावापत्ति प्रदर्शित किया गया है । 'उस तत्त्व को देखने वाले ऋषि को सर्वात्मभाव फल का ज्ञान हुआ' इस वाक्य के प्रयोग मे श्रुति मोक्ष को ब्रह्मविद्यारूप असहाय साधन से साध्य दिखाती है; जैसे तृप्ति भोजनक्रियामात्र साध्य है ।

(ऋषि वामदेव ने) होकर इन मन्त्रों का द्रष्टा हुआ—"मैं ही मनु और सूर्य भी हुआ था" इत्यादि । "मैं ही मनु और सूर्य भी हुआ था" इत्यादि वाक्य से ब्रह्मविद्या प्रदर्शित की गई है ।

विशेषसामर्थ्य वाले महामहिम होने से देवताओं को ब्रह्मविद्या द्वारा वह यह सर्वभावापत्ति हो गयी थी । किन्तु अब कलियुगी जीवों को और उसमें भी विशेष कर अल्पशक्ति वाले मनुष्यों को उसकी प्राप्ति नही हो सकती । यदि ऐसा कोई सोचे तो उसका खण्डन करते हुए श्रुति कहती है; 'तदिदम्' अर्थात् इस प्रकृत ब्रह्म को जो सर्व प्राणियों मे अनुप्रविष्ट है, तथा दृष्ट्यादिक्रिया से ज्ञाप्य है, 'एतर्हि' अर्थात् इस वर्तमान समय में भी "यः" अर्थात् जो कोई भी बाह्य विषयों की उत्सुकता से मुक्त होकर अपने को ही 'मैं ब्रह्म हूँ' इस प्रकार जानता है, अज्ञानरूप उपाधिजनित मिथ्याज्ञान मे

---

१. ब्रह्मविद्यारूपं यदसहायसाधनम् इतरानपेक्षं साधनं तत्साध्यम् । २. दृष्टिक्रियेति—'दृष्टेर्द्रष्टा श्रुतेः श्रोते'त्येवं दृष्ट्यादिक्रियाज्ञाप्यं दृष्ट्यादिसाक्षिणमिति यावत् । ३. व्यावृत्तेति—अत्र टीकानुरोधाद्व्यावृत्तबाह्योत्सुक इत्येव पाठ्यम् । ४. उपाधिरज्ञानम् । ५. कर्तृत्वादीन् । ६ हेतुफलयोर्व्यवधानाभावे । ७. प्रत्यग्भिन्नत्वम् ।

केवलमिति । सोऽविद्याकृतासर्वत्वनिवृत्तेर्ब्रह्मविज्ञानादिदं सर्वं भवति । न हि महावीर्येषु वामदेवादिषु हीनवीर्येषु वा वार्तमानिकेषु मनुष्येषु ब्रह्मणो विशेषस्तद्विज्ञानस्य वाऽस्ति ।

वार्तमानिकेषु पुरुषेषु तु ब्रह्मविद्याफलेऽनैकान्तिकता शङ्क्यत इत्यत आह— तस्य ह ब्रह्मविज्ञातुर्यथोक्तेन विधिना देवा महावीर्याश्चनाप्यभूत्या अभवनाय ब्रह्मसर्वभावस्य नेशते न पर्याप्ताः किमुतान्ये ।

ब्रह्मविद्याफलप्राप्तौ विघ्नकरणे देवादय ईशत इति का शङ्केति । उच्यते— देवादीन्प्रति ऋणवत्त्वान्मर्त्यानाम् । "ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति हि जायमानमेवर्णवन्तं पुरुषं दर्शयति श्रुतिः । पशुनिदर्शनाच्चाथो अयं

---

केवलमित्यद्वितीयत्वमुच्यते । ज्ञानमुक्त्वा तत्फलमाह—सोऽविद्येति । यत्तु देवादीनां महावीर्यत्वाद्ब्रह्मविद्यया मुक्तिः सिध्यति नास्मदादीनामल्पवीर्यत्वादिति तत्राऽऽह—न हीति ।

श्रेयांसि बहुविघ्नानीति प्रसिद्धिमाश्रित्य शङ्कते—वार्तमानिकेष्विति । शङ्कोत्तरत्वेनोत्तरवाक्यमादाय व्याकरोति—अत आहेत्यादिना । यथोक्तेनान्वयादिना प्रकारेण ब्रह्मविज्ञातुरिति सबन्ध । अपिशब्दार्थं कथयति—किमुतेति । अल्पवीर्यास्तत्र विघ्नकरणे पर्याप्ता नेति किमुत वाच्यमिति योजना ।

अप्राप्तप्रतिषेधायोगमभिप्रेत्य चोदयति—ब्रह्मविद्येति । शङ्कानिमित्तं दर्शयन्नुत्तरमाह— उच्यत इति । अधमर्णानिवोत्तमर्णा देवादयो मर्त्यान्प्रति विघ्नं कुर्वन्तीति शेष । कथं देवादीन्प्रति मर्त्यानामृणित्वं तत्राऽऽह—ब्रह्मचर्येणेति । यथा पशुरेव स देवानामिति मनुष्याणां पशुसादृश्यश्रवणाच्च तेषां पारतन्त्र्याद्देवादयस्तान्प्रति विघ्नं कुर्वन्तीत्याह—पश्विति । 'अथो अयं वा "आत्मा सर्वेषां भूतानां "लोक' इति च तेषां सर्वप्राणिभोग्यत्वश्रुतेश्च सर्वे तद्विघ्नकरा भवन्तीत्याह—

---

अध्यारोपित कर्तृत्वादि विशेषों का बाधकर संसारी धर्मों की गन्ध से रहित अन्तरबाह्यशून्य मैं शुद्धब्रह्म ही हूँ—ऐसा अनुभव करता है, वह अविद्याकृत असर्वत्व की निवृत्ति होने से ब्रह्मविद्या के द्वारा सर्वरूप हो जाता है । महामहिम वामदेवादि अथवा अल्पमहिम कलियुगी मनुष्यों में (सर्वत्र एकरूपता से प्रविष्ट) ब्रह्म अथवा उसके विज्ञान का कोई अन्तर नहीं है ।

कलियुगवासी मनुष्यों में तो ब्रह्मविद्या-उत्पत्ति में भी उसके फल में व्यभिचार की शङ्का होती है, इस पर श्रुति कहती है । निश्चय ही उस ब्रह्मविज्ञानी को 'अभूत्या' अर्थात् सर्वभाव न होने देने का सामर्थ्य, उक्त प्रकार के महामहिम देवता भी 'नेशते' अर्थात् नहीं रखते, फिर दूसरों की तो बात ही क्या है ।

ब्रह्मविद्या के फल की प्राप्ति में विघ्न करने में देवता आदि अपने महत्त्व का उपयोग करते हैं ।

---

१ ब्रह्मण इति—ब्रह्मणः सर्वत्रैकरूप्येणैव प्रविष्टत्वादिति । २ विद्योत्पत्तावपि । ३ तत्फले व्यभिचार इत्यर्थ । ४ अवधारणे । ५ चनत्यप्यर्थकमव्ययम् । ६ का शङ्केति । विद्याफलप्राप्तौ देवता विघ्नं कुर्वन्तीत्ययुक्ता शङ्का कारणाभावादतोऽप्राप्तप्रतिषेध श्रुत्या क्रियत इत्यर्थं । ७ ब्रह्मचर्यपूर्वकवेदाध्ययनेनेत्यर्थं । ८ ऋषिभ्य इति—अनृणो भवतीति शेष । ९ श्रुतिरिति—'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायत इति श्रुतेश्च मनुष्या देवादीन्प्रति ऋणिनो गम्यन्त इति । १० विद्याफलप्राप्तौ । ११ जीव । १२ भोग्य ।

वा इत्यादिलोकश्रुतेश्चाऽऽत्मनो 'वृत्तिपरिपिपालयिषयाऽधमर्णानिव' देवाः परतन्त्रान्मनुष्यान्प्रत्यमृतत्वप्राप्तिं प्रति, विघ्नं कुर्युरिति न्याय्यैवैषा शङ्का ।

'स्वपशूस्वशरीराणीव च रक्षन्ति देवाः । महत्तरां हि वृत्तिं कर्माधीनां दर्शयिष्यति देवादीनां बहुपशुसमतयैकैकस्य पुरुषस्य । "तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विदुः" इति हि वक्ष्यति । "यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवं हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति" इति च । ब्रह्मवित्त्वे 'पारार्थ्यनिवृत्तेर्न 'स्वलोकत्वं पशुत्वं चेत्यभिप्रायोऽप्रियारिष्टिवचनाभ्यामवगम्यते । 'तस्माद्ब्रह्मविदो ब्रह्मविद्याफलप्राप्तिं प्रति

प्रयो इति । लोकश्रुत्यभिप्रेतमर्थं प्रकटयति—आत्मन इति । यथाऽधमर्णान्प्रत्युत्तमर्णा विघ्नमाचरन्ति तथा देवादयः स्वस्थितिपरिरक्षणार्थं परतन्त्रान्कर्मिणः प्रत्यमृतत्वप्राप्तिमुद्दिश्य विघ्नं कुर्वन्तीति तेषां तान्प्रति विघ्नकर्तृत्वशङ्का सावकाशैवेत्यर्थः ।

पशुनिदर्शनेन विवक्षितमर्थं विवृणोति—स्वपशूनिति । पशुस्थानीयानां मनुष्याणां देवादिभी रक्ष्यत्वे हेतुमाह—महत्तरामिति । इतश्च देवादीनां मनुष्यान्प्रति विघ्नकर्तृत्वममृतत्वप्राप्तौ संभावितमित्याह—तस्मादिति । इतश्च तेषां तान्प्रति विघ्नकर्तृत्वं भातीत्याह—यथेति । स्वलोको देहः । एवंवित्त्वं सर्वभूतभोज्योऽहमिति कल्पनावत्त्वम् । क्रियापदानुषङ्गार्थश्चकारः । ब्रह्मवित्त्वेऽपि मनुष्याणां देवादिपारतन्त्र्याविघातात्किमिति ते विघ्नमाचरन्तीत्याशङ्क्याऽऽह—ब्रह्मवित्त्व इति । देवादीनां मनुष्यान्प्रति विघ्नकर्तृत्वे शङ्कामुपपादितामुपसंहरति—तस्मादिति ।

(कारणाभाव से) यह शङ्का क्यों होती है ? इस पर कहते हैं, क्योंकि संसारी जीव देवतादिकों के ऋणी होते हैं । जैसा कि "ब्रह्मचर्यपूर्वक वेदाध्ययन से ऋषिऋण से मुक्त हो जाते हैं, यज्ञ सम्पादन से देवऋण की मुक्ति होती है सन्तानोत्पत्ति से पितृऋण का शोधन होता है" यह श्रुति जन्म-समकाल में ही पुरुष को ऋणी प्रदर्शित करती है । तथा "यह जो कर्माधिकारी अज्ञानी गृहस्थरूप आत्मा है (वह समस्त जीवों का गम्य है)" इस श्रुति से मनुष्य को पशुरूप से निदर्शन किया है । जिस प्रकार ऋण देने वाला ऋण लेने वाले को कष्ट देता है, उसी प्रकार देवता भी अपनी स्थितिस्थापना के लिए परतन्त्र मनुष्यों के प्रति अमृतत्वप्राप्ति में विघ्न करें—यह शङ्का करना उचित ही है ।

देवता इन पशुस्थानीय मनुष्यों की अपने शरीर की भांति रक्षा करते हैं । एक-एक पुरुष की अनेकों पशुओं से तुलना करके श्रुति उसे देवताओं की महत्तर कर्माधीन स्थिति प्रदर्शित करेगी और "अतः यह देवताओं को सर्वथा प्रिय नहीं है कि मनुष्य ब्रह्मस्वरूप आत्मतत्त्व को जानें' यह और "जैसे लोक में सभी अपने शरीर का नाश नहीं चाहते हैं, वैसे ही ऐसा जानने वाले को सभी जीव अविनाशीरूप से देखना चाहते हैं" यह श्रुतिवाक्य आगे कहेंगे । किन्तु ब्रह्मज्ञान हो जाने पर परतन्त्रतानिवृत्ति होने से स्वनिष्ठ भूतभोग्यत्व और पशुत्व नहीं रहते, यह तात्पर्य उपरोक्त अप्रिय और अविनाशी-

१ वृत्तिः स्थितिः । जीविका इति यावत् । २ उत्तमर्णाः । ३ पशुस्थानीयान् मनुष्यान् । ४. यथा ह वा इति । स्वाय लोकाय—स्वीयदेहाय । अरिष्टिम्—अविनाशम् । एवंविदे—सर्वभूतभोग्योऽहमिति निश्चयवते इत्यर्थः । ५ पारार्थ्येति—पारतन्त्र्येत्यर्थः । पारतन्त्र्यस्याज्ञानकृतत्वात् ज्ञानादज्ञाननिवृत्तौ तन्निवृत्तेरित्यभिप्रायः । ६. स्वनिष्ठं भूतभोग्यत्वम् । ७ उक्तहेतुजातात् । ८. वक्ष्यतीति क्रियापदेऽर्थः ।

कुर्युरेव विघ्नं देवाः । प्रभाववन्तश्च हि ते ।

नन्वेवं सत्यन्यास्वपि कर्मफलप्राप्तिषु देवानां विघ्नकरणं पेयपानसमम् । हन्त तर्ह्यविस्रम्भोऽभ्युदयनिःश्रेयससाधनानुष्ठानेषु । तथेश्वरस्याचिन्त्यशक्तित्वाद्विघ्नकरणे प्रभुत्वम् । तथा कालकर्ममन्त्रौषधितपसामेषां हि फलसंपत्तिविपत्तिहेतुत्वं शास्त्रे लोके च प्रसिद्धम् । अतोऽप्यनाश्वासः शास्त्रार्थानुष्ठाने ।

---

न केवलमुक्तहेतुबलादेव किं तु सामर्थ्याच्चेत्याह—'प्रभाववन्तश्चेति ।

सामर्थ्याच्चेद्विद्याफलप्राप्तौ तेषां विघ्नकरणं तर्हि कर्मफलप्राप्तावपि स्यादित्यतिप्रसङ्गं शङ्कते—नन्विति । भवतु तेषां सर्वत्र विघ्नाचरणमित्यत आह—हन्तेति । अविस्रम्भो विश्वासाभावः । सामर्थ्याद्विघ्नकर्तृत्वेऽतिप्रसक्त्यन्तरमाह—तथेति । अतिप्रसङ्गान्तरमाह—तथा कालेति । विघ्नकरणे प्रभुत्वमिति पूर्वेण संबन्धः । ईश्वरादीनां यथोक्तकार्यकरत्वे प्रमाणमाह—एषा हीति । 'एष ह्येव साधु कर्म कारयति । 'कर्म हैव "तद्वूचतुरित्यादिवाक्यं शास्त्रशब्दार्थः । देवादीनां विघ्नकर्तृत्ववदीश्वरादीनामपि तत्संभवाद्वेदार्थानुष्ठाने विश्वासाभावा"त्तदप्रामाण्यं प्राप्तमिति फलितमाह—अतोऽपीति ।

---

निरूपक श्रुतिवाक्यों से ज्ञात होता है। इसी कारण से देवता ब्रह्मज्ञानी को ब्रह्मविद्या-फलप्राप्ति में विघ्न करेंगे ही, क्योंकि वे महिमा से युक्त हैं।

(पूर्वपक्षी शङ्का करता है—) तो फिर विद्याफल से भिन्न कर्मफल प्राप्ति में विघ्न करना भी देवताओं के लिए जलपान करने की भाँति आसान है। तब तो अभ्युदय और निःश्रेयसप्राप्ति के साधनों में अविश्वास होने लग जायगा। इससे तो देवताओं के समान अनन्तशक्तिसम्पन्न परमेश्वर भी विघ्न करने में समर्थ हो जायँगे। इसी प्रकार शास्त्र एवं लोकव्यवहार में काल, कर्म, मन्त्र, औषधि और तप की भी फल-प्राप्ति या अप्राप्ति में हेतुता प्रसिद्ध ही है। इसलिए भी शास्त्रोक्त ज्ञान, कर्म और उपासना के अनुष्ठान में अविश्वास ही रहेगा।

---

१ विद्याफलाप्तिप्रासु । २ पयस्य जलादे पानसमं सुकरमिति यावत् । ३. हन्तेत्यनुमतौ भवत्वित्यर्थः । ४ देवादिवत् । ५ कालकर्मेत्यादि । कालेति—प्रयागस्नानाद्येकस्मिन्कर्मणि सत्रान्त्यादिकालकृतफलवैचित्र्यम् । कर्मेति—एकरात्र्युत्पन्नानां कालसाम्येऽपि कर्मवैचित्र्यात्फलवैचित्र्यम् । मन्त्रेति—इन्द्रशत्रुर्वर्धस्वेति मन्त्रस्य यजमानहिंसकत्वं स्वरदोषात् । तथाहि—इन्द्रस्याभिचारं त्वष्ट्रा (ऋत्विग्विशेषेण) आरब्धं तत्रेन्द्रशत्रुर्वर्धस्वेति । मन्त्र ऊहितः तत्र इन्द्रस्य शातयिता शमयिता भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितः न तु रूढिशब्दः तदाश्रयणे बहुव्रीहितत्पुरुषयोरर्थभेदः तत्रेन्द्रामित्रत्वे सिद्धेऽपि इन्द्रस्यशत्रुर्भवेत्यत्रार्थे प्रतिपाद्येऽन्तोदात्तत्वे प्रयोक्तव्य आद्युदात्तः । ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता सम्पन्नः । तदुक्तं "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" इन्द्रशत्रुरिति—इन्द्रशत्रुशब्द इत्यर्थः ॥ औषधीति—यथा गुरोराज्ञयार्कपत्रभक्षणेनान्धीभूताय कस्मैचिच्छिष्याय अश्विभ्यां तद्रसायनभूतमपूपं दत्तं राहोर्वाऽमृतपानाच्छिदितस्यापफलस्य मरणस्य निरोधः । तपसामिति—यथा योगादीनां तपसा च शतजीवनश्रुत्युक्तायुरादिविपर्ययजनकत्वमित्यादि द्रष्टव्यम् । ६ ज्ञानकर्मोपासनानुष्ठाने । ७ ते हि अकारणमपि तथा कुर्वन्ति । ८. कौषी० उ० ३-१० । ९ बृ० उ० ३-२-१३ । १०. याज्ञवल्क्यार्तभागौ । ११ अननुष्ठानरूपमप्रामाण्यम् ।

... न, सर्वपदार्थानां नियतनिमित्तोपादानाज्जगद्वैचित्र्यदर्शनाच्च । स्वभावपक्षे च तदुभयानुपपत्तेः । सुखदुःखादिफलनिमित्तं कर्मेत्येतस्मिन्पक्षे स्थिते वेदस्मृतिन्यायलोकपरिगृहीते देवेश्वरकालास्तावन्न कर्मफलविपर्यासकर्तारः । कर्मणा काङ्क्षितकारकत्वात् । कर्म हि शुभाशुभं पुरुषाणां देवकालेश्वरादिकारकमनपेक्ष्य नाऽऽत्मानं प्रति लभते । लब्धात्मकमपि फलदानेऽसमर्थम् । क्रियाया हि कारकाद्यनेकनिमित्तोपादानस्वाभाव्यात् । तस्मात्क्रियानुगुणा हि देवेश्वरादय इति कर्मसु तावन्न फलप्राप्ति प्रत्यविस्रम्भः ।

किमिदमवैदिकस्य चोद्यं किं वा वैदिकस्येति विकल्प्याऽऽद्यं दूषयति—नेत्यादिना । दृष्टाद्युपि-
पादयिषया दुग्धाद्युपादानदर्शनात्प्राणिनां सुखदुःखादितारतम्यदृष्टेः स्वभाववादे च नियतनिमित्तादान-
वैचित्र्यदर्शनयोरनुपपत्तेस्तदयोगात्कर्मफलं जगद्वैचित्र्यमित्यर्थः । द्वितीयं प्रत्याह—सुखेति । 'कर्म हैव'
इत्याद्या श्रुतिः । 'कर्मणा बध्यते जन्तुः' इत्याद्या स्मृतिः । जगद्वैचित्र्यानुपपत्तिश्च न्यायः । "कथ-
मेतावता देवादीनां कर्मफले विघ्नकर्तृत्वाभावस्तत्राऽऽह—कर्मणेति । कथं हेतुसिद्धिरित्याशङ्क्य कर्मणः
स्वोत्पत्तौ देवाद्यपेक्षां व्यतिरेकमुखेन(ण) दर्शयति—कर्म हीति । स्वफलेऽपि तस्य तत्सापेक्षत्वमस्तो-
त्याह—लब्धेति । निष्पन्नमपि कर्म पूर्वोक्तं कारकमनपेक्ष्य स्वफलदाने शक्तं न भवतीत्यर्थः । कर्मणः
स्वोत्पत्तौ स्वफले च कारकसापेक्षत्वे हेतुमाह—क्रियाया हीति । कारकादीनामनेकेषां निमित्तानामुपा-
दानेन स्वभावो निष्पद्यते यस्याः सा तथोक्ता तस्या भावः कारकाद्यनेकनिमित्तोपादानस्वाभाव्यं
तस्मादुभयत्र परतन्त्रं कर्मेत्यर्थः । देवादीनां कर्मापेक्षितकारकत्वे फलितमाह—तस्मादिति ।

(सिद्धान्ती उक्त शङ्का का क्रमश खण्डन करता है—) ऐसा कहना ठीक नही, क्योंकि सभी पदार्थों के निश्चितनिमित्तों का उपादान किया जाता है, तथा ससार मे सुखदु खादि-वैचित्र्य देखा जाता है। स्वभाववाद स्वीकार करने पर ये दोनो बाते सभव नही होगी। "कर्म सुखदु खादिफल का कारण है"—वेद, स्मृति, युक्ति और लोकव्यवहार से गृहीत इस पक्ष के निश्चय होन पर यह सिद्ध होता है कि देव, ईश्वर और काल तो कर्मफल का विपर्यास नही कर सकते, क्योंकि देवता कर्मानुष्ठान के लिए अपेक्षित शरीरादि के सम्पादक हैं। मनुष्यो का शुभाशुभ कर्म, देव, काल और ईश्वरादि कारको की, बिना अपेक्षा किए अपने आप निष्पन्न नही हो सकता। यदि निष्पन्न हो भी जाए तो वह फलसम्पादन मे असमर्थ होगा। क्योंकि क्रिया का स्वभाव है कि वह कारकादि अनेक निमित्तो का उपादान नही करती। इसलिए (देवता आदि विघ्नकारक न होने के कारण) देवता और ईश्वरादि कर्म के गुण का अनुसरण करने वाले हो हैं; अत. कर्म मे फलप्राप्ति के प्रति अविश्वास नही होता।

१. युक्तिरित्यर्थ. । २. लोकेति । उक्त च कामसूत्रे—"पुरुषकारपूर्वकत्वात्सर्वप्रवृत्तीनामवश्यभाविनाऽप्यर्थस्योपायपूर्वकत्वादेव न निष्कर्मिणा भद्रमस्तीति ।" ३. प्रमिवे । ४. कर्मणा काङ्क्षितेति—देवानां कर्मापेक्षितशरीरादिसंपादकत्वादित्यर्थ. । कर्मणैव स्वसिद्धयर्थं तेषा क्रोडीकृतत्वादिति यावत् । ५. कर्मस्वरूपसिद्धिहेतुत्वेन तत्फलप्राप्तावनुकूलत्वेन च देवादीना विघ्नकरत्वाभावात् । ६. स्वभावादेव सर्वं जायत इति स्वभाववादिन. । ७. स्वभाववादस्यायुक्तत्वात् । ८. तदूचतु । ९. "पुण्यो वै पुण्येन कर्मणेति" । १०. जन्तुरिति—"विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतय. पारदर्शिन" इति स्मृतिशेष ॥ ११. जगत: कर्मफलत्वस्वीकारमात्रेण । १२. स्वीकारेण । १३. स्वरूपम् । १४. स्वोत्पत्तौ स्वफलदाने च ।

कर्मणामप्येषां 'वशानुगत्वं क्वचि'त्स्वसामर्थ्यस्याप्रणोद्यत्वात् । कर्मकालदैवद्र-व्यादि'स्वभावानां' गुणप्रधानभावस्त्वनियतो दुर्विज्ञेयश्चेति तत्कृतो मोहो लोकस्य । कर्मैव कारकं नान्यत्फलप्राप्ताविति-'केचित् । दैवमेवे'त्यपरे । काल इत्येके' । द्रव्यादि-स्वभाव इति 'केचित् । सर्व एते'संहता एवेत्यपरे' । "तत्र कर्मणः प्राधान्यमङ्गीकृत्य वेदस्मृतिवादाः" "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इत्यादयः । यद्यप्येषां स्वविषये कस्यचित्प्राधान्योद्भव इतरेषां तत्कालीनप्राधान्यशक्तिस्तम्भस्तथाऽपि न कर्मणः

---

"इतोऽपि कर्मफले नाविस्रम्भोऽस्तीत्याह—कर्मणामिति । एषां देवादीनां क्वचिद्विघ्नलक्षणे कार्ये कर्मणां वशवर्तित्वमेष्टव्यं प्राणिकर्मापेक्षामन्तरेण विघ्नकरणेऽतिप्रसङ्गादतोऽन्यत्रापि "सर्वत्र तेषां तदपेक्षा वाच्येत्यर्थः । तत्र तेषां कर्मवशवर्तित्वे हेत्वन्तरमाह—स्वसामर्थ्यस्येति । विघ्नलक्षणं हि कार्यं दुःखमुत्पादयति । न च दुःखमृते पापादुपपद्यते । दुःखविषये पापसामर्थ्यस्य शास्त्राधिगतस्या-"प्रत्याख्येयत्वात्तस्मात्प्राणिनामदृष्टवशादेव देवादयो विघ्नकारणमित्यर्थः । देवादीनां कर्मपारतन्त्र्ये कर्म तत्परतन्त्रं न स्यात्प्रधानगुणभाववैपरीत्यायोगादित्याशङ्क्याऽऽह—कर्मेति । 'इतश्च नामीषां नियतो गुणप्रधानभावोऽस्तीत्याह—दुर्विज्ञेयश्चेति । इतिशब्दो हेत्वर्थः । यतो गुणप्रधानकृतो" मति-विभ्रमो लोकस्योपलभ्यते तस्मादसौ दुर्विज्ञेयो न नियतोऽस्तीति योजना । मतिविभ्रमे वादिविप्रति-पत्तिं हेतुमाह—कर्मैवेत्यादिना । कथं "तर्हि निश्चयस्तत्राऽऽह—तत्रेति । वेदवादानुदाहरति—पुण्यो वा इति । आदिपदेन 'धर्मरज्ज्वा व्रजेदूर्ध्वम्' "इत्यादयः स्मृतिवादा गृह्यन्ते । सूर्योदयवाह्सेचनादौ "काल-ज्वलनसलिलादेः प्राधान्यप्रसिद्धेर्न कर्मैव प्रधानमित्याशङ्क्याऽऽह—यद्यपीति । अनैकान्तिकत्वम-

---

इसके अतिरिक्त कभी कभी कर्म की वस्तुगत शक्ति दुर्वार होने के कारण इन देवता आदि का विघ्न करना कर्मों के अधीन है (एक दूसरे की अपेक्षा स्वतन्त्र न होने से विघ्नकर नही हैं—यह आशय है)। कर्म, काल, दैव और द्रव्यादि स्वरूपो का गौण और मुख्यभाव अनियत और दुर्विज्ञेय है; इसी से सासारिक लोकव्यवहार मे उनके कारण मोह हो जाता है। किन्ही (मीमासको) के मत में फलप्राप्ति मे कर्म ही कारक है, अन्य कोई नही। दूसरे (देवताकाण्डीय उपासक) दैव को ही हेतु मानते है। कुछ (ज्योतिर्विद) काल को हेतु मानते हैं। कुछ (चार्वाक-एकदेशी स्वभाववादी) द्रव्यादिस्वभाव को ही हेतु मानते है। अन्य (वेदान्ती) मानते है कि उपरोक्त सब मिलकर कर्मफलप्राप्ति के हेतु है। कर्मफलप्राप्ति मे कर्म की प्रधानता स्वीकृत करके ही "पुरुष पुण्यकर्म से धर्मात्मा होता है और पाप कर्म से पापात्मा होता है" इत्यादि वेद एव स्मृतिवाक्य प्रवृत्त होते हैं। यद्यपि अपने अपने विषय मे

---

१ एवमन्योन्यापेक्षतयाऽस्वातन्त्र्यान्नविघ्नकरत्वमिति भाव । २ वस्तुगतशक्तेर्दुर्वारत्वात् । ३. स्वरूपाणाम् । ४. पदार्थानाम् । ५ मीमांसकाः । ६ अपर इति—"दैवमेव पर मन्ये पौरुष तु निरर्थकमिति" देवताकाण्डीया उपासका इत्यर्थ । ७ ज्योतिर्विद । ८. चार्वाकैकदेशिस्वभाववादिन. । ९. वेदान्तिन । १०. कर्मफलप्राप्तौ । ११. प्रवृत्ता. । १२ यथा कर्म देवाद्यपेक्षमेवं तदपि कर्मापेक्षमतो न तत्फले तस्य विघ्नकर्तृत्वमिति हेत्वन्तरात् । १३. वरदानादौ । १४. अपरिहार्यत्वात् । १५. विषयक. । १६. तदनियतत्वे । १७ 'पापरज्ज्वा व्रजेदध." । इत्युत्तरार्धम् ॥ १८ प्रात.कालेति यावत् ।

फलप्राप्ति प्रत्यनैकान्तिकत्वम् । शास्त्रन्यायनिर्धारितत्वात्कर्मप्राधान्यस्य ।

न, अविद्यापगममात्रत्वाद्ब्रह्मप्राप्तिफलस्य । यदुक्तं ब्रह्मप्राप्तिफलं प्रति देवा विघ्नं कुर्युरिति तत्र न देवानां विघ्नकरणे सामर्थ्यम् । कस्मात् । विद्याकालानन्तरितत्वाद्ब्रह्मप्राप्तिफलस्य । कथम् । यथा लोके द्रष्टुश्चक्षुष आलोकेन संयोगो यत्कालस्तत्काल एव रूपाभिव्यक्तिः । एवमात्मविषयं विज्ञानं यत्कालं तत्काल एव तद्विषयाज्ञानतिरोभावः स्यात् अतो ब्रह्मविद्यायां सत्यामविद्याकार्यानुपपत्तेः प्रदीप इव तमः कार्यस्य । तत्केन

प्रधानत्वम् । तत्र हेतुमाह—शास्त्रेति । श्रुतिस्मृतिलक्षणं शास्त्रमुदाहृतम् । जगद्वैचित्र्यानुपपत्तिर्न्यायः ।
कर्मफले देवादीनां विघ्नकर्तृत्वं प्रसङ्गागतं निराकृत्य विद्याफले तेषां तदाशङ्कितं निराकरोति —नाविद्येति । तत्र नञर्थमुक्तानुवादपूर्वकं विशदयति—यदुक्तमिति । तत्र प्रश्नपूर्वकं पूर्वोक्तं हेतुं स्फुटयति—कस्मादिति । आत्मनो ब्रह्मस्वप्राप्तिरूपाया मुक्तेरज्ञानध्वस्तिमात्रत्वात्तस्याश्च ज्ञानेन तुल्यकालत्वात्तस्मिन्सति तस्य फलस्याऽऽवश्यकत्वाद्देवादीनां विघ्नाचरणे नावकाशोऽस्तीत्यर्थः । उक्तमेवार्थमाकाङ्क्षापूर्वकं दृष्टान्तेन समर्थयते—कथमित्यादिना । ब्रह्मविद्यास्फलयोः समानकालत्वे फलित-

इनमें से किसी-किसी की प्रधानता का उदय होता है। और उस समय होने वाली अन्य कारकों की प्राधान्यशक्ति का अवरोध हो जाता है, तथापि फलप्राप्ति में कर्म का व्यभिचारित्व नहीं है, क्योंकि शास्त्र और न्याय से कर्म की प्रधानता सिद्ध है।

ब्रह्मविद्या के फल में देवता विघ्नकर्ता नहीं है, क्योंकि ब्रह्मप्राप्ति का फल केवल अविद्या की निवृत्ति ही है। पूर्वग्रन्थ से जो यह कहा कि ब्रह्मप्राप्तिरूप फल में देवगण विघ्न करेंगे, वह उसमें विघ्न करने की देवताओं में सामर्थ्य नहीं है। क्यों नहीं है? क्योंकि ब्रह्मप्राप्तिरूपफल तो ज्ञान होते ही हो जाता है। किस प्रकार? जिस प्रकार लोकव्यवहार में द्रष्टा के नेत्रों का प्रकाश के साथ जिस समय संयोग होता है, उसी समय रूप की अभिव्यक्ति होती है। इसी प्रकार जिस समय आत्मविषयक ज्ञान होता है, उसी समय तद्विषयक अज्ञान की निवृत्ति हो जाती है। इसलिये (विद्या और फल के समकाल में होने से) जैसे दीप की उपस्थिति में अन्धकार का कार्य नहीं रहता, उसी प्रकार ब्रह्मविद्या की अवस्था में अविद्या एवं उसका कार्य रहना असम्भव है। इसलिए देवता किस कारण से किसे विघ्न

१ व्यभिचारित्वम् । २ कर्मणः फलसप्राप्तिरप्राप्तिश्चेह दृश्यते । साद्गुण्यविगुणत्वाभ्यां सा स्यात्कर्मण एव तु ॥१४६१॥ इति वार्तिके । क्वचित्कारीर्यादिफलव्यभिचारदाशङ्कापनोदनम् । ३ विद्याफलयोस्समकालत्वात् । ४ तत् । ५ तत्केनेति । तत्—तस्मात् अविद्यातत्कार्याभावात् । केन हेतुना । किंच विदुषो विद्याफलप्राप्तौ विघ्नकरणे देवादीनां शक्तिरेव नास्ति । तदुक्तं वार्तिके—"देवादैश्वर्यविषयव्यतिक्रान्तत्वहेतुतः । ईशोशितव्यसबन्धः प्रत्यगज्ञानहेतुजः । सम्यग्ज्ञानात्तमोध्वस्तावीश्वराणामपीश्वरः ॥१४६४-१४६५॥ इति । विद्या नान्तरीयकत्वेनाभिनिवेश—(अहमस्मि जीव ईशापामव कैवल्याभूत्या उद्युक्ता ईश्वरा अपि नशत ॥) हेतुतमोध्वस्तौ देवाद्यैश्वर्यविषयमतिक्रम्य स्थितत्वाद्विदुषो विरोधाभावाच्च न विघ्नकर्तारि इत्याद्याप्रह—) इति भावः । देवादीनामीश्वरत्वनाधिरयोक्त तदेतद्विद्वद्विषयं नास्तीत्याह—ईशेति । न चैतावता तदैश्वर्यं विरुध्यते तस्याऽन्यत्र सावकाशत्वस्य वक्ष्यमाणत्वादिति भावः ॥ ६ फलप्राप्तौ कर्मप्राधान्ये । ७ तदपहृत्यवाक्यस्थपदसमुदायमध्ये । ८ विद्यासमकालाज्ञानध्वस्तिरिति ।

कस्य विघ्नं कुर्युर्देवाः। यत्राऽऽत्मत्वमेव देवानां ब्रह्मविदः।

तदेतदाह—आत्मा स्वरूपं ध्येयं यत्तत्सर्वशास्त्रैर्विज्ञेयं ब्रह्म हि यस्मादेषां देवानां स ब्रह्मविद्भवति। ब्रह्मविद्यासमकालमेवाविद्यामात्रव्यवधानापगमाच्छुक्तिकाया इव रजतामासायाः शुक्तिकात्वमित्यवोचाम। अतो नाऽऽत्मनः प्रतिकूलत्वे देवानां प्रयत्नः संभवति। यस्य ह्यनात्मभूतं फलं देशकालनिमित्तान्तरितं तत्रानात्मविषये सफलः प्रयत्नो विघ्नाचरणाय देवादीनाम्। न त्विह विद्यासमकाल आत्मभूते देशकालनिमित्तानन्तरितेऽवसरानुपपत्तेः।

माह—अत इति। देवादीनां ब्रह्मविद्याफले विघ्नकर्तृत्वाभावे हेत्वन्तरमाह—यत्रेति। यस्यां विद्यायां सत्यां ब्रह्मविदो देवादीनामात्मत्वमेव तस्यां सत्यां कथं ते तस्य विघ्नमाचरेयुः स्वविषये तेषां प्रातिकूल्याचरणानुपपत्तेरित्यर्थः।

उक्तेऽर्थे समनन्तरवाक्यमुत्थाप्य व्याचष्टे—तदेतदाहेति। कथं ब्रह्मविद्यासमकालमेव ब्रह्मविद् देवादीनामात्मा भवति तत्राऽऽह—अविद्यामात्रेति। यथेदं रजतमिति रजताकारायाः शुक्तिकायाः शुक्तिकात्वमविद्यामात्रव्यवहितं तथा ब्रह्मविदोऽपि सर्वात्मत्वे तन्मात्रव्यवधानात्तस्याश्च विद्योदये नान्तरीयकत्वेन निवृत्तेर्युक्तं विद्यातत्फलयोः समानकालत्वम्। उक्तं चैतत्प्रतिवचनदशायामित्यर्थः। उक्तस्य हेतोरपेक्षितं वदन्ब्रह्मविदो देवाद्यात्मत्वे फलितमाह—अत इति। कैवल्ये तेषां विघ्नकर्तृत्वे कुत्र तत्कर्तृतेत्याशङ्क्याऽऽह—यस्य हीति। तेषां निरङ्कुशप्रसरत्वं वारयति—न त्विति। सफलः प्रयत्न इति पूर्वेण संबन्धः। तस्य निरवकाशत्वादिति हेतुमाह—अवसरेति।

करेंगे जबकि ब्रह्मज्ञानी देवताओं के आत्मत्व को ही प्राप्त हो जाता है?

इसी को ही श्रुति प्रतिपादित करती है—क्योंकि वह ब्रह्मज्ञानी (उपासक द्वारा) ध्येय अर्थात् जो वह समस्त शास्त्रों के द्वारा विज्ञेय ब्रह्म है; वही देवताओं की आत्मा हो जाता है। क्योंकि रजतरूप भासने वाली शुक्ति के शुक्तिकात्व का ज्ञान होने के समय ही जैसे भ्रमजनित रजतत्वबुद्धि की निवृत्ति हो जाती है, उसी प्रकार ब्रह्मज्ञान होने के समय ही अविद्यामात्रव्यवधान की निवृत्ति हो जाती है—ऐसा हम पहले ही कह आये हैं। इसलिए (विद्वानों के देवात्मरूप होने से) आत्मा की प्रतिकूलता के लिए देवताओं का प्रयत्न संभव नहीं है। जिस साधन के देश, काल और निमित्त से अन्तरित अनात्मभूतफल होता है, उस अनात्मरूप फलप्राप्ति में विघ्न करने के लिए देवताओं का प्रयत्न सफल हो सकता है। यहाँ (विद्याफल में) देश, काल और निमित्त से अव्यवहित और विद्योत्पत्ति काल में ही

१. उपासकं। २. विद्वान्। ३. विदुषो देवाद्यात्मत्वात्। ४ साधनस्य। ५ कर्मादिस्वफलयोभिन्नदेशकालत्वात्। ६. अनात्मरूपफलप्राप्तावित्यर्थः। ७ विद्याफले कैवल्य। ८. विद्याया विदुषः सर्वात्मत्वरूपेऽर्थे। ९ इदमेव रजतरूपेण प्रतीयमानायाः। १०. समानकालीनत्वेन। ११. उक्तं चैतत्प्रतिवचनदशायामित्यर्थ इति—आत्मनः स्वरूपतया नित्यलब्धत्वाच्च तत्रालब्धत्वबुद्धिः स्यादिति चोद्यसमाधानावसरे एतदुक्तम् २४१मितपृष्ठस्थ"नित्यलब्धस्वरूपत्वेऽपीत्यादि"भाष्येणेत्यर्थः। प्रतिवचनदशायामित्यनेनैतस्या भाष्योक्तेः सिद्धान्तरूपत्वं सूचितं पूर्वपक्षरूपमपि हि भवति भाष्यमिति। १२ उक्तस्य हेतोरिति—विद्याफले देवादीनां विघ्नकर्तृत्वाभावे उक्तस्य विदुषो देवाद्यात्मस्वरूपहेतोरित्यर्थः। १३. देवादीनाम्। १४ प्रयत्नस्य।

एवं तर्हि [1]विद्याप्रत्ययसंतत्यभावाद्विपरीतप्रत्ययतत्कार्ययोश्च दर्शनादन्त्य[2] एवाऽऽत्मप्रत्ययोऽविद्यानिवर्तको न तु पूर्व इति । [3]न प्रथमेनानैकान्तिकत्वात् । यदि हि प्रथम आत्मविषयः प्रत्ययोऽविद्यां न निवर्तयति [4]तथाऽन्त्योऽपि तुल्यविषयत्वात् ।

[5]एवं तर्हि संततोऽविद्यानिवर्तको न विच्छिन्न इति । न । जीवनादौ सति संतत्यनुपपत्तेः । न हि जीवनादिहेतुके प्रत्यये सति विद्याप्रत्ययसंततिरुपपद्यते विरोधात् । अथ

---

ज्ञानस्यानन्तरफलत्वात्तत्फले देवादीनां न विघ्नकर्तृतेत्युक्तमुपेत्य [6]स्वयूथ्यः शङ्कते—एव तर्हीति । ज्ञानस्यानन्तरफलत्वे[7] न [8]तदज्ञानं निवर्तयेदज्ञानामिव तत्त्वज्ञानामपि ब्रह्मास्मीति ज्ञानसतत्यभावात् । [9]न चाऽऽद्यमेव ज्ञानमज्ञानध्वंसि प्रागिवोर्ध्वमपि रागादेस्तत्कार्यस्य च दृष्टत्वात् । [10]अतो देहपातकालीनं ज्ञानमज्ञानं निवर्तयतीति कुतो जीवन्मुक्तिरित्यर्थः । अन्त्यज्ञानस्याज्ञाननिवर्तकत्वं [11]तत्संततेर्वा प्रथमे तस्यान्त्यत्वादात्मविषयत्वाद्वा तदध्यवसितेति विकल्प्योभयत्र[12] [13]दृष्टान्ताभावं मत्वा द्वितीये [14]दोषान्तरमाह—न प्रथमेनेति । तदेवानुमानेन स्फोरयति—यदि हीति ।

[15]कल्पान्तरं शङ्कयति—एव तर्हीति । अविच्छिन्ना ज्ञानसंततिरज्ञानं निवर्तयतीत्येतद्दूषयति—नेत्यादिना । जीवनादिहेतुकः प्रत्ययो बुभुक्षितोऽहं भोक्ष्येऽहमित्यादिलक्षणः । तस्य [16]बुभुक्षाद्युपप्लुतस्य ब्रह्मास्मीत्यविच्छिन्नप्रत्ययसंततेश्च विरुद्धतया यौगपद्यायोगे हेतुमाह—विरोधादिति । प्रत्ययसंततिमुप-

---

देवताओं के आत्मत्व को प्राप्त हो जाने वाले ब्रह्मज्ञानी के प्रति (विघ्न करने में उनका प्रयत्न सफल) नहीं होता क्योंकि इसके लिए उन्हें अवसर मिलना ही असम्भव है ।

(वेदान्त्येकदेशी शङ्का करता है—) यदि ऐसी बात है तो विद्यावृत्ति के सजातीयप्रवाह का अभाव होने से तथा विपरीतवृत्ति और उसका कार्य देखा जाने से मरणकालीन आत्माकारवृत्ति ही अविद्या की निवृत्ति करने वाली हो सकती है, पूर्व की नहीं । (सिद्धान्ती समाधान देता है—) ऐसा कहना ठीक नहीं, क्योंकि प्रथम आत्मप्रत्यय की तरह मरणकालीनप्रत्यय भी व्यभिचारी हो सकता है । यदि आत्मविषयक प्रथमप्रत्यय अविद्या की निवृत्ति नहीं करता, तो अन्तिमप्रत्यय भी नहीं करेगा, क्योंकि दोनों का विषय समान है ।

उक्त रीति से चिराभ्यस्त प्रत्यय ही अविद्या का निवर्तक हो सकता है, विच्छिन्न नहीं । (इस का समाधान करते हैं—) ऐसा कहना ठीक नहीं । क्योंकि जीवनादि के रहते हुए आत्माकारवृत्ति का

---

१ सजातीयप्रवाहेत्यर्थः । २ मरणकालीनः । ३ प्रथमेनेति—आद्यज्ञानमादाय हेतोरनैकान्तिकत्वादित्यर्थः । अन्त्याया बुद्धेरविद्यानिवर्तकत्वमाद्यायास्तु नेति व्यवस्थायामात्मविषयत्वहेतोराद्यबुद्धावनैकान्तिकत्वेति यावत् । ४ तथान्त्योऽपीति—ता न निवर्तयतीति शेषः । तथाचायं प्रयोगः विमतोऽविद्याऽनिवर्तकः आत्मविषयत्वाद् आद्यप्रत्ययवदिति । ५ एवं तर्हीति—उक्तरीत्याऽन्त्यज्ञानस्याज्ञानानिवर्तकत्वेऽपीत्यर्थः । संततः चिराभ्यस्तः प्रत्ययः । ६ वेदान्त्येकदेशी । ७ अनन्तरफलकज्ञानम् । ८ तत् तन्निवर्तयतीत्युक्तवन्तं प्रति आद्यमन्त्यं वेति विकल्प्याऽन्त्यं स्वीकुर्वंस्तमाऽऽद्यं दूषयति—न चेति । ९ प्रवृत्त्यादेः । १० पारिशेष्यात् । ११ अन्त्यज्ञानप्रवाहस्य । १२ अन्त्यत्वात्मविषयत्वयोः । १३ दृष्टान्ताभावमिति—न चान्त्यज्ञानत्वहेतुकानुमाने रजतभ्रमवतो निधनकालीनं शुक्तिज्ञानमुदाहरणं तस्य संसारहेत्वज्ञानानिवर्तकत्वात् । न चैवं ब्रह्मज्ञानादज्ञाननिवृत्तौ दृष्टान्तासिद्धिः आगमात्तत्सिद्धौ क्वचित्तदुपन्यासस्य तु लोकदृष्ट्यनुसारित्वादिति द्रष्टव्यम् । १४ अज्ञानानिवर्तकत्वाख्यं दोषान्तरम् । १५ सन्ततिपक्षम् । १६ बुभुक्षादिगोचरस्य ।

जीवनादिप्रत्ययतिरस्करणेनैवाऽऽमरणान्ताद्विद्यासंततिरिति चेन्न । प्रत्यये यत्तासंतानानवधारणाच्छास्त्रार्थानवधारणदोषात् ।। इयतां प्रत्ययानां संततिरविद्यायां निवर्तिकेत्यनवधारणाच्छास्त्रार्थो नावध्रियेत । तच्चानिष्टम् ।

संततिमात्रत्वेऽवधारित एवेति चेत्, न, आद्यन्तयोरविशेषात् । प्रथमा विद्याप्रत्ययसंततिर्मरणकालान्ता वेति विशेषाभावादाद्यन्तयोः प्रत्यययोः पूर्वोक्तो दोषो

पावयप्राशङ्कते—प्रयेति । उक्तरीत्या प्रत्ययसंततिमुपेत्य दूषयति—नेत्यादिना । तमेव दोषं विशदयति—इयतामिति । शास्त्रार्थो ज्ञानसंततिरज्ञानं निवर्तयतीत्येवमात्मकः ।

आत्मेत्येवोपासीतेति श्रुतेरात्मज्ञानसंततिमात्रसद्भावे ततो विद्याद्वाराऽविद्याध्वस्तिरिति शास्त्रार्थनिश्चयसिद्धिरित्याह—संततीति । आत्मधीसंततेः सत्त्वेऽपि न साऽऽत्मविषयत्वाद्विद्याद्वाराऽविद्यां निवर्तयति । आद्य द्वित्रिक्षणस्यात्मधीसंततौ व्यभिचारादिति परिहरति—नाऽऽद्यन्तयोरिति । पूर्वस्मिन्प्रत्यये नाविद्यानिवर्तकत्वमन्त्ये तु तथेत्युक्ते तस्यान्त्यत्वात्तथात्वं चेद् दृष्टान्ताभावः । आत्मविषयत्वात्तथात्वे प्रथमप्रत्यये व्यभिचारः स्यादित्युक्तो दोषो । "आद्या संततिर्नाविद्याध्वंसिनी । अन्त्या तु तथेत्यङ्गीकारेऽपि विशेषाभावादन्त्यत्वात्तस्या निवर्तकत्वे दृष्टान्ताभावः । आत्मविषयत्वात्तद्भावे त्वनैकान्तिकत्वमित्येतावेव दोषौ स्यातामित्युक्तं" विवृणोति—प्रथमेति । अन्त्यप्रत्ययस्य तत्संततेश्चाविद्यानिवर्तकत्वा-

प्रवाह सम्भव नही है । जीवनादि की कारणभूता वृत्ति के रहते हुए बोधवृत्ति की अविच्छिन्नता सम्भव नही है, क्योकि उसमे विरोध है । यदि कहो, कि जीवनादि की हेतुभूता वृत्तियो के तिरस्कार करने से ही, मरणपर्यन्त विद्यासन्तति रहेगी—यह कहना ठीक नही है। क्योकि वृत्तियो की सख्या का निश्चय न होने से शास्त्रार्थ-अनिर्णय दोष आ जायगा । अर्थात् इतनी वृत्तियो का प्रवाह अविद्या का निवर्तक है—ऐसा निर्णय न होने के कारण शास्त्रार्थ निश्चित नही होगा और यह अभिमत नही है ।

सन्तति मात्र मे शास्त्रार्थ निश्चित ही है—ऐसा माने तो ? ऐसा कहना ठीक नही, क्योकि आदिसन्तति और अन्तिमसन्तति म कोई अन्तर नही है, बोधवृत्ति की प्रथमसन्तति हो अथवा मरणकाल मे उत्पन्न अन्तिमसन्तति हो, इन प्रथम और अन्तिम वृत्तियो मे कोई अन्तर न होने के कारण

१. सख्या । २ निश्चियेत । ३ ईदृशी (इयत्सख्याका) संततिर्ज्ञानद्वाराऽज्ञानध्वंसिनीति शास्त्रार्थनिश्चये का क्षतिरित्याशङ्क्य शास्त्राऽप्रामाण्यप्रसक्तिरित्याह—तच्चानिष्टमिति । शास्त्रार्थानवधारण च न कस्याप्यभिमतमित्यर्थः । ४ निश्चित एव शास्त्रार्थ इत्यथ । ५ मरणकाले जाता या अन्तिमा । ६ अवधारित इति । ७ द्वित्रिक्षणस्थायिन्यामाद्यायाम् । ८ आद्यद्वित्रिक्षणेत्यत्र आद्यद्विक्षणेत्यव युक्त पठितुम् । ९. दृष्टान्ताभाव इति—न च दृष्टान्ताभावेऽपि व्यतिरेकव्याप्त्या यथोक्तहेतूनामन्यतमेन विवक्षित साध्यमनुमेयमिति वक्तु युक्तमात्मविषयज्ञानत्वस्य तथाविधज्ञानसंततित्वस्य च विपक्षवृत्तित्वादन्त्यज्ञानत्वस्य तथाविधसंततित्वस्य चासिद्धे । तदुक्तम्—' मरणेऽपि न विश्वासो हिक्किकावशवर्तिन. । ज्ञानसततिनिष्पत्तौ तमोमात्रसमाप्तित " ।।१५२०।। इति । हिक्किकादिमरणाव्यभिचारिचिह्नवतोऽर्तिनिविडे तमोमात्रे मग्नत्वादवश्यभाविनि मरणेऽपि न निश्चय (मरिष्याम्यवाहमित्यपि न भवत्यवगम मूर्च्छाग्रस्तत्वात्) आत्मधीतत्संततौ तु का वार्तेति भावः ।। १०. प्रत्ययपक्षोक्तो दोषो संततिपक्षेऽपि तुल्यमित्याशयेनाऽऽह—आद्या संततिरिति । ११. आद्यन्तयोरिति सङ्ग्रहवाक्येनोक्तमर्थम् ।

प्रसज्येयाताम् । एवं तर्ह्यनिवर्तक एवेति चेन्न, "तस्मात्तत्सर्वमभवत्" इति श्रुतेः । "भिद्यते हृदयग्रन्थिः" "तत्र को मोहः" इत्यादिश्रुतिभ्यश्च ।

अर्थवाद इति चेन्न । सर्वशाखोपनिषदामर्थवादत्वप्रसङ्गात् । एतावन्मात्रार्थत्वोपक्षीणा हि सर्वशाखोपनिषदः । प्रत्यक्षप्रमितात्मविषयत्वादस्त्येवेति चेन्न । उक्तपरिहारत्वात् । अविद्याशोकमोहभयादिदोषनिवृत्तेः प्रत्यक्षत्वादिति चोक्तः परिहारः । तस्मादाद्योऽन्त्यः संततोऽसंततश्चेत्यचोद्यमेतत् । अविद्यादिदोषनिवृत्तिफलावसानत्वा-

संभवे प्रथमस्यापि रागाद्यनुवृत्त्या तद्योगाज्ज्ञानमज्ञानानिवर्तकमेवेति चोदयति—एवं तर्हीति । श्रुतिविरोधेन परिहरति—न तस्मादिति ।

तासामर्थवादत्वेनाविवक्षितत्वं शङ्कते—अर्थवाद इति चेदिति । अतिप्रसङ्गेन दूषयति—न सर्वेति । यथोक्तश्रुतीनामर्थवादत्वेऽपि कथं सर्वशाखोपनिषदामर्थवादत्वप्रसक्तिरित्याशङ्क्याऽऽह—एतावदिति । एतावन्मात्रार्थत्वमात्मज्ञानात्तदज्ञाननिवृत्तिरित्येतावन्मात्रस्यार्थस्य सद्भावः । अहंधीगम्ये प्रतीचि तासां प्रवृत्ते संवादविसंवादाभ्यां मानत्वायोगादस्त्येवार्थवादतेति प्रसङ्गस्येष्टत्वं शङ्कते—प्रत्यक्षेति । प्रमातुरहंधीगम्यता नाऽऽत्मनस्तत्साक्षिणस्तस्य वेदान्ता ब्रह्मत्वं बोधयन्तीति न संवादाविशङ्केत्याह—नोक्तेति । विद्वदनुभवमाश्रित्यापि फलश्रुतेरर्थवादत्वं समाहितमित्याह—अविद्येति । आत्मज्ञानस्य तदज्ञाननिवर्तकत्वे स्थिते परमतस्य निरवकाशत्वं फलतीत्याह—तस्मादिति । चोद्यस्यानवकाशत्वमेव विशदयति—अविद्यादीति ।

पूर्वोक्त दोनों दोषों की प्रसक्ति होगी । तब तो आत्माकारवृत्ति अविद्या की निवृत्ति करती ही नहीं, ऐसा कहे तो, (सिद्धान्ती समाधान करता है—) ऐसा कहना ठीक नहीं क्योंकि "वह सर्वरूप हो गया" इस श्रुति से तथा "हृदयग्रन्थि टूट जाती है", "उस अवस्था में मोह कहाँ रहा ?" इत्यादि श्रुतियों से (ज्ञान द्वारा अविद्यानिवृत्ति) सिद्ध होती है ।

यदि कहो कि ये श्रुतियाँ अर्थवादपरक हैं—तो ऐसा कहना ठीक नहीं । क्योंकि ऐसे में तो समस्त शाखाओं की उपनिषदों के अर्थवाद होने का प्रसंग हो जाएगा । समस्त शाखाओं की उपनिषदें इतना मात्र बोधन कराने में तात्पर्य वाली है । प्रत्यक्ष प्रमाण आत्मविषयक होने के कारण उनका अर्थवादत्व है ही—ऐसा कहना नहीं बनता, क्योंकि इसका परिहार पहले ही किया जा चुका है । अविद्या शोक, मोह-भयादि दोषों की निवृत्ति विद्वानों द्वारा अनुभवसिद्ध है, इससे उसका परिहार पहले

१ आत्मज्ञानादित्यर्थः । २ श्रुतिभ्यश्चेति—विद्वदनुभवविरोधसमुच्चयार्थश्चकारः । तदुक्तम्—"न धाग्निवर्मं ज्ञानं प्रत्यङ्मोहस्य युज्यते । स्वानुभूतिविरुद्धत्वादग्निदाहादिबोधवत्" ॥१५२३॥ इति । [illegible] न शीतलमित्यादिप्रयोगे अग्नेर्दाहकत्वमम्भसः शीतलत्वमित्यादिस्वानुभवादेव [illegible] गीर्विद्वदनुभवविरुद्धेत्यर्थः ॥ ३ एतावन्मात्रार्थबोधकत्वेनैव चरितार्थाः एतावत्येव तात्पर्यं [illegible] इति यावत् । ४ २७२तमे पृष्ठे उक्तम् । ५ विद्वदनुभवसिद्धत्वात् । ६ २८०तमे पृष्ठे [illegible] । ७ [illegible] पस्याचलत्वात् । ८ चोद्यानवकाशः । ९ स्वार्थतात्पर्यकत्वम् । १० अहंधीगम्ये [illegible] प्रत्यक्षविषयत्वाद्मानधिगतत्वम् । ब्रह्मत्वांशे तु तस्यैव विसंवादः विरोधः । प्रमाणविरुद्धे [illegible] ११ प्रमातृसाक्षिणः ।

द्विद्यायाः ि य एवाविद्यादिदोषनिवृत्तिफलकृत्प्रत्यय आद्योऽन्त्यः संततोऽसंततो वा स एव विद्येत्यभ्युपगमान्न चोद्यस्यावतारगन्धोऽप्यस्ति ।

यत्तूक्तं विपरीतप्रत्ययतत्कार्ययोश्च दर्शनादिति । न, । तच्छेषस्थितिहेतुत्वात् । येन कर्मणा शरीरमारब्धं तद्विपरीतप्रत्ययदोषनिमित्तत्वात्तस्य तथाभूतस्यैव 'विपरीतप्रत्ययदोषसंयुक्तस्य फलदाने सामर्थ्यमिति यावच्छरीरपातस्तावत्फलोपभोगाङ्गतया विपरीतप्रत्ययं रागादिदोषं च तावन्मात्रमाक्षिपत्येव । मुक्तेषुवत्प्रवृत्तफलत्वात्तद्धेतुकस्य कर्मणः ।

---

ज्ञानसततेरन्त्यज्ञानस्य वाऽज्ञानध्वसित्वासिद्धेराद्यमेव ज्ञान तयेत्युक्तं, संप्रति परोक्तमनुवदति —यत्तूक्तमिति । दर्शनाद्याऽऽद्यं ज्ञानमज्ञानध्वंसीति शेष. । प्रारब्धकर्मशेषस्य विद्वद्देहस्थितिहेतुत्वाद्विदुषोऽपि यावदारब्धक्षयं रागाद्याभासाविरोधात्तत्क्षये च देहाभासजगदाभासयोरभावादाद्यज्ञानस्याज्ञाननिवर्तकत्वानुपपत्तिरित्युत्तरमाह—न तच्छेषेति । तदेव प्रपञ्चयति—येनेत्यादिना । [illegible] ध्वस्याऽऽक्षिपतीत्यनेन सबन्ध । आक्षेपकत्वं नियम साधयति—विपरीतेति । मिथ्याज्ञानेन रागादिदोषेण च निमित्तेन प्रवृत्तत्वादिति यावत् । तथाभूतस्येत्यस्य विवरण विपरीतप्रत्ययेत्यादि । कर्मैव पष्ठ्या विशेष्यते । तावन्मात्रं प्रतिभासमात्रशरीरम् । प्रारब्धकर्मणोऽप्यज्ञानजन्यत्वेन ज्ञाननिवर्त्यत्वान्न ज्ञानिमतो देहाभासादि संभवतीत्याशङ्क्याऽऽह—मुक्तेषुवदिति । यथा प्रवृत्तवेगस्येष्वा वेगक्षयादेवा प्रतिबद्धस्य क्षयस्तथा भोगादेवाऽऽरब्धक्षयो 'भोगेन त्वितरे क्षपयित्वा सपद्यत" इति न्यायान्न ज्ञानाविस्ययः । तद्धेतुकस्य विपरीतप्रत्ययादिप्रतिभासकार्यजनकस्येति यावत् ।

---

है । इसलिए (उक्त युक्तिकलाप के सुस्थिर होने से) प्रथम हो, चरम हो, सतत हो अथवा असतत हो, उसके विषय मे शङ्का करने का कोई अवकाश ही नहीं है । क्योंकि अविद्यादि दोषों की निवृत्तिरूप फल मे ही विद्या का तात्पर्य है । जो भी वृत्ति अविद्यादि दोषों की निवृत्तिरूप फलप्रदाता है, वह प्रथम, चरम, सतत या असतत हो, वही विद्या है—ऐसा मानने से शङ्का करने का प्रसग ही उपस्थित नही होता ।

और यह जो कहा गया कि विपरीत-प्रत्यय और उसका कार्य देखे जाने से आत्मज्ञान अविद्याध्वसक है, वह कहना ठीक नहीं । क्योंकि वह तो प्रारब्धशेष के विद्यमान रहने के कारण है । जिस कर्म से प्रेरित होकर शरीर का आरम्भ हुआ है वह विपरीत-प्रत्यय और दोषयुक्त होने के कारण उसके तथाभूत होने से ही विपरीत-प्रत्यय और (जन्मान्तरीय) रागादिसस्काररूप दोष से सयुक्त रहकर ही फलसम्पादन मे सामर्थ्य है, इसलिए जब तक मृत्यु नही आती तब तक फलोपभोग की प्रयोजकतारूप से उतना मात्र तो विपरीत-प्रत्यय और रागादिदोष हो ही जाता है । क्योंकि (तरकस से) छोड़े गये

---

१ जन्मान्तरीयरागादिसस्काररूपदोषसहकृतस्य । २ प्रयोजकतया । ३ येन विना यदनुपपन्नमिति न्यायात् । ४ हेतुत्वमेव । ५ नियममिति—आक्षेपत्वव्यवकारगम्य नियममित्यर्थ । ६ फलरूपेण निमित्तेनेत्यर्थ । ७ आदिना कुलालचक्रादि । ८ कुड्यादिप्रतिबन्धशून्यस्य । ९ भोगेन त्वितरे क्षपयित्वेति—सचितकर्मणा ब्रह्मज्ञानेन नाश उक्त । इतर आरब्धकार्ये पुण्यपापे तु भोगेन क्षपयित्वा विद्वान् ब्रह्म सम्पद्यते । अथ सम्पत्स्ये सपत्स्यते ब्रह्मैव सन् ब्रह्माप्येती'त्यादिश्रुतिभ्य इत्यर्थ । १० बृ० उ० ४-१-१६ ।

तेन न तस्य निर्वातिका विद्याऽविरोधात् । कि तर्हि स्वाश्रयादेव स्वात्मविरोध्यविद्याकार्यं यदुत्पित्सु तन्निरुणद्धयनागतत्वादतीतं हीतरत् ।

किंच नेच विपरीतप्रत्ययो विद्यावत उत्पद्यते । निर्विषयत्वात् । अनवधृतविषयविशेषस्वरूपं हि सामान्यमात्रमाश्रित्य विपरीतप्रत्ययोऽवभासमान उत्पद्यते । यथा

---

ननु ज्ञानमनारब्धकर्मवदारब्धमपि कर्म कर्मत्वाविशेषान्निवर्तयिष्यति नेत्याह—तेनेति । अविद्यालेशेन सहाऽऽरब्धस्य कर्मणो विद्या निर्वातिका न भवतीत्यत्र हेतुमाह—अविरोधादिति । न हि ज्ञानादारब्धं कर्म क्षीयते तदविरोधित्वादविद्यालेशाच्च तदवस्थितेरन्यथा जीवन्मुक्तिशास्त्रविरोधादिति भावः । आरब्धस्य कर्मणो ज्ञानानिवर्त्यत्वे ज्ञानं कर्मनिवर्तकमिति कथं प्रसिद्धिरित्याह—किं तर्हीति । प्रसिद्धिविषयमाह—स्वाश्रयादिति । ज्ञानविरोधि यदज्ञानकार्यं नारब्धं कर्म ज्ञानाश्रयप्रमात्राद्याश्रयादज्ञानात्फलात्मना जन्माभिमुख तन्निवर्तकं ज्ञानमिति प्रसिद्धिरविरुद्धेत्यर्थः । विमतं न ज्ञाननिवर्त्यं कर्मत्वादारब्धकर्मवदित्यनुमानादनारब्धमपि कर्म न ज्ञाननिरस्यमित्याशङ्क्याऽऽह—अनागतत्वादिति । अनारब्धं कर्म फलरूपेणाप्रवृत्तत्वात्प्रवृत्तेन ज्ञानेन निवर्त्यम् । आरब्धं तु कर्म फलरूपेण जातत्वात्तद्भोगादृते न निवृत्तिमर्हति । अनुमानं त्वागमापबाधितमप्रमाणमित्यर्थः ।

नन्वनारब्धकर्मनिवृत्तावपि विदुषश्चेदारब्धकर्म न निवर्तते तथाच यथापूर्वं विपरीतप्रत्ययादिप्रवृत्तेर्विद्वदविद्वद्विशेषो न स्यादत आह—किंचेति । हेतुसिद्धयर्थं विपरीतप्रत्ययविषयं विशदयति—अनवधृतेति । संप्रति विद्वद्विषये विषयाभावाद्विपरीतप्रत्ययस्यानुत्पत्तिमुपपादयति—स चेति । आशय-

---

बाण के समान शरीर आरम्भककर्म फलप्रदान मे प्रवृत्त हो चुका है।

अत आरब्धकर्मस्थापक अविद्यालेश के साथ आरम्भक-कर्म की विद्या-निर्वातिका नही है क्योंकि उसके साथ उसका विरोध नही है। तो वह किसे निवृत्त करती है, स्वाश्रित होने के कारण जो ज्ञानस्वरूप का विरोधी अविद्या का कार्य उत्पन्न होने वाला होता है, उसे ही वह रोकता है, क्योंकि वह अनागत है और प्रारब्ध तो अतीत है।

इसके अतिरिक्त, विद्वान् को विपरीतप्रत्यय नही हो सकता, क्योंकि उसमे विपरीतप्रत्यय के विषय का अभाव रहता है। अनवधारण विषय वाले विशेषस्वरूप का धर्मीस्वरूप मात्र को आश्रित करके उत्पन्न होने वाला विपरीतप्रत्यय ही उत्पन्न होता है, जैसे शुक्ति मे रजत। और जिस विषय के अह्मात्मैक्यरूप विशेष का निश्चय हो गया है, उसे सम्पूर्ण विपरीतप्रत्यय के, आश्रय का बाध होने के

---

१. तेनेत्यादि। तेन—आरब्धकर्मस्थापकेनाविद्यालेशेन सह, तस्य—आरब्धस्य कर्मणः। २. अविरोधादिति—फलरूपेणाऽऽरब्धकर्मणो जातत्वात्पृथक्तस्य रूपाभावाच्च न तन्निवर्तकं ज्ञानमित्यपि द्रष्टव्यम्। तदुक्तम्—"अतीतत्वाच्च तद्धान्यं नालमात्मावबोधनम्" ॥१५३०॥ इति। अतीतत्वात् फलरूपेण परिणततया कर्मत्वविगमादिति यावत्। ३ ज्ञानस्वरूपविरोधि। ४. अनागतत्वादिति—एतेन तस्य ज्ञानकाले पश्चाच्च संभवो दर्शित इति बोध्यम्। ज्ञानोत्तरकालीन त्वागामिपुण्यपापात्मक कर्म न ज्ञानावरोध्यमविरोधात्। फल तु तदीय विद्वत्स्तावकनिन्दकाना भवतीति बोध्यम्। ५. विदुषि, विपरीतप्रत्ययविषयाभावात्। ६. अनवधारणविषयो विशेषस्वरूप यस्य। ७ धर्मिस्वरूपमात्रम्। ८. ज्ञानस्य। ९. विशेषशक्तिप्रधानात्। १०. सधितम्।

शुक्तिकायां रजतमिति। स च विषयविशेषावधारणवतोऽशेषविपरीतप्रत्ययाशयस्योपमर्दितत्वान्न पूर्ववत्संभवति। शुक्तिकादौ सम्यक्प्रत्ययोत्पत्तौ पुनरदर्शनात्।

क्वचित्तु विद्यायाः पूर्वोत्पन्नविपरीतप्रत्ययजनितसंस्कारेभ्यो विपरीतप्रत्ययावभासाः स्मृतयो जायमाना विपरीतप्रत्ययभ्रान्तिमकस्मात्कुर्वन्ति। यथा विज्ञातदिग्विभागस्याप्यकस्माद्दिग्विपर्ययविभ्रमः।

सम्यग्ज्ञानवतोऽपि चेत्पूर्ववद्विपरीतप्रत्यय उत्पद्यते सम्यग्ज्ञानेऽप्यविस्रम्भाच्छास्त्रार्थविज्ञानादौ प्रवृत्तिरसमञ्जसा स्यात्सर्वं च प्रमाणमप्रमाणं संपद्येत। प्रमाणा-

स्यागृहीतविशेषस्य सामान्यमात्रस्याऽऽलम्बनस्येति यावत्। आश्रयस्येति पाठेऽप्ययमेवार्थः। विदुषो विपरीतप्रत्ययादिप्रतिभासेऽपि न यथापूर्वं तत्त्वं "यस्य तु यथापूर्वं संसारित्वमित्यादिन्यायविरोधादिति मत्वोक्तम्—न पूर्ववदिति। "तत्रानुभवं प्रमाणयति—शुक्तिकादाविति।

यथाऽज्ञानवतो विपरीतप्रत्ययभावोऽनुभूयते तथा "तद्वतोऽपि क्वचिद्विपरीतप्रत्ययो दृश्यते "तथा च कथं तत्रानुभवविरोधो न प्रसरेदित्याशङ्क्य परोक्षज्ञानवति विपरीतप्रत्ययसत्त्वेऽपि नापरोक्षज्ञानवति तद्भाव्यमित्यभिप्रेत्याऽऽह—क्वचित्त्विति। परोक्षज्ञानाधारः सप्तम्यर्थः। पञ्चमी त्वपरोक्षज्ञानायां। "अकस्मादित्यज्ञानातिरिक्तबलवत्सामग्र्यभावोक्तिः।

विदुषो मिथ्याज्ञानाभावमुक्त्वा विपक्षे दोषमाह—सम्यगिति। तत्पूर्वकमनुष्ठानमादिशब्दार्थः। सम्यग्ज्ञानाविस्रम्भे दोषान्तरमाह—सर्वं चेति। ज्ञानादज्ञानध्वंसे तदुत्थमिथ्याज्ञानस्य सविषयस्य

कारण उसका पूर्ववत् होना सभव नही है। जैसे शुक्तिकादि मे, उनका सम्यक्प्रत्यय हो जाने पर फिर भ्रम-बुद्धि नही होती।

परन्तु कहीं-कहीं (परोक्षज्ञान वाली) विद्या से पूर्वोत्पन्न विपरीतप्रत्ययजनित सस्कारों से विपरीतप्रत्ययाकार की तरह भासने वाली स्मृतियाँ उत्पन्न होकर अचानक विपरीतप्रत्यय की भ्रान्ति पैदा कर देती हैं। जैसे दिशा विभाग जानने वाले को भी अचानक दिशा की भ्रान्ति हो जाती है।

यदि सम्यक्ज्ञान वाले पुरुष को भी पूर्ववत् विपरीत-प्रत्यय हो जाए तो सम्यक्ज्ञान मे भी अविश्वास हो जाने पर शास्त्रार्थविज्ञान (तत्पूर्वक श्रवणकर्मानुष्ठान) आदि मे प्रवृत्ति होनी असम्भव हो जाए और तब तो सारी प्रमिति, अप्रमिति हो जाए। क्योकि (उभयस्थान मे अविश्वास की समानता

१. ब्रह्मात्मैक्य विशेष। स्वरूपमात्र तु सामान्यम्। २ परोक्षज्ञानवति। ३ प्रत्ययाकारा। ४ प्रमिति। ५ अप्रमिति। ६ उभयत्राविस्रम्भस्य तुल्यत्वात्। ७ विषयस्य। ८ मन्वस्मदादेरिव विदोऽपि रागादिरनुवर्तते सत्कार्यदर्शनादित्याशङ्क्याऽऽह—विदुष इति। तथाच वार्तिकम्—"आगमाद्वेद चेद्ब्रह्म ब्रह्मैव भवेतीति हि। फलावस्थस्य च सतं कुता रागादिसम्प्लुतिः" ॥१५४०॥ इति। ब्रह्माहमस्मीति श्रुतेर्ज्ञानतो ब्रह्मभावस्याऽव्ययत्वाद्ब्रह्मभूतस्य रागाद्यसम्पर्कान्न तस्य यथापूर्वं सत्कार्यमस्तीत्यर्थः॥ ९. अनुवर्तमानत्वम्। १० यस्य तु यथापूर्वमिति—उक्त ह्येतच्चतुःसूत्रीभाष्योपान्ते भगवता भाष्यकृता "तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम्। यस्य तु यथापूर्वं संसारित्व नासावगतब्रह्मात्मभाव इत्यनवद्यमिति पञ्चदशतमग्रन्थटीकायामस्य ब्राह्मणस्य। ११. विदुषि विपरीतप्रत्ययाद्यनुत्पत्तौ। १२ ज्ञानवतोऽपि। १३. विदुषि विपरीतप्रत्ययसत्त्वे। १४. न कस्मादपि भवतीत्यकस्मात् परोक्षज्ञानिन्यपरोक्षज्ञान तु नास्ति तदतिरिक्तकारणाभावश्चोक्तोऽकस्मादिति। १५ श्रवणादे।

तस्य [१]कर्तृत्वाद्युपपत्तेः । यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदिति हि वक्ष्यति । 'अनन्यत्सद्वस्त्वात्माख्यं' यत्राविद्यायां सत्यामन्यदिव स्यात्तिमिरकृतद्वितीयचन्द्रवत्तत्राविद्याकृतामेककारकापेक्षं दर्शनादिकर्म तत्कृतं फलं च दर्शयति तत्रान्योऽन्यत्पश्येदित्यादिना । यत्र पुनर्विद्यायां सत्यामविद्याकृतानेकत्वभ्रमप्रहाणं तत्केन कं पश्येदिति कर्मासंभवं दर्शयति । तस्मादविद्यावद्विषय एव ऋणित्वं कर्मसंभवान्नेतरत्र ।

एतच्चोत्तरत्र व्याचिख्यासिष्यमाणैरेव वाक्यैर्विस्तरेण प्रदर्शयिष्यामः । तद्यथेहैव

---

यत्रेति । वक्ष्यमाणवाक्यार्थं प्रकृतोपयोगित्वेन कथयति—अनन्यदिति । ऋणित्वं विदुषो नेत्युक्तं व्यक्तीकर्तुं तस्य नास्ति कर्तृत्वादीत्यत्रापि प्रमाणमाह—यत्र पुनरिति । विद्यायां सत्यामविद्यायास्तत्कृतानेकत्वभ्रमस्य च प्रहाणं यत्र संपद्यते तत्र तस्मादेव "कारणात्तत्केनेत्यादिना कर्मादेरसंभवं दर्शयतीति योजना । प्रमाणसिद्धमर्थं नियमयति—तस्मादिति ।

अविद्याविषयमृणित्वमित्येतत्प्रपञ्चयदविद्यासूत्रमवतारयति—एतच्चेति । तदृणित्वमविद्याविषयं यथा स्फुटं भवति तथाऽथ योऽन्यामित्यादावनन्तरग्रन्थ एव कथ्यते प्रथममित्यर्थः । तदक्षराणि

---

होता।", "(मैंने शुभकर्म क्यो नही किया और पापकर्म क्यो किया) इस प्रकार की चिन्ता केवल इस विद्वान् को सतप्त नही करती " "(उस ब्रह्म के आनन्द को जानने वाला) विद्वान् भयभीत नही होता।" इत्यादि श्रुतियो और "ज्ञानाग्नि समस्त कर्मों को भस्म कर देती है" इत्यादि स्मृतियो से भी यही सिद्ध होता है ।

यह जो कहा कि (विद्वान् विद्याफलप्राप्ति मे देवादि-) ऋणो से बँधा हुआ है । ऐसा कहना ठीक नही है, क्योकि ऋण अविद्या की तरह विषय है । ऋणी वही मनुष्य है, जो अविद्यायुक्त है, क्योकि उसीमे कर्तृत्व (भोक्तृत्व) आदि अभिमान सभव है । "जिस जाग्रत् या स्वप्न अवस्था मे आत्मा से भिन्न अन्य सी वस्तु होती है, वहाँ ही अन्य, अन्य को देखता है" ऐसी श्रुति भी है । सर्वाभिन्न, त्रिविधभेदशून्य, सत वस्तु आत्मा है, वह तिमिररोग से भासनेवाले द्वितीय चन्द्र के समान, जहाँ अविद्यावस्था मे अन्य के समान होती है, वही, "अन्य अन्य को देखता है" इत्यादि वाक्य से श्रुति अनेक कारको की अपेक्षा वाली दर्शनादिक्रिया और उससे होने वाले कर्तृत्वादिफल को भी दिखाती है । किन्तु जहाँ अविद्यावस्था मे अविद्याजनित नानात्वभ्रम का नाश हो जाता है, वहाँ "किससे किसको देखे" यह श्रुति कर्म की अनुपपत्ति दिखाती है । हमारे द्वारा कहा गया अर्थ प्रामाणिक होने के कारण अविद्वान् ही ऋणित्व है, क्योकि उसी के द्वारा कर्म सभव है, विद्वान् से नही ।

इसी बात को, (ऋणित्व का अविद्यावद्विषयत्व होना) जिन श्रुतिवाक्यो की व्याख्या करने की हमारी इच्छा है, उनसे विस्तारपूर्वक दिखलाएँगे ।

जिस प्रकार यहीं यह बात कही गयी है कि जो ब्रह्मज्ञानविहीन अन्य अपने से भिन्न जिस किसी देवता की उपासना करता है; स्तुति, नमस्कार, याग, बलि, उपहार, भक्ति और ध्यानादि के

---

१. कर्तृत्वाद्यभिमानोपपत्तेः । २ सर्वाभिन्नम् । ३ त्रिविधभेदशून्यम् । ४ क्रिया । ५ कर्तृत्वादि । ६. अस्मदुक्तार्थस्य प्रामाणिकत्वात् । ७ ऋणित्वस्याविद्यावद्विषयत्वम् । ८ अविदुषि कर्तृत्वादिसाधकत्वेन । ९. काले । १०. अविद्यातत्कार्याभावात् ।

तावत्—%अथ यः कश्चिदब्रह्मविदन्यामात्मनो व्यतिरिक्तां यां कांचिद्देवतामुपास्ते स्तुति-नमस्कारयागबल्युपहारप्रणिधानध्यानादिनोपास्ते तस्या गुणभावमुपगम्याऽऽस्ते । अन्यो-

ध्याकरोति—अथेत्यादिना । विद्यासूत्रानन्तर्यमविद्यासूत्रस्या (स्था) थशब्दार्थः । यागो गन्धपुष्पादिना पूजा । बल्युपहारो नैवेद्यसमर्पणम् । प्रणिधानमैकाग्र्यम् । ध्यानं तत्रैवानन्तरितप्रत्ययप्रवाहकरणम् । आदिपदं प्रदक्षिणादिग्रहणार्थम् । भेददर्शनमत्रोपासनं 'न शाखीयमित्यभिप्रेत्य तदेव' 'विवृणोति—

द्वारा उसकी उपासना करता है अर्थात् उसके दास्यभाव को प्राप्त होकर रहता है, वह उपास्य देवता अन्य अनात्मा मुझसे पृथक् है, तथा उपासना का अधिकारी मैं इससे भिन्न हूँ, मुझे ऋणी के समान इसका प्रत्युपकार करना चाहिए । इस प्रकार भेदबुद्धि से अभिनिविष्ट चित्तवाला यह उपासना करता

१. अथेति—विद्याप्रकरणादविद्याप्रकरणस्य विभाग द्योतयितुमथशब्द । तदुक्त वार्तिके—"प्रवर्तकाऽस्य विद्याया व्युत्थानायाथगीरियम् । न हि सगच्छते विद्याऽविद्यायोग विरोधत ' ॥१५६६॥ इति । विरोधनो निवर्त्य-निवर्तकभावादित्यर्थ ॥ २ दास्य प्राप्य । ३ न शास्त्रीयमिति—न स वेद इति वाक्यशेषादिति भाव । अपितु लौकिकमेवेति शेष । चोपासनशब्दो लौकिकभेददर्शने न प्रयुज्यत इति वाच्य राजानमुपास्त इत्यादौ दर्शनादिति भाव. । ४ उपासनमेव । ५ स्पष्टयति ।

%अथयोऽन्यामिति । अत्र वार्तिकानि चत्वारि सन्ति । तथाहि— विद्वास प्रति नेशाना यदि देवादयो मता । कस्मिन्विषय ऐश्वर्यं तेषा स्यात्सोऽधुनोच्यत ॥ प्रामाण्य कर्मकाण्डस्य यस्मिन्विषय इष्यते । अविद्याविषय साक्षादय योऽन्यामितीर्यते ॥ सम्यग्ज्ञानसमुत्पत्तौ कर्मकार्यसमाप्तित । नापेक्षा कर्मकाण्डे स्यात्तत्प्रामा-ण्यकृतार्थत ॥ प्रवर्तकाऽस्य विद्याया व्युत्थानायाथगीरियम् । न हि सगच्छते विद्याऽविद्यायोग विरोधत " ॥ १५६३-१५६६॥ इति । मनुष्याणा पशुलोपरवश्रवणेऽपि देवादिभिस्तद्विद्याफले मुक्तौ प्रतिबन्धो न शक्यते कर्तु विद्या चाऽऽऽर्वाविद्याध्वसिन्यन्त्यायास्तत्सन्ततेश्च तदयोगाद्विदुषो रागादिद्वेषश्चाऽऽभासत्वात्सत्फलभाव-श्यकमित्युक्तमिदानी देवादीना विदुष्यस्वातन्त्र्ये कुत्र स्वातन्त्र्यमिति पृच्छति—विद्वासमिति । अथ योऽन्यामि-त्याद्यवतारयति—सोऽधुनेति । अब्रह्मविदि निग्रहानुग्रहस्वातन्त्र्य देवादीना प्रपञ्च्यतेऽनन्तरवाक्येनेत्यर्थं ॥ अविद्ये साध्यसाधनत्वादौ कर्मश्रुतेर्मानत्व चोच्यत तेनैवेत्यर्थान्तरमाह—प्रामाण्यमिति । प्रत्यक्षादेरागमेतर-प्रमाणस्याविद्याविषये प्रामाण्यवदिति दृष्टान्तद्योतनार्थं साक्षादित्युक्तम् ॥ नन्वाविद्ये कर्मादौ न तत्प्रामाण्य विदुषोऽपि कर्मापेक्षत्वान्न हि कश्चित्क्षणमपीत्यादिस्मृते श्रुतयोऽपि समुच्चित ज्ञान मुक्तिहेतुमाहुस्तत्राह—सम्यगिति । ऐक्यज्ञाने स्वर्गादेर्बाधितत्वात्कर्मकाण्डे तदर्थं वा विदुषो नास्त्यपेक्षा कृत्याभावाज्ज्ञानात्प्रागेव तत्प्रामाण्यस्य व्यावहारिकस्य सिद्धत्वादित्यर्थं । अथवा सति ज्ञाने कर्मकार्यस्य बुद्धिशुद्धेस्तद्धेतोरादावेव लब्धत्वात्तत्कर्मकाण्डप्रामाण्यस्य चरितार्थत्वान्न पुनस्तस्मिन्नपेक्षा युक्ता फलमानयोरभावाज्जनकादेस्तु बाधित कर्म प्रदीपवत् 'न मे किंचन दह्यत' इत्यादिस्मृते । त्वदुक्तस्मृतिस्त्वज्ञविषया 'तस्य कार्यं न विद्यत' इति च वक्ष्यति 'कुर्याद्विद्वानिति' चाज्ञ प्रवर्तयितुमेवोक्त 'यद्यदाचरति श्रेष्ठ' इत्यादिदर्शनात् समुच्चयवचनानि च क्रमसमुच्चयार्थानि अन्यथा 'नान्य पन्था' 'न कर्मणे'त्यादिनिषेधश्रुतिविरोधो भवेत्तस्मादाविद्ये कर्मादौ कर्मश्रुतेर्मानतेति भाव । नन्वाविद्यविषयत्वे तस्या रूप्यादिधीवदमानतेत्याशङ्क्य व्यावहारिकमानत्वस्याध्य-क्षादिवदुपपत्तेर्नैवमित्याह—तदिति । रूप्यादिधीस्तु न ज्ञानमविद्या वेदी सह भ्रम इत्युपगमादिति द्रष्टव्यम् ॥ अब्रह्मविदि देवादिस्वातन्त्र्यमाविद्ये च कर्मादौ कर्मकाण्डप्रामाण्यमित्यर्थद्वय वक्तुमुत्तर वाक्यमिति तात्पर्य-मुक्त्वाऽथशब्दार्थमाह—प्रकृतेति । प्रकृतादुत्तरस्य विच्छेदकरणे हेतुमाह—न हीति । विरोधत इति निवर्त्यनिवर्तकभावादित्यर्थं ॥

'ऽसावन्योऽहमस्मि' पृथगन्योऽहमस्म्यधिकृतः' मयाऽस्मै ऋणिवत्प्रतिकर्तव्यमित्येवंप्रत्ययः सन्नुपास्ते 'न स 'इत्थंप्रत्ययो 'वेद विजानाति तत्त्वं न स केवलमेवंभूतोऽविद्वानविद्यादोषवानेव 'किं तर्हि, यथा पशुर्गवादिर्वाहनदोहनाद्युपकारैरुपभुज्यत एव स इज्याद्यनेकोपकारैरुपभोक्तव्यत्वादेकैकेन देवादीनाम्। अतः पशुरिव सर्वार्थेषु कर्मस्वधिकृत इत्यर्थः।

एतस्य ह्यविदुषो वर्णाश्रमादिप्रविभागवतोऽधिकृतस्य कर्मणो "विद्यासहितस्य केवलस्य च शास्त्रोक्तस्य 'कार्यं मनुष्यत्वादिको ब्रह्मान्त "उत्कर्षः। शास्त्रोक्तविपरीतस्य च "स्वाभाविकस्य कार्यं मनुष्यत्वादिक एव स्थावरान्तोऽपकर्षः। यथा चैतत्तथाऽस्य त्रयो"

अन्योऽसाविति। "तस्य मूलमाह—न स इति। वाक्यान्तरमवताय व्याचष्टे—न स केवलमिति। सोऽविद्वानेवमुक्तदृष्टान्तवशात्पशुरिव देवानां भवति तेषां मध्ये तस्यैकैकेन बहुभिरुपकारैर्भोग्यत्वादिति योजना। पशुसाम्ये सिद्धमर्थं कथयति—अत इति।

अथानेनाविद्यासूत्रेण किं "कृतं भवतीत्यपेक्षायामविद्यायाः संसारहेतुत्वं सूत्रितमिति वक्तुमविद्याकार्यं कर्मफलं संक्षिपति—एतस्येत्यादिना। कर्मसहायभूता विद्या देवताध्यानात्मिका। शास्त्रीयवत्स्वाभाविककर्मणोऽपि "द्वैविध्यं सूचयितुं चशब्दः। "तत्र तु सहकारिणी विद्या नग्नस्त्रीदर्शनादिरूपेति भेदः। कथं यथोक्तं कर्मफलमविद्यावतः स्यादित्याशङ्क्याऽऽह—यथा चेति। सूत्र' द्वैविध्यसि-

है। ऐसी बुद्धिवाला पारमार्थिक तत्त्व को नहीं जानता। वह ऐसा अज्ञानी केवल अविद्या से होने वाले (ब्राह्मणादि) अभिमानरूप दोष से युक्त नहीं है, तो फिर कैसा है? जिस प्रकार गाय, बैल आदि पशु वाहन और वाहनादि उपकारों से काम में लिए जाते हैं, उसी प्रकार वह यागादि अनेकों उपकारों के कारण एक-एक देवादि का उपभोग्य होने से उनका पशु ही है। देव के उपभोग्य होने के कारण वह पशु के समान सब प्रकार के फल देने वाले कर्मों का अधिकारी है।

इस वर्णाश्रमादि विभागवान कर्मादि में अधिकृत अज्ञानी को उपासनासहित केवल शास्त्रोक्त कर्मों का फल मनुष्यत्व से लेकर ब्रह्मत्वपर्यन्त उत्कृष्टदेह की प्राप्ति होती है। तथा शास्त्रोक्त से विपरीत जो शास्त्रानाश्रय जन्मान्तरीय कर्म है उसका कार्य मनुष्यत्व से लेकर स्थावर योनियों तक अपकृष्टदेह की प्राप्ति होना है। यह जिस प्रकार है उसका हम अग्रिम ब्राह्मण (सोलहवें मन्त्र) में अध्याय के अन्त में 'मनुष्यलोक, पितृलोक और देवलोक—ये ही तीन लोक हैं' इत्यादि वाक्य से सम्यक् प्रकार से प्रतिपादन करेंगे। विद्या का फल सर्वात्मभावापत्ति है, यह बात संक्षेपतः दिखलाई

१ उपास्यो देव। २ अदसीयोपासने। ३ प्रत्युपकर्तव्यम्। ४ भेदाभिनिविष्टचेता। ५ न स इति— अनुभवसिद्धं निखिलजगज्जनकं चिदध्यस्तमज्ञानमेव तन्मूलमिति भावः। ६ इत्थमित्यादि—भेदाभिनिविष्टमतिर्न जानात्युपास्योपासकयोः पारमार्थिकं तत्त्वमित्यर्थः। ७ आविद्यब्राह्मण्याद्यभिमानवान्। ८ किं तर्हीति—पशुसदृशोऽपि भवतीति शेषः। पशुसादृश्यं दर्शयन् वाक्याक्षराणि व्याकरोति—यथेति। ९ देवोपभोग्यत्वात्। १० कर्मादौ। ११ उपासना। १२ फलम्। १३ उत्कृष्टदेहः। १४ स्वाभाविकस्येति—स्वभावः शास्त्रानाश्रयो जन्मान्तरीयः संस्कारः तत्प्रयुक्तस्येत्यर्थः। १५ बृ० उ० १-५-१६। १६ भेददर्शनस्य। १७ उक्तम्। १८ केवलत्वं विद्यासाहित्यत्वं च। १९ स्पर्शनादिस्वाभाविककर्मणि। २० विद्यासूत्रमविद्यासूत्रमिति यावत्।

वाव लोका इत्यादिना वक्ष्यामः कृत्स्नेनैवाध्यायशेषेण । विद्यायाश्च कार्यं सर्वात्मभावा-पत्तिरित्येतत्संक्षेपतो दर्शितम् । सर्वा हीयमुपनिषद्विद्याविद्याविभागप्रदर्शनेनैवोपक्षीणा । यथा चैषोऽर्थः कृत्स्नस्य शास्त्रस्य तथा प्रदर्शयिष्यामः ।

यस्मादेवं तस्मादविद्यावन्तं पुरुषं प्रति देवा ईशत एव विघ्नं कर्तुमनुग्रहं चेत्येतद्दर्शयति—यथा ह वै लोके बहवो गोश्वादयः पशवो मनुष्यं स्वामिनमात्मनोऽधिष्ठातारं भुञ्ज्युः पालयेयुरेवं बहुपशुस्थानीय एकैकोऽविद्वान्पुरुषो देवान्देवानिति पदं पित्राद्युपलक्षणार्थं भुनक्ति पालयतीति । इम इन्द्रादयोऽन्ये मत्तो ममेशितारो भृत्य इवाहमेषां स्तुतिनमस्कारेज्यादिनाऽऽराधनं कृत्वाऽभ्युदयं निःश्रेयसं च तत्प्रत्तं फलं प्राप्स्यामीत्येवमभिसंधिः ।

तत्र लोके बहुपशुमतोऽपि यद्येकस्मिन्नेव पशावादीयमाने व्याघ्रादिनाऽपह्रियमाणे महदप्रियं भवति तथा बहुपशुस्थानीय एकस्मिन्पुरुषे पशुभावाद्व्युत्तिष्ठत्यप्रियं भवतीति

द्वयर्थं विद्यासूत्रार्थमनुक्रामति—विद्यायाश्चेति । सूत्रान्तराशङ्कां वारयति—सर्वा हीति । कथमेतदव-गम्यते तत्राऽऽह—यथेति ।

मनुष्याणामविद्यावतां देवपशुत्वे स्थिते फलितमाह—यस्मादिति । तत्र प्रमाणत्वेनोत्तरं वाक्य-मुत्थापयति—एतदिति । किमिदमविद्यावतो देवादिपालनमित्याशङ्क्य वाक्यतात्पर्यमाह—इम इन्द्रा-दय इति । अभिसंधिरविद्यावतः पुरुषस्येति शेषः ।

एकस्मिन्नेवेत्यादिवाक्यमादाय व्याचष्टे—तत्रेति । मनुष्याणां पशुभावाद्व्युत्थानमप्रियं

गई है। सम्पूर्ण उपनिषदों का पर्यवसान विद्या और अविद्या के विभागप्रदर्शन करने में है। समस्त शास्त्र का जिस प्रकार यह अर्थ है, उसे अग्रिम ब्राह्मण में कहेंगे ।

जिसप्रकार उक्त विधि से मनुष्यों का पशुत्व होना सिद्ध हुआ, उसी प्रकार श्रुति दिखलाती है कि अविद्वान् पुरुष के प्रति देवता विघ्न अथवा अनुग्रह करने में समर्थ हैं। जिस प्रकार लोकव्यवहार में गौ-अश्वादि बहुत से पशु अपने स्वामी अधिष्ठाता मनुष्य का भरण-पोषण करते है, उसी प्रकार अनेक पशुस्थानीय एक-एक अज्ञानी पुरुष देवताओं का भरण-पोषण करता है। "देवान्" यह पद पितृगणादि का भी बोधक है। "मुझ से पृथक् ये इन्द्रादि मेरे शासक हैं, मैं परिचारक के समान स्तुति, नमस्कार एवं यागादि से इनकी आराधना करके इनके दिए हुए भोग और मोक्ष सब फल प्राप्त कर लूंगा"—अज्ञानी पुरुष की ऐसी कल्पना होती है।

वहाँ लोकव्यवहार में जिस प्रकार किसी बहुत से पशुओं के मालिक पुरुष के एक पशु के भी 'आदीयमाने' अर्थात् व्याघ्रादि के द्वारा हरण कर लिये जाने पर उसे बहुत दुःख होता है, उसी प्रकार किसी गृहस्थी के बहुत से पशु चुरा लिये जाने के समान अनेक पशुस्थानीय एक भी पुरुष के पशुभाव से

१. फलम् । २. विद्याऽविद्याविभागप्रदर्शनाख्यः । ३. अग्रिमब्राह्मणे । ४. एवमिति—उक्तविधया मनुष्याणां देवपशुत्वम् । ५. तीव्रदुःखित्वम् । ६. अनुवर्तति । ७. विद्यासूत्राविद्यासूत्राभ्यामन्यत्तृतीयसूत्रम् । ८. अज्ञेषु देवानां निग्रहानुग्रहस्वातन्त्र्ये । ९. किं फलकं किमाकारकं च ।

किं चित्रं देवानां बहुपश्वपहरण इव कुटुम्बिनः । तस्मादेषां देवानां तन्न प्रियं किं तद्यदेतद्ब्रह्मात्मतत्त्वं कथंचन मनुष्या विद्युर्विजानीयुः । तथा च स्मरणमनुगीतासु भगवतो व्यासस्य—

"क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः।
न चैतदिष्टं देवानां मर्त्यैरुपरि-वर्तनम्" ॥इति॥

अतो देवाः पशूनिव व्याघ्रादिभ्यो ब्रह्मविज्ञानाद्विघ्नमाचिकीर्षन्ति । अस्मदुपभोग्यत्वान्मा व्युत्तिष्ठेयुरिति । यं तु मुमोचयिषन्ति तं श्रद्धादिभिर्योक्ष्यन्ति विपरीतमश्रद्धादिभिः । तस्मान्मुमुक्षुर्देवाराधनपरः श्रद्धाभक्तिपरः प्रणेयोऽप्रमादी स्याद्विद्याप्राप्ति

देवानामिति स्थिते । 'तदुपायमपि' तत्त्वज्ञानं तेषां देवा विद्विषन्तीत्याह—तस्मादिदिति । तत्त्वविद्याया दौर्लभ्यत्वं (भ्यं) कथंचनेत्युक्तम् । मनुष्याणामुत्कर्षं देवा न मृष्यन्तीत्यत्र प्रमाणमाह—तथा चेति । तेषां ब्रह्मविद्यया कैवल्याप्तिः सुतरामनिष्टेति भावः ।

देवादीनां मनुष्येषु ब्रह्मज्ञानस्याप्रियत्वेऽपि किं स्यादित्याशङ्क्याऽऽह—अत इति । तेषां विघ्नमाचरतामभिप्रायमाह—अस्मदिति । तर्हि "देवादिभिरपहतानां मनुष्याणां मुमुक्षैव न संपद्येतेत्याशङ्क्याऽऽह—य त्विति । उक्तं हि—

"न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति "बुद्धया संयोजयन्ति तम्" इति ।

"तर्हि किमिति सर्वानेव देवा नानुगृह्णन्तीत्याशङ्क्याऽऽह—विपरीतमिति । देवतापराङ्मुखममुमोचयिषितमिति यावत् । संप्रति देवाप्रियवाक्येन(ण) ध्वनितमर्थमाह—तस्मादिति । अविद्वत्सु मनुष्येषु देवादीनां स्वातन्त्र्यं तच्छब्दार्थः । श्रद्धादिप्रधानस्तदाराधनपरः सन्देवादीनां प्रियः स्यात्तद्विपक्षस्य" मुमुक्षावैफल्यादित्यर्थः । तत्प्रीतिविषयश्च तत्प्रसादासादितवैराग्यः सर्वाणि कर्माणि संन्यस्य विद्याप्रापकश्रवणादिकं प्रत्येकाग्रमनाः स्यादित्याह—अप्रमादीति । श्रवणादिकमनुतिष्ठन्नपि वर्णाश्रमा-

ऊपर की स्थिति पहुँचने पर यदि देवताओं को कष्ट होता है, तो इसमें क्या आश्चर्य ? इसलिए इन देवताओं को इसमें प्रसन्नता नहीं होती । किसमें ? यही कि ये मनुष्य इस ब्रह्मात्मतत्त्व को 'विद्यु' अर्थात् प्राप्त करें । उसी को भगवान् व्यास की अनुगीता में स्मरण किया गया है ।

"हे कुन्तीपुत्र अर्जुन ! स्वर्गलोक कर्ममार्गी पुरुषों से प्रतिष्ठित है । देवताओं को यह प्रिय नहीं कि मनुष्य उनसे ऊपर जाएँ अर्थात् ब्रह्मविद्या द्वारा कैवल्यप्राप्ति करे ।"

अतः देवता, यह सोचकर कि हमारे उपभोग्य अर्थात् पशुभाव हान के कारण मनुष्य हमसे ऊपर न उठ सकें, पशुओं के व्याघ्रादि से दूर रखने के समान मनुष्यों को ब्रह्मविज्ञान से दूर रखने के

१. गृहस्थस्य । २. अस्मदीयपशुभावात् । ३. वशी । ४. श्रवणादिषु मनःसमाधानधैर्यप्रमाद. । ५. विद्यायाः प्राप्तिर्यस्माच्छ्रवणादेस्तं प्रति । ६. पशुभावव्युत्थानसाधनम् । ७. मोक्षाख्यफलवदिति-दृष्टान्तार्थोऽपि । ८. पशुभावव्युत्थानम् । ९. मनुष्याणां का क्षतिः स्यात् । १०. देवादीनामुक्ताभिप्रायवत्त्वे । ११. सर्वात्मना देवाधीनानाम् । १२. श्रद्धादियुक्तया बुद्धया । १३. अनुग्रहस्वातन्त्र्ये । १४. विरोधिनः पराङ्मुखस्य ।

प्रति विद्या प्रतीति या काक्वं तत्प्रदर्शित भवति देवाप्रियवाक्येन ॥१०॥—

'सूत्रित' शास्त्रार्थं आत्मेत्येवोपासीतेति । तस्य च व्याचिख्यासितस्य सार्थवादेन तदाहुर्यद्ब्रह्मविद्ययेत्यादिना सबन्धप्रयोजने अभिहिते । अविद्यायाश्च' -ससाराधिकार-कारणत्वमुक्तमथ योऽन्या देवतामुपास्त इत्यादिना । तत्राविद्वानृणी पशुवद्देवादिकर्म-कर्तव्यतया परतन्त्र इत्युक्त किं पुनर्देवादिकर्मकर्तव्यत्वे, निमित्त वर्णा आश्रमाश्च तत्र के

---

चारमरो भवेदन्यथा विद्यालक्षणे फले प्रतिबन्धसभवादित्याशयेनाऽऽह—विद्या प्रतीति । भयादिनिमित्ता ध्वनेर्विकृति काकुरुच्यते । यथाऽऽह'—'काकु स्त्रियां विकारो य शोकभीत्यादिभिर्ध्वने ' इति । तया काक्वा काक्वश्रुते स्वरकम्पेन(ण) भयमुपलक्ष्य देवादिभजने कल्प्यते तात्पर्यमित्याह—काक्वेति ॥१०॥

ब्रह्मकण्डिकामित्थ व्याख्याय ब्रह्म वा इदमित्यादिवाक्यस्या'तीतेन सबन्ध वक्तु वृत्त कीर्तयति—सूत्रित इति । शास्त्रार्थंशब्दो ब्रह्मविद्याविषय । 'तदाहुरित्यादिनोक्तमनुवदति—तस्य चेति । 'अर्थवाद-स्तद्यो यो देवानामित्यादि । सबन्धो ज्ञानस्य सर्वापत्तिफलेन साध्यसाधनत्वमधिकारिणाऽऽश्रयाश्रयि-त्वमवयेन विषयविषयित्वमिति विभाग । अविद्यासूत्र वृत्त कथयति—अविद्यायाश्चेति । ससारस्या-धिकार प्रवृत्तिरुत्पत्तिरिति यावत् । यथा पशुरित्यादिनोक्तमनुभाष्यते—'तत्रेति । अविद्याधिकार ' सप्तम्यर्थं । "तत्राविद्याकार्यं प्रपञ्चयितुमध्यायशेषप्रवृत्तिरिति मन्वानोऽविद्या"वियर्तचातुर्वर्ण्यसृष्टिप्रकट-नार्थं "तदेतद्ब्रह्मेत्यस्मात्प्राक्तन वाक्यमित्याकाङ्क्षापूर्वकमाह—किं पुनरिति । ब्रह्म वा इदमित्यादि-

---

लिए विघ्न प्रस्तुत करने की इच्छा करते है । जिसे वे भवबन्ध से छुडाना चाहते हैं उसे श्रद्धादि साधनो मे लगाते है जिसे मुक्त कराना नही चाहते उसे अश्रद्धादि मे उलझाये रहते है । देवताओ का अप्रिय बतलाने वाली काकु उक्ति द्वारा सिद्ध होता है कि मुमुक्षु को भगवदर्चापरायण श्रद्धाभक्तिपरायण, देवताओ का प्रियपात्र, विद्याप्राप्ति के साधनो एव ज्ञान के प्रति सावधान रहना चाहिये ॥१०॥

'आत्मा है—ऐसे उसकी उपासना करनी चाहिये इस श्रुतिवाक्य से शास्त्र का तात्पर्य सक्षिप्त रूप मे कहा गया । फिर व्याख्या के लिए अभीष्ट अर्थवाद से तदाहुर्यद् ब्रह्मविद्यया इत्यादि मन्त्र द्वारा उस शास्त्रार्थ के सबन्ध और प्रयोजन बतलाये गये । अथ योऽन्या देवतामुपास्ते (क्योकि वह तत्त्व ज्ञानी इन देवताओ का भी आत्मा ही हो जाता है) इत्यादि वाक्य से ससार की उत्पत्तिहेतुरूपा होना अविद्या का स्वरूप है । अब्रह्मविद् ऋणी होता है अर्थात् पशु के समान देवकर्मादि की कर्तव्यता से युक्त होने के कारण पराश्रित होता है ऐसा वहाँ कहा गया है । किन्तु क्या बात है कि देवता मनुष्यो से कर्म करवाते है ? वर्ण और आश्रमके कारण ऐसा होता है । वे वर्ण कौनसे है ?—ऐसी विचिकित्सा होनेपर ग्रन्थारम्भ किया जाता है । जिस वर्णरूप निमित्त से सम्बद्ध कर्मो मे इस पराश्रित ससारीजीव का ही अधिकार

---

१ देवादेर्भजनादिना प्रसादनम् । २ सक्षेपेणोक्त । ३ अविद्यास्वरूपमसूचायक च । ४ यथेष्टचेष्टत्वे । ५ आह—अमर इति शेष । ६ अथत्वम्यस्मादिति पूर्वोक्तवाक्येन । ७ तदाहुरिति—ननु सम्बन्धो ब्रह्मविद्याया किं च फल तस्या इत्याशङ्क्यत्यादि । ८ एकजीववादेऽप्यावधिमोक्षाभ्युपगमासभवमाश्रित्या ऽऽह—अथवादस्तद्यो यो देवानामित्यादिरिति । ९ अविद्याप्रकरण । १० अधिकार प्रकरणम् । ११ अविद्यातत्कार्ययो सूत्ररूपेण बोधितत्वे सति । १२ परिणामेत्यर्थं । १३ बृ० उ० १ ४।१५ ।

**ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्न व्यभवत् ।**
**तच्छ्रेयोरूपमत्यसृजत क्षत्त्रं यान्येतानि देवत्रा क्षत्त्रा-**
**णीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान**

प्रारम्भ में यह अद्वितीय ब्रह्म ही था। वह अकेला क्षत्रियादि पालनकर्ता के न होने से विभूति-युक्त कर्म करने में समर्थ न हो सका। तब उस ब्रह्म ने (मैं ब्राह्मण हूँ—मेरा यह कर्तव्य है, ऐसी विशेषता से) 'क्षत्र' इस प्रशस्तरूप की रचना की अर्थात् देवताओं में ये जो क्षत्रिय इन्द्र, वरुण, सोम, रुद्र,

---

वर्णा इत्यत इदमारभ्यते । यन्निमित्तसंबद्धेषु कर्मस्वयं परतन्त्र एवाधिकृतः संसरतीत्ये-तस्यैवार्थस्य प्रदर्शनायाग्निसर्गानन्तरमिन्द्रादिसर्गो नोक्तः । अग्नेस्तु सर्गः प्रजापतेः सृष्टि-परिपूरणाय प्रदर्शितः । अयं चेन्द्रादिसर्गस्तत्रैव द्रष्टव्यस्तच्छेषत्वात् । इह तु स एवा-भिधीयतेऽविदुषः कर्माधिकारहेतुप्रदर्शनाय ।

ब्रह्म वा इदमग्र आसीद्यदग्निं सृष्ट्वाऽग्निरूपापन्नं ब्रह्म ब्राह्मणजात्यभिमानाद्-

---

वाक्यमिदमा परामृश्यते । वर्णानेव विशिनष्टि—यन्निमित्तेति । यैर्निमित्तैर्ब्राह्मण्यादिभिः संबद्धेषु कर्म-स्वयमविद्वानधिकृतः पशुरिव संसरतीति पशुनिदर्शनश्रुतौ प्रसिद्धं तानि निमित्तानि दर्शयितुमुत्तरं वाक्यं प्रवृत्तमित्यर्थः । अथेत्यस्यमन्थदित्यत्रानुग्राहकदेवतासर्गं प्रक्रम्याग्नेरेव सृष्टिरुक्ता नेन्द्रादीनामत्र त्वविद्यां प्रस्तुत्य तेषां सोच्यते तत्र कः श्रुतेरभिप्रायस्तत्राऽऽह—एतस्येति । पूर्वमग्निसर्गानन्तरमिन्द्रादिसर्गो वाच्योऽपि नोक्तः । फलाभावात् । इह त्वविदुषस्तत्कार्यवर्णाद्यभिमानिनः कर्माधिकृतिरित्येतस्यार्थस्य प्रदर्शनार्थं तदाविद्यत्वविवक्षया स व्युत्पाद्यत इत्यर्थः । अग्निसर्गोऽपि तर्हि तद्वदत्रैव वाच्यो विशेषाभा-वादित्याशङ्क्याऽऽह—अग्नेस्त्विति । प्रजापतेः सृष्टिपूर्तये चेदग्निसृष्टिस्तत्रोक्ता हन्तेन्द्रादिसर्गोऽपि तत्रैव वाच्योऽन्यथा तदपूर्तेरित्याशङ्क्याऽऽह—अयं चेति । तर्हि तत्रोक्तस्य कस्मादत्रोक्तिः पुनरुक्तेरित्या-शङ्क्य तस्यैवार्थस्येत्यत्रोक्तं स्मारयति—इह त्विति ।

संगतिमुक्त्वा वाक्यमादाय व्याचष्टे—ब्रह्मेति । अग्रे क्षत्त्रादिसर्गात्पूर्वमिति यावत् ।

---

है। इसी अर्थ को प्रदर्शित करने के लिए अग्निसर्ग के अनन्तर इन्द्रादिसर्ग का वर्णन नहीं किया गया। अग्निसर्ग को तो प्रजापति की सृष्टि की परिपूर्णता के लिए वहीं प्रदर्शित किया गया था। प्रजापतिसृष्टि-

---

१. तत्रैव । २. प्रजापतिसृष्टिप्रक्रियायामेव । ३. हेतु—आविद्यब्राह्मण्याद्यभिमानः । ४. प्रदर्शनायेति—न चाविद्याकार्यत्वसिद्ध्यर्थमिन्द्रादिसर्गवदग्निसर्गमपीहैवोक्त्वा तत्र सृष्टिपूर्त्यर्थमुपसंह्रियतामिति वाच्यम् (गुणो-पसंहारन्यायेन तत्र बाध्यताम्) अग्निसृष्टेरपि तत्रानुक्तौ सङ्ग्राहकाभावादुपसङ्ग्रहासिद्धौ प्रजापतिसृष्टेरपूर्ति-प्रसङ्गात् । न चैवमिन्द्रादिसृष्टिं तत्र सृष्ट्वा तत्राग्निसृष्टिरुपलक्ष्यतामिति युक्तम् अग्निप्राधान्यस्य वक्ष्यमाण-तया तेनेतरोपलक्षणस्यायुक्तत्वादिति द्रष्टव्यम् । ५. अग्निं सृष्ट्वेति । "आत्मैवेदमग्र आसीदि"त्यत्र यदात्म-शब्देनोक्तं स्रष्टृ ब्रह्म तदग्निं सृष्ट्वा तद्रूपापन्नं ब्राह्मणत्वजात्यभिमानवदस्मिन् वाक्ये ब्रह्मशब्देनोच्यते क्षत्त्रादि-सर्गात्पूर्वं तावन्मात्रमवृत्तमित्यर्थः । ६ बृ० उ० १।४।६ । ७. अविद्याकार्येत्यर्थः । ८. इन्द्रादिसर्गस्या-विद्याकार्यत्वविवक्षयेति भावः । ९. फलमुद्दिश्य सृष्टेर्वक्तव्यत्वे । १०. हन्तेत्यनुमतौ । ११. अनुग्राह्यानु-ग्राहकसृष्टिप्रतिपादकग्रन्थयोस्तथैव सङ्गतिम् ।

**इति । तस्मात्क्षत्त्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्त्रिय-मधस्तादुपास्ते राजसूये क्षत्त्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म । तस्माद्यद्यपि राजा**

मेघ, यम, मृत्यु तथा ईशानादि है; इन्हीं के लिये उस (देवक्षत्रसृष्टि) को उत्पन्न किया। अतएव क्षत्रिय से बढ़कर कोई नहीं है। इसीलिये राजसूययज्ञ मे ब्राह्मणजाति वाले नीचे बैठकर क्षत्रियजाति की उपासना करते है। वे क्षत्रिय मे ही 'ब्रह्म' इस नामरूप अपने यश को स्थापित करते है। वह जो ब्रह्म है;

'ब्रह्म'त्यभिधीयते । वा इदं क्षत्त्रादिजातं ब्रह्म वा'भिन्नमासीदेकमेव । नाऽऽसीत्क्षत्त्रादिभेदः । तद्ब्रह्मैकं क्षत्त्रादिपरिपालयित्रादिशून्यं सन्न व्यभवन्न' विभूतवत्कर्मणे नालमासीदित्यर्थः । 'ततस्तद्ब्रह्म ब्राह्मणोऽस्मि ममेत्थं' कर्तव्यमिति ब्राह्मणजातिनिमित्तं कर्म चिकीर्षदात्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपमत्यसृजता'तिशयेनासृजत सृष्टवत् । 'किं पुनस्तद्यत्सृष्टं, क्षत्त्रं क्षत्त्रियजातिः, तद्व्यक्तिभेदेन प्रदर्शयति—यान्येतानि' प्रसिद्धानि लोके 'देवत्रा

धंशब्दस्यावधारणार्थत्वं यदन्वाख्यानोक्तिपूर्वं क्रमेऽक्रमित्यस्यार्थमाह—इदमिति । द्वितीयमेवकारं व्याचष्टे—नाऽऽसीदिति । कथं 'तर्हि तस्य कर्मानुष्ठानसामर्थ्यसिद्धिरित्याशङ्क्य समनन्तरवाक्यं व्याचष्टे—सत इति । तदेव सृष्टमाकाङ्क्षाद्वारा स्पष्टयति—किं पुनरिति । एका चेत्क्षत्त्रजातिः सृष्टा कथं 'तर्हि यान्येतानीति बहूक्तिरित्याशङ्क्याऽऽह—तद्व्यक्तिभेदेनेति । क्षत्त्रजातेरेकत्वात्कथं क्षत्त्राणीति बहुवचन-

प्रक्रिया मे ही इन्द्रादिसर्ग समझ लेना चाहिये क्योंकि यह उसका शेषभूत है। अब्रह्मविद् के कर्माधिकार मे हेतु दिखाने के लिए यहाँ उसी का वर्णन किया जाता है।

"ब्रह्म वा इदमग्र आसीत्' अर्थात् अग्निसृष्टि कर जो अग्निरूप को प्राप्त हुआ, वह ब्रह्म ही ब्रह्म कहा जाता है। उस समय यह था। ब्राह्मणजाति का अभिमान होने के कारण वह अग्निरूप ब्रह्म कहा जाता है। उस समय यह क्षत्रादि समूह भी ब्रह्म से अभिन्न अर्थात् एकरूप ही था। पहले क्षत्रियादि (वर्ण) भेद नहीं था। वह ब्रह्म 'एकम्' अर्थात् क्षत्रियादि पालनकर्ता से शून्य होने के कारण विभूतियुक्त कर्म करने में समर्थ नहीं हुआ। इसके पश्चात् उस ब्रह्म ने "मैं ब्राह्मणवर्ण वाला हूँ, मेरा यह कर्तव्य है" ऐसा सोचकर ब्राह्मणजाति के कर्म करने की इच्छा से कर्मकर्तृत्वरूप विभूति के लिये 'श्रेयोरूपम्' अर्थात् प्रशस्तरूप की 'अत्यसृजत' अर्थात् प्रशस्तरूप से रचना की। वह कौन सा रूप था, जिसकी रचना की गयी ? वह थी क्षत्रियजाति। उन्हीं को 'यान्येतानि' इत्यादि श्रुति व्यक्तिभेद से दिखाती है, लोक में जो कि क्षत्रिय-रूप से देवताओं में प्रसिद्ध हैं। जातिवाचक शब्दों में विकल्प से बहुवचन होता है, ऐसे पाणिनीयसूत्र

१. अग्निरूप ब्रह्म । २ क्षत्रादिभेदशून्यम् । ३. न विभूतवत्कर्मण इति—ननु कथं कर्मानेकजातिमद्धेतु बृहस्पतिसववद्ब्राह्मणत्वजातिमन्मात्रसाध्य किं न स्यादिति चेन्न बृहस्पतिसवोऽपि पालयित्राद्यभावे न शक्यो निर्वर्तयितुमिति क्षत्त्रादिसृष्टिरावश्यकी । तदुक्तम् वार्तिके—"चातुर्वर्ण्यप्रसाध्य सर्वैकजातिप्रसाधनम् । कर्मालं सिद्धये लोके शिबिकोद्वहनं यथा" ॥ १६०० ॥ इति । ४. अनेकसाध्यं कर्म नैकेन सिध्यतीति विचारानन्तरम् । ५. कर्म । ६. ब्राह्मणजात्यपेक्षयापि श्रेष्ठत्वेन । ७. सहकार्यभावे । ८. ऐकाकिनं सृष्टत्वे ।

परमतां गच्छति ब्रह्म वान्तत उपनिश्रयति स्वां योनिं
य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापी-
यान्भवति यथा श्रेयाꣳ सꣳ हिꣳसित्वा ॥११॥

क्षत्रिय की योनि है। अतः यद्यपि राजा उत्कृष्टता को प्राप्त होता है, फिर भी राजसूय यज्ञ के अन्त में वह ब्राह्मण का ही आश्रय लेता है। अतः जो क्षत्रिय इस ब्राह्मण को पीड़ा पहुँचाता है, वह मानो अपनी योनि का ही नाश करता है। जैसे श्रेष्ठपुरुष की हिंसा करने से वह पापी होता है, वैसे ही वह पुरुष भी पापी होता है॥ ११॥

---

देवेषु क्षत्त्राणीति। जात्याख्यायां पक्षे बहुवचनस्मरणाद्व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनम्।

कानि पुनस्तानीत्याह तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते। इन्द्रो देवानां राजा। वरुणो यादसाम्। सोमो ब्राह्मणानाम्। रुद्रः पशूनाम्। पर्जन्यो विद्युदादीनाम्। यमः पितृणाम्। मृत्यू रोगादीनाम्। ईशानो भासामित्येवमादीनि देवेषु क्षत्त्राणि। तदन्विन्द्रादिक्षत्त्रदेवताधिष्ठितानि मनुष्यक्षत्त्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि। तदर्थ एव हि देवक्षत्त्रसर्गः प्रस्तुतः।

---

मित्याशङ्क्य 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' ( पा० सू० १ । २ । ५८ ) इति स्मृतिमाश्रित्याऽऽह—जातीति। बहुक्तेर्गत्यन्तरमाह—व्यक्तीति। तासां बहुत्वाज्जातेश्च तदभेदात्तत्रापि भेदमुपचर्य बहूक्तिरित्यर्थः। क्षत्त्राणीति बहुवचनमिति सबन्धः।

तेषां विशेषतो ग्रहणं क्षत्त्रस्योत्तमत्वं ख्यापयितुमिति मन्वानः सन्नाह—कानि पुनरित्यादिना। ननु किमिति देवेषु क्षत्त्रसृष्टिरुच्यते ब्राह्मणस्य कर्मानुष्ठानसामर्थ्यसिद्धयर्थं मनुष्येष्वेव तत्सृष्टिरुपदेष्टव्येत्याशङ्क्याऽऽह—तदन्विति। तथाऽपि विवक्षिता सृष्टिर्मुखतो वक्तव्येत्याशङ्क्योपोद्घातोऽयमित्याह—तदर्थ इति।

---

से अथवा भेदोपचार से इन्द्रादि व्यक्तियों के अनेक होने के कारण भी यहाँ 'क्षत्त्राणि' यह बहुवचन का प्रयोग है।

वे कौन हैं? इस पर श्रुति बतलाती है। यहाँ पूजनीय देवों का ही विशेषरूप से वर्णन किया गया है। देवताओं का राजा इन्द्र, जलचरों का राजा वरुण, ब्राह्मणों का राजा सोम, पशुओं का राजा रुद्र, विद्युदादि का नियन्ता मेघ, पितरों का ईश यम, रोगादि का अधिष्ठातृ देवता मृत्यु; प्रभा का अधिष्ठाता ईशान इत्यादि देवताओं में क्षत्रिय हैं। उनके पीछे इन्द्रादि क्षत्रिय देवताओं से अधिष्ठित पुरूरवा आदि सोम और सूर्यवंशी मनुष्य क्षत्रिय रचे गये—ऐसा समझना चाहिये। उन्हीं के लिए (मनुष्यों में क्षत्रसृष्टि के अभिप्राय से) ही देवक्षत्रसृष्टि को प्रस्तुत किया गया है।

---

१. पूज्या। २ यमदूत। ३ प्रभाणाम्। ४. मनुष्येषु क्षत्त्रसृष्ट्यभिप्रायत एव। ५ इन्द्रादिरूपेण। ६ अर्थत उक्तत्वेऽपि। ७ यद्वत।

यस्माद्ब्रह्मणाऽतिशयेन सृष्टं क्षत्रं तस्मात्क्षत्रात्परं नास्ति ब्राह्मणजातेरपि नियन्तृ। तस्माद्ब्राह्मणः कारणभूतोऽपि क्षत्रियस्य क्षत्रियमधस्ताद्व्यवस्थितः सन्नुपरिस्थितमुपास्ते। क्व। राजसूये। क्षत्र एव तदात्मीयं यशः ख्यातिरूपं ब्रह्मेति दधाति स्थापयति। राजसूयाभिषिक्तेनाऽऽसन्द्यां स्थितेन राज्ञाऽऽमन्त्रितो ब्रह्मन्निति ऋत्विक्पुनस्तं प्रत्याह त्वं राजन्ब्रह्मासीति। तदेतदभिधीयते क्षत्र एव तद्यशो दधातीति।

सैषा प्रकृता क्षत्रस्य योनिरेव यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां राजसूयाभिषेकगुणं गच्छत्याप्नोति ब्रह्मैव ब्राह्मणजातिमेवान्ततोऽन्ते कर्मपरिसमाप्तावुपनिश्रयत्याश्रयति स्वां योनिं पुरोहितं पुरो निधत्त इत्यर्थः। यस्तु पुनर्बलाभिमानात्स्वां योनिं ब्राह्मणजातिं ब्राह्मणं य उ एनं हिनस्ति हिंसति न्यग्भावेन पश्यति स्वामात्मीयामेव स

"तस्मादित्यादि व्याचष्टे—यस्मादिति। क्षत्रस्य नियन्तृत्ववदुत्कर्षे हेत्वन्तरमाह—तस्मादिति। ब्रह्मेति प्रसिद्धं ब्राह्मण्याख्यमिति यावत्। उक्तमेव प्रपञ्चयति—राजसूयेति। आसन्द्यां मञ्चिकायाम्।

क्षत्रे स्वकीयं यशः समर्पयतो ब्राह्मणस्य "निकर्षमाशङ्क्याऽऽह—सैषेति। तयोर्ब्राह्मणक्षत्रयोस्तुल्यत्वात्कुतोऽवान्तरभेदः क्षत्रमपि क्रतुकाले ब्राह्मण्यं प्राप्नोतीत्याशङ्क्याऽऽह—तस्मादिति। क्षत्रस्य ब्रह्माभिभवे दोषश्रवणात् "तस्य तदपेक्षया तद्गुणत्वमित्याह—यस्त्विति। प्रमादादपीति वक्तुमुशब्दः। य उ एनं हिनस्तीति प्रतीकग्रहणं यस्तु पुनरित्यादि व्याख्यानमिति भेदः। ईयसुनस्तरबर्थस्य प्रयोगे

क्योंकि ब्रह्म ने क्षत्रियजाति की अतिशयरूप से सृष्टि की है, इसलिए क्षत्रियजाति के सिवाय ब्राह्मणजातिका नियामक दूसरा कोई नही है। इसलिए (बलमें क्षत्रिय उत्तम होनेके कारण) क्षत्रियजाति का कारणभूत होने पर भी ब्राह्मण पृथिवी मे बैठकर मञ्च में बैठे हुए क्षत्रिय की उपासना करता है। कहाँ? राजसूय यज्ञ मे। उस समय यह क्षत्रिय मे ही 'तद्' अर्थात् अपने 'ब्राह्मणत्व' इस नामरूप यश को 'दधाति' अर्थात् स्थापित करता है। राजसूय यज्ञ मे अभिषिक्त मञ्चस्थ राजा के द्वारा 'ब्रह्मन्' इस प्रकार पुकारे जाने पर ऋत्विक् उत्तर मे उससे कहता है—"हे राजन्! तुम ब्रह्म हो" इसी से यह कहा जाता है कि "वह क्षत्रिय में ही अपना ब्राह्मणत्वरूप यश स्थापित करता है"।

यह जो है, वह ब्राह्मणजाति प्रकृत क्षत्रिय का उत्पत्तिकारण ही है। इसलिए यद्यपि राजा "परमताम्" अर्थात् राजसूयाभिषकरूप ब्रह्मत्वगुण को 'गच्छति' यानी प्राप्त हो जाता है, अपने उत्पत्ति कारण "ब्रह्मैव" अर्थात् ब्राह्मणजाति को ही 'अन्तत' यानी अन्त में कर्मपरिसमाप्ति के अवसर पर "उपनिश्रयति" अर्थात् आश्रय लेता है, अर्थात् आगे ले जाता है। तथा जो शक्ति के अभिमान से अपने

१. अन्यत्। २. क्षत्रस्य बलवत्त्वेनोत्तमत्वात्। ३. पृथिव्याम्। ४. मञ्चे। ५. उपासनमाह—क्षत्र इति। ६ ब्राह्मणत्वरूपम्। ७. ब्राह्मणोऽसीत्यर्थः। ८. ब्राह्मणजाति.। ९. उत्पत्तिकारणम्। १०. क्षत्रस्य पुरोहिताधीनत्वात्। ११. ब्रह्मत्वरूपम्। १२. अन्तत इति—एतेन राजसूयक्रत्वनुष्ठानकालेव तस्य ब्रह्मत्वप्राप्तिर्न तु ततः प्रागूर्ध्वं चेति ध्वनितम्। सापि प्रागुक्तरीत्या ब्राह्मणप्रयुक्तैव न तु स्वत इति ध्येयम्। १३. तिर्यग्दृष्ट्या। १४. तस्मादिति—कथं क्षत्रस्योत्तमत्वं ततोऽपि ब्राह्मणस्योत्कर्षादित्याशङ्क्येत्यादि। १५. निकर्षमिति पाठः साधुः। १६. तस्येत्यादि—तस्य क्षत्रस्य। तदपेक्षया ब्राह्मणाधीनतया। तद्गुणत्वम् ब्राह्मण्यगुणवत्त्वमित्यर्थः।

स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति ॥१२॥

(धनोपार्जन करने वाले का अभाव होने के कारण) वह ब्रह्म विभूतियुक्त कर्म करने में समर्थ नहीं हुआ। अतः उसने वैश्यजाति की उत्पत्ति की। जो ये वसु, रुद्र, आदित्य, विश्वेदेव और मरुत् इत्यादि देवगण एक-एक गणरूप में कहे जाते हैं, इन्हें उत्पन्न किया ॥ १२ ॥

---

योनिमृच्छति स्वं प्रसवं विच्छिनत्ति विनाशयति। स एतत्कृत्वा पापीयान्पापतरो भवति। पूर्वमपि क्षत्रियः पाप एव क्रूरत्वादात्मप्रसवहिंसया सुतराम्। यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति तद्वत् ॥११॥

क्षत्रे सृष्टेऽपि 'स नैव व्यभव'त्कर्मणे ब्रह्म तथा न व्यभवद्वित्तोपार्जयितुरभावात्। स विशमसृजत कर्मसाधनवित्तोपार्जनाय। कः पुनरसौ विट्। यान्येतानि देवजातानि स्वार्थे निष्ठा, य एते देवजातिभेदा इत्यर्थः। गणशो गणं गणमाख्यायन्ते कथ्यन्ते। गणप्राया हि विशः। प्रायेण संहता हि वित्तोपार्जने समर्था नैकैकशः। वसवोऽष्टसंख्यो

---

हेतुमाह—पूर्वमपीति। ब्राह्मणाभिभवे पापीयस्त्वमित्येतदुदाहरणेन बुद्धावारोपयति—यथेति ॥ ११ ॥

'कर्तुर्ब्राह्मणस्य नियन्तुश्च क्षत्रियस्य सृष्टत्वात्किमु'त्तरेणेत्याशङ्क्याऽऽह—क्षत्र इति। 'तद्व्याचष्टे—कर्मण इति। ब्रह्म ब्राह्मणोऽस्मीत्यभिमानी पुरुषः। तथा क्षत्रसर्गात्पूर्वमिवेति यावत्। कथं "तर्हि लौकिक"सामर्थ्यसंपादनद्वारा कर्मानुष्ठानमत आह—स विशमिति। देवजातानीत्यत्र तकारो निष्ठा। गणं गणं कृत्वा किमित्याख्यानं विशामित्याशङ्क्याऽऽह—गणेति। विशां समुदायप्रधानत्वमन्यापि प्रत्यक्षमित्याह—प्रायेणेति ॥१२॥

---

उत्पत्तिकारण ब्राह्मणजाति की 'हिनस्ति' अर्थात् हिंसा करता है, उसे हेय दृष्टि से देखता है, वह अपनी ही योनि का नाश करता है अर्थात् अपने ही प्रभव का विच्छेद या विनाश करता है। वह ऐसा करके 'पापीयान्' अर्थात् बड़ा पापी होता है। नृशंस होने के कारण क्षत्रिय पापी तो पहले भी था, अब अपने प्रभव की हिंसा करने से और भी पापी होता है। जिस प्रकार लोकव्यवहार में 'श्रेयांसम्' अर्थात् अधिक प्रशंसनीय का "हिंसित्वा" अर्थात् पराभव करके पुरुष बड़ा पापी होता है; उसी तरह उसे भी पाप लगता है ॥११॥

क्षत्रिय जाति की सृष्टि हो जाने पर भी 'स' अर्थात् वह सृष्टिकर्ता परमात्मा "नैव व्यभवत्" अर्थात् अनेक जातियुक्त व्यक्तिसाध्य कर्म करने के लिए धनार्जन-अभाव के कारण समर्थ नहीं हुआ। उस परमात्मा ने कर्म के साधनभूत धन का उपार्जन करने के लिए वैश्यवर्ण की सृष्टि की। वह वैश्य

---

१ प्रभवमित्यर्थः। २ स्रष्टा परमात्मा। ३ अनेकजातिमद्व्यक्तिसाध्य कर्म कर्तुम्। ४. कालाद्यनपेक्षभावमात्रे। ५ समुदायबहुला। ६. यागादे कर्तुं। ७ वैश्यादिसर्गेण तदन्तेन च। ८. पूर्ववाक्यम्। ९ अग्निपुरुष। १० सामर्थ्याभावे। ११ द्रव्यादि।

स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं
वै पूषेय्ँ हीदँ सर्वं पुष्यति यदिदं किंच ॥१३॥
स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदे-

(सेवक के न रहने से फिर भी) वह ब्रह्म विभूतियुक्तकर्म करने मे समर्थ नही हुआ। अत उसने शूद्रवर्ण को रचा। पूषादेव शूद्रवर्ण है, यह पृथिवी ही पूषा है, क्योकि यह जो कुछ है; उस सबका यही पोषण करती है ॥ १३ ॥

(चारो वर्णों को रचकर भी) वह ब्रह्म विभूतियुक्त कर्म करने मे समर्थ नही हुआ। तब उसने

गणस्तथैकादश रुद्रा द्वादशाऽऽदित्या विश्वे देवा दश विश्वाया अपत्यानि सर्वे वा देवा मरुतः सप्त सप्त गणाः ॥१२॥

स परिचारकाभावात्पुनरपि नैव व्यभवत्स शौद्रं वर्णमसृजत शूद्र एव शौद्रः स्वार्थेऽणि वृद्धिः। कः पुनरसौ शूद्रो वर्णो यः सृष्टः। पूषणं पुष्यतीति पूषा। कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति—इयं पृथिवी पूषा। स्वयमेव निर्वचनमाह—इयं हीदं सर्वं पुष्यति यदिदं किंच ॥१३॥

स चतुरः सृष्ट्वाऽपि वर्णान्नैव व्यभवदुग्रत्वात्क्षत्रस्यानियताशङ्कया तच्छ्रेयो-

कर्तुं पालयितृधनार्जयितृणां सृष्टत्वात्कृत वर्णान्तरसृष्टिरित्याशङ्क्याऽऽह—स परिचारकेति। शौद्रं वर्णमसृजतेत्यत्रौकारो वृद्धिः। पुष्यतीति पूषेत्युक्त्वा प्रश्नस्यानवकाशत्वमाशङ्क्याऽऽह—विशेषत इति। पूषशब्दस्यार्थान्तरे प्रसिद्धत्वात्कथं पृथिव्या वृत्तिरित्याशङ्क्याऽऽह—स्वयमेवेति ॥१३॥ ननु चातुर्वर्ण्ये सृष्टे तावतैव कर्मानुष्ठानसिद्धेरलं धर्मसृष्ट्येत्यत आह—स चतुर इति। अनियत-

कौन थे ? वह जो देवजात हैं। यहाँ कालाद्यनपेक्ष भावमात्र मे 'वत' प्रत्यय है। यह जो देवजाति के भेद हैं—यह अर्थ हुआ। 'गणश' अर्थात् एक-एक गण से 'आख्यायन्ते' अर्थात् कहे जाते है। क्योकि वैश्यजाति समुदाय-बहुल होती है। प्राय इकट्ठे होकर धन कमाने मे समर्थ होते हैं, एक-एक करके नही। वसु अष्टसख्या का गण है, ऐसे ही रुद्र ग्यारह तथा आदित्य बारह हैं। विश्वेदेव दस हैं, ये सभी विश्वा की सन्तान है, अथवा सम्पूर्ण देवगण भी, विश्वेदेवकथन का अभिप्राय है। मरुद्गण उनचास है ॥१२॥

परिचर्याकर्म करने वाले का अभाव होने से फिर भी वह विभूतियुक्त नही हुआ। उसने शूद्रजाति की रचना की। यहाँ स्वार्थ मे 'अण्' प्रत्यय एव आदिवृद्धि होने के कारण शूद्र ही शौद्र है। किन्तु यह जो उत्पन्न किया, वह शूद्रवर्ण कौन था ? "पूषणम्" अर्थात् जो पोषण करता है;

१ प्राणिजातम्। २ धर्ममिति—अत्र धर्मशब्देन धर्मोऽहमस्मीत्यभिमानिनी श्रुत्यादिप्रसिद्धा धर्माधिष्ठात्री चेतना देवताऽभिमता न तु प्रसिद्धोऽपूर्वाख्यो अचेतनोऽर्थो विवक्षित तस्या चेतनत्वेन क्षत्रादिनियामकत्वायोगादित्यन्यत्र विस्तर। ३. तम्। ४ चीक्षायाम्। ५ पूषशब्दवाच्य देवशूद्रम्। ६ चतुसख्याकान्। ७ क्षत्रस्य क्रूरतया तदीयनियामकाभावे तदनियत स्यादित्याशङ्क्येत्यर्थ। ८ पोषणकर्तुरन्यस्यापि सभवात्।

तत्क्षत्त्रस्य क्षत्त्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो
अबलीयान्बलीयाꣳसमाशꣳसते धर्मेण यथा
राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं

विशेषता से कल्याणप्रदरूप धर्म को उत्पन्न किया। यह जो श्रेयोरूप धर्म है, यही क्षत्रिय का भी नियामक है। अतः धर्म से श्रेष्ठ कुछ नहीं है। अतएव जैसे राजा की सहायता से (साधारण कुटुम्बी पुरुष) अपने से अधिक बलवान् को पराभव करना चाहता है, वैसे ही धर्म के द्वारा दुर्बल पुरुष भी बलवान्

रूपमत्यसृजत किं तद्धर्मं तदेतच्छ्रेयोरूपं सृष्टं क्षत्त्रस्य क्षत्त्रं क्षत्त्रस्यापि नियन्तृ। उग्रादप्युग्रम्[१]। यद्धर्मो यो धर्मस्तस्मात्क्षत्त्रस्यापि नियन्तृत्वाद्धर्मात्परं[२] नास्ति। तेन हि नियम्यन्ते सर्वे। तत्कथमिति। उच्यते—अथो अप्यबलीयान्दुर्बलतरोऽपि बलीयांसमात्मनो बलवत्तरमप्याशंसते कामयते जेतुं धर्मेण बलेन। यथा लोके कश्चिद्राज्ञा सर्वबलवत्तमेनापि कुटुम्बिक एवं [३]तस्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात्सर्वनियन्तृत्वम्।

साशङ्कया नियामकाभावे तस्यानियतत्वसंभावनयेति यावत्। तच्छब्दः स्रष्टृब्रह्मविषयः। कुतो धर्मस्य सर्वनियन्तृत्वं क्षत्त्रस्यैव तत्प्रसिद्धेरित्याह—तत्कथमिति। अनुभवमनुसृत्य परिहरति—उच्यत इत्यादिना। [४]तदेवोदाहरति—यथेति। राज्ञा [५]स्पर्धमान इति शेषः। धर्मस्योत्कृष्टत्वेन नियन्तृत्वे सत्यादभिन्नत्वं

वह पूपा है। फिर यह पूपा कौन है? इसे विशेषरूप से श्रुति बतलाती है—यह पृथ्वी पूपा है। फिर उसी की निरुक्ति कर कहती है। क्योंकि यह जो कुछ प्राणिजात है; उन सब का यही पोषण करती है॥१३॥

वह परमात्मा चारों वर्णों की सृष्टि करके भी इस आशङ्का से विभूतियुक्त कर्म करने में समर्थ नहीं हुआ कि उग्रस्वभाव वाला क्षत्रियजाति नियन्त्रण में नहीं रह सकती। तब उसने अतिशयता से श्रेयोरूप उत्पन्न किया। वह कौन है? धर्म श्रेयोरूप है। वह इस प्रकार उत्पन्न किया हुआ श्रेयोरूप धर्म 'क्षत्रस्य क्षत्रम्' अर्थात् क्षत्रियजाति का नियमनकर्ता है। उग्र से भी उग्र है; 'यद्धर्म' अर्थात् जो धर्म है, 'तस्मात्' अर्थात् क्षत्रियजाति का भी नियामक होने के कारण उस धर्म से श्रेष्ठ कोई नहीं है, क्योंकि उसी के द्वारा सब का नियन्त्रण होता है। वह कैसे? इस पर कहते हैं—जो 'अबलीयान्' अर्थात् अधिक निर्बल होता है, वह "बलीयासम्" अर्थात् अपने से बलवान् को धर्मरूपी बल से "आशसते" अर्थात् जीतना चाहता है। जिस प्रकार लोकव्यवहार में सबसे अधिक बलशाली राजा की सहायता से साधारण गृहस्थी भी अपने से बलवान् को जीतना चाहता है। उसी प्रकार वह धर्मबल हेतु है। अतः सर्वाधिक बलशाली होने के कारण धर्म ही सबका नियामक है; यह सिद्ध हुआ। वह जो लौकिक पुरुषों द्वारा अनुष्ठित यागादिव्यवहाररूप धर्म है, 'सत्य वै तत्' अर्थात् वह प्रसिद्ध ही है। शास्त्र द्वारा ज्ञेय अर्थ को ही सत्य कहते हैं। उसी का अनुष्ठान करना धर्म है। शास्त्र के तात्पर्यरूप से उसका ज्ञान होने

१. धर्मस्य प्रशास्तृत्वे हेतुमाह—उग्रादपीति। न हि बलवदपि क्षत्त्रं मर्यादामतिक्रामति धर्मेण नियमितत्वादिति भावः। २. प्रशस्तम्। ३. उक्तानुभवात्। ४. अनुभवनम्। ५. स्पर्धमान इति—धर्मात्मकबलाश्रयात् भूपं जेतुमुत्सहते एव तथाऽन्यत्रापि धर्मस्योत्कर्षसिद्धिरिति शेषः।

वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तँ सत्यं
वदतीत्येतद्ध्येवैतदुभयं भवति ॥१४॥

को जीतना चाहता है। जो धर्म है, वह निःसन्देह सत्य ही है। इसीलिये सत्य बोलने वाले को यह धर्म बोलता है तथा धर्मभाषण करने वाले को कहते हैं कि यह सत्यभाषण करता है, क्योंकि ये दोनों धर्म ही हैं। (अत ज्ञान और अनुष्ठान के अनुरूप धर्म, शास्त्रज्ञ तथा अशास्त्रज्ञ सबका नियन्ता होने से क्षत्रिय का भी नियामक है) ॥ १४ ॥

---

यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत्सत्यमिति यथाशास्त्रार्थता स एवानुष्ठीयमानो धर्मनामा भवति। शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति। यस्मादेवं तस्मात्सत्यं यथाशास्त्रं वदन्तं व्यवहारकाल आहुः समीपस्था उभयविवेकज्ञा धर्मं वदतीति प्रसिद्धं लौकिकं न्यायं वदतीति तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः सत्यं वदति। शास्त्रादनपेतं वदतीति। एतद्यदुक्तमुभयं ज्ञायमानमनुष्ठीयमानं चैतद्धर्म एव भवति। तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च

---

हेत्वन्तरमाह—यो वा इति। कथं धर्मस्य सत्यत्वं 'स हि पुण्यधर्मो' वचनधर्मः सत्यत्वमित्यनन्तरमेवादित्याशङ्क्याऽऽह—स एवेति। यथोक्ते विवेके लोकप्रसिद्धिं प्रमाणयति—यस्मादिति। उभयशब्दो धर्मसत्यविषयः। धर्मं वदतीत्येतदेव विभजते—प्रसिद्धमिति। यथा शास्त्रानुसारेण वदन्तं धर्मं वदतीति वदन्ति तथा पूर्वोक्तवचनवैपरीत्येन, धर्मं वदन्तं सत्यं वदतीत्याहुरिति योजना। धर्ममेव व्याचष्टे—लौकिकमिति। सत्यं वदतीत्येतदेव स्फुटयति—शास्त्रादिति। "कार्यकारणभावेन" तयोरेकत्वमुपसंहरति—एतदिति। "शास्त्रार्थसंशये शिष्टव्यवहारान्निश्चयो" यथा यववराहादिशब्देषु। "धर्मसंशये तु शास्त्रार्थवशान्निर्णयो यथा "चैत्यवन्दनादिव्युदासेनाग्निहोत्रादौ। "अतो हेतुहेतुमद्भावादुभयोरैक्यमिति भावः।

---

से वह सत्य है। उक्तरीति से दोनों में अभेद होने के कारण लोकव्यवहार में 'सत्यम्' अर्थात् शास्त्रानुसार भाषण करने वाले को धर्म और सत्य के मर्मज्ञ मध्यस्थ लोग "यह धर्मयुक्तवचन बोलता है, लोकानुष्ठेय होने से प्रसिद्ध लौकिक न्याय कहता है" ऐसा कहते हैं। इसी तरह इससे विपरीत 'धर्मम्' अर्थात् लौकिक व्यवहार बताने वाले को 'यह सत्य बोलता है, शास्त्र के अनुकूल बोलता है" ऐसा कहते हैं। ये जो ज्ञात की जाने वाली दोनों बातें बतायी गयी हैं। ये दोनों धर्म ही हैं। अतः ज्ञान और अनुष्ठानपरक धर्म शास्त्रवेत्ता और अशास्त्रवेत्ता सभी का नियन्त्रण करता है। इसलिए वह क्षत्रियजाति

---

१ यागादिरूप। २ प्रसिद्धम्। ३ शास्त्रं वदतीति यावत्। ४ उक्तरीत्योभयोरभेद। ५ मध्यस्था। ६ लोकानुष्ठानत्वन। ७. अविरुद्धमनुकूलम्। ८. यागादिरूपो धर्म। ९ वाङ्मात्रवृत्ति। १० परस्परम्। ११ सत्यधर्मयो। १२. सत्यधर्मयो पूर्वोक्त कार्यकारणभाव, कथमित्याशङ्क्य धर्मस्य सत्य प्रति हेतुत्व तावदुपपादयति—शास्त्रार्थसंशय इति। सत्यसंशये सतीत्यर्थ। 'यवा धान्ये दीर्घशूकतो। वराहो नाऽऽणके किरौ मेघे मुस्ते गिरौ विष्णाविति" च हैम। किरिः सूकर। १३ भवति। १४ अधुना सत्यस्य धर्मं प्रति हेतुत्वमुपपादयति—धर्मसंशय इति। १५. चैत्य जैनमन्दिर तद्देवता वा तद्वन्दने धर्मत्वमपाकृत्याग्निहोत्रादौ धर्मत्वनिश्चय शास्त्राद्भवतीति। १६ उक्तोपपत्तित।

**तदेतद्ब्रह्म क्षत्त्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्त्रियेण क्षत्त्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्या॑ हि रूपाभ्यां ब्रह्माभवत्।**

वे ये ब्राह्मण क्षत्रिय, वैश्य और शूद्र चार वर्ण हैं। इनका स्रष्टा ब्रह्म अग्निरूप से देवताओं मे ब्राह्मणजाति हुआ। यही ब्रह्म मनुष्यो ब्राह्मणरूप से ब्राह्मण, क्षत्रियरूप से क्षत्रिय, वैश्यरूप से वैश्य और शूद्ररूप से शूद्र हो गया। इसीलिए अग्नि मे ही देवताओं के बीच म कर्म करते हुए कर्मफल की इच्छा करते है, क्योकि इन्ही अग्नि तथा ब्राह्मण दोनो रूपों से ब्रह्म प्रकट हुआ था। जो भी कोई पुरुष

सर्वानेव ¹नियमयति¹¹। तस्मात्स ¹²क्षत्त्रस्यापि क्षत्त्रमत³स्तदभिमानोऽविद्वांस्त⁴द्विशेषानुष्ठानाय ब्रह्मक्षत्त्रविट्शूद्र¹³निमित्तविशेष⁵मभिमन्यते। तानि च निसर्गत एव कर्माधिकारनिमित्तानि ॥१४॥

¹⁴तदेतच्चातुर्वर्ण्यं सृष्टं ब्रह्म क्षत्त्र विट्शूद्र इत्युत्तरार्थं उपसंहारः। यत्तत्स्रष्टृ ब्रह्म तदग्निनैव नान्येन रूपेण देवेषु ब्रह्म ब्राह्मणजातिरभवद्ब्राह्मणो ब्राह्मणस्वरूपेण

धर्मस्य सत्यादभेदे फलितमाह—'तस्मादिति। तस्य सर्वनियन्तृत्वेऽपि प्रकृते किमायातं तदाह—"तस्मात्स इति। "तर्हि यथोक्तधर्मवशादेव कर्मानुष्ठानसिद्धेर्वर्णाश्रमाभिमानस्याकिंचित्करत्वमित्याशङ्क्याऽऽह—"अत इति। धार्मिकत्वाद्यभिमानो ब्राह्मण्याद्यभिमान पुरोधायानुष्ठापकश्चेत्तदभिमानोऽपि तथैवाभिमानान्तर पुरस्कृत्यानुष्ठापयेदित्याशङ्क्याऽऽह—"तानि चेति। न खल्वविदुषो धार्मिकस्य ब्राह्मण्यादिषु निमित्तेषु सत्सु कर्मप्रवृत्तौ निमित्तान्तरमपेक्ष्यते प्रमाणाभावादित्यर्थः ॥ १४ ॥

पुनरुक्तिवैयर्थ्यमाशङ्क्योक्तम्—उत्तरार्थ इति। "पूर्वत्र देवेषु दर्शितस्य वर्णविभागस्य मनुष्येषूत्तरग्रन्थेन योजनार्थं इति यावत्। सृष्टवर्णचतुष्टयनिविष्टमवान्तरविभागमभिधातुमारभते—यत्तदिति। नान्येन देवान्तररूपेण क्षत्त्रादिविकारान्तरेणेति यावत्। विकारान्तरम"ग्निब्राह्मणलक्षणम्। क्षत्त्रि-

का भी नियामक है। अतः उस धार्मिकत्व का अभिमान रखने वाला अब्रह्मवित् पुरुष उसके धर्मविशेषरूप का अनुष्ठान करने के लिए ब्राह्मण क्षत्रिय वैश्य अथवा शूद्ररूप निमित्तविशेष मे करने लगता है। ये ब्राह्मणादिवर्ण स्वभावतः ही कर्मप्रवृत्ति मे निमित्त है ॥१४॥

इस प्रकार ब्राह्मण क्षत्रिय, वैश्य और शूद्र इन चारो वर्णों की सृष्टि की, यह उपसंहार

१ नियमतः प्रवर्तयति। २ धार्मिकत्वाभिमान। ३ बृहस्पतिसवादिधर्मविशेष। ४ एतन्निमित्तविशेषमित्यर्थः। ५ अभिमन्यत इति—तथा च धार्मिकत्वाभिमानमात्रं न कर्मानुष्ठानप्रयोजकमपितु वर्णाश्रमाद्यभिमानपूर्वकमतो न तस्या किंचित्करत्वमिति भाव। ६ दैवम्। ७ अग्निरूपेण। ८ तयोरभेदात्। ९ धर्मस्य क्षत्त्रक्षत्त्रत्वे। १० धर्मस्य सर्वनियन्तृत्वात्। ११ तस्य सर्वनियन्तृत्वे। १२ तस्य क्षत्त्रस्यापि नियन्तृत्वात्। १३ ब्राह्मण्यादीनि निमित्तानि। १४ पूर्वत्रेति—अथेत्यभ्यमन्थदित्यग्निसर्गोक्तावप्यग्नेस्तत्र ब्राह्मण्यं नोक्तमिति तद्वचनायायमुपसंहार इत्यपि द्रष्टव्यम्। १५ अन्यात्मकब्राह्मणलक्षणम्।

अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तो-ऽन्यद्वा कर्माकृतं यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽऽत्मानमेव लोक--

आत्मा को जाने बिना ही इस लोक से चला जाता है, वह इस अज्ञात आत्मलोक का शोकादिनिवृत्ति के द्वारा पालन नहीं करता, जिस प्रकार अध्ययन के बिना स्वरूपतः वेद, या अनुष्ठान के बिना स्वरूपतः कोई अन्य कर्म, पुरुष का पालन नहीं करता वैसे ही आत्मा को न जानने वाला पुरुष यदि इस लोक में कोई महान् पुण्य करता भी हो तो अन्त में उसका वह सुकृत नष्ट हो ही जाता है। अतः जो आत्म

---

मनुष्येषु ब्रह्मा समवर्तितेषु वर्णेषु 'विकारान्तरं प्राप्य क्षत्रियेण क्षत्रियोऽभवदिन्द्रादिदेवताधिष्ठितो' वैश्येन वैश्यः शूद्रेण शूद्रः। 'यस्मात्क्षत्रादिषु विकारापन्नमग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलमिच्छन्त्यग्निसम्बद्धं कर्म कृत्वेत्यर्थः। तदर्थमेव हि तद्ब्रह्म 'कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितम्। तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्त इत्येतदुपपन्नम्।

---

येणेत्यत्र विवक्षितमर्थमाह—इन्द्रादिदेवताधिष्ठित इति। वैश्येनेति वस्वाद्यधिष्ठितत्वमुच्यते। शूद्रेणेति पूषाधिष्ठितत्वम्। अग्न्यादिभावमापन्नस्य क्षत्रादिभावो न तु क्षत्रादिभावनापन्नस्याग्न्यादिभाव इत्येतावन्मात्रेण ब्रह्मणो विकृतत्वाविकृतत्वमग्निब्राह्मणस्तुत्यर्थमुक्तमित्यभिप्रेत्य तस्मादित्यादि व्याचष्टे—यस्मादिति। यथोक्तप्रार्थनाया न्याय्यत्वं साधयति—तदर्थमेवेति। कर्मफलदानार्थमिति यावत्।

---

अग्रिम ग्रन्थ से सम्बन्धद्योतन के लिए है। वह जो सृष्टिकर्ता ब्रह्म था वह अग्निरूप से ही देवताओं में ब्रह्म अर्थात् ब्राह्मणजाति हुआ किसी अन्य रूप में नहीं। वह ब्रह्म मनुष्यों में ब्राह्मण अर्थात् अग्निरूप से ब्राह्मण हुआ। इसी प्रकार अन्य वर्णों में अग्नि की अपेक्षा विकारान्तर को प्राप्त होकर क्षत्रियरूप में इन्द्रादि देवताओं से अनुगृहीत क्षत्रिय हुआ तथा वैश्यरूप से वैश्य और शूद्ररूप से शूद्र हुआ। क्योंकि आकाशादिरूप में अविकृत सृष्टिकर्ता ब्रह्म क्षत्रियादि में विकार को प्राप्त हो गया है, केवल अग्नि और ब्राह्मण में स्थित हो वह विकारशून्य है इसलिये लोकव्यवहार में देवों में अग्निदेवता में ही अग्निसम्बन्धी कर्म करके कर्मफल की इच्छा करते हैं। इसी निमित्त से वह ब्रह्म होमादिकर्म के आधारभूत अग्निरूप से स्थित है। इसलिए उस अग्निनिमित्तक कर्म को करके मनुष्य उसके फल की प्रार्थना करते हैं यह उचित ही है।

---

१ अग्न्यपेक्षया। २ नियन्त्रितोऽनुगृहीतश्च। ३ यस्मादिति—यस्मादाकाशाद्यात्मना विकृतमपि स्रष्टृ ब्रह्म क्षत्रादिरूपेणाविकृतमेव अग्नौ ब्राह्मणे च स्थितमितरत्र तु अग्न्याद्यात्मनाविकृतमेव तस्मादित्यर्थः। ४ होमादि। ५ निमित्त। ६ एतावन्मात्रेणेति—न तु सर्वथैवाविकृतं स्रष्टृ ब्रह्माग्निब्राह्मणभावापन्नमाकाशादिरूपेण तु पूर्वं विकृतत्वादित्यर्थः।

मुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । [१]अस्माद्ध्येवाऽऽत्मनो यद्यत्कामयते तत्तत्सृजते ॥१५॥

लोक की ही उपासना करता है, उसका कर्म नष्ट नही होता । इस आत्मा से ही पुरुष जिस-जिस को चाहता है, उस-उस को बना लेता है ॥१५॥

ब्राह्मणे मनुष्येषु मनुष्याणां पुनर्मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा किं तर्हि जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः । यत्र तु देवाधीना पुरुषार्थसिद्धिस्तत्रैवाग्न्यादिसंबद्धक्रियापेक्षा । स्मृतेश्च—"[२]जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इति ॥

मनुष्याणां मध्ये कर्मादि मनुष्यमवलम्ब्य कर्मफल[३]भोगापेक्षायामधिकरणसंप्रदानभावेनावस्थिताग्नीन्द्रादिनिमित्तक्रियापेक्षा नास्ति किंतु ब्राह्मणजातिप्राप्तिमात्रेण तत्संबद्धं जप्यादि कर्म[४]स्वयंभावीति तन्मात्रेण पुरुषार्थं सिध्यतीति प्रतीकग्रहणपूर्वकमाह—मनुष्याणामिति । कुत्र तर्हि यथोक्तक्रियापेक्षेति तत्राऽऽह—यत्र त्विति । देवानां मध्येऽग्निसंबद्धमेव कर्म कृत्वा पुरुषार्थलाभो मनुष्याणां मध्ये तु ब्राह्मण्यप्रयुक्तजप्यादिमात्रेण तत्प्राप्तिरित्यत्र प्रमाणमाह—स्मृतेश्चेति । जप्यग्रहणं जातिमात्रप्रयुक्तकर्मोपलक्षणार्थम् । अन्यदग्निसंबद्धं कर्म । कोऽसौ ब्राह्मणो नाम तत्राऽऽह—मैत्र इति । सर्वेषु भूतेष्वभयप्रदो [६]विशिष्टजातिमानिति यावत् । ननु यथोक्तस्मृतेर्ब्राह्मण्यप्रतिलम्भमात्रादभ्युदयलाभेऽपि

'ब्राह्मणे मनुष्येषु' अर्थात् मनुष्यों के मध्य कर्मफल की इच्छा होने पर अग्न्यादिनिमित्तक कर्म की अपेक्षा नहीं है, तो क्या है ? वहाँ ब्राह्मणजातिमात्र का स्वरूप उपलब्ध हो जाने से पुरुषार्थसिद्धि हो जाती है । जहाँ पुरुषार्थसिद्धि देवाधीन होती है, वहीं अग्न्यादि से सम्बन्ध रखने वाली क्रियाओं की अपेक्षा होती है । यही बात स्मृति भी प्रतिपादित करती है—"ब्राह्मण अग्न्यादि अन्य कर्म करे अथवा न करे, सर्वभूतों को अभयप्रदान करने से अशेष सद्गुणों से विशिष्ट 'मैत्र' कहलाता है, जपात्मक मानसकर्म द्वारा वैराग्य, सन्यास व ब्रह्मलोक प्राप्ति के क्रम से निःश्रेयस को प्राप्त कर लेता है, इसमें लेशमात्र भी सन्देह नहीं है ।"

इसके अतिरिक्त कर्मकाण्डी ब्राह्मण के लिए सन्यास का विधान होने से भी मनुष्यलोक में उसकी श्रेष्ठता सिद्ध होती है । अतः मनुष्यों में ब्राह्मण होने पर ही 'लोकम्' यानी कर्मफल की इच्छा

१ अस्मादिति—स आत्मोपासक यद्यदिष्टं कामयते, अस्मादेवात्मनोऽकाज्जातात्तत्तदिष्टं सृजते उत्पादयते प्राप्नोति न साधनान्तरमपेक्षत इत्यर्थः । तथा च वार्तिके—"यद्यत्कामयते कामी कर्मभूपावस्थितः । अस्मादेवाऽऽत्मविज्ञानात्तत्तत्सुखमुपाश्नुते ॥ १६८६ ॥ इति । २ जप्येनेति—जपात्मकमानसकर्मणा । संसिद्ध्येत्—वैराग्यसंन्यासब्रह्मलोकप्राप्तिक्रमेण निःश्रेयसं लभेतेत्यर्थः । जप्यस्य निःशेषपापनिबर्हणत्वादित्यर्थः । ३ सपादनेच्छायाम् । ४ जप्यादि विना ब्राह्मण्यासंभवात् । ५ मनुष्यसाध्यपुरुषार्थेऽग्न्यादिसाध्यक्रियानपेक्षत्वे । ६ विशिष्टेति—सर्वभूताभयप्रदत्वाद्यशेषसद्गुणविशिष्टा या ब्राह्मणत्वजातिस्तद्वानेव जप्यमात्रसिद्धपर्हो ब्राह्मणो नामेत्यर्थः ।

पारिव्राज्यदर्शनाच्च । 'तस्माद्ब्राह्मणत्व एव मनुष्येषु लोक कर्मफलमिच्छन्ति' । यस्मादेताभ्यां हि ब्राह्मणाग्निरूपाभ्यां कर्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत् ।

अत्र तु परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्तीति केचित् । तदसत् । अविद्याधिकारे 'कर्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात्परेण' च विशेषणात् । यदि ह्यत्र लोकशब्देन पर एवाऽऽत्मोच्येत परेण विशेषणमनर्थकं 'स्यात्स्वं लोकमदृष्ट्वेति । स्वलोकव्यतिरिक्तश्चेदग्न्यधीनतया प्रार्थ्यमानः प्रकृतो लोकस्ततः स्वमिति युक्तं विशेषणं प्रकृत-

---

कुतस्ततो निःश्रेयससिद्धिस्तत्राऽऽह—पारिव्राज्येति । 'ब्राह्मणाः व्युत्थायाथ भिक्षाचर्यं चरन्तीति ब्राह्मणस्य पारिव्राज्यं श्रूयते तच्च संन्यासाद्ब्रह्मणः स्थानमिति" ब्रह्मलोकसाधनं गम्यते । "अतश्च ब्राह्मणजातिनिमित्तं "लोकमिच्छन्तीति युक्तमित्यर्थः । ब्राह्मणे मनुष्येष्वित्यस्यार्थमुपसंहरति—तस्मादिति । 'हेतुवाक्यमादाय व्याचष्टे—यस्मादिति । हिशब्दार्थो यस्मादित्युक्तः । यत्स्रष्टृ ब्रह्म तदेताभ्यां यस्मा"त्साक्षादभवत्तस्मादग्नावेवेत्यादि युक्तमिति योजना ।

अग्नौ हुत्वा "ब्राह्मणे च दत्त्वा परमात्मलक्षणं लोकमाप्तुमिच्छन्तीति भर्तृप्रपञ्चव्याख्यानमनुवदति—अत्रेति । सप्तमी तस्मादित्यादिवाक्यविषया । प्रक्रमालोचनाया कर्मफलमिह" लोकशब्दार्थो न परमात्मा प्रक्रमभङ्गप्रसङ्गादिति दूषयति—तदसदिति । कर्माधिकारार्थं कर्मसु प्रवृत्तिसिद्ध्यर्थमिति यावत् । वाक्यशेषगतविशेषणवशादपि कर्मफलस्यैवात्र लोकशब्दवाच्यत्वमित्याह—परेण चेति । "तदेव प्रपञ्चयति—यदि हीति । परपक्षे स्वमिति विशेषणं व्यावर्त्याभावान्न घटते चेत्स्वपक्षेऽपि कथं तदुपपत्तिरित्याशङ्क्याऽऽह—स्वलोकेति । परशब्दोऽनात्मविषयः । ननु प्रकृते वाक्ये लोकशब्देन परमात्मा

---

करते हैं क्योंकि कर्म का कर्ता ब्राह्मण और कर्म का अधिकरण अग्नि है, इन दो रूपों में सृष्टिरचयिता ब्रह्म ही व्यक्त हुआ था।

अग्नि में हवन कर ब्राह्मण को दान देकर परमात्मलोक की प्राप्ति की इच्छा करते है, भर्तृप्रपञ्च के मत के कुछ लोग ऐसा कहते है । ऐसा कहना ठीक नहीं है। अविद्या के कार्य चातुर्वर्ण्यादिप्रकरण में कर्माधिकार के लिए वर्णविभाग का वर्णन किया गया है क्योंकि यहाँ श्रुतिवाक्य में 'लोक' शब्द, परमात्मा का विशेषणरूप से अन्वय करने के लिए है। यदि इस वाक्य में 'लोक' शब्द से परमात्मा का ग्रहण किया जाय तो "स्वं लोकमदृष्ट्वा" यह विशेषण व्यावर्त्याभाव होने से अनुपयोगी सिद्ध हो जायगा। यदि अग्नि के अधीन प्रार्थित प्रकृतलोक आत्मरूपलोक से भिन्न हो तभी 'स्व' यह विशेषण प्रस्तुत अनात्मलोक की निवृत्ति के लिए होने के कारण उपयुक्त होगा। क्योंकि प्रत्यक्रूप से

---

१ ब्राह्मण्यस्य ब्रह्मलोकसाधनत्वात् । २ निमित्ते सति । ३ कर्मिणः । ४ रूप्यमवत् । ५ अविद्याकार्यं चातुर्वर्ण्यादिप्रकरणे । ६ परेण चेति—लोकशब्दार्थेन परेण परमात्मना स्वशब्दार्थस्यात्मनो विशेषणात् विशेषणत्वेनान्वयकरणादित्यर्थः । ७ वाक्ये । ८ व्यावर्त्याभावात् । ९ आत्मरूपलोक । १० बृ० उ० ३।५।१, ४।४।२२ । ११ स्मृत्या । १२ ब्राह्मण्यस्य संन्यासद्वारा ब्रह्मलोकसाधनत्वात् । १३ कर्मफलम् । १४ अग्निब्राह्मणयोः क्षत्राद्यपेक्षप्राधान्ये हेतुभूतं वाक्यम् । १५ क्षत्रादिविकारमन्तरेण । १६ ब्राह्मणायेत्यर्थः । १७ अस्मिन् वाक्ये । १८ परेण विशेषणत्वमेव ।

परलोकनिवृत्त्यर्थत्वात्[1]। स्वत्वेन चाव्यभिचारात्परमात्मलोकस्य[2]। अविद्याकृतानां च स्वत्वव्यभिचारात्। ब्रवीति च कर्मकृतानां व्यभिचारं क्षीयत एवेति[3]।

ब्रह्मणा सृष्टा वर्णाः[4] कर्मार्थम्। तच्च कर्म धर्माख्यं सर्वानेव कर्तव्यतया नियन्तृ पुरुषार्थसाधनं च। तस्मात्तेनैव चेत्कर्मणा स्वो लोकः परमात्माख्योऽविदितोऽपि प्राप्यते किं तस्यैव पदनीयत्वेन क्रियत इत्यत आह—अथेति पूर्वपक्षविनिवृत्त्यर्थः। यः कश्चिद्ध वा अस्माद्[10]सांसारिका[11]त्पिण्डग्रहणलक्षणादविद्याकामकर्महेतुकादग्न्यधीनकर्माभिमानतया वा ब्राह्मणजातिमात्रकर्माभिमानतया वाऽऽगन्तुकाद[12]स्वरूपभूतात् लोकात्स्वं लोकमात्मा-

नोच्यते चेदुत्तरवाक्येऽपि तेन नासावुच्येत विशेषाभावादित्याशङ्क्य विशेषणसामर्थ्यान्नैवमित्याह—स्वत्वेन चेति। कर्मफलविषयत्वेनापि विशेषणस्य नेतु शक्यत्वान्न विशेषसिद्धिरित्याशङ्क्याऽऽह—अविद्येति। तेषां स्वत्वव्यभिचारे वाक्यशेषं प्रमाणयति—ब्रवीति चेति।

उत्तरवाक्यव्यावर्त्यं पूर्वपक्षमाह—ब्रह्मणेति। तत्पुनरचेतनमकिंचित्करमित्याशङ्क्याऽऽह—तच्चेति। सर्वैरेव वर्णैः स्वस्य कर्तव्यतया तान्प्रति नियन्तृ भूत्वेति योजना। तस्य पुमर्थोपायत्वप्रसिद्धिमादाय फलितमाह—तस्मादिति। अविदितोऽपीति दृष्टैव। देवतागुणं कर्म मुक्तिहेतुरिति पक्षं प्रतिक्षेप्तुमुत्तरं वाक्यमुत्थापयति—अत आहेति। ज्ञानादेव मुक्तिर्न कर्मणेत्यागमप्रसिद्धमिति निपातयोरर्थः। तत्र निमित्तमुपादानं चेति द्वयं संक्षिपति—अविद्येति। निमित्तं विवृणोति—अग्न्यधीनेति।

परमात्मलोक अव्यभिचारी नहीं है, केवल अविद्याकृत लोकों का व्यभिचार है। कर्मजनित लोकों का परमात्मलोक से 'क्षीयत एव' इस वाक्य से श्रुति व्यभिचार बतलाती है।

ब्रह्मा ने वर्णाश्रमादि सृष्टि कर्म करने के लिए की थी। वह कर्म धर्मनाम वाला है, जो कर्तव्य-रूप से सभी का नियन्ता एवं परमार्थ का साधन है। अतः यदि उसी ही कर्म द्वारा स्वर्लोक या परमात्मलोक अज्ञात होने पर भी प्राप्त हो जाता है, तो उपलब्धरूप से उसी के लिए और क्या करने की आवश्यकता है? इस पर श्रुति कहती है। 'अथ' यह पद पूर्वपक्ष की निवृत्ति के लिए है। 'य' अर्थात् जो कोई भी 'ह वै अस्मात्' इस अविद्या कामकर्मजनित एवं अग्नि के अधीन कर्माभिमान के कारण अथवा ब्राह्मणजातिमात्र के कर्माभिमान के कारण उत्पन्न, आरोपित सांसारिक (अहंममाभिमानरूप) पिण्डग्रहण से, आत्मरूप से गृहीतदेह से आत्मसंज्ञक लोक का, जो आत्मस्वरूप होने से

१ स्वत्वेनेति—स्वत्वं प्रत्यक्त्वं तेनाव्यभिचारित्वं परमात्मलोकस्य तस्य सर्वप्रत्यक्त्वात्। २ अनात्मनस्तु कर्म कामस्य परा च तदव्यभिचारित्वमतिस्फुटमित्याह—अविद्येति। ३ बृ० उ० ३।४।१५। ४—आश्रमादिसर्वधर्मोपलक्षणमिदं वर्णादिहेतुत्वभावं कर्मानुष्ठानायोग्यत्वात्। ५ चेतनात्मकम्। ६ कर्मणः पुमर्थसाधकत्वात्। ७ ननु तनवति कथमवधार्यते ज्ञानस्यापि तत्र हेतुत्वमभवादित्याशङ्क्य समुच्चयं (ज्ञानकर्मणोः) निरासितुं विशिनष्टि अविदितोऽपीति। "कर्मणैव हि संसिद्धि"मित्यादिस्मृतौ निरपेक्षस्यैव कर्मणः संसिद्धिशब्दिते मोक्षे साधकत्वावगमादित्यर्थः। ८ ज्ञातव्यत्वेन। ९ यदुक्तं तन्नेत्यर्थकोऽयं। १० आरोपितात्। ११ अहंममाभिमानरूपात्। १२ उत्पन्नात्। १३ उत्पत्तिविनाशवत्त्वादेव वस्तुतोऽनात्मनः। १४ आत्मत्वेन गृहीतात्। १५ देहात्। १६ प्रत्यञ्चम्। १७ शब्दे। १८ अनात्मलोकप्रतिपादकत्वेन। १९ कर्म। २० कर्मणः। २१ कर्मणः। २२ देवतात्मको यो गुणः शेषः तच्छेषं कर्म देवताधिष्ठितं वा कर्मेत्यर्थः। २३ पिण्डग्रहणं।

स्यमात्मत्वेनाव्यभिचारित्वाददृष्ट्वाऽहं ब्रह्मास्मीति प्रैति; 'म्रियते[१]; स यद्यपि 'स्वो लोको'ऽविदितोऽविद्यया व्यवहितोऽस्व इवाज्ञात एनं 'संख्यापूरण इव लौकिक आत्मानं न भुनक्ति न पालयति शोकमोहभयादिदोषापनयेन।

यथा च लोके वेदोऽननूक्तोऽनधीतः कर्माद्यवबोधकत्वेन न भुनक्त्यन्यद्वा लौकिकं कृष्यादि कर्माकृतं स्वात्मनाऽनभिव्यञ्जितमात्मीयफलप्रदानेन न भुनक्त्येवमात्मा स्वो लोकः स्वेनैव नित्यात्मस्वरूपेणानभिव्यञ्जितोऽविद्यादिप्रहाणेन न भुनक्त्येव।

ननु किं स्वलोकदर्शननिमित्तपरिपालनेन कर्मणः 'फलप्राप्तिध्रौव्याविष्टफलनिमि-

आत्माख्यस्य लोकस्य 'सत्त्वे हेतुमाह—आत्मत्वेनेति। अहं ब्रह्मास्मीत्यदृष्ट्वेति संबन्धः। यः परमात्मा-नमविदित्वैव म्रियते तमेनं परमात्मा न पालयतीति योजना। परमात्मनः स्वरूपत्वादविदितस्यापि पाल-यितृत्वं स्यादित्याशङ्क्याऽऽह—स यद्यपीति। लोकशब्दादुपरिष्टात्तथाऽपीति द्रष्टव्यम्। अविदित इत्यस्य व्याख्यानमविद्ययेत्यादि। परमात्माख्यो लोको नाज्ञातो भुनक्तीत्यत्र कर्मफलभूत लोकं 'वैधर्म्यदृष्टान्ततया दर्शयति—अस्व इवेति। अज्ञातस्यापालयितृत्वे 'साधर्म्यदृष्टान्तमाह—संख्येति। यथा लौकिको दशमो दशमोऽस्मीत्यज्ञातो न शोकादिनिवर्तनेनाऽऽत्मानं भुनक्ति तथा परमात्माऽपीत्यर्थः।

'तत्रैव श्रुत्युक्तं दृष्टान्तद्वयं व्याचष्टे—यथा चेत्यादिना। अविद्यादीत्यादिशब्देन तत्कार्यं सर्वं संगृह्यते।

यदिहेत्यादिवाक्यापोह्यं चोद्यमुत्थापयति—नन्विति। नन्वनिष्टफलनिमित्तस्यापि कर्मणः फल-प्राप्तिध्रौव्यात्कथं कर्मणा मोक्षः सेत्स्यति तत्राऽऽह—इष्टेति। बाहुल्यमश्वमेधादिकर्मणो महत्तरत्वं

अव्यभिचारी है, "मैं ब्रह्म हूँ" इस प्रकार न जानकर "प्रैति' अर्थात् मर जाता है; यद्यपि वह लोक प्रत्यग्रूप है तथापि 'अविदित' यानी, अविद्या से व्यवहित अप्रत्यक् के समान अज्ञात रहने पर 'एनम्' लौकिक दृष्टान्त मे दशम सख्यापूर्ति के समान इस आत्मा का 'न भुनक्ति' अर्थात् शोक, मोह एव भय आदि दोषो की निवृत्ति द्वारा पालन नही करता।

जिस प्रकार लोकव्यवहार मे 'अननुक्त' अर्थ विना अध्ययन किया हुआ वेद, कर्मादि के अव-बोधकरूप से पालन नही करता, अथवा अन्य कृषि आदि लौकिक कर्मो का 'अकृतम्' अर्थात् स्वरूप से अनुष्ठित न होने से अपने फल प्रदान के द्वारा पालन नही करता, उसी प्रकार प्रत्यग्रूप आत्मा अपने नित्य आत्मस्वरूप से अभिव्यञ्जित न होने के कारण अविद्यादि के विनाश के द्वारा पालन नही करता।

यहाँ शङ्का उठती है, तो फिर आत्मलोक के ज्ञान के कारण होने वाले परिपालन से क्या प्रयोजन सिद्ध होता है? कर्मफलप्राप्ति के अक्षय होने से मोक्ष के कर्मफलक-होने से इष्टफल के हेतुक

१ म्रियत इति—ज्ञानादज्ञाननिवृत्तिर्विदुषो मरणम्, स्वाज्ञानात्म संसर्गोऽज्ञस्य मरण सघाताभिमानपरित्याग-पुरसर (स्थूलदेहत्यागपूर्वकम्) अज्ञानपरवशत्वमिति यावदिति विवेकः। यो हि परमात्मानमात्मत्वेनाविदित्वा-ऽस्मादात्मत्वेन गृहीतादनात्मभूताद्देहान्म्रियतेऽत्रामति तदभिमानं परित्यजन्नविद्यापरवशोऽवश्य भवतीति वाक्यार्थ। २ प्रत्यग्रूप। ३ तथापि। ४ दशत्वसंख्यापूरक। ५ कर्मफलप्राप्तेरक्षयत्वात् कर्मफल-त्वादेव मोक्षस्येति यावत्। ६ स्वेत्यर्थः। ७. व्यतिरेकिदृष्टान्ततया। ८. अन्वयिदृष्टान्तम्। ९. अज्ञातस्यारक्षकत्वे।

त्स्यं च कर्मणो बाहुल्यात्तन्निमित्तं पालनमक्षयं भविष्यति । तन्न । कृतकस्य क्षयवत्त्वादित्येतदाह—यदिह वै संसारेऽद्भुतवत्कश्चिन्महात्माऽप्यनेवंविदस्वं लोकं यथोक्तेन विधिनाऽविद्वान्महद्बह्वश्वमेधादि पुण्यं कर्मेष्टफलमेव नैरन्तर्येण करोत्यनेनैवाऽऽनन्त्यं मम भविष्यतीति । तत्कर्म हास्याविद्यावतोऽविद्याजनितकामहेतुत्वात्स्वप्नदर्शनविभ्रमोद्भूतविभूतिवदन्ततोऽन्ते फलोपभोगस्य क्षीयत एव । तत्कारणयोरविद्याकामयोश्चलत्वात्कृतक्षयध्रौव्योपपत्तेस्तस्मान्न पुण्यकर्मफलपालनानन्त्याशाऽस्त्येव ।

अत "आत्मानमेव स्वं लोकमात्मानमिति स्व लोकमित्यस्मिन्नर्थे" स्वं लोकमिति

---

"तद्धि दुरितमभिभूय मोक्षमेव संपादयिष्यतीत्यर्थः । यत्कृतकं तदनित्यमिति न्यायमाश्रित्य परिहरति—तन्नेत्यादिना । सप्तम्यर्थं संसार इति निपातार्थं सूचयति—अद्भुतवदिति । अनेवंविदस्वं व्याकरोति—स्व लोकमिति । यथोक्तो विधि"रन्वयव्यतिरेकादि । पुण्यकर्म"च्छिद्रेषु दुरितप्रसक्तिं निवारयति—नैरन्तर्येणेति । तथा पुण्यं सचिन्वतोऽभिप्रायमाह—अनेनेति । प्रक्रान्तयच्छब्दापेक्षितं कथयति—तत्कर्मेति । "प्रागुक्तन्यायद्योतो हेति निपातः । कारणरूपेण कार्यस्य ध्रुवत्वमाशङ्क्याऽऽह—तत्कारणयोरिति ।

मुक्तेरनित्यत्वदोषसमाधिस्तर्हि" केन प्रकारेण स्यादित्याशङ्क्याऽऽह"—अत इति । आत्मशब्दार्थमाह—स्व लोकमिति । "तदेव स्फुटयति—आत्मानमितीति । आत्मशब्दस्य प्रकृतस्वलोकविषयत्वे

---

कर्म स्वभावतः अधिक होने से, उसके कारण उसका पालन ( मोक्षाख्य ) अक्षय हो जायगा । ( जो कृतक है, वह अनित्य है, इस न्याय का अनुसरण कर समाधान देते हैं—) ऐसा कहना ठीक नहीं क्योंकि किया हुआ कर्म क्षीण हो जाता है । इसे ही कहते हैं—'यदि ह वै'' जो कोई अद्भुततुल्य महात्मा भी इस संसार मे 'अनेववित्' यानी आत्मलोक को उपर्युक्त विधि से न जानने वाला अब्रह्मवित्, इस धारणा से कि "मुझे अनन्त फल की प्राप्ति होगी", निरन्तर बहुत से इष्टफल देनेवाले

---

१ मोक्षाख्यम् । २ प्रमादेनापि पापमनाचरतो नैरन्तर्येण च पुण्यमनुतिष्ठतो जगति दुर्लभत्वमभिप्रेत्योक्तम्—अद्भुतवदिति । आश्चर्यतुल्य इत्यर्थः । ३ अव्यवधानेन । ४ अक्षयमोक्षरूपम् । ५ दर्शनरूपो विभ्रमः । ६ क्षीयत एवेति—कर्मसाध्यत्वे मुक्तेरन्तवत्त्वं स्यात्तत्साध्यस्य गृहादेस्तन्नियमात् 'तद्यथेह कर्मजितो लोकः क्षीयते' इत्यादिश्रुतेरिति भावः । ७ कर्मकारणयोरित्यर्थः । ८ क्षयित्वात् । ९ कर्मफलेरित्यर्थः । १० कर्मसाध्यस्यानित्यत्वात् । ११ फलरूपं यत्पालनं रक्षणं तत्र । १२ कृतकस्यानित्यत्वात् । १३ आत्मानमेवेति—प्रत्यगभिन्नं परमात्मानमशेषानात्मदृष्टिपरिहारेणानिशमनुसन्दधीत । आत्मज्ञानान्मोक्षे तन्नित्यता सिध्यति । मोक्षापिधानहानमात्रस्य ज्ञानाधीनत्वादिति भावः । सर्वस्य कार्यकारणात्मनोऽनर्थस्य तद्दृष्टेश्च निवृत्त्यर्थं प्रत्यङ्मात्रदृष्टिरेष्टव्या तदर्थमेव पदम् । तदुक्तं वार्तिके—' निःशेषानात्मसद्दृष्टिनिराकरणसिद्धये । एवेत्यवधृतिर्ज्ञेया प्रत्यङ्मात्रेक्षणाय तु" ॥ १६८४ ॥ इति । पराग्दृष्ट्यपेक्षया प्रत्यग्दृष्टौ पुरुषार्थंकृतं विशेषं दर्शयितुं तुशब्दः । १४ स्वरूपभूतम् । १५ परमात्मानम् । १६ प्रयुक्तम् । १७ अश्वमेधादिकर्म । १८ अन्वयव्यतिरेकेति—परमात्मलोकस्य स्वत्वेनाव्यभिचारोऽन्वयः । अनात्मलोकस्य तत्त्वेन व्यभिचारो व्यतिरेकः पदार्थशोधनादिरादिशब्दार्थः । १९ सन्धिषु । २० यत्कृतकं तदनित्यमिति न्यायद्योती । २१ ज्ञानेनापि तु तस्याः साध्यत्वे सति । २२ आहेति—स्वपक्षेऽपि मोक्षस्य साध्यत्वादनित्यतेति चोद्योत्तरत्वेन वाक्यमवतारयतीत्यर्थः । २३ सङ्ग्रहवाक्यम् ।

प्रकृतत्वादिह[१] च स्वशब्दस्याप्रयोगादुपासीत। स य आत्मानमेव लोकमुपास्ते। तस्य किमित्युच्यते[२]—न हास्य कर्म क्षीयते। कर्माभावादेवेति नित्यानुवादः[३]। यथाऽविदुषः कर्मक्षयलक्षणं संसारदुःखं संततमेव[४] न तथा तदस्य[५] विद्यत इत्यर्थः। मिथिलायां प्रदीप्तायां न मे दह्यति किंचनेति यद्वत्।

स्वात्मलोकोपासकस्य विदुषो विद्यासंयोगात्कर्मैव न क्षीयत[६] इत्यपरे वर्णयन्ति।

---

हेत्वन्तरमाह—इह चेति। प्रयोगे तु पुनरुक्तिभयादर्थान्तरविषयत्वमपि स्यादित्यर्थः। विद्याफलमाकाङ्क्षाद्वारा निक्षिपति—स य इति। कर्मफलस्य क्षयित्वमुक्त्वा कर्मणोऽक्षयत्वं वदतो व्याहतिमाशङ्क्याऽऽह—कर्मेति। वाक्यस्य विवक्षितमर्थं वैधर्म्यदृष्टान्तेन व्याचष्टे—यथेति। अविदुष इति च्छेदः। कर्मक्षयेऽपि[७] वा विदुषो दुःखाभावे दृष्टान्तमाह—मिथिलायामिति।

आत्मानमित्यादि[८] केवलज्ञानान्मुक्तिरित्येवंपरतया व्याख्यातं संप्रति "तत्र भर्तृप्रपञ्चव्याख्यामुत्थापयति—स्वात्मेति। आत्मलोकोपासकस्य कर्माभावे कथं तदक्षयवाचो[१०] युक्तिरित्याशङ्क्य कर्मा-

---

अश्वमेधादि पुण्यकर्म भी करे; तो भी उस अब्रह्मवित् का अविद्याजनितकामहेतुक वह कर्म स्वप्न में दीखने वाले अमित-ऐश्वर्य के समान फलोपभोग के बाद क्षीण हो ही जाता है; क्योंकि कर्म के कारण अविद्या और काम क्षयस्वभाव वाले हैं; इसलिए उस कर्मफलविनाश की निश्चितता उचित ही है। इसलिए कर्मसाध्यता के अनित्य होने के कारण पुण्यकर्मफल के द्वारा अनन्तकाल तक रक्षण की आशा तो है ही नहीं।

उत्पन्न सभी पदार्थों के अनित्य होने के कारण 'आत्मानमेव' यानी प्रत्यगभिन्न परमात्मा की ही अर्थात् स्वरूपभूत परमात्मा की ही उपासना करे। 'स्व लोकम्' इस अर्थ में 'आत्मानम्' यह पद प्रयुक्त हुआ है। क्योंकि यह प्रकरण "स्व लोकम्" यहाँ से प्रारम्भ होता है और यहाँ "स्व" शब्द का प्रयोग नहीं किया गया। वह जो आत्मलोक की उपासना करता है, उसको क्या होता है? इस पर कहते हैं, उसका कर्म क्षीण नहीं होता क्योंकि यह नित्यसिद्ध कर्माभाव का अनुवाद है। भावार्थ यह है कि जिस प्रकार अब्रह्मवित् के लिए कर्मक्षयरूप संसारदुःख निरन्तर ही रहता है, उस प्रकार विद्वान् के लिए नहीं होता। जैसे ब्रह्मवित् विदेह राजा जनक के उद्गार हैं—"मिथिलापुरी के जल जाने पर भी मेरा कुछ भी नहीं जलता" इत्यादि।

(भर्तृप्रपञ्चमतानुयायी आदि) कुछ अन्य दार्शनिकों का विचार है कि स्वात्मलोक के विद्वान् उपासक का कर्म विद्या-साहचर्य होने के कारण क्षीण नहीं होता। वे ज्ञानकर्म के समुच्चय के अनुष्ठान-

---

१. वाक्ये। २. किं फलं भवतीति जिज्ञासायामिदमुच्यत इत्यर्थः। ३. नित्येति—कर्माभावादेवास्य कर्म न क्षीयत इति नित्यसिद्धस्यैव कर्माभावस्यायमनुवाद इत्यर्थः। ४. निरन्तरं भवति। ५. विदुषः। ६. दर्शयति। ७. अभ्युपगतेऽपि वा कर्मक्षये। ८. ननु 'क्षीयन्ते चास्य कर्माणि', 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति विदुषोऽपि कर्मक्षयः प्रमाणसिद्धस्ततो 'न हास्य कर्म क्षीयते' इति विरुद्धमित्याशङ्क्याऽऽह—कर्मक्षये ऽपीत्यादि। ९. वाक्यम्। १०. वाक्ये। ११. वचसो युक्तत्वम्।

लोकशब्दार्थं च कर्मसमवायिनं द्विधा परिकल्पयन्ति किल, एको व्याकृतावस्थः कर्माश्रयो लोको हैरण्यगर्भाख्यस्तं कर्मसमवायिनं लोकं व्याकृतं परिच्छिन्नं य उपास्ते तस्य किल परिच्छिन्नकर्मात्मदर्शिनः कर्म क्षीयते। तमेव कर्मसमवायिनं लोकमव्याकृतावस्थं कारणरूपमापाद्य यस्तूपास्ते तस्यापरिच्छिन्नकर्मात्मदर्शित्वात्तस्य कर्म न क्षीयत इति।

भवतीयं शोभना कल्पना न तु श्रौती। स्वलोकशब्देन प्रकृतस्य परमात्मनोऽभिहितत्वात्। स्वं लोकमिति प्रस्तुत्य स्वशब्दं विहायाऽऽत्मशब्दप्रक्षेपेण पुनस्तस्यैव प्रति-

भावस्यासिद्धिमभिसंधाय कर्मसाध्यं लोकं व्याकृताव्याकृतरूपेण भिनत्ति—लोकशब्दार्थं चेति। औत्प्रेक्षिकी कल्पना न तु श्रौतीति यत्तु किलेत्युक्तम्। तत्राऽऽद्यं लोकशब्दार्थमनूद्य तदुपासकस्य दोषमाह—एक इति। परिच्छिन्नः कर्मात्मा तत्साध्यो व्याकृतावस्थो लोकस्तस्मिन्नहंग्रहोपासकस्येति यावत्। द्वितीयं लोकशब्दार्थमनूद्य तदुपासकस्य लाभं दर्शयति—तमेवेति। यथा कुण्डलादेरन्तर्बहिरन्वेषणे सुवर्णातिरिक्तरूपानुपलम्भात्तद्रूपेणास्य नित्यत्वं तथा कर्मसाध्यं हिरण्यगर्भादिलोकं कार्यत्वादव्याकृतं कारणमेवेत्यङ्गीकृत्य यस्तस्मिन्नहंबुद्ध्योपास्ते तस्यापरिच्छिन्नकर्मसाध्यलोकात्मोपासकत्वाद्ब्रह्मवित्त्वं कर्मित्वं च घटते तस्य खल्वात्मैव कर्म तेन तस्य तन्न क्षीयते। य पुनरद्वैतावस्थामुपास्ते तस्याऽऽत्मैव कर्म भवतीति हि भर्तृप्रपञ्चैरुक्तमित्यर्थः।

आत्मानमित्यादिसमुच्चयपरमिति प्राप्तं पक्षं प्रत्याह—भवतीति। श्रौतत्वाभावे हेतुमाह—स्वलोकेति। स्वं लोकमदृष्ट्वेत्यत्र स्वलोकशब्देन परस्य प्रकृतस्याऽऽत्मानमेवेत्यत्र प्रकृतहानाप्रकृतप्रक्रियापरिहारार्थमुक्तत्वान्नात्र लोकद्वैविध्यकल्पना युक्तेत्यर्थः। लोकशब्देनात्र परमात्मपरिग्रहे हेत्व-

रूप फल की कर्म से सम्बद्ध 'लोक' शब्द का अर्थ दो प्रकार से कल्पना करते हैं। उनमें एक तो कार्यरूप से स्थित ज्ञानकर्मसमुच्चयानुष्ठान साध्य हैरण्यगर्भाख्यलोक है, उस नामरूपाभिव्यक्त और परिच्छिन्न कर्मसम्बन्धी लोक की जो उपासना करता है, उस परिच्छिन्न कर्मात्मदर्शी का कर्म क्षीण हो जाता है। एवं जो उस व्याकृतरूप में स्थित कर्मसम्बन्धी लोक को अव्याकृतावस्था वाला अर्थात् कारण रूप निश्चय करके उपासना करता है, उस अपरिच्छिन्न कर्मात्मदर्शी का वह कर्म क्षीण नहीं होता।

उनकी यह कल्पना सुन्दर तो है, परन्तु शास्त्रसम्मत नहीं है। क्योंकि प्रस्तुतप्रकरण में 'स्वलोक' शब्द के द्वारा श्रुति परमात्मा का ही प्रतिपादन करती है। 'स्वं लोकम्' यहाँ से उपक्रम करके

१ कर्मसमवायिनं ज्ञानकर्मसमुच्चयानुष्ठानफलम्। २ कार्यावस्थः। ३ ज्ञानकर्मसमुच्चयानुष्ठानसाध्यः। ४ नामरूपाभिव्यक्तम्। ५ व्याकृतावस्थमेव। ६ निश्चित्य। ७ कर्मसाध्यम्—सूत्रोपास्तिसहितयज्ञित्यादिकर्म तत्साध्यम्। लोकः फलम्। ८ तर्कमूलिका। ९ द्वयोर्मध्ये। १० ज्ञानकर्मसमुच्चयसाध्यः। ११ हिरण्यगर्भः। १२ यदा कुण्डलादि उत्पद्यते विनश्यति च तदा कनकं तु तथैव तिष्ठतीति तन्नित्यम्। १३ अपरिच्छिन्नं कर्मसाध्योऽव्याकृतावस्थो लोकस्तस्मिन्नहंग्रहोपासकत्वाद्धिरण्यगर्भात्मकब्रह्मवित्त्वम्। १४ ननु कृतकस्य क्षयध्रौव्यात्कथं तस्य कर्म क्षीयत इत्ययुक्तमत आह—तस्येति। कर्मात्मिकां द्वैतावस्थामद्वैतात्मना पश्यतस्तस्य कर्म न क्षयमासादयति कर्मणो वस्तुमात्रेण पर्यवसानादित्यर्थः। वस्तुमात्रेणेति स्वरूपमात्रतया। १५ परस्येति—कर्मफलभूतलोकव्यावृत्तये स्वशब्दार्थविशेषणेन लोकशब्दार्थस्य विशेष्यतया संबन्धदर्शनादिति भावः। १६ वाक्ये।

निर्देशादात्मानमेव लोकमुपासीतेति । तत्र 'कर्मसमवायिलोककल्पनाया अनवसर एव ।
परेण च केवलविद्याविषयेण विशेषणात् किं प्रजया करिष्यामो येषां नोऽयमा-
त्माऽयं लोक इति । पुत्रकर्मापरविद्याकृतेभ्यो हि लोकेभ्यो विशिनष्टि अयमात्मा नो
लोक इति । "न हास्य केनचन कर्मणा लोको मीयत एषोऽस्य परमो लोकः" इति
च । तैः "सविशेषणैरस्यैकवाक्यता युक्ता । इहापि स्वं लोकमिति विशेषणदर्शनात् ।
अस्मात्कामयत इत्ययुक्तमिति चेदिह स्वो लोकः परमात्मा तदुपासनात्स एव

न्तरमाह—स्वं लोकमितीति । यथा लोकस्य स्वशब्दार्थो विशेषणं तथाऽऽत्मानमित्यत्र स्वशब्दपर्याया-
त्मशब्दार्थस्तस्य विशेषणं दृश्यते न च कर्मफलस्य" मुख्यमात्मत्वमतो लोकशब्दोऽत्र परमात्मैवेत्यर्थः ।
प्रकरणाद्विशेषणाच्च सिद्धमर्थं वक्ष्यति—"तत्रेति ।
परस्यैव लोकशब्दार्थत्वे हेत्वन्तरमाह—परेणेति । "उक्तमेव प्रपञ्चयति—पुत्रेति । अथ परेषु
वाक्येषु परमात्मा लोकशब्दार्थः प्रकृते तु कर्मफलमिति व्यवस्थेति चेन्नैकवाक्यत्वसंभवे तद्भेदस्या-
न्याय्यत्वादित्याह—तैरिति । एकवाक्यत्वसंभावनामेव वक्ष्यति—इहापीति । यथोत्तरत्राऽऽत्मादिशब्देन
लोको विशेषितस्तथाऽऽत्मानमित्यत्राप्यात्मशब्देन विशेष्यते । पूर्ववाक्ये च स्वं लोकमदृष्ट्वेति स्वशब्दे-
नाऽऽत्मवाचिना तस्य विशेषणं दृश्यते । तथा च पूर्वापरालोचनायामेकवाक्यत्वसिद्धिरित्यर्थः ।
प्रकरणेन परस्य लोकशब्दार्थत्वमयुक्तं "लिङ्गविरोधादिति चोदयति—अस्मादिति । "तदेव

फिर स्वशब्द का त्याग कर उसके स्थान में आत्मशब्द का प्रयोग करके उसी को 'आत्मानमेव लोक-
मुपासीत' इस प्रकार पुनः निर्देश किया है । इसलिये यहाँ कर्मानुष्ठानफलभूत सूत्राख्य लोक की कल्पना
का अवसर ही नहीं है ।
इसके अतिरिक्त "उनका निश्चय था कि हम मोक्षाभिलाषियों को तो यह आत्मलोक प्राप्त
करना ही अभीष्ट है; हमें प्रजा से क्या लेना है ।" इस अग्रिम श्रुति से उसे केवल ज्ञानविषयकवाक्य
से विशिष्ट कहा गया है । 'अयमात्मा नो लोकः' यह कहकर श्रुति उसे पुत्र, कर्म और अपरा विद्या
द्वारा प्राप्त लोकों से पृथक् बतलाती है । तथा यह भी श्रुति बतलाती है कि "इसका यह आत्मलोक
किसी भी पापकर्म से नष्ट नहीं होता; यह इसका परमलोक है" । उन विशेषणघटित वाक्यों से
इस श्रुतिवाक्य की एकवाक्यता होनी चाहिए क्योंकि यहाँ भी 'स्वं लोकम्' ऐसा विशेषण देखा जाता है ।
यदि कहो 'इससे कामना करता है', ऐसा कहना ठीक नहीं है । भावार्थ यह है कि 'यहाँ

१. कर्मानुष्ठानफलभूतसूत्राख्यलोककल्पनायाः । २. परेणेति—षष्ठे 'स वा एष महानज' इत्यादिविद्याप्रकरणे
'येषां नोऽयमात्माऽयं लोक' इति केवलविद्याविषयेण परेणात्मना लोकशब्दार्थस्य कर्मफललोकव्यावृत्त्यर्थं विशेषणा
द्विशेष्यतयाऽन्वयकरणादत्रापि परमात्मैव लोकोऽन्यथा पूर्वापरविरोधादित्यर्थः । संदिग्धस्य वाक्यशेषान्निर्णयं
भवतीति न्यायं द्योतयितुं चशब्दः । ३. बृ० उ० ४।४।२२ । ४. व्यावर्तयति । ५. अपरोक्षः । ६
स्वयंप्रभः । ७. न हास्येति—कौषीतकिब्राह्मणे त्वेवं पाठो दृश्यते । तथाहि—'नास्य केन च कर्मणा लोको
मीयते' ३-१ ॥ इति । ८. पापेन । ९. हिंस्यते नश्यतीति यावत् । १०. बृ० उ० ४।३।३२ । ११
विशेषणघटितैः । १२. सूत्रस्य । १३. हेतुभ्यां परमात्मनि लोकशब्दार्थे स्थिते सतीत्यर्थः । १४. हेत्वन्तर
मेव । १५. प्रकरणापेक्षया लिङ्गस्य बलत्वादर्थप्रकाशनसामर्थ्यं लिङ्गम् । १६. सङ्गृहीतमेव ।

भवतीति स्थिते यद्यत्कामयते तत्तदस्मादात्मनः सृजत इति तदात्मप्राप्तिव्यतिरेकेण फल-वचनमयुक्तमिति चेन्न । स्वलोकोपासनस्तुतिपरत्वात् । स्वस्मादेव लोकात्सर्वमिष्टं संपद्यत इत्यर्थो नान्यदतः प्रार्थनीयमाप्तकामत्वात् । "आत्मतः प्राण आत्मत आशा" इत्यादि श्रुत्यन्तरे यथा । सर्वात्मभावप्रदर्शनार्थो वा पूर्ववत् ।

'यदि हि पर एवाऽऽत्मा संपद्यते तदा युक्तोऽस्माद्ध्येवाऽऽत्मन इत्यात्मशब्दप्रयोगः

---

विवृणोति—इहेत्यादिना । अर्थवादस्थं लिङ्गं न प्रकरणाद्बलवदिति मत्वा समाधत्ते—नेत्यादिना । स्तुतिमेव स्पष्टयति—स्वस्मादेवेति । लोकाज्ज्ञातादिति शेषः । यथा छान्दोग्ये स्तुत्यर्थमात्मनः स्रष्टृत्व-मुच्यते तथाऽत्राप्यात्मलोकं स्तोतुमेतत्फलवचनमित्याह—आत्मत इति । भवतु वा मा वा भूदस्माद्ध्ये-वेत्यादिरर्थवादस्तथाऽपि 'तस्य सर्वात्मत्वप्रदर्शनार्थत्वाद्युक्तमत्र' लोकशब्देन परमात्मग्रहणमित्याह—सर्वात्मेति । तस्मात्तत्सर्वमभवदिति वाक्यं दृष्टान्तयति—पूर्ववदिति ।

किंचाऽऽत्मशब्दस्य त्रिधापरिच्छेदशून्यार्थवाचिताया यच्चाऽऽप्नोतीत्यादिन्यायेन सिद्धत्वात्तत्स-मानाधिकरणलोकशब्दस्यापि तदर्थत्वात्परस्यैवात्र लोकत्वमित्याह—यदि हीति । किं च यदि लोक-शब्देन परं हित्वाऽर्थान्तरमुच्यते तदा "सविशेषणं वाक्यं स्यादन्यथा" स्व लोकमिति प्रकृतपरमात्म-लोकस्य स्वत्पक्षेऽनन्तरोक्तव्यक्तब्रह्मलोकस्य च "व्यावृत्त्ययोगात् । न चात्र" सविशेषणं "वाक्यं दृष्टमतः

---

स्वलोक परमात्मा है, उसकी उपासना करने से पुरुष तद्रूप ही हो जाता है । ऐसा हो जाने पर "उससे जो-जो कामना करता है, उसी-उसी की सृष्टि कर लेता है" । इस प्रकार परमात्मप्राप्ति से भिन्नफल बतलाना उचित नहीं है, तो ऐसा कहना ठीक नहीं क्योंकि यह श्रुतिवाक्य स्वलोक उपासना की स्तुति करने वाला है, तात्पर्यप्रतिपादक नहीं । 'आत्मलोक में ही सारी इष्टसिद्धि हो सकती है'— यह इसका अर्थ है । इसे छोड़कर कोई दूसरी वस्तु चाहने योग्य नहीं है क्योंकि आत्मवेत्ता पूर्णकाम होता है । "आत्मा ही से प्राण है, आत्मा ही से आशा है" इत्यादि अन्य श्रुति द्वारा सिद्ध होता है अथवा आत्मवेत्ता का सर्वात्मभाव प्रदर्शित करने के लिए "तस्मात्सर्वमभवत्", यह पूर्ववत् ग्रन्थ है ।

यदि लोकशब्द से परमात्मा ही अभिलक्षित होता है, तभी तो "अस्माद्ध्येवात्मन" इस प्रकार श्रुतिवाक्य में आत्मशब्द का प्रयोग करना उचित होगा । 'इस स्वरूपभूत प्रकृत आत्मलोक से'

---

१ परमात्मेत्यर्थः । २ अयुक्तमिति—अत्र लोकशब्देन परस्य ग्रह 'अस्माद्ध्येवे'त्ययुक्तम् । तत्र हि लोकशब्दा-र्थात्कामिन फलोत्पत्तिः श्रुता न च परस्य कारणत्वमपूर्वमनपरमित्यादिश्रुत । न चार्थवादया तत्त्वम् स्वत्पक्षे विद्या-प्रकरणे तदयोगात् । अस्य विद्यासूत्रैकवाक्यत्वस्वीकारात् । अतो लिङ्गं न प्रकरण बाध्यमिति भाव । ३. तथा च न तत्र तात्पर्यम् । ४ "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति भाव । अखिल महत् । ५ ग्रन्थ । ६ परमात्मैव लोकशब्दार्थोऽभ्युपगम्यते विज्ञायत इति यावत् । ७ लोकशब्दार्थे इति शेष । ■ वाक्यस्य । ९ वाक्ये । १० अर्थान्तरमिति—परापराभ्यामन्तरालावस्थमव्याकृताख्य कर्मानुष्ठानफलभूत-मिति यावत् । ११ सविशेषणमिति—अव्याकृतावस्थादस्मादित्येव सविशेषणेन भाव्य वाक्येनेत्यर्थ । १२ सविशेषणत्वानभ्युपगमे । १३ व्यावृत्त्ययोगादिति—न हि त्वया परस्मात्कामसृष्टिरिष्टा (कामत सृष्टि यथेच्छ सृष्टि ) तस्या पूर्वादिश्रुतिसिद्धत्वात् । नापि ब्रह्मलोकात् कार्यत्वादस्तद्व्यावृत्त्यर्थं विशेषणमवश्य वाच्य-मित्यर्थ । १४ बृहदारण्यके । १५ 'अस्माद्ध्येवेति" वाक्यम् ।

**अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन**

यह जो (कर्माधिकारी अज्ञानी गृहस्थरूप) आत्मा है, वह समस्त जीवों का भोग्य है। वह जो होम, यज्ञ करता है, उससे देवताओं का वह भोग्य बन जाता है, जो स्वाध्याय करता है, उससे ऋषियों का, जो पितरों के लिये पिण्ड देता है तथा सन्तान को चाहता है, उससे पितरों का, जो मनुष्यों को

---

स्वस्मादेव प्रकृतादात्मनो लोकादित्येवमर्थः। 'अन्यथाऽव्याकृतावस्थात्कर्मणो' लोकादिति सविशेषणमवक्ष्यत्प्रकृतपरमात्मलोकव्यावृत्तये व्याकृतावस्थाव्यावृत्तये च। न ह्यस्मिन्प्रकृते विशेषितेऽश्रुतान्तरालावस्था प्रतिपत्तुं शक्यते॥ १५॥

अथो अयं वा आत्मा। अत्राविद्वान्वर्णाश्रमाद्यभिमानी धर्मेण नियम्यमानो 'देवादिकर्मकर्तव्यतया पशुवत्परतन्त्र इत्युक्तम्। कानि पुनस्तानि कर्माणि यत्कर्तव्यतया पशुवत्परतन्त्रो भवति। के वा ते देवादयो येषां कर्मभिः पशुवदुपकरोतीति तदुभयं प्रपञ्चयति—

अथो इत्ययं 'वाक्योपन्यासार्थः। अयं यः 'प्रकृतो गृही कर्माधिकृतोऽविद्वाञ्छरी-

---

स्वं लोकमिति प्रकृतं परमात्मैवात्रापि लोक इत्याह—'अन्यथेति। विशेषणं विनैवास्माद्विषयत्र परापरास्यामर्थान्तरं किं न स्यादित्याशङ्क्याऽऽह—न हीति। स्वं लोकमिति प्रकृते परमात्मन्यात्मानमेवेति विशेषिते' चाव्याकृताख्या परापराभ्यामन्तरालावस्था न प्रतिपत्तुं शक्यते तस्याः श्रुतत्वाभावादित्यर्थः॥ १५॥

कण्डिकान्तरमवतार्य वृत्तमनूद्याऽऽकाङ्क्षापूर्वकं तात्पर्यमाह—अथो इत्यादिना। अत्रेत्यविद्यावस्था पूर्वग्रन्थो वा गृह्यते। 'अविचार्यमस्याथोशब्दस्यासंगतिमा'ऽऽशङ्क्य व्याकरोति—अथो इतीति। पर-

---

यह इसका अर्थ है। अन्यथा लोकशब्द के अर्थान्तर अभीष्ट होने पर इस प्रकरण में परमात्मलोक और व्याकृतावस्था की व्यावृत्ति के लिए 'अव्याकृतरूप से स्थित कर्मानुष्ठानफलभूत लोक से' इस प्रकार श्रुति विशेषणपूर्वक उल्लेख करती। यहाँ "स्व" यह प्रकरणस्थ विशेषण रहते हुए अश्रुत पर और अपर ब्रह्म के मध्य की अव्याकृताख्या अवस्था को ग्रहण नहीं किया जा सकता॥१५॥

"यह जो कर्माधिकारी अज्ञानी गृहस्थाभिमानी आत्मा है" इस श्रुतिवाक्य में वर्णाश्रमादि का अभिमानी, धर्म से नियन्त्रित अब्रह्मवित पुरुष देवादि-उद्देश्यक कर्म की कर्तव्यता से पशु के समान परतन्त्र है—ऐसा कहा गया है। जिन कर्मों के करने से मनुष्य पशु के समान परतन्त्र होता है, वह कर्म कौन से हैं, और जिनका वह कर्मों के द्वारा उपकार करता है वे देवादि कौन से हैं? ऐसी विचिकित्सा होने पर श्रुति उन दोनों का निरूपण करती है।

---

१ अन्यथेति—लोकशब्देनार्थान्तरस्याभिप्रेतत्वे। २ कर्मानुष्ठानफलभूतात्। ३ इदं मया कर्तव्यमित्येव देवाद्युद्देश्यककर्मत्वर्थं। ४ अज्ञस्य पशुवत्पारतन्त्र्ये वाक्यप्रदर्शनार्थं। ५ विचारविषय। ६ गृहस्थोऽहमित्यभिमानी। ७ सति। ८. मत्वा।

**पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाꣳस्या पिपीलिकाभ्य**

निवासस्थान और भोजन देता है, इससे मनुष्यों का, एव जो पशुओं को तृण-जलादि देता है, उससे पशुओं का भोग्य हो जाता है। अत इस मुमुक्षु के घर मे कुत्ते बिल्ली आदि जो श्वापद पक्षी और चींटीपर्यन्त जीवजन्तु उसके आश्रित होकर जीते है, इसी से यह उनका भोग्य होता है। जैसे लोक मे

---

रेन्द्रियसघातविशिष्टः पिण्ड आत्मेत्युच्यते। सर्वेषां देवादीनां पिपीलिकान्तानां भूतानां लोको भोग्य आत्मेत्यर्थः। सर्वेषां वर्णाश्रमादिविहितैः कर्मभिरुपकारित्वात्।

कैः पुनः कर्मविशेषैरुपकुर्वन्केषां भूतविशेषाणां लोक इत्युच्यते—स गृही यज्जुहोति यद्यजते। यागो देवतामुद्दिश्य स्वत्वपरित्यागः। स एवाऽऽसेचनावधिको होमस्तेन होमयागलक्षणेन कर्मणाऽवश्यकर्तव्यत्वेन देवानां पशुवत्परतन्त्रत्वेन प्रतिबद्ध इति लोकोऽस्य यद-

---

स्यापि प्रकृतत्वात्ततो विशिनष्टि—गृहीति। गृहित्वे हेतुरविद्वानित्यादि। इतरपर्युदासार्थं कर्माधिकृत इत्युक्तम्। कथमुक्तस्याऽऽत्मन सर्वभोग्यतेत्याशङ्क्याऽऽह—सर्वेषामिति।

तदेव प्रश्नद्वारा प्रकटयति—कैः पुनरिति। यजतिजुहोत्योस्त्यागार्थत्वेनाविशेषात्पुनरुक्तिमाशङ्क्य यजतिचोदना द्रव्यदेवताक्रियासमुदाये कृतार्थत्वादिति न्यायेनाऽऽह—याग इति। आसेचन प्रक्षेप। उक्त च जुहोतिरासेचनावधिक स्यादिति।

---

मूल श्रुतिवाक्य मे 'अथ' यह पद अब्रह्मवित् की पशु के समान परतन्त्रता वाक्यप्रदर्शन करने के लिए है। यह जो अब्रह्मवित् कर्माधिकारी गृहस्थरूप शरीरेन्द्रियसघातविशिष्ट प्रकृतपिण्ड है, वह आत्मा कहा जाता है। वह 'सर्वेषाम' अर्थात् देवादिको से लेकर पिपीलिकापर्यन्त सभी प्राणियो का 'लोक' अर्थात् भोग्य आत्मा है, यह अर्थ है क्योकि वर्णाश्रमादिविहित कर्मों के द्वारा वह सबका उपकारक है।

वह किन विशिष्ट कर्मों के द्वारा एव किन विशिष्टभूत प्राणियो का उपकारक होने के कारण उनका भोग्य होता है। इस पर कहा जाता है—वह गृहस्थी जो होम और याग करता है, देवता के प्रीत्यर्थ स्वत्वत्याग करना याग है, उसी मे जब "आहुति देना" कर्म बढ जाता है, तो उस होम कहते

---

१ तत्तादात्म्याध्यासी। २ सघात। ३ इत्येवप्रकारेण। ४ तथा भोग्य। ५ इतर विद्वान्। ६ यजतीत्यादि—(जै० सू० ४।२।२७) यजतिचोदना—यजतिशब्द द्रव्यादिसमुदाय वर्तते तद्वाचीत्यर्थ, कृतार्थत्वात्तत्र नैराकाङ्क्ष्यात्। तावदुक्तत्वेव चरितार्थत्वादित्यर्थ। यजति ददाति जुहोतीति श्रुतयागादीना भेदोऽस्ति न वेति सशये त्यागात्मकत्वेनाविशेषात् भेदो नेति प्राप्ते देवतोद्देशेन द्रव्यत्यागस्य यागत्वात्तस्यैव प्रक्षेपाधिकस्य होमत्वात् परस्वीकारपर्यन्तस्य च दानत्वाद्भेदस्तेषामिति स्थित पूर्वतन्त्रे। ७ द्रव्येति—अत्र द्रव्यदेवताक्रियमिति पूर्वतन्त्रे पाठो दृश्यते। ८ जै० सू० ४।२।२७। ९ 'तदुक्त श्रवणाज्जुहोतिरासेचनाधिक स्यात्" (जै० सू० ४।२।२८) इतिसूत्रमभिप्रेत्याऽऽह—उक्त चेत्यादि।

**उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोका-यारिष्टिमिच्छेदेव हैवंविदे सर्वाणि भूतान्यरिष्टि-मिच्छन्ति तद्वा एतद्विदितं मीमाᳪसितम् ॥१६॥**

सभी अपने शरीर का नाश नहीं चाहते हैं; वैसे ही ऐसा जानने वाले को सभी जीव अविनाशीरूप से देखना चाहते हैं। उस इस कर्म की नित्य अनुष्ठेयता पञ्चमहायज्ञ प्रसंग से ज्ञात होती है, तथा अवदान-प्रकरण में इसकी व्याख्या की गयी है ॥ १६ ॥

---

नुब्रूते स्वाध्यायमधीतेऽहरहस्तेन ऋषीणां लोकोऽथ यत्पितृभ्यो निपृणाति प्रयच्छति पिण्डोदकादि । यच्च प्रजामिच्छते प्रजार्थमुद्यमं करोतीच्छा चोत्पत्त्युपलक्षणार्था प्रजां चोत्पादयतीत्यर्थः । तेन कर्मणाऽवश्यकर्तव्यत्वेन पितृणां लोकः पितॄणां भोग्यत्वेन परतन्त्रो लोकः । अथ यन्मनुष्यान्वासयते भूम्युदकादिदानेन गृहे यच्च तेभ्यो वसद्भ्योऽवसद्भ्यो वाऽर्थिभ्योऽशनं ददाति येन मनुष्याणाम् । अथ यत्पशुभ्यस्तृणोदकं विन्दति लम्भयति तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयांसि च पिपीलिकाभिः सह कणबलिभाण्डक्षालनाद्युपजीवन्ति तेन तेषां लोकः ।

यस्मादयमेतानि कर्माणि कुर्वन्नुपकरोति देवादिभ्यस्तस्माद्यथा ह वै लोके स्वाय

---

यथोक्तहोमादिभिर्देवादीन्प्रत्युपकुर्वतो गृहिणो विद्यया प्रतिबन्धसंभवात्तदुपकारित्वव्यावृत्तिरित्याशङ्क्याऽऽह—यस्मादिति । पूर्वेषामथशब्दानामभिप्रेतमर्थमनूद्य समनन्तरवाक्यमवतार्य तदर्थमाह—तस्मादिति । देवादीनां कर्माधिकारिणि कर्तृत्वादिपरिपालनमेव परिरक्षणमिति विवक्षित्वा पूर्वोक्तं

---

है, उस होमयागरूप कर्म की अपरिहार्यता के कारण पुरुष पशु के समान देवताओं के अधीन होने से बँधा हुआ है, इसलिए उनका भोग्य है। 'अथ यदनुब्रूते' अर्थात् तथा जो नित्यप्रति स्वाध्याय करता है, उसके कारण वह ऋषियों का लोक है। जो पितृगण को 'निपृणाति' अर्थात् पिण्डदान तर्पणादि करता है और जो 'प्रजामिच्छति' अर्थात् सन्तति के लिए प्रयत्न करता है, यहाँ 'इच्छा'पद उत्पत्ति का उपलक्षण कराने के लिए है, प्रजा उत्पन्न करता है, यह भाव है, उस कर्म के द्वारा अवश्यकर्तव्यता के कारण वह पितृलोक, पितरों के भोग्यरूप से उनका परतन्त्र लोक होता है। यह जो स्थान और जलपानादि के द्वारा घर में मनुष्यों को ठहराता है, तथा घर में रहने और न रहने वाले भी भोजनार्थी मनुष्यों को भोजन देता है, इससे वह मनुष्यलोक है। तथा जो पशुओं को घास और पानी प्राप्त कराता है, उससे वह पशुओं का लोक है। एवं जो इस कर्मकाण्डी के घरों में मार्जारादि श्वापद, पक्षी एवं चींटीपर्यन्त जन्तु तद्भागरूप कण, बलि तथा पात्रों के धोवन के आश्रित होते हैं; उस जीवन-सम्पादकरूप कर्म से यह उनका लोक है।

---

१ कर्मणा । २ मार्जारादय । ३ तद्भागरूपबलि । ४ आश्रयन्ति । ५ तज्जीवनसम्पादककर्मणा । ६ गृही । ७ उपकरोतीति—कर्मानुष्ठानयोग्यावस्थाया विद्योत्पत्तेरसंभवेन प्रतिबन्धायोगादिति भाव. । ८. तस्मादिति—सर्वदाऽस्य देवाद्युपकारकत्वादित्यर्थं । अयमेव पूर्वेषामथशब्दानामर्थो बोध्य । ९. कर्तरि षष्ठी ।

लोकाय स्वस्मै देहायारिष्टिमविनाशं स्वत्वभावाप्रच्युतिमिच्छेत्स्वत्वभावप्रच्युतिभयात्पोषणरक्षणादिभिः सर्वतः परिपालयेदेवं हैवंविदे सर्वभूतभोग्योऽहमनेन प्रकारेण मयाऽवश्यमृणिवत्प्रतिकर्तव्यमित्येवमात्मानं परिकल्पितवते सर्वाणि भूतानि देवादीनि यथोक्तान्यरिष्टिमविनाशमिच्छन्ति स्वत्वाप्रच्युत्यै सर्वतः संरक्षन्ति कुटुम्बिन इव पशूंस्तस्मादेषां तन्न प्रियमित्युक्तम् । तद्वा एतत्तदेतद्यथोक्तानां कर्मणामृणवदवश्यकर्तव्यत्वं पञ्चमहायज्ञप्रकरणे विदितं कर्तव्यतया मीमांसितं विचारितं चावदानप्रकरणे ॥ १६ ॥

आत्मैवेदमग्र आसीत् । ब्रह्म विद्वांश्चेत्तस्मात्पशुभावात्कर्तव्यताबन्धनरूपात्प्रतिमुच्यते । केनायं कारितः कर्मबन्धनाधिकारेऽवश इव प्रवर्तते न पुनस्तद्विमोक्षणोपाये

स्मारयति—तस्मादिति । यथोक्तं कर्म कुर्वन्यद्यपि देवादीन्प्रत्युपकरोति तथाऽपि न तत्कर्तृत्वमावश्यकं मानाभावादित्याशङ्क्याऽऽह—तद्वा इति । भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञश्चेत्येवं पञ्च महायज्ञाः । ननु श्रुतमपि विचारं विना नानुष्ठेयं न हि रुद्ररोदनादि श्रुतमित्येवानुष्ठीयते तत्राऽऽह—मीमांसितमिति । तदेतद्'वपते यद्यजते स यदग्नौ जुहोतीत्याद्यवदानप्रकरणम् । ऋणं ह वाव जायते जायमानो योऽस्तीत्यादिनाऽर्थवादेनेति शेषः ॥ १६ ॥

वाक्यान्तरमादाय व्याख्यातुं पातनिकां करोति—आत्मैवेत्यादिना । कर्मैव बन्धनं तत्राधिकारोऽनुष्ठानं तस्मिन्निति यावत् । विद्याधिकारस्तदुपाये श्रवणादौ प्रवृत्तिस्तत्रेत्यर्थः । यथोक्ताधिकारिणो

क्योंकि यह गृहस्थी इन कर्मों को करता हुआ देवादिकों का उपकारक है, इसलिए जिस प्रकार लोकव्यवहार में मनुष्य अपनी देह के लिए 'अरिष्टिम्' अर्थात् अविनाश यानी स्वत्वाभाव की अप्रच्युति चाहता है। तथा स्वत्वाभावच्युति के भय से उसका पोषण-रक्षण द्वारा सर्वविध परिपालन करता है। इस प्रकार 'हैवंविदे' अर्थात् "मैं सर्वभूतप्राणियों का भोग्य हूँ, इन यागादिकर्मों का मुझे ऋणी के समान प्रत्युपकार करना चाहिये" इस प्रकार सम्पूर्ण भूतों को अपनी आत्मा मानने वाले का उपर्युक्त देवादि विनाश नहीं चाहते हैं। अपनी स्थिति के लिए वे उसी प्रकार उसकी सब ओर से रक्षा करते हैं, जैसे कोई गृहस्थ अपने पशुधन की रक्षा करता है। इसी से कहा गया है—"अत देवताओं को यह प्रिय नहीं है (कि वे आत्मतत्त्व को जानें)" । 'तद्वा एतत्' अर्थात् पूर्वोक्तकर्मों का ऋण के समान अवश्यकर्तव्यत्व पञ्चमहायज्ञप्रकरण में कर्तव्यरूप से विदित है, एवं अवदानप्रकरण में 'मीमांसितम्' यानी इस पर विचार किया गया है ॥ १६ ॥

१. ममत्वसद्भावस्थितिम् । २. यागादिना । ३. प्रत्युपकर्तव्यम् । ४. अविनाशमिति—तत्त्वं च ब्रह्मविद्याधीनपशुत्वव्यावृत्तिराहित्यम् । कर्तृत्वादिपरिपालनमिति यावत् । ५. संरक्षन्तीति—स्वदेहवदिति शेषः । तथा चोक्तं वार्तिके—"स्वकर्मार्जितसंभोगदायित्वेऽस्ति न कञ्चन । देवादीनां विशेषोऽत्र गृहस्थस्वात्मदेहयोरिति" ॥ १८०१ ॥ स्वकर्मार्जितत्वे स्वसंभोगदायित्वे चेति यावत् । देवादिषूभयप्रयुक्तभोगाविशेषादित्यर्थः ॥ ६. तस्मादिति—देवानां मनुष्यपशुभावव्युत्थानस्याप्रियत्वादित्यर्थः । ७. स्मार्ते । ८. प्रेरित इति यावत् । ९. भूतबलिः । १०. आतिथ्यादि । ११. श्राद्धादि । १२. वैश्वदेवबलि । १३. स्वाध्यायाध्ययनम् । १४. सोऽरोदीत् । १५ श्रुतत्वमात्रेण । १६ इन्द्रादिभ्यो विभागेन ददातीत्यर्थः । १७. ऋणवानिति यावत् ।

विद्याधिकार इति। ननूक्तं देवा रक्षन्तीति। बाढम्। कर्माधिकारस्वगोचरारूढानेव तेऽपि रक्षन्ति। [1]अन्यथाऽकृताभ्यागमकृतनाशप्रसङ्गात्। न तु [2]सामान्यं पुरुषमात्रं विशिष्टाधिकारानारूढम्। [3]तस्माद्भवितव्यं तेन येन प्रेरितोऽवश एव बहिर्मुखो भवति स्वस्माल्लोकात्। नन्वविद्या साऽविद्यावान्हि बहिर्मुखीभूतः प्रवर्तते। [4]साऽपि नैव प्रवर्तिका। [5]वस्तुस्वरूपावरणात्मिका हि सा। प्रवर्तकबीजत्वं तु प्रतिपद्यतेऽन्धत्वमिव [6]गर्तादिपतन-

देवादिभी रक्षणं प्रवृत्तिमार्गे नियमेन प्रवर्तकमिति शङ्कते—नन्विति। उक्तमङ्गी करोति—वाढमिति। तर्हि प्रवर्तकान्तरं न वक्तव्यं तत्राऽऽह—कर्माधिकारेति। [7]कर्मस्वधिकारेण [8]स्वगोचरत्वं प्राप्तानेव देवादयोऽपि रक्षन्ति न सर्वाश्रमसाधारणं [9]ब्रह्मचारिण[10]मतोऽस्य कर्ममार्गे प्रवृत्तौ देवादिरक्षणस्याहेतुत्वाद्ब्रह्मचारिणो निवृत्तिं त्यक्त्वा प्रवृत्तिपक्षपाते कारणं वाच्यमित्यर्थः। मनुष्यमात्रं कर्मण्येव ते बलात्प्रवर्तयन्ति तेषामचिन्त्यशक्तित्वादित्याशङ्क्याऽऽह—अन्यथेति। स्वगोचरारूढानेवेत्येवकारस्य व्यावर्त्यं कीर्तयति—न त्विति। विशिष्टाधिकारो गृहस्थानुष्ठेयकर्मसु [11]गृहस्थत्वेन स्वामित्वं तेन देवगोचरतामप्राप्तमित्यर्थः। [12]देवादिरक्षणस्याकारणत्वे फलितमाह—तस्मादिति। प्रत्यगविद्या यथोक्ताधिकारिणो नियमेन प्रवृत्त्यनुरागे हेतुरिति शङ्कते—नन्विति। तदेव स्फुटयति—अविद्यावानिति। तस्याः स्वरूपेण प्रवर्तकत्वं दूषयति—साऽपीति। अविद्याया[12]स्तर्हि [13]प्रवृत्त्यन्वयव्यतिरेकौ कथमित्याशङ्क्य कारणकारणत्वेनेत्याह—

(स्त्रीसम्बन्ध होने से पूर्व) पहले यह एक देहेन्द्रियसघातरूप आत्मा ही था। यदि ब्रह्म को
जानने वाला पुरुष कर्तव्यताबन्धनरूप पशुभाव से मुक्ति प्राप्त कर लेता है, तो कर्मबन्धन की अधिकर्त-
व्यता मे किससे प्रेरित होकर विवशतापूर्वक फँसता है, तथा उससे छूटने के उपायरूप ज्ञान की
अधिकर्तव्यता मे प्रवृत्त नही होता? इस पर शङ्का होती है—देवता उसकी रक्षा करते हैं, यह तो पहले
ही कह चुके हैं। सिद्धान्ती इसे स्वीकार करते हुए कहता है, कर्मों के अधिष्ठातृ देवता होने के कारण अपने
शरणापन्न लोगो की ही वे रक्षा करते है, अन्यथा अकृतकर्म की प्राप्ति और कृतकर्म के नाश होने का
प्रसग उपस्थित हो जाएगा। वे गृहस्थानुष्ठेय कर्मो मे देवगोचरताको अप्राप्त सामान्य पुरुष यानी नैष्ठिक
ब्रह्मचारी आदि की रक्षा नही करते। देवादिरक्षण की नियमत प्रवृत्ति राग मे कारण न होने से ऐसा
होना चाहिये, जिससे वह विवश होकर आत्मलोक से बहिर्मुख हो जाता है। (पूर्वपक्षी शङ्का करता
है—) अच्छा तो वह अविद्या है क्योकि अविद्यावस्था मे ही पुरुष बहिर्मुख होकर प्रवृत्त होता है। (इस
पर कहते है—) वह भी प्रवृत्ति का कारण नही है क्योकि वह अविद्या वस्तु आवरणमात्र यानी
मिथ्याज्ञान उत्पन्न करती है। जिसप्रकार अन्धत्व गर्तादिपतनानुकूल अप्रवृत्ति अमार्गगमन का हेतु है,

१ अन्यथेति—मनुष्यमात्रस्य कर्मण्येव नियमनलक्षणाया देवादिरक्षाया कृतनाशादि स्यात्तथा तथापि शक्त-
त्वात्तस्य च कर्मकाण्ड प्रामाण्यवादिनाऽनिष्टत्वादिति भाव। २ नैष्ठिकादिसर्वाश्रमसाधारणम्। ३.
देवादिरक्षणस्य नियमेन प्रवृत्तिरागेऽहेतुत्वात्। ४ वस्तुस्वरूपेति—अविद्याया वस्त्वावरणमात्रत्वात् वस्तुनि
मिथ्याज्ञानजनकत्वमेव न तु स्वरूपेण प्रवर्तकत्व स्वापादावदृष्टेरिति भाव। ५ गर्तादिपतनेति—गर्तादिपतनानु-
कूलाप्रवृत्तिरमार्गगमन तत्र यथाऽन्धत्व हेतुर्भवति तद्वदित्यर्थ। ६ प्राप्तस्वामित्वेन। ७ स्वत्व दास्यम्।
८ ब्रह्मचर्यावान्तरनैष्ठिकादिभेदवन्तमित्यर्थं। ९ देवादे सर्वाश्रमस्य साधारण प्रति रक्षणत्वाभावात्।
१०. गृहस्थोऽहमित्यभिमानवत्वेन। ११ देवादीनि—मनुष्यमात्रस्य कर्ममार्गप्रवृत्तावित्यादि। १२ तर्हीति—
अविद्याया प्रवर्तकत्वानभ्युपगम इत्यर्थ। १२ सत्यामविद्याया प्रवृत्तिर्न तदभाव इति।

**आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्ये- तावान्वै कामो नेच्छꣳश्चनातो भूयो विन्देत्तस्माद-**

(स्त्रीसम्बन्ध होने से) पहले यह एक देहेन्द्रियसंघातरूप आत्मा ही था। उसने (अविद्याजनित वासना से युक्त होकर) कामना की, कि कर्माधिकार की हेतुरूपा स्त्री मुझ कर्ता को प्राप्त होवे अर्थात् कर्माधिकार की प्राप्ति के लिये मुझे स्त्री मिले फिर मैं प्रजारूप से स्वयं ही उत्पन्न होऊँ तथा मुझे गवादिरूपधन हो। फिर मैं (अभ्युदय एवं कल्याण का साधनरूप) कर्म करूँ। बस इतना विषय से परिच्छिन्न ही काम है। इच्छा करने पर इससे अधिक कोई नहीं पाता। अतएव अब भी अकेला पुरुष

---

प्रवृत्तिहेतुः। एवं तर्ह्युच्यतां किं तत्प्रवृत्तिहेतुरिति। 'तदिहाभिधीयत एषणा कामः सः', "स्वाभाविक्यामविद्यायां वर्तमाना बाला पराचः कामाननुयन्ति" इति काठकश्रुतौ।

---

प्रवर्तकेति। 'सत्यन्यस्मिन्कारणेऽकारणाविद्याप्रवृत्तेरिति' चेत्तत्राऽऽह—एवं तर्हीति। उत्तरवाक्यमुत्तरत्वेनावतार्य तस्मिन्विवक्षितं प्रवर्तकं 'संक्षिपति— तदिहाभिधीयत इति। 'तत्रार्थं श्रुत्यन्तरं संवादयति

---

उसी प्रकार यह प्रवर्तकबीजरूपता को प्राप्त होती है। उक्तरीति से अविद्या में प्रवृत्तिप्रयोजकत्व के अभाव होने से तुम्हीं बताओ कि प्रवृत्ति का कारण क्या है? (सिद्धान्ती प्रतिपादन करता है—) वह यहाँ बतलाया जाता है। एषणा काम का पर्याय है, वह कर्म में प्रवर्तक है। "अनादिसिद्ध अविद्या में रहते वाले अनात्मज्ञ, बाह्य अनात्मभूत दृष्ट और अदृष्ट विषयों का सेवन करते हैं" ऐसी कठश्रुति है। श्रीमद्भगवद्गीता में श्रीमुखवचन है—"यह काम है, यह क्रोध है"। मनुस्मृति में भी निर्णय लिया गया है कि सारी प्रवृत्ति काममूलक है। यहाँ से लेकर प्रथम अध्याय की समाप्तिपर्यन्त इसी का विस्तार से

---

१ धनोऽप्यर्थः। २ एवं तर्हीति—उक्तरीत्याऽविद्याया प्रवृत्तिप्रयोजकत्वाभाव इत्यर्थः। ३ तदिहेत्यादि —तत् प्रवर्तकम्। इह उत्तरवाक्ये। एषणा काम एषणापरपर्याय काम इत्यर्थः। ४ कर्मणि प्रवर्तकः। ५ स्वाभाविक्यामित्यादि—अनादिसिद्धायामविद्यायां वर्तमानत्वं नाम तत्कार्यनिरूपिताऽभिमानवत्त्वम्। बाला अनात्मज्ञाः। पराचः बाह्याननात्मभूतान् दृष्टादृष्टविषयाननुयान्ति भजन्त इत्यर्थः। ६ नन्वविद्याया आवरणमात्रस्वभावत्वे मा प्रवर्तकमपि जनयितुं नालं तथा चाविद्याया अकार्यमेव किंचित्प्रवर्तकं स्यादित्याशङ्क्याऽऽह— सत्यन्यस्मिन्निति। अविद्याया अकार्यभूते कारणेऽभ्युपगते सत्यविद्याप्रवृत्तेरकारणमेव परम्परयाऽपि कारणं न स्यादित्यर्थः। तथा च तस्याः प्रवृत्त्यन्वयव्यतिरेकौ विरुध्येयातामिति भावः। ७ तत्राऽऽहेति—इत्थमविद्यायाः कारणकारणत्वस्यावश्यकत्वे शङ्किते सति चोदयतीत्यर्थः। वस्तुतस्तु सतीत्यादेरयमेवार्थस्तथाहि—अविद्यातिरिक्तं तत्कार्यमेव किंचित्प्रवृत्तिं प्रति साक्षात्कारणं न त्वविद्यैवेति सिद्धान्तिनोच्यते तत्र पृच्छतीति। ८ संक्षेपतोऽभिधत्ते। ९ तत्रेति—आविद्यकामस्य प्रवर्तकत्वे। कामहेतुरविद्यैव प्रवृत्तिं करिष्यति किमान्तरालिकेन कामेनेत्याशङ्क्येत्यादि। तथा च वार्तिके—'अविद्योद्भूतकामः सन्प्रयो खल्विति च श्रुतिः'॥ १८१५॥ इति। अविद्योद्भूतकामः सन् पुमान् प्रवर्तते कर्मण्येवेति शेषः। चकार उक्तशङ्कानिवृत्त्यर्थः। अथो खल्वाहुः काममय एवायं पुरुष इत्यादिश्रुतिस्तस्य प्रवृत्तौ प्राधान्यमाहेति वार्तिकार्थः।

**प्येतद्ध्येकाकी कामयते, जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता**

पहले यही कामना करता है कि मुझे स्त्री मिले, फिर मैं संतानरूप से उत्पन्न होऊँ और धन हो तो फिर मैं कर्म करूँ। वह जब तक इनमे से एक-एक को प्राप्त नहीं कर लेता; तब तक वह अपने को अधूरा ही मानता है, उसकी पूर्णता इस प्रकार कही गयी है। (बाह्य साधन के अभाव मे) मन ही

---

स्मृतौ च—"काम एष क्रोध एषः" इत्यादि। मानवे च सर्वा प्रवृत्तिः कामहेतुक्येवेति। स एषोऽर्थः सविस्तरः प्रदर्श्यते इहाऽऽध्यायपरिसमाप्तेः।

आत्मैवेदमग्र आसीत्। आत्मैव स्वाभाविकोऽविद्वान्कार्यकरणसंघातलक्षणो

---

—स्वाभाविकयामिति। तत्रैव भगवतः संमतिमाह—स्मृतौ चेति। 'अथ केन प्रयुक्तोऽयम्' इत्यादिप्रश्नस्योत्तरम्—'काम एष क्रोध एष रजोगुणसमुद्भवः' इत्यादि। 'अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित्।' 'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्॥ इति वाक्यमाश्रित्याऽऽह—मानवे चेति। एवेति दर्शितमिति शेषः। उपतेऽर्थे तृतीयाध्यायशेषमपि प्रमाणयति—स एषोऽर्थ इति।

एवं तात्पर्यमुक्त्वा प्रतीकमादाय पदानि व्याकरोति—आत्मैवेत्यादिना। वर्णी द्विजत्वद्योतको

---

व्याख्यान किया गया है।

(स्त्रीसम्बन्ध होने से पूर्व) पहले यह एक देहेन्द्रियसंघातरूप आत्मा ही था। अनादि अविद्या से विशिष्ट अविद्वान् देहेन्द्रियसंघातलक्षण ब्रह्मचारी ही 'अग्रे' अर्थात् स्त्रीसम्बन्ध होने से पूर्व था। यहाँ (कायकरणसंघातरूप) आत्मा कहा गया है। उस आत्मा से पृथक्भूत काम्य स्त्री आदि विषय नहीं था; वह एक ही था। जायादि एषणा की वाचक अविद्या से युक्त वह एकाकी ही था। अपने मे कर्मादिकारक, क्रिया एवं फलात्मकता के अध्यास लक्षण वाला अनादिसिद्ध अविद्या के संस्कार से संस्कृत उसने "अकामयत" अर्थात् कामना की।

---

१ तस्यो कृत्स्नतेत्यादिवाक्य व्याख्यातु पातनिकामाहुर्वार्तिककारास्तथाहि—"आत्मजायाप्रजावित्तविद्याभिः पञ्चभिः वृतम्। कर्म पाङ्क्तं भवेदेव पाङ्क्तेन च्छन्दसा मितम्॥ बाह्यस्य कर्मणस्तावदारमादौ पाङ्क्तोदिता। तेष्वसत्स्वथ पाङ्क्तत्वमुच्यतेऽध्यात्मकर्मण.॥ बाह्याध्यात्मिकभेदेन कर्मैतदुभयात्मकम्। पाङ्क्तं यथा तद्भवति तथैतदभिधीयते"॥ १८४०-१८४२॥ इति। पञ्चत्वसंख्यायोगमुपजीव्योपासनोपयोगित्वेन पञ्चाक्षरा पङ्क्तिरिति श्रुतिमनुसरन्नाह—एवमिति॥ कर्ममात्रस्य पाङ्क्तत्वमुक्त्वा तस्येत्यादिवाक्यस्य विषयपरिशेषार्थं सोऽकामयतेत्यादिना सिद्धमनुवदति—बाह्यस्येति। जायादिष्वसत्स्वाध्यात्मिक ध्यानकर्मण कथं पाङ्क्तत्वमित्यपेक्षायां तस्येत्याद्यादत्ते—तेष्विति। प्रागुक्तशङ्काद्योतनार्थोऽथशब्द॥ तदेव प्रपञ्चयितु कर्मद्वैविध्यमाह—बाह्येति। तद्बाह्यं कर्म पञ्चभिः कृतत्वाद्यथा पाङ्क्तं तथैतदाध्यात्मिकं ध्यानकर्म पाङ्क्तमुच्यते तस्येत्यादिनेत्याह—पाङ्क्तमिति॥ २ अस्मिन्नेव व्याख्यायमानेऽध्याये। ३ स्वभावोऽनाद्यविद्यातद्विशिष्टः। ४ कर्मभूमौ। ५ अकामत इत्यादिना व्यतिरेकमभिधायान्वयमाह—यद्यदिति। ६ तृतीयश्चायमेव उपनिषदस्य प्राथमिकत्वेऽपि वृ० वार्तिकत्वात्। ७ उक्तरीत्या।

**मन एवास्याऽऽत्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवꣳ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्माऽऽत्मना हि कर्म करोति स**

इसका आत्मा है, वाणी स्त्री है, क्योंकि मनरूप स्वामी का अनुकरण वाणीरूप स्त्री ही करती है। प्राण सतान है और नेत्र मानुषवित्त है, क्योंकि वह पुरुष नेत्र से ही गवादि मानुषवित्त को जानता है। श्रोत्र दैववित्त है, क्योंकि श्रोत्र से ही वह पुरुष दैववित्तरूप कर्म को सुनता है। शरीर ही इसका कर्म है,

---

वर्ण्यते प्राग्दारसबन्धादात्मेत्यभिधीयते। तस्मादात्मन पृथग्भूतं काम्यमानं जायादिभेदरूपं नाऽऽसीत्स एवैक आसीज्जायाद्येषणाबीजभूताविद्यावानेक एवाऽऽसीत्। 'स्वाभाविक्या स्वात्मनि कर्त्रादिकारकक्रियाफलात्मकताध्यारोपलक्षणयाऽविद्यावासनया वासितः सोऽकामयत कामितवान्।

कथम्। जाया कर्माधिकारहेतुभूता मे मम कर्तुः स्यात्तया विनाऽहमनधिकृत एव कर्मण्यतः कर्माधिकारसंपत्तये भवेज्जाया। अथाहं प्रजायेय प्रजारूपेणाहमेवोत्पद्येय।

---

ब्रह्मचारीति यावत्। कथं तर्हि हेत्वभावे तस्य कामित्वमपि स्यादित्याशङ्क्याऽऽह—जायादीति। सशब्दं व्याकुर्वन्नुत्तरवाक्यमादायावशिष्टं व्याचष्टे—स्वाभाविक्येति।

कामनाप्रकारं प्रश्नपूर्वकं प्रकटयति—कथमिति। कर्माधिकारहेतुत्वं तस्याः साधयति—तयेति। प्रजां प्रति जायाया हेतुत्वद्योतकोऽथशब्दः। प्रजाया मानुषवित्तान्तर्भावमभ्युपेत्य द्वितीयोऽथ-

---

किस प्रकार कामना की? 'जाया' अर्थात् कर्माधिकार में हेतुभूता स्त्री 'मे' अर्थात् मुझ कर्ता को प्राप्त हो, उसके बिना मेरा कर्म करने में अधिकार नहीं बनता। इसलिए कर्म में अधिकारप्राप्ति के लिए मुझे स्त्री की प्राप्ति हो। 'अथ प्रजायेय' अर्थात् फिर मैं प्रजारूप से स्वयं ही जाया में उत्पन्न होऊँ। 'अथ वित्तं मे स्यात्' अर्थात् तथा कर्म में सहायकभूत गवादिरूप धन मेरे पास हो 'अथ कर्म कुर्वीय' यानी फिर मैं अभ्युदय निःश्रेयस का साधनरूप कर्म करूँ, जिससे मैं ऋण से विमुक्ति पाकर

---

१ आत्मेत्यभिधीयत इति—आत्मैवेदमग्र आसीदित्यत्रात्मशब्देन स्वाभाविक्याऽविद्यया युक्तः कार्यकरणसंघातविशिष्टो ब्रह्मचार्युच्यत इत्यर्थः। पदार्थमुक्त्वा वाक्यार्थमाह—तस्मादिति। अग्रे प्राग्दारसंबन्धादिदं प्रसिद्धं दारादिजातं ब्रह्मचार्यात्मैवैक आसीन्नासीत्ततः पृथग्भूतं काम्यमानं जायादिभेदजातमित्यर्थः। २ स एवैक इति—एक एवेत्यस्यार्थो लोकप्रसिद्धया प्रदर्शितो वार्तिके। तथाहि—"विस्तारितकुटुम्बं तं कस्मैचित्कश्चिदत्तिके। व्याचष्टे कामसंभूतं पुत्रपौत्रादिविस्तरम्॥ प्राग्दारोद्वहनात्कृत्स्नं कुटुम्बं यत्प्रपश्यसि। आत्मैवैकः पुमानासीन्नाऽऽसीत्पुत्रादि किंचन॥ आत्मप्रत्ययनिर्ग्राह्यं केवलं प्रागभूदिदम्। पुत्रपौत्रादिसंभिन्नं कुटुम्बं यत्प्रपश्यसि॥ १८१६ १८२१॥" इति। तं ब्रह्मचारिणमुक्तविशेषणं दारसंग्रहादूर्ध्वं समीपे दृष्ट्वा कश्चित्कस्मैचिद्व्याकरोतीति योजना॥ ३ अनादिसिद्धया। ४ आविद्यसंस्कारसंस्कृतः। ५ अथेति—पुत्रसाधनीभूतजायासंपत्त्यनन्तरमित्यर्थः। अहमेवेति—स्वकार्येऽपि स्वमृतेरूर्ध्वमपि पुत्रद्वारा वस्तु तद्रूपेण पितैव जायते स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठतीति श्रुतेरित्यर्थः। ६ जायायाम्। ७ सहेति—प्राग्दारसंबन्धात्तस्यकामित्वे इत्यर्थः।

**एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्वं यदिदं किंच तदिदꣳ सर्वमाप्नोति य एवं वेद ॥१७॥**

**॥ इति प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥**

क्योंकि शरीररूप आत्मा से ही यह कर्म करता है। वह यह यज्ञ पाङ्क्त है; मन, वाणी, प्राण, चक्षु और श्रोत्र इन पाँचों से सम्पादित कर्म को पाङ्क्त कहते हैं। पशु पाङ्क्त है, पुरुष पाङ्क्त है, विशेष क्या यह कर्म का साधन और फल सभी पाङ्क्त हैं। 'सभी पाङ्क्त हैं' जो कोई ऐसा जानता है, (भावना करता है) वह इस सम्पूर्ण जगत् को आत्मरूप से प्राप्त कर लेता है ॥ १७ ॥

॥ इति चतुर्थं ब्राह्मणम् ॥

---

'अथ वित्तं मे स्यात्कर्मसाधनं 'गवादिलक्षणमथाहमभ्युदयनिःश्रेयससाधनं, कर्म कुर्वीय। येनाहमनृणी भूत्वा देवादीनां लोकान्प्राप्नुयां तत्कर्म कुर्वीय।

काम्यानि च पुत्रवित्तस्वर्गादिसाधनान्येतावान्वै 'काम एतावद्विषयपरिच्छिन्न इत्यर्थः। 'एतावानेव हि कामयितव्यो विषयो यदुत जायापुत्रवित्तकर्माणि 'साधनलक्षणैषणा। 'लोकाश्च त्रयो मनुष्यलोकः पितृलोको देवलोको इति फलभूताः साधनैषणा-

---

शब्दः। तृतीयस्तु वित्तस्य कर्मानुष्ठानहेतुत्वविवक्षयेति विभाग। कर्मानुष्ठानफलमाह—येनेति।

तर्हिक नित्यनैमित्तिककर्मणामेवानुष्ठानं नेत्याह—काम्यानि चेति। क्रियापदमनुकृष्टुं चशब्दः। अस्या साधने-कामशब्दस्य 'यथाश्रुतमर्थं गृहीत्वैतावानित्यादिवाक्यस्याभिप्रायमाह—साधनलक्षणेति।

---

देवादि के लोकों को प्राप्त करूँ, ऐसा कर्म करूँ।

काम्यकर्म पुत्र, धन और स्वर्गादि के साधन हैं। "एतावान्वै" अर्थात इतने विषय से परिच्छिन्न ही अभिलाषा है। (भावव्युत्पन्न कामशब्द की अभिलाषा अर्थ में व्याख्या कर अब कर्मव्युत्पन्न अभिलषित अर्थ में उसका विवेचन करते हैं—) ये जो स्त्री, पुत्र, वित्तकर्म है, यही अभिलषित विषय हैं, यह साधनलक्षणा एषणा है। ये तीनों मनुष्यलोक, पितृलोक और देवलोक इस साधनैषणा के फलस्वरूप हैं। इन्हीं लोकों के लिए जाया पुत्र वित्तकर्मरूपा साधनैषणा होती है। इसलिये वह लोकैषणारूप एक ही एषणा है। एक होने पर भी वह एषणा साधन की अपेक्षा से दो प्रकार की है। इसलिए श्रुति यह प्रतिपादन करेगी कि "ये दोनों एषणाएं ही हैं"।

---

१ अथेति—मानुषवित्तान्तभूतपुत्रसपत्त्यनन्तरमित्यर्थः। २ गवादीति—आदिना दैवं वित्तम्। अथेति—कर्मानुष्ठानहेतुभयविधवित्तसपत्त्यनन्तरमित्यर्थः। ३ अभिलाष। ४ भावव्युत्पन्नं कामशब्दमभिलाषार्थं व्याख्याय कर्मव्युत्पन्नं तमभिलषितार्थं व्याख्यात्येतावानेव हीति। ५ साधनविषया। ६ साधनैषणां प्रदर्श्य साध्यैषणां प्रदर्शयति—लोकाश्चेति। ७ साधनेच्छारूपम्।

याश्चास्याः। 'तदर्था हि—जायापुत्रवित्तकर्मलक्षणा साधनैषणा। 'तस्मात्सैवैकैषणा या लोकैषणा सैकैव सत्येषणा 'साधनापेक्षेति द्विधाऽतोऽवधारयिष्यन् ह्युभे ह्येते एषणे एवेति। फलार्थत्वात्सर्वारम्भस्य लोकैषणाऽर्थप्राप्तोक्तैवेत्येतावान्वा 'एतावानेव काम इत्यवध्रियते। भोजनेऽभिहिते तृप्तिर्न हि पृथगभिधेया। तदर्थत्वाद्भोजनस्य। ते एते एषणे साध्यसाधनलक्षणे कामो येन प्रयुक्तोऽविद्वानवश एव कोशकारवदात्मानं वेष्टयति कर्ममार्ग एवाऽऽत्मानं 'प्रणिदध द्बहिर्मुखोभूतो न स्वं लोकं प्रतिजानाति। तथा च तैत्तिरीयके—"अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न प्रतिजानाति" इति।

षणायाः फलभूता इति सबन्ध। 'द्वयोरेषणात्वमुक्त्वा लोकैषणां परिशिनष्टि—तदर्था हीति। कथं तर्हि साधनैषणोक्तिरित्याशङ्क्याऽऽह—सैवेति। 'एतेन वाक्यशेषोऽप्यनुगुणीभवतीत्याह—अत इति।

"साधनवत्फलमपि "काममात्रं चेत्कथं तर्हि श्रुत्या साधनमात्रमभिधायैतावान"वध्रियते तत्राऽऽह—फलार्थत्वादिति। उक्ते 'साधने साध्यमार्थिकमित्यत्र दृष्टान्तमाह—भोजन इति। साधनोक्तौ साध्यस्यार्थाद्युक्तेरेतावानिति द्वयोरनुवादेऽपि कथमेषणार्थे कामशब्दस्तत्र प्रयुज्यते नहि "तौ पर्यायौ न च "तद्वाच्यत्वे तयोर"नर्थतेत्याशङ्क्य पर्यायत्वमेषणाकामशब्दयोरुपेत्याऽऽह—ते एते इति। वेष्टनमेव" स्पष्टयति—कर्ममार्ग इति। अग्निमुग्धोऽग्निरेव होमादिद्वारेण मम श्रेयः साधनं नाऽऽत्मज्ञानमित्यभिमानवान्धूमतान्तो धूमेन ग्लानिमापन्नो धूमता वा ममान्ते देहावसाने भवतीति मन्यमानस्ते "धूममभिसंभवन्तीति श्रुते। स्वं लोकमात्मानम्।

सभी उद्यम फल के लिए होते हैं, अत. अर्थत प्राप्त फलैषणा का वर्णन कर दिया। "एतावान्वा" इस पद से इतना ही काम है, ऐसा निश्चय किया जाता है। भोजन की चर्चा कर देने पर तृप्ति की पृथक् चर्चा नहीं की जाती, क्योंकि भोजन तो तृप्ति के लिए ही होता है। वह यह साध्यसाधनलक्षण एषणा ही काम है, जिससे प्रयुक्त हुए अब्रह्मवित्, रेशम के कीट के समान परवश होकर अपने को लपेट लेता है। तथा अपने को कर्ममार्ग में उलझाये रख, वहिर्मुखो होकर आत्मलोक को नहीं जान पाता। इसी आशय का प्रतिपादन तैत्तिरीय उपनिषत् में किया है—"जो पुरुष अग्निहोत्रादिकर्मों में आसक्त है, उसका पर्यवसान धूममार्ग ही है, वह आत्मलोक को नहीं जान पाता।"

*अभिलाषाएँ अनन्त हैं, फिर अभिलाषाओं की एकरूपता कैसे सिद्ध होती है। असीम कामनाएँ* हैं, इसका कारण श्रुति निरूपण करती है। 'इच्छन्' अर्थात् चाहते हुए भी पुरुष इस फलसाधनलक्षण।

१ तदर्थत्वेन तदात्मिकैव। २ साधनैषणाया फलैषणात्मकत्वात्। ३ साधनापेक्षेति—साध्यात्वादेव साधनबद्धत्वेन तदतिरेकेणायोगात् सा तावदाक्षिप्तसाधना साधनैषणापि साध्यबद्धत्वादाक्षिप्तसाध्याऽतोऽभिहिते साधने साध्यमर्थादभिहितमित्येतावानित्युभयमनूद्य तस्य कामशब्देनानर्थत्वमुक्तमिति गूढाभिसन्धिरिति ध्येयम्। ४ श्रुति। बृ० उ० ३।५।१, बृ० उ० ४।४।२२। ५ फलैषणा। ६ प्रवर्तयन्। ७ अनात्मप्रवण। ८ साध्यसाधनयोः। ९ एषणाद्वैविध्येन। १०. साधनैषणावत् फलैषणापि। ११. कामशब्दवाच्यमनर्थात्मकम्। १२ इति। १३ एषणाकामशब्दौ। १४ कामशब्दावाच्यत्वे। १५. अनर्थरूपता दुःखात्मकतेति यावत्। १६ एषणयोः। १७ बृ० उ० ६।२।१६।

कथं पुनरेतावत्त्वमवधार्यते कामानामनन्तत्वादनन्ता हि कामा इत्येतदाशङ्क्य' हेतुमाह---'यस्मान्नेच्छन्नप्यतोऽस्मात्फलसाधनलक्षणाद्भूयोऽधिकतर न विन्देन्न लभेत। न हि लोके फलसाधनव्यतिरिक्तं दृष्टमदृष्टं वा लब्धव्यमस्ति। लब्धव्यविषयो' हि कामस्तस्य चैतद्व्यतिरेकेणाभावाद्युक्तं वक्तुमेतावान्वै काम इति'। एतदुक्तं भवति—'दृष्टार्थमदृष्टार्थं वा साध्यसाधनलक्षण'मविद्यावत्पुरुषाधिकारविषयमेषणाद्वय कामो ऽतो-ऽस्माद्विदुषा व्युत्थातव्यमिति। -

यस्मादे'वमविद्वानात्मा कामी पूर्वः,। कामयामास तथा पूर्वतरोऽप्येषा 'लोक-स्थितिः। प्रजापतेश्चै'षमेष सर्ग आसीत्सोऽबिभेदविद्यया ततः कामप्रयुक्त एकाक्यरममा-

---

वाक्यान्तरमुत्थाप्य व्याचष्टे—कथमित्यादिना। तस्मादेतावत्त्वमवधार्यते तेषामिति शेष। उक्तमेवार्थं लोकदृष्टिमवष्टभ्य स्पष्टयति—न हीति। लब्धव्यान्तराभावेऽपि कामयितव्यान्तर स्यादित्या-शङ्क्याऽऽह—लब्धव्येति। एतद्व्यतिरेकेण साध्यसाधनातिरेकेणेति यावत्। तयोर्द्वयोरपि 'कामत्वविधा-यिश्रुतेरभिप्रायमाह—एतदुक्तमिति। कामस्यानर्थत्वात्साध्यसाधनयोश्च" तादात्म्यात्सर्गादौ पुनर्यताविश्वासं त्यक्त्वा स्वप्नलाभतुल्याभ्यस्तिसृभ्योऽप्ये"षणाभ्यो व्युत्थान सन्यासात्मक कृत्वा काङ्क्षितमोक्षहेतुं ज्ञानमुद्दिश्य श्रवणाद्यावर्तयेदित्यर्थः।

तस्मादपीत्यादि व्याचष्टे—यस्मादिति। "प्राकृतस्थितिरेषा न बुद्धिपूर्वकारिणामिव वृत्तमि-त्याशङ्क्याऽऽह—प्रजापतेश्चेति। "तत्र हेतुत्वेन पूर्वोक्त स्मारयति—सोऽबिभेदित्यादिना। "तत्रैव

---

कामना से अधिक कुछ भी नही 'विन्देत' यानी पा सकता। लोकव्यहार मे फलसाधन से व्यतिरिक्त कोई भी दृष्ट या अदृष्ट लब्धव्य पदार्थ नही है। "प्राप्त करने योग्य विषय की ही अभिलाषा होती है" और इसके अतिरिक्त वह है भी नही, इसलिए 'एतावान् वै काम' बस इतना ही काम है—यह कहना उचित ही है। भाव यह है कि दृष्टार्थ या अदृष्टार्थ वाला साध्यसाधनरूप तथा अब्रह्मवित् पुरुषो द्वारा सेवनीय जो एषणाद्वय है, वही काम है। अत एषणाद्वयात्मक काम से विद्वान् को सन्यास लेकर ज्ञान के लिए श्रवणादिसाधनो म प्रवृत्त होना चाहिये।

क्योकि उक्तविधि से वह अविद्वान कामी पहले इसी प्रकार इच्छा करता था, उससे पूर्व के अविद्वान् ने भी इसी प्रकार कामना की होगी क्योकि लोकप्रवृत्ति कामपूर्विका है। प्रजापति की सृष्टि भी

---

१ यस्मादिति—यतोऽस्मात्फलसाधनलक्षणादधिकतरमिच्छन्नपि नास्माद्यदज्ञो लभते
१ एतावत्त्वावधारणे। २ यस्मात्साधनाद्यन्यकामयितव्याभावस्तस्मादधि- साधनाद्व्यतिरिक्तदृष्टादृष्टलाभाभावादतो युक्तमवधारणमित्यर्थ। तदुक्त— तस्मादविद्याभूमिष्ठ कृत्स्न एतावता भवेदिति' द्यावस्थायां तत्सपात्रमात्रेणाजस्य पूर्णतनि भाव। ४ अविद्यावत्पुरुषनि—अविद्यावत्पुरुषवृत्तिरधि- ॥ वा० १८३७॥ ३ दृष्टार्थ दृष्टार्थरूपनदृष्टार्थफलकम्। एताद्दृशाधिकाराधिकरणाधिकरणकमित्यर्थ। कार एषणास्वामित्व तद्विषयोऽधिकरण यस्यैषणाद्वयस्य तत्तथा ५ एषणा अविद्यावत्पुरुषनिष्ठमिति यावत्। काम अखिलक्रोधाद्यनर्थहेतु। अत—अनर्थहेतुत्वादित्यर्थ। द्वयात्मकात्कामात्। ६ उक्तविषया। ७ कामपूर्विका लोकप्रवृत्ति। ८ एवमिति—कामप्रयुक्त इत्यर्थ। ९ कामत्वबोधीत्यर्थं। १० एषणयो। ११ लोकपुत्रवित्तैषणाभ्य। १२ कामपूर्वकं पामराचरण न समीक्ष्यकारिणाम्। १३ प्रजापतिसर्गस्य प्रजापतेर्वा कामप्रयुक्तत्वे। १४ उक्तार्थे।

णोऽरत्युपघाताय स्त्रियमैच्छत्तां समभवत्ततः सर्गोऽयमासीदिति ह्युक्तम् । तस्मात्तत्सृष्टावेतर्ह्येतस्मिन्नपि काल एकाकी सन्प्राग्दारक्रियातः कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्युक्तार्थं वाक्यम् । स एवं कामयमानः संपादयंश्च जायादीन्यावत्समस्तान्स एतेषां यथोक्तानां जायादीनामेकैकमपि न प्राप्नोत्यकृत्स्नोऽसंपूर्णोऽहमित्येव, तावदात्मानं मन्यते । पारिशेष्यात्समस्तानेवैतान्संपादयति यदा तदा तस्य कृत्स्नता ।

यदा तु न शक्नोति कृत्स्नतां संपादयितुं तदाऽस्य कृत्स्नत्वसंपादनायाऽऽह—तस्यो तस्याकृत्स्नत्वाभिमानिनः कृत्स्नतेयमेवं भवति । कथम् । अयं कार्यकरणसंघातः [1]प्रविभज्यते तत्र [2]मनोनुवृत्ति हीतरत्सर्वं कार्यकरणजातमिति मनः प्रधानत्वादात्मेवाऽऽत्मा । यथा जायादीनां कुटुम्बपतिरात्मैव [3]तदनुकारित्वाज्जायादिचतुष्टयस्य । एवमिहापि मन

कार्यलिङ्गकमनुमानं सूचयति—तस्मादिति । स यावदित्यादिवाक्यमादाय व्याचष्टे—स एवमिति । पूर्वः सशब्दो [6]वाक्यप्रदर्शनार्थः । द्वितीयस्तु व्याख्यानमध्यपातीत्यविरोधः । [7]अर्थसिद्धमर्थमाह—पारिशेष्यादिति ।

तस्यो कृत्स्नतेत्येतदवतार्य व्याकरोति—यदेत्यादिना । अकृत्स्नत्वाभिमानिनो विरुद्धं कृत्स्नत्वमित्याह—कथमिति । विरोधमन्तरेण कार्त्स्न्यार्थं विभागं दर्शयति—अयमिति । विभागे प्रस्तुते मनसो यजमानत्वकल्पनाया निमित्तमाह—तत्रेति । [8]उक्तमेव व्यनक्ति—यथेति । तथा मनसो यजमानत्वकल्प-

कामप्रयुक्त है, अविद्या के द्वारा पहले उसे भय हुआ, फिर काम के वश होकर अकेले रमण न कर पाने के कारण रतिसुख अनुभव के लिए उसने स्त्री की इच्छा की, उससे वह मिथुनीभूत हुआ, फिर यह सृष्टि हुई—ऐसा वर्णन किया जा चुका है । इसलिए इस समय भी इस सृष्टि में विवाह से पूर्व एकाकी मनुष्य चाहता है कि मेरी पत्नी हो और सन्तान हो, मेरे पास धन हो और फिर मैं कर्म करूं । इस प्रकार यह पूर्वोक्त अर्थप्रतिपादक वाक्य है । इस प्रकार इच्छा करके स्त्री आदि विषयों को सम्पादन करने वाला वह पुरुष जब तक पूर्वोक्त समस्त विषयों में एक-एक को भी प्राप्त नहीं कर लेता, तब तक वह अपने को 'अकृत्स्न' अर्थात् अपूर्ण मानता है । परिणामस्वरूप जब वह इन सब को जुटा लेता है, तभी उसकी पूर्णता होती है ।

किन्तु जब वह पूर्णता सम्पादन नहीं कर पाता, तब उसकी पूर्णतासम्पादन में श्रुति इस प्रकार कहती है । उस अकृत्स्नत्व के अभिमानी की यह पूर्णता इस प्रकार होती है । किस प्रकार ? उसका यह कार्यकरणसंघात विभाग से प्रदर्शित किया जाता है, उसमें अन्य समस्त कार्यकरणसंघात मन के अधीन है । मन के उसमें आत्मा के समान प्रधान होने के कारण वह आत्मा है । जैसे जाया, पुत्र, धन व कर्म चारों के अनुकूल होने के कारण कुटुम्ब का स्वामी जायादिचतुष्टय का आत्मा होता है । उसी

१. विभागेन प्रदश्यते । २ मनोऽधीनम् । ३ तदनुकूलत्वात् । ४ उपासाप्रकरणे । ५ अनुमानमिति—प्रजापतिकार्यभूताज्जगतो दारादिविषयकोऽभिलाष कारणपूर्वकः कार्यत्वाद्घटादिवदित्याकारकम् । ६ प्रतीकस्थानीय । ७ अर्थसिद्धमिति—अर्थात् प्रदर्शितव्यतिरेकात् सिद्धं निष्पन्नम्, अर्थम् अन्वयरूपमित्यर्थः । ८ मनस आत्मत्वम् ।

आत्मा परिकल्पते कृत्स्नतायै । तथा वाग्जाया मनोऽनुवृत्तित्वसामान्याद्वाचः । वागिति शब्दश्चोदनादिलक्षणो मनसा श्रोत्रद्वारेण गृह्यतेऽवधार्यते प्रयुज्यते चेति मनसो जायेव वाक् ।

ताभ्यां च वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्रसूयते प्राणः कर्मार्थमिति प्राणः प्रजेव । तत्र प्राणचेष्टादिलक्षणं कर्म चक्षुर्दृष्टवित्तसाध्यं भवतीति चक्षुर्मानुषं वित्तम् । तद्द्विविधं वित्तं मानुषमितरच्चातो विशिनष्टीतरवित्तनिवृत्त्यर्थं मानुषमिति । गवादि हि मनुष्यसंबन्धिवित्तं चक्षुर्ग्राह्यं कर्मसाधनं तस्मात्तत्स्थानीयम् । तेन संबन्धा-

---

मावदित्यर्थः । वाचि जायात्वकल्पनायां निमित्तमाह—मन इति । वाचो मनोनुवृत्तित्व स्वरूपकथनपुरःसरं स्फोरयति—वागितीति ।

प्राणस्य प्रजात्वकल्पनां साधयति—ताभ्यां चेति । कथं पुनश्चक्षुर्मानुषं वित्तमित्युच्यते पशुहिरण्यादि तथेत्याशङ्क्याऽऽह—तत्रेति । आत्मादित्रये सिद्धे सतीति यावत् । आदिपदेन कायचेष्टा, गृह्यते । मानुषमिति विशेषणस्यार्थवत्त्वं समर्थयते—तद्द्विविधमिति । संप्रति चक्षुषो मानुषवित्तत्व प्रपञ्चयति—गवादीति । तत्पदपरामृष्टमेवार्थं व्याचष्टे—तेन संबन्धादिति । तत्स्थानीयं मानुषवित्तस्था-

---

प्रकार उपासनाप्रकरण में यहाँ भी पूर्णता के लिए 'मन आत्मा है'—ऐसा (दृष्टि की) कल्पना की गई है । तथा (जाया के यजमान के अधीन होने के समान वाक् भी मन के अधीन होने के कारण) वाक् जाया है, क्योंकि वाणी मन का अनुवर्तन करती है, इसलिए स्त्री से उसकी तुलना की जाती है । 'वाक्' यह पदार्थ उपदेशात्मकविधिशब्द है, जो श्रोत्र इन्द्रिय द्वारा मनसे गृहीत, निश्चित एवं प्रयुक्त होता है, इसलिए वाक् मन की जाया के समान है ।

उन पत्नी और पतिस्थानीय वाक् और मन से बाह्यकर्मसम्पादन के लिए प्राण की उत्पत्ति होती है, इसलिए प्राण उनकी सन्तान के समान है । वहाँ इन्द्रियचेष्टादिरूप कर्म नेत्रग्राह्य वित्तसाध्य है, इसलिए नेत्र दर्शनक्रिया के समान मानुषवित्त है । मानुष और अमानुष भेद से वित्त दो प्रकार का होता है, 'मानुषवित्त' ऐसा विशेषण अमानुषवित्त की निवृत्ति के लिए है । क्योंकि गौ आदि मनुष्यसम्बन्धीवित्त चक्षु इन्द्रिय से साक्षात् करने योग्य एवं कर्म का साधन है इसलिए वह मानुषवित्त स्थानीय है । उनसे सम्बद्ध नेत्र मानुषवित्त है क्योंकि नेत्र से ही मनुष्य गवादि मानुषवित्त को

---

१ परिकल्पत इति—देहमधिकृत्य यो यज्ञ तत्र मनसि यजमानदृष्टिः कार्या यथा जायादीनां पञ्चानां मध्ये कुटुम्बपतिरात्मैव प्रधानं तदनुकारित्वात् जायादिचतुष्टयस्य तथा वागादीनां पञ्चानां मध्ये मनसः प्राधान्य मनोऽनुकारित्वाद्वागादिचतुष्टयस्येत्यर्थः ॥ २ तथा वागिति—जायाया यजमानाधीनत्ववद्वाचो मनोऽधीनत्व-मभिप्रेत्याऽऽह—मनोऽनुवृत्तित्वेति । 'यन्मनसा ध्यायति तद्वाचा वदतीति' श्रुतः । ३ उपदेशात्मकविधिशब्दो वाक्पदार्थः । ४ ताभ्यां चेति—प्राणं प्रति वाङ्मनसयोर्मातापितृत्वप्रसिद्धिं हेतूकर्तुं चेदुक्तम् । ५ प्राण इति—मनसा विषयं निश्चित्य तत्र विषये निरुक्तरूपया वाचा तदेव मनोऽतिशयेन चेष्टते सा उभयनिवर्त्या चेष्टाऽत्र प्राणशब्दार्थ इति बोध्यम् । ६ बाह्यक्रियार्थम् । ७ इन्द्रियचेष्टेत्यर्थः । ८ दर्शनक्रियावच्चक्षु । ९ सत् । १० भवति । ११ वक्ष्यमाणहेतो । १२ वाच । १३ हेतुरूपम् ।

च्चक्षुर्मानुषं 'वित्तम् । चक्षुषा हि यस्मात्तन्मानुषं वित्तं विन्दते गवाद्युपलभत इत्यर्थः । किं पुनरितरद्वित्तं श्रोत्रं दैवं देवविषयत्वा'द्विज्ञानस्य । विज्ञानं दैवं वित्तं 'तदिह श्रोत्रमेव 'संपत्तिविषयम् । कस्मात्, श्रोत्रेण हि यस्मात्तद्दैवं वित्तं विज्ञानं शृणोति । 'अतः श्रोत्राधीनत्वाद्विज्ञानस्य श्रोत्रमेव तदिति । किं पुनरेतैरात्मादि'वित्तान्तैरिह निर्वर्त्यं कर्मेत्युच्यते—आत्मैवाऽऽत्मेति शरीरमुच्यते । कथं पुनरात्मा कर्मस्थानीयोऽस्य' कर्म-हेतुत्वात् । कथं कर्महेतुत्वम् । आत्मना हि 'शरीरेण यतः कर्म करोति । तस्याकृत्स्नत्वा-भिमानिन एवं कृत्स्नता संपन्ना । यथा बाह्यजायादिलक्षणैवम् । तस्मात्स "एष पाङ्क्तः पञ्चभिर्निर्वृत्तः पाङ्क्तो यज्ञो दर्शनमात्र"निर्वृत्तो"ऽकर्मिणोऽपि ।

नीयं तेन मानुषेण वित्तेनेत्येतत् । संबन्धमेव साधयति—चक्षुषा हीति । तस्माच्चक्षुर्मानुषं वित्तमिति शेषः ।

आकाङ्क्षापूर्वकमुत्तरवाक्यमुपादत्ते—किं पुनरिति । तद्व्याचष्टे—देवेति । "तत्र हेतुमाह—कस्मादित्यादिना । यजमानादिनिर्वर्त्यं कर्म प्रश्नपूर्वकं विशदयति—किं पुनरित्यादिना । इहेति "संपत्ति-पक्षोक्तिः । शरीरस्य कर्मत्वमप्रसिद्धमिति शङ्कित्वा परिहरति—कथं पुनरिति । अस्येति यजमानोक्तिः । हिंशब्दार्थो यत इत्यनूद्यते । तस्यो कृत्स्नतेत्युक्तमुपसंहरति—तस्येति । उक्तरीत्या कृत्स्नत्वे सिद्धे फलितमाह—तस्मादिति ।

देखता है ।

तो फिर दूसरा अमानुषवित्त क्या है ? 'श्रोत्र दैवम्' अर्थात् उपासना के देवविषयक होने से श्रोत्र दैववित्त है । उपासना दैववित्त है, यहाँ उस उपासना को संपत्ति का विषय श्रोत्र ही वह दैववित्त है, ऐसा क्यों ? क्योंकि उस उपासनारूप दैववित्त को पुरुष श्रोत्र से सुनता है । अतः विज्ञान श्रोत्र के अधीन होने के कारण श्रोत्र ही दैववित्त है । किन्तु आत्मा से लेकर वित्तपर्यन्त पाँच साधनों से निष्पन्न होने वाला यहाँ कौन सा कर्म है ? इस पर श्रुति कहती है—आत्मा ही इसका कर्म है, 'आत्मा' शब्द से यहाँ शरीर का ग्रहण होता है । आत्मा कर्मस्थानीय क्यों है ? क्योंकि यह यजमानशरीर के कर्म का हेतु है, यह कर्म का हेतु किस प्रकार है ? क्योंकि शरीर के द्वारा ही वागादिचेष्टा और अन्तःकरण चेष्टादि कर्म करता है । जायादिरूपा बाह्य अपूर्णता के समान उस अपूर्णता के अभिमानी की इस प्रकार कृत्स्नता संपन्न होती है । इस प्रकार कृत्स्नत्व के सिद्ध हो जाने पर यह उपासनारूप आध्यात्मिकयज्ञ पाङ्क्त है अर्थात् पाँच के द्वारा निष्पन्न होने वाला है । बाह्यकर्मशून्य द्वारा भी यह आध्यात्मिक उपासनामयी दृष्टिमात्र से निष्पन्न होता है ।

१ वित्तम् । २ उपासनस्य । ३ तदिहेत्यादि । सत् दैवं वित्तम् । इह उपासनद्वयमध्ये । ४ श्रोत्रमेव संपत्तिविषयमिति—तस्यैवोक्तवित्तसंपादनाधिकरणत्वादुक्तवित्तत्वेन चिन्तनीयत्वादित्यर्थः । ५ अत इति—श्रोत्रस्य श्रवणद्वारा विज्ञानहेतुत्वात्तस्मिन्नध्यात्मविषये दैववित्तदृष्टिरित्यर्थः । ६ पञ्चभिः साधनैः । ७ यजमानशरीरस्य । ८ शरीरेण यतः कर्म करोतीति—वागादिचेष्टा अन्तःकरणचेष्टाश्च शरीरेणैव करोत्यतः कर्मदृष्टिस्तत्र युक्तेत्यर्थः । ९ एवं कृत्स्नत्वस्य सिद्धत्वात् । १० उपासनरूप आध्यात्मिकयज्ञः । ११ निर्वृत्तः अध्यात्ममुपासनमात्रेण सिद्धः । १२ अकर्मिणः बाह्यकर्मशून्यस्य । १३ तत्र हेतुमाहेति—श्रोत्रस्यैव दैववित्तसंपादनविषयत्वे । आकाङ्क्षापूर्वकं हेतुं दर्शयतीत्यर्थः । १४. संपदुपासनापक्ष इत्यर्थः ।

(अथ प्रथमाध्यायस्य पञ्चमं ब्राह्मणम्)

**[1]यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता । एकमस्य साधारणम् । द्वे देवानभाजयत् । त्रीण्यात्मनेऽकुरुत । पशुभ्य**

प्रजापति ने विज्ञान तथा कर्म से जिन सात अन्नों की सृष्टि की है, उनमें से यवादिरूप एक अन्न इसका साधारण है, अर्थात् यह सभी प्राणियों का भोग्य है।—(हुत और प्रहुतरूप)—दो अन्न उसने

---

कथं पुनरस्य[1] पञ्चत्वसंपत्तिमात्रेण यज्ञत्वम्, उच्यते[2]—यस्माद्बाह्योऽपि यज्ञः[3] पशुपुरुषसाध्यः, स च पशुः पुरुषश्च पाङ्क्त एव । यथोक्तमनआदिपञ्चत्वयोगात् । तदाह—पाङ्क्तः पशुर्गवादिः पाङ्क्तः पुरुषः [4]पशुत्वेऽप्यधिकृतत्वेनास्य विशेषः पुरुषस्येति पृथक्पुरुषग्रहणम् । किं बहुना पाङ्क्तमिदं सर्वं कर्मसाधनं फलं च यदिदं किंच यत्किंचिदिदं सर्वमेवं पाङ्क्तं यज्ञमात्मानं यः संपादयति स तदिदं सर्वं जगदात्मत्वेनाऽऽप्नोति य एवं वेद ॥ १७ ॥

इति बृहदारण्यकभाष्ये प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

अस्येति दर्शनोक्तिः । पशोः पुरुषस्य च पाङ्क्तत्वं तच्छब्दार्थः । पुरुषस्य 'पशुत्वा'विशेषात्पृथग्ग्रहणमयुक्तमित्याशङ्क्याऽऽह—पशुत्वेऽपीति । न केवलं पशुपुरुषयोरेव पाङ्क्तत्वं किं तु 'सर्वस्येत्याह—किं बहुनेति । तस्मादाध्यात्मिकस्य दर्शनस्य यज्ञत्वं पञ्चत्वयोगादविरुद्धमिति शेषः । संपत्तिफलं दर्शयति—एवमिति । व्याख्यातार्थं वाक्यमनुवदन्ब्राह्मणमुपसंहरति—य एवं वेदेति । साध्यं साधनं च पाङ्क्तं सूत्रात्मना ज्ञात्वा 'तद्भावाऽऽत्मत्वेनानुसंधानस्य तदाप्तिरेव फलं सत्क्रतुन्यायादित्यर्थः ॥१७॥

इति बृहदारण्यकभाष्यटीकायां प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

किन्तु पञ्चत्व के संपत्तिमात्र से इस उपासना का यज्ञत्व कैसे सिद्ध होता है? इस पर कहते हैं—क्योंकि आन्तर यज्ञ के पाङ्क्तत्व होने पर बाह्य यज्ञ भी पशु और पुरुष से साध्य है, और वह पशु-और पुरुष भी पूर्वोक्त मन आदि पञ्चत्व के सम्बन्ध से पाङ्क्त ही है। यही बात श्रुतिवाक्य में कही गयी है। गौ आदि पशु पाङ्क्त हैं, पुरुष पाङ्क्त है, पाङ्क्तत्वरूप से पशुत्व विशेषता न होने पर भी पुरुष को अधिकारी होने से विशेषता है, इसलिए इसे पृथक् ग्रहण किया है। अधिक क्या? यह कर्म-साधन और फल सभी पाङ्क्त हैं। "यदिदं किञ्च" अर्थात् जो कुछ भी है, सभी पाङ्क्त है। इस प्रकार जो अपने को 'मैं पाङ्क्त यज्ञस्वरूप हूँ' इस प्रकार चिन्तन करता है, साध्यसाधनरूप पाङ्क्त

---

१. "जीवतः कर्मकर्तृत्वलक्षणोऽन्नथ ईरितः । मृतस्याऽविदुषः कर्मफलानर्थं इहोच्यते ॥ पूर्वजन्मन्यनुष्ठाय कर्मोपास्ती अनात्मवित् । जगत् सप्तान्नरूपेण सृजत्युत्तरजन्मनि ॥ चतुर्थब्राह्मणप्रोक्ते यद्यपि ज्ञानकर्मणी । फले तथापि वैषम्यमस्ति जीवेशरूपतः ॥ उत्कृष्टज्ञानकर्मभ्यां वैराजं पदमाप्य सः । जगत् सृजति तत्प्रोक्तं चतुर्थब्राह्मणे पुरा ॥ निकृष्टज्ञानकर्मभ्यां मनुष्यादिपदं गतः । स्वभोग्यं सृजते यत्तत्पञ्चमेऽस्मिन्नुदीर्यते ॥ बृ० वा० सा० १-५ ॥ इति । २ उपासनस्य । ३ अपि-आन्तरयज्ञस्य पाङ्क्तत्वे कैमुतिकत्वद्योतनीत्यवधेयम् । ४ पाङ्क्तत्वेन पशुत्वाविशेषेऽपि । ५ पाङ्क्तयज्ञस्वरूपोऽहमिति चिन्तयति । ६ पाङ्क्तत्वाविशेषात् । ७ पशुत्वाविशेषादिति—तथा च श्रुतिः । "पशवो द्विपादश्चतुष्पादश्चेति' वक्ष्यते १।५।२ टीकायाम् । ८ सर्वमपि—चराचरस्य पाञ्चभौतिकत्वेन पाङ्क्तत्वमित्यर्थः । ९ पाङ्क्तं सूत्रम् ।

एकं प्रायच्छत्। तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा। यो वैतामक्षितिं वेद। सोऽन्नमत्ति प्रतीकेन। स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥१॥

देवताओं को विभाग करके दे दिया है। तीन अन्न उसने अपने लिये रक्खे। दुग्धरूप एक अन्न पशुओं को दिया। उस पशु अन्न में वे सभी प्रतिष्ठित हैं, जो प्राणनक्रिया करते हैं और जो नहीं करते हैं। ये अन्न सदा सर्वदा खाये जाने पर भी क्षीण क्यों नहीं होते? जो कोई इस अन्न के अविनश्वरभाव को जानता है, वह मुख्यरूप प्रतीक के द्वारा अन्न खाता है। वह देवताओं को प्राप्त होता है तथा अमृत का जीवनार्थ आश्रय लेता है। इस विषय में ये मन्त्र हैं ॥१॥

यत्सप्तान्नानि मेधया। अविद्या प्रस्तुता। तत्राविद्वानन्या देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति [१]सवर्णाश्रमाभिमानः कर्मकर्तव्यतया [२]नियतो जुहोत्यादिकर्मभिः कामप्रयुक्तो देवादीनामुपकुर्वन्सर्वेषां भूतानां [३]लोक इत्युक्तम्। यथा च स्वकर्मभिरेकैकेन सर्वभूतैरसौ [४]लोको भोज्यत्वेन सृष्टः। एवमसावपि जुहोत्यादिपाङ्क्तकर्मभिः सर्वाणि भूतानि [५]सर्व[६]

ब्राह्मणान्तरमवतारयितुं सङ्गतिं वक्तुं वृत्तं कीर्तयति—यत्सप्तान्नानीत्यादिना। तत्रेत्यतिक्रान्तब्राह्मणोक्तिः। उपास्तिशब्दितं भेददर्शनमविद्याकार्यमनेनानूद्य न स वेदेति तद्धेतुरविद्या पूर्वत्र प्रस्तुतेति योजना। अयो ऽयमित्यत्रोक्तमनुवदति—सवर्णाश्रमाभिमानं इति। आत्मैवेदमग्र आसीदित्यादावुक्तं स्मारयति—कामप्रयुक्त इति। वृत्तमनूद्योत्तरग्रन्थमवतारयितुमपेक्षितं पूरयति—यथा चेति। गृहिणो जगतश्च परस्परं स्वकर्मोपार्जितत्वमेष्टव्यमन्यथाऽन्योन्यमुपकारकत्वायोगादित्यर्थः। ननु सूत्रस्यैव जगत्क-

को आत्मस्वरूप से जानता है, वह इस सम्पूर्ण जगत् को आत्मस्वरूपत्वेन प्राप्त कर लेता है ॥ १७ ॥

इस प्रकार बृहदारण्यक भाष्य के हिन्दीभाषानुवाद में प्रथमाध्याय का
पुरुषविधनामक चतुर्थ ब्राह्मण पूर्ण हुआ ॥ ४ ॥

"(प्रजापति ने) विज्ञान (तथा कर्म) से जिन सात अन्नों की सृष्टि की है" इत्यादि मन्त्र से सप्तान्नसञ्ज्ञक पञ्चम ब्राह्मण प्रारम्भ किया जाता है। यहाँ अविद्या को प्रस्तुत किया गया है। वहाँ (पिछले ब्राह्मण में) अब्रह्मवित 'यह देवता अन्य है और मैं अन्य हूँ" इस भावना से अन्य देवता की उपासना करता है। अविद्या के कार्य से विशिष्ट वह वर्णाश्रमाभिमानी पुरुष कर्म की कर्तव्यता के अधीन होकर यागादि कर्मों द्वारा देवतादि का उपकार करने के कारण समस्त भूतों का भोग्य है, ऐसा कहा जा चुका है। जिस प्रकार एक एक करके सभी मनुष्यों ने अपने कर्मों द्वारा कर्मानुष्ठाना को भोज्यरूप से उत्पन्न किया है। उसी प्रकार उस कर्मानुष्ठाता ने यागादि पाङ्क्तकर्मों द्वारा समस्त प्राणियों को

१ अविद्वानिति पदेनाविद्यावैशिष्ट्यमभिधाय तत्कार्यवैशिष्ट्यमभिदधाति—सवर्णेति। २ कर्माधीन इति यावत्। ३ भोग्य। ४ कर्मानुष्ठाता। ५ कर्मकृन्नरोऽपि। ६ सर्वं चेति—स्वकर्मानार्जितस्य भोग्यत्वायोगाद्वोक्ता सर्वं भोज्यमर्जितमित्यर्थः।

च जगदात्मभोज्यत्वेनासृजत । एवमेकैकः स्वकर्मविद्यानुरूप्येण सर्वस्य जगतो भोक्ता भोज्यं च सर्वस्य सर्वः कर्ता कार्यं चेत्यर्थः । एतदेव च विद्याप्रकरणे मधुविद्याया वक्ष्यामः । सर्वं सर्वस्य कार्यं मध्वित्यात्मैकत्वविज्ञानार्थम् । यदसौ जुहोतीत्यादिना पाङ्क्तेन काम्येन कर्मणाऽऽत्मभोज्यत्वेन जगदसृजत विज्ञानेन च तज्जगत्सर्वं सप्तधा प्रविभज्यमानं कार्यकारणत्वेन सप्तान्नान्युच्यन्ते भोज्यत्वात्तेनासौ पिता तेषामन्नानाम् । एतेषामन्नानां सविनियोगानां सूत्रभूताः संक्षेपतः प्रकाशकत्वादिमे मन्त्राः ॥ १ ॥

तं स्व ज्ञानक्रियातिशयपरजान्नेतरेषा तदभावादत आह—एवमिति । पूर्वकल्पीयविहितप्रतिषिद्धज्ञान-कर्मानुष्ठाता सर्वो जन्तुरुत्तरसर्गस्य पितृत्वेनात्र विवक्षितो न तु प्रजापतिरेवेत्युक्तमर्थं संक्षिप्याऽऽह—सर्वस्येति । सर्वस्य मिथोहेतुहेतुमत्त्वे प्रमाणमाह—एतदेवेति । सर्वस्यान्योन्यकार्यकारणत्वोक्त्या कल्पितत्ववचनं कुत्रोपयुज्यते तत्राऽऽह—आत्मैकत्वेति । एवं भूमिकां कृत्वोत्तरब्राह्मणतात्पर्यमाह—यदसाविति । उच्यन्ते ध्यानार्थमिति शेषः । अन्नत्वे हेतुः—भोज्यत्वादिति । तेन ज्ञानकर्मभ्यां जनकत्वेनेति यावत् । ब्राह्मणमवतार्य मन्त्रमवतारयति—एतेषामिति ॥ १ ॥

तथा सारे ससार को अपने भोग्यरूप से उत्पन्न किया । इस प्रकार एक-एक करके सभी मनुष्य कर्म और ज्ञान के अनुरूप समस्त जगत् के भोक्ता और भोज्य है अर्थात सभी सब के कर्ता और कार्य हैं। विद्या के प्रकरण म आत्मैकत्वज्ञान के लिए यही वात (द्वितीय अध्याय के पञ्चम ब्राह्मण मे) मधुविद्या के प्रकरण मे कहेगे—"सभी पृथिवी आदि भूत एव सभी भूतो का कार्य मधु है" । उस कर्मानुष्ठाता मनुष्य ने जो यागादि आत्मादिपञ्चक निर्मित काम्यकर्म और अपने विज्ञान द्वारा आत्मभोज्यरूप से इस जगत् की उत्पत्ति की, वह सारा कार्यकारणात्मकरूप जगत् सात प्रकार से विभक्त होने पर भोज्य होने से सप्तान्नात्मक कहा जाता है । इसलिए वह उन अन्नो का पिता है । वहां-वहां देवादिको के सम्बन्धसहित इन अन्नो के सक्षपत प्रकाशक होने के कारण ये मन्त्र इनके सूचकरूप हैं ॥१॥

'यत्सप्तान्नानि' इत्यादि मन्त्र मे 'यत्' शब्द 'अजनयत्' क्रिया से सम्बद्ध होने से क्रियाविशेषण है । 'मेधया' अर्थात् प्रज्ञा या विज्ञान से तथा 'तपसा' अर्थात् पाङ्क्तकर्मसे (सृष्टि की) । मेधा और तप शब्दो के वाच्य ज्ञान और कर्म ही हैं । क्योंकि (ज्ञान और कर्म) इन्ही का यहां प्रकरण है, इससे भिन्न

१ बृ० उ० २।५।१ । २ कर्मकृत्तर । ३ आत्मादिपञ्चकनिर्मितेन । ४ विनियोगस्तत्र तत्र देवादौ सम्बन्ध तत्सहिता । ५ सूचकरूपा । ६ पितृत्वेनेति—'विज्ञानात्मा पिता तावन्न मनो न प्रजापति । अविशिष्टाधिकारित्वान्न विज्ञानात्मनोऽपर ॥ सिसृक्षितत्वा मनसस्तथा व्यष्टात्मन प्रभो । साधारणात्मन स्रष्टा क्षेत्रज्ञस्ततोऽपर" ॥ १५-१६ ॥ इति । मन एव पितेतिश्रुतेर्मनसो वा सर्वजगत्स्रष्टृत्वात्प्रजापतेर्वा मन्त्रस्थ-नात पितृशब्दतत्याशङ्क्याऽऽह—विज्ञानात्मेति । सर्वस्मिञ्जगति जीवस्य कर्मादिद्वारा साधारण्येन कारणत्वादसावेवात्र पितेत्यर्थ । न मन इत्यादि निगमयति—नेति ॥ जीववन्मनसि प्रजापतौ च कारणत्व किं न स्यादित्याशङ्क्याऽऽह —सिसृक्षितत्वादिति । द्वयोरपि सृष्टिनिविष्टत्वेन कार्यकोटिनिविष्टत्वान्न कारणत्वमित्यर्थ । सर्वस्य जगत साधारणात्मा क्षेत्रज्ञस्ततोऽपरो न स्रष्टेति सम्बन्ध । ७ प्रकरणे मन्त्रे वा । ८ कार्यस्य विकारतया वाचारम्भणत्वादिति भाव । ९ ध्यानार्थमिति—स्वकर्मादिना सृष्टस्य जगत सप्तधा विभक्तस्य सूत्रात्मकस्य स्वात्मना (स्वात्मत्वेन) ध्यान तद्भावफलक विधातुमुत्तर ब्राह्मणमित्यर्थ ।

यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाऽजनयत्पिता । एकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते । स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रꣳ ह्येतत् । द्वे देवानभाजय-दिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति । तस्मान्नेष्टि-याजुकः स्यात् । पशुभ्य एकं प्रायच्छदिति तत्पयः ।

यह बात प्रसिद्ध है कि पिता ने ज्ञान और कर्म के द्वारा ही सप्तान्न की सृष्टि की । उनमें से एक अन्न उसका साधारण है जोकि यह खाया जाता है, यही इसका साधारण अन्न है । जो इस साधारण अन्न की उपासना करता है, वह पाप से दूर नहीं होता क्योंकि यह अन्न समस्त प्राणियों का मिला जुला है । उस परमेश्वर ने हुत और प्रहुतरूप दो अन्न देवताओं का विभाग करके दिये । इसीलिये गृहस्थ पुरुष देवताओं के लिये वहन और बलि भेंट करते हैं । कुछ लोगों ने दर्श और पूर्णमास को देवताओं के दो अन्न कहे हैं । इसलिये सकाम इष्टियों के यजन में प्रवृत्त न हो । वह दुग्ध नामक एक

यत्सप्तान्नानि यदजनयदितिक्रियाविशेषण मेधया प्रज्ञया [1]विज्ञानेन तपसा च कर्मणा ज्ञानकर्मणी एव हि मेधातपःशब्दवाच्ये तयोः [2]प्रकृतत्वान्नेतरे मेधातपसी [3]अप्रकरणात् । पाङ्क्तं हि कर्म जायादिसाधनं य एवं वेदेति चान्तरमेव ज्ञानं प्रकृतम् । तस्मान्न प्रसिद्धयोर्मेधातपसोराशङ्का कार्या । अतो यानि सप्तान्नानि ज्ञानकर्मभ्यां जनितवा-[4]न्पिता तानि प्रकाशयिष्याम इति वाक्यशेषः । तत्र मन्त्राणामर्थस्तिरोहितत्वात्प्रायेण

तत्राऽऽद्यमन्त्रभागमादाय व्याचष्टे—यत्सप्तान्नानीति । अजनयदितिक्रियाया विशेषणं यदिति पदम् । तथा च तद्युक्तं पितृत्वादिति शेषः । ग्रन्थार्थधारणशक्तिर्मेधा, कृच्छ्रचान्द्रायणादि तपः, ते कस्मादत्र न गृह्येते तत्राऽऽह—ज्ञानकर्मणी इति । तयोः प्रकृतत्वं प्रकटयति—पाङ्क्तं हीति । इतरयो-रप्रकृतत्वं हेतूकृतमनूद्य फलितमाह—तस्मादिति । ज्ञानकर्मणोः प्रकृतत्वमुक्तं हेतुमादाय वाक्यं पूरयति —अत इति । यत्सप्तान्नानीत्यादिमन्त्रभागं व्याख्याय ब्राह्मणवाक्यसमुदायतात्पर्यमाह—तत्रेति ।

अप्राकरणिक होने से ग्रन्थार्थावधारणशक्ति मेधा और कृच्छ्रचान्द्रायणादि तप इनके वाच्य नहीं हैं । यहाँ 'जायादिसाधन' वाले पाङ्क्तकर्म का, इसके बाद 'जो इस इस प्रकार जानता है' इस वाक्य से प्रसिद्ध वाचनिक अर्थ मेधा और तप की आशङ्का नहीं करनी चाहिये । इसलिए ज्ञान और कर्म के द्वारा जिन सात अन्नों को ज्ञानकर्माधिकारी क्षेत्रज्ञ पिता ने उत्पन्न किया, उन्हें हम विस्तारपूर्वक कहेंगे, यह तात्पर्य है । वहाँ वेदों में मन्त्रभाग का छिपा हुआ अर्थ होने के कारण प्रायः उसका समझना

१ पाङ्क्तोपास्त्या । २ पाङ्क्तेन । ३ प्राकरणिकत्वात् । ४ ज्ञानकर्माधिकारी क्षेत्रज्ञः । ५ जननम् ।

पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मा-
त्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वाऽनु-
धापयन्त्यथ वत्सं जातमाहुरतृणाद इति । तस्मिन्सर्वं
प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳ
सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । तद्यदिदमाहुः
संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा
विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं

अन्न पशुओं को दिया । अत मनुष्य और पशु पहले दुग्ध के ही आश्रय जीते है । इसीलिये सद्योजात
बालक को घृत चटाते है या स्तन्यपान कराते है, इसीसे उत्पन्न हुए बछडेको भी तृणभक्षण न करने वाला
कहा करते है । जो प्राणनक्रिया करते है और जो नही करते है, वे सब पश्वन्न दुग्ध मे ही प्रतिष्ठित
है । अत एक वर्ष तक दुग्ध से हवन करने वाला पुरुष अपमृत्यु को जीत लेता है-ऐसा नही समझना
चाहिये, तथ्य तो यह है कि वह जिस दिन दुग्ध से हवन करता है, उसी दिन अपमृत्यु को जीत लेता
है, एक वर्ष तक प्रतीक्षा नही करनी पडती । इस प्रकार की उपासना करने वाला पुरुष देवताओ को

दुर्विज्ञेयो भवतीति तदर्थव्याख्यानाय ब्राह्मणं प्रवर्तते । तत्र यत्सप्तान्नानि मेधया तपसा-
ऽजनयत्पितेत्यस्य कोऽर्थ उच्यत इति हिशब्देनैव व्याचष्टे प्रसिद्धार्थविद्योतकेन । प्रसिद्धो
ह्यस्य मन्त्रस्यार्थ इत्यर्थः । यदजनयदिति चानुवादस्वरूपेण मन्त्रेण प्रसिद्धार्थतैव
प्रकाशिता । अतो ब्राह्मणमविशङ्कयैवाऽऽह—मेधया हि तपसाऽजनयत्पितेति ।

मन्त्रब्राह्मणात्मको ग्रन्थ समन्वयं । मेधया हीत्यादिब्राह्मणमाकाङ्क्षापूर्वकमुत्थापयति—तत्र यदिति ।
प्रकृतमन्त्रसमुदाय सप्तम्या परामृश्यते । व्याख्यानमेव सगृह्णाति—प्रसिद्धो हीति । न केवलं हिशब्दा-
न्मन्त्रस्य प्रसिद्धार्थत्वं किं तु मन्त्रस्वरूपालोचनायामपि तत्सिध्यतीत्याह—यदिति । मन्त्रार्थस्य प्रसिद्धत्वे
मन्त्रस्यानुगुणत्वं हेतूकृत्य फलितमाह—अत इति ।

कठिन होता है, अत उसके अर्थ की व्याख्या के लिए ब्राह्मणभाग प्रवृत होता है । उपरोक्त 'यत्सप्ता-
न्नानि मेधया तपसाऽजनयत् पिता' इत्यादि मन्त्र का क्या अर्थ है ? प्रसिद्ध अर्थ के द्योतक "हि" इस
शब्द से (ब्राह्मण) व्याख्या करता है । इस मन्त्र का अर्थ प्रसिद्ध ही है—ऐसा इसका भाव है । 'जो उत्पन्न
किया' इस अनुवादस्वरूप मन्त्र से इसके अपने प्रसिद्ध अर्थ का प्रकाश होता है । इसलिए ब्राह्मण सशय-
रहित होकर कहता है—"ज्ञानकर्माधिकारी क्षेत्रज्ञ ने विज्ञान और कर्म से सृष्टि की ।

१ हिशब्देनेति—ज्ञानकर्मातिरिक्तसृष्टिहेत्वभावात्तयोरेव तत्र हेतुत्वप्रसिद्धेर्मेधया हीत्याद्या श्रुतिस्तेनैव पितु
स्स्रष्टृत्व हिशब्देन साक्षादाहेत्यर्थ । प्रसिद्ध ह्युक्तार्थकमेधातपसोर्जगत्कारणत्वम् । २ स्वस्य । ३ अस-
ङ्कयैनैव । ४ मन्त्रस्वरूपस्य ।

विद्वान्सर्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति ॥ कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते । यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्तिः प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत् । स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशंसा ॥२॥

सम्पूर्ण भक्ष्य प्रदान करता है। फिर सदा खाये जाने पर भी वे अन्न नष्ट क्यों नहीं होते? इसका एकमात्र यही कारण है कि इसका जनक पुरुष अविनाशी है। अतः वही बारम्बार आवश्यकतानुसार उसे उत्पन्न कर देता है। अन्न के इस अविनाशीभाव को जो भी जानता है अर्थात् पुरुष ही अविनाशी है, वही इस अन्न को ज्ञान एवं कर्म से उत्पन्न कर देता है। यदि वह पुरुष इसे उत्पन्न नहीं करता तो वह अन्न भक्षण किये जाने पर नष्ट हो जाता। ऐसा जो जानता है वह मुखरूप प्रतीक के द्वारा अन्न भक्षण करता है। वह देवताओं को प्राप्त होता है और अमृत के आश्रित जाता है। ऐसी फलश्रुति प्रशंसामात्र के लिये है ॥२॥

---

ननु कथं प्रसिद्धता[1]ऽस्यार्थस्येति, उच्यते—जायादिकर्मान्तानां [2]लोकफलसाधनानां पितृत्वं[3] तावत्प्रत्यक्षमेव, अभिहितं च जाया मे स्यादित्यादिना[4]। तत्र च दैवं वित्तं विद्या कर्म पुत्रश्च फलभूतानां लोकानां साधनं स्रष्टृत्वं प्रतीत्यभिहितम्। वक्ष्यमाणं च प्रसिद्धमेव। तस्माद्युक्तं वक्तुं मेधयेत्यादि।

---

तत्प्रसिद्धिमुपपादयितुं पृच्छति—नन्विति। साध्यसाधनात्मके जगति पितृत्वमविद्यावतो भावि तत्प्रत्यक्षत्वात्प्रसिद्ध'मनुभूयते' हि जायादि संपादयन्नविद्वानित्याह—उच्यत इति। श्रुत्या च प्रागुक्तत्वात्प्रसिद्धमेतदित्याह—अभिहितं चेति। यच्च मेधातपोभ्यां स्रष्टृत्वं मन्त्रब्राह्मणयोरुक्तं तदपि प्रसिद्धमेव विद्याकर्मपुत्राणामभावे लोकत्रयस्याप्यनुपपत्तेरित्याह—तत्र चेति। पूर्वोत्तरग्रन्थ सामर्थ्यं। 'पुत्रेणैवाय लोको जय्य इत्यादौ वक्ष्यमाणत्वाच्चास्यार्थस्य प्रसिद्धतेत्याह—वक्ष्यमाण चेति। मन्त्रार्थस्यैव प्रसिद्धत्वे मन्त्रस्य प्रसिद्धार्थविषयं ब्राह्मणमुपपन्नमित्युपसंहरति—'तस्मादिति।

---

अविद्या से युक्त जगत के जनकस्वरूप से मन्त्रप्रतिपाद्य अर्थ की प्रसिद्धार्थता कैसे है? इसपर कहते हैं—स्त्री से लेकर कर्मान्त लोकरूप फल और साधनों का जनकत्व तो प्रत्यक्ष ही है। यह बात मुझे स्त्री प्राप्त हो इत्यादि श्रुतिवाक्यों से कही गई है। यह भी बतलाया जा चुका है कि दैव वित्त,

---

१ अविद्यावतो जगज्जनकत्वरूपस्य मन्त्रप्रतिपाद्यस्यार्थस्येत्यर्थः। २ लोकरूपफलेति भावः। ३ प्रसिद्धिमेवाभिनयति—अनुभूयत इति। ४ पितृत्वेनेति शेषः। ५ बृ० उ० १।४।१७। ६ मन्त्रार्थस्य प्रसिद्धत्वात्।

एषणा हि फलविषया प्रसिद्धैव च लोके । एषणा च जायादी'युक्तमेतावान्वै काम इत्यनेन । ब्रह्मविद्याविषये च 'सर्वैकत्वात्कामानुपपत्तेः । एतेनाशास्त्रीयप्रज्ञातपोभ्यां स्वाभाविकाभ्यां जगत्स्रष्टृत्वमुक्तमेव भवति ।

स्थावरान्तस्य चानिष्टफलस्य कर्मविज्ञाननिमित्तत्वात् । विवक्षितस्तु शास्त्रीय एव साध्यसाधनभावो ब्रह्मविद्याविधित्सया तद्वैराग्यस्य विवक्षितत्वात् । सर्वो ह्ययं 'व्यक्ता-

प्रकारान्तरेण मन्त्रार्थस्य प्रसिद्धत्वमाह—एषणा हीति । फलविषयत्वं तस्याः स्वानुभवसिद्धमिति यावत् । हिशब्दः । तस्या लोकप्रसिद्धत्वेऽपि कथं मन्त्रार्थस्य प्रसिद्धत्वमत आह—एषणा चेति । जायाद्यात्मकस्य कामस्य संसारारम्भकत्ववन्मोक्षेऽपि कामः संसारमारभेत कामत्वाविशेषादित्यतिप्रसङ्गमाशङ्क्याऽऽह—ब्रह्मविद्येति । तस्या विषयो मोक्षः । तस्मिन्नद्वितीयत्वाद्रागादिपरिपन्थिनि कामापरपर्यायो रागो नावकल्पते । न हि मिथ्याज्ञाननिदानो रागः सम्यग्ज्ञानाधिगम्ये मोक्षे संभवति । 'श्रद्धा तु तत्र भवति 'तत्त्वबोधाधीनतया संसारविरोधिनी 'तत्र संसारानुवृत्तिर्मुक्तावित्यर्थः । शास्त्रीयस्य जायादेः संसारहेतुत्वे कर्मादि'शास्त्रीयस्य कथं तद्धेतुत्वमित्याशङ्क्याऽऽह—एतेनेति । अविद्योत्थस्य कामस्य संसारहेतुत्वोपदर्शनेनेति यावत् । स्वाभाविकाभ्यामविद्याधीनकामप्रयुक्ताभ्यामित्यर्थः ।

इतश्च 'तयोर्जगत्सृष्टिप्रयोजकत्वमेष्टव्यमित्याह—स्थावरान्तस्येति । यत्सप्तान्नानीत्यादिमन्त्र-पदस्य मेधया हीत्यादिब्राह्मणस्य चाक्षरोत्थमर्थं नुक्त्वा तात्पर्यार्थमाह—विवक्षितस्त्विति । 'शास्त्रपरवश-स्य "शास्त्रवशादेव साध्यसाधनभावादशास्त्रीयाद्वैमुख्यसंभवात्स तस्यात्र विवक्षितत्वमित्यर्थः । शास्त्री-यस्य साध्यसाधनभावस्य विवक्षितत्वे हेतुमाह—ब्रह्मेति । "तदेव प्रपञ्चयति—सर्वो हीति । दुःखयतीति

ज्ञान, कर्म और पुत्र अपने फलभूत लोकों के स्रष्टृत्व में साधन हैं; (पुत्र से यह लोक जय्य है—)
वक्ष्यमाण बात भी प्रसिद्ध ही है । इसलिए "मेधया" इत्यादि कथन ठीक ही है ।
एषणा भी किसी फल के लिए ही होती है, यह बात लोकव्यवहार से सिद्ध है । 'एतावान्वै काम' (इतना मात्र ही काम है—) इस वाक्य से जाया आदि ही एषणा है यह प्रतिपादित किया गया है । ब्रह्मविद्या का जो विषय है, उसमें सब अद्वैत हो जाने के कारण कामना का होना संभव नहीं है । इससे यह कथन सिद्ध हो जाता है कि अशास्त्रीय एवं स्वाभाविक ज्ञान व कर्मों के द्वारा संसार की सृष्टि होती है ।

१ अद्वैतत्वात् । २ भवतीति—नहि सप्तान्नसृष्टौ शास्त्रीय एव प्रज्ञातपसी निमित्तं भवतो निषिद्धयोरपि तयोस्तद्धेतुत्वस्येष्टत्वादिति भावः । ३ कार्यकारणरूपः । ४ नन्वेवं मुमुक्षाया अभावेनाधिकार्यभावान्मोक्ष-साधने ज्ञानेऽधिकारिणः प्रवर्तकस्य तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्यादिशास्त्रस्याऽऽनर्थक्यं स्यादित्याशङ्क्याऽऽह—श्रद्धा त्विति । तुशब्दो यथोक्तचोद्यव्यावृत्त्यर्थः । मुमुक्षास्थानीया श्रद्धेत्यर्थः । अस्मिन्पक्षे विवक्षादीनि त्रीण्यप-धिकारिविशेषणानि इति न किञ्चिदवद्यमिति भावः । ननु कामवच्छ्रद्धापि तत्र संसारं जनयदेव श्रद्धाकामयोर्मनःप-रिणामत्वाविशेषादित्याशङ्क्याऽऽह—तत्त्वबोधेति । आविद्यसंसारविरोधितत्त्वज्ञानानुकूलतया संसारविरोधिनीत्यर्थः । तयोर्मनःपरिणामत्वाविशेषेऽपि यथोक्तश्रद्धाया सात्त्विकपरिणामत्वात्संसारविरोधित्वमिति भावः । ५ तत्त्व-ज्ञानजनकतया । ६ मोक्षे रागाऽसंभवात् । ७ निषिद्धस्य । ८ अशास्त्रीयमेधातपसो । ९ शास्त्रेऽत्यन्तश्रद्धावतस्तदनुकूलाचरणस्येत्यर्थः । १० पुंसः । ११ विवक्षितवैराग्यमेव ।

व्यक्तलक्षणः संसारोऽशुद्धोऽनित्यः साध्यसाधनरूपो दुःखोऽविद्याविषय इत्येतस्माद्विरक्तस्य ब्रह्मविद्याऽऽरब्धव्येति ।

तत्रान्नानां विभागेन विनियोग उच्यते—एकमस्य साधारणमिति, मन्त्रपदं तस्य व्याख्यानमिदमेवास्य तत्साधारणमन्नमित्युक्तमस्य भोक्तृसमुदायस्य, किं तद्यदिदमद्यते भुज्यते सर्वैः प्राणिभिरहन्यहनि तत्साधारणं सर्वभोक्त्रर्थमकल्पयत्पिता सृष्ट्वाऽन्नम् ।

स य एतत्साधारणं सर्वप्राणभृत्स्थितिकरं भुज्यमानमन्नमुपास्ते तत्परो भवतीत्यर्थः । उपासनं हि नाम तात्पर्यं दृष्टं लोके गुरुमुपास्ते राजानमुपास्त इत्यादौ । तस्माच्छरीरस्थित्यर्थान्नोपभोगप्रधानो नादृष्टार्थकर्मप्रधान इत्यर्थः । स एवंभूतो न पाप्मनोऽधर्माद्व्यावर्तते न विमुच्यत इत्येतत् । तथाच मन्त्रवर्णः—"मोघमन्नं विन्दते" इत्यादि । स्मृतिरपि—"नाऽऽत्मार्थं पाचयेदन्नम्" "अप्रदायैभ्यो यो भुङ्क्ते स्तेन एव

दुःखस्तद्धेतुरिति यावत् । प्रकृतमन्त्रब्राह्मणव्याख्यासमाप्तावितिशब्दो विवक्षितार्थप्रदर्शनसमाप्तौ वा । मन्त्रब्राह्मणयोः श्रुत्यर्थाभ्यामर्थमुक्त्वा समनन्तरग्रन्थमवतारयति—तत्रेति । सप्तविधेऽन्ने सृष्टे सतीति यावत् । व्याख्यानमेव विवृणोति—अस्येत्यादिना ।

साधारणमन्नमसाधारणीकुर्वतो दोषं दर्शयति—स य इति । तत्परो भवतीत्युक्तं विवृणोति—उपासनं हीति । ब्राह्मणोक्तेऽर्थे मन्त्रं प्रमाणयति—तथा चेति । मोघं विफलं देवाद्यनुपभोग्यमन्नं यदि ज्ञानदुर्बलो लभते तदा 'स वध एव तस्येति साधारणान्नस्यासाधारणीकरणं निन्दितमित्यर्थः । तत्रैव स्मृतीरुदाहरति—स्मृतिरपीति । 'न वृथा घातयेत्पशुम् । न चैकः स्वयमश्नीयाद्विधिवर्जं न 'निर्वपेत्'

अशास्त्रीय मेधा और तप के सृष्टिप्रयोजक होने से स्थावरपर्यन्त सभी अनिष्टफल, कर्म और विज्ञान से होने वाला है। किन्तु यहाँ साध्यसाधनभाव ही विवक्षित है क्योंकि ब्रह्मविद्या का विधान करने की इच्छा से उसमें वैराग्य बतलाना इष्ट है। यह सभी कार्यकारणरूप संसार दोषयुक्त, अनित्य, साध्यसाधनरूप, दुःखात्मक और अविद्याजन्य है। अतः इससे विरक्त हुए पुरुष के लिए ब्रह्मविद्या का आरम्भ करना चाहिये।

वहाँ अन्नों का विभागपूर्वक उपकार बतलाया जाता है। 'एकमस्य साधारणम्' यह मन्त्रपद है, जिसका अर्थ है कि 'यही उसका साधारण अन्न है' ऐसा कहा गया है। 'अस्य' अर्थात् इस भोक्तृ-समुदाय का साधारण अन्न है, वह कौन सा है? 'यदिदमद्यते' अर्थात् यह जो कुछ समस्त प्राणियों द्वारा प्रतिदिन खाया जाता है, उसे ज्ञानकर्माधिकारी क्षेत्रज्ञ ने अन्न की सृष्टि करके, उसे समस्त भोक्ताओं के निमित्त साधारण अन्न कल्पित कर दिया।

'स य एतत्' अर्थात् वह जो समस्त प्राणियों का पालन, पोषण और स्थितिकारक एवं उनसे

१ सदोष । २ अविद्याजन्य । ३ उपयोग उपकार । ४ तदिष्टस्तत्रम् । ५ उपासनस्योक्तार्थत्वात् ।
६ मोघमिति—'अप्रचेता सत्यं ब्रवीमि वध इत्सतस्य नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादीति शेषः । ७ शब्दतात्पर्याभ्यां लब्धमर्थम् । ८ उत्ताअलाभ । ९ निर्वपेदिति—अध्वर्युः पवित्रवत्यामग्निहोत्रहवण्या (दर्भवेष्टितहवनसाधनीभूतस्रुवादिरूपपात्रविशेषे) मुष्टिमात्रं व्रीह्यादिकं निधाय तथा शूर्पे तन्मुष्टिमात्रं व्रीह्यादिकं प्रक्षिपति इत्येतत्कर्मनिर्वापपदवाच्यम् ।

सः", "ॐ अन्नादे, भ्रूणहा मार्ष्टि" इत्यादिः।

---

इति पादत्रयं द्रष्टव्यम्। 'इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः। तैर्दत्तान्' इति शेषः। 'अनेना अभिशंसति। स्तेनः प्रमुक्तो राजनि यावन्नानृतसंकरः' इत्युत्तरं पादत्रयम्। अत्राऽऽद्यपादस्यार्थो भ्रूणहा श्रेष्ठब्राह्मणघातकः। यथाऽऽहुः—'वरिष्ठब्रह्महा चैव भ्रूणहेत्यभिधीयते' इति। 'स्वस्यान्नभक्षके स्वपापं मार्ष्टि 'शोधयतीत्यप्रदातुः पापक्षयोपते'रितरस्यासाधारणीकृत्य भुञ्जानस्य पापितेति।

"अदत्त्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः"॥

'इत्यादिवाक्यमादिशब्दार्थः।

---

भोगे जाते हुए इस अन्न की 'उपास्ते' अर्थात् तत्परतापूर्ण निष्ठा करता है। लोकव्यवहार में 'गुरु की उपासना करता है', 'राजा की उपासना करता है' इत्यादि प्रसङ्गों में तन्निष्ठता ही उपासनारूप से देखी गयी है। इसलिए जो प्रधानरूप से शरीरस्थितिस्थापक अन्न का ही उपभोग करने वाला है यानी अदृष्टार्थकमप्रधान नहीं है, "स" अर्थात् इस प्रकार का पुरुष "पाप्मनः" अर्थात् अधर्म से न व्यावर्तते" अर्थात् नहीं छूट पाता। "वह व्यर्थ ही अन्न का उपभोग करता है" इत्यादि श्रुतिवाक्य भी इसमें प्रमाण है। तथा "अपने लिए अन्न न पकाए", "जो इन्हें ( बलिवैश्वदेव यज्ञ में ) बिना दिए

---

१ अनेना इत्यादि—अनेना अकृततत्पाप। अभिशसति—अकृततत्पापमभिलक्ष्यीकृत्य मिथ्यातत्पाप शसति तस्मिन् मिथ्यातत्पाप ब्रुवति जने मार्ष्टि स्वपापानि क्षिपतीति यावत्। स्तेनश्चौरश्च, प्रमुक्तोऽदण्डितो राजनि सति राजानं प्राप्य मुक्तः सन् स्तेनो यावदनृतस्य सङ्कर सम्बन्धो न भवति तावदेव ते स्वपापानि मृजन्ती-मार्ष्टीति पूर्ववत्। यावदिति—उक्तत्र्यपि त्रिपु यावदनृतस्य सङ्कर सम्बन्धो न भवति तावदेव ते स्वपापानि मृजन्ती-त्यर्थं। तथा च भ्रूणहाऽप्यात्मानमभ्रूणहणं ब्रुवाणोऽन्नानि भोजयन्नपि न मार्ष्टि मिथ्यापि शसन्न चानेना अपि ... ब्रवीति चेन्न मार्ष्टीति भाव। २. मिथ्याभिशसति चेन्न मार्ष्टि। स्तेनोऽपि राज्ञा प्रमादान्मुक्तोऽप्यात्मानमस्तेनं ब्रवीति चेन्न मार्ष्टीति भाव। ३ निक्षिपति। ४ अदातु। ५ देवर्षिपितृभूतमनुष्येभ्य। ६ इत्यादि-स इति पद योजनीयम्। वाक्यमिति—'देवानृषीन्मनुष्यांश्च पितॄन्गृह्याश्च देवता। पूजयित्वा तत पश्चाद्गृहस्थ शेषभुग्भवेत् ॥ १ ॥ अघ स केवल भुङ्क्ते य पचत्यात्मकारणात्। यज्ञशिष्टाशन ह्येतत् सतामन्न विधीयते ॥ २ ॥" इत्यादिरादि-शब्दार्थ।

---

ॐ अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशसति। स्तेन प्रमुक्तो राजनि यावन्नानृतसकर ॥ यो भ्रूणहा—वरिष्ठ-ब्राह्मणघातको भवति सोऽन्नादे मार्ष्टि स्वस्यान्नभक्षके स्वपाप शोधयति अन्न भक्षयित्वा निष्पापो भवति। यस्तु प्रथमत एव अनेना निष्पाप सोऽन्नादे अभिशसति—अन्नाद भोजयित्वा पुण्य तत्फल चाभिमुख्येन शसति वाञ्छतीत्यर्थ। पापिकृतमन्नदान तदीयपापनिर्मोकमात्रे चरितार्थं स्वतो निष्पापकृत तु तत्पुण्याय तत्फलोत्तम-... तथाहि—यथा राजनि प्रमुक्त लोकादिप्राप्तय च भवतीति। उत्तरार्धं तु यथेत्यध्याहृत्य दृष्टान्ततया योज्यते। तथाहि—यथा राजनि प्रमुक्त स्तेन नृपतौ विसृष्टश्चौर तदधीनीकृत इति यावत्। प्रमुक्त इति पाठेऽप्ययमेवार्थ। स च स्तेन यावदनृतसकरो न भवति अनृतस्य सकर सम्बन्धो यत्रेति स्तेनविशेषण जनैरुच्यमान स्तेनत्व स्वस्मिन्नसत्य न भवतीत्यर्थं वस्तुत-श्चौर एव भवतीति यावत्। तावत् स राजनि मार्ष्टि राज्ञे द्रव्यादि दत्त्वा राजकृत दण्डान्तर वाऽनुभूय चौर्यापराध शोधयति। यदा अनृतसकर जनैरुच्यमान चोरत्वं स्वस्मिन्नसत्य तदाऽभिशसति राज्ञोऽभिमुखमात्मान विशुद्ध शसति कथयति। यद्वा चौर्यस्यारोप्यमाणत्वादात्मनिर्मोकमेवाशास्ते मुक्त एव भविष्यामीति—इति दृष्टान्तेऽपि मार्ष्टर्चाभिशसत्योरनुपङ्ग। यदा तु दृष्टान्ततया न व्याख्यायते तदेत्थमुत्तरार्धव्याख्यान तथाहि यो गृही राजनि सति देववद्राजवद्वा पूज्यत्वादतिथिरिह राजा। तथा चातिथावागते सति प्रमुक्तो भवति नास्त्यन्न न दास्यामीति

कस्मात्पुनः पाप्मनो न व्यावर्तते । 'मिश्रं ह्येतत्सर्वेषां हि स्वं [1]तदप्रविभक्तं[2] तत्प्राणिभिर्भुज्यते । सर्वभोज्यत्वादेव यो मुखे प्रक्षिप्यमाणोऽपि ग्रासः परस्य पीडाकरो दृश्यते ममेद स्यादिति हि सर्वेषां तत्राऽऽशा प्रतिबद्धा । [4]तस्मान्न परमपीडयित्वा ग्रसितुमपि शक्यते । "दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठते । यो हि यस्यान्नमश्नाति स तस्याश्नाति किल्बिषम्" इत्यादिस्मरणाच्च ।

गृहिणा वैश्वदेवाख्यमन्नं यदहन्यहनि निरुप्यत इति केचित् । तन्न, सर्वभोक्तृसा-

आकाङ्क्षापूर्वकं हेतुमवतार्य व्याकरोति—कस्मादित्यादिना । सर्वभोज्यत्वं साधयति—यो मुख इति । परस्य श्वमार्जारादेरिति यावत् । पीडाकरत्वे हेतुमाह—ममेदमिति । प्रागुक्तदृष्टिफलमाचष्टे—तस्मादिति । साधारणमन्नमसाधारणीकुर्वाणस्य पापानिवृत्तिरित्यत्र हेत्वन्तरमाह—दुष्कृत हीति । यदा हि मनुष्याणां दुष्कृतमन्नमाश्रित्य तिष्ठति तदा तदसाधारणीकुर्वतो महत्तरं पापं भवतीत्यर्थः ।

एकमस्येत्यादिमन्त्रब्राह्मणयोः स्वपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमाह—गृहिणेति । यदन्नं गृहिणा प्रत्यहमग्नौ वैश्वदेवाख्यं निर्वर्त्यते तत्साधारणमिति भर्तृप्रपञ्चेनरुक्तमित्यर्थः । साधारणपदानुपपत्तेनं युक्तमिद व्याख्यानमिति दूषयति—तन्नेति । वैश्वदेवस्य साधारणत्वमप्रामाणिकमित्युक्तमिदानीं

भोजन करता है, वह चोर ही है", "अपनी देह की पुष्टि के लिए अन्न खाने वाले को भ्रूणहत्या करने वाला अपने पाप दे देता है" इत्यादि स्मृतिवाक्य भी इसमें प्रमाण हैं ।

वह पाप से क्यों नहीं छूट पाता ? क्योंकि मनुष्यों द्वारा जो अप्रविभक्त यानी साधारण अन्न खाया जाता है, वह अन्न सर्वप्राणियों के लिए साधारणरूप से है, यानी सभी का धन है । सभी देहधारियों का भोज्य होने के कारण ऐसे अन्न का मुख में दिया हुआ ग्रास दूसरे को कष्टकर होने वाला

१ सर्वप्राणिसाधारणम् । २ साधारणम् । ३ ग्रासमात्रस्यापि परपीडाजनकत्वात् । ४ पीडाकरणदर्शनफलमित्यर्थः । ५ देवादिपञ्चकार्यमग्नौ सम्पाद्यते साध्यत इत्यर्थः ।

याऽन्नदानाद् मुक्तो भवति विमुक्तो भवतीति यावत् । प्रयुक्त इति पाठे तु स्वयमेव भोजने प्रकर्षेण युक्तो भवति न त्वतिथये ददाति स स्तेन इत्युच्यते । कियत्पर्यन्त स स्तेन उच्यत इत्यत आह—यावदिति । यावदनृतसकरो न भवति—शास्त्रवाक्य तदनुसारिलोकवाक्य च ऋत तद्विरुद्धमनृत तस्य सकर प्रचारो यावन्न भवति । तथाच शास्त्ररीतिर्यावदनुस्त्रियते तावत्स स्तेन एव वक्तुमर्हं । शास्त्रमर्यादाऽनभ्युपगमे तु स श्रेष्ठिवरेभ्य एवोच्यतामित्यर्थं । स भ्रूणहा सन्नेनोमार्जनानन्तरमनेनाविनिवृत्तकल्मष सन्नपि अभित उभयत उभावशाद स्व च शासति धन्योऽस्मि महाब्रह्मवर्चस्वीयोऽभक्ष्यमपि मदन्न जग्ध्वा पाप्मनाऽसंसृष्टस्तिष्ठति ब्रह्मण्येवत्प्रसादमहिम्ना सपूत सन् स्वसमाजान्त प्रविष्टो धन्योऽस्मीति । प्रयुक्तो राजतन्त्र स्तेनश्चोरो यावन्नानृतसङ्कर सत्यवादीत्यर्थं । स्वीकृतस्वनिषिद्धाचरण इति यावत्तावद्राजनि क्षमया हस्तच्छेदादिदण्डदानप्रयुक्तप्रत्यवायभीत्या धनलोभानुरोधादिना वा दण्डार्हमप्यप्रशास्योपेक्षितवति महाऽन्यायकारिणि नृपतौ स्वीयमेनो मार्ष्टि । प्रमुक्त इति पाठे यथोक्तराज्ञोपेक्ष्यमाणोऽप्यासिरवैव परित्यक्त इति यावत् । "अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी । गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम्" ॥म० स्मृ० ८।३१७॥ "अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति" ॥ म० स्मृ० ८।१२८ ॥—इत्यादिस्मृतिभ्य स्तेनो राज्ञाऽवश्य दण्डनीय इति भाव । इति स्मृतिपादत्रयस्यापरा व्याख्या स्वमनःसंतुष्टये इति ।

धारणत्वं वैश्वदेवाख्यस्यान्नस्य न [१]सर्वप्राणभृद्भुज्यमानान्नवत्प्रत्यक्षम् । [२]नापि यदिदमद्यत इति तद्विषयं वचनमनुकूलम् । सर्वप्राणभृद्भुज्यमानान्ना[३]न्तःपातित्वाच्च वैश्वदेवाख्यस्य युक्तं श्वचाण्डालाद्याद्यस्यान्नस्य ग्रहणं वैश्वदेवव्यतिरेकेणापि श्वचाण्डालाद्याद्यान्न[४]दर्शनात्तत्र[५] युक्तं यदिदमद्यत इति वचनम् ।

तस्याप्रत्यक्षत्वादिदमा परामर्शश्च न युक्तिमानित्याह—नापीति । इतश्च साधारणशब्देन सर्वप्राण्यन्नं ग्राह्यमित्याह—सर्वेति । वैश्वदेवग्रहेऽपीतरग्रहः स्यादिति चेन्नेत्याह—वैश्वदेवेति । यत्तु परपक्षे यदिदमद्यत इति वचो नानुकूलमिति तन्नास्मत्पक्षेऽस्तीत्याह—तत्रेति । प्रत्यक्षं साधारणान्नं सप्तम्यर्थः ।

देखा जाता है क्योंकि उस पर 'यह मुझे भी प्राप्त हो जाता' इस प्रकार सभी की आशा लगी रहती है। ग्रासमात्र भी परपीडाजनक होने से दूसरे को बिना पीडा दिए उसे खाया नहीं जा सकता। "मनुष्य का पाप उनके अन्न के आश्रित रहता है" इत्यादि स्मृतिवचन भी प्रमाण है।

(भर्तृप्रपञ्चादि) किन्हीं-किन्हीं (दार्शनिकों) का मत है कि गृहस्थ द्वारा नित्य प्रति जो वैश्वदेव नामक अन्न निकाला जाता है, वही साधारण अन्न है। ऐसा कहना ठीक नहीं। क्योंकि सभी प्राणियों द्वारा खाये जाने वाले अन्न के समान वैश्वदेव नामक अन्न का समस्त भोक्ताओं के लिए साधारण होना रसनाग्राह्य नहीं है और न ही 'यह जो खाया जाता है" यह वाक्य उसके विषय में अनुकूल है। इसके अतिरिक्त वैश्वदेवान्न का, सभी प्राणियों द्वारा खाये जाने वाले अन्न में अन्तर्भाव होने के कारण कुत्ते और चाण्डालादि के द्वारा खाये जाने वाले अन्न का वहाँ परिग्रहण करना उचित ही है। (जिस प्रकार वैश्वदेवान्न का सर्वान्न में अन्तर्भाव है, इस प्रकार वैश्वदेवान्न में कुत्ते और चाण्डालादि के अन्न का अन्तर्भाव नहीं है) क्योंकि कुत्ते और चाण्डालादि का खाने योग्य अन्न वैश्वदेवान्न के अतिरिक्त भी देखा जाता है। इसलिए हमारे पक्ष में "जो यह अन्न खाया जाता है" यह

१ वैश्वदेवाख्यान्नस्याप्रत्यक्षत्व वैधर्म्यदृष्टान्तेनाह—सर्वेति । सर्वात्तृवदन्नान्त स्यान्नवदित्यर्थ । प्रत्यक्ष च रासन ग्राह्यम् । २ नापीति—इदमिति प्रत्यक्षपरामर्शाद्वैश्वदेवस्य चाऽन्नदृष्टत्वेऽप्यप्रत्यक्षस्य तद्योगात्परगते ब्राह्मण दुर्घटमिति भाव । स्वपक्षे तस्य घटमानतामाहुर्वार्तिके । तथाहि—"प्रतिप्राणि ममेद स्यादभिलापश्च दृश्यते । सर्वप्राण्यशमिश्रत्व ततोऽस्मान्नवमीयते" ॥ ३० ॥ इति । स्यादित्यनन्तरमितिशब्दो द्रष्टव्य । अभिलाषोपलब्धिफलमाह—सर्वेति । सर्वप्राणभदाद्यान्नस्य साधारणशब्देन परिग्रहे तस्य प्रत्यक्षादिदमा परामष्टु योग्यत्वादनुवादस्य सुघटतेत्यर्थं ॥ किंच साधारणशब्देन श्वशूकरादिसर्वप्राण्यन्नपरिग्रहे साधारणमसाधारणीकुर्वत पाप्मानिवृत्तिवाक्य मोघमन्न विन्दतेऽप्रचेता नात्मार्थं पाचयेदन्नमित्यादिप्रदर्शितश्रुतिस्मृतिवचनानि चोपपद्यन्ते नान्यथाऽतोऽस्मद्व्याख्यैव युक्तेति भाव । ३ अन्त पातित्वाच्चेति—वैश्वदेवान्नस्य सर्वान्नान्तर्भावात् तत्परिग्रहे तद्ग्रहसभवाद्व्यापकस्यैव ग्रहण युक्तमित्यर्थं । ४ दर्शनादिति—यथा सर्वान्नेऽन्तर्भूत वैश्वदेवान्न न तथा तस्मिन्नन्नान्तरमित्यर्थ । ५ तत्रेति—सर्वसाधारणे प्रत्यक्षेऽन्न इत्यर्थं । युक्तमिति—सर्वसाधारणान्नस्य प्रत्यक्षत्वेनेदमा परामष्टु योग्यत्वात् अस्मत्पक्षे यदिदमद्यत इति ब्राह्मणवाक्य सुघटमित्यर्थ । किंच साधारणमन्नमसाधारण कुर्वत पापित्वसाधको मिश्रमितिहेतु सोऽस्य सर्वान्नस्य साधारणशब्देन ग्रह गमयति । तथा च वार्तिके—'सर्वाद्यान्नग्रहीतौ तु हेतुर्गमक इष्यते । असाधारणकारित्व तस्य साधारणात्मन ' ॥ ३६ ॥ इति । अप्यर्थस्तुशब्दो हेतुशब्दानन्तरनिवेशी । मिश्रशब्देनान्नस्य साधारण्यमुच्यते तस्यासाधारण्यकारी चेदेष पुरुषस्तदा तदसाधारणकारित्व तस्य पापानिवृत्तौ हेतु स च साधारणपदेन सर्वान्नग्रह सूचयतीत्यर्थ । कोऽसौ हेतुस्तत्स्वरूपमाह—असाधारणेति ।

यदि हि 'तन्न गृह्यते साधारणशब्देन पित्राऽसृष्टत्वाविनियुक्तत्वे तस्य प्रसज्येयाताम्। 'इष्यते हि तत्सृष्टत्वं तद्विनियुक्तत्वं च सर्वस्यान्नजातस्य। न च वैश्वदेवाख्यं शास्त्रोक्तं कर्म कुर्वतः पाप्मनोऽविनिवृत्तिर्युक्ता'। न च तस्य प्रतिषेधोऽस्ति। न च मत्स्यबन्धनादिकर्मवत्स्वभावजुगुप्सितमेतच्छिष्टनिर्वर्त्यत्वादकरणे च प्रत्यवायश्रवणादितरत्र च प्रत्यवायोपपत्तेः। "अहमन्नमन्नमदन्तमद्मि" इति मन्त्रवर्णात्।

द्वे देवानभाजयदिति मन्त्रपदं ये द्वे अन्ने सृष्ट्वा देवानभाजयत्। के ते द्वे इत्यु-

'विपक्षे दोषमाह—यदि हीति। प्रसङ्गस्येष्टत्वं निराचष्टे—इष्यते हीति। परपक्षे वाक्यशेषविरोधं दोषान्तरमाह—न चेति। 'श्येनादितुल्यत्वं 'तस्य व्यावर्तयति—न च तस्येति। अनिषिद्धस्यापि तस्य स्वभावजुगुप्सितत्वात्तदनुष्ठायिनः पापानिवृत्तिरित्याशङ्क्याऽऽह—न चेति।

'अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः'

इत्यकरणे वैश्वदेवस्य प्रत्यवायश्रवणाच्च तदनुष्ठायिनो न पाप्मलेशोऽस्तीत्याह—अकरणे चेति। 'तत्रैव सर्वसाधारणान्नग्रहे तु 'तत्परस्य निन्दावचनमुपपद्यते तेन तदेव ग्राह्यमित्याह—इतरत्रेति। 'तत्रैव श्रुत्यन्तरं संवादयति—अहमिति। अर्थिभ्योऽविभज्यान्नमदत्त्वा स्वयमेव भुञ्जानं नरमहमन्नमेव भक्षयामि समनर्थभाजं करोमीत्यर्थः।

मन्त्रान्तरमावाधाऽऽकाङ्क्षाद्वारा ब्राह्मणमुत्थाप्य व्याचष्टे—द्वे देवानित्यादिना। हुतप्रहुतयोर्द-

ब्राह्मणवाक्य ठीक ही घट जाता है।

तथा यदि साधारण शब्द से सर्वप्राणिसाधारणान्न का ग्रहण नहीं किया जाता, तो "पिता द्वारा सृष्टि और विनियोग न होने की' उसमें प्रसक्ति हो जायेगी। किन्तु हमें यह अभीष्ट है कि वह समस्त अन्नों की सृष्टि और विनियोग करता है। इसके अतिरिक्त वैश्वदेव नामक शास्त्रविहित कर्म करने-वाले पुरुष का पापी बना रहना युक्तिसङ्गत नहीं है। तथा बलिवैश्वदेव कर्म को करने के लिए शास्त्र में कहीं निषेध भी नहीं है। मछली पकड़ने आदि कर्मों के समान यह स्वाभाविक गर्हित नहीं है क्योंकि यह शिष्ट मनुष्यों द्वारा अनुष्ठेय है इसके न करने पर प्रत्यवाय होता है— "ऐसा भी सुना गया है। तथा "किन्तु स्वयं अन्न भक्षण करने वाले को मैं अन्नरूप से भक्षण करता हूँ।" इस श्रुतिवाक्य के अनुसार वैश्वदेव अन्न से अतिरिक्त अन्नभक्षण करने में ही प्रत्यवाय लगता है।

'द्वे देवानभाजयत्' यह श्रुतिवाक्य का पद है अर्थात् जिन दो अन्नों को सृष्टि कर (ज्ञानकर्मा-

१ सर्वप्राणिसाधारणमन्नम्। २ युक्तेति—साधारणशब्देन वैश्वदेवान्नग्रहे तत्परस्य पाप्मना न व्यावृत्तिरिति वचनविरोधोऽतिस्फुटः शास्त्रीयकर्मानुष्ठानात् पापक्षयस्यैव युक्तत्वादिति हेतुं मनसिकृत्योक्तं शास्त्रोक्तमिति। न च वैश्वदेवाख्यं कर्म केवलं किंचिदेव पापं निवर्तयन्न सर्वम्। अतः स्तोकपापव्यवस्थितपरं वाक्यमिति वाच्यम्। श्रुतहानिरश्रुतिकल्पनाऽयुक्ता स्यात्। तदुक्तं वार्तिके— अल्पीयः पापहानिश्च नापि शब्दात्प्रतीयते। न च पाप्मान इत्यस्मादश्रुता न च गृह्यते ॥ ३२ ॥ इति। ३ शिष्टानुष्ठेयत्वात्। ४ वैश्वदेवातिरिक्त। ५ साधारणशब्देन सर्वप्राणिभिरद्यमानान्नस्यापरिग्रहे। ६ ननु श्येनादिकर्मानुष्ठातृवद्वैश्वदेवकर्मानुष्ठाता पाप्मनो न व्यावर्तते तन्न वाक्यशेषविरोध इत्याशङ्क्याऽऽह—श्येनादीति। ७ वैश्वदेवाख्यकर्मण। ८ स्वशरीरस्थित्यर्थमन्नोपभोगप्रधानस्य। ९ निन्दावाक्यस्वारस्येन। १० साधारणान्नग्रहे।

च्येते—हुतं च प्रहुतं च । हुतमित्यग्नौ हवनम् । प्रहुतं हुत्वा [1]बलिहरणम् । [2]यस्माद्द्वे एते अन्ने हुतप्रहुते देवानभाजयत्पिता । [3]तस्मादेतर्ह्यपि गृहिणः काले देवेभ्यो [4]जुह्वति देवेभ्य इदमन्नमस्माभिर्दीयमानमिति मन्वाना जुह्वति [5]प्रजुह्वति हुत्वा बलिहरणं च कुर्वत इत्यर्थः । अथो अप्यन्य आहुर्द्वे अन्ने [6]पित्रा देवेभ्यः प्रत्ते न हुतप्रहुते किं तर्हि दर्शपूर्णमासाविति । [7]द्वित्वश्रवणाविशेषादत्यन्तप्रसिद्धत्वाच्च हुतप्रहुते इति प्रथमः पक्षः ॥

यद्यपि द्वित्वं हुतप्रहुतयोः संभवति तथाऽपि श्रौतयोरेव तु दर्शपूर्णमासयोर्देवान्नत्वं प्रसिद्धतरं मन्त्रप्रकाशितत्वात् । गुणप्रधानप्राप्तौ च प्रधाने प्रथमतराऽवगतिः । दर्शपूर्ण-

---

यान्नत्वे संप्रतितनमनुष्ठानमनुकूलयति—यस्मादिति । पक्षान्तरमुपन्यस्य व्याकरोति—अथो इति । यदि दर्शपूर्णमासौ देवान्ने कथं तर्हि हुतप्रहुते इति पक्षस्य प्राप्तिस्तत्राऽऽह—द्वित्वेति ।

[4]तर्हि द्वे देवानिति श्रुतद्वित्वस्य हुतप्रहुतयोरपि संभवाच्च प्रथमपक्षस्य पूर्वपक्षत्वमत आह—यद्यपीति । प्रसिद्धतरत्वे हेतुमाह—मन्त्रेति । 'अग्नये जुष्टं [6]निर्वपाम्यग्निरिदं हविरजुषत' इत्यादिमन्त्रेषु दर्शपूर्णमासयोर्देवान्नत्वस्य [7]प्रतिपन्नत्वादिति यावत् । इतश्च दर्शपूर्णमासयोरेव देवान्नत्वमिति वक्तुं सामान्यन्यायमाह—गुणेति । गुणप्रधानयोरेकत्र[8] साधारणशब्दात्प्राप्तौ सत्यां प्रथमतरा प्रधाने भवत्यवगतिर्गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायादित्यर्थः । अस्त्वेवं [9]प्रस्तुते किं जातं तदाह—

---

धिकारी क्षेत्रज्ञ) पिता ने देवताओं को वितरित किया। वे दो कौन से हैं? इस पर कहते हैं— हुत और प्रहुत । अग्नि में होम करना "हुत" है, होम करके देवताओं को बलि प्रदान करना "प्रहुत" है। क्योंकि क्षेत्रज्ञ ने "हुत और प्रहुत" ये दो अन्न देवताओं में वितरित किए थे, इसलिए इस समय भी गृहस्थी देवताओं के निमित्त अग्नि में हवन करते है अर्थात् 'यह अन्न हमारे द्वारा देवताओं के उद्देश्य से दिया जाता है" ऐसी धारणा करते हुए हवन करते है । 'प्रजुह्वति च' अर्थात् हवन करके देवताओं के लिए बलि प्रदान करते हैं । तथा किन्ही दूसरों का ऐसा भी मत है कि पिता के द्वारा देवताओं को वितरित किए हुए दो अन्न "हुत और प्रहुत" नही है, तो कौन से है ? दर्श और पूर्णमास । "द्वे देवान्" इस श्रुतिवाक्य मे द्वित्वश्रवण मे समानता होने से एव अत्यन्त प्रसिद्ध होने से वे दो अन्न "हुत और प्रहुत" है—ऐसा प्रथम पक्ष है ।

यद्यपि हुत और प्रहुत मे द्वित्व सभव है, तो भी इनकी अपेक्षा श्रुतिसम्मत दर्श और पूर्णमास का ही 'देवताओं का दो अन्नरूप मे होना' अधिक प्रसिद्ध है, क्योंकि श्रुतिमन्त्रो मे इसी का प्रकाश हुआ है। इसके अतिरिक्त गौण और प्रधान कार्यों की एकत्र उपस्थिति होने पर पहले प्रधान अर्थ की प्राप्ति होगी, हुत और प्रहुत की अपेक्षा दर्श और पूर्णमास की प्रधानता है । अत "द्वे देवानभाजयत्"

---

१ हवनान्तरं देवेभ्यो बलिप्रदानम् । २ देवानुद्दिश्याग्नौ हवनं कुर्वते । ३ द्वित्वेति—द्वे देवानित्यत्र द्वित्वमात्रं श्रुतं तच्च हुतप्रहुतयो दर्शपूर्णमासयोश्चाविशिष्टमत पूर्वपक्षप्रमक्ति अत्यन्तप्रसिद्धत्वाच्चेति । साधारणशब्देन सर्वान्नस्य ग्रहात्तस्मिन्नाद्यत्वेन स्मार्तान्नस्यान्तर्भावात् तदनन्तरं द्वे देवानिति देवान्नयोरुक्तत्वात् तयो स्मार्तत्व हुतप्रहुतात्मना स्यादिति चकारार्थ । ४ तर्हीति—उक्तरीत्या प्रथमपक्षस्य प्राप्तत्वे सतीत्यर्थ । ५ निर्वपामीति—अग्निमुद्दिश्याग्निस्वामिक द्रव्यविशेषमाग्नेयपात्रविशेषे प्रक्षिपामि स्थापयामीति यावत् । ६ अजुषत जुषतामित्यर्थ । ७ निश्चितत्वात् । ८ कार्ये । ९ देवान्ने ।

मासयोश्च प्राधान्यं हुतप्रहुतापेक्षया । तस्मात्तयोरेव ग्रहणं युक्तं द्वे देवानभाजयदिति ।

यस्माद्देवार्थमेते पित्रा प्रक्लृप्ते दर्शपूर्णमासाख्ये अन्ने तस्मात्तयोर्देवार्थत्वाविघाताय नेष्टियाजुक इष्टियजनशीलः । इष्टिशब्देन किल काम्या इष्टयः 'शातपथीयं प्रसिद्धिस्ता-च्छील्यप्रत्ययप्रयोगात्काम्येष्टियजनप्रधानो न 'स्यादित्यर्थः ।

पशुभ्य एकं प्रायच्छदिति यत्पशुभ्य एकं प्रायच्छत्पिता किं पुनस्तदन्नं तत्पयः । कथं पुनरवगम्यते पशवोऽस्यान्नस्य स्वामिन इत्यत आह—पयो ह्यग्रे 'प्रथमं यस्मान्मनु-

दर्शपूर्णमासयोश्चेति । तयोर्निरपेक्षश्रुतिदृष्टतया 'सापेक्षस्मृतिसिद्धहुताद्यपेक्षया प्राधान्यं सिद्धं तथा च प्रधानयोस्तयोरितरयोश्च गुणयोरेकत्र' प्राप्तौ प्रधानयोरेव द्वे देवानिति मन्त्रेण ग्रहो युक्तिमानित्यर्थः ।

दर्शपूर्णमासयोर्देवान्नत्वे समनन्तरनिषेधवाक्यमनुकूलयति—यस्मादिति । इष्टियजनशीलो न स्यादिति संबन्धः । ननु तद्यजनशीलत्वाभावे कुतो दर्शपूर्णमासयोर्देवार्थत्वं न हि तावनिष्पन्नौ' तदर्था-वित्याशङ्क्याऽऽह—इष्टिशब्देनेति । किं पुनरस्मिन्वाक्ये काम्येष्टिविषयत्वमिष्टिशब्दस्येत्यत्र नियामकं 'तत्र किलशब्दसूचितां 'पाठकप्रसिद्धिमाह—शातपथीति । काम्येष्टीनामनुष्ठाननिषेधे "स्वर्गकामवाक्यविरोधः स्यादित्याशङ्क्याऽऽह—ताच्छील्येति । तत्र विहितस्योकञ्प्रत्ययस्यात्र प्रयोगात्काम्येष्टियजन"प्रधानत्व-मिह निषिध्यते "तत्र "देवप्रधानयोर्दर्शपूर्णमासयोरवश्यानुष्ठेयत्वसिद्ध्यर्थं न तु ताः स्वतो निषिध्यन्ते तत्र स्वर्गकामवाक्यविरोधोऽस्तीत्यर्थः ।

पश्वन्नविषयं मन्त्रपदमादाय प्रश्नपूर्वकं तदर्थं कथयति—पशुभ्य इति । पशूनां पयोऽन्नमित्येत-दुपपादयितुं पृच्छति—कथं पुनरिति । पयो ह्रीति प्रतीकमुपादाय व्याकरोति—अग्र इति । 'पशवो द्विपादश्चतुष्पादश्च' इति श्रुतिमाश्रित्य मनुष्याश्चेत्युक्तम् । उचितं ह्रीत्यत्र हिशब्दस्तस्मादर्थे यस्मादि-

इस वाक्य से दर्श और पूर्णमास का ग्रहण करना उचित है।

क्योंकि ये दर्श और पूर्णमाससंज्ञक अन्न क्षेत्रज्ञ ने देवताओं के लिए रचे हैं, "तस्मात्" अर्थात् उनकी देवार्थता का विघात न करने के लिए "नेष्टियाजुक" अर्थात् इष्टि यजनशील नहीं होना चाहिये। "इष्टि" शब्द से यहाँ दर्शपूर्णमासादि काम्य-इष्टियाँ समझनी चाहिये। ऐसा शतपथब्राह्मण से सिद्ध होता है। "इष्टियाजुक" इस पद में ताच्छील्य अर्थ में 'उकञ्' प्रत्यय के प्रयोग होने से "प्रधानतया सकाम यज्ञों का यजन आत्मार्थत्वेन देवार्थत्व व्याहति से नहीं करना चाहिये" यह इसका भावार्थ है।

"पशुभ्य एकं प्रायच्छदिति" यहाँ ज्ञानकर्माधिकारी क्षेत्रज्ञ ने पशुओं के लिए जो अन्न दिया था, वह अन्न कौनसा है ? वह दुग्ध है। किन्तु पशुओं को इस अन्न का स्वामी कैसे जाना जाता है ? —इस का समाधान करते हैं। क्योंकि 'अग्रे' अर्थात् प्रारम्भ में मनुष्य और पशु दूध पीकर ही जीवन

१ दर्शपूर्णमासा । २ शातपथीति—इष्टिशब्द प्राय काम्येष्टिविषय इतीय शातपथीप्रसिद्धिरित्यर्थ । ३ सकामकृतस्यात्मार्थत्वेन देवार्थत्वव्याहतिरिति दोष । ४ अन्यानन्तरम् । ५ सापेक्षेति—श्रुतिमपेक्षत इति । स्मृतिस्स्वप्रामाण्ये श्रुतिमपेक्षते न श्रुतिरित्यर्थं । ६ देवान्नत्व । ७ अनिष्पन्न वननुष्ठितौ तौ दर्शपूर्णमासौ । ८ इष्टिशब्दस्य काम्यपरत्व । ९ तत्राध्येतॄणामस्त्येव पाठप्रसिद्धिरित्यर्थः । १० स्वर्गकामो दर्शपूर्णमासाभ्यां यजेतेति । ११ परत्वम् । १२ निषेधनम् । १३ न तु कामप्रधानयो ।

ष्याश्च पशवश्च पय एवोपजीवन्तीति । उचितं हि तेषां तदन्नमन्यथा कथं तदेवाग्रे नियमेनोपजीवेयुः ।

कथमग्रे तदेवोपजीवन्तीति । 'उच्यते—मनुष्याश्च पशवश्च यस्मात्तेनैवान्नेन वर्तन्तेऽद्यत्वेऽपि यथा पित्राऽऽदौ विनियोगः कृतस्तस्मात्कुमारं बालं जातं घृतं वा त्रैवर्णिका जातकर्मणि 'जातरूपसंयुक्तं प्रतिलेहयन्ति प्राशयन्ति स्तनं वाऽनुधापयन्ति पश्चात्पाययन्ति। यथासंभवमन्येषां स्तनमेवाग्रे धापयन्ति मनुष्येभ्योऽन्येषां पशूनाम् । 'अथ वत्सं जातमाहुः कियत्प्रमाणो वत्स इत्येवं पृष्टाः सन्तोऽतृणाद इति । नाद्यापि तृणमत्त्यतीव बालः, पयसैवाद्यापि वर्तत इत्यर्थः ।

स्युपक्रमात् । औचित्यं व्यतिरेकद्वारा साधयति—'अन्यथेति ।

नियमेन प्रथमं पशूनां तदुपजोवनमसंप्रतिपन्नमिति शङ्कते—कथमिति । मनुष्यविषये वा प्रश्नस्तदितरपशुविषये वेति पृच्छति—उच्यत इति । तत्राऽऽद्यमनुभवावष्टम्भेन प्रत्याचष्टे—मनुष्याश्चेति । चकारो मनुष्यमात्रसंग्रहार्थः । तेनैव पयसैवेति यावत् । घृतं वेति वाशब्दो वक्ष्यमाणविकल्पद्योतकः । जातरूपं हेम, त्रैवर्णिकेभ्योऽन्येषां जातकर्माभावाद्योग्यतामनतिक्रम्य स्तनमेव जातं कुमारं प्रथमं पाययन्तीत्याह—यथासंभवमिति । यद्वा 'तेषां जातकर्मानधिकृतानां जातं कुमारं घृतं वा स्तनं वा प्रथमं पाययन्तीति यावत् । पशुविषयं प्रश्नं पशवश्चेतिसूचितसमाधानं प्रत्याह—स्तनमेवेति । पशूनां जातं वत्समिति संबन्धः । पशूनां पयोऽन्नमित्यत्र लोकप्रसिद्धिं प्रमाणयति—अथेति । द्विपात्पशव'धिकारविच्छेदार्थोऽथशब्दः । प्रतिवचनं व्याचष्टे—नाद्यापीति ।

धारण करते हैं । अत 'यह दूध पशुओ का अन्न है' ऐसा कहना ठीक है, अन्यथा वे जन्म के बाद नियमपूर्वक उसी का सेवन कर जीवन धारण कैसे करते ?

जन्म के अनन्तर वे उसी से जीवन कैसे धारण करते है ? इस पर विचार किया जाता है। क्षेत्रज्ञ ने आरम्भ मे जैसा प्रयोग किया था, उसी के अनुसार आजकल भी मनुष्य और पशुवर्ग उसी अन्न के आश्रित रहते हैं । इसी से ब्राह्मण, क्षत्रिय और वैश्य तीनो वर्णों के मनुष्य जातकर्मसंस्कार के अवसर पर नवजात शिशु को सुवर्ण और घी घिस कर चटाते हैं 'स्तनं वाऽनुधापयन्ति' अर्थात् उसके पश्चात् स्तनपान कराते है । तथा जातकर्मसंस्कार के अनधिकारी दूसरे मनुष्यो से उत्पन्न बालक को एव मनुष्यो से भिन्न पशुओ के बछडो को यथासभव पहले स्तनपान ही कराते हैं। इस प्रकार बछडे के उत्पन्न होने पर जब पूछा जाता है कि बछडा कितना बडा है ? तो कहा जाता है— "अभी घास नही खाता है" । भावार्थ यह है कि बहुत ही छोटा है, अभी घास नही खा पाता अभी तो केवल दूध पीकर ही रहता है ।

एव जो प्रारम्भ मे जातकर्मादिसस्कार मे घृत के आश्रित होकर जीवन धारण करते हैं, एव दूसरे देहधारी दूध से ही जीवित रहते है, वे सभी ही घृत और दुग्धरूप से दूध का ही पान करते है,

१. उच्यत इति—किं मनुष्यविषये पृच्छ्यते पशुविषयं वेत्यर्थः । २ स्वर्णयुक्तं सुवर्णं घृतं घर्षयित्वेत्यर्थः । ३ द्विपात्पशूनां पयोऽन्नत्वे लोकप्रसिद्धेः प्रमाणीकरणानन्तरम् । ४ पयोऽन्नत्वाभाव इत्यर्थः । ५ अनिश्चितम् । ६ शूद्राणाम् । अधिकार प्रकरणम् ।

यच्चाग्रे जातकर्मादौ घृतमुपजीवन्ति यच्चेतरे पय एव [1]तत्सर्वथाऽपि पय एवोपजीवन्ति[2]। घृतस्यापि पयोविकारत्वात्पयस्त्वमेव। कस्मात्पुनः सप्तमं सत्पश्वन्नं चतुर्थत्वेन व्याख्यायते। [3]कर्मसाधनत्वात्। कर्म हि पयःसाधनाश्रयमग्निहोत्रादि। तच्च कर्म साधनं [4]वित्तसाध्यं [5]वक्ष्यमाणस्यान्नत्रयस्य साध्यस्य। यथा दर्शपूर्णमासौ पूर्वोक्तावन्ने। [6]अतः [7]कर्मपक्षत्वात्कर्मणा सह [8]पिण्डीकृत्योपदेशः।

साधनत्वाविशेषादर्थसबन्धादानन्तर्यमकारणमिति च। व्याख्यानप्रतिपत्तिसौकर्याच्च। सुखं हि नैरन्तर्येण व्याख्यातुं शक्यन्तेऽन्नानि व्याख्यातानि च सुखं प्रतीयन्ते।

---

ननु "येषामग्रे घृतोपजीवित्वमुपलभ्यते पयस्ते नोपजीवन्ति घृतपयसोर्भेदादतः" पश्वन्नत्वं पयसो भागासिद्धमत आह— यच्चेति। ननु घृतमुपजीवन्तोऽपि पय एवोपजीवन्तीत्ययुक्तं तद्‌द्वयस्योक्तत्वात्तत्राऽऽह— घृतस्यापीति। मन्त्रपाठक्रममतिक्रम्य पश्वन्ने व्याख्याते प्रत्यवतिष्ठते—कस्मादिति। द्वे देवानभाजयदिति व्याख्याते साधने साधनत्वाविशेषात्पयोऽपि बुद्धिस्थमित्यर्थक्रममाश्रित्य परिहरति— कर्मेति। तदेव स्पष्टयति—कर्म हीति। यद्यपि पयोरूपं साधनमाश्रित्य कर्म प्रवृत्तं तथाऽपि दर्शपूर्णमासानन्तर्यं कथं पयसः सिध्यति तत्राऽऽह—तच्चेति। वित्तेन पयसा साध्यं कर्मान्नत्रयस्य साधनमित्यत्र दृष्टान्तमाह—यथेति। पूर्वोक्तौ दर्शपूर्णमासौ द्वे देवान्ने वक्ष्यमाणस्यान्नत्रयस्य यथा साधनं तथा पयसोऽप्यग्निहोत्रादिद्वारा तत्साधनत्वात्कर्मकोटिनिविष्टत्वात्तद्व्याख्यानानन्तर्यं पयोव्याख्यानस्य युक्तमित्यर्थः।

पाठक्रमस्तर्हि कथमित्याशङ्क्यार्थक्रमेण तद्बाधमभिप्रेत्याऽऽह—साधनत्वेति। आनन्तर्यं पाठक्रमः। प्रकारणत्वमविवक्षितत्वम्। पाठक्रमादर्थक्रमस्य बलीयस्त्वात्तेनेतरस्य बाध्यत्वमित्येतत्प्रथमे[12] तन्त्रे स्थितमित्यभिप्रेत्याऽऽह— इति चेति। पश्वन्नस्य चतुर्थत्वेन व्याख्याने हेत्वन्तरमाह—व्याख्यानेति। व्याख्यानसौकर्यं साधयति—सुखं हीति। प्रतिपत्तिसौकर्यं प्रकटयति—व्याख्यातानीति। चत्वारि साधनानि त्रीणि साध्यानीति विभज्योक्तौ वक्तृश्रोत्रोः सौकर्येण धीर्भवति ततश्च पाठक्रमातिक्रमः श्रेयानित्यर्थः।

---

क्योंकि दूध का विकार होने से घृत भी दूधरूप ही है। किन्तु पशु अन्न सातवाँ होने पर भी यहाँ (ब्राह्मणवाक्य में) चतुर्थरूप से क्यों कहा गया है? क्योंकि दुग्धकर्म का साधनभूत है। अग्निहोत्रादिकर्म दुग्धरूप साधन के ही आश्रित है, तथा वह कर्मरूप साधन आगे है कहे जाने वाले साध्यरूप तीन अन्नों का पय साध्य होना सुनिश्चित है, जिस प्रकार दर्श और पूर्णमासरूप पूर्वप्रतिपादित दो अन्न हैं। इसलिए (दूध के अन्नत्रयसाधन होने से) कर्म के अन्त पाती होने से कर्म के साथ मिलाकर उसका उपदेश किया गया है।

---

१. घृतत्वेन पयस्त्वेन च। २ उपभुञ्जते। ३. पयस इति शेष.। ४. रूपम्। ५. पय साध्यम्। ६. अत इति—पयसोऽग्निहोत्रादिकर्मद्वारा वक्ष्यमाणान्नत्रयसाधनत्वादित्यर्थ। ७. कर्मान्त पातित्वात्। ८. मेलयित्वा। ९. साधनात्मकानि। १०. द्विपदाम्। ११ घृतोपजीविषु पय उपजीवित्वाभावात्। १२. प्रथमे तन्त्रे—जैमिनीय "अर्थाच्च" ।५।१।२॥ इति सूत्रे। तत्र श्लोकौ "अग्निहोत्रं जुहोतीति यवागूं पचतीति च। क्रम. पाठादर्थतो वा पाठात्सर्वत्र दर्शनात्॥ होमद्रव्यसमुत्पत्त्यै पूर्वपाकोऽवगम्यते। यवाग्वेति श्रुता होमद्रव्यताऽतोऽर्थत क्रम." ॥ इति।

तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेत्यस्य कोऽर्थं इत्युच्यते—तस्मिन्पश्वन्ने पयसि सर्वमध्यात्माधिभूताधिदैवलक्षणं कृत्स्नं जगत्प्रतिष्ठितं यच्च प्राणिति प्राणचेष्टावद्यच्च न स्थावरं शलादि। तत्र हिशब्देनैव प्रसिद्धावद्योतकेन व्याख्यातम्।

कथं पयोद्रव्यस्य सर्वप्रतिष्ठात्वम्। कारणत्वोपपत्तेः। कारणत्वं चाग्निहोत्रादिकर्मसमवायित्वम॒ग्निहोत्राद्याहुतिविपरिणामात्मकं च जगत्कृत्स्नमिति श्रुतिस्मृतिवादाः,

पश्वन्नस्य सर्वाधिष्ठानत्वविषयं मन्त्रमवतार्यं प्रश्नपूर्वकं तदीयं ब्राह्मणं व्याचष्टे—तस्मिन्नित्यादिना। मन्त्राद्भेदो ब्राह्मणे न प्रतिभातीत्याशङ्क्याऽऽह—तत्रेति। यद्यपि होति ब्राह्मणे हिशब्दस्य प्रसिद्धावद्योतकत्वमस्ति। तेन च हेतुना हिशब्देन तस्मिन्नित्यादिकं मन्त्रपदं व्याख्यातमिति योजना।

मन्त्रार्थस्य लोकप्रसिद्ध्यभावान्न प्रसिद्धावद्योतिना हिशब्देन व्याख्यानं युक्तमिति शङ्कते—कथमिति। कार्यं कारणे प्रतिष्ठितमिति न्यायेन वैदिकीं प्रसिद्धिमादाय समाधत्ते—कारणत्वेति। तत्समवायित्वेऽपि पयसो द्रवद्रव्यमात्रस्य कुतः सर्वजगत्कारणत्वमित्याशङ्क्याऽऽह—कारणत्वं चेति। तत्समवायित्वेऽपि कुतो जगत्कारणतेत्याशङ्क्याऽऽह—अग्निहोत्रादीति। 'ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतः' इत्यादयः श्रुतिवादा द्युपर्जन्यभोह्या'दिक्रमेणाग्निहोत्राहुत्योर्गर्भाकारप्राप्तिं दर्शयन्ति।

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'

साधन में समानता होने के कारण इसका उनसे, अर्थ का सम्बन्ध होने के कारण पाठक्रम में आनन्तर्य होने से अर्थक्रम में कोई अन्तर नहीं आ सकता। इस प्रकार का व्याख्यान अर्थविबोध के लिए सरल पड़ता है। साधनात्मक मन्त्रों की व्याख्या निरन्तर अनायास की जा सकती है और ,इस प्रकार व्याख्या होने पर सुगमता से उसके अर्थ की प्रतीति हो जाती है।

"जो प्राणनक्रिया करता है और जो नहीं करता है, वह यह सभी उसमें प्रतिष्ठित है" इस श्रुतिवाक्य का क्या अर्थ है? इस पर बतलाया जाता है—'तस्मिन्' अर्थात् पश्वन्नरूप दूध में 'सर्वम्' अर्थात् अध्यात्म, अधिभूत और अधिदैवात्मक समस्त जगत् प्रतिष्ठित है। 'यच्च प्राणिति' अर्थात् जो प्राणचेष्टा से युक्त है, न कि पर्वतादि की तरह जड है। श्रुतिवाक्य में 'हि' शब्द प्रसिद्धि को लक्षित करता है, उससे इसकी व्याख्या की गई है।

१. वर्तमानि। २. आविशत इत्यनन्तरम्। 'ते अन्तरिक्षमेवाहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्लामाहुतिं ते अन्तरिक्षं तर्पयतस्ते तत उत्क्रामत इत्याद्येवमेव पूर्ववद्दिवं तर्पयतस्ते तत आवर्तेते इमामाविश्य तर्पयित्वा पुरुषमाविशतस्तत स्त्रियमाविश्य लोकं प्रत्युत्थायी भवतीति विशेषः। अर्थस्तु छान्दोग्यभाष्ये (५ ४ १) द्रष्टव्यः॥

३ आदिना पुरुषप्राप्तिः। ४. अग्न्याहुतेरेव तत्तदात्मना परिणामो विवक्षितो द्रष्टव्यः।

॰अग्निहोत्राद्याहुतिपरिणामात्मकं च जगत्कृत्स्नमिति। ननु सर्वस्य जगतोऽग्निहोत्राद्याहुतिपरिणामत्वेऽपि पयःपरिणामत्वाभावात्कथं पयसः सर्वजगत्कारणत्वमिति चेन्नाग्निहोत्राद्याहुतिमात्रस्य पयोरूपत्वात्तथा च वार्तिके—
"आहुतिः पय एव स्यादाज्यं वा पय एव वा। पय एवाऽऽहुतिं सर्वमित्येतच्च श्रुतेर्मितं॥ अथैपाऽऽज्याहुतिर्यज्ञे यद्यपि सर्वरूपकम्। पशुरत्नाप्याज्यमेवैतत्करोतीत्यपि चागमः॥ आज्याभिघारसंस्कारात्सर्वमेव पयो हविः। अग्निहोत्राऽऽहुतेः पयस्येव जगत्कृत्स्नमग्निहोत्रे प्रतिष्ठितम्॥ ते वा एते इति तथा परिणामोऽखिलं जगत्।

शतशो व्यवस्थिताः । अतो युक्तमेव हिशब्देन व्याख्यानम् ।

यत्तद्ब्राह्मणान्तरेष्विदमाहुः—संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति । संवत्सरेण किल त्रीणि षष्टिशतान्याहुतीनां सप्त च शतानि विंशतिश्चेति 'याजुष्मती-

इत्यादयः स्मृतिवादाः । पयसि हीत्यादि भाष्यमुपसंहरति—अत इति । पयसः सर्वजगदाधारत्वस्य श्रुतिस्मृतिप्रसिद्धत्वादिति यावत् ।

सर्वं पयसि प्रतिष्ठितमिति विधित्सित'दर्शनस्तुतये' शाखान्तरीयमतं निन्दितुम'नुवदति'—यत्तदिति । न केवलेन पयसा मृत्युजयः किं तु दर्शनसहितेनेति दर्शयितुमग्निहोत्राहुतिषु संख्यां कथयति—संवत्सरेणेति । उक्ताहुतिसंख्यायां संवत्सरावच्छिन्नायामग्निहोत्रविदा संप्रतिपत्त्यर्थं किलेत्युक्तम् । ननु प्रत्यहं सायं प्रातश्चेत्याहुती द्वे विद्येते तत्कथमहुतीनां षष्ट्यधिकानि त्रीणि शतानि संवत्सरेण भवन्ति तत्राऽऽह—सप्त चेति । 'प्रत्येकमहोरात्रावच्छिन्नाहुतिप्रयोगाणामेवास्मिन्संवत्सरे पूर्वोक्ता संख्या 'तत्रैव प्रयोगाधीना विंशत्यधिका सप्तशतरूपा संख्येति सिद्धमित्यर्थः । आहुतीनां संख्यामुक्त्वा तासु याजुष्मतीनामिष्टकानां दृष्टिमाह—याजुष्मतीरिति । तासामपि षष्ट्यधिकानि त्रीणि शतानि संख्यया

किन्तु दूधरूप द्रव्य से सब की प्रतिष्ठा किस प्रकार है ? क्योंकि कार्य कारण में प्रतिष्ठित है, ऐसा सर्वत्र सिद्ध है । (दूध के द्रव-द्रव्यमात्र होने से उसका सर्वजगत्कारणत्व कैसे सिद्ध हुआ ? ) अग्निहोत्रादिकर्म से सम्बन्ध होना ही उसका कारणत्व है, अग्निहोत्रादि की आहुतियों का विपरिणामरूप ही सारा जगत् है, इस विषय में सैकड़ों श्रुति-स्मृतिवचन प्रमाण है । इसलिए 'हि' शब्द से उसकी व्याख्या करना उचित ही है ।

दूसरे ब्राह्मणग्रन्थों में जो इसप्रकार कहा गया है कि एक वर्ष पर्यन्त दूध से हवन करने वाला पुरुष अपमृत्यु को जीत लेता है, सो यहाँ संवत्सर से तीन सौ साठ अथवा सात सौ बीस आहुतियाँ इष्ट

१ धनसर्वाचिनी । २ उपासनत्यय । ३ स्तुतय इति—न दर्शनान्तरनिन्दा तन्निषेधार्था किन्तु प्रस्तुतदर्शनस्तुत्यर्था न हि निन्दा निन्द्यं निन्दितुमपितु विधेयस्तुतय इति न्यायादिति भावः । ४ विधेयं स्तोतुम् । ५ अनुवदति । ५ प्रत्येकाहोरात्रेत्यर्थः । ६ तत्रैवेति—संवत्सरावधिकेऽग्निहोत्र इत्यर्थः । अत्र श्रुतिः 'तस्य ह वा एतस्याग्निहोत्रस्य सप्त च शतानि विंशतिश्च संवत्सरे सायमाहुतयः सप्त चैव शतानि विंशतिश्च संवत्सरे प्रातराहुतयः' इति ।

साक्षाच्छ्रुतावेव समीरितमिति' ॥ ५६-५६ ॥ यदाज्यं पयो वाऽऽहुतिमयं तत्सर्वं पय एव स्यादिति योजना । सर्वाहुतेः पयस्त्वं श्रुत्या विशदयति—पय एवेति । आहुत्यात्मकमाज्यादि सर्वं पय एवास्येतद्गम्यते । घृताहुतिं वा पय आहुतिं वा उभयन्त्वेतत्पय एवेति श्रुतिमानादित्यर्थः ॥ तत्रैव श्रुत्यन्तरमाहाथेति । अथशब्दो यज्ञारम्भार्थः । आज्याहुतेस्तावत्पयस्त्वं तद्विकारत्वात् यच्च यज्ञ सर्वरूपं चरुपुरोडाशाद्यात्मकं हविर्यश्च पशुरेतत्सर्वमाज्यमेवाभिघारसंस्कारात्करोति पुरुषो न हि चर्वाद्याज्यानभिघारितं होम्यं पयश्चाऽऽज्यमिति सर्वस्य पयस्त्वमित्यागमशासनमित्यर्थः । अपि चेति पूर्वश्रुत्या समुच्चयोऽस्या श्रुतरुच्यते ॥ श्रुत्यर्थमुपसंहरति—आज्येति । तथाऽपि कथं सर्वस्य पयसि प्रतिष्ठितत्वं तत्राऽऽह—पयसीति ॥ अग्निहोत्रे यत्तु पयो हूयते तस्मिन्नपूर्वात्मके सर्वं जगत्प्रतिष्ठितमिति प्रतिज्ञातेऽर्थे प्रमाणमाह—ते वा इति । सर्वमपि जगत्पयसि स्थितमित्यस्यानुसारेण ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशत इत्यादिश्रुतावग्निहोत्राहुतेः पयोरूपाया परिणामोऽशेषं जगदिति साक्षादीरितमिति योजना ॥

'रिष्टका अभिसंपद्यमानाः संवत्सरस्य चाहोरात्राणि । संवत्सरमग्निं प्रजापतिमाप्नुवन्ति ।

एवं कृत्वा सवत्सरं जुह्वदपजयति पुनर्मृत्युमितः प्रेत्य देवेषु संभूतः पुनर्न म्रियत इत्यर्थः ।

इत्येवं ब्राह्मणवादा आहुर्न तथा विद्यान्न तथा द्रष्टव्यम् । 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति न संवत्सराभ्यासमपेक्षत 'एवं विद्वान्सम् । यदुक्तं पयसि हीदं सर्वं प्रतिष्ठितं पयआहुतिविपरिणामात्मकत्वात्सर्वस्येति । तदेकेनैवाह्ना जगदात्मत्वं प्रतिपद्यते ।

'भवन्ति तथाच प्रत्यहमाहुतीरभिनिष्पद्यमानाः संख्यासामान्येन याजुष्मतीरिष्टकाश्चाप्तमेदित्यर्थः । आहुतिमयीनामिष्टकानां संवत्सरावयवाहोरात्रेषु संख्यासामान्येनैव दृष्टिमन्वाचष्टे—संवत्सरस्येति । तान्यपि षट्चत्वधिकानि त्रीणि शतानि प्रसिद्धानि 'तथाच तेषु यथोक्तेष्विष्टकादृष्टिः श्लिष्टेत्यर्थः । चित्येऽग्नौ ,संवत्सरात्मप्रजापतिदृष्टिमाह—सवत्सरमिति । यः संवत्सरः प्रजापतिस्तं चित्यमग्निं विद्वांसः संपादयन्ति । 'अहोरात्रेष्टकाद्वारा तयोः संख्यासामान्यादित्यर्थः ।

दृष्टिमनूद्य फलं दर्शयति—एवमिति । उक्तसंख्यासामान्येनाग्निहोत्राहुतीरन्यवयवभूतया-जुष्मतीसंज्ञकेष्टकाः संपाद्य तद्द्वारेणाऽऽहुतीर्ध्यायित्वाहुतिमयीश्चेष्टकाः संवत्सरावयवाहोरात्राणि तेनैव संपाद्य 'पुरुषनाडीस्यसंख्यासामान्येन तन्नाडीस्तान्येवाहोरात्राण्यापाद्य तद्रूपेणाऽऽहुतीरिष्टका नाडी-आनुसंदधानो नाड्यहोरात्रयाजुष्मतीद्वारा पुरुषसंवत्सरचित्यानां समत्वमापाद्याहमग्निः संवत्सरात्मा प्रजापतिरेवेति 'ध्यायन्नग्निहोत्रं पयसा सवत्सरं जुह्वद्धिया सहितहोमवशात्प्रजापतिं संवत्सरात्मकं प्राप्य मृत्युमपजयतीत्यर्थः ।

एकीयमतमुपसंहृत्य तन्निन्दापूर्वकं मतान्तरमाह—इत्येवमित्यादिना । एवं विद्वानित्युक्तं व्यक्ती करोति-यदुक्तमिति । तत्तथैव विद्वानेकाहोरात्रावच्छिन्नाहुतिमात्रेण जगद्रूपं प्रजापतिं प्राप्य मृत्युमपज-

इष्टकारूप होकर स्थित हैं। और वे सवत्सर के दिन-रात यज्ञसम्बन्धी (पक्वमृत्खण्डविशेष) हैं। उस सवत्सररूप चित्याग्नि प्रजापति को वे प्राप्त करते है।

इस प्रकार की भावना करके एक वर्ष पर्यन्त हवन करने वाला पुनर्मृत्यु को जीत लेता है। यहाँ से जाकर देवयोनि मे जन्म लेकर पुन. अमरत्वप्राप्ति करता है, यह भावार्थ है।

इस प्रकार शाखान्तर के ब्राह्मणवाक्य कहते हैं कि 'न तथा विद्यात्' अर्थात् ऐसा नही समझना चाहिये। क्योंकि मनुष्य जिस दिन भी दूध से आहुति देकर हवन करता है, उसी दिन से पुनर्मृत्यु को जीत लेता है; इसके लिए एक वर्ष तक अभ्यास करने की अपेक्षा नही है। इस प्रकार जानकर यानी

१. पक्वमृत्खण्डविशेषान् । २. कथ तर्हीत्यत आह—यदहरेवेति । ३ एवमिति—पयसीद सर्वं प्रतिष्ठितमित्युक्तप्रकारेण पयस्यन्तर्हि त विश्वमिति विद्वान्सन्नित्यर्थ. । ४ भवन्तीति—'तावत्योऽग्नेर्याजुष्मत्य इष्टका' इति श्रुते । ५ इष्टकाहोरात्रयो सख्यासामान्यं च । ६ अहोरात्रेति—सवत्सराहोरात्रवत् चित्याग्नीष्टकयोरवयवावयविभावादित्यभिप्राय. । ७ देहाभिमानिन साधकस्य पुसो नाडयश्च देहपार्श्वयोरभेदेन तद्विभागे न च पूर्वोक्तसख्यावत्यो भवन्तीत्यभिप्रेत्याह-पुरुषेति । "त्रिणीत षष्टिशतानि त्रिणीतस्तानि सप्तविंशतिशतानि भवन्तीति" श्रुते. । ८. ध्यायन्निति-होमकाले ध्यायन्नित्यर्थः ।

तदुच्यतेऽपजयति पुनर्मृत्युं पुनर्मरणं सकृन्मृत्वा विद्वाञ्छरीरेण वियुज्य सर्वात्मा भवति न पुनर्मरणाय परिच्छिन्नं शरीरं गृह्णातीत्यर्थः ।

कः पुनर्हेतुः सर्वात्माप्त्या मृत्युमपजयनीति'। उच्यते--सर्वं समस्तं हि यस्माद्देवेभ्यः सर्वेभ्योऽन्नाद्यमन्नमेव तदाद्यं च सायंप्रातराहुतिप्रक्षेपेण' प्रयच्छति। तद्युक्तं 'सर्वमाहुतिमयमात्मानं कृत्वा सर्वदेवानन्नरूपेण सर्वैर्देवैरेकात्मभाव गत्वा सर्वदेवमयो भूत्वा पुनर्न म्रियत इति। अथैतदप्युक्तं ब्राह्मणेन-ब्रह्म वै स्वयंभु तपोऽतप्यत तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चाऽऽत्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वा भूतानि चाऽऽत्मनि सर्वेषां भूताना श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैदिति ।

यतीत्याह—तदेकेनेति। उक्तेऽर्थे श्रुतिमवतार्य व्याचष्टे—तदुच्यत इति।

सर्वं हीत्यादिहेतुवाक्यमाकाङ्क्षापूर्वकमुत्थाप्य व्याकरोति—क पुनरित्यादिना। यथोक्तदर्शनवशादेकयैवाऽऽहुत्या मृत्युमपजयतीत्यत्र ब्राह्मणान्तर सवादयति—अथेति। यथा सवत्सरमित्याद्युक्तं 'तथा यदहरेवेत्याद्यपि ब्राह्मणान्तरे सूचितमित्यर्थं। ब्रह्म हिरण्यगर्भभावो जीव स्वयंभु परस्यैव तवात्मनाऽवस्थानात्तपोऽतप्यत कर्मान्वितिष्ठत्। यत्कृत तदनित्यमिति न्यायेन कर्मनिन्दाप्रकारमाह—तदैक्षतेति। कर्मसहायभूतामुपासनामुपदिशति—हन्तेति। उपासनामनूद्य समुच्चयफल कथयति—तत्सर्वेष्विति। श्रेष्ठत्वेऽपि राजकुमारवदस्वातन्त्र्यमाशङ्क्याऽऽह—स्वाराज्यमिति। 'अधिष्ठाय पालयितृत्वमाधिपत्यम्।

जो ऊपर कहा है कि दूध मे ही सम्पूर्ण जगत् प्रतिष्ठित है क्योकि यह सब कुछ दूध की आहुतियो का परिणाम है, विद्वान् पुरुष एक ही दिन आहुति प्रदान करने से जगत् के आत्मा को प्राप्त हो जाता है। इसी बात को श्रुति प्रतिपादित करती है, "पुनर्मृत्युम' यानी दूसरी बार मरना समाप्त कर देता है, मरकर वह विद्वान् तत्काल ही शरीर से वियुक्त हो सर्वात्मस्वरूप हो जाता है, फिर मरने के लिए परिच्छिन्न शरीर को ग्रहण नही करता।

किन्तु किस कारण से वह सर्वात्मभावप्राप्ति के द्वारा मृत्यु को जीत लेता है? इसका समाधान किया जाता है। हि अर्थात् क्योकि 'अन्नाद्यम्' यानी साय प्रात आहुतिप्रदान के द्वारा सम्पूर्ण अन्न और आद्य 'देवेभ्य' यानी समस्त देवताओ को देता है। इसलिए सर्व जगत् अपने को आहुतिमय करके सम्पूर्ण देवताओ के अन्नरूप मे समस्त देवताओ के साथ एकात्मभाव को प्राप्त होकर वह सर्वदेवमय होकर पुनर्मृत्यु को प्राप्त नही होता, ऐसा कहना ठीक ही है। ब्राह्मणान्तर मे ऐसा भी सवाद है कि स्वयम्भु ब्रह्मा ने तपरूप कर्म का अनुष्ठान किया। उसने विचारा कि निश्चय ही तप करने से नित्यत्वलाभ नही होता। अच्छा हो कि मैं अपने को भूतो मे और भूतो को अपने मे देखूँ। अत उसने समस्त भूतो मे अपने को और अपने मे समस्त भूतो को देखकर समस्तभूतो का श्रेष्ठत्व, स्वाराज्य और आधिपत्य प्राप्त किया।

१ प्रतिज्ञायामित्यर्थः। २ प्रक्षेपेणेति—प्रथमो जगदात्मतया दर्शनात्तदाहुत्या अन्नाद्यरूप सर्वं जगद्देवेभ्य प्रयच्छत्यात्मना सह आत्मनोऽपि जगदन्तर्भावित्वादित्यर्थः। ३ जगत्। ४ भूतात्मनोरैक्य पश्यानीत्यर्थः। ५ भाष्यस्थाथशब्दार्थोऽत्र तथेति। ६ सर्वं स्वाश्रित कृतवत्यथ।

कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति। यदा पित्राऽन्नानि सृष्ट्वा सप्त पृथक्पृथग्भोक्तृभ्यः प्रत्तानि तदा प्रभृत्येव तैर्भोक्तृभिरद्यमानानि। तन्निमित्तत्वात्तेषां स्थितेः। सर्वदा नैरन्तर्येण। कृतक्षयोपपत्तेश्च युक्तस्तेषां क्षयः। न च तानि क्षीयमाणानि जगतोऽविभ्रष्टरूपेणैवावस्थानदर्शनात्। भवितव्यं चाक्षयकारणेन। तस्मात्कस्मात्पुनस्तानि न क्षीयन्त इति प्रश्नः।

तस्येदं प्रतिवचनम्—पुरुषो वा अक्षितिर्यथाऽसौ पूर्वमन्नानां स्रष्टाऽऽसीत्पिता मेधया जायादिसंबन्धेन च पाङ्क्तकर्मणा भोक्ता च तथा येभ्यो दत्तान्यन्नानि तेऽपि तेषामन्नानां भोक्तारोऽपि सन्तः पितर एव मेधया तपसा च यतो जनयन्ति तान्यन्नानि।

पश्वन्ने व्याख्याते प्रश्नरूपं मन्त्रपदमादत्ते—कस्मादिति। ननु चत्वार्यन्नानि व्याख्यातानि त्रीणि व्याचिख्यासितानि तेष्वव्याख्यातेषु कस्मादित्यादिप्रश्नः कस्मादित्याशङ्क्य साधनेषूक्तेषु साध्यानामपि तेषामर्थादुक्तत्वमस्तीत्यभिप्रेत्य प्रश्नप्रवृत्तिं मन्वानो व्याचष्टे—यदेति। सर्वदेत्यस्य व्याख्या नैरन्तर्येणेति। अन्नानां सदा भोक्तृभिरद्यमानत्वे हेतुमाह—तन्निमित्तत्वादिति। भोक्तॄणां स्थितेरन्ननिमित्तत्वात्तैः सदाऽद्यमानानि तानि यद्यपूर्णकुसूलवद्भवन्ति क्षीणानीत्यर्थः। किंच ज्ञानकर्मफलत्वादन्नानां यत्कृतकं तदनित्यमिति न्यायेन क्षयः संभवतीत्याह—कृतेति। अस्तु तर्हि तेषां क्षयो नेत्याह—न चेति। भवतु तर्हि 'स्वभावादेव सप्तान्नात्मकस्य जगतोऽक्षीणत्वं नेत्याह—भवितव्यं चेति। स्वभाववादस्या'तिप्रसङ्गित्वादित्यर्थं। प्रश्नं निगमयति—तस्मादिति।

प्रतिवचनमादाय व्याचष्टे—तस्येत्यादिना। तेषां पितृत्वे हेतुमाह—मेधयेति। भोगकालेऽपि विहितप्रतिषिद्धज्ञानकर्मसंभवात्प्रवाहरूपेणाक्षयः संभवतीत्यर्थः। 'तत्र प्रतिज्ञाभागमुपादायाक्षराणि

"फिर सदा खाये जाने पर भी वे अन्न नष्ट क्यो नही होते ? इस श्रुतिवाक्य की व्याख्या की जाती है। जब क्षेत्रज्ञ के द्वारा अन्न की सृष्टि करके सातो अन्न अलग-अलग भोक्ताओ को बाँटे गये थे, तभी से लेकर वे 'सर्वदा' अर्थात निरन्तर उन भोक्ताओ द्वारा खाये जा रहे है, क्योकि उन अन्नो के कारण ही उनकी सत्ता है। उत्पन्न वस्तु का क्षय होना सिद्ध ही है, अत उनका भी क्षय होना युक्तिसगत है। किन्तु वे क्षीयमान नही है क्योकि ससार अविनश्वररूप से स्थित दीख पडता है। इसलिए उसके विनश्वरस्वभाव वाला होने का कोई न कोई कारणान्तर होना चाहिये। इसलिए वे क्षीण क्यो नही होते ? यह प्रश्न है।

उसका उत्तर इस प्रकार है कि पुरुष अविनश्वरस्वभाव वाला है जिस प्रकार सृष्टि के प्रारम्भ मे ज्ञानकर्माधिकृत यह क्षेत्रज्ञ पिता उपासना और जायादि के सम्बन्ध से होने वाले पाङ्क्तकर्म द्वारा अन्नो का रचयिता एव भोक्ता था, उसी प्रकार अन्नग्रहीता भी उन अन्नो का भोक्ता होते हुए भी उनके पिता ही है, क्योकि वे भी उपासना और कर्म के द्वारा उन अन्नो को उत्पन्न करते है। इसी (भोक्ता के पितृत्व-उपपादन करने) से यह स्पष्ट हो जाता है कि पुरुष, जो अन्नो का भोक्ता है, वह 'अक्षिति' अर्थात् अविनश्यत्व का हेतु है। उसका अक्षितित्व किसलिए है ? इस पर कहा जाता है,

१ अविनश्वररूपेणेत्यर्थः। २ क्षेत्रज्ञो ज्ञानकर्माधिकृतः। ३ सर्गादौ। ४ उपासनया। ५. कर्मणा।
६ कारणमन्तरेव। ७ सर्वं सर्वत्र स्यादित्यतिप्रसङ्ग। ८ हेतुप्रतिज्ञाभागयोर्मध्ये।

'तदेत'दभिधीयते पुरुषो वै योऽन्नानां भोक्ता सोऽक्षितिरक्षयहेतुः । कथमस्याक्षितित्वमित्युच्यते—स हि यस्मादिदं भुज्यमानं सप्तविधं 'कार्यकरणलक्षणं 'क्रियाफलात्मकं पुनः पुनर्भूयो भूयो जनयते उत्पादयति धिया धिया तत्तत्कालभाविन्या तया तया प्रज्ञया कर्मभिश्च वाङ्मनःकाय'चेष्टितैर्यद्यदि ह यद्येतत्सप्तविधमन्नमुक्तं क्षणमात्रमपि' न कुर्यात्प्रज्ञया कर्मभिश्च ततो विच्छिद्येत भुज्यमानत्वात्सातत्येन क्षीयेत 'ह । 'तस्माद्यथैवायं पुरुषो भोक्ताऽन्नानां नैरन्तर्येण यथाप्रज्ञं यथाकर्म च करोत्यपि । तस्मात्पुरुषोऽक्षितिः सातत्येन कर्तृत्वात् । 'तस्माद्भुज्यमानान्यप्यन्नानि न क्षीयन्त इत्यर्थः ।

'अतः प्रज्ञाक्रियालक्षणप्रबन्धारूढः सर्वो लोकः साध्यसाधनलक्षणः क्रियाफलात्मकः

---

व्याचष्टे—तदेतदिति । हेतुभागमुत्थाप्य विभजते—य यमित्यादिना । "तस्मात्त्वक्षयः सभवति "प्रवाहात्मनेति शेषः । उक्तहेतुं व्यतिरेकद्वारोपपादयितु यद्धैतदित्यादि वाक्य तद्व्याचष्टे—यदिति । अन्वयव्यतिरेकसिद्ध हेतुं निगमयति—तस्मादिति । तथा यथाप्रज्ञमिति पठितव्यम् । साध्यं निगमयति—तस्मादिति । अक्षयहेतौ सिद्धे फलितमाह—तस्माद्भुज्यमानानीति ।

धिया धियेत्यादिश्रुतेः स होदमित्यत्रोक्तं परिहारं प्रपञ्चयन्त्याः सप्तविधान्नस्य कार्यत्वात्प्रतिक्षणध्वंसित्वेऽपि पुन. पुनः क्रियमाणत्वात्प्रवाहात्मना तदचलं मन्वा. पश्यन्तीत्यस्मिन्नर्थे तात्पर्यमाह—अत इति । "प्रज्ञाक्रियाभ्या हेतुभ्या लक्ष्यते व्यावर्त्यते निष्पाद्यते यः प्रबन्धः समुदायस्तदारूढस्तदात्मकः सर्वो लोकश्चेतनाचेतनात्मको द्वैतप्रपञ्चः साध्यत्वेन साधनत्वेन च वर्तमानो ज्ञानकर्मफलभूतः क्षणि-

---

क्योंकि वह 'इदम्' अर्थात् खाये जाने वाले स्थूलसूक्ष्म एव साध्यसाधनरूप सात प्रकार के अन्नो को 'पुन पुन ' यानी बार-बार 'जनयते' अर्थात् उत्पन्न करता है 'धिया धिया' अर्थात् तत्तद्काल मे होने वाली तत्तद्बुद्धि द्वारा 'कर्मभि ' अर्थात् वाणी, मन और शरीर की चेष्टाओ से उत्पन्न कर देता है । यदि वह उपर्युक्त सप्तविध अन्न को उपासना और कर्म के द्वारा क्षणमात्र भी उत्पन्न न करे, तो निरन्तर खाये जाने के कारण वह 'क्षीयेत ह' नष्ट ही हो जाय । इसलिए (कर्तृत्व और भोक्तृत्व का एक दूसरे से सम्बन्ध होने के कारण) जैसे वह पुरुष अन्नो का निरन्तर भाक्ता है, वैसे ही अपनी प्रज्ञा और कर्म के अनुसार उन्हे उत्पन्न भी करता है । अत सदा-सर्वदा कर्ता होने के कारण पुरुष अविनाशी है । अत ( अक्षयहेतुक होने से ) निरन्तर उपभोग करने पर भी वह अन्न नष्ट नहो होते हैं, यह इसका अर्थ है ।

---

१ उपपादितम् । २ भोक्तु पितृत्वम् । ३ स्थूलसूक्ष्मरूपम् । ४ साध्यसाधनरूपम् । ५ चेष्टितैरिति —विमतोऽन्नभोक्ता अन्नाक्षयहेतु तद्भोगकालेऽपि सातत्येन तज्जनकत्वात् सम्प्रतिपन्नवदित्यन्वय , यत्र भोक्तृत्वे सति तज्जनकत्वाभाव तत्र तदक्षयाभाव इति व्यतिरेक । ६ एव । ७ कर्तृत्वभोक्तृत्वयोर्मिथो बद्धत्वात् । ८ अक्षयहेतो सत्वात् । ९ अन्नानामक्षयत्वात् । १० तस्मादिति—शास्त्रीयाशास्त्रीयज्ञानकर्मसमूहेनाविदुष पुरुषस्य भोगावस्थायामपि सर्वान्नसष्टृत्वसभवादित्यर्थ । ११ प्रवाहात्मनेतीति—तथाहि उपार्जितज्ञानकर्मणो सुखादिसाक्षात्काराख्य फल तच्च स्वसजातीयविषयकरागाद्युत्पादक तत्पुन शुभाशुभे कारयति ते च कर्तरि फल जनयत इति प्रवाहरूपेणेत्यर्थ । १२ ज्ञानकर्मभ्याम् ।

संहतानेकप्राणिकर्मवासनासंतानावष्टब्धत्वात्क्षणिको'ऽशुद्धोऽसारो [2]नदीस्रोत-प्रदीपसंतान[3]-कल्पः कदलीस्तम्भवदसारः फेनमायामरीच्यम्भःस्वप्नादिसमस्त[4]दात्मगतदृष्टीनामविकीर्य-[5]माणो नित्यः सारवानिव लक्ष्यते । [6]तदेतद्वैराग्यार्थमुच्यते—[7]धिया धिया जनयते कर्माणि यद्वैतन्न कुर्यात्क्षीयेत हेति । [8]विरक्तानां ह्यस्माद्ब्रह्मविद्याऽऽरब्धव्या [9]चतुर्थप्रमुखेने-(णे)ति ।

यो वैतामक्षितिं वेदेति [10]वक्ष्यमाणान्यपि त्रीण्यन्नान्यस्मिन्नवसरे व्याख्यातान्येवेति कृत्वा तेषां याथात्म्यविज्ञानफल[11]मुपसंह्रियते—यो वैतामक्षितिमक्षयहेतुं यथोक्तं वेद

कोऽपि नित्य इव लक्ष्यते । तत्र हेतुः—संहतेति । संहतानां मिथः सहायत्वेन स्थितानामनेकेषां प्राणिना-मनन्तानि कर्माणि वासनाश्च तत्संतानेनावष्टब्धत्वाद्दृढीकृतत्वादिति यावत् । प्रातीतिकमेव संसारस्य स्थैर्यं न तात्त्विकमिति वक्तुं विशिनष्टि—नदीति । असारोऽपि सारवद्भातीत्यत्र दृष्टान्तमाह—कदलीति । अशुद्धोऽपि शुद्धवद्भातीत्यत्रोदाहरणमाह—मायेत्यादिना । अनेकोदाहरणं संसारस्यानेकरूपत्वद्योत-नार्थम् । केषां पुनरेवं संसारोऽन्यथा भातीत्यपेक्षायां "संसाराय पराग्दृशामिति न्यायेनाऽऽह—तदात्मेति । किमिति प्रतिक्षणप्रध्वंसि जगदिति श्रुत्योच्यते तत्राऽऽह—तदेतदिति । वैराग्यमपि कुत्रोपयुज्यते तत्राऽऽह—विरक्तानां हीति । इति वैराग्यपर्यवदिति शेषः ।

पुरुषोऽन्नानामक्षयहेतुरित्युपपाद्य "तज्ज्ञानमनूद्य तत्फलमाह—यो वैतामित्यादिना । यथोक्तमनु-

मत. (अन्नो के अक्षय होने के कारण) प्रज्ञा और कर्म से लक्षित समुदाय पर आरूढ साध्य-साधनलक्षण एवं क्रियाफलात्मक यह समस्त जगत् क्षणिक, अशुद्ध, सारविहीन, नदी के प्रवाह और प्रदीप की ज्योति के समान (चपल) कदलीस्तम्भ की तरह असार, मृगतृष्णा, जल की फेन व स्वप्न की तरह असत्य होकर भी, जिनकी दृष्टि संसार के स्वरूप में आसक्त है, उन बहिर्मुखी जीवों को अविशीर्यमाण, नित्य और सारयुक्त सा दिखायी पडता है, क्योंकि समष्टिरूप से अनेक प्राणियों के अनन्त कर्म और उसकी वासना की परम्परा से सम्बद्ध हो सुस्थिर जान पडता है । यथोक्त जगत से वैराग्य के लिए श्रुति ऐसा कहती है—"तत्तद्‌काल में होने वाली तत्तद्‌बुद्धि वाणी, मन और शरीर की चेष्टाओं से उत्पन्न कर देता है । वह उत्पन्न [illegible] करे तो नष्ट ही हो जाय" इत्यादि । जो इस जगत् के प्रति रागशून्य हैं, उन्हीं के लिए बृहदारण्यक के चौथे अध्याय की (बृहदारण्यकोपनिषद के द्वितीय अध्याय की ब्रह्मविद्या प्रारम्भ करनी है ।

"जो इसे अविनाशी जानता है' इस श्रुतिवाक्य से आगे कहे जाने वाले तीन अन्नों की इस प्रसंग में व्याख्या कर दी गई है ऐसा समझकर उनके याथात्म्यविज्ञान के फल को प्रदर्शित किया

१ कामादिदुष्ट । २ स्रोत इव । ३ प्रदीपसंतान इव च । ४ संसारस्वरूपगतदृशाम् । ५ अविशीर्यमाण । ६ यथोक्त जगत् । [illegible] विरक्तानामिति—न हि जगति रागवतां मोक्षापेक्षा दृष्टेति भावः । ८ चतुर्थाध्यायेनेत्यर्थः । चतुर्थत्वं च बृहदारण्यापेक्षया उपनिषदपेक्षया तु द्वितीयत्वम् । ९ साधनभूतान्ने व्याख्याते साध्यभूतान्नमप्यर्थाद्व्याख्यातमेवेति कृत्वा मध्ये फलवचनमिति ध्येयम् । १० प्रदर्श्यते । ११ तदुक्तं वार्तिके—'अपामार्गलतेवायं विरुद्धफलदो भवः । प्रत्यग्दृशां विमोक्षायेत्यादि' त्रिपादी द्रष्टव्या ।। १४२७।। १२ पुरुष-निष्ठान्नाक्षयहेतुत्वज्ञानम् ।

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुता-न्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति। कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं

उस पिता ने तीन अन्न अपने लिये बनाया अर्थात् मन, वाणी और प्राण इन्हें प्रजापति ने अपने लिए सुरक्षित रखा। मेरा मन कहीं अन्य था, अतः मैं देख न सका। मेरा मन अन्यत्र था, इसीलिये मैं सुन न सका। मनुष्य की इस उक्ति से यही निश्चय होता है, वह मन से ही देखता है और मन से

पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत हेति। सोऽन्नमत्ति प्रतीकेनेत्यस्यार्थ उच्यते—मुखं मुख्यत्वं प्राधान्यमित्येतत्। प्राधान्येनैवान्नाना पितुः पुरुषस्याक्षितित्वं यो वेद सोऽन्नमत्ति नान्नं प्रति गुणभूतः सन्यथाऽज्ञो न तथा विद्वानन्नानामात्मभूतो भोक्तैव भवति न भोज्यतामापद्यते। स देवानपिगच्छति स ऊर्ज-मुपजीवति देवानपिगच्छति देवात्मभावं प्रतिपद्यत ऊर्जममृतं चोपजीवतीति यदुक्तं सा प्रशंसा नापूर्वार्थोऽन्योऽस्ति ॥ २ ॥

वदिति—पुरुष इति। फलविषयं मन्त्रपदमुपादाय तदीयं ब्राह्मणमवतार्य व्याकरोति—सोऽन्नमित्यादिना। यथोक्तोपासनवतो यथोक्तं फलम्। प्राधान्येनैव सोऽन्नमत्तीति सम्बन्धः। विदुषोऽन्नं प्रति गुणत्वाभावे हेतुमाह—अन्नानामिति। उक्तमर्थं संगृह्णाति—भोक्तैवेति। प्रशस्तिसिद्धये प्रपञ्चयति—स देवानित्या-दिना ॥ २ ॥

जाता है। जो भी इस 'अक्षितिम्' अर्थात् उपरोक्त अक्षय के हेतु को, कि "पुरुष ही अविनाशी है, वही तत्तत्काल में होने वाली तत्तद्बुद्धि और कर्मों से इस अन्न को उत्पन्न कर देता है, यदि वह उत्पन्न न करे तो बिल्कुल क्षीण ही हो जाय"—ऐसा जानता है (वह प्रतीक के द्वारा अन्न को खाता है) 'सोऽन्नमत्ति प्रतीकेनेति' इस श्रुतिवाक्य का अर्थ कहा जाता है। 'मुखम्' मुख्य या प्रधान का नाम है। जो अन्नों के स्रष्टा को अविनाशी जानता है वह मुख्यवृत्ति से अन्न का भक्षण करता है, गौणवृत्ति से नहीं करता है। जिस प्रकार अनात्मवित अन्नों का अनात्मभूत होता है, वैसे विद्वान् नहीं होता। वह भोक्ता ही रहता है, भोज्यता को प्राप्त नहीं होता। "स देवानपिगच्छति स ऊर्जमुप-जीवति" इस श्रुतिवाक्य में 'देवानपिगच्छति' यानी देवात्मभाव को प्राप्त होता है, 'ऊर्जम' अर्थात् अमृत

१ मनसा ह्येवेति—अत्र मनस एव ज्ञानमात्रं प्रत्यसाधारणकारणत्वेन कारणत्वं विवक्षितं न तु नैयायिकानामिव साधारणकारणत्वम्। चक्षुरादीन्द्रियाणां तु तत्सहकारित्वमात्रम्। अन्यत्रमना अभूवमित्यादिनैव साधारणकारणत्व-लाभेऽपि पुनर्मनसा ह्येवेत्याद्युक्तिरिति ध्येयम्। २ मुख्यवृत्त्या। ३ नान्नं प्रतीति—अन्नं प्रति गुणत्वं तदर्थं दैन्यानुभवः। तद्भोज्यत्वं वा अधिकाशने हि अन्नेन भुज्यते पुमान् रोगोत्पादद्वारेति प्रसिद्धम्। ४ मन्त्रेण। ५ फलम्। ६ उपास्ते। ७ नापूर्वेति—सोऽन्नमत्तीत्यत्रैव देवभावादेः सिद्धेरपूर्वार्थालाभाद्विद्यास्तुतिरेवेत्यर्थः। ८ उपास्ते। ९. मन्त्रार्थं कथयति।

मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सा[1]। [2]एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥३॥

ही सुनता है। काम, संकल्प, संशय, आस्तिक्य, बुद्धि, श्रद्धा, तद्विपरीत अश्रद्धा, धारणशक्ति, अधृति, लज्जा, बुद्धि और भय ये सब मन ही है। इसीलिए पृष्ठभाग में स्पर्श किये जाने पर मानव मन से जान लेता है। जो कुछ भी शब्द है, वह वाक्रूप ही है, क्योंकि वह अपने वाच्य अर्थ के पर्यवसान में अनुगत है। इसीलिए वह प्रकाश्य नहीं है। प्राण, अपान, उदान, व्यान, समान और अन ये सब प्राण ही हैं अर्थात् प्राण के ही पाँच भेद हैं। यह शरीररूप आत्मा वाङ्मय, मनोमय और प्राणमय ही है ॥३॥

---

पाङ्क्तस्य कर्मणः फलभूतानि यानि त्रीण्यन्नान्युत्[1]क्षिप्तानि तानि कार्यत्वाद्विस्तीर्णविषयत्वाच्च पूर्वेभ्योऽन्नेभ्यः [2]पृथगुत्कृष्टानि तेषां व्याख्यानार्थं उत्तरो ग्रन्थ आ ब्राह्मणपरिसमाप्तेः। त्रीण्यात्मनेऽकुरुतेति। कोऽस्यार्थ इत्युच्यते—मनोवाक्प्राणा एतानि त्रीण्यन्नानि तानि मनो वाचं प्राणं चाऽऽत्मने आत्मार्थमकुरुत कृतवान्सृष्ट्वाऽऽदौ पिता।

तेषां मनसोऽस्तित्वं स्वरूपं च प्रति संशय इत्यत आह—अस्ति तावन्मनः श्रोत्रादि-

---

साधनात्मकमन्नचतुष्टयमन्नाभ्यकारणमक्षितित्वगुण[1]प्रक्षेपेण पुरुषोपासनस्य फलं चोक्तमिदानीं ब्राह्मणसमाप्तेरुत्तरग्रन्थस्य तात्पर्यमाह—पाङ्क्तस्येत्यादिना। ब्राह्मणशेषस्य तात्पर्यमुक्त्वा मन्त्रपदमूध्याऽऽकाङ्क्षाद्वारा ब्राह्मणमुत्थाप्य व्याचष्टे—त्रीणीत्यादिना। ज्ञानकर्मभ्यां सप्तान्नानि सृष्ट्वा चत्वारि भोक्तृभ्यो [2]विभज्य त्रीण्यात्मार्थं कल्पादौ पिता कल्पितवानित्यर्थं।

अन्यनत्याबि वाक्यमुपादत्ते—तेषामिति। षष्ठी निर्धारणार्था। [3]तत्र मनसोऽस्तित्वमादौ साधयति—अस्ति तावदिति। [4]अस्मीन्द्रियार्थसांनिध्ये सत्यपि कदाचिदेवार्थधीर्जायमाना हेत्वन्तर

---

का उपजीवी होता है ऐसा जो कहा है वह उपासना की प्रशंसा है विधि स्तुति के अतिरिक्त कोई अन्य अपूर्व अर्थ नहीं है ॥४॥

श्रुतिवाक्य में पाङ्क्तकर्म के फलभूत जिन तीन अन्नों का ऊपर कथन[5] किया गया है वे कार्यत्व और विस्तीर्णविषयत्व होने के कारण पूर्वोक्त अन्नों से पृथक् किए गए हैं। उनको व्याख्या के लिए इस पञ्चम ब्राह्मण की समाप्तिपर्यन्त अग्रिम ग्रन्थ (का आरम्भ किया जाता) है। त्रीण्यात्मनेऽकुरुतेति

---

१ एषा हि वाक् अन्तमायत्ता अभिधेयावसानमनुगता। अर्थनिर्णयं प्राप्ता। अर्थप्रकाशिकेति यावत्। एषा हि न स्वयं चैषा वाक् वागन्तरप्रकाश्येत्यर्थः। २ मन्त्रे कथितानि। ३ पृथक्कृतानि। ४ इतरचतुष्टयवि नियोगं दृष्टान्तयितुं चकारः। ५ आरोपेण। ६ विभागेन दत्त्वा तानि तेषु विनियुज्येत्यर्थः। ७ अस्ति त्वस्वरूपयोर्मध्ये। ८ आत्मा प्रमातृ चित्।

बाह्यकरणव्यतिरिक्तम् । यत एवं प्रसिद्धं 'बाह्यकरणविषयात्मसंबन्धे सत्यप्यभिमुखीभूतं विषयं न गृह्णाति किं दृष्टवानसीदं रूपमित्युक्तो वदत्यन्यत्र मे गतं मन आसीत्सोऽहमन्यत्रमना आसं नादर्शम् । तथेदं श्रुतवानसि मदीयं वच इत्युक्तोऽन्यत्रमना अभूवं नाश्रौषं न श्रुतवानस्मीति । तस्माद्यस्यासंनिधौ रूपादिग्रहणसमर्थस्यापि सतश्चक्षुरादेश्च स्वस्वविषयसंबन्धे रूपशब्दादिज्ञानं न भवति । यस्य च भावे भवति तदन्यदस्ति मनो नामान्तःकरणं सर्वकरणविषययोगीत्यवगम्यते । तस्मात्सर्वो हि लोको मनसा ह्येव पश्यति मनसा शृणोति तद्व्यग्रत्वे दर्शनाद्यभावात् ।

माक्षिपति' न चादृष्टादि तदिति पूर्वं तस्य 'दृष्टमंपादित्वा''तस्मादर्थादिसांनिध्ये ज्ञानकादाचित्कत्वानुपपत्तिर्मनःसाधिकेत्यर्थः । ''लोकप्रसिद्धिरपि तत्र प्रमाणमित्याह—यत इति । अतोऽस्ति बाह्यकरणाद्यतिरिक्तं विषयग्राहि करणमिति शेषः । तामेव प्रसिद्धिमुदाहरणनिष्ठतयोदाहरति—किं दृष्टवानित्यादिना । ''तत्रैवान्वयव्यतिरेकावुपन्यस्यति—तस्मादिति । यथोक्तार्थापत्तिलोकप्रसिद्धिवशादिति यावत् । विमतमात्माद्यतिरिक्तापेक्षं तस्मिन्सत्यपि कादाचित्कत्वाद्घटवदित्यनुमानं च ''तच्छब्दार्थं । तस्मादनुमानादिमानादन्यदस्ति मनो नामेति संबन्धः । रूपादिग्रहणसमर्थस्यापि सत इति प्रमातोच्यते । अन्तःकरणस्य चक्षुरादिभ्यो वैलक्षण्यमाह—सर्वेति । समनन्तरवाक्यं फलितार्थविषयत्वेनाऽऽदत्ते—तस्मादिति । तच्छब्देनोक्तं हेतुं स्पष्टयति—तद्व्यग्रत्व इति ।

इस श्रुतिवाक्य का क्या अर्थ है ? इसे बतलाया जाता है । मन, वाक् और प्राण ये तीन अन्न हैं; उन मन, प्राण और वाणी को सृष्टि के प्रारम्भ में पिता ने प्रथम उत्पन्न कर उन्हें 'आत्मने' यानी अपने लिए 'कुरुत' अर्थात् कल्पित किया ।

उनमें मन के अस्तित्व और स्वरूप के विषय में सन्देह है, इसलिए श्रुति प्रतिपादन करती है । मन श्रोत्रादि-बाह्येन्द्रियों से भिन्न है, क्योंकि लोकव्यवहार में यह प्रसिद्ध है कि पुरुष बाह्येन्द्रिय, विषय और आत्मा का सम्बन्ध होते हुए भी अपने सामने होने वाले विषयों को ग्रहण नहीं करता । तथा 'क्या तुमने इस रूप को देखा है' ऐसा पूछे जाने पर कह उठता है 'मेरा मन कहीं दूसरी जगह था, अतः अन्यत्रमना होने से मैंने इसे नहीं देख पाया' । एवं यह पूछे जाने पर कि 'क्या तुमने मेरी बात सुनी है' तो कहता है, "मैं अन्यत्र मन वाला था, इसलिए 'नाश्रौषम्' यानी नहीं सुनी ।" इसलिए जिसकी सन्निधि के अभाव में, रूपादिग्रहण में समर्थ नेत्रादि के होते हुए भी उन्हें अपने अपने विषय का सम्बन्ध होने पर रूप एवं शब्दादि का ज्ञान नहीं होता । जिसकी सन्निधि होने पर वह होता है; वह उन नेत्रादि-इन्द्रियों से भिन्न, समस्त इन्द्रियों के विषयों से सम्बन्ध रखने वाला मननामक अन्तःकरण है, ऐसा सिद्ध होता है । इसलिए सभी मनुष्य मन से ही देखते हैं और मन से ही सुनते हैं क्योंकि उसके अन्यत्र लगा हुआ होने पर दर्शनस्पर्शनादि क्रिया नहीं होती ।

१. बाह्येति—विमत (ज्ञान) आत्मादित्रयातिरिक्तासाधारणकारणपूर्वकं सत्यपि तस्मिन्कादाचित्कत्वादिति परिशेषानुमानान्मनोऽस्तित्वमिह बोध्यम् । २. त्वत्समीपे गच्छद्राजाद्यात्मक वस्तु । ३. इष्वादौ । ४ व्यापृतम् । ५ सन्निधिसत्त्वे । ६ अन्यत्रव्यापृतत्वे । ७ आदिना स्पर्शनादि । ८. अन्यथासत्यां सामग्र्यां ज्ञानकादाचित्कत्वानुपपत्तिरिति शेष । ९. अदृष्टं हि सामग्रीसम्पादनार्थं सम्पादयति न तु साक्षात्कार्यं जनयति । १० पारिशेष्यात् । ११ इषुकारप्रसिद्धिः । १२. मन सत्त्व एव । १३. तस्मादित्यस्यार्थः ।

'अस्तित्वे सिद्धे मनसः स्वरूपार्थमिदमुच्यते—कामः स्त्रीव्यतिकराभिलाषादिः ।' 'संकल्पः प्रत्युपस्थितविषयविकल्पनं शुक्लनीलादिभेदेन । विचिकित्सा संशयज्ञानम् । श्रद्धा ऽदृष्टार्थेषु कर्मस्वास्तिक्यबुद्धिर्देवतादिषु च । अश्रद्धा तद्विपरीता बुद्धिः । धृतिर्धारणं देहाद्यवसाद उत्तम्भनम् । अधृतिस्तद्विपर्ययः । ह्रीर्लज्जा । धीः 'प्रज्ञा । भीर्भयमित्येतदेवमादिकं सर्वं 'मन एव मनसोऽन्तःकरणस्य 'रूपाण्येतानि । मनोऽस्तित्वं प्रत्यन्यच्च कारणमुच्यते । "तस्मान्मनो नामास्त्यन्तःकरणम् । यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽप्युपस्पृष्टः केनचिद्धस्तस्यायं स्पर्शो जानोरयमिति" "विवेकेन प्रतिपद्यते । यदि विवेककृन्मनो नाम

कामादिवाक्यमवतार्यं व्याकुर्वन्मनसः स्वरूपं प्रति संशयं निरस्यति—अस्तित्व इति । अश्रद्धाविषय"कामादिरपि विवक्षितोऽत्रेति मत्वा "मनोबुद्ध्योरेकत्वमुपेत्योपसंहरति—इत्येतदिति । "द्वैतप्रवृत्त्युन्मुखं मनो भोक्तृकर्मवत्ताप्रानार्थाकारेण "विवर्तत इत्यभिप्रेत्यानन्तरवाक्यमवतारयति—मनोऽस्तित्वमिति । तदेवान्यत्कारणं स्फोरयति—यस्मादिति । तस्मादस्ति विवेककारणमन्तःकरणमिति सम्बन्धः । चक्षुरसंप्रयोगात्तेन "स्पर्शविशेषादर्शनेऽपि "सम्प्रयुक्तया त्वचा विनाऽपि मनोविशेषदर्शनं स्यादि-

इस प्रकार (धर्मी के होने पर ही तद्गतधर्म सम्भव है, इस न्याय से) मन का अस्तित्व सिद्ध हो जाने पर उसके स्वरूप के विषय मे कहा जाता है ।'काम' यानी स्त्री-सम्पर्क की अभिलाषादि, 'सकल्प' अर्थात् उपस्थित विषय की शुक्ल-नीलादि भेद से विकल्पना करना, 'विचिकित्सा' अर्थात् सशयज्ञान, 'श्रद्धा' अर्थात् अदृष्ट-स्वर्गादिफलक कर्मों एव देवतादिको मे आस्तिक्य भावना, 'अश्रद्धा' अर्थात् पूर्वोक्त से विपरीत भावना, 'धृति' अर्थात् धारणा यानी देहादि के क्षीण होने पर स्थिति बनाए रखना, 'अधृति' अर्थात् पूर्ववर्णित से विपरीत होना, 'ह्रीः' अर्थात् लज्जा, 'धी' यानी निश्चयज्ञान, 'भी' यानी भय इत्यादि सभी मन ही हैं । ये सभी 'मनस' अर्थात् अन्त करण के रूप है । मन के अस्तित्व के विषय मे एक और भी कारण बतलाया जाता है । इससे (वक्ष्यमाण हेतु से) भी मननामक अन्त करण की सत्ता है क्योकि नेत्र के सामने न आने पर भी किसी के द्वारा पीठ पर स्पर्श किये जाने पर मनुष्य विभाग से यह जान लेता है कि यह हाथ का, यह जानु का स्पर्श है । यदि विवेक करने वाला मन न हो तो त्वचा मात्र से ऐसा विभागपूर्वक निश्चय किस प्रकार हो सकता है ? जो उस विवेकनिश्चय का हेतु है, वही मन है ।

१ अस्तित्वे सिद्ध इति—सति धर्मिणि धर्माणा चिन्तेति न्यायादिति शेष । कामदयश्च मनसो धर्मा अपि तत्परिणामतया तत्स्वरूपम् । २ स्त्र्यतिरिक्तविषयाभिलाषग्राहक आदिशब्द । ३ सकल्प इति—सामान्यतो दृष्टस्य विशेषतोऽवधारण काममूल सकल्प इत्यर्थ । ४ अदृष्टस्वर्गादिफलकेषु । ५ धारणमिति—"धारण च धृतिर्ज्ञेया बुद्ध्योपात्तस्य वस्तुन" ॥१३॥ इति वार्तिके । चकारेण देहाद्युत्तम्भनमपि सगृहीतम् । ६ प्रज्ञा—सामान्यतो निश्चयज्ञानमिति सकल्पतो भेद । ७ देहेन्द्रियादि प्रपञ्चजात सर्वमिति विवक्षित मनोमात्रत्वाद्द्वैतस्य । ८ मन एवेति । न च निमित्तनैमित्तिकत्वेन सामानाधिकरण्य कुलालादावदृष्टत्वादिति तादात्म्य तयोर्ग्राह्यम् । ९ रूपाणि वृत्तय वृत्तितद्वतोरभेदादिति भाव । १० वक्ष्यमाणहेतो । ११ उक्तविशेषम् । १२ विभागेन । १३ धृत्याद्यभावोक्त्यैव कामाद्यभावोक्ते तद्विना तदसभवादिति भाव । १४ ननु बुद्धि हित्वा मनसा तादात्म्य कामादे किमुच्यते । तत्राह—मनोबुद्ध्योरिति । १५ द्वैतेति—ननु सर्वं मनोमात्र चेद् देहेन्द्रियादिवैचित्र्याद् भोक्तृभोगवैषम्यमपि न स्यादित्याशङ्क्येत्यादि । १६ परिणमते । १७ चक्षुषा । १८ सन्निकृष्टया ।

मास्ति तर्हि त्वङ्मात्रेण कुतो ¹विवेकप्रतिपत्तिः स्यात् । यत्तद्विवेकप्रतिपत्तिकारणं तन्मनः ।

²अस्ति तावन्मनः स्वरूपं च तस्याधिगतम् । त्रीण्यन्नानीह फलभूतानि ³कर्मणां मनोवाक्प्राणाख्यान्यध्यात्ममधिभूतमधिदैवं च व्याचिख्यासितानि । तत्राऽऽध्यात्मिकानां वाङ्मनःप्राणानां मनो व्याख्यातम् । अथेदानीं वाग्वक्तव्येत्यारम्भः—यः कश्च लोके शब्दो ध्वनिस्तात्वादिव्यङ्ग्यः प्राणिभिर्वर्णादिलक्षण इतरो वा वादित्रमेघादिनिमित्तः सर्वो ध्वनिर्वागेव सा ।

⁶इदं तावद्वाचः स्वरूपमुक्तम् । अथ तस्याः कार्यमुच्यते—एषा वागिध ⁷यस्मादन्त-

स्याशङ्क्याऽऽह—यदीति । त्वङ्मात्रस्य ⁸स्पर्शमात्रग्राहित्वेन ⁹विवेचकत्वायोगादित्यर्थः । विवेचके कारणान्तरे सत्यपि कुतो मनःसिद्धिस्तत्राऽऽह—यत्तदिति ।

¹⁰वृत्तं कीर्तयति—अस्ति तावदिति । उत्तरग्रन्थमवतारयितुं भूमिकां करोति—त्रीणीति । एवं भूमिकामारचय्याऽऽध्यात्मिकवाग्व्याख्यानार्थं यः कश्चेत्यादि वाक्यमादाय व्याकरोति—अथेत्यादिना । शब्दपर्यायो ध्वनिर्द्विविधो वर्णात्मकोऽवर्णात्मकश्च । तत्राऽऽद्यो व्यवहर्तृभिस्तात्वादिस्थानव्यङ्ग्यो द्वितीयो मेघादिकृतः । स सर्वोऽपि प्रकृता वागेवेत्यर्थः ।

प्रकाशकमात्रं वागित्युक्त्वा ¹¹तत्र प्रमाणमाह—इद तावदिति । तस्मादभिधेयनिर्णायकत्वा¹²दसा-

इस प्रकार सिद्ध हुआ कि मन है और उसका स्वरूप भी ज्ञात हो गया । यहाँ कर्मों के फलभूत मन, वाक् और प्राणसंज्ञक अध्यात्म अधिभूत और अधिदैव तीन अन्नों की व्याख्या करनी है । उनमें से आध्यात्मिक वाक्, मन और प्राणों में से मन की व्याख्या तो कर दी । अब इसके बाद वाक् का निरूपण करना है, इसलिए उसका उपक्रम किया जाता है । लोकव्यवहार में जो कुछ भी मनुष्यों द्वारा तालु आदि से व्यक्त होने वाला वर्णादिसंज्ञक शब्द यानी ध्वनि है तथा वादक यन्त्र मेघादि-निमित्तक ध्वनि है, सभी वाक् ही है ।

यह तो वाक् का स्वरूप बतलाया गया । अब उसका कार्य बतलाते हैं । यह वाक् ही 'अन्तम्'

१ विवेकेन निश्चय । २ अधिगतमिति- विमतमसाधारणकारणकरणजन्य विशेषज्ञानत्वाद्रूपज्ञानवदित्यनुमानेन विज्ञातमित्यर्थः । तदनन्तर च तस्मादित्यादिना देहेन्द्रियादि मङ्गतिमनामाश्रत्वनाधिगतेत्यपि द्रष्टव्यम् । ३ व्यन्नाधिकारे । ४ उपास्त्युपलक्षणम् । ५ य कश्चशब्द इत्यविशेषेण ध्वनिमात्र उक्तो निद्धमर्थं वदन् वागेव-त्यस्यार्थमाह—तात्वादीति । तात्वादिना कोष्ठगतवायो संयोगात्समुत्थित प्राणिभिरुच्चार्यमाणोध्वन्यपरपर्यायो य कश्चन शब्द अभिधेयप्रकाशकमात्रमिति यावत् । ६ प्रकाशकमात्र शब्दसामान्यमत्राधिक वार्तिकतोऽव-सेयम । ७ यस्मादिति—अनोऽभिधेयनिश्चयपर्यन्त वाक् प्रवृत्ताऽतोऽभिधेयज्ञान तत्कार्यम् । ८ विशेषणपदा-व्यावर्तको मात्र । ९ विवेचकत्वायोगादिति- यद्यपि चक्षुर्वत् त्वचो द्रव्यग्राहकत्वात्तद्विशेषस्पर्शास्तया ज्ञातु शक्य-स्तथापि असमाहितस्य हस्तादिना स्पृष्टस्य स्पर्शमात्रमात्रं प्रतिपद्य तद्विशेषमातोच्यावलयतो मनसैव तदभिव्यक्ति-रिति भाव । १० अस्तीत्यादिना मन एवेत्यनेनोक्तमनुवदतीत्यर्थः । ११ तदस्तित्वेऽर्थापत्तिप्रमाणमाहेत्यर्थः । १२ नासाविति—तथा चाभिधेयनिश्चयाऽन्यथानुपपत्तिरेव तस्या अस्तित्व मानम् ।

मभिधेयावसानमभिधेयनिर्णयमायत्तानुगता । एषा पुनः स्वयं नाभिधेयवत्प्रकाश्याऽभिधेयप्रकाशिकैव प्रकाशात्मकत्वात्प्रदीपादिवत् । न हि प्रदीपादिप्रकाशः प्रकाशान्तरेण प्रकाश्यते तद्वद्वाक्प्रकाशिकैव स्वयं न प्रकाश्येत्यनवस्थां श्रुतिः परिहरत्येषा हि नेति न प्रकाश्या प्रकाशकत्वमेव वाचः कार्यमित्यर्थः ।

अथ प्राण उच्यते—प्राणो मुखनासिकासंचार्या हृदयवृत्तिः प्रणयनात्प्राणः । अपनयनान्मूत्रपुरीषादेरपानोऽधोवृत्तिरानाभिस्थानः । व्यानो व्यायमनकर्मा व्यानः प्राणापानयोः संधिर्वीर्यवत्कर्महेतुश्च । उदान उत्कर्षोर्ध्वगमनादिहेतुरापादतलमस्तकस्थान ऊर्ध्ववृत्तिः ।

सावपलापार्हेति शेषः । वाचोऽपि प्रकाश्यत्वात्कथं प्रकाशकमात्रं वागित्युक्तमित्याशङ्क्याऽऽह—एषेति । दृष्टान्तं समर्थयते—न हीति । प्रकाशान्तरेण सजातीयेनेति शेषः । प्रकाशिकाऽपि वाक्प्रकाश्या चेत्तत्रापि प्रकाशकान्तरमेष्टव्यमित्यनवस्था स्यात्तन्निरासार्थमेषा हि नेति श्रुतिः ।प्रकाशकमात्रं वागित्याह । स्वपरनिर्वाहकस्तुशब्दः । तस्मात्प्रकाशकत्वं कार्यं यत्र दृश्यते तत्र वाचः स्वरूपमनुगतमेवेत्याह—तद्वदित्यादिना ।

आध्यात्मिकप्राणविषयं वाक्यमवतार्य व्याकरोति—अथेति । मुखादौ संचार्या संचरणार्हा हृदयसंबन्धिनी या वायुवृत्तिः, तत्र प्राणशब्दप्रवृत्तौ निमित्तमाह—प्रणयनादिति । पुरतो निःसरणादिति यावत् । हृदयादधोदेशे वृत्तिरस्येत्यधोवृत्तिरानाभिस्थानो हृदयादारभ्य नाभिपर्यन्तं वर्तमान इति यावत् । व्यायमनं प्राणापानयोर्नियमनं कर्मास्येति तथोक्तः । वीर्यवत्कर्माण्यग्निमन्थनादीनि । उत्कर्षो देहे पुष्टिः । आदिपदेनोत्क्रान्तिरुक्ता । प्राणशब्देनानशब्दस्य पुनरुक्तिमाशङ्क्याह—अन इत्ये-

अर्थात् अभिधेयावसान या अभिधेय-निर्णय के 'आयत्ता' अर्थात् अधीन है। यह अभिधेय के समान स्वयं प्रकाश्य नहीं है, यह तो अभिधेय को प्रकाशित करने वाली ही है, क्योंकि प्रदीपादि के प्रकाश के समान यह प्रकाशस्वरूपा ही है। प्रदीपादि का प्रकाश प्रकाशान्तर से प्रकाशित नहीं होता है। उसी प्रकार वाक् भी प्रकाशिका ही है, वह स्वयं किसी के द्वारा प्रकाश्या नहीं है, इस प्रकार अनवस्था दोष को श्रुति निवृत्त करती है क्योंकि यह वाक् प्रकाश्या नहीं है। इसका भाव यह है कि प्रकाशकत्व ही वाक् का कार्य है।

अब (वाक् और मन का व्याख्यान कर उनके विधारक) प्राण का प्रतिपादन किया जाता है। "प्राण" अर्थात् मुख और नासिका में संचरित हृदयपर्यन्त जो वायुवृत्ति है, वह सामने निःसरण होने के कारण प्राण कहलाती है। मल मूत्र अधःनिःसरण करने के कारण नाभिप्रदेशतक रहने वाली वायु की अधोवृत्ति अपान है। प्राण और अपान के निःसरण का नियमन करने वाला तथा प्राण और अपान का मध्यस्थ वीर्यवान् कर्मों का हेतुक व्यान है। देह की पुष्टि और उत्क्रान्ति आदि का हेतु, तथा जिसकी पादतल से लेकर मस्तकपर्यन्त स्थान एवं ऊर्ध्ववृत्ति है, वह उदान है। खाये एवं पीये गए पदार्थों को सम करने के कारण अन्न को पचाने वाला उदरस्थ वायु समान है। वायुसामान्य 'अन' यह इन विशेष-

१ अथेति—वाङ्मनसयोः प्रविभागशः सम्यग्व्याख्यानानन्तरं तयोर्विधारकः प्राणो व्याख्यायत इत्यर्थः । २ प्राणापानयोर्मध्यस्थ । ३ वाक् प्रकाशकमात्रत्वात् । ४ सूर्यादौ । ५ निःसरणे नियमनम् ।

समानः समं नयनाद्भुक्तस्य पीतस्य च कोष्ठस्यानोऽन्नपक्ता। 'अन इत्येषां वृत्तिविशेषाणां 'सामान्यभूता सामान्यदेहचेष्टाभिसंबन्धिनी वृत्तिः। एवं यथोक्तं प्राणादिवृत्तिजातमेतत्सर्वं प्राण एव।

'प्राण इति वृत्तिमानाध्यात्मिकोऽन उक्तः। कर्म चास्य वृत्तिभेदप्रदर्शनेनैव 'व्याख्यातम्। व्याख्यातान्याध्यात्मिकानि मनोवाक्प्राणाख्यान्यन्नान्येतन्मय' एतद्विकारः प्राजापत्यैरेतैर्वाङ्मनःप्राणैरारब्धः। कोऽसावयं' कार्यकरणसंघात आत्मा 'पिण्ड आत्मस्वरूपत्वेनाभिमतोऽविवेकिभिः। अविशेषेणैतन्मय इत्युक्तस्य विशेषेण 'वाङ्मयो मनोमयः प्राणमय इति स्फुटीकरणम् ॥३॥

---

पामिति ॥ ३ ॥

'तथाऽपि ' तृतीयस्य प्राणशब्दस्य "ताभ्यां पुनरुक्तिरित्याशङ्क्याऽऽह—प्राण इतीति। "साधारणासाधारणवृत्तिमान्प्राण इत्यपौनरुक्त्यमित्यर्थः। मनसो दर्शनादिवद्वाचोऽभिधेयप्रकाशनवच्च प्राणस्यापि कार्यं वक्तव्यमित्याशङ्क्याऽऽह—कर्म चेति। एतन्मय इत्यत्र मयटो विकारार्थत्व वृत्तसंकीर्तनपूर्वकं कथयति—व्याख्यातानीति। आध्यात्मिकानां वागादीनामारम्भकत्वं वारयति—प्राजापत्यैरिति। आरब्धस्वरूपं प्रश्नपूर्वकमनन्तरवाक्येन(ण) निर्धारयति—कोऽसाविति। कार्यकरणसंघाते कथमात्मशब्दप्रवृत्तिरित्याशङ्क्याऽऽह—आत्मस्वरूपत्वेनेति। वाङ्मय इत्यादिवाक्यस्य पूर्वेण पौनरुक्त्यमाशङ्क्याऽऽह—अविशेषेणेति।

---

वृत्तियों की सर्वानुगत तथा देह की सामान्य चेष्टा से सम्बन्ध रखने वाली वृत्ति है। इस प्रकार यह उपरोक्त प्राणादि वृत्तिसमुदाय है, यह सब कुछ प्राण ही है।

'प्राण' इस शब्द से वृत्तिमान् आध्यात्मिक वायुसामान्य कहा गया है। इसके कर्म की व्याख्या तो इसके वृत्तिभेद के प्रदर्शन से ही कर दी गई। इस प्रकार मन, वाक् और प्राणसंज्ञक आध्यात्मिक अन्नों का प्रतिपादन किया गया। (अब पूर्वोक्त वागादिसमुच्चित स्वरूप को कहते —हैं) "एतन्मय" अर्थात् इनका विकार इन प्राजापत्य वाक्, मन और प्राणों से आरम्भ किया हुआ है। यह (अपरोक्ष) कौन है ? यह जो कार्यकरण का संघात आत्मा यानी नामरूप कर्मों का समूह है, एवं अविवेकियों द्वारा

---

१ वायुसामान्यम्। २ सर्वानुगता। ३ यद्वा इत्येतत्सर्वं प्राण एवेत्यत्र प्राणशब्दस्य प्रकृतवृत्तिविशेषपरामर्शित्वात्तस्य सर्वत्वानुपपत्तिरित्याशङ्क्यानन्तरोक्तानविषयत्वमाश्रित्याऽऽह—प्राण इति। तथा चोक्तम्—'प्राणशब्दः पुरा प्रोक्तो वृत्तिमात्राभिधायकः। अन्ते वृत्तिमदर्थः स्यात्सर्वं प्राण इतीरणादिति' ॥१५१॥ न हि वृत्तिरूपस्य सर्वस्य सर्वत्वमतः साधारणस्यानशब्दोक्तस्य प्राणशब्देन परामृश्य सर्वत्वविधिरित्यर्थः ॥ ४ व्याख्यातमिति—वृत्तिविशेषाणां यत्कर्म तदेवास्य कर्मवृत्तितद्वतोरभेदादिति भावः। ५ उक्तानां वागादीनां समुच्चितं स्वरूपमाह—एतन्मय इति। ६ अपरोक्षः। ७ नामरूपकर्मणां समूहः। ८ वाङ्मय इति—कथमेकस्य देहस्यानेकवागादिविकारत्वमित्याशङ्क्य समादधुर्वार्तिके—'नामात्र वाङ्मयं सर्वं रूपं सर्वं मनोमयम्। तद्वत्प्राणमयं कर्म देहस्यास्यैष संग्रहः" ॥१५४॥ इति। ९ तथापीति—मनप्राणशब्दयोः सामान्यविशेषरूपत्वेनापर्यायत्वेऽपीत्यर्थः। १० तृतीयस्येति—अनप्राणशब्दाभ्यां तृतीयस्य। ११ अनप्राणशब्दाभ्याम्। १२ सामान्यविशेषरूपवृत्तिषट्कवान्।

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्ष-**
**लोकः प्राणोऽसौ लोकः ॥४॥**
**त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः**
**सामवेदः ॥५॥**
**देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः**
**प्राणो मनुष्याः ॥६॥**
**पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः**
**प्रजा ॥७॥**

भूः भुवः और स्वः नाम के यही तीनों लोक हैं। उनमें वाणी ही यह लोक है, मन अन्तरिक्षलोक है और प्राण वह (स्वर्ग) लोक है ॥४॥

यही तीनों वेद हैं, वाक् ही ऋग्वेद है, मन यजुर्वेद है और प्राण सामवेद है ॥५॥

देवता पितृगण और मनुष्य भी यही हैं। वाक् देवता है, मन पितृगण है और प्राण मनुष्य हैं ॥६॥

पिता, माता तथा प्रजा भी यही हैं। वाक् माता है मन ही पिता है और प्राण प्रजा है ॥७॥

---

तेषामेव प्राजापत्यानामन्नानामाधिभौतिको विस्तारोऽभिधीयते—

त्रयो लोका भूर्भुवः स्वरित्याख्या एत एव वाङ्मनःप्राणास्तत्र विशेषो वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥४॥

तथा त्रयो वेदा इत्यादीनि वाक्यानि ऋज्वर्थानि ॥५॥६॥७॥

---

वागादीनामाध्यात्मिकविभूतिप्रदर्शनानन्तरमाधिभौतिकविभूतिप्रदर्शनार्थमुत्तरग्रन्थमवतारयति—तेषामेवेति। तत्रैतदुक्तं[2] सामान्यं परामृशति ॥ ४ ॥

त्रिलोकीवाक्यवदुत्तरं[3] वाक्यं विज्ञाताविजानाद्वाक्यात्प्राक्तन नेतव्यमित्याह—तथेति ॥५॥६॥७॥

---

आत्मस्वरूप से माना गया है। सामान्यतया 'एतन्मय' इस प्रकार कहे हुए का ही विशेषरूप से "वाङ्मय मनोमय एवं प्राणमय" ऐसा कहकर स्पष्ट किया गया है ॥ ३ ॥

उन्हीं प्राजापत्य अन्नों का आधिभौतिक विस्तार प्रतिपादित किया जाता है। भूः भुवः और स्वः नामक ये तीनों लोक—वाक् मन और प्राण ही हैं। उसमें विशिष्टता यह है कि वाक् ही यह लोक है, मन अन्तरिक्षलोक है और प्राण वह स्वर्गलोक है ॥ ४ ॥

इसी प्रकार 'त्रयो वेदा—' इस श्रुतिमन्त्र से सातवें मन्त्र तक सभी श्रुतिवाक्य सरल अर्थ वाले हैं ॥ ५-७ ॥

---

१ विस्तृतिरित्यर्थः। २ लोकत्रयादिरूपम्। ३ वाक्यत्रयम्।

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किंच विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति ॥८॥ यत्किंच विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति ॥९॥

विज्ञात, विजिज्ञास्य और अविज्ञात भी यही हैं। जो कुछ विस्पष्टरूप से ज्ञात है, वह वाक् का रूप है ( प्रकाशक होने के कारण ) वाक् ही विज्ञाता है। ( इस प्रकार वाक् की विशेषता को जानने के लिए फल बतलाया गया है) इस जानने वाले की रक्षा वाक् विज्ञात होकर करती है ॥८॥

जो कुछ विस्पष्टरूप से जानने योग्य अभीष्ट है, वह सब मन का रूप है क्योंकि (मन ही संशय-रूप होने के कारण) विजिज्ञास्य है। मन के इस विभूति का जानने वाले की रक्षा मन ही विजिज्ञास्य होकर करता है ॥९॥

---

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव 'तत्र विशेषो यत्किंच विज्ञातं विस्पष्टं ज्ञातं वाचस्तद्रूपम्। तत्र स्वयमेव हेतुमाह—वाग्घि विज्ञाता प्रकाशात्मकत्वात्कथमविज्ञाता भवेद्याऽन्यानपि विज्ञापयति वाचा वै सम्राड्बन्धुः प्रज्ञायत इति हि 'वक्ष्यति। वाग्विशेष-विद इदं फलमुच्यते—वागेवैनं यथोक्तवाग्विभूतिविदं तद्विज्ञातं भूत्वाऽवति पालयति 'विज्ञातरूपेणैवास्यान्नं भोज्यतां प्रतिपद्यत इत्यर्थः ॥८॥

तथा यत्किंच विजिज्ञास्यं विस्पष्टं ज्ञातुमिष्टं विजिज्ञास्य तत्सर्वं मनसो रूपं मनो

---

विज्ञातादिवाक्यमादाय तद्गतं विशेषं दर्शयति—विज्ञातमिति। विज्ञातं सर्वं वाचो रूपमिति प्रतिज्ञातोऽर्थः संगम्यते। प्रकाशकत्वेऽपि कथं वाचो विज्ञातत्वमित्याशङ्क्याऽऽह—कथमिति। प्रकाशात्मकत्वमेव कुतो वाच सिद्धमित्याशङ्क्याऽऽह—वाचेति। वाग्विशेषस्तद्विभूतिः ॥ ८ ॥

---

विज्ञात, विजिज्ञास्य और अविज्ञात ये ही हैं। उसमे जो कुछ विशिष्टता है, वह यह है कि जो कुछ 'विज्ञातम्' यानी विस्पष्टरूप से ज्ञात है, वह वाक् का ही रूप है। उसमे श्रुति स्वयं ही कारण बतलाती है। प्रकाशात्मक होने से वाक् ही विज्ञाता है। जो अन्य लोगों को विज्ञापित करती है, वह स्वयं किस प्रकार अविज्ञात हो सकती है। इसे आगे श्रुतिवाक्य से प्रतिपादन किया जाएगा "हे सम्राट्! वाणी से ही बन्धुत्व को जाना जाता है" इत्यादि। वाक् के विशेषज्ञ के लिए यह फल बतलाया जाता है। 'एनम्' अर्थात् वाक् की पूर्वोक्त प्रकार से विभूति जानने वाले का वाक् ही उसकी विज्ञाता होकर "अवति" अर्थात् पालन करती है या विज्ञातरूप से वही इसके वाक्रूप अन्न को यानी भोज्यता को प्राप्त होती है ॥ ८ ॥

इसी प्रकार जो कुछ 'विजिज्ञास्यम्' अर्थात् विस्पष्टरूप से जानने के लिए अभीष्ट है, वह सब

---

१ सामान्येनोक्तेषु तेषु। २ बृ०उ० ४ १ २। ३ पदार्थमुक्त्वा वाक्यार्थमाह—विज्ञातेति। विज्ञातरूपा या वाचो विभूतिविद नर वाग्देवता तद्रूपेण स्थित्वा भोगैरवतीति यावत्। ४ वाग्रूपमन्नम्।

**यत्किंचाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति ॥१०॥**

जो कुछ अविज्ञात है वह प्राण का ही रूप है क्योंकि प्राण ही अविज्ञात होकर अपनी विभूति को जानने वाले की रक्षा करता है ॥१०॥

हि यस्मात्तत्संदिह्यमानाकारत्वाद्विजिज्ञास्यम्। पूर्ववन्मनोविभूतिविदः फलं मन एनं तद्विजिज्ञास्यं भूत्वाऽवति विजिज्ञास्यस्वरूपेणैवान्नत्वमापद्यते ॥९॥

तथा यत्किंचाविज्ञातं विज्ञानागोचरं न च संदिह्यमानं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातोऽविज्ञातरूपो हि यस्मात्प्राणोऽनिरुक्तश्रुतेः। विज्ञातविजिज्ञास्याविज्ञातभेदेन वाङ्मनःप्राणविभागे स्थिते त्रयो लोका इत्यादयो वाचनिका एव। सर्वत्र विज्ञातादिरूपदर्शनाद्वचनादेव नियमः स्मर्तव्यः। प्राण एनं तद्भूत्वाऽवत्यविज्ञातरूपेणैवास्य प्राणोऽन्नं

संदिह्यमानाकारत्वा संकल्पविकल्पात्मकत्वादिति यावत्। तस्मात्सर्वं विजिज्ञास्यं मनोरूपमिति संबन्धः। पूर्ववद्वाग्विभूतिविदो यथा फलमुक्तं तद्वदिति यावत् ॥ ९ ॥

अनिरुक्तश्रुतेरविज्ञातरूपो यस्मात्प्राणस्तस्मादविज्ञातं सर्वं प्राणस्य रूपमिति योजना। विज्ञानादिव्यतिरेकेण लोकवेदाद्यभावाद्विज्ञातादिरूपत्वाभिधानेनैव वागादीनां लोकाद्यात्मत्वे सिद्धे किमर्थं त्रयो लोका इत्यादिवाक्यमित्याशङ्क्य तथैव व्याख्यातार्थमित्याह—विज्ञातेति। भूरादिष्वेकैकत्र विज्ञातादित्रय दृष्टेर्यागादेश्च व्यवस्थितत्वात्कुतो विज्ञातादेर्वागाद्यात्मकत्वं नियन्तु शक्यमित्याशङ्क्याऽऽह—सर्वत्रेति। प्राणविभूतिविद संप्रति फलं कथयति—प्राण इति। लोके विज्ञातस्यैव भोज्यत्वोपल-

मन का रूप है क्योंकि मन का आकार भी जिज्ञासामय होने से वह विस्पष्टरूप से जानने योग्य है। पूर्वोक्त श्रुतिवाक्य के समान मन की विभूति जानने वाले का फल बतलाया जाता है। मन उसका 'तद्' यानी विजिज्ञास्य होकर उसकी रक्षा करता है अर्थात् वह विजिज्ञास्यरूप से ही अन्नत्व को प्राप्त होता है ॥ ९ ॥

जो कुछ भी 'अविज्ञातम्' अर्थात् विज्ञान का अविषय है, जिज्ञास्यमान नहीं है वह प्राण का रूप है। प्राण ही अविज्ञात है क्योंकि (छान्दोग्य उपनिषद के) अव्यक्त श्रुतिवाक्य के अनुसार प्राण अविज्ञातरूप ही है। इस प्रकार विज्ञात, विजिज्ञास्य और अविज्ञातरूप वाक्, मन और प्राण के विभाग का निर्णय हो जाने पर भूरादि तीनों लोक केवल नियमार्थ हैं। भूरादि लोकों में सर्वत्र विज्ञानादि का

१ जिज्ञास्यमानम्। २ रूपेण। ३ चत्वारः पर्याया वाचनिका भूराद्यात्मना वागादयो व्याख्येया इति नियमार्था एवेत्यर्थः। ४ भूरादिषु। ५ नियमः—भूरादयो वागादय एवेति नियमः। वार्तिके यथा—"भूर्लोकादिषु सर्वेषु मनोवाक्प्राणलक्षणम्। यथासम्भवमायोज्यमेकैकस्मिंस्त्रयं त्रयम्" ॥१६०॥ इति। अत्राद्य सप्तमीद्वय निर्धारणार्थं तथा च सर्वेषु भूरादिलोकेषु मध्ये एकैकस्मिन्नेव यथासम्भवविज्ञातादित्रयमनतिक्रम्य मनोवाक्प्राणलक्षणं त्रयं त्रयमायोज्यमिति योजना। ६ यथासम्भवं नेयं। ७ निश्चयसंशयात्मकत्वात्। ८ अनिरुक्तं अव्यक्तं (छा०उ० १-१३-३)। ९ आदिना देवादिः। १० दर्शनात्। ११ उपकारकत्वेत्यर्थः

**तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्या-**
**वत्येव वाक्तावती पृथिवी तावानयमग्निः ॥११॥**

(प्रजापति के अन्नरूप से प्रस्तुत हुए) उस वाक् का पृथिवी बाह्य आधार और पृथिवी का आधेयस्वरूप यह पार्थिव अग्नि ज्योतिरूप प्रकाशात्मक कारण है उनमें जितने परिणामवाली (अध्यात्म और अधिभूत भेदवाली) वाक् है, उतनी ही उसके आधाररूप से व्यवस्थित पृथिवी है और उतना ही उस पृथिवी में ज्योतिरूप से अनुप्रविष्ट आधेय एवं कारण यह अग्नि है ॥११॥

भवतीत्यर्थः। शिष्यपुत्रादिभिः संदिह्यमानाविज्ञातोपकारका अप्याचार्यपित्रादयो दृश्यन्ते। तथा मनःप्राणयोरपि संदिह्यमानाविज्ञातयोरन्नत्वोपपत्तिः ॥१०॥

व्याख्यातो वाङ्मनःप्राणानामाधिभौतिको विस्तारोऽथायमाधिदैविकार्थ आरम्भः—

तस्यै तस्या [२] वाचः प्रजापतेरन्नत्वेन प्रस्तुतायाः पृथिवी शरीरं [४] बाह्य आधारो ज्योतीरूपं प्रकाशात्मकं करणं पृथिव्या आधेयभूतमयं [५] पार्थिवोऽग्निः। द्विरूपा हि प्रजापतेर्वाक्कार्यमाधारोऽप्रकाशकः करणं चाऽऽधेयं [६] प्रकाशस्तदुभयं [७] पृथिव्यग्नी वागेव प्रजापतेः।

न्भावविज्ञाता[८]दिरूपेण प्राणा[९]देर्न भोज्यत्वोपपत्तिरित्याशङ्क्याऽऽह—शिष्येति। शिष्यैरविवेकिभिः संदिह्यमानोपकारा अपि गुरवस्तेषां भोज्यतामापद्यमाना दृश्यन्ते पुत्रादिभिश्चातिबालैरविज्ञातोपकाराः पित्रादयस्तेषां भोज्यत्वमापद्यन्ते तथा प्रकृतेऽपि संभवतीत्यर्थः ॥ १० ॥

वृत्तमनूद्य तस्यै वाच पृथिवीत्याद्यवतारयति—व्याख्यात इति। आधिदैविकार्थस्तद्विभूतिप्रदर्शनार्थ इति यावत्। समनन्तरसंदर्भस्य तात्पर्यमुक्त्वा वाक्याक्षराणि योजयति—तस्या इति। कथमाधाराधेयभावो [१०]वाचो निर्दिश्यते तत्राऽऽह—द्विरूपा हीति। [११]उक्तमर्थं संक्षिप्य निगमयति—तदुभयमिति।

का ही रूप देखा जाता है। ('भूरादि में वागादि को देखना चाहिये') श्रुतिवचन से यह नियम यथासंभव ले लेना चाहिये। "प्राण एव नद भूत्वाऽवति" अर्थात् प्राण अविज्ञातरूप से इसका अन्न होता है। अविवेकी शिष्य एवं अतिमूर्ख पुत्रादि को, जिनके उपकार के विषय में सन्देह और अज्ञान रहता है, ऐसे गुरु और पिता भी लोकव्यवहार में देखे जाते हैं। इसी प्रकार जिज्ञास्यमान और अविज्ञान मन एवं प्राण का भी अन्न होना सिद्ध हो जाता है ॥ १० ॥

इस प्रकार वाक्, मन और प्राण के आधिभौतिक विस्तार की व्याख्या तो कर दी गई। अब क्रमप्राप्त आधिदैविक अर्थ के लिये यह ग्रन्थ प्रारम्भ किया जाता है। "तस्यै" अर्थात् प्रजापति के

१ क्रमप्रतिपत्त्यर्थोऽथशब्दः। क्रमप्राप्त इत्यर्थः। २ तस्या इति। तथा च वार्तिके—"अध्यात्ममधिभूतं च यस्या रूपं पुरोदितम्। अधिदैवविवक्षाया तस्या वाच इदं वपुः" ॥१६६॥ इति। ३ आधिदैविक्या। ४ बाह्य इति—करणरूपाधेयापेक्षया कार्यरूप आधारो बाह्य इत्यर्थः। ५ पार्थिव इति—आधारभूतायां पृथिव्यामाधेयरूपेण वर्तमानः पृथिवीसम्बन्धीति यावत्। ६ प्रकाशकम्। ७ कार्यकरणरूपं प्रकाश्यप्रकाशकरूपम्। ८. आदिना जिज्ञास्यमिति। ९ आदिना मन इति। १० एवस्या एवेति शेषः। ११ उक्तमर्थमिति—आधिदैविक्या वाच आधाराधेयभावेन द्वैविध्यरूपमित्यर्थः।

**अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यस्त-द्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ* मिथु-नꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो**

तथा प्राजापत्य अन्नरूप से कहे हुए इस मन का द्युलोक शरीर (आधार) है। ज्योतिरूप वह आदित्य है। वहाँ पर जितना मन है, उतना ही आदित्य है। वे आदित्य और अग्नि परस्पर संसर्ग को

---

तत्तत्र' यावत्येव यावत्परिमाणैवाध्यात्माधिभूतभेदभिन्ना सती 'वाग्भवति 'तत्र सर्वत्राऽऽधारत्वेन पृथिवी व्यवस्थिता तावत्येव भवति कार्यभूता तावानयमग्निराधेयः करणरूपो ज्योतीरूपेण पृथिवीमनुप्रविष्टस्तावानेव भवति समानमुत्तरम् ॥११॥

अथैतस्य 'प्राजापत्यान्नोक्तस्यैव मनसो द्यौर्द्युलोकः शरीरं कार्यमाधारो ज्योतीरूप

---

अध्यात्ममधिभूतं च या वाक्परिच्छिन्ना तस्यास्तुल्यपरिमाणत्वमाधिदैविकया गत्वावशाशिनोऽग्न तादात्म्यात्तया सह दर्शयति—तत्तत्रेति। तावानयमग्निरिति प्रतीकमादाय व्याकरोति—आधेय इति। समानमुत्तरमित्यस्यायमर्थोऽध्यात्ममधिभूतं च मनःप्राणयोराधिदैविकमनःप्राणाशत्वात्तादात्म्याभिप्रायेण तुल्यपरिमाणत्वमुच्यते। 'तथा च 'वाचा समानं प्राणादावुत्तरवाक्ये कथ्यमानं समानपरिमाणत्वमिति ॥ ११ ॥

आधिदैविकवाग्विभूतिव्याख्यानान्तर्यमथशब्दार्थः। मनसो द्वैरूप्यमुक्त्वा व्याप्तिमभिधत्ते—

---

अन्नरूप से प्रस्तुत हुए उस आधिदैविक वाक् का पृथिवी 'शरीरम्' यानी बाह्य आधार है, तथा "ज्योतीरूपम्" अर्थात् पृथिवी का आधेयभूत प्रकाशात्मक करण यह पार्थिव अग्नि है। प्रजापति की वाक् दो प्रकार की है। प्रथम कार्य आधार और अप्रकाशकरूप द्वितीय करण, आधेय और प्रकाशकरूप। ये दोनों कार्यकरणरूप प्रकाश्यप्रकाशकरूप पृथिवी और अग्नि प्रजापति की वाक् ही है। (वाक् के आध्यात्मिकादि तीन भेद होने पर) उनमें 'यावत्येव' अर्थात् जितने परिणामवाली अध्यात्म और अधिभूत भेदों से विशिष्ट आधिदैविक वाक् है उन भेदों में सर्वत्र आधाररूप से व्यवस्थित कार्यभूता

---

१ तत्रेति-वाचोऽध्यात्मादिभेदेन त्रैविध्ये सतीत्यर्थः। २ आधिदैविकी। ३ तत्रेति- अध्यात्माधिभूताधिदैवभेदेष्वित्यर्थः। ४ प्रजापतेरन्नत्वेन प्रस्तुतस्य। ५ तादात्म्येन व्याप्तत्वमिति यावत्। ६ अध्यात्मादावित्यर्थः। ७ तथा चेति--तुल्यपरिमाणत्वकथनस्य तादात्म्याभिप्रायत्वे चेत्यर्थः। ८ वाचा समानमिति—यथाऽध्यात्मादिपरिच्छिन्ना वागाधिदैविकवागभिन्ना तथेत्यर्थः। एवोऽग्नि पृथ्वीदेवताऽग्निरध्यात्मादौ तत्तद्रूपेण व्यवतिष्ठन इति सर्वप्रकरणार्थः।

---

* तौ मिथुनं समैतामिति। अत्र वार्तिके—'मनसश्च द्रमावो हि सर्वत्र श्रूयते स्फुटः। तस्याऽऽदित्येन सम्बन्धः कस्मादत्राभिधीयते ॥ विवक्षितत्वादैक्यस्य मनोबुद्ध्योरतः श्रुतिः। आदित्येनैव सधत्त मनश्चन्द्रमसा न तु ॥ प्रसवाधिकृतेश्चात्र सावित्रः प्रसवस्ततः। रविश्चैवाभिसंबन्धो मनसस्तेन शस्यते॥ अनुग्रहव्यपेक्षायां मनसश्च द्रमा भवेत्। अधिदैवं तथाऽऽदित्यश्चक्षुषो देवता मता ॥१८० १८३॥ इति। ज्योतीरूपमसावादित्य इत्यादित्यमनसोरैक्यमुक्त्वा तौ मिथुनं समैतामित्यग्न्यादित्ययोर्वाङ्मनोरूपयोर्मिथुनवचनं श्रुत्वा तद्विरुद्धमिति शङ्कते—मनस इति। सर्वत्र चन्द्रमा मनसो जातश्चन्द्रस्तत्राधिदैवतमित्यादावित्यर्थः। उक्तं च—सर्वत्र हि मनश्चन्द्रो

**द्वितीयो वै सपत्नो नास्य [1]सपत्नो भवति य एवं वेद ॥१२॥**

प्राप्त हुए। उससे प्राण उत्पन्न हुआ। वह इन्द्र है और शत्रुहीन है क्योंकि अपने से भिन्न ही शत्रु हुआ करता है। जो इस रहस्य को जानता है, उस विद्वान् का कोई प्रतिपक्षी नहीं होता ॥१२॥

---

करणमाधेयोऽसावादित्यः। तत्र[2] यावत्परिमाणमेवाध्यात्ममधिभूतं वा मनस्तावती तावद्विस्तारा तावत्परिमाणा मनसो ज्योतीरूपस्य करणस्याऽऽधारत्वेन व्यवस्थिता द्यौस्तावानसावादित्यो ज्योतीरूपं करणमाधेयं तावन्यादित्यौ वाङ्मनसे ग्राधिदैविके मातापितरौ मिथुनं मैथुन्यमितरेतरसंसर्गं समैतां समगच्छेताम्। मनसाऽऽदित्येन प्रसूतं

---

तत्रेति। मन एवास्याऽऽत्मा 'वाग्जाया प्राण प्रजेत्यध्यात्म मन एव पिता वाङ्माता प्राणः प्रजेत्यधिभूतं च वाङ्मनसयो' प्राणस्य प्रजात्वमुक्तं तयाऽधिदैवेऽपि तस्य तत्प्रजात्वं वाच्यमित्यभिप्रेत्याऽऽह—ताविति। कथमादित्यस्य मनसः प्राण प्रति पितृत्वं वाचो वाऽग्नेर्मातृत्वं तत्राऽऽह—मनसेति। सवित्र पाकमाग्नेयं च प्रकाशमृते [4]कार्यसिद्धयदर्शनात्तयो सिद्धं जनकत्वमित्यर्थः। कर्मशब्देन [5]कार्यमुच्यते

---

पृथिवी भी उतनी ही है। तथा "तावानयमग्नि" है अर्थात ज्योतिरूप मे पृथिवी मे अनुप्रविष्ट आधेय और करणरूप अग्नि उतना ही है। वक्ष्यमाण उत्तरवाक्य मे अध्यात्म और अधिभूत मे भी मन और प्राण का समानपरिमाण समझना चाहिये ॥ ११ ॥

"अथैतस्य" अर्थात् प्राजापत्य अन्नरूप से प्रस्तुत किये गये इस मन का "द्यौ." यानी द्युलोक, 'शरीरम्' अर्थात् कार्य या आधार है और वह आदित्य ज्योतिरूप करण यानी आधेय है। (मनके अध्यात्मादि तीन भेद होने के कारण) उनमे जितना परिमाण वाला अध्यात्म और अधिभूत मन है, 'तावती'

---

१ प्रतिपक्ष प्रतिकूल इति यावत्। २ मनसोऽध्यात्मादिभेदेन त्रैविध्ये सति। ३ चतुर्थब्राह्मणे इदम्। ४ कार्यसिद्धयदर्शनादिति—प्रकाशव्याप्त्यतिरकेण न किञ्चिद्वस्तु जायते जन्मनाऽभिव्यक्तिरूपत्वात्तस्य च प्रकाशोऽग्निरेव न च जायमानानां विशेषव्यक्तिः पाकाहते पाकश्च कालात्मकादित्यकृतस्तस्मादादित्याग्निनिमित्ता सर्वोत्पत्तिरिति भाव। तदुक्तम् वार्तिके— अग्निरेव यत सर्वं प्रकाशो जगतीष्यते। रूपाणां प्रविभागश्च त्वष्टृपाकनिबन्धन" ॥१८४॥ इति। ५ जगद्रूपम्।

---

भवतीति। एतदेव भाष्य विवक्षित्वा हीत्युक्तम्। मनसश्चन्द्रभावस्य वाचनिकत्व वक्तु स्फुट इति विशेषणम्। श्रुत्यन्तरविरुद्ध वचनमिहानुचितमिति फलितमाह—तस्येति ॥ मनोबुद्धयोरभेदेनाऽऽत्मभूतत्वादिति मतं ग्रन्थभाष्येण परिहरति—विवक्षितत्वादिति। अस्मिन्प्रकरणे मनोबुद्धयोरैक्य विवक्षित तयोश्च प्रधान बुद्धिर्निश्चयात्मत्वादतो बुद्धिदेवतयैवाऽऽदित्येन मन सधत्ते श्रुतिर्न तु चन्द्रमसा तदभेदमभिधत्ते सविता बुद्धिदेवतेति हि गायत्रीविदा मर्यादेति भाव ॥ आदित्येनैवात्र मनसम्बन्धे हेत्वन्तरमाह—प्रसवनि। तत प्राणोऽजायतेति प्राणस्य मनसो जन्मोच्यते। तच्च सर्वे सवितृहेतुक सवितृत्वस्य सर्वप्राणिप्रसवहेतौ प्रवृत्तेरतस्तेनैव मनसस्तादात्म्येन सगतिरित्यर्थं ॥ तर्हि चन्द्रमसा मनसश्चक्षुषश्चाऽऽदित्येन सम्ब धवादिवाक्यानां का गतिरित्याशङ्क्याऽऽह—अनुग्रहेति। यथाऽऽहु —यत्र हि मनश्च बुद्धिश्च भेदेन विवक्ष्यते। तत्र सशयसकल्पादिविषयस्य मनसश्चन्द्रमा देवताऽस्य पुनर्यदा क्रियाप्रसवादिषु व्याप्रियते तदा प्रसवकर्म व्याप्नुवन्मन सवितृदैवत भवतीति ॥

पित्रा वाचाऽग्निना मात्रा प्रकाशितं कर्म करिष्यामीत्यन्तरा रोदस्योः । ततस्तयोरेवं[1] संगमनात्प्राणो वायुरजायत [2]परिस्पन्दाय कर्मणे । यो जातः स इन्द्रः परमेश्वरो [3]न केवलमिन्द्र एवासपत्नोऽविद्यमानः सपत्नो यस्य कः पुनः सपत्नो नाम द्वितीयो वै [4]प्रतिपक्षत्वेनोपगतः स द्वितीयः सपत्न इत्युच्यते । तेन द्वितीयत्वेऽपि सति वाङ्मनसे न सपत्नत्वं भजेते प्राणं प्रति [5]गुणभावोपगते एव हि ते [6]अध्यात्ममिव । तत्र प्रासङ्गिकासपत्नविज्ञानफलमिदं—नास्य विदुषः सपत्नः प्रतिपक्षो भवति य एवं यथोक्तं प्राणमसपत्नं वेद ॥१२॥

---

तत्करिष्यामिति प्रत्येकमभिसंधिपूर्वकमादित्याग्न्योर्द्यावापृथिव्योरन्तराले समगातरासीदित्याह—कर्मेति । संगतिकार्यमभिप्रायानुसारि दर्शयति—तत इति । वायोरिन्द्रत्वासपत्नत्वगुणविशिष्टस्योपासनमभिप्रेत्याऽऽह—यो जात इति । द्वितीयस्य सपत्नत्वे वागादेरपि तथात्वं स्यादित्याशङ्क्याऽऽह—प्रतिपक्षत्वेनेति । यथोक्तसपत्नव्याख्यानफलमाह—तेनेति । असपत्नगुणकप्राणोपासने फलवाक्यं प्रमाणयति—तत्रेति । प्राणस्यासपत्नत्वे सिद्धे सतीति यावत् । प्रासङ्गिकत्वं प्रजोत्पत्तिप्रसङ्गादागतत्वम् ॥ १२ ॥

---

अर्थात् उतने विस्तार या परिमाण वाला मन के ज्योतिरूप कारण के आधाररूप से द्युलोक व्यवस्थित है। तथा उतने ही परिमाण वाला वह ज्योतिरूप करण या आधेय आदित्य है। 'तौ' अर्थात् वे आधिदैविक वाक् और मनरूप अग्नि और आदित्य माता-पिता हैं, वे दोनों 'मिथुनम्' एक दूसरे के साथ सम्पर्क को 'समैताम्' अर्थात् प्राप्त होते है। 'पितारूप मे विराजमान आदित्यरूप मन से प्रसूत और मातारूप से स्थित अग्निरूप वाणी से प्रकाशित कर्म करूंगा' इस विचार से अभिप्रेत पृथिवी और द्युलोक के बीच उन दोनो का समागम हुआ जिससे अन्तरिक्ष गमन कर्म के लिए प्राणवायु उत्पन्न हुआ। जो उत्पन्न हुआ, वह 'इन्द्र' परमेश्वर था। वह केवल इन्द्र ही नही था। 'असपत्न' अर्थात् जिसका कोई सपत्न न हो, ऐसा था। सपत्न का क्या भाव हुआ? 'द्वितीय' जो प्रतिपक्ष या प्रतिकूलभाव को प्राप्त हो, वह दूसरा व्यक्ति ही सपत्न कहलाता है। अत वाक् और मन के द्वितीय होने पर भी वे उसके सपत्नभाव को प्राप्त नही होते, क्योकि वे तो अध्यात्म वाक् और मन के समान प्राण के प्रति अनुकूलरूप से उपस्थित है। प्रसङ्गत सपत्नविज्ञान का यही फल यह है कि जो कोई पूर्वोक्त प्राण को इस प्रकार असपत्न जानता है, उस विद्वान् के प्रति कोई प्रतिकूल नही होता ॥१२॥

अभी निर्दिष्ट प्रजारूप प्राण का न होकर 'अथैतस्य' अर्थात तथा इस प्रसङ्गप्राप्त निरूप्य प्रजापति के अन्नरूप प्राण का "आप" अर्थात् जल 'शरीरम्' यानी कार्य है, करण का आधार है।

---

१ एवमिति—अग्न्यादित्याभ्यां सर्वजन्मेति स्थिते सतीत्यर्थः । अत्र चोच्यमानजन्मा प्राणो वायुः प्रजापतेः प्राणरूपो यथाऽध्यात्मं प्राणस्तथा व्यष्ट्यात्मा न त्वण्डान्तर्गतः प्राणरूपः तस्य समष्ट्यात्मनः प्रजापतिरूपतया कारणत्वेनाग्न्यादित्यकार्यत्वासम्भवादिति बोध्यम् । २ अन्तरिक्षे गमनाय । ३ इन्द्रत्वमसपत्नत्वेन साधयति—नेति । ४ प्रतिकूलत्वेन संनिहितः । ५ अनुकूलत्वेनोपस्थिते । ६ अध्यात्ममिवेति—यथाऽध्यात्मे देहे वाङ्मनसे प्राणाधीने तथाऽधिदैवे देहेऽपि ते तदधीने न तु स्वतन्त्रे प्रतिकूले चेत्यर्थः । प्रजाभूतप्राणस्याधिदैविकप्राणपक्षपातित्वात्तदनुकूलयोर्वाङ्मनसयोस्तदनुकूलतैवेति भावः । तयोः प्राणाधीनत्वे 'यदनेनान्नमत्ति तेनैतास्तृप्यन्ति' 'तस्मादेत एतेनैवाऽऽख्यायन्ते प्राणा इति' इत्यादिवाक्यं प्रमाणयितव्यम् । तदुक्तम् वार्तिके—'प्राणस्यैव यतो वृत्ति उक्ते वाङ्मनसे अपि । प्राणस्यास्तोऽद्वितीयत्वं ततश्चेन्द्रत्वमेव च" ॥१६१॥ इति । ७ प्रजाभूतस्य ।

अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्रस्त-
द्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते

एवं इस प्राण का, जल शरीर (आधार) है, वह चन्द्रमा ज्योतिरूप है। वहाँ पर आध्यात्मिक भेद से जितने परिणाम वाला प्राण है, उतना ही परिणामवाला आधेयभूत जल भी है। एवं उतना ही

---

अथैतस्य [1]प्रकृतस्य प्राजापत्यान्नस्य प्राणस्य न प्रजोक्तस्यानन्तरनिर्दिष्टस्याऽऽपः शरीरं कार्यं करणाधारः पूर्ववज्ज्योतीरूपमसौ चन्द्रस्तत्र यावानेव प्राणो यावत्परिमाणोऽध्यात्मादिभेदेषु तावद्व्याप्तिमत्य आपस्तावत्परिमाणास्तावानसौ [3]चन्द्रोऽऽधेयस्तास्वप्स्वनुप्रविष्टः करणभूतोऽध्यात्ममधिभूतं च तावद्व्याप्तिमानेव । तान्येतानि पित्रा पाङ्क्तेन कर्मणा सृष्टानि त्रीण्यन्नानि वाङ्मनःप्राणाख्यानि । अध्यात्ममधिभूतं च जगत्समस्तमेतैर्व्याप्तं नैतेभ्योऽन्यदतिरिक्तं किंचिदस्ति कार्यात्मकं करणात्मकं वा । समस्तानि त्वेतानि प्रजापतिस्त एते वाङ्मनःप्राणाः सर्व एव समास्तुल्यव्याप्तिमन्तो यावत्प्राणिगोचरं साध्यात्माधिभूतं व्याप्य व्यवस्थिता अत [5]एवानन्ता यावत्संसारभाविनो हि तेन हि कार्य-

---

आधिदैविकयोर्वाङ्मनसयोर्विभूतिनिर्देशानन्तर्यमर्थेत्युक्तम् । नन्वेतस्येत्येतच्छब्देन प्रजात्वेनोक्तस्य प्राणस्य किमिति न ग्रहणं तत्राऽऽह—न प्रजेति । अन्नत्रयस्य समप्रधानत्वेन प्रकृतत्वादेतच्छब्देन प्रधानपरामर्शोपपत्तौ नाप्रधानं परामृश्यत इत्यर्थः । पूर्ववद्वाचो मनसश्च पृथिवी द्यौश्च शरीरं यथा तथेत्यर्थः । तुल्ये प्राणस्योक्ते व्याप्तिमविशिष्टां व्याचष्टे—तत्रेति । तावानित्यादि प्रतीकमादाय व्याचष्टे—चन्द्र इति । वाङ्मनःप्राणानामाधिदैविकरूपेणोपासनं विधातुं वृत्तं कीर्तयति—तानीति । एतेभ्योऽतिरिक्तमधिष्ठानमस्तीत्याशङ्क्य विशिनष्टि—कार्यात्मकमिति । प्रजापतिरेतेभ्योऽतिरिक्तोऽस्तीत्याशङ्क्याऽऽह—समस्तानीति । [5]सोपस्करं वृत्तमनूद्य वाक्यमादाय व्याचष्टे—त एत इति । तुल्यां व्याप्तिमेव व्यनक्ति—यावदिति । तावदेव जगद्व्याप्येति योजना । तुल्यव्याप्तिमत्त्वमुपजीव्याऽऽह—अत एवेति । तेषां

---

यह चन्द्रमा भी पूर्ववत् ज्योतिस्वरूप है। वहाँ 'यावानेव प्राण' यानी अध्यात्मादि भेदों मे जितने परिणाम वाला प्राण है, 'तावत्य आप' अर्थात् उतनी व्याप्ति वाला यानी परिणाम वाला जल है। 'तावानसौ चन्द्र' अर्थात् जल के आधेय उनमे प्रविष्ट उसका करणभूत अध्यात्म और अधिभूत चन्द्रमा भी उतनी ही व्याप्ति वाला है। ये ही वे पिता के द्वारा पाङ्क्त कर्म के द्वारा उत्पन्न किये हुए वाक्, मन और प्राणसंज्ञक तीन अन्न है। सम्पूर्ण अध्यात्म और अधिभूत जगत् इनसे व्याप्त है, इनसे भिन्न कार्यात्मक अथवा करणात्मक कोई भी वस्तु विद्यमान नहीं है। ये सभी प्रजापति हैं। जो पूर्व मे अध्यात्म, अधिभूत और अधिदैवरूप से कहे गये हैं, वे ये वाक्, मन और प्राण सभी तुल्यव्याप्ति वाले ही हैं। अध्यात्म और अधिभूत के सहित जितना भी प्राणिगोचर है, ये सब

---

१ निरूप्यमाणस्य । २ ग पूर्वमध्यात्ममधिभूतमधिदैवं चोक्तास्ते । ३ यत्परिमाणम् । ४ अनेन सापेक्ष नित्यत्वमेतेषामुक्तम् । ५ सोपकरणं साङ्गोपाङ्गं चोद्यपरिहारसमलङ्कृतमिति यावत् । ६ हेतुत्वेनाश्रित्य ।

**सर्व एव समाः सर्वेऽनन्ताः स यो हैतानन्तवत उपा-स्तेऽन्तवन्तꣳ स लोकं जयत्यथ यो हैताननन्तानु-पास्तेऽनन्तꣳ स लोकं जयति ॥१३॥**

यह चन्द्रमा है। वे ये (वाक, मन और प्राण) सभी समान है और सभी (ससार की स्थितिपर्यन्त रहने वाले होने से) अनन्त हैं। जो कोई इन्हे परिच्छिन्न समझकर उपासना करता है, वह परिच्छिन्नलोक पर विजय प्राप्त करता है और जो इन्हे अनन्त समझकर उपासना करता है, वह अनन्तलोक पर विजय प्राप्त करता है ॥१३॥

---

[1]करणमव्याख्यानेन संसारोऽवगम्यते। कार्यकरणात्मका हि त इत्युक्तम्। स यः [2]कश्चि-द्धैतान्प्रजापतेरात्मभूतानन्तवतः परिच्छिन्नानध्यात्मरूपेण वाऽधिभूतरूपेण वोपास्ते स च तदुपासनानुरूपमेव फलमन्तवन्त लोकं जयति परिच्छिन्न एव जायते नैतेषामात्मभूतो भवतीत्यर्थः। अथ पुनर्यो हैताननन्तान्सर्वात्मकान्सर्वप्राण्यात्मभूतानपरिच्छिन्नानुपास्ते सोऽनन्तमेव लोकं जयति ॥१३॥

पिता पाङ्क्तेन कर्मणा सप्तान्नानि सृष्ट्वा त्रीण्यन्नान्यात्मार्थमकरोदित्युक्तं तान्येतानि पाङ्क्तकर्मफलभूतानि व्याख्यातानि। [3]तत्र [4]कथं पुनः पाङ्क्तस्य कर्मणः

---

यावत्संसारभावित्वमभिव्यनक्ति—न हीति। कार्यकरणयोर्यावत्संसारभावित्वेऽपि [5]प्राणानां किमायातमत आह—कार्येति। तेषु परिच्छिन्नत्वेन ध्याने दोषमाह—स य इति। एवं पातनिकां कृत्वा विवक्षितमुपा-सनमुपदिशति—अथेति ॥ १३ ॥

[6]अन्नत्रये फलधर्ममानविषये व्याख्याते वक्तव्याभावात्किमुत्तरग्रन्थेनेत्याशङ्क्य वृत्तं कीर्तयति —पितेति। तेषां तत्फलत्वे प्रमाणाभावमादाय शङ्कते—तत्रेति। [7]प्रकृतव्याख्यानमित्यर्थः। कार्य-

---

उसको व्याप्त करके स्थित हैं इसलिये ये 'अनन्ता' अर्थात ससार की स्थितिपर्यन्त रहने वाले (सापेक्षनित्य) है, क्योकि कार्य और करण के बिना ससार अन्य कुछ भी नहीं जाना जाता। एव इनके बारे मे 'ये कार्यकरणात्मक हैं', यह कहा जा चुका है। अधिकृतजनो मे जो कोई 'हैतान्' अर्थात् प्रजापति के स्वरूपभूत इन सबको 'अन्तवत' यानी परिच्छिन्न समझकर अध्यात्म या अधिभूतरूप से उपासना करता है, वह उस उपासना के अनुरूप फल अन्तवान लोक मे ही 'जयति' अर्थात आत्मभूत नहीं होता। तथा जो इन्हे 'अनन्तान्' अर्थात् सर्वात्मक या सम्पूर्ण प्राणियो के आत्मभूत, अपरिच्छिन्न-रूप से उपासना करता है, वह अनन्त लोक को जीत लेता है ॥१३॥

पिता ने पाङ्क्तकर्म द्वारा सात अन्नो को उत्पन्न कर, तीन अपने लिए निश्चित किये, यह पूर्व श्रुतिवाक्यो मे कहा जा चुका है। पाङ्क्तकर्म के फलभूत उन अन्नो का प्रतिपादन कर दिया गया।

---

१ कार्यकारणे विना। २ अधिकृतानां मध्ये। ३ तत्रेति—अन्नत्रयव्याख्याने तेषां पाङ्क्तकर्मफलभूतत्वं कथमुक्तम्। ४ कथमिति—मानाभावेन तेषु पाङ्क्तत्वानुभवाभावादिति भावः। ५ वाङ्मनःप्राणानामि-त्यर्थः। ६. अन्नत्रयव्याख्यानम्।

**स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवाऽऽ च पूर्यतेऽप च क्षीयते सोऽमावास्याᳶ**

वह यह तीन अन्नरूप संवत्सर प्रजापति सोलह कलाओं वाला है। उसकी रात्रियाँ ही पन्द्रह कलाएं हैं। तथा उस प्रजापति की सोलहवीं कला कभी भी क्षीण नहीं होने से नित्य ही है। वह संवत्सर प्रजापति रात्रियों से ही शुक्लपक्ष में बढ़ता है तथा कृष्णपक्ष में क्षीण होता है। अमावस्या की रात्रि

---

फलमेतानीति । उच्यते । यस्मा[1]त्तेष्वपि त्रि[2]ष्वन्नेषु पाङ्क्तताऽवगम्यते । वित्तकर्मणोरपि [3]तत्र संभवात् । तत्र [4]पृथिव्यग्नी माता । [5]दिवादित्यौ पिता । योऽय[6]मनयोरन्तरा[7] प्राणः स प्रजेति व्याख्यातम् । तत्र वित्तकर्मणी संभावयितव्ये [8]इत्यारम्भः—

स एष संवत्सरो योऽयं त्र्यन्नात्मा प्रजापतिः प्रकृतः स एष [9]संवत्सरात्मना विशेषतो निर्दिश्यते । षोडशकलः षोडश कला अवयवा अस्य सोऽयं षोडशकलः संवत्सरः

---

लिङ्गकमनुमानं प्रमाणयन्नुत्तरमाह—उच्यत इति । अनुमानमेव स्फुटयितुमन्नेषु पाङ्क्तत्वावगति दर्शयति—यस्मादिति । [10]तस्मात्तत्कारणमपि तादृशमिति शेषः । कथं पुनस्तत्र पाङ्क्तत्वधीरित्याशङ्क्याऽऽह—वित्तेति । [11]आत्मा [12]जाया [13]प्रजेति त्रय संग्रहीतुमपिशब्द । उक्तं हेतुं व्यक्तीकुर्वन्नुक्तं स्मारयति—तत्रेति । अन्नत्रय सप्तम्यर्थ । [14]तथाऽपि कथ पाङ्क्तत्वमित्याशङ्क्यानन्तरग्रन्थमवतारयति—तत्र वित्तेति । सप्तमी पूर्ववत् । अवतारितं ग्रन्थ व्याचष्टे—योऽयमित्यादिना । कथं प्रजापतेस्तिथिभिरापूर्य-

---

किन्तु वे पाङ्क्तकर्म के फल किस प्रकार हैं ? इसे कहा जाता है । अन्नत्रय में वित्त और कर्म की संभावना है क्योंकि उन तीनों अन्नों में भी पाङ्क्तता देखी जाती है। वहाँ पृथिवी (वाक्) और अग्नि माता है, द्युलोक (मन) और आदित्य पिता है। इन दोनों द्युलोक और पृथिवीलोक के बीच अन्तरिक्षगमनशील जो यह प्राण है, वह प्रजा है—इसकी व्याख्या की जा चुकी है। उनमें वित्त और कर्म की संभावना होती है, इसलिए अग्रिम ग्रन्थ का समारम्भ होता है।

'स एष संवत्सर' इस श्रुतिमन्त्र में अन्नत्रयस्वरूप जिस प्रजापति का प्रसङ्ग है, उसी का विशेषतया संवत्सररूप से प्रतिपादन किया जाता है। 'षोडशकल' अर्थात् षोडशकला या अवयवों वाला कालस्वरूप संवत्सरात्मा प्रजापति षोडशकल है। 'तस्य' अर्थात कालस्वरूप प्रजापति की 'रात्रय.'

---

१. तेष्वपीति—पूर्वोक्तान्नचतुष्टय दृष्टान्तयितुमपिशब्द । २ अन्नत्रये । ३ संभवादिति—अत्राय प्रयोग विमत पाङ्क्तकर्मफल अन्नत्रय पाङ्क्त पाङ्क्त्वसंभावनाऽऽस्पदत्वात् साधारणाद्यन्नचतुष्टयवदिति । ४ वाक् । ५ मन । ६ द्यावापृथिव्यो । ७ अन्तरिक्षम । ८ आरम्भ इति—कार्यानुरूपत्वात् कारणस्य कार्ये पाङ्क्तत्वाभावे कारणेऽपि तदसिद्धे फलस्य पाङ्क्तत्वार्थं वित्तादिवस्तुमुत्तरो ग्रन्थ आरभ्यत इत्यर्थ । ९ कालात्मना । १० विमतमन्नत्रय स्वसदृशकारणफल कार्यत्वात् शुक्लपटवदित्यनुमानमभिप्रेत्याह—तस्मादिति । त्रिष्वप्यन्नेषु पाङ्क्तत्वावगमात् पाङ्क्तान्नत्रयकारण कर्मापि पाङ्क्तमेवेत्यर्थ । ११ मन । १२ वाक् । १३ प्राण । १४ मातृपितृप्रजाना सत्त्वेऽपि ।

रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेता रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥१४॥

मे वह सवत्सररूप प्रजापति इस सोलहवी कला से इन समस्त प्राणियो मे अनुप्रवेश कर फिर दूसरे दिन प्रात काल द्वितीय कला से सयुक्त होकर उत्पन्न होता है। अत इस रात्रि मे किसी प्राणी के प्राण-विच्छेद न करें। यहा तक कि इस सवत्सररूप देवता की पूजा के लिए इस अमावस्या की रात्रि मे गिरगिट को भी न मारे (अमङ्गलरूपी पापी गिरगिट को स्वभाव से लोग मार डालते है। इसे मारने का भी निषेध इस रात्रि मे किया जाता है) ॥ १४ ॥

---

सवत्सरात्मा कालरूपः । [1]तस्य च कालात्मनः प्रजापते रात्रय एवाहोरात्राणि [2]तिथय इत्यर्थः । पञ्चदश कलाः । ध्रुवैव नित्यैव व्यवस्थिताऽस्य प्रजापतेः षोडशी षोडशानां पूरणी कला । [3]स रात्रिभिरेव तिथिभिः कलोक्ताभिरापूर्यते चापक्षीयते च । प्रतिपदाद्याभिर्हि चन्द्रमाः प्रजापतिः शुक्लपक्ष आपूर्यते कलाभिरुपचीयमानाभिर्वर्धते यावत्संपूर्णमण्डलः पौर्णमास्याम् । ताभिरेवापचीयमानाभिः कलाभिरपक्षीयते कृष्णपक्षे यावद्ध्रुवैका कला व्यवस्थिताऽमावास्यायाम् ।

[4]स प्रजापतिः कालात्माऽमावास्याममावास्यायां रात्रिं रात्रौ या व्यवस्थिता ध्रुवा

---

माणत्वमपक्षीयमाणत्वं च तत्राऽऽह—प्रतिपदाद्याभिरिति । वृद्धेर्मर्यादां दर्शयति—यावदिति । अपक्षस्य मर्यादामाह—यावद्ध्रुवेति ।

अवशिष्टाममावास्यायां निविष्टा कला प्रपञ्चयन्द्वितीयकलोत्पत्तिं शुक्लप्रतिपदि दर्शयति—स

---

अर्थात् दिन और रातें यानी तिथियाँ ही पन्द्रह कलाएँ हैं। 'अस्य' अर्थात् इस प्रजापति की 'षोडशी' अर्थात् सोलहवीं सख्या की पूर्ति करने वाली कला 'ध्रुवैव' नित्यव्यवस्थित ही है। वह 'रात्रिभिरेव' यानी कलारूप से उक्त तिथियो से ही पूर्ण और अपक्षीण होता है। क्योकि वह चन्द्रमा प्रजापति शुक्लपक्ष मे प्रतिपदा आदि तिथियो से बढता है, वह पूर्णमासी को पूर्णमण्डलाकार होने तक अपनी बढती हुई कलाओ से बढता रहता है। तथा कृष्णपक्ष मे क्षीण होती हुई उन्ही कलाओ द्वारा तब तक क्षीण होता रहता है, जब तक अमावस्या मे एक ध्रुवा कला ही शेष रह जाय।

'स' वह उपचय अपचय कर्मवान् कालस्वरूप प्रजापति 'अमावास्या रात्रिम्' अर्थात् अमावस्या

---

१ ता एव षोडशकला आह—तस्य चेति । २ अहोरात्रसबन्धिन्य । ३ एतासां कलानां वित्तरूपत्वं वक्तुं तत्साधर्म्यमाह—स इति । प्रजापतिश्चन्द्रात्मा उक्तकलारूपाभिस्तिथिभिरेवेत्यर्थ । उपचयापचयरूपत्वाच्चन्द्रमसि पञ्चदशतिथ्यात्मककलानां वित्तादित्वमिद्धयथमेव प्रजापतेश्चन्द्रात्मनोक्तिरिति द्रष्टव्यम् प्रजापतिर्विराडित्युक्तो लोककालदेवतात्मकोऽधिगतस्तस्य लोकानधिकृत्यान्नत्रयात्मकस्तावदात्मोक्तस्तस्यैव कालमधिकृत्य य आत्मा स चन्द्रात्मना वक्तव्य इति प्रजापतेश्चन्द्रात्मन सवत्सरपदे नोपादानमित्यन्यत्रोक्तं द्रष्टव्यम् । ४ एवं कलानां वित्तत्वे सिद्धे तदुपचयापचयौ कर्मेत्यभिप्रायेणाह—स इति ।

कलोवर्तेतया षोडश्या कलया सर्वमिदं प्राणभृत्प्राणिजातमनुप्रविश्य यदपः पिबति यच्चौ-षधीरश्नाति तत्सर्वमेवौषध्यात्मना सर्वं व्याप्यामावास्यां रात्रिमवस्थाय ततोऽपरेद्युः प्रातर्जायते [१]द्वितीयया कलया संयुक्तः । [२]एवं पाङ्क्तात्मकोऽसौ प्रजापतिः । दिवादित्यो मनः पिता । पृथिव्यग्नी वाग्जाया माता । तयोश्च प्राणः प्रजा । [३]चान्द्रमस्यस्तिथयः कला वित्तमुपचयापचयधर्मित्वाद्वित्तवत्तासां च कलानां कालावयवानां [४]जगत्परिणामहेतुत्वं कर्म । एवमेष कृत्स्नः प्रजापतिर्जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्ये-षणानुरूप एव पाङ्क्तस्य कर्मणः फलभूतः [५]संवृत्तः । कारणानुविधायि [६] हि कार्यमिति लोकेऽपि [७]स्थितिः ।

---

प्रजापतिरिति । प्राणिजातमेव विशिनष्टि—यदप इति । स्थावर जङ्गम चेत्यर्थः । ओषध्यात्मनेत्युपलक्षणं जलात्मनेत्यपि द्रष्टव्यम् । फलभूते प्रजापतौ पाङ्क्तत्व वक्तुमुपक्रान्त तदद्यापि नोक्तमित्याशङ्क्याऽऽह—एवमिति । तदेव पाङ्क्तत्व व्यनक्ति—दिवेति । कलाना वित्तत्वद्वित्तत्वे हेतुमाह—उपचयेति । पाङ्क्तत्वनिर्देशेन लब्धमर्थमाह—एवमेष इति । सम्प्रति कृत्स्नस्य प्रजापतेरुपक्रमानुसारित्व दर्शयति—जायेति । भवतु प्रजापतेरुक्तरीत्या पाङ्क्तत्व तथाऽपि कथ पाङ्क्तकर्मफलत्व तत्राऽऽह—कारणेति ।

---

मे रात के समय जो उपरोक्त एक ध्रुवा कला व्यवस्थित रहती है, उस षोडशी कला के द्वारा 'प्राणभृत्' यानी इन समस्त प्राणधारियों मे 'अनुप्रविश्य' अर्थात् जो जल पीता है और जो औषधि खाता है, उन सभी औषधिरूप से व्याप्त होकर अमावस्या की रात्रि मे स्थिर रहकर 'ततः' यानी दूसरे दिन प्रातःकाल द्वितीया कला से सयुक्त होकर उत्पन्न होता है । इस प्रकार यह प्रजापति पाङ्क्तस्वरूप है । द्युलोक, आदित्य और मन-पिता है । पृथिवी, अग्नि और वाक्, जाया यानी माता है । उन दोनो माता और पिता की प्रजा प्राण है । चन्द्रमा की तिथियाँ या कलाएँ हैं क्योकि वे वित्त के समान वृद्धि और क्षीण स्वभाव वाली है, तथा उन काल के अवयवस्वरूप कलाओ का जगत् के परिणाम मे हेतु होना कर्म है । इस प्रकार वह समग्र प्रजापति 'मेरे यहाँ जाया, हो फिर मैं प्रजारूप से उत्पन्न होऊं, मेरे यहाँ धन हो, फिर मैं कर्म करूँ' इसी एषणा के अनुरूप ही पाङ्क्तकर्म का फलभूत हो जाता है । लोकव्यवहार मे भी ऐसी ही स्थिति है कि कार्य कारण का अनुवर्ती होता है ।

क्योकि इस रात्रि मे यह सोमात्मा प्रजापति अपनी ध्रुवा कला के सहित समस्त प्राणी समुदाय मे अनुप्रविष्ट होकर विद्यमान रहता है, इसलिए अमावस्या के अहोरात्र मे "प्राणभृत" यानी प्राणी के 'प्राण न विच्छिन्द्यात्' प्राण का विच्छेद न करे अर्थात प्राणीहिंसा न करे । यहाँ तक

---

१ द्वितीयया कलया सयुक्तो जायत इति सम्बन्ध । तथा च प्रतिपदि द्विकलश्चन्द्र क्रमेणान्यया पौर्णमास्या षोडश-कलत्व तस्योपपद्यतेति भाव । २ चन्द्रनिर्वर्त्या । ३ जगदिति—भूतात्मको विराडात्मकश्च काल-तत्तद्विशेषरूपो भूत्वा जगदाख्यपरिणाममादायन्महाप्रलयपर्यन्त स्थित । तथा च तस्य जगत्परिणामयितृत्व कर्मेत्यर्थ । यद्वा स हि पक्षादेर्निष्पादनस्य कर्मणो नैरन्तर्येण कर्ता तेन चन्द्रमसि तन्निर्माणाख्य कर्मेति बोध्यम् । तथा चोक्त वार्तिके—"पक्षमासर्तुवर्षादे स कर्ता कर्मणोऽनिशमिति" ॥ २०८ ॥ ४ कृत्स्न सवृत्त इत्यन्वय । ५. अनुरूपम् । ६ प्रसिद्धि । ७ पूर्वोक्तम् ।

यस्मादेव चन्द्र एतां रात्रिं सर्वप्राणिजातमनुप्रविष्टो ध्रुवया कलया वर्तते तस्माद्धेतोरेताममावास्यां रात्रिं प्राणभृतः प्राणिनः प्राणं न विच्छिन्द्यात्प्राणिनं न प्रमापयेदित्येतदपि कृकलासस्य । कृकलासो हि पापात्मा स्वभावेनैव हिंस्यते प्राणिभिर्दृष्टोऽप्यमङ्गल इति कृत्वा । ननु प्रतिषिद्धैव प्राणिहिंसा न हिंस्यात्सर्वा भूतान्यन्यत्र तीर्थेभ्य इति । बाढं प्रतिषिद्धा तथाऽपि नामावास्याया अन्यत्र प्रतिप्रसवार्थं वचनं हिंसायाः कृकलासविषये वा "किं तर्ह्येतस्या" सोमदेवताया अपचित्यै पूजार्थम् ॥ १४ ॥

---

पाङ्क्तकर्मफलस्य प्रजापतेरुक्त्वा "प्रासङ्गिकमर्थमाह—यस्मादिति । अपि कृकलासस्येति कुतो विशेषोक्तिरित्याशङ्क्याऽऽह—कृकलासो हीति । कुतस्तस्य पापात्मत्वं तत्राऽऽह—दृष्टोऽपीति । "विशेषनिषेधस्य शेषानुज्ञापरत्वाद्विरोधः सामान्यशास्त्रेण स्यादिति शङ्कते—नन्विति । तीर्थशब्दः शास्त्रविहित"प्रदेशविषयः । "साधारण्येन सर्वत्र निषिद्धाऽपि हिंसा विशेषतोऽमावास्यायां निषिध्यमाना सोमदेवतापूजार्था तत्र शेषानुज्ञाभावान्न "सामान्योक्तिविरोधोऽस्तीति परिहरति—बाढमिति ॥१४॥

---

कि उस काल मे गिरगिट के भी प्राण न ले क्योकि गिरगिट पापात्मा है, देखने मे भी अमङ्गलरूप है—ऐसा सोचकर प्राणी स्वभाव से इसे मार डालते है। यहाँ शङ्का होती है—परन्तु "यज्ञभूमि आदि पवित्र तीर्थप्रदेशो मे प्राणीमात्र की हिंसा न करे" इस छान्दोग्यश्रुति के अनुसार हिंसा तो सामान्यतया निषिद्ध ही है। (फिर उसके अलग प्रतिषेध का विधान क्यो किया गया?) (इसका समाधान करते है—) यह सत्य है कि छान्दोग्यश्रुति मे प्रतिषिद्ध है, तथापि यहाँ जो श्रुति का कथन है, वह अमावस्या से भिन्न समय मे प्राणीसामान्य अथवा केवल गिरगिट की हिंसा का अभ्यनुज्ञा करने के लिए नही है, तो फिर किस लिए है? इस सोम देवता को "अपचित्यै" अर्थात् पूजा के लिए यह कथन है ॥१४॥

जो भी षोडश कलाओ वाला संवत्सर प्रजापति परोक्षरूप से कहा गया है, उसे अत्यन्त परोक्ष ही नही मानना चाहिए क्योकि 'अयमेव स' अर्थात वह (उपासनाविषय मे) प्रत्यक्ष सिद्ध

---

१ चन्द्रात्मा प्रजापतिः । २ रात्रिशब्दोऽहोरात्रपरः । उक्तं हि—'रात्रय एवाहोरात्राणीति"। ३. हिंस्यात् । ४ सत्यम् । ५ साधारण्येन सर्वहिंसानिषेधेऽपि । ६ प्राणभृतः प्राणं न विच्छिन्द्यादित्यनेन प्राणिसामान्यविषयाया हिंसाया अमावास्यातिरिक्ते कालेऽभ्यनुज्ञाऽवगम्यते । अपि कृकलासस्य—किं वा कृकलासस्येत्यर्थस्तया चानेन कृकलासविषयाया हिंसाया एव वाऽमावस्यातिरिक्ते कालेऽभ्यनुज्ञा प्रतीयते तदेतदुभयं निषेधति—नामावास्याया इति । ७ अभ्यनुज्ञायम् । ८ हिंसाया—प्राणिसामान्यविषयाया इत्यर्थः । ९ कृकलासविषये वेति—कृकलासविषयाया वा हिंसाया अन्यत्र प्रतिप्रसवार्थं वचनं नेत्यन्वयः । अपिशब्दस्त्वत्र कैमुत्यद्योत्येवेत्यवधेयम् । १० विशेषेण निषेधस्य शेषानुज्ञापरत्वाभावे तत्प्रयोजनं पृच्छति—किं तर्हीति । ११ तत्प्रयोजनं दर्शयति—एतस्या इति । १२ प्राजापत्यफलकविहितपाङ्क्तकर्मसजातीयत्वेन स्मृतस्य हिंसात्मकनिषिद्धकर्मण उपेक्षानर्हत्वं प्रसंग तस्मादागतं प्रासङ्गिकममावास्यारात्रौ प्राणिहिंसावर्जनरूपमर्थमित्यर्थः । १३ विशेषेति—अमावास्याकालाधिकरणककृकलासकर्मकहिंसानिषेधकशास्त्रस्य । उक्तातिरिक्ते का हिंसानुज्ञापरत्वादित्यर्थः । अनुमतितात्पर्यकत्वान्न हिंस्यादिति सामान्यविरोधः स्यात् । १४ यज्ञभूम्यादि । १५. सर्वदा प्राणिमात्रविषयत्वेन । १६ सामान्यशास्त्रेत्यर्थः ।

**यो वै संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽय-मेवंवित्पुरुषस्तस्य[1] वित्तमेव पञ्चदश कला आत्मै-वास्य षोडशी कला स वित्तेनैवाऽऽ च पूर्यतेऽप च**

जो भी वह सोलह कलाओं वाला संवत्सर प्रजापति है, वह यही है। जो इस प्रकार अन्नत्रयरूप प्रजापति को जानने वाला पुरुष है; वित्त ही उसकी पन्द्रह कलाएँ हैं तथा शरीर ही उस रहस्यवेत्ता की सोलहवीं कला है। वह चन्द्रमा के समान गौ-अश्वादि वित्त से ही बढ़ता है और क्षीण

---

यो वै परोक्षाभिहितः संवत्सरः प्रजापतिः षोडशकलः स नैवात्यन्तं[2] परोक्षो मन्तव्यो यस्मादयमेव स प्रत्यक्ष उपलभ्यते। कोऽसावयं यो यथोक्तं त्र्यन्नात्मकं प्रजापति-मात्मभूतं वेत्ति स एवंवित्पुरुषः केन [3]सामान्येन प्रजापतिरिति [4]तदुच्यते—तस्यैवंविदः पुरुषस्य गवादिवित्तमेव पञ्चदश कला उपचयापचयधर्मित्वाद्वित्तसाध्यं च कर्म। तस्य कृत्स्नताया आत्मैव [5]पिण्ड एवास्य विदुषः षोडशी कला ध्रुवास्थानीया स चन्द्रवद्वित्ते-

---

[6]यत्पूर्वमाधिदैविकत्र्यन्नात्मकप्रजापत्युपासनमुक्तं तदहमस्मि प्रजापतिरित्यहङ्ग्रहेण कर्तव्यमित्याह —यो वा इति। प्रत्यक्षमुपलभ्यमानं प्रजापतिं प्रश्नद्वारा प्रकटयति—कोऽसाविति। [7]तस्य प्रजापतित्व-मप्रसिद्धमित्याशङ्क्य परिहरति—केनेत्यादिना। कलानां जगद्विपरिणामहेतुत्वं [8]कर्मेत्युक्तं वित्तेऽपि [9]कर्महेतुत्वमस्ति [10]तेन [11]तत्र कलाशब्दप्रवृत्तिरुचितेत्याह—वित्तेति। यथा चन्द्रमाः कलाभिः शुक्लकृष्ण-पक्षयोरापूर्यतेऽपक्षीयते च तथा स विद्वान्वित्तेनैवोपचीयमानेनाऽऽपूर्यतेऽपचीयमानेन चापक्षीयते। [12]एतच्च

---

होता है। वह यह कौन है जो पूर्वोक्त अन्नत्रयात्मक आत्मभूत प्रजापति को जानता है, वह इस प्रकार जानने वाला पुरुष किस सादृश्य से प्रजापति है? इसका प्रतिपादन किया जाता है। उस इस प्रकार जानने वाले पुरुष की, गवादि वित्त ही पञ्चदश कलाएँ हैं क्योंकि उनका उपचय अपचय धर्म वाला होना लोकसिद्ध है और कर्म भी वित्त से ही साध्य है। उसकी पूर्णता के लिए 'आत्मैव' यानी पिण्ड ही या प्राणादिविशिष्ट देह ही 'अस्य' अर्थात् इस विद्वान् की ध्रुवास्थानीया 'सोलहवीं कला है। वह चन्द्रमा के समान वित्त से ही बढ़ता और घटता है—यह बात लोक में प्रसिद्ध है।

---

१ तस्य वित्तमेवेत्यादि क्षीयत इत्यन्तेन ग्रन्थेनैतदुक्तं भवति प्रजापतेश्चन्द्रमसो या पञ्चदश कलास्ता मे गवादि-वित्तमेव यत्तस्य जगत्परिणामरूपं कर्म तन्मे वित्तस्य हान्युपचयावेव याऽस्य ध्रुवा षोडशी कला सा मे प्राणादिवि-शिष्टो देह एव तदेव साधर्म्यात् षोडशकलः प्रजापतिरहमस्मीत्युपासीनस्तद्भावमाप्नोतीति प्रजापतेरात्मनोऽन्यत्वेऽपि तदात्मत्वध्यानात् तद्भाव उ यथा यक्ष्यादि श्रुते प्रतिमादावीश्वरबुद्ध्या फलदृष्टेश्चेति ॥ २ यो हि न कदाप्यपरोक्षो भवति सोऽत्यन्तं परोक्षः। अयं तु न तथा उपास्तिसिद्धावपरोक्षत्वादिति। ३ सादृश्येन। ४ सूत्रस्योपासकस्य च साधर्म्यं प्रजापतित्वारोपहेतु। ५ प्राणादिविशिष्टो देहः। ६ यत्पूर्वमिति—त एते सर्व एव समा इत्यत्र ध्यानस्योक्तत्वात् किं पिष्टपेषणेन (उत्तरग्रन्थेन) इत्याशङ्क्येत्यादि। उत्तरग्रन्थतात्प-र्यान्तरं तु वार्तिके द्रष्टव्यम्। ७ उपासकस्य। ८ यागादिकर्मेत्यर्थः। ९ कर्महेतुत्वसाधर्म्येण। १० वित्ते। ११. वित्तोपचयादिप्रयुक्त पूर्णत्वादि।

**क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाऽऽहुः ॥ १५ ॥**

होता है। यह जो शरीर है वह रथचक्र की नाभिरूप है और वित्त रथचक्र के बाहर का घेरारूप नेमि है। अतः सर्वस्व नष्ट हो जाने के कारण यदि पुरुष हीन हो जाय, पर शरीर से जीवित रहे तो यही कहते हैं कि केवल प्रधि (नेमि) से ही क्षीण हुआ है अर्थात् धनाभाव होजाने पर भी जीवित पुरुष पुनः धन को प्राप्त कर सुखी हो जाता है ॥ १५ ॥

---

नैवाऽऽपूर्यते चापक्षीयते च। तदेतल्लोके प्रसिद्धम्। तदेतन्नभ्यं नाभ्यै हितं नभ्यं नाभिं वाऽर्हतीति। किं तद्यदयं योऽयमात्मा पिण्डः प्रधिर्वित्तं परिवारस्थानीयं बाह्यं चक्रस्येवारनेम्यादि। तस्माद्यद्यपि सर्वज्यानिं सर्वस्वापहरणं जीयते हीयते ग्लानिं प्राप्नोत्यात्मना चक्रनाभिस्थानीयेन चेद्यदि जीवति प्रधिना बाह्येन परिवारेणायमगात्क्षीणोऽयं यथा चक्रमरनेमिविमुक्तमेवमाहुर्जीवंश्चेदरनेमिस्थानीयेन वित्तेन पुनरुपचीयत इत्यभिप्रायः ॥१५॥

---

लोकप्रसिद्धत्वाच्च प्रतिपादनसापेक्षमित्याह—स चन्द्रवदिति। आत्मैव ध्रुवा कलेत्युक्तं तदेव रथचक्रदृष्टान्तेन स्पष्टयति—तदेतदिति। नाभिश्चक्रपिण्डिका तत्स्थानीयं वा नभ्यं तदेव प्रश्नद्वारा स्फोरयति—किं तदिति। शरीरस्य चक्रपिण्डिकास्थानीयत्वमुक्तं परिवारादर्शनादित्याशङ्क्याऽऽह—प्रधिरिति। शरीरस्य रथचक्रपिण्डिकास्थानीयत्वे फलितमाह—तस्मादिति। पदार्थमुक्त्वा वाक्यार्थमाह—जीवंश्चेदिति ॥ १५ ॥

---

"तदेतन्नभ्यम" अर्थात् जो नाभि के लिए हितकारक या नाभि के लिए योग्य हो, उसे नभ्य कहते हैं। वह क्या है? *'यदयमात्मा' अर्थात् जो यह प्राणादिविशिष्ट देह है। 'प्रधिर्वित्तम्' यानी वित्त बाह्य* परिवाररूप है, जैसे पहिये के अरे और नेमि इत्यादि। इसलिए यद्यपि 'सर्वज्यानिम्' अर्थात् सर्वस्व अपहरण होने से 'जीयते' यानी पुरुषहीनता या ग्लानि को प्राप्त हो जाता है, तथापि यदि वह चक्र की नाभिस्थानीय अपने प्राणादिविशिष्ट देह से जीवित है तो कहा जाता है कि यह 'प्रधिना' यानी बाह्य परिवार से 'अगात्' अर्थात् क्षीण हो गया; जिस प्रकार कि अरे और नेमि से विहीन चक्र। अभिप्राय यह कि यदि वह जीवित रहता है तो रथ की नेमिरूप धन से फिर भी वृद्धि को प्राप्त हो जाता है ॥१५॥

---

१. उपासकस्य देह एव ध्रुवास्थानीया षोडशी कलेति यदुक्तं तत्। २. इदं तु व्युत्पत्तिप्रदर्शनमात्रम्। ३. जायादिरूपम्। ४. बाह्यं वित्तमित्यन्वयः। ५. शरीरस्य नाभिस्थानीयत्वात्। ६. सर्वस्वापहरणनिमित्ताम्। ७. गतत्वं क्षीणत्वम्। ८. मध्यस्था। ९. अयमेवार्थो विवक्षितः। १०. अभिमतं नभ्यशब्दवाच्यम्। ११. अरनेम्याद्यदर्शनात्।

## अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा

मनुष्यलोक, पितृलोक और देवलोक यही तीन लोक है । उनमे से वह यह मनुष्यलोक पुत्र के द्वारा ही जीता जा सकता है, किसी अन्य कर्म से नही । तथा कर्म से पितृलोक और उपासना से

---

एवं पाङ्क्तेन दैववित्तविद्यासंयुक्तेन कर्मणा त्र्यन्नात्मकः प्रजापतिर्भवतीति व्याख्यातमनन्तरं च जायादिवित्तं परिवारस्थानीयमित्युक्तम् । तत्र पुत्रकर्मापरविद्यानां लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगतं न पुत्रादीनां लोकप्राप्तिफलं प्रति विशेषसंबन्धनियमः । सोऽयं पुत्रादीना साधनाना साध्यविशेषसबन्धो वक्तव्य इत्युत्तरकण्डिका प्रणीयते—

अथेति वाक्योपन्यासार्थः । त्रयो वावेत्यवधारणार्थः । त्रय एव शास्त्रोक्तसाधनार्हा लोका न न्यूना नाधिका वा । के त इत्युच्यते—मनुष्यलोकः पितृलोको देवलोक इति ।

---

अन्नत्रयात्मनि प्रजापतावहंग्रहोपासनस्य सफलस्योक्तत्वाद्वक्तव्याभावादुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्य तद्विषयं वक्तुं वृत्तमनुवदति—एवमिति । साधनोक्त्यैव फलमुक्तं तयोर्मिथोबद्धत्वात्प्राजापत्यं च फलं प्रागेव दर्शितं तत्किमुत्तरग्रन्थेनेत्याशङ्क्य सामान्येन तत्प्रतीतावपीदमस्येति विशेषो नोक्तस्तदुक्त्यर्थमुत्तरा श्रुतिरित्याह—तत्रेति । पूर्वग्रन्थः सप्तम्यर्थः । नियमो नावगत इति संबन्धः । उपन्यासः प्रारम्भः । वावशब्दस्यावधारणरूपमर्थं विवृणोति—त्रय एवेति । तदेव लोकत्रयं प्रश्नद्वारा स्फोरयति—के त इत्यादिना । जयो नाम पुत्रेण मनुष्यलोकस्यातिक्रम इति केचित्तान्प्रत्याह—साध्य

---

इस प्रकार दैववित्त और विद्यायुक्त पाङ्क्तकर्म के द्वारा प्रजापति अन्नत्रयात्मक है, इसकी व्याख्या की जा चुकी । इसके बाद परिवारस्थानीय जायादिवित्त का वर्णन किया गया । वहाँ पुत्र, कर्म और अपरविद्या का सामान्यतया लोकप्राप्ति मे साधनमात्र होना सिद्ध होता है, पुत्रादि का लोकप्राप्तिरूप फल के प्रति विशिष्टसम्बन्ध होने का नियम नही सिद्ध होता । वह सम्बन्ध पुत्रादि-साधनो का साध्यविशेषो के साथ बतलाना है, इसलिए आगे की कण्डिका का प्रणयन किया जाता है ।

'अथ' यह शब्द वाक्योपक्रम के लिये है । 'त्रयो वाव' यहाँ 'वाव' निश्चयार्थक है । शास्त्रोक्त साधन तीन ही लोक है, न इससे कम हैं, न ही अधिक है । वे कौन से हैं ? इस पर कहा जाता है, मनुष्यलोक, पितृलोक और देवलोक । उनमे वह यह मनुष्यलोक पुत्ररूप साधन के द्वारा 'जय्य' अर्थात् जीतने योग्य यानी साध्य है । इस प्रकार आगे हम बतलाएँगे । किसी अन्यकर्म अथवा विद्या से नही,

---

१ ब्रह्मलोक । २ इत्युक्तमिति—तथा च जायावित्तोपलक्षितसाधनान्येव न श्रुतिः अब्रवीत् तु तत्साध्य तदुक्त्यर्थं परा श्रुतिरिति शेषः । ३ व्यवस्थया लोकत्रयसबन्ध । ४ साधनसाध्या । ५ फलत्वेन । ६ फलप्रतीतौ । ७ विशिष्टफलसम्बन्ध । ८ साधनोक्तिमात्रेण नोक्त स्यादित्यर्थ । ९ अतिक्रम इति—समुल्लघनम् अत्यय इति यावत् । पुत्रादिभिस्त्रिभिरेव मनुष्यादिलोके त्रयोपलक्षितस्य ससारस्य ध्वस इति भर्तृप्रपञ्चादीना भाव इत्यन्यत्र विस्तर । १० भर्तृप्रपञ्चादय ।

**कर्मणा पितृलोको विद्यया देवलोको वै लोकाना॒ँ श्रेष्ठस्तस्माद्विद्यां प्रश॒ँसन्ति ॥ १६ ॥**

देवलोक जीते जा सकते है। इन लोको मे देवलोक ही श्रेष्ठ है। इसीलिए देवलोकप्राप्ति के साधनभूत विद्या की प्रशंसा करते हैं ॥१६॥

---

तेषां सोऽयं मनुष्यलोकः पुत्रेणैव साधनेन जय्यो जेतव्यः साध्यो यथा च पुत्रेण जेतव्यस्तथोत्तरत्र[1] वक्ष्यामो नान्येन कर्मणा विद्यया वेति वाक्यशेषः । कर्मणाऽग्निहोत्रादिलक्षणेन

---

इति । पुत्रेणास्य साध्यत्वमसिद्धमित्याशङ्क्याऽऽह—यथा चेति । द्विविधो हि मनुष्यलोकजयः[2]कर्तव्यशेषानुष्ठानं भोगश्च । तत्राऽऽद्यमाश्रित्यान्ययोगव्यवच्छेदमेवकारार्थं दर्शयति—नान्येनेति । द्वितीये[3]त्वयोगव्यवच्छेदस्तदर्थो 'ज्योतिषेमं लोकं जयतीति साधनान्तरेणापि मनुष्यलोकजयश्रुतेरिति भावः । ॐपूर्ववाक्यस्थमेवकारमुत्तरयावयोरनुषक्तमुपेत्य वाक्यद्वयं व्याचष्टे—कर्मणेत्यादिना । साधनद्वयापेक्षया

---

यह वाक्यशेष है। अग्निहोत्रादिरूप केवल कर्म से पितृलोक जीतने योग्य है, पुत्र अथवा विद्या से नहीं। तथा उपासितरूप विद्या से देवलोक प्राप्त होने योग्य है, पुत्र अथवा कर्म से नहीं। तीनों लोकों

---

१ अग्रिमकण्डिकायाम् । २ पितुरत्राध्ययनादिकर्तव्यशेषानुष्ठानम् । ३ पुत्रेणापि जय्य एव । ४. ज्योतिष्टोमेन ।

---

ॐ पूर्ववाक्यस्थमेवकारमुत्तरवाक्ययोरनुषक्तमुपेत्य वाक्यद्वयं व्याचष्टे—इत्य वाक्यद्वयव्याख्यानं वार्तिककारासम्मतम् तथाहि—'विद्यया देवलोकाप्ति श्रुतत्वादेव कारणात् । नैवकाराभिसंबन्धादेवेत्यत्र न सगति ॥२५६॥ पुत्रस्यैवावधृतय एवकारो पुत्रस्यैवानुशिष्ट स्याल्लोकस्तेनैव जीयते । नान्येन कर्मणाऽनार्यो नृलोकजयसिद्धये ॥ पुत्रस्यैवावधृतय एवकारो भवेदयम् । पितृदेवलोकसप्राप्ति श्रुतेह्यन्यैश्च साधने ॥ व्याख्यानमिदमेवात्र विदोष दोषवत्परम् । इवमेव ततो ग्राह्य न तु यद्दोषवन्मतमिति" ॥२७६-२८१॥ इति । पूर्ववाक्यस्थमेवकारं विद्याकर्मवाक्ययो प्रक्षिप्य तयोस्तत्साभाष्यकृतो व्याख्यानमयुक्तमित्याह—विद्ययेति । तथा देवलोकस्य कर्मणा पितृलोकस्य च प्राप्तिर्युक्ता तयोस्तत्साधनत्वश्रुतेर्न तयोरेवकारसबन्धाद्विद्ययैव देवलोकस्य कर्मणैव पितृलोकस्य प्राप्तिरिति युक्त तस्या (देवपितृलोकाप्ते ) साधनान्तराधीनत्वस्यापि श्रुतेरतो विद्यादावेवकारसङ्गतिरसङ्गतेत्यर्थ ॥ साधनान्तराधीनत्वमेव तस्या दर्शयन् यत्रैवकार श्रुतस्तत्रैवाभावविति साधयति—पुत्रश्चेदिति । अत्र मनुष्यलोके । द्विविधो हि मनुष्यलोकजयो पितुरत्राध्ययनादिकर्तव्यशेषानुष्ठान भोगश्च तत्र पुत्रेणैतल्लोकजयबुद्ध्या पितृभि सोऽनुशिष्टश्चेत्तेनैवाऽऽद्यो जयो न हि यथोक्तलोकजयार्थं कर्मणो विद्याया वा कश्चिदुपयोगोऽस्तस्तदर्थं पुत्रस्यैवोपायत्वात्तदवधारणार्थमेवकारो युक्तस्तस्यान्ययोगव्यवच्छेदार्थकत्वात द्वितीयस्तु जयो हेत्वन्तरेणापि स्याज्ज्योतिषेम लोक जयतीति श्रुतेरयत्वयोगव्यवच्छेदस्तदर्थं इति भाव ॥ उत्तरवाक्ययोस्तु तत्सम्बन्धो न युक्तिमानित्याह—पितृदेवेति । न हि पितृलोकजयो नित्यादिकर्मनियत सकल्पादेव तु तच्छ्रुते (बृ उ ४ ४ ८) इतिन्यायविरोधात्नापि विद्ययैव देवलोकजय सन्यासादब्रह्मण स्थानमित्यादिविरोधादतो लोकद्वयजयस्य हेत्वन्तरायत्तत्वसभवादेवकार प्रक्षिप्य वाक्ययोर्व्याख्या न युक्तेत्यर्थं ॥ एवकारो यत्र श्रुतस्ततोऽन्यत्र नेत्येतदेव श्रुत्यादिसमतवान् निर्दोष वाक्यद्वयेप्येवकारानुपपत्तिरिति तु श्रुत्याद्यसमतत्वात् सदोष तस्मादस्मद्व्याख्यानमेव विद्वद्भिर्ग्राह्य न भाष्यकारीयमिति फलितमाह—व्याख्यानमिति । अत्र कर्मणेत्यादि वाक्ये । एकस्य विदोषत्वमपरस्य सदोषत्वमिति स्थित फलितमाह—इदमिति ॥

**अथातः संप्रत्तिर्यदा 'प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किंचानूक्तं तस्य सर्वस्य ब्रह्मे-**

अब इसके बाद सम्प्रत्ति कर्म कहा जाता है। (मरण-चिन्ह को देखकर) जब पिता यह समझता है कि अब मैं मरने वाला हूँ, उस समय पुत्र को बुला कर कहता है 'तू ब्रह्म है, तू यज्ञ है, तू लोक है" इस प्रकार पिता से शिक्षा प्राप्त कर वह पुत्र प्रत्युत्तर में कहता है मैं ब्रह्म हूँ, मैं यज्ञ हूँ,

---

'केवलेन पितृलोको जेतव्यो न पुत्रेण नापि विद्यया। 'विद्यया देवलोको न पुत्रेण नापि कर्मणा। देवलोको वै लोकानां त्रयाणां श्रेष्ठः प्रशस्यतमः। तस्मात्तत्साधनत्वाद्विद्यां प्रशसन्ति ॥ १६ ॥

एवं साध्यलोकत्रयफलभेदेन' "विनियुक्तानि पुत्रकर्मविद्याख्यानि त्रीणि साधनानि। जाया तु 'पुत्रकर्मार्थत्वान्न 'पृथक्साधनमिति पृथङ्नाभिहिता। वित्तं च कर्मसाधनत्वान्न पृथक्साधनम्। विद्याकर्मणोर्लोकजयहेतुत्वं 'स्वात्मप्रतिलाभेनैव 'भवतीति

---

फलद्वारकमुत्कर्षं विद्यायां दर्शयति—देवलोक इति ॥ १६ ॥

वृत्तमनुवदति—एवमिति। पुत्राविवज्जायावित्तयोरपि प्रकृतत्वात्फलविशेषे विनियोगो "वक्तव्य इत्याशङ्क्याऽऽह—जाया त्विति। न पृथक्पुत्रकर्मभ्यामिति शेषः। न 'पृथक्साधनं कर्मणः सकाशादिति द्रष्टव्यम्। भवत्वेव साधनत्रयनियमस्तथाऽपि विद्याकर्मणी हित्वा समनन्तरग्रन्थे किमिति पुत्रनिरूपण-

---

में देवलोक ही 'श्रेष्ठ' यानी सबसे अधिक प्रशसनीय है। अत उसका साधन होने से विद्या की प्रशसा करते हैं ॥१६॥

इस प्रकार पुत्रकर्म और विद्यासज्ञक तीन साधनो का उनके साध्य लोकत्रयरूप फल के भेद से विनियोग किया गया। जाया तो पुत्र और कर्म के लिए ही होने के कारण कोई पृथक् साधन नहीं है, इसलिये उसका अलग वर्णन नही किया गया। वित्त भी कर्म का साधन होने के कारण स्वतन्त्र साक्षात् साधन नही है। विद्या और कर्म स्वरूपलाभमात्र के द्वारा लोकजय मे हेतु होते हैं, यह प्रसिद्ध है। पुत्र के अक्रियात्मक होने से वह किसप्रकार लोकजय का हेतु होता है, यह नही जाना जाता। अत उसे बतलाना है, इसलिये अग्रिम ग्रन्थ आरम्भ किया जाता है। 'सम्प्रत्ति' सम्प्रदान का नाम है। 'सम्प्रत्ति" यह

---

१ प्रैष्यन्नित्यस्य प्रव्रजिष्यन्नित्यर्थान्तरं वार्तिकोक्तमनुसधेयम्। २ इतरासहकृतेन। ३ विद्ययेति—उपास्तिरूपयेत्यर्थः। देवलोकप्राप्तिफलकत्वश्रवणान्नात्र मुख्या विद्या। विस्तरस्तु वार्तिके। ४ विशेषेण सह। ५ सबन्धितयोक्तानीत्यर्थः। अनेनाथशब्दार्थ सूचित। ६ उभयार्थत्वात्। ७ स्वतन्त्र साक्षात्साधनम्। ८ स्वरूपलाभमात्रेणैव। ९ तयो क्रियारूपत्वात्। १० वक्तव्य इति—अन्यथा तयो पुरुषार्थत्वान्वयिरव नोपपद्येतेति भाव। ११ पुत्रकर्मणोरेव जायावित्तयोरन्तर्भावात् तयो सिद्धेऽपि फलसम्बन्धे तदन्तर्भूतयोस्तयोरपि तत्सिद्धेस्तयोर्न स्वातन्त्र्येण फलान्वयानुकीर्तनमपेक्षितमिति भाव।

**स्येकता । ये वै के च यज्ञास्तेषाꣳ सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषाꣳ सर्वेषां लोक इत्येकतैतावद्वा इदꣳ सर्वमेतन्मा सर्वꣳ सन्नयमितोऽभुनजदिति तस्मात्पुत्र-**

मैं लोक हूँ' । (इन तीनों वाक्यों की व्याख्या स्वयं श्रुति करती है) जो कुछ भी अनूक्त स्वाध्याय है, उन सबकी 'ब्रह्म' यह एकता है। जो कुछ भी न किया हुआ यज्ञ है, उन सबकी 'यज्ञ' यह एकता है और जो कुछ भी ज्ञातव्यलोक है, उन सबकी 'लोक' यह एकता है। बस ! यह इतना ही गृहस्थपुरुष का सम्पूर्ण पालनीय कर्तव्य है। (फिर पिता यह समझता है कि) मेरे अधीन इस सम्पूर्णभार को

---

प्रसिद्धम् । 'पुत्रस्य त्वक्रियात्मकत्वात्केन प्रकारेण लोकजयहेतुत्वमिति न 'ज्ञायतेऽतस्तद्वक्तव्यमित्यथानन्तरमारभ्यते—संप्रत्तिः सम्प्रदानम् । संप्रत्तिरिति वक्ष्यमाणस्य कर्मणो

---

मित्याशङ्क्याऽऽह—विद्याकर्मणोरिति । ७अथयोक्ते चोद्ये पुत्रस्य लोकहेतुत्वज्ञानापनार्थं संप्रत्तिवाक्यमित्याह—अत इति । अथात इति पदद्वयं व्याख्याय संप्रत्तिपदं व्याचष्टे—संप्रत्तिरिति । किमिद संप्रदानं

---

आगे कहे जाने वाले कर्म का नाम है । पिता पुत्र में स्वदेहसपाठाध्ययनादिव्यापार का इस प्रकार से सम्प्रदान करता है, इसलिए यह कर्म "संप्रत्ति" नाम वाला है। उसे किस समय करना चाहिए ? इस पर श्रुति कहती है। वह पिता 'यदा' यानी जिस समय, 'प्रैष्यन्' अर्थात् मरणकाल समीप देखकर

---

१ समयमिति—शिष्टोऽयं मे पुत्र । २ पुत्रस्तु मनुष्यलोकजय न तथा हेतुर्भ्यपरत्वात् नहि क्रियानाविष्ट साधन इष्टमतस्तस्य लोकजये कथं साधनतत्वभिप्रेत्याह—पुत्रस्येति । ३ यतो न ज्ञायतेऽतस्तज्ज्ञापनायमुत्तर वाक्यमिति श्रुवताऽत्र शब्दार्थो व्याख्यात । तथा चायात: संप्रत्तिरिति वाक्यस्यायमर्थ । अत पूर्वोक्तात्कर्मोपासनयोरनुष्ठानात् । अथ अनन्तरमेव प्रारब्धावसाने कर्मोपास्त्यो फलार्थं फलाङ्कुरत्वेन संप्रत्तिनामक कर्म विधीयत इति । ४. पुत्रादिसाधनाना साध्यविशेषसम्बन्धनानन्तरमित्यर्थ ।

---

७अथयोक्ते चोद्ये पुत्रस्य लोकहेतुत्वज्ञापनार्थं संप्रत्तिवाक्यमिति वार्तिककारास्तु संप्रत्तिवाक्यस्य सम्बन्धान्तरमाहुस्तथाहि—"नीत्वा समाप्ति कर्माणि फलवन्त्यफलानि च ॥ शुद्धधी प्रव्रजेत्पश्चादिहरक्त कर्मणा फलात् ॥ इत्यनुक्रमसंन्यासे संप्रत्तिरुपदिश्यते ॥ सोऽनुक्रमेणेति तथा श्रुतौ स्पष्टमिद वच ॥ अननुक्रमसंन्यासे न संप्रत्तिर्भविष्यत । पुत्रे मदेयेन सा यस्मान्नास्त्यसौ ब्रह्मचारिण ॥ यदपुत्र इति वच सम्भवे सति युक्तिमत् । निरस्तदारसम्बन्धे न तु स्यादब्रह्मचारिणि ॥ ब्रह्मचर्यादेवेत्यादिवाक्यानि शतश श्रुतौ । श्रूयन्ते तु ऋणवचो विरोधात्स्यादपस्मृति ॥ यदाहमितिमन्त्रोक्तेस्तमेवैत्यवधारणात् । निषेधाभावाश्च इत्युक्तेन मुक्ति सुतज मत ॥ न तत्र दक्षिणा यन्ति विद्ययैव तदाप्यते । इति न्याय्य श्रुतर्वाक्य कस्मादाऽऽश्रियतेऽञ्जसा ॥ संन्यासमेवोपक्रम्य संप्रत्ति श्रूयते श्रुतौ । यथाऽन्यत्र तथेहापि कस्मान्नाभ्युपगम्यते ॥ सर्वकर्मनिवृत्तिर्हि जीवतोऽत्र विधीयते । एकमेव व्रतमिति संन्यासिन्येव युक्तिमत्" ॥ २६२ ७१ ॥ इति । संक्रामितात्मभारस्य ब्रह्मेति वचोऽन्वत् । तदा स्यात्सर्वकर्माणि यदि सन्यस्य तिष्ठति ॥ सर्वात्मकायनिचयपुत्रसंक्रामितत्वत । न चेत्तिरक्षित सर्वं प्रतिप्रसवगौमवत् ॥ कौषीतकिश्रुतौ तद्वद्गृहस्थस्यैव जीवत । संन्यास श्रूयत स्पष्ट पुत्रैश्वर्यं सुख वसेत् ॥ सन्यस्य सर्वकर्माणि सर्वदोषानपानुदन् । इत्यादि मनुनाऽप्युक्त तद्विरुद्ध च भण्यते ॥ उपासितफलमेवास्य पितुर्यद्वदिहोच्यते । प्रतिप्रसूयते

मनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंवि-
दस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति ।
स यद्यनेन किंचिदक्ष्णयाऽकृतं भवति तस्मादेनं

यह अपने ऊपर लेकर इस लोक से जाने पर मेरा पालन करेगा। अतः इस प्रकार उस अनुशासन किए हुए पुत्र को लोकप्राप्ति में हितकर होने से 'लोक्य' कहते हैं। इसी से पिता उसको शिक्षा देता है। ऐसे विज्ञान वाला वह पिता जब इस लोक से जाता है, तो अपने उन्हीं प्राणों के साथ पुत्र में व्याप्त हो

नामधेयम् । पुत्रे हि स्वात्मव्यापारप्रदानं करोत्यनेन प्रकारेण पिता तेन संप्रत्तिसंज्ञकमिदं कर्म । तत्कस्मिन्काले कर्तव्यमित्याह—स पिता यदा यस्मिन्काले प्रैष्यन्मरिष्य-

नाम तदाह—सम्प्रत्तिरितीति । तदेव कर्म विशदयति—पुत्रे हीति । अनेन प्रकारेणेति वक्ष्यमाणप्रका-

'अब मैं मरूँगा' ऐसा अरिष्ट उपस्थित हुआ समझता है, उस समय पुत्र को बुलाकर इस प्रकार कहता है—'तू ब्रह्म है, तू यज्ञ है, तू लोक है' इस प्रकार कहे जाने पर वह पुत्र उत्तर में कहता है। वह शिक्षित होने के कारण पहले से ही जानता है कि मुझे यह करना चाहिए, इसलिए कहता है—

१ नामधेयमिति—तदुक्तं वार्तिके 'संप्रत्तिरिति नामैतदात्मसंस्कारकर्मणः" ॥२८५॥ इति । स्नानादिवदुपासितुः स्वगतसंस्कारकर्मणः संप्रत्तिसंज्ञेत्यर्थः । संप्रत्तिः संप्रदानं विसर्जनं निक्षेप इति यावत् । २ स्वदेहसंपाद्याध्ययनादिव्यापारसम्प्रदानमिति । ३ वक्ष्यमाणेन ।

कस्मात्साग्निहोत्रादिकं तथा" ॥ ३०७-३११ ॥ "लभ्यम्यभात्मकफलो भावनाज्ञानकर्मभिः" ॥ संन्यस्ताशेषकर्मा सन्बोध्यतेऽजातशत्रुणा ॥ नामरूपक्रियादेह सर्वोऽस्मीत्यभिमानवान् । अतत्त्वज्ञोऽधिकार्यत्र विद्याया उपपद्यते । अय लोकश्च पुत्रेण याहृतेन च जीयते । ताहक्पुत्रोऽत्र वक्तव्य इत्यारब्धोत्तरा श्रुतिः ॥ पुत्रकर्मापरज्ञानतृपित्रमरलोकतः । व्याख्यातो नियमोऽप्यन्योन्यफलसाधनसंगतेः ॥ पुत्रकर्मार्थमात्रत्वात्स पृथक्साधनान्तरम् । जाया मानुषवित्तं च कर्मैकार्यत्वकारणात् ॥ स्वरूपलाभमात्रेण साधनत्वं निगच्छतः । कर्मज्ञाने सुतस्तस्य साधनत्वं प्रजेत्कथम् ॥ इत्येवमभिसम्बन्धो वक्तुर्भाष्यकृतः स्फुटः । अस्मदुक्ताविरोधीति तेन नेहातियत्यते" ॥ २७२-२७८ ॥ "कर्मभ्य प्रव्रजिष्यन्वा प्रैष्यन्नित्यभिधीयते । धातूपसर्गयोर्मुख्यस्तथार्थोऽप्याश्रितो भवेदिति" ॥ २८६ ॥ अथातः संप्रत्तिरित्यादेस्तात्पर्यमाह—नीत्वेति ॥ क्रमसंन्यासाङ्गत्वेन संप्रत्तिरित्यत्र काठकश्रुतिं संवादयति—य इति । यथा क्रमसंन्यासाङ्गं संप्रत्तिस्तथा योऽनुक्रमेण संन्यस्यति स न्यस्तो भवति । कोऽयं संन्यास उच्यते कथं संन्यस्तो भवतीत्युपक्रम्य य आत्मानं (श्रवणादिभिः) त्रियाभिः सुगुप्तं करोतीत्यादिनेतिकर्तव्यताजातमुक्त्वा सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतं निष्क्रम्येति संन्यासं विधाय पुत्रं दृष्ट्वा त्वं ब्रह्म (वेदः) त्वं यज्ञस्त्वं लोकस्त्वं सर्वमित्यनुमन्त्रयीतेति स्पष्टमिदं संप्रत्तिवचो दृष्टं तदेषा स्यात्क्रमसंन्यासाङ्गमित्यर्थः ॥ अस्तु तर्हि संन्यासमात्रस्यैव संप्रत्तिरङ्गं नेत्याह—अननुक्रमेति । ब्रह्मचारिणोऽपुत्रत्वात्तस्य संप्रत्त्ययोगात्तस्यास्तत्संन्यासाऽनङ्गतेत्यर्थः ॥ अस्तु तर्हि गृहस्थमात्रसंन्यासाङ्गं सेत्याशङ्क्य पुत्रिगृहिसंन्यासाङ्गं सेति वक्तुमपुत्रिणोऽपि तस्य संन्यासं साधयति—यदीति । यद्यपुत्रो भवत्यात्मानमेव सर्वं ध्यात्वाऽनपेक्षमाणः प्राचीमुदीचीं वा दिशं प्रव्रजेदित्यादिवाक्यमपुत्रस्यापि गृहिणः संन्याससंभवे घटते नान्यथेत्यर्थः । नेदमपुत्रिगृहिविषयं किन्तु ब्रह्मचारिसंन्याससाधकमित्याशङ्क्याऽऽह—

**सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवा-स्मिँल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥ १७ ॥**

जाता है। किसी असावधानी से उस पिता के द्वारा कोई कर्तव्यकर्म पूर्ण नहीं हुआ होता तो उस कर्म से उसका पुत्र उसे मुक्त कर देता है। उसका पुत्र नाम इसीलिए है, क्योंकि अपूर्णकर्म की पूर्ति के द्वारा वह पिता का त्राण करता है। वह पिता पुत्र के द्वारा ही इस लोक में प्रतिष्ठित होता है। फिर उस पिता में ये वागादि हिरण्यगर्भसम्बन्धी, अमरणधर्मा प्राण प्रवेश करते हैं ॥१७॥

---

न्मरिष्यामीत्यरिष्टादिदर्शनेन मन्यतेऽथ तदा पुत्रमाहूयाऽऽह—त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स एवमुक्तः पुत्रः प्रत्याह स तु पूर्वमेवानुशिष्टो जानाति ममैतत्कर्तव्यमिति तेनाऽऽहाहं ब्रह्माहं यज्ञोऽहं लोक इति। एतद्वाक्यत्रयम्।

---

रोक्ति। अरिष्टादीत्यादिपदेन दुःस्वप्नादिसंग्रहः। प्रत्याह वाक्यत्रयमिति संबन्धः। पुत्रस्याहं ब्रह्मेत्यादिप्रतिवचने हेतुमाह—स त्विति। मया कार्यं यदध्ययनादि तदेवावशिष्टं त्वया कार्यमिति पुत्रस्य प्रागनुशिष्टताभावे प्रतिवचनानुपपत्तिरित्यर्थः।

---

'मैं ब्रह्म हूँ, मैं यज्ञ हूँ, मैं लोक हूँ'। यह वाक्यत्रय है।

इन वाक्यों का अर्थ गूढ़ है ऐसा समझते हुए श्रुति इसकी व्याख्या करने के लिए प्रवृत्त होती है। 'यद्वै किञ्च' अर्थात् जो कुछ भी अवशिष्ट 'अनूक्त' अर्थात् अध्ययन किया हुआ और अध्ययन

---

१ कथं मृतिज्ञानमित्यत्राह—अरिष्टादीति। अरिष्टं मरणचिह्नम्। २ एतदिति—पितुरत्राध्ययनादिकत्वया वशिष्टमित्यर्थः। ३ तेनेति—मत्कार्याध्ययनादिशेषस्त्वया कार्य इति शिक्षितत्वेनेत्यर्थः। ४ पूर्वमेव शिक्षितत्वं तस्य व्यतिरेकमुखेनाह—मयेत्यादिना।

---

निरस्तेति। यद्यपुत्र इति प्राप्तनिषेधत्वादप्राप्तनिषेधस्यागतिकगतित्वाद्ब्रह्मचारिण्यप्राप्तेर्गृहस्थे च प्राप्तेन ब्रह्मचारिविषयमेतदित्यर्थः ॥ ऋणापाकरणस्मृतेः सपुत्रस्यापुत्रस्य वा गृहस्थस्यैव संन्यासो नान्यस्येत्याशङ्क्याऽऽह—ब्रह्मचर्यादिति। प्रत्यक्षश्रुतिविरोधे स्मृतेरप्रामाण्यं सर्ववार्तिके साधितमिति भावः ॥ पुत्रोत्पत्त्यादिहेतोरेव मुक्तिसिद्धेर्नार्थः संन्यासेन तत्साध्यज्ञानेन चेत्याशङ्क्याऽऽह—वेदेति। वेदाहमेतं पुरुषमित्यारभ्य तमेव विद्वानमृत इह भवतीति वाक्यात् तमेव विदित्वाऽतिमृत्युमेतीत्यवधारणाच्च नान्यः पन्था विद्यतेऽयनायेति निषेधाच्च ज्ञानादेव मुक्तिरित्यर्थः ॥ तत्रैव वाक्यान्तरमाह—नेति। दक्षिणास्तत्प्रधाना कर्मिणो दक्षिणमार्गगामिन इत्यर्थः। कैवल्यं तदा परामृष्टमविद्याध्वस्तिमत्किन च सा विद्यां विना निरसितुं शक्या तयोरेव विरोधादतो विद्यातो मुक्तिः मुक्तो (साक्षात्) वदद्वाक्यं न्यायवदशक्यं हातुमित्याह—इति न्याय्यमिति ॥ ननु पुत्रिणो गृहिणः संन्यासाङ्गं संप्रत्तिवाक्योक्तेत्ययुक्तं न हीह तदङ्गत्वेन सोऽभ्यते किन्तूपस्थितमृतेरुपासकस्योपास्त्यङ्गत्वेन सा विधीयते तत्राऽऽह—संन्यासमिति।—अयमत्र योऽनुक्रमेणेत्यादौ। सर्ववेदान्तप्रत्ययन्यायादुपनिषदन्तरसिद्धमिहाप्यविरुद्धमादेयमिति

एतस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय[1] प्रवर्तते—यद्वै किंच यत्किंचावशिष्टमनूक्तमधीतमनधीतं च तस्य सर्वस्यैव ब्रह्मेत्येतस्मिन्पद[2] एकतैकत्वं योऽध्ययन-

यद्वै किंचेत्यादिवाक्यानां पुत्रानुमन्त्रणवाक्यैरर्थभेदाभावात्पुनरुक्तिरित्याशङ्क्याऽऽह—एतस्येति। यद्वै किंचेत्यादिवाक्ये वाक्यार्थमाह—योऽध्ययनेति। त्वं ब्रह्मेतिवाक्यवत्त्वं यज्ञ इति वाक्यमपि व्याख्ये-

नहीं किया हुआ है, उस सभी की 'ब्रह्म' इस पद में एकता है। तात्पर्य यह है कि जो वेदविषयक अध्ययन कार्य इतने समय तक मेरे द्वारा करने योग्य था, वह आज से 'त्वं ब्रह्म' यानी तू उसका करने वाला हो। तथा 'ये वै के च यज्ञाः' अर्थात् मेरे द्वारा अनुष्ठान करने योग्य जो कुछ भी अनुष्ठित और

१ एकार्थत्वमिति यावत्। २ आदिना त्वं ब्रह्मेति मन्त्रवाक्यम्। पदमत्र सप्तम्यर्थं। वाक्यार्थं सपिण्डितार्थं विवक्षितार्थमिति यावत्।

भावः॥ वाक्यशेषाच्चात्र संन्यासविधिरित्याह—सर्वेति। एवमेव व्रतं चरेदित्यत्र जीवतः सर्वकर्मनिवृत्तिर्विधीयते तच्च व्रतं संन्यासिन्येव घटतेऽतोऽत्र तद्विधिरित्यर्थः। विधीयमानव्रतस्य सर्वकर्मनिवृत्तौ पर्यवसानादिति हिशब्दार्थः॥ त्वं ब्रह्मेत्यादि वाक्यमपि कृतसंप्रत्तिकस्य संन्याससाधकमित्याह—सन्नाभितेति। यदि पिता कृतसंप्रत्तिको यावज्जीवति तावत्कर्माणि सर्वाणि संन्यस्यैव तिष्ठति तर्हि पुत्रे समर्पितात्मकर्तव्यताकलापस्यापि पितुस्त्वं ब्रह्मेत्यादि पुत्रं प्रति वाक्यमर्थवत्स्यादतो यथोक्तवाक्यादपि प्रकृते संन्याससिद्धिरित्यर्थः॥ अथ संन्यासे सत्येव वाक्यस्यार्थवत्त्वं तत्राऽऽह—सर्वात्येति। श्रुतिपथकर्मत्यागेऽपि नाग्निहोत्रादित्यागोऽत्र विवक्षित इत्याशङ्क्याऽऽह—न चेदिति। संप्रत्तिवाक्ये सर्वकर्म त्यक्तुं नेष्टं चेत्कृतसंप्रत्तिकेनाप्येतत्कार्यमिति वाक्यं स्यान्न च तदस्त्यतः सर्वकर्मत्यागोऽत्रेष्ट इत्यर्थः॥ क्रमसंन्यासे संप्रत्तिवाक्यवत्कण्ठश्रुतौ योऽनुक्रमेणेत्याद्युक्तवाक्यवच्च ब्रह्मचारी वेदमधीत्य वेदौ वेदान्वा चरितब्रह्मचर्यो दारानाहृत्य पुत्रानुत्पाद्याग्निमाधाय यथाशक्ति यज्ञैरिष्ट्वा ताननुरूपाभिर्वृत्तिभिः संविभज्य तस्य संन्यासो गुरुभिरनुज्ञातस्येत्युपक्रम्यात ऊर्ध्वमनशनमपां प्रवेशनं महाप्रस्थानं वृद्धाश्रमं वा गच्छेत्पुत्रैश्वर्ये वा वसेदिति कौषीतकिश्रुतावपि जीवतो गृहस्थैव संन्यासो निःसंदिग्धं श्रूयतेऽतोऽपि न तदपह्नव इत्याह—कौषीतकीति। तां श्रुतिमेव संक्षिप्याऽऽह—पुत्रेति। प्रकृतसंन्यासे स्मृतिरपि मानमित्याह—संन्यस्येति। "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥ दशलक्षणानि धर्मस्य ये विप्राः समधीयते। अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम्॥ दशलक्षणकं धर्ममनुतिष्ठन् हि मानवः। वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः॥ संन्यस्य सर्वकर्माणि सर्वदोषानपानुदन्। नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत्॥ एवं संन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः। संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम्"॥ इति ब्रुवता मनुनापि क्रमसंन्यासोऽङ्गीकृतः। यदि कृतसंप्रत्तिकस्यापि कार्यमग्निहोत्रादीत्याग्रहस्तदा श्रुतिस्मृतिविरोधः स्यादित्याह—तद्विरुद्धं चेति॥ यद्यपि श्रुतिस्मृत्योरग्निहोत्रादित्यागो विवक्षितस्तथाऽपि नात्र तद्विवक्षानिमित्तमस्तीत्याशङ्क्य न चेत्तिव्यक्षितमित्युक्तं प्रपञ्चयति—उपास्तीति। यथा कृतसंप्रत्तिकस्योपास्तिफलमेव पृथिव्यं चैनमित्यादावुच्यते न कार्यान्तरं तथा सर्वकर्मसंन्यासः संप्रत्तिवाक्येनाविवक्षितश्चेदग्निहोत्राद्यपि तस्यानन्तरवाक्ये प्रतिप्रसूयेतात्र च तदभावात्संन्यासो विवक्षित इत्यर्थः॥ किं च गार्ग्यं सर्वं कर्म संन्यस्याजातशत्रुमुपगतो विद्यार्थमिति चतुर्थे श्रुतेरत्र तद्विधिरस्तीत्याह—लब्धेति॥ ननु बालाके संन्यासित्वमसिद्धमजातशत्रूपगतेर्न हि संन्यासित्वे राजोपगतिर्युक्तेत्याशङ्क्योक्तमेव प्रपञ्चयति—नामेति। अत्र बालाक्यजातशत्रुसंवादे। संन्यासिनो ब्राह्मणस्य क्षत्रियोपसत्त्यभावेऽपि तदनुज्ञया श्रवणादि युक्तमाधुनिककनिष्ठसंन्यासिनो ज्येष्ठसंन्यासिनस्तद्दृष्टेरिति भावः॥ संप्रत्तिवाक्यस्य स्वमतेन संबन्धमुक्त्वा भाष्योक्तमनुवदति—अयमिति। धर्मादिना पितृलोकादिवदिति

व्यापारो मम कर्तव्य आसीदेतावन्तं कालं वेदविषयः स इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृकोऽस्त्वित्यर्थः। तथा ये वै के च यज्ञा अनुष्ठेयाः सन्तो मयाऽनुष्ठिताश्चाननुष्ठिताश्च तेषां सर्वेषां यज्ञ इत्येतस्मिन्पद एकत्वकरवं मत्कर्तृका यज्ञा य आसंस्त इत ऊर्ध्वं त्वं यज्ञस्त्वत्कर्तृका भवन्त्वित्यर्थः। ये वै के च लोका मया जेतव्याः सन्तो जिता अजिताश्च तेषां सर्वेषां लोक इत्येतस्मिन्पद एकता। इत ऊर्ध्वं त्वं लोकस्त्वया जेतव्यास्ते। इत ऊर्ध्वं मयाऽध्ययनयज्ञलोकजयकर्तव्यक्रतुस्त्वयि समर्पितोऽहं तु मुक्तोऽस्मि कर्तव्यताबन्धनविषयात्क्रतो.।

---

ख्यापयितुमित्याह—तथेति। ब्राह्मणार्थं संगृह्णाति—मत्कर्तृका इति। त्वं लोक इत्यस्य व्याख्यानं ये वै केचेत्यादि। तत्र पदार्थानुक्त्वा वाक्यार्थमाह—इत इति। किमिति त्वत्कर्तृकमध्ययनादि मयि समर्प्यते त्वयैव किं नानुष्ठीयते तत्राऽऽह—इत ऊर्ध्वमिति। कर्तव्यतैव बन्धनं तद्विषय क्रतु सकल्प-

---

अननुष्ठित यज्ञ थे, उन सब की 'यज्ञ' इस पद मे एकता है। तात्पर्य यह है कि जो यज्ञ अब तक मै किया करता था, वे अब तेरे द्वारा किये जाने वाले हो। 'ये वै के च लोका' तथा जो कोई भी लोक मेरे द्वारा जीतने योग्य होकर जीते गये अथवा नही जीते गये, उन सब लोको की 'लोक' पद मे एकता है। अब से 'तू लोक है, अर्थात वे लोक तेरे द्वारा जीते जाने योग्य हैं। आज के बाद अध्ययन, यज्ञ और लोकजयात्मक कर्तव्य का सकल्प तुझे सौंप दिया, अब मैं इनकी कर्तव्यता के बन्धनविषयक सकल्प से छूट गया। सुशिक्षित होने के कारण उस पुत्र ने वह सभी उसी प्रकार से निश्चय कर लिया।

---

१. ब्रह्मचर्यादारभ्याद्यपर्यन्तम्। २ सकल्प। ३ मन्त्रोपलक्षणम्।

---

प्रथमचकारार्थं। कर्मविद्यार्थन्वेति वक्तु द्वितीयश्चकार। सप्तमी निर्धारणे॥ तमेव संबन्ध साधयितु वृत्तमनुवदति—पुत्रेति। पुत्रादित्रयस्य लोकत्रयेण यथाक्रमं फलसाधनत्वमित्यन्योऽयसगतेर्नियमो व्याख्यात इति योजना। पुत्रादिवज्जायावित्तयोरपि प्रकृतत्वात्फलविशेषे विनियोगो वाच्योऽपि नोच्यते चेन्न पुरुषार्थत्वान्वयित्व तयोरुपपद्यत इत्याशङ्क्याऽऽह—पुत्रेति। साधनान्तर स्वतन्त्र साधन चकारात्कर्मणो न पृथगिति सबन्ध.॥ पुत्रकर्मणोरेव जायावित्तयोरन्तर्भावात्तयो सिद्धेऽपि फलसबन्धे तदन्तर्भूतयोस्तयोरपि तत्सबन्धस्य सिद्धेस्तयोर्न स्वातन्त्र्येण फलान्वयानुकीर्तनमपेक्षितमित्यर्थ॥ नन्वेव साधनत्रयनियमेऽपि विद्याकर्मणी हित्वा किमिति पुत्रनिरूपणमित्याशङ्क्याऽऽह—स्वरूपेति। साधनत्व लोकद्वयस्येति शेष। क्रियारूपत्वादित्यर्थ। पुत्रस्तु मनुष्यलोकजये न तथा हेतुर्द्रव्यत्वात्र हि द्रव्य क्रियाऽनाविष्ट साधन दृष्टमतस्तस्य लोकजये कथ साधनतेति पृच्छति—सुत इति। तस्य मनुष्यलोकस्येत्यर्थं॥ एव चोद्ये पुत्रस्य लोकहेतुत्वज्ञापनार्थं सप्रतिवाक्यमित्याह—इत्येवमिति। नाय सबन्ध सूचितोऽपि तु मुखतो दर्शित इति वक्तु स्फुट इति,विशेषणमय सब घोऽस्मदुक्तसब धाविरोधित्वान्न दूष्यत इत्याह—अस्मदिति। क्रमसन्यासाङ्ग सप्रत्युक्तिरित्यस्मदुक्तसम्बन्धस्तस्याय भाष्योक्त सबन्धो न विरोधी संन्यासकाले सप्रत्यनुष्ठाने पुत्रेणैतल्लोकजयसिद्धेस्तेन भाष्योक्ते सबन्धे न शक्यते दूषणमिति शेष। आपाततोऽत्र न दोषोऽस्तीति द्योतनार्थमतीत्युक्तम्॥ क्रमसन्यासाङ्गत्वेन सप्रत्तिविधिपक्षे प्रैष्यन्नित्यस्यार्थमाह—कर्मभ्य इति। भाष्योक्त पक्षमपेक्ष्यात्रातिशयमाह—धात्विति। प्रैष्यन्नित्यस्य पारिव्राज्येऽर्थे सति धातोरिणो गत्यर्थस्य प्रोपसर्गस्य च मुख्योऽर्थ स्वीकृत स्यात्प्रकर्षेण कर्मभ्यो निर्गमिष्यन्नस्मीति हि तदाऽर्थो भवेत्तथा चेयमेव व्याख्या युक्तेत्यर्थ॥

स च सर्वं तथैव प्रतिपन्नवोऽन्पुत्रोऽनुशिष्टत्वात् ।

तत्रेमं पितुरभिप्रायं मन्वानाऽऽचष्टे श्रुतिरेतावदेतत्परिमाणं वा इदं सर्वं यद्गृहिणा कर्तव्यं यदुत वेदा अध्येतव्या यज्ञा यष्टव्या लोकाश्च जेतव्या एतन्मा सर्वं सन्नय सर्वं होमं भारं मदधीनं मत्तोऽपच्छिद्याऽऽत्मनि निधायेतोऽस्माल्लोकान्मा मामभुनजत्पालयिष्यतीति लृडर्थे लङ् छन्दसि कालनियमाभावात् । यस्मादेवं संपन्नः पुत्रः पितरमस्माल्लोकात्कर्तव्यताबन्धनतो मोचयिष्यति तस्मात्पुत्रमनुशिष्टं लोक्य लोकहितं पितुराहुर्ब्राह्मणाः । अत एव ह्येनं पुत्रमनुशासति लोक्योऽस्य नः स्यादिति पितरः ।

स पिता यदा यस्मिन्काल एवंवित्पुत्रसमर्पितकर्तव्यताक्रतुरस्माल्लोकात्प्रैति म्रियतेऽथ

---

स्तस्मादिति यावत् । स पुत्र इत्यादेस्तात्पर्यमाह—स चेति ।

तत्रेति यथोक्तानुशासनोक्तिः । एतन्मा सर्वमित्यादि प्रतीकमादाय व्याचष्टे—सर्वं हीति । अनद्यतने भूतेऽर्थे विहितस्य लङो भविष्यदर्थत्वं कथमित्याशङ्क्याऽऽह—छन्दसीति । पुत्रानुशासनस्य फलवत्त्वमाह—यस्मादित्यादिना ।

कृतसम्प्रत्तिकः सन्पिता किं करोतीत्यपेक्षायामाह—स पितेति । कोऽयं प्रवेशो न हि विशिष्टस्य

---

यहाँ श्रुति पिता का अभिप्राय दृष्टिपथ में रखते हुए यह बात कहती है। गृहस्थ पुरुष के लिए जो कर्तव्य है, वह 'एतावत्' अर्थात् इतना ही है कि वेदों का अध्ययन करना चाहिए, यज्ञों का यजन करना चाहिए और लोकों पर जय प्राप्त करनी चाहिए। 'एतन्मा सर्वं सन्नयम्' इस श्रुति का भाव यह है कि यह पुत्र सब कुछ होकर मेरे ऊपर रहने वाले इस समग्र भार का मुझ से लेकर मुझे स्वाधीन-कर्तव्य वाला करके इस लोक से जाने पर 'मा अभुनजत्' अर्थात् मेरा पालन करेगा (इस अभिप्राय से पिता ने उसके प्रति 'त्वं ब्रह्म' इत्यादि वाक्य कहे)। यहाँ 'लृट्' के अर्थ से 'लङ्' लकार का प्रयोग हुआ है, क्योंकि वेद में काल का (विकरण आधिक्य) नियम नहीं है। क्योंकि इस प्रकार सुशिक्षित हुआ पुत्र पिता को इस लोक से कर्तव्यताबन्धन से मुक्त करा देगा। इसलिए ब्राह्मणसमुदाय

---

१ निश्चितवान् । २ उक्तानुशासने । ३ कर्मणा । ४ कर्तव्यस्यैतावत्त्वमेव दर्शयति—यदुतेति । ५ सन्नयशब्दं व्याचष्टे—भारमिति । तथा च कोशः—पश्चादवस्थायि बलं समवायश्च संनयाविति समवायः समुदायः स एवात्र भारः । सन् अयमिति वा च्छेदः । ६ स्वाधीनकर्तव्यमापाद्येत्यर्थः । ७ इतीति—इत्यभिप्रायवान्पिता त्वं ब्रह्मेत्यादिवाक्यमुक्तवानिति सम्बन्धः । ८ कालनियमाभावादिति—विकरणनियमाभावोऽप्युपलक्षणीयस्तेन विकरणाधिक्यमित्यवधेयम् । ९ अनुशिष्टम् । १० पुत्रफलं प्रति यन्ति कर्मणे । ११ अत अनुशिष्टस्य लोक्यत्वात् । १२ अद्यतना अपि । १३ एवंविदिति—त्र्यन्नात्मा प्रजापतिरस्मीत्युपासीनः साक्षात्कृततद्भाव इत्यर्थः । अहमस्म्यनन्तवाङ्मनःप्राणात्मा इति जानान इति यावत् । १४ मन्त्रवाक्यस्य । १५ न हि विशिष्टस्येति—अयं भावः उपाधेरुपहितस्य प्रतीचो वा मुख्या सङ्क्रान्तिर्नाऽऽद्योऽध्यक्षविरोधात् न हि पितृगतं शरीरादि पुत्रे सङ्क्रान्तमुपलभ्यते । न द्वितीयः सवितुर्जले सङ्क्रान्तिवदुपहितस्य पितुरपि स्वकार्यसङ्कल्पस्य पुत्रे अर्पणरूपाभासात् (प्रतिबिम्बात्) तत्र स्वप्रवेशभ्रमहेतौ सङ्क्रान्त्युक्तेः अन्याहृशसङ्क्रान्तेरध्यक्षविरुद्धत्वात् न तृतीयः प्रतीचः कूटस्थत्वादिति ।

तदेभिरेव प्रकृतैर्वाङ्मनःप्राणैः[१] पुत्रमाविशति[२] पुत्रं व्याप्नोति । अध्यात्मपरिच्छेदहेत्वपगमात्पितुर्वाङ्मनःप्राणाः स्वेनाऽऽधिदैविकेन रूपेण पृथिव्यग्न्याद्यात्मना भिन्नघटप्रदीपप्रकाशवत्सर्वमाविशन्ति । तैः प्राणैः सह पिताऽप्याविशति वाङ्मनःप्राणात्मभावित्वात्पितुः । अहमस्म्यनन्ता वाङ्मनःप्राणा अध्यात्मादिभेदविस्तारा इत्येवं भावितो[३] हि पिता । तस्मात्तत्प्राणानुवृत्तित्वं[४] पितुर्भवतीति युक्तमुक्तमेभिरेव प्राणैः सह पुत्रमाविशतीति[५] । सर्वेषां ह्यसावात्मा भवति पुत्रस्य च[६] । एतदुक्तं भवति—यस्य पितुरेवमनुशिष्टः पुत्रो भवति । सोऽस्मिन्नेव[७] लोके वर्तते पुत्ररूपेण नैव मृतो मन्तव्य इत्यर्थः । तथा च श्रुत्यन्तरे—

केवलस्य वा विले सर्वत्रप्रवेशः संभवत्यत आह—अध्यात्मेति । हेतुर्मिथ्याज्ञानादिः । वागादिव्याविष्टेऽपि कुतोऽर्थान्तरस्य पितुरावेशधीरित्याशङ्क्याह—वागिति । तद्भावित्वमेव स्फोरयति—अहमिति । भावनाफलमाह—तस्मादिति । 'पुत्रविशेषणात्परिच्छिन्नत्वं पितुस्तदवस्थमित्याशङ्क्याह—सर्वेषां हीति । मृतस्य पितुरितो लोकाद्व्यावृत्तस्य कथं 'यथोक्तरूपत्वमित्याशङ्क्याऽऽह—एतदुक्तमिति । पुत्ररूपेणात्र स्थितिमेव विभजते—नैवेति । मृतोऽपि पिताऽनुशिष्टपुत्रात्मनाऽत्र[८] वर्तते 'नास्मादरपन्तं व्यावृत्तः फलरूपेण च परत्रेति भावः । उक्तेऽर्थं ऐतरेयश्रुतिं संवादयति—तथा चेति । पद्मीप्रथमान्या पितापुत्रा उच्येते[९] ।

इस प्रकार सुशिक्षित पुत्र को पिता के लिए 'लोक्यम्' अर्थात् लोक में हितकर बतलाते हैं । इसलिए पितृगण (आज भी) इस पुत्र को अपने लिए लोक मे हितकर होने का उपदेश करते है ।

'स.' यानी वह पिता, 'यदा' यानी जिस समय इस प्रकार जानने वाले पुत्र को अपनी कर्तव्यता का सकल्प सौंपकर इस लोक से 'प्रैति' अर्थात् मरता है, तब 'एभि' यानी इन प्रकृत वाक्, मन और प्राणो से ही पुत्र मे 'आविशति' यानी व्याप्त हो जाता है । अध्यात्मपरिच्छेदरूप हेतु की निवृत्ति हो जाने के कारण पिता के वाक्, मन और प्राण अपने पृथिवी, अग्नि आदि आधिदैविकरूप से फूटे हुए घड़े मे दीपक के प्रकाश के समान सब मे व्याप्त हो जाते हैं । क्योंकि पिता भी तो वाक्, मन और प्राण का स्वरूपभूत ही है; इसलिए वह पिता भी उन प्राणों के साथ सब मे व्याप्त हो जाता है । पिता इस प्रकार की भावना से अनुप्रेरित रहता है कि "मैं ही अध्यात्मादिभेद विस्तार वाले अनन्त वाक्, मन और प्राण हूँ" । अतः पिता के उन प्राणो की अनुवृत्ति होती है । ऐसे मे यह उचित ही कहा है कि 'वह इन प्राणो के साथ ही पुत्र मे व्याप्त होता है' क्योंकि वह सभी का और पुत्र का भी आत्मा हो जाता है । इससे सिद्ध होता है कि जिस पिता का इस प्रकार सुशिक्षित पुत्र होता है, वह पुत्ररूप से इसी लोक मे रहता है । भाव यह हुआ कि उसे मरा हुआ नहीं समझना चाहिए । अन्यत्र श्रुतिवाक्य में भी कहा गया है । "उसका (स्वदेह, पुत्रदेहरूप द्विविध आत्मा मे) यह पुत्रदेहरूप दूसरा

१ सह । २ पुत्रमाविशतीति—सर्वस्य सकल्पस्य पुत्रे समर्पितत्वात् । यथोक्तप्राणात्मास्मीति सकल्पस्यैवावशिष्टत्वात्तत्सकल्पसस्कृतैर्वागादिभिर्देवं सर्वत्र प्रविशद्भि सह पिता प्रविशन् पुत्र प्रविशतीति व्यपदिश्यत इत्यभिप्रेत्याह—पुत्र व्याप्नोतीति । ३ इत्येव भावित —उक्तप्रकारकवासनावासितचित्त । ४ आधिदैविकप्राणानुगतत्वम् । ५ पुत्र प्रविशतीत्युक्ते । ६ पुत्रात्मत्वम् । ७ अत्रेति—कर्तव्यशेषसिद्धये यथाशक्त्यमुतिष्ठन्निति शेष । ८ मनुष्यलोकात् । ९ पुच्येते इति पाठ ।

"सोऽस्यायमितर आत्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते" इति ।

ᛃअथेदानीं पुत्रनिर्वचनमाह—स पुत्रो यदि कदाचिदनेन पित्राऽक्ष्णया 'कोणच्छिद्र-तोऽन्तराऽकृतं भवति कर्तव्यम् । तस्मात्कर्तव्यतारूपात्पित्राऽकृतात्सर्वस्माल्लोकप्राप्तिप्रति-बन्धरूपात्पुत्रो मुञ्चति मोचयति तत्सर्वं स्वयमनुतिष्ठन्पूरयित्वा । तस्मात्पूरणेन त्रायते स

स यदीत्यादिवाक्यमवतार्य व्याकरोति—अथेत्यादिना । अकृतमकृतादिति च च्छेदः । तस्मा-दिति प्रतीकमादाय व्याकरोति—पूरणेनेति । सर्वेव प्रपञ्चयति—इद तदिति । पुत्रपदनिरुक्ति निगमयति

आत्मा पुण्यकर्मों के लिए प्रतिनिधि बना दिया जाता है ।" इत्यादि ।

(पिता के पुत्रप्रवेशनिरूपण के पश्चात्) अब पुत्रशब्द की निरुक्ति की जाती है—'स' यानी वह पुत्र, 'यदि' यानी कदाचित् 'अनेन' उसके इस पिता द्वारा 'अक्ष्णया' अर्थात् असावधानी या प्रमाद से कोई कर्तव्यकर्म अननुष्ठित ही रह जाता है, 'तस्मात् सर्वस्मात्' यानी, पिता द्वारा अननुष्ठित लोकप्राप्ति के प्रतिबन्धरूप, उन सबका कर्तव्यरूप से पुत्र स्वयं अनुष्ठान करते हुए उसको पूरा करके

१ सोऽस्येति—द्वावात्मानौ भवतः स्वदेहः पुत्रदेहश्चेति तयोर्मध्येऽस्य पितुः स पूर्वोक्तः अयं प्रत्यक्ष आत्मा पुत्रदेहः पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्योऽग्निहोत्रादिभ्यः तन्निष्पादनार्थं प्रतिधीयते पित्रा यत्कर्तव्यं तत्करणाय प्रतिनिधित्वेन स्वगृहे स्थाप्यत इत्यर्थः । २. पितुः पुत्रप्रवेशनिरूपणानन्तरम् । ३ कोणेति—कस्मिंश्चित्क-र्मैकदेशे । कर्तव्यविस्मृतः सदकृतः भवतीत्यभिप्रेत्याह—अन्तराऽकृतमिति । प्रमादतोऽननुष्ठितं भवतीति यावत् । ४ उक्तपुत्रत्वम् । ५ अनुशिष्टत्वरूपम् ।

ᛃअथेत्यादि चैनमित्यादीत्यन्तभाष्यार्थसंग्राहकाणि दश वार्तिकानि प्रदर्श्यन्ते—"पुत्राधिकारतुल्यर्थमथशब्दः प्रयुज्यते ॥ कृतसंप्रत्तिक देवाः प्राणा वागादयः समम् । पितरं संविशन्त्युक्ता सदात्मभावभावितम् ॥ पृथिव्यै चैनमित्यादि तद्भाषष्टे यथा तथा । हेत्वर्थो वाऽथशब्दोऽत्र यस्मात्सत्रामितश्च तु ॥ तद्वियोगादतो देवा आवि-शन्ति यथोदिताः ॥ श्रुतिस्था या हि वाक्तस्याः पञ्चमीयं परा भवेत् । ततो लब्धात्मलाभायाः प्रथमा जन्महेतुत ॥ वाचं सम्भूत्य वाक्यस्था चिनुते भावनामयीम् । उपादानमतः श्रौती स्याद्वाणी भावनात्मनः ॥ न हि वस्तु स्वतः-सिद्धमन्यस्त्यात्मपरमात्मनः । सदेवेत्यादिकं शास्त्रं बाधितं स्यात्तथा सति ॥ धिया धियेति कार्यत्वं कृत्स्नस्य जगतः स्वयम् । श्रुत्यैव स्पष्टमाख्यातं नातोऽभिव्यक्तिरिष्यते ॥ आर्तश्रुतेश्च प्राणादि वाचारम्भणशास्त्रेन । माऽऽत्मव-त्स्यात्स्वतः सिद्धमुत्पत्त्यादिश्रुतेस्तथा ॥ कर्तृभिः क्रियते तस्माद्भावनाज्ञानकर्मभिः । ब्यज्ञात्मकमिदं विश्वं नातोऽभि-व्यक्तिरिष्यते ॥ ब्रह्म वेद तथात्मैव पुरुषश्चेति चाऽऽगमः । एवं सत्यर्थवानत्र स्यादन्यथा स्यादनर्थकः" ॥३२४—३३४॥ इति । अनुशिष्टपुत्रेणैतल्लोकजयिनं पितरमधिकृत्याथैनमित्यादिवाक्यं तत्राथशब्दार्थमाह—पुत्रेति । पुत्रस्य प्रकृतत्वादेनमिति तन्निर्देशे शङ्किते तन्निवृत्त्यर्थमथेत्युक्तमित्यर्थः ॥ प्रकरणविच्छेदायाथशब्द इति व्याख्यातमिदा-नीमेनमित्यादेरर्थमाह—कृतेति । तेषां मध्ये कस्याऽऽदौ प्रवेशः कस्य वा पश्चादित्यपेक्षायामाह—सममिति । उक्ता इत्यमृतत्वोक्तिः अन्यथा यत्वं विरुद्धमित्याशङ्क्याऽऽह—सदेति । दैवेषु सौत्रेषु प्राणेष्वात्मभावभावितमित्यर्थः ॥ एनं प्रविशन्तीत्युक्तं तत्प्रकारबुभुत्सायामाह—पृथिव्यै चेति । तदिति प्रवेशस्वरूपं परामृश्यते । अथैनमित्यादाव-थशब्दस्य प्रकरणविच्छेदकत्वमुक्त्वाऽर्थान्तरमाह—हेत्विति । हेतुरूपमर्थं स्फोरयति—यस्मादिति ॥ हेतुमनूद्यैन-मित्यादेरर्थं निगमयति—तदिति । कर्तव्यतासंकल्पस्तच्छब्दार्थः । यथोदिता इति अमृतानां प्राणानां परामर्शः ॥ वर्तमानस्थूलदेहं हित्वा स्थितमुपासकं दैवाः प्राणा आविशन्ति तत्प्रकारं च पृथिव्यै चेति व्याकरोतीत्युक्तमिदानीं

पितरं यस्मात्तस्मात्पुत्रो नाम । इदं तत्पुत्रस्य पुत्रत्वं यत्पितुश्छिद्रं पूरयित्वा त्रायते । स पितैवंविधेन पुत्रेण मृतोऽपि सन्नमृतोऽस्मिन्नेव लोके प्रतितिष्ठत्येवमसौ पिता पुत्रेणेमं मनुष्यलोकं जयति । न तथा विद्याकर्मभ्यां देवलोकपितृलोकौ स्वरूपलाभसत्तामात्रेण ।

—स पितेति । पुत्रेणैतल्लोकजयमुपसंहरति—एवमिति । यथोक्तात्पुत्राद्विद्याकर्मणोर्विशेषमाह—न तथेति । कथं तर्हि ताभ्यां पिता तौ जयति तत्राऽऽह—स्वरूपेति । तदेव स्फुटयति—न हीति । अनुशि-

पिता को मुक्त करा देता है। क्योंकि पिता के अवशिष्ट कर्तव्य की पूर्ति कर पिता का त्राण करता है इस निर्वचन से उसका नाम पुत्र पड़ा। पुत्र के पुत्रत्व होने में यही कारण है कि वह पिता की त्रुटि को, छिद्रप्रयुक्तप्रत्यवाय से पूरा करके उसकी रक्षा करता है। इस प्रकार के सुशिक्षित पुत्र से वह पिता मृत होकर भी अमृत हो जाता है, उसकी इसी लोक में प्रतिष्ठा होती है। इस प्रकार के सुशिक्षित पुत्र के द्वारा पिता इस मनुष्यलोक पर विजय प्राप्त करता है। विद्या और कर्म के द्वारा पुत्र की तरह वह देवलोक और पितृलोक पर उनके स्वरूपलाभ की सत्तामात्र से विजय प्राप्त नहीं करता। विद्या और कर्म (देव पितृलोक के) स्वरूपलाभ के सिवा पुत्र की तरह किसी व्यापारान्तर की अपेक्षा से लोकजय के कारण नहीं होते। फिर जिसने सम्प्रत्तिकर्म किया है, ऐसे (स्थूल से छूट कर

१ त्रुटिम् । २ छिद्रप्रयुक्तप्रत्यवायात् । ३ अनुशिष्टेन । ४ अनुशिष्टेन । ५ पुत्रवत् । ६ तर्हीति —तयोः पुत्रवल्लोकजयहेतुत्वानभ्युपगमे । ७ तदेवेति—तयोः स्वरूपलाभमात्रेण लोकजयहेतुत्वमेवेत्यर्थः ।

पृथिव्यग्न्योरेव दैववाक्त्वात्तयोरन्यतरस्यैव पञ्चमी प्रथमा चेत्याशङ्क्याऽऽह—श्रुतिस्थेति । या श्रुतिदृष्टा प्राकृतैरशास्त्रैः
४ पजनैरग्राह्या वाक्सूत्रसिद्धोपास्यभूमिरूपा तस्याः परस्तात्पृथिव्या अग्नेरिति चापादानपञ्चमी । आधाराधयभूतो-
पास्यसूत्रवायुपादपादानात्प्राप्तप्रकृतोपासकफलभूतत्वाच्च परस्ताद्दैवी वागिति प्रथमेत्यर्थः । मनोवत्सूत्रीभूतवाचो
प्राणवच्चोपासकप्रसिद्धिविषयत्वं वक्तुं हिशब्दः । कथं सूत्रवाचो नश्वरत्वं फलभूतोपासकत्वाच्च सिध्यति तत्राऽऽह—
जन्मेति ॥ लब्धं प्राप्तमात्मलाभस्वरूपसद्भावो यया यस्या वाचा तया तस्याः सकाशात्परा प्रथमा भवेत् ।
उपासकत्वाच्च सूत्रवाचो जन्मासिद्धिमाशङ्क्याऽऽह—वाचमिति । वाक्यीया सोऽभी वाच वाक्पादेव ज्ञात्वा व्यष्टा-
त्मरूर्ध्वमिरभुपासकोध्यानकाले वाच विलुप्तत्र श्रुतिसमुच्चय ध्येयसूत्रवागुपरादात ध्यातृवाचो अवरीरिद ध्यातृत्वाधिद-
ध्यस्तात्मभावमुपासक कारणं कार्यस्वाद्वागाविशति कारणे कार्यविशस्य युक्तत्वादित्यर्थः । ननु सूत्रस्य स्वतः सिद्धे-
स्तद्वागपि तथेति ध्यातृवाचोऽपि तदभिन्नाया जन्माभावादभिन्नघटदीपदीप्तिवदध्यारमोपाधिवशस्या वाचो ध्यक्ति-
मात्रमित्याशङ्क्य सूत्रादेः स्वतःसिद्धिं दूषयति—न हीति । सूत्रादि न स्वतःसिद्धमनात्मत्वाद्घटादिवदित्यर्थः ।
सूत्रादेरात्मवद्विद्यमानत्वे सदेव सोम्येदमित्यादिशास्त्रविरोधः स्यादिति विपक्षे दोषमाह—सदिति ॥ तस्य स्वतो-
ऽसिद्धत्वे हेत्वन्तरमाह—धियेति । स्रष्टाऽऽत्मनः समस्तस्य जगतो धिया धिया जनयते कर्मभिरिति श्रुत्या स्वय-
मेव कार्यत्वं मूलतो दर्शितं जगदात्मकं च सूत्रमतो न तत्स्वतःसिद्धं कार्यत्वाद्घटवदित्यर्थः । सूत्रादेः स्वतःसत्त्वा-
भावे ध्यातृवाचोऽपि तदभावात्तस्या न व्यक्तिरेव किंतु सूत्रवागधीनत्वेन जन्मेति फलितमाह—नेति ॥ वागादेः
स्वतोऽसिद्धौ हेत्वन्तरमाह—आर्तेति । प्राणादि न स्वतःसिद्धं स्यादिति सम्बन्धः ॥ स्वतोऽसिद्धत्वे सिद्धमर्थमाह
—कर्तृभिरिति । सूत्रवाचो ध्यातृवाचो व्यक्त्यनभ्युपगममुपसंहरति—नात इति ॥ आत्मैव स्वतःसिद्धो न
सूत्रादिरित्यत्रैवानेकागमानुग्रहं दर्शयति—ब्रह्मैवेति । पुरुष एवेदं सर्वमित्यस्य पूर्वाभ्यां समुच्चयार्थश्चकारः ।
द्वितीयस्तु हेत्वन्तरसमुच्चये । नोऽस्माकम् । अन्यथा कस्यचिदनात्मनोऽपि स्वतःसिद्धत्वे सति ॥

**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥ १८ ॥**

इस सम्प्रत्ति कर्म करनेवाले मे पृथिवी और अग्नि से आधिदैविक वाक् का आवेश होता है, क्योंकि पृथिवी और अग्निरूपा दैवी वाक्, समग्र वाक् की उपादान भूता है । अतः वही दैवी वाक् है, जिससे पुरुष जो भी बोलता है; वह अमोघरूप से वैसा ही हो जाता है ॥१८॥

---

न हि विद्याकर्मणी स्वरूपलाभव्यतिरेकेण पुत्रवद्व्यापारान्तरापेक्षया लोकजयहेतुत्वं प्रतिपद्येते । अथ कृतसंप्रत्तिक, पितरमेनमेते वागादयः प्राणा दैवा हैरण्यगर्भा अमृता अमरणधर्माण आविशन्ति[१] ॥१७॥

कथमिति वक्ष्यति पृथिव्यै चैनमित्यादि । एवं पुत्रकर्मापरविद्यानां मनुष्यलोकपितृलोकदेवलोकसाध्यार्थता प्रदर्शिता श्रुत्या स्वयमेवात्र[३] 'केचिद्वावदूकाः[४] श्रुत्युक्तविशेषार्थानभिज्ञाः सन्तः पुत्रादिसाधनानां मोक्षार्थतां वदन्ति । तेषां मुखापिधानं श्रुत्येदं कृतं जाया

---

द्दपुत्रेणैतल्लोकजयिनं पितरमधिकृत्यायंनमित्यादि वाक्यं तद्व्याकरोति—अथेति । 'पुत्रप्रकरणविच्छेदार्थोऽथशब्दः ॥ १७ ॥

आवेशप्रकारबुभुत्सायामुत्तरवाक्यप्रवृत्ति प्रतिजानीते—कथमित्यादिना । पृथिव्यै चेत्यादिवाक्यस्य व्यावर्त्यं पक्षं वृत्तानुवादपूर्वकमुत्थापयति—एवमिति । अत्रेति वैदिकानिर्धारयितुं सप्तमी । बहुवचनशीलत्वे हेतुः श्रुत्युक्तेति । मोक्षार्थता'मृणापाकरणश्रुतिस्मृतिभ्यां वदन्तीति शेषः । मीमांसकपक्षं प्रकृतश्रुतिविरोधेन दूषयति—तेषामिति । "कथमित्याशङ्क्य श्रुतेरादिमध्यावसानालोचनया पुत्रादेः

---

स्थित) उस पिता मे ये वागादिदेव "प्राणा अमृताः" हिरण्यगर्भसम्बन्धी अमरणधर्मा प्राण युगपत् प्रविष्ट होते हैं ॥१७॥

प्राण किस प्रकार प्रविष्ट होते हैं, उसे यह "पृथिव्यै चैनम्"—इत्यादि श्रुति बतलायेगी । इस प्रकार श्रुति ने स्वयं ही पुत्र, कर्म और अपराविद्या को मनुष्यलोक, पितृलोक, एवं देवलोक की साध्यार्थता दिखलाया । वैदिको मे कुछ मीमासक श्रुत्युक्त विशिष्टतात्पर्य से अनभिज्ञ पुत्रादिसाधनो की मोक्षार्थता बतलाते हैं । परन्तु श्रुति ने मीमासको का मुख बन्द कर दिया है, क्योंकि 'मेरी पत्नी हो' इत्यादि पाङ्क्तकाम्यकर्म से उपक्रम करके श्रुति पुत्रादिको का साध्यविशेष मे विनियोगरूप उपसहार करती है । इस से निष्कर्ष निकला कि ऋणत्रयश्रुति का अधिकारी अज्ञानी विषयी है,

---

१. स्थूल हित्वा स्थितम् । २ युगपत् । ३. वैदिकेषु मध्ये । ४. मीमासका । ५. तात्पर्येत्यर्थः । ६. अनेन वक्ष्यमाणप्रकारेणेति यावत् । ७ पुत्रेति—पुत्रस्य प्रकृतत्वादेनमिति तन्निर्देशे शङ्किते तन्निवृत्त्यर्थमथेत्युक्तमित्यर्थः । ८ पूर्वपक्षम् । ९. ऋणेति—"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते" इति श्रुत्या मनुष्या देवादीन्प्रति ऋणिनो गम्यन्ते । अपाकरणेति—"ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्य प्रजया पितृभ्य" इति श्रुते । अत्रानृणीभवतीति शेष । "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्ष तु सेवमानो व्रजत्यधः" ॥ इति स्मृते । १०. प्रकारमेवाकाङ्क्षापूर्वकं दर्शयति—कथमिति ।

मे स्यादित्यादि पाङ्क्तं काम्यं कर्मेत्युपक्रमेण पुत्रादीनां च साध्यविशेषविनियोगोपसंहारेण च। तस्मादृणश्रुतिरविद्वद्विषया न परमात्मविद्विषयेति सिद्धम्। वक्ष्यति च—किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति।

केचित्तु पितृलोकदेवलोकजयोऽपि पितृलोकदेवलोकाभ्यां व्यावृत्तिरेव। 'तस्मात्पुत्रकर्मापरविद्याभिः समुच्चित्यानुष्ठिताभिस्त्रिभ्य एतेभ्यो लोकेभ्यो व्यावृत्तः परमात्मविज्ञानेन मोक्षमधिगच्छतीति 'परम्परया मोक्षार्थान्येव पुत्रादिसाधनानीच्छन्ति। तेषामपि मुखापिधानायैवमेव श्रुतिरुत्तरा 'कृतसंप्रत्तिकस्य पुत्रिणः कर्मिणस्त्र्यन्नात्मविद्याविदः 'फल-

---

संसारफलत्वावगमान्न मुक्तिफलतेत्याह—जायेत्यादिना। पुत्रादीनां चेतिचकारादेतावान्वै काम इति मध्यसंग्रहः। यदुक्तमृणापाकरणश्रुतिस्मृतिभ्यां पुत्रादेर्मुक्तिफलतेति तत्राऽऽह—तस्मादिति। पुत्रादेः श्रुतं संसारफलत्वं परामृश्य तच्छब्दः। श्रुतिशब्दः स्मृतेरुपलक्षणार्थः। श्रुतिस्मृत्योरविरक्तविषयत्वे वाक्यशेषमनुकूलयति—वक्ष्यति चेति।

मीमांसकपक्षं निराकृत्य भर्तृप्रपञ्चपक्षमुत्थापयति—केचित्त्विति। मनुष्यलोकजयस्ततो व्यावृत्तिर्यथेत्यपेरर्थः। पुत्रादिसाधनाधीनतया लोकत्रयव्यावृत्तावपि कथं मोक्षः संपद्यते न हि पुत्रादीन्येव मुक्तिसाधनानि विरक्तत्वविरोधादित्याशङ्क्याऽऽह—तस्मादिति। पृथिव्यै चेत्याद्योत्तरा श्रुतिरेव मीमांसकमतवद्भर्तृप्रपञ्चमतमपि निराकरोतीति दूषयति—तेषामिति। कथं सा तन्मतं निराकरोतीत्याशङ्क्य श्रुतिं विशिनष्टि—कृतेति।

---

विरक्त नहीं। "जिनके लिए आत्मा ही लोक है; ऐसे हम, प्रजा का क्या करेंगे ?" इत्यादि वाक्यों को श्रुति चतुर्थ अध्याय में प्रतिपादन करेगी।

किन्हीं (भर्तृप्रपञ्चादि वादियों) का मत है कि पितृलोक और देवलोक पर विजय भी पितृलोक और देवलोक से निवृत्ति ही है। (पुत्रादिकों से लोकत्रय से निवृत्तिप्रयोजक होने से) इसलिए समुच्चय-पूर्वक अनुष्ठित पुत्र, कर्म और अपराविद्या द्वारा इन तीनों लोकों से निवृत्त हुआ पुरुष परमात्मज्ञान के द्वारा मोक्ष प्राप्त कर लेता है। इसलिए उनके विचार में पुत्रादिसाधन भी परम्परा से मोक्ष के ही लिए हैं। उनके मत का निराकरण करने के लिए यह आगे की श्रुति, जिसने पुत्र को भार संक्रामित कर दिया है; उस पुत्रवान्, कर्मकाण्डी एवं अन्नात्मविद्या के ज्ञाता को प्राप्त, फल बतलाने के लिए प्रवृत्त होती है।

---

१. इत्यादि—सर्वमपि पाङ्क्तं कर्म काम्यमेवेत्यर्थः। २. विनियोगः सम्बन्धः। ३. परमात्मेति—विदितवेद्यस्य पुत्रादिविषये निरपेक्षत्वात्तद्विषया ऋणश्रुत्यादयः कथं स्युरिति भावः। ४. परमात्मविदिति—विरक्तेति यावत्। ५. बृ० उ० ४।४।२२। ६. तस्मादिति—पुत्रादीनां लोकत्रयव्यावृत्तिप्रयोजकत्वादित्यर्थः। ७. परम्परयेति—पुत्रादिवशा लोकत्रयव्यावृत्तिद्वारा देहद्वयध्वस्तौ बन्धध्वस्तिरिति क्रमेण तेषां मोक्षफलत्वमिति भावः। ८. पुत्रसंक्रामितभारस्य। ९. फलेति—अन्नात्मोपासितुस्तदाप्तिः फलं पृथिव्यै चेत्यादि नोच्यते। तथा च कृतसंप्रत्तिकस्य पुत्रिणः कर्मिणस्तदुपासस्या तद्भावश्रुतिविरुद्धं भर्तृप्रपञ्चमतमिति भावः। १०. विरक्तत्वेति—वैराग्यसंन्यासप्रतिपादकश्रुतिविरोधादित्यर्थः।

प्रदर्शनाय प्रवृत्ता ।

न चेदमेव फलं मोक्ष इति शक्यं वक्तुम् । त्र्यन्नसंबन्धान्मेधातपःकार्यत्वाच्चान्नानां पुनः पुनर्जनयत इति दर्शनात् । यद्धैतन्न कुर्यात्क्षीयेत हेति च क्षयश्रवणाच्छरीरं ज्योतीरूपमिति च, कार्यकरणत्वोपपत्तेस्त्रयं वा इदमिति च नामरूपकर्मात्मकत्वेनोपसंहारात् । न चेदमेव साधनत्रयं संहतं सत्कस्यचिन्मोक्षार्थं कस्यचित्त्र्यन्नात्मफलमित्यस्मादेव वाक्यादवगन्तुं शक्यं पुत्रादिसाधनानां त्र्यन्नात्मफलदर्शनेनैवोपक्षीणत्वाद्वाक्यस्य ।

पृथिव्यै पृथिव्याश्चैनमग्नेश्च दैव्यधिदैवात्मिका वागेनं कृतसंप्रत्तिकमाविशति ।

त्र्यन्नात्मोपासितुस्तदाप्तिवचनविरुद्धं परमतमित्ययुक्त तदाप्तेरेव मुक्तित्वादित्याशङ्क्याऽऽह—न चेति । तथाऽपि कथं यथोक्तं फलं मोक्षो न भवति तत्राऽऽह—मेधेति । त्र्यन्नात्मनो ज्ञानकर्मजन्यत्वे हेतुमाह—पुन पुनरिति । सूत्राप्तेरमुक्तित्वे हेत्वन्तरमाह—यद्धेति । कार्यकरणवत्त्वम् तेरपि सूत्रभावो न मुक्तिरित्याह—शरीरमिति । अविद्यातत्कार्यद्वैतस्य त्र्यात्मकत्वेनोपसंहारात्तदात्मसूत्रभावो बन्धान्तर्भूतो न मुक्तिरिति युक्त्यन्तरमाह—त्रयमिति । नन्वविरक्तस्यान्नस्य सूत्राप्तिफलमपि कर्मादि विरक्तस्य विदुषो मुक्तिफलमिति व्यवस्थितिरित्याह—न चेदमिति । न हि पृथिव्यै चेत्यादिवाक्यस्यैकस्य सकृच्छ्रुतस्यानेकार्थत्वम् । भिद्यते हि तथा वाक्यमिति न्यायादित्यर्थः ।

पृथिव्यै चेत्यादिवाक्यावष्टम्भेन पक्षद्वय प्रतिक्षिप्य तदक्षराणि व्याचष्टे—पृथिव्या इति । *एनमित्युक्तमनूद्य व्याकरोति—एनमिति । कथ पुन सूत्रात्मभूता वागुपासकमाविशति तत्राऽऽह—सर्वेषा*

तथा यह त्र्यन्नात्मसूत्राप्तिरूप फल ही मोक्षफल है, ऐसा भी नही कह सकते; क्योकि इसका अन्नत्रय से सम्बन्ध है और अन्न मेधा और तप का कार्य है,। श्रुतिवाक्यानुसार "वह इन्हें बार-बार उत्पन्न करता है", "यदि वह इन्हें उत्पन्न न करे तो यह क्षीण हो जाय" इस प्रकार इनका नाश होना भी सुना गया है। (जो कृतक है, वह अनित्य है, उनकी प्राप्ति मोक्ष नही हो सकती) । एव शरीर और ज्योतिरूप बतलाकर इनमे कार्यत्व और करणत्व की सभावना दिखलायी गयी है। और (षष्ठ ब्राह्मण के प्रथम मन्त्र मे) "त्रयं वा इदम्" ऐसा कहकर नाम-रूप-कर्मात्मकरूप से इनका उपसहार किया है। इस वाक्य का ऐसा भी अर्थ नही जाना जाता कि ये साधनत्रय मिलकर भी किसी के मोक्ष के लिए होते हैं और किसी के लिए त्र्यन्नात्मरूप फल वाले होते हैं क्योकि पुत्रादिसाधनो का त्र्यन्नात्म-फल दिखाते हुए ही यह वाक्य समाप्त होता है।

"पृथिव्यै चैनमग्नेश्च" यानी पृथिवी और अग्नि के साथ (पुत्रसक्रामितभाररूप) सप्रत्तिकर्म करने वाले मे 'दैवी' अर्थात् आधिदैविकी वाक् का आवेश होता है। (आधाराधेयभूत) पृथिवी

१ त्र्यन्नात्मसूत्राप्तिरूपम् । २ जनयत इति—नहि कृतकस्य मोक्षत्वमनित्यत्वप्रसगादिति भाव । ३ इति चेति—इति वाक्येन त्र्यन्नात्मनो जगद्रूपस्य विनाशश्रवणात् च न तत्प्राप्तिर्मुक्तिरित्यर्थ । ४ बृ० उ० १।६।१ । ५. पृथिव्यै चेत्यादिवाक्यात् । ६. पृथिव्या अग्नेश्च सकाशादित्यर्थ । आधाराधेयभूतपृथिव्यग्निरूपसूत्रवायुपादानिकेति यावत् । ७ मुक्तित्वादिति—तद्धेतुकर्मादिस्तद्धेतुतेति कुतस्तदाप्तिवचनविरुद्ध परमतमिति शेष । ८. आदिना विद्यापुत्रौ । ९. एकस्यानेकार्थत्वे ।

**दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनाऽऽनन्द्येव भवत्यथो न शोचति ॥ १६ ॥**

द्युलोक[1] और आदित्य से इस पुरुष में दैव मन का आवेश होता है। स्वभाव से निर्मल होने के कारण दैव मन वही है, जिस मन से वह सुखी होता है और कभी शोक नहीं करता ॥ १६ ॥

---

सर्वासां हि वाच उपादानभूता दैवी वाक्पृथिव्यग्निलक्षणा। सा ह्याध्यात्मिकासङ्गादिदोषनिरुद्धा विदुषस्तद्दोषापगम आवरणभङ्ग इवोदकं प्रदीपप्रकाशवच्च व्याप्नोति। तदेतदुच्यते पृथिव्या अग्नेश्चैनं दैवी वागाविशतीति। सा च दैवी वागनृतादिदोषरहिता शुद्धा यया वाचा दैव्या यद्यदेवाऽऽत्मने परस्मै वा वदति तत्तद्भवत्यमोघाऽप्रतिबद्धाऽस्य वागभवतीत्यर्थः ॥ १८ ॥

तथा दिवश्चैनमादित्याच्च दैवं मन आविशति। तच्च दैवं मनः स्वभावनिर्मलत्वात्। येन मनसाऽसावानन्द्येव भवति सुख्येव भवत्यथो अपि न शोचति शोकादिनिमित्तासंयोगात् ॥ १६ ॥

---

ह्योति। तर्हि तयोरभेदादविदुषोऽपि व्याप्तैव वागिति विदुषि विशेषो नास्तीत्याशङ्क्याऽऽह—सा हीति। दैव्या वाचि दोषविगममुत्तरवाक्येन(ण) साधयति—सा चेति। विद्वाच. स्वरूपं संक्षिपति—अमोघेति ॥ १८ ॥

वाचि दर्शितन्यायं मनस्यतिदिशति—तथेति। यन्मन स्वभावनिर्मलत्वेन दैवमित्युक्तं तदेव विशिनष्टि—येनेति। असाविति विद्वदुक्ति। येन मनसा विद्वान् शोचत्यपि तद्धेत्वभावात्तद् नमिति पूर्वेण संबन्धः ॥ १६ ॥

---

और अग्निरूपा दैवीवाक् सभी की वाणी की उपादानभूता है। वह आधिदैविकी वाक् (अविद्वानों में) आध्यात्मिक आसक्ति आदि दोषों से आवृत है। विद्वान् के उस आसक्तिरूप दोष के निवृत्त हो जाने पर वाक् उसी प्रकार आविष्ट हो जाती है, जैसे आवरण के नाश हो जाने पर जल और प्रदीप का प्रकाश व्याप्त हो जाते हैं। इसी से (यथोक्त व्यापकत्व) यह कहा है कि इसमें पृथिवी और अग्नि के साहचर्य से दैवी वाक् का प्रवेश होता है। एवं वह दैवीवाक् असत्य आदि दोषों से विमुक्त और शुद्ध होती है, जिस दैवी वाक् से वह अपने या दूसरे के लिए जो-जो कहता है, वही-वही हो जाता है। अर्थात् इस विद्वान् की वाणी निष्फल न जाने वाली और अमोघ होती है ॥१८॥

द्युलोक और आदित्य से इसमें दैव मन प्रविष्ट हो जाता है। स्वभाव से ही निर्मल दैव मन वही है, जिस मन से 'आनन्द्येव भवति' अर्थात् सुखी ही होता है और शोकादिकों के हेतुओं का सयोग न होने से कभी शोक भी नहीं करता ॥१६॥

---

१. आधिदैविकी वाक्। २ अविदुषीति शेष। ३ यथोक्तव्यापकत्वे। ४. सर्ववाचस्तदुपादानत्वे।

**अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः संचरँश्चासंचरँश्च न व्यथतेऽथो न रिष्यति स एवंवित्सर्वेषां भूतानामात्मा भवति यथैषा**

जल और चन्द्रमा से इस पुरुष मे दैव प्राण आविष्ट होता है। सुख-दुःखादि से मुक्त होने के कारण वही दैव प्राण है। (जो समष्टि और व्यष्टिरूप से प्राणियो मे) सचार करता हुआ और संचार न करता हुआ व्यथित नही होता और न नष्ट ही होता है। वह इस प्रकार जानने वाला पुरुष समस्त

---

तथाऽद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति। स वै दैवः प्राणः किंलक्षण इत्युच्यते—यः संचरन्प्राणिभेदेष्वसंचरन्समष्टिव्यष्टिरूपेणाथवा संचरञ्जङ्गमेष्वसंचरन्स्थावरेषु न व्यथते न दुःखनिमित्तेन भयेन युज्यते। अथो अपि न रिष्यति न विनश्यति न हिंसामापद्यते। स यो यथोक्तमेवं वेत्ति त्र्यन्नात्मदर्शनं स सर्वेषां भूतानामात्मा भवति [१]सर्वेषां भूतानां प्राणो भवति सर्वेषां भूतानां [२]मनो भवति सर्वेषां भूतानां वाग्भवतीत्येवं सर्वभूतात्मतया [३]सर्वज्ञो भवतीत्यर्थः। सर्वकृच्च। [४]यथैषा [५]पूर्वसिद्धा हिरण्यगर्भदेवतैवमेव नास्य सर्वज्ञत्वे सर्वकृत्त्वे वा क्वचित्प्रतिघातः। स इति दार्ष्टान्तिकनिर्देशः। किंच यथैतां

---

मनस्युक्तं न्यायं प्राणेऽतिदिशति—तथेति। तमेव दैवं प्राणं प्रश्नपूर्वकं प्रकटयति—स वा इति। एवंविदित्यादि व्याचष्टे—स य इति। विविरत्र साभार्थः। न केवल यथोक्तमेव विद्याफल किंतु फलान्तरमप्यस्तीत्याह—किंचेति।

---

जल और चन्द्रमा से इसमे दैव प्राण का प्रवेश हो जाता है। उस दैव का सामान्यस्वरूप क्या है, इसकी विवेचना की जाती है। जो समष्टि और व्यष्टिरूप से प्राणियो मे सञ्चार और असञ्चार करता हुआ अथवा चेतन मे सञ्चार करता हुआ और जड मे सचार न करता हुआ 'न व्यथते' अर्थात् दुःखनिमित्तक भय से युक्त नही होता, 'अथो न रिष्यति' अर्थात् विनाश या हिंसा को प्राप्त नही होता। जो इस उपरोक्त त्र्यन्नात्मदर्शन को जानता है; वह समस्त भूतो का आत्मा हो जाता है। (आत्मा शब्द के अर्थ को ही कहते हैं—) वह समस्त भूतो का प्राण हो जाता है, समस्त भूतो का मन हो जाता है, समस्त भूतो का वाक् हो जाता है। भावाशय यह है कि वह इस प्रकार सर्वभूतात्मरूप से सर्वज्ञ हो जाता है, तथा सब का कर्ता भी हो जाता है। जिस प्रकार यह पूर्वसिद्ध हिरण्यगर्भ देवता है, उसी प्रकार इसके सर्वज्ञत्व और सर्वकर्तृत्व मे भी कभी व्याघात नही होता। श्रुतिवाक्य मे 'स' यह दार्ष्टान्तिक निर्देश है। इसके अतिरिक्त जिस प्रकार इस हिरण्यगर्भ

---

१. आत्मशब्दार्थमेवाह—सर्वेषा भूतानां प्राणो भवतीति। २ न केवल विद्वान् प्राण एव सर्वभूतानामपितु मन आद्यात्मापि इत्याह—मन इति। वाङ्मनसे श्रोत्रादीनामुपलक्षणार्थे। ३ सर्वोपादानत्वेन सर्वात्मत्वमुक्त्वा तत्फल सर्वज्ञत्वादिकमाह—सर्वज्ञ इति। ४ प्रस्तुतोपास्ते फलान्तरमाह—यथेति। ५ पूर्वेति—पूर्वजन्माभिनिर्वृत्ता जन्मान्तरीयज्ञानकर्मफलभूता सर्गादौ सत्यलोक एव देवभावमुपगतेति यावत्।

देवतैव्ँस यथैतां देवताँसर्वाणि भूतान्यवन्त्येवँ हैवंविदँसर्वाणि भूतान्यवन्ति । यदु किंचेमाः प्रजाः शोचन्त्यमैवाऽऽसां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति ॥ २० ॥

प्राणियों का आत्मा होता है। जैसा यह हिरण्यगर्भ देवता है, वैसा ही वह अपरिच्छिन्न हो जाता है। जैसे समस्त प्राणी इस हिरण्यगर्भ देवता का पालन करते हैं, वैसे ही इस उपासक का पालन सभी भूत करते हैं। ये प्रजाएँ जो कुछ भी शोक करती हैं; वह शोकजन्य दुःख इन प्रजाओं के साथ ही रहता है। उस विद्वान् को तो पुण्य ही प्राप्त होता है क्योंकि देवताओं के पास पाप नहीं जाता ॥ २० ॥

हिरण्यगर्भदेवतामिज्यादिभिः सर्वाणि भूतान्यवन्ति पालयन्ति पूजयन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्तीज्यादिलक्षणां पूजां सततं [1]प्रयुञ्जत इत्यर्थः।

अथेदमाशङ्क्यते—सर्वप्राणिनामात्मा भवतीत्युक्तं तस्य च सर्वप्राणिकार्यकरणात्मत्वे सर्वप्राणिसुखदुःखैः संबध्येतेति [2]। तन्न। अपरिच्छिन्नबुद्धित्वात्। परिच्छिन्नात्मबुद्धीनां ह्याक्रोशादौ दुःखसंबन्धो दृष्टोऽनेनाहमाक्रुष्ट[3] इति। अस्य तु सर्वात्मनो य आक्रुश्यते यश्चाऽऽक्रोशति तयोरात्मत्वबुद्धिविशेषाभावान्न तन्निमित्तं दुःखमुपपद्यते[5]।

सर्वभूतात्मत्वे तद्दोषयोगात्प्राजापत्यं पदमनादेयमित्युत्तरवाक्यव्यावर्त्यामाशङ्कामाह—अथेति। सर्वप्राणिसुखदुःखैरित्यस्मादूर्ध्वं मशब्दोऽध्याहर्तव्यः। सर्वात्मके विदुष्येकैकभूतनिष्ठदुःखयोगो नास्तीत्युत्तरमाह—तन्नेति। तदेव प्रपञ्चयति—परिच्छिन्नेति। अपरिच्छिन्नधीत्वेऽपि सूत्रात्मके विदुषि

देवता का समस्त प्राणी 'अवन्ति' यानी यागादि के द्वारा पालन या पूजन करते हैं, इसी प्रकार ऐसी पूजा करने वाले का समस्त प्राणी "अवन्ति" यानी यागादिरूप पूजा का सर्वभोगों के द्वारा उपयोग करते हैं।

यहाँ यह शङ्का होती है—पूर्व श्रुतिवाक्य में प्रतिपादित किया गया है, वह समस्त प्राणियों का आत्मा हो जाता है। इस प्रकार तो समस्त प्राणियों के देह और इन्द्रियरूप हो जाने से उनका सब भतों के सुख-दुःख से सम्बन्ध होने लगेगा (यह अनर्थ होने लगेगा)। (इस शङ्का का समाधान किया जाता है—) ऐसा कहना ठीक नहीं क्योंकि वह अपरिच्छिन्नबुद्धि वाला है। जिनकी परिच्छिन्न आत्मबुद्धि होती है, उन्हीं को दुर्वचनादि कहने पर 'इनसे मैं दुर्वचन कहा गया हूँ' दुःख-सम्बन्ध होते देखा

१ प्रयुञ्जत इति—पूर्वसिद्धदेवतामिव तद्भावसाक्षात्कारवन्तमपि पुरुषं सर्वावस्थासु सर्वाणि भूतानि सर्वभोगैरवन्तीति भावः। २ संबध्येतेति—तथा चैव वित्ताऽनर्थायैव स्यादिति शेषः। ३ शप्तः। ४ विदुषः। ५ उपपद्यत इति—सर्वात्मके विदुषि नैकैकभूतस्थसुखदुःखादिसंबन्ध इति भावः। ६ अपरिच्छिन्नबुद्धित्वप्रयुक्तदुःखादिसंसर्गराहित्यमेव।

मरणदुःखवच्च निमित्ताभावात्। यथा हि कस्मिंश्चिन्मृते कस्यचिद्दुःखमुत्पद्यते ममासौ पुत्रो भ्राता चेति पुत्रादिनिमित्तम्। [1]तन्निमित्ताभावे तन्मरणदर्शिनोऽपि नैव दुःखमुपजायते। [2]तथेश्वरस्याप्यपरिच्छिन्नात्मनो ममत्वतादिदुःखनिमित्तमिथ्याज्ञानादि[3]दोषाभावान्नैव दुःखमुपजायते। [4]तदेतदुच्यते—यदु किंच [5]यत्किंचेमाः प्रजाः शोचन्त्यमेव सहैव [6]प्रजाभिस्तच्छोकादिनिमित्तं दुःखं [7]संयुक्तं भवत्यासां प्रजानां परिच्छिन्नबुद्धिजनितत्वात्[8]। सर्वात्मनस्तु केन सह किं संयुक्तं भवेद्वियुक्तं वा। अमुं तु प्राजापत्ये पदे वर्तमानं पुण्यमेव

---

सर्वभूतान्तर्भावात्तद्दुःखादियोगः स्यादेवेत्याशङ्क्य जठरकुहरविपरिवर्तिक्रिमिदोषैरस्माकमसंसर्गवत्प्रकृतेऽपि संभवात्मैवमित्यभिप्रेत्याऽऽह—मरणेति। नोपपद्यते विदुषो दुःखमिति पूर्वेण संबन्धः। सूत्रात्मनः स्वांशदृष्टान्तं विवृणोति—यथेति। मैवमस्य स्वहस्ताद्यभिमानवतस्तद्दुःखादियोगवद्विदुषः सूत्रात्मनः स्वांशभूतसर्वभूताभिमानिनस्तद्दुःखादिसंसर्गः स्यादित्याशङ्क्य दार्ष्टान्तिकमाह—तथेति। ममत्ववतादीत्यादिपदेनाहंताग्रहणं तदेव दुःखनिमित्तं मिथ्याज्ञानम्। आदिशब्देन रागादिरुक्तः। उक्तेऽर्थे श्रुतिमवतारयत्याचष्टे—तदेतदिति। शुभमेव गच्छतीति संबन्धः। फलरूपेण वर्तमानस्य कथं कर्मसंबन्धः स्यादित्या-

---

गया है। इस विद्वान् सर्वात्मा को तो, जिसे दुर्वचन कहा जाता है अथवा जो दुर्वचन कहता है, उन दोनों के प्रति आत्मत्वबुद्धि में कोई विशेषभेद न होने के कारण उसे तन्निमित्तक दुःख होना सिद्ध नहीं होता। जिस प्रकार निमित्त के अभाव में मरणदुःख भी नहीं होता। जिस प्रकार लोकव्यवहार में किसी के मर जाने पर किसी को "यह मेरा पुत्र है, यह मेरा भाई है" इस प्रकार चिन्ता कर पुत्रादिनिमित्तक दुःख उत्पन्न होता है। मदीयत्व के निमित्त बिना उसके मरण के देखने वाले को भी कभी दुःख नहीं होता। उसी प्रकार अपरिच्छिन्नस्वरूप ईश्वरीभूत विद्वान् को भी ममता-स्वतादि दुःख के निमित्त और मिथ्याज्ञानादि दोष के अभाव से कभी भी दुःख नहीं होता। उक्त युक्तिकलाप को हृदय में रखते हुए श्रुति कहती है। इसके अतिरिक्त जो कुछ भी ये प्रजाएँ (त्रिविध दुःखप्रयुक्त) शोक करती हैं वह शोकादिजनित दुःख उन स्वात्मा प्रजाओं के साथ संयुक्त रहता है, क्योंकि वह दुःख इन प्रजाओं की परिच्छिन्न बुद्धि में उत्पन्न होता है। किन्तु जो सर्वात्मा है, वह उस दुःख के लिए किसके साथ संयुक्त रहेगा और किसके साथ वियुक्त रहेगा? इस प्राजापत्य पद पर विद्यमान विद्वान् को तो

---

१ मदीयं वेति यावत्। २ अपरिच्छिन्नस्वरूपस्येश्वरीभूतस्य विदुषः। ३. दोषाभावादिति—ननु मैवं दृष्टान्तेन सूत्रभूतस्य विदुषोऽपि स्वांशभूतसर्वप्राण्यभिमानित्वमुक्तमिति चेन्न। तस्य कृत्स्नाभिमानित्वान्नास्मदाद्यभिमानता। न च तस्य कृत्स्नाभिमानित्वे कृत्स्नदुःखादि तादवस्थ्यमिति वाच्यम्। ईश्वरत्वाच्च तस्यास्मद्दुःखैर्न स्यात् समागमः। न च तस्येश्वरत्वेऽप्यस्मदाद्यभिमानित्वादस्मदादिवद्दुःखादिसंगतिः स्यादेवेति वाच्यम्। अत्रानुमानेऽनीश्वरत्वस्य उपाधित्वात्। अस्मादृ दुःखसप्राप्तिरनवयक्तैश्च हि। इति नोक्तोपाधः साध्याव्यापकत स्य यत्र विस्तरः। ४ तदेतदुच्यत इति—उक्तयुक्तिकलापं हृदि निधाय श्रुत्योच्यत इत्यर्थः। प्रजागतदुःखस्य प्रजापतिरूपे विदुषि प्रतिषेधकमिदं वाक्यमिति यावत्। ५ त्रिविधदुःखप्रयुक्तमवसीदन्ति। ६ स्वात्मभिः। ७ संयुक्तमिति—प्रजाभिः स्वगतं दुःखं स्वात्मनैवोपभुज्यत इति यावत्। अन्यथा कृतनाशादिप्रसङ्गः स्यादित्यवधारणाय। ८ दुःखस्येति शेषः। ९ दोषा दुःखादयः। १० उक्तेऽर्थे इति—प्रजासु दुःखं प्रजापतिरूपे विदुषि न संसृज्यत इत्युक्तेऽर्थ इत्यर्थः।

**अथातो व्रतमीमाꣳसा, प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो**

अब यहां से व्रत का विचार किया जाता है। प्रजापति ने कर्म के साधनभूत वागादि करणों की सृष्टि की। सृष्टि हो जाने पर वे सभी कर्म परस्पर संघर्ष करने लगे। वाक् ने व्रत लिया कि मैं बोलती ही रहूँगी। मैं देखता ही रहूँगा, ऐसा नेत्र ने व्रत लिया और मैं सुनता ही रहूँगा, ऐसा श्रोत्र ने व्रत लिया। ऐसे ही अपने-अपने कर्मानुसार अन्य सभी इन्द्रियों ने भी व्रत लिया। तब सबके मारक मृत्यु ने परिश्रम

---

शुभमेव फलमभिप्रेतं पुण्यमिति¹। निरतिशयं हि तेन पुण्यं कृतं तेन तत्फलमेव गच्छति न ह वै देवान्पापं गच्छति पापफलस्यावसराभावात्पापफलं² दुःखं न गच्छतीत्यर्थः³ ॥ २० ॥

त एते सर्व एव समाः सर्वेऽनन्ता⁴ इत्यविशेषेण वाङ्मनःप्राणानामुपासनमुक्तं नान्यतमगतो विशेष उक्तः। किमेवमेव⁵ प्रतिपत्तव्यं किं वा विचार्यमाणे कश्चिद्विशेषो

---

शङ्कापाऽऽह—फलमिति। उक्तमेव व्यनक्ति—निरतिशयं होति⁶ ॥ २० ॥

अथेत्यादिवाक्यस्य वक्तव्यशेषाभावादानर्थक्यमाशङ्क्य व्यवहितोपासनानुवादेन⁷ तदङ्गव्रतविधानार्थमुत्तरं वाक्यमित्यानर्थक्यं परिहरति—त एत इत्यादिना। व्रतमित्यवश्यानुष्ठेयं कर्मोच्यते। जिज्ञासायाः सत्यमथशब्दार्थं। उपासनोक्त्यानन्तर्यमथशब्दार्थं कथयति—अनन्तरमिति। विचारणामेव

---

'पुण्यमेव' अर्थात् शुभ ही प्राप्त होता है। पुण्यफल अभीष्ट है, न कि कर्म। इसलिये उसने अत्यन्त-पुण्य किया हुआ होता है, जिसका उसे फल प्राप्त होता है। 'न ह वै देवान्पाप गच्छति' अर्थात् पापफल-रूप अहम्ममाभिमान के अवसर के अभाव से पापफल यानी दुःख प्राप्त नहीं होता ॥२०॥

'वे ये सभी समान हैं और सभी अनन्त हैं' इस प्रकार अनन्तत्व तुलना द्वारा वाक्, मन और प्राण की उपासना बतलायी गयी, उनमें एक-एक की कोई विशिष्टता नहीं बताई गयी। सो क्या इस तरह ही अवबोध करना चाहिए अथवा विचार करने पर किसी विशेष व्रत-उपासना के लिए ज्ञान होना शक्य है? ऐसी जिज्ञासा होने पर कहा जाता है।

'अथातो' अर्थात् उक्त जिज्ञासा होने के पश्चात् व्रतमीमांसा अर्थात् उपासना कर्म विचार की प्रवृत्ति होती है। इन प्राणों में से किस प्राण के कर्म को व्रतरूप में धारण करना चाहिए, इसकी मीमांसा

---

१ न तु कर्मेत्यर्थः। २ अवसराभावादिति—अहं ममाद्यभिमानाभावादिति यावत्। ३. दुःख नेति—न हि शैत्यमग्निं स्पृशति तस्योष्णस्वाभाव्यात् तथा पाप्मनो देवता न स्पृशन्ति तस्याः सुकृतफलत्वादिति भावः। ४. अनन्तत्वतौल्येन। ५ किमेवमेवेति—त एत इत्यादिवाक्याद् वाङ्मनःप्राणानां साम्यनिश्चये वागादीनां विकल्पेन ध्याने प्राप्ते किं त्रयमपि तत्तुल्यं ध्येयं किं वा विचार्य प्राण एव प्राधान्येन ध्येय इति निश्चेतुमुत्तरं वाक्यमित्यर्थः। ६. उक्तमेवेति—सूत्रीभूतः विद्वान् सुखमेव प्राप्नोति न दुःखमित्युक्तमेवार्थमित्यर्थः। ७ पूर्वव्यवहितेति यावत्।

भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्ध तस्माच्छ्राम्यत्येव वाक्श्राम्यति चक्षुः श्राम्यति श्रोत्र-मथेममेव नाऽऽप्नोद्योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे । अयं वै नः श्रेष्ठो यः संचरꣳश्चासंच-रꣳश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव

होकर उन्हे पकड लिया और उनमे व्याप्त हो गया। उनमे व्याप्त होकर मृत्यु ने उनका अवरोध किया अर्थात् अपने-अपने कर्मों से च्युत कर दिया। इसीलिये भाषण मे प्रवृत्त हुई यह वाणी श्रान्त हो जाती हैं। देखने मे प्रवृत्त हुआ नेत्र श्रान्त होता ही है और शब्द सुनने मे श्रोत्र भी श्रान्त हो जाता है। पर यह जो मध्यम प्राण है, केवल इसी मे वह मृत्यु व्याप्त न हो सका। इस अद्‌भुत घटना मे इन्द्रियो ने कभी न थकने वाले उस प्राण को जानने का निश्चय किया। निश्चय हम सब में यही श्रेष्ठ है, जो सचार करता हुआ और न करता हुआ कभी थकता नही और न क्षीण ही होता है। अस्तु हम सब भी

---

व्रतमुपासनं प्रति प्रतिपत्तुं शक्यत इत्युच्यते—

'अथातोऽनन्तर व्रतमीमांसोपासनकर्मविचारणेत्यर्थ । एषां प्राणानां कस्य कर्म

---

स्फोरयति—एषामिति। प्रवृत्तायां मीमासायां प्राणव्रतमभग्नत्वेन धारणीयमिति निर्धारणार्थमाख्यायिका

---

प्रारम्भ की जाती है। प्रवृत्त मीमासाविषयक आख्यायिका मे प्रजापति ने निश्चय ही प्रजा की सृष्टि कर 'कर्माणि' वागादिकरणो की 'ससृजे' यानी सृष्टि की। यहाँ 'ह' शब्द प्रसिद्धि के अर्थ मे है। कर्म प्रयोजक एव वागादि के करण होने के कारण उन्हें 'कर्म' कहा गया है। पुन उन उत्पन्न इन्द्रियो ने

---

१. इत्युच्यत इति—अथेत्यादिवाक्यस्य तात्पर्यान्तरमुक्तं वार्तिके। तथाहि—"सर्वात्मकर्मसन्यासात्प्राप्ते नैष्कर्म्य-रूपके। प्राणव्रतविधानार्थं परो ग्रन्थोऽवतार्यते" ॥३६४॥ इति। सम्प्रत्तिकाले सर्वस्य सकार्यस्य कर्मणस्त्यागाभि-धाने प्राप्ते प्राणोपास्त्यङ्गस्य प्राणव्रतस्य प्रतिप्रसवायमुत्तर वाक्यमित्यर्थ। कृतसम्प्रत्तिकोऽपि जीवेच्चेत्तदोपास-नस्य त्यक्तत्वेऽपि तदङ्गभूतमिद प्राणव्रत तु पुनरप्युपादेयमित्यर्थ ॥ ननु स्वतन्त्रस्यैव प्राणव्रतस्य विधायकमिद वाक्य न प्राणोपास्त्यङ्गस्य प्रापकाभावादिति चेन्नेत्याह— "बहूक्त्यैव तु सर्वेषां सिद्ध पूर्वमुपासनम्। स यो हैता-निति ततो नेद पूर्वमपेक्षत" ॥३६५॥ बहूक्त्येति। प्राणव्रतस्य स्वातन्त्र्यशङ्कानिरासार्थस्तुशब्द। स यो हैताम-नन्तानिति बहुवचनाद्वागादित्रयोपासन सिद्धे तेनैव प्राणोपासनस्यापि सिद्धत्वात्प्राणोपासक प्रति प्राणव्रतवाक्य स यो हैतानित्यादिपूर्ववाक्यमपेक्षतेऽतो नास्य स्वतन्त्रव्रतविधायितेति प्रकृतप्राणध्यानधर्म (अङ्ग) विध्यर्थमेतदित्यर्थ ॥ नेद यथोक्तमेव व्रतविधायकम् [इद व्रतविधायक (तद्विधायित्वे नाभिमत) वाक्य यथोक्तमेव न यथा त्वयोक्त तथैव नेत्यर्थ। प्राणोपासक प्रति प्राणोपास्त्यङ्गस्य प्राणव्रतस्य विधायकमेव नेति यावत्] वाङ्मनसयोरुपास्यत्व-निवृत्तिपरत्वादित्याशङ्क्याऽऽह यथैव वार्तिके—'वाक्स्यान्तयो' स्वरूपोक्तिर्यथैव स्यात्पुरोदिता। तयोरुपासन नो चेत्प्राणवत्स्यादिवक्षितमिति' ॥३६६॥ वागिति। प्राणोपसर्जनत्वेन तयोर्ध्यानमुपेयमन्यथा तदुक्तिर्वैयर्थ्या-दित्यर्थ ॥ २ उक्तजिज्ञासाया सत्त्वात्। ३ प्रवर्तत इति शेष। ४ निर्धारणेषष्ठीयम्।

सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभव<sup></sup>स्तस्मादेत एतेनाऽऽख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य उ हैवंविदा स्पर्धतेऽनुशुष्यत्यनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २१ ॥

इस ज्येष्ठ प्राण के रूप हो जायें। ऐसा निश्चय कर वे वागादि सभी इन्द्रियाँ इसी मुख्यप्राण के रूप हो गयी। इसीलिये वे इसी के नाम से "प्राण" ऐसा कही जाती हैं। अतएव जो कोई ऐसा जानता है, वह विद्वान् जिस कुल में उत्पन्न होता है; वह कुल उस विद्वान् के नाम से पुकारा जाता है और जो इस विद्वान् से संघर्ष करता है; वह सूख जाता है और सूखकर अन्त में मर जाता है। यही अध्यात्म प्राणदर्शन है ॥ २१ ॥

---

व्रतत्वेन धारयितव्यमिति मीमांसा प्रवर्तते । [1]तत्र प्रजापतिर्ह हशब्दः किलार्थे प्रजापतिः किल प्रजाः सृष्ट्वा कर्माणि करणानि वागादीनि कर्मार्थानि हि तानीति कर्माणीत्युच्यन्ते ससृजे सृष्टवान्वागादीनि करणानीत्यर्थः । तानि पुनः सृष्टान्यन्योन्येनेतरेतरमस्पर्धन्त स्पर्धां संघर्षं चक्रुः । कथम् । वदिष्याम्येव स्वव्यापाराद्वदनादनुपरतैवाहं स्यामिति वाग्व्रतं दध्रे धृतवती । यद्यन्योऽपि मत्समोऽस्ति स्वव्यापारादनुपरन्तुं शक्तः सोऽपि दर्शयत्वात्मनो

---

प्रणयति—तत्रेत्यादिना । कथं वागादिषु करणेषु कर्मशब्दप्रवृत्तिरित्याशङ्क्याऽऽह—कर्मार्थानीति । तदीयसृष्टे[2]रुपयोगमुपदर्शयितुं [3]भूमिकां करोति—तानीति । स्पर्धाप्रकारं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना । यथाकर्मं स्वीयं स्वयं व्यापारमनुसृत्य व्रतं दध्रिरे वागादीनि करणानीत्यर्थः ।

---

'अन्योन्येन' अर्थात् एक दूसरी से 'अस्पर्धन्त' यानी स्पर्धा या संघर्ष किया। स्पर्द्धा किस तरह की ? वाक् ने ऐसा व्रत 'दध्रे' यानी धारण किया कि 'वदिष्याम्येव' अर्थात् मैं अपने उच्चारणरूप व्यापार से विमुक्त होऊँगी ही नहीं। भाव यह है कि यदि मेरे समान कोई दूसरा भी अपने व्यापार से अविमुक्त रहने की सामर्थ्य रखता हो, तो वह भी अपना पराक्रम दिखलावे। तथा 'मैं देखता ही रहूँगा' ऐसा चक्षु इन्द्रिय ने, और 'मैं सुनता ही रहूँगा' ऐसा श्रोत्र इन्द्रिय ने व्रत धारण किया। इसी प्रकार अन्य 'कर्माणि' यानी इन्द्रियों ने भी 'यथाकर्म' अर्थात् जिसका जो-जो कर्म था, उसी के अनुसार व्रत धारण किया। 'तानि' यानी उन इन्द्रियों को 'मृत्यु' यानी मारक यम ने 'श्रमः' अर्थात् श्रमरूपी होकर 'उपयेमे' अर्थात् पकड़ा यानी अपने कर्मों से प्रच्युत किया।

यम ने किस प्रकार पकड़ा ? 'तानि' अर्थात् अपने-अपने व्यापार में प्रवृत्त उन इन्द्रियों को

---

१. तत्रेति—प्रवृत्तमीमांसाविषयामाख्यायिकामाहेत्यर्थः । तामेव दर्शयति—प्रजापतिर्हेति । आख्यायिकाऽवद्योती हेति निपातः इत्यभिप्रेत्याह हशब्द इति । किलार्थे ऐतिह्यार्थे । २. उपयोगं वदनादिव्यापारनिष्पत्तिरूपं फलम् । ३. भूमिकामिति—तदुपयोगार्थं कथयति ।

वीर्यमिति । तथा- द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि करणानि यथाकर्म यद्यदस्य कर्म यथाकर्म तानि करणानि मृत्युर्मारकः श्रमः श्रमरूपी भूत्वोपयेमे संजग्राह स्वकर्मभ्यः प्रच्यावितवानित्यर्थः ।

कथम् । तानि करणानि स्वव्यापारे प्रवृत्तान्याप्नोच्छ्रमरूपेणाऽऽत्मानं दर्शितवानाप्त्वा च तान्यवारुन्धावरोधं कृतवान्मृत्युः स्वकर्मभ्यः प्रच्यावितवानित्यर्थः । 'तस्माद्यत्वेऽपि वदने स्वकर्मणि प्रवृत्ता वाक्श्राम्यत्येव श्रमरूपिणा मृत्युना संयुक्ता स्वकर्मतः प्रच्यवते । तथा श्राम्यति चक्षुः । श्राम्यति श्रोत्रम् । 'अथेममेव मुख्यं प्राणं नाऽऽप्नोत्' प्राप्तवान्मृत्युः श्रमरूपी योऽयं मध्यमः प्राणस्तम् । 'तेनाद्यत्वेऽप्यश्रान्त एव स्वकर्मणि प्रवर्तते' तानीतराणि करणानि तं ज्ञातुं दध्रिरे धृतवन्ति मनः । अयं वै नोऽस्माकं

---

प्रजापतेर्वागादिषु श्रमद्वारा स्वकर्मप्रच्युतिरासीदित्यत्र कार्यलिङ्गकमनुमानं प्रमाणयति— तस्मादिति । वागादीनां भग्नव्रतत्वनिर्धारणानन्तर्यमथशब्दार्थः । प्राजापत्ये प्राणे मृत्युग्रस्तत्वाभावे कार्यलिङ्गकमनुमानं सूचयति—तेनेति । प्रवर्तते प्राण इति संबन्धः । तथाऽपि कथं प्राणस्यैव व्रतं धार्यमित्यपेक्षायामाह—तानीति । ज्ञानार्थमनुसंधानप्रकारमेव दर्शयति—अयमिति । तस्य श्रेष्ठत्वे

---

'आप्नोत्' व्याप्त किया यानी श्रमरूप से अपने को प्रदर्शित किया। उन्हें व्याप्त करके मृत्यु ने उनका 'अवारुन्ध' अर्थात् अवरुद्ध किया। अपने अपने कर्मों से गिरा दिया, यह इसका अर्थ है। इसलिए (प्रजापतिवाक् के श्रमविद्ध होने से) आजकल भी प्रजाओं की वाक् उच्चारणरूप स्वकर्म में लगी हुई 'श्राम्यति' श्रमरूपी मृत्यु से संयुक्त होती है अपने कर्म से स्खलित हो जाती है। इसी प्रकार चक्षु इन्द्रिय भी अपने कर्म से च्युत होती है, तथा श्रोत्रेन्द्रिय भी अपने कर्म से स्खलित होती है। 'अथ' यानी वागादिकों के व्रतभंग होने पर 'इममेव' अर्थात् इसी मुख्यप्राण को जो यह शरीर के मध्य में प्राण है, उसे श्रमरूपी मृत्यु ने 'नाऽऽप्नोत्' यानी प्राप्त नहीं किया। इसलिए (प्राजापत्यप्राण के मृत्यु से ग्रस्त न होने के कारण) आज तक भी वह अश्रान्त ही अपने कर्म में लगा रहता है। (इसलिए प्राण का ही व्रत धारण करना चाहिए) 'तानि' अर्थात् उन दूसरी इन्द्रियों ने उसे जानने के लिए 'दध्रिरे' यानी मन में धारणा की। निश्चय ही यह 'नः' अर्थात् हम सब में 'श्रेष्ठ' यानी अत्यधिक प्रशंसनीय है, क्योंकि जो सञ्चरण करते हुए और सञ्चरण न करते हुए भी व्यथित नहीं होता, इसलिए हिंसित नहीं होता। 'हन्त' यानी अच्छा अब हम सभी इस प्राण को ही 'रूपमसाम' आत्मभाव से विनिश्चय करलें। इस प्रकार विनिश्चय हो जाने पर वे सब इस प्राण का स्वरूप हो गयीं, आत्मभाव से प्राण-

---

१ श्रम । २ प्रजापतिवागादे श्रमविद्धत्वात् । ३ प्रजानां वाक् । ४ वागादिषु भग्नव्रतेषु सत्सु । ५ शरीरमध्यभवः । ६ प्राजापत्यप्राणस्य मृत्व्वग्रस्तत्वेन । ७ तस्मात् प्राणस्यैव व्रतं धार्यमिति शेषः । ८ प्रजावागादिगतः श्रमः सकारणकः कार्यगतत्वात् घटादिगतरूपादिवदित्याह । ९ अनुमानमिति—प्रजापतिप्राणः श्रमाभाववान् प्राणत्वात् प्रजाप्राणवत् । यद्वा श्रमरहितप्रजा प्राणकार्यवत्त्वादिति हेतुः । यो यद्रहितकार्यकः स तद्रहितः नीलादिरहितघटादिकार्यकपालादिवदिति । १० प्राणस्य मृत्युग्रस्तत्वाभावेऽपि ।

मध्ये श्रेष्ठः प्रशस्यतमोऽभ्यधिको यस्मादयः संचरंश्चासंचरंश्च न व्यथतेऽथो न रिष्यति हन्तेदानीमस्यैव प्राणस्य सर्वे वयं रूपमसाम प्राणमात्मत्वेन प्रतिपद्येमहि। एवं विनिश्चित्य त एतस्यैव सर्वे रूपमभवन्प्राणरूपमेवाऽऽत्मत्वेन प्रतिपन्नाः प्राणव्रतमेव दध्रिरेऽस्मद्व्रतानि न मृत्योर्वारणाय पर्याप्तानीति।

यस्मात्प्राणरूपेण रूपयन्तीतराणि करणानि चलनात्मना स्वेन च प्रकाशात्मना। न हि प्राणादन्यत्र चलनात्मत्वोपपत्तिः। चलनव्यापारपूर्वकाण्येव हि सर्वदा स्वव्यापारेषु लक्ष्यन्ते। तस्मादेते वागादय एतेन प्राणाभिधानेनाऽऽख्यायन्तेऽभिधीयन्ते प्राणा इत्येवम्। य एवं प्राणात्मतां सर्वकरणानां वेत्ति प्राणशब्दाभिधेयत्वं च तेन ह वाव तेनैव विदुषा तत्कुलमाचक्षते लौकिकाः। यस्मिन्कुले स विद्वाञ्जातो भवति तत्कुलं विद्वन्नाम्नैव प्रथितं

---

फलितमाह—हन्तेति। इतिशब्दं व्याकरोति—एवं विनिश्चित्येति। अस्माकं वागादीनां व्रतानि मृत्योर्वारणाय न पर्याप्तानीति विनिश्चित्य दध्रिरे प्राणव्रतमेवेति संबन्धः।

प्राणरूपत्वमुक्त्वा करणानां तन्नामत्वमाह—यस्मादिति। यस्मादित्यस्य तस्मादिति व्यवहितेन संबन्धः। प्राणरूपं चलनात्मत्वमिति कुतो निश्चीयते तत्राऽऽह—न हीति। तर्हि करणेषु प्रकाशात्मकत्वमेव न चलनात्मत्वमित्याशङ्क्याऽऽह—चलनेति। संप्रति विद्याफलमाह—य एवमिति। तदेव

---

रूपता को प्राप्त हो गयी। तथा यह सोच कर कि हमारे व्रत मृत्यु का अवरोध करने में समर्थ नहीं है, उन्होंने आत्मरूप से प्राणव्रत को धारण किया।

क्योंकि दूसरी इन्द्रियाँ प्राण के चलनात्मकरूप एवं अपने प्रकाशात्मकरूप से रूपवाली हैं। कारण यह है कि प्राण के अतिरिक्त दूसरी इन्द्रियों में चलनात्मकसिद्धि नहीं हो सकती। और (मन-सहित ये एकादश) इन्द्रियाँ सर्वदा चलनव्यापारपूर्वक ही अपने व्यापारों में प्रवृत्त दिखाई देती है। इसी से ये वागादि इन्द्रियाँ इस प्राणनाम से ही कहकर 'आख्यायन्ते' अर्थात् पुकारी जाती है। इस प्रकार जो समस्त इन्द्रियों की प्राणात्मभावरूपता एवं 'प्राण' शब्द द्वारा पुकारा जाना जानता है, 'तेन ह वाव' उसी के द्वारा ही व्यवहार में लौकिक पुरुष उसके कुल को पुकारते है। जिस कुल में जो विद्वान् उत्पन्न होता है, वह कुल उस विद्वान् के नाम से प्रसिद्ध हो जाता है कि यह कुल अमुक का है। जिस प्रकार (कुरुवंश में तपती की अपत्य का) तापत्यवंश प्रसिद्ध है। जो कोई इस प्रकार वागादि की उपरोक्त प्राणरूपता और प्राणसंज्ञकता को जानता है, उसे यह फल प्राप्त होता है। एवं जो कोई भी 'एवं विदा' अर्थात् प्राणात्मकदर्शी से 'स्पर्धते' अर्थात् उसका प्रतिपक्षी होकर उससे

---

१ निश्चिनुयाम। २ तदात्मत्वेन तद्व्रतत्वं तथाम्। ३ चलनात्मना प्राणरूपेण प्रकाशात्मना च स्वीयरूपेणेत्यन्वयः। ४ चलनेति—मनःसहितेषु एकादशेन्द्रियेषु क्रिया प्रकाशशक्तिमत्सु परिस्पन्दो यावानस्ति तावांश्चलनस्वभावस्य प्राणस्यैवावसेयः वागादीनां स्वविषयेषु कर्म चक्षुरादीनामर्थेषु प्रकाशनं च विशेषम्। एकादशेन्द्रियेषु साधारणचलनस्य प्राणात्मत्वात् तेषां प्राणरूपता तन्नामता चेति भावः। ५ पूर्वोक्तेन।

**अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यह**
**मित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता**

अब आगे देवता विषयक दर्शन कहा जाता है। अग्नि ने व्रत लिया कि मैं जलता ही रहूँगा। सूर्य ने नियम किया कि मैं तपता ही रहूँगा तथा चन्द्रमा ने निश्चय किया कि मैं प्रकाशित होता ही

भवत्यमुष्येदं कुलमिति। यथा तापत्य इति। य एवं यथोक्तं वेद वागादीनां प्राणरूपतां प्राणाख्यत्वं च तस्यैतत्फलम्। किंच यः कश्चिदु हैवंविदा प्राणात्मदर्शिना स्पर्धते तत्प्रतिपक्षी सन्सोऽस्मिन्नेव शरीरेऽनुशुष्यति शोषमुपगच्छति। अनुशुष्य हैव शोषं गत्वैवाग्ततोऽन्ते म्रियते न सहसाऽनुपद्रुतो म्रियत इत्येवमुक्तमध्यात्मं प्राणात्मदर्शनमित्युक्तोपसंहारोऽधिदैवतप्रदर्शनार्थः ॥ २१ ॥

अथानन्तरमधिदैवतं देवताविषयं दर्शनमुच्यते। कस्य देवताविशेषस्य व्रतधारणं

स्पष्टयति—यस्मिन्निति। "तपती सूर्यसुता तस्या "वंशस्तापत्य। कस्येद फलमित्युक्ते पूर्वोक्तमेव स्फुटयति—य एवमित्यादिना। न केवलं विद्याया यथोक्तमेव फलं किंतु फलान्तरमप्यस्तीत्याह—किंचेति। "प्राणविदा सह स्पर्धा न कर्तव्येति भाव। इत्यध्यात्ममित्यस्याऽऽनर्थक्यमाशङ्क्याऽऽह—इत्येवमिति॥२१॥

अध्यात्मदर्शनमुक्त्वाऽधिदैवतदर्शनं वक्तुमनन्तरवाक्यमवतारयति—अथेति। "तर्हि ज्वलिष्या-

ईर्ष्या करता है, वह इसी शरीर में 'अनुशुष्यति' यानी असह्य क्लेश को प्राप्त होता है। 'अनुशुष्य हैव' अर्थात् दीर्घकाल तक असह्य क्लेश को प्राप्त होकर अन्त में मर जाता है, वह बिना किसी उपद्रव के सहसा नहीं मरता। इस प्रकार यह अध्यात्मसंघात प्राणात्मदर्शन कहा। अध्यात्मदर्शन का श्रुत्यनुकूल उक्त उपसंहार अधिदैवदर्शन का (प्रकरणविच्छेद) प्रदर्शन के लिए है ॥२१॥

'अथ' यानी इसके बाद अब 'अधिदैवतम्' अर्थात् देवताविषयक दर्शन कहा जाता है। किस देवता विशेष का व्रतधारण करना श्रेष्ठ है?—यह निर्णय करने के लिए पूर्ववत् व्रतमीमांसा आरम्भ की जाती है। अध्यात्मवागादि के समान यहाँ भी अधिदैव-अग्न्यादि का श्रमित होना, व्रतभङ्ग होना आदि सब कुछ समझ लेना चाहिए। अग्नि ने व्रत धारण किया कि मैं जलता ही रहूँगा, इसी प्रकार आदित्य ने व्रत धारण किया कि मैं तपता ही रहूँगा, चन्द्रमा ने व्रत लिया कि मैं प्रकाशित होता ही रहूँगा। इसी प्रकार अपने-अपने व्यापार के अनुसार अन्य विद्युदादि देवताओं ने व्रत धारण किया। उन वागादि-अध्यात्मप्राणों में जिस प्रकार शरीर के मध्यभाग में रहने वाला मध्यमप्राण, मृत्यु से अनभिभूत,

१ अमुष्येति—"प्राणरूपाभिधानाभ्यां ख्याता वागादयो यथा। प्राणवित्संज्ञया ख्यातिं याति विद्वत्कुलं तथा"॥ वा ३७४॥ २ अपि। ३ ईर्ष्यति। ४ असह्यक्लेशं प्राप्नोति। ५ दीर्घकालम्। ६ म्रियत इति—यथाऽऽसङ्गपाप्मरूपो मृत्यु प्राणं प्राप्य प्रध्वसते तद्वदित्यर्थः। ७ संघाते। ८ उक्तस्योपसंहारः। ९ प्रकरणविच्छेदार्थं इति यावत्। १० तपनी सूर्यसुतेति—सा च संवरणराजपत्नी कुरोश्च मातेति महाभारते प्रसिद्धम्, तथा च कुरुवंश एव तापत्यवंश इति भाव। ११ कुरुवंश। १२ उपासके स्पर्धमानस्य प्रत्यवायवाचेतद्वाक्यस्य तात्पर्यमाह—प्राणविदेति। १३ अधिदैवतोपासनस्य वक्तव्ये।

**यथादैवतꣳस यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुः ॥ २२ ॥**

रहूँगा, ऐसा ही अपने अपने व्यापारानुसार अन्य देवताओं ने भी व्रत लिया । जैसे इन वागादि-प्राणों में मध्यम प्राण है, वैसे ही इन देवताओं में मध्यम वायु है, क्योंकि अन्य देवता अस्त हो जाते हैं, परन्तु वायु अस्त नहीं होता । यह जो वायु देवता है, वह कभी भी अस्त न होने वाला देवता है ॥ २२ ॥

---

श्रेय इति [1]मीमांस्यते । [2]अध्यात्मवत्सर्वं, ज्वलिष्याम्येवाहमित्यग्निर्दध्रे । तप्स्याम्यहमित्यादित्यः । भास्याम्यहमिति चन्द्रमाः । एवमन्या देवता यथादैवतम् । सोऽध्यात्मं वागादीनामेषां प्राणानां मध्ये मध्यमः प्राणो मृत्युनाऽनाप्तः[3] स्वकर्मणो न प्रच्यावितः स्वेन प्राणव्रतेनाभग्नव्रतो यथैवमेतासामग्न्यादीनां देवतानां वायुरपि । म्लोचन्त्यस्तं यन्ति स्वकर्मभ्य उपरमन्ते यथाऽध्यात्मं वागादयोऽन्या देवता अग्न्याद्या न वायुरस्तं याति यथा मध्यमः प्राणोऽतः [4]सैषाऽनस्तमिता देवता यद्वायुर्योऽयं वायुः । एवमध्यात्ममधिदैवं च मीमांसित्वा निर्धारितं प्राणवाय्वात्मनोर्व्रतमभग्नमिति ॥ २२ ॥

अथैतस्यैवार्थस्य प्रकाशक एष श्लोको मन्त्रो भवति । यतश्च यस्माद्[5]वायोरुदेत्युद्ग-

---

मीत्यादि किमर्थमित्याशङ्क्याऽऽह—तस्येति । वदिष्यामीत्याद्युक्त व्याख्यानमिहापि द्रष्टव्यमित्याह—अध्यात्मवदिति । यथादैवत स्व स्व देवताव्यापारमनतिक्रम्यान्या देवता विद्युदाद्या दध्रिरे व्रतमित्यर्थः । स यथेत्यादि व्याचष्टे—सोऽध्यात्ममिति । वायुरपि मृत्युनाऽनाप्तः स्वकर्मणो न प्रच्यावितः स्वेन वायुव्रतेनाभग्नव्रत इति शेषः । तदेव साधयति—म्लोचन्तीति । ब्राह्मणोक्तमर्थमुपसहरति—एवमिति ॥ २२ ॥

ब्राह्मणार्थदार्ढ्यार्थं मन्त्रमवतार्य व्याकरोति—अथेत्यादिना । सूर्योऽधिदैवमुदयकाले वायोरुद्ग-

---

अपने कर्म से च्युत नहीं किया गया, प्राणव्रत से उसका (श्रमित होकर) व्रतभङ्ग नहीं हुआ उसी प्रकार अधिदैवत में, इन अग्न्यादि देवताओं में वायु रहा, क्योंकि वागादि-अध्यात्मप्राणों के समान अग्न्यादि देवता 'म्लोचन्ति' यानी अस्त होते हैं, अपने कर्मों से विश्राम प्राप्त कर लेते हैं किन्तु वायु अस्त नहीं होता । यह जो वायु है वह अविनाशी व्रत वाला देवता है, जैसे शरीरमध्यवर्ती प्राण है । इस प्रकार अध्यात्म और अधिदैवसम्बन्धी विचार करके यह निश्चय किया गया है कि प्राण और वायु के उपासकों का व्रत भङ्ग नहीं होता ॥२२॥

---

१ इति निर्णेतु पूर्ववत् पुनर्मीमांस्यत इत्यर्थः । २ अध्यात्मवत्सर्वमिति—अध्यात्म वाग् इव इत्याधिदैवमग्न्यादयोऽपि व्याप्रियमाणा श्राम्यन्त्यस्त यन्ति च श्रमात्मकमृत्युग्रस्तत्वादतस्तेऽपि भग्नव्रता जाता इत्यादि सर्वमित्यर्थः । ३ अनभिभूत । ४ अविनाशिव्रता । ५ वागेरिति वायो प्राणाच्च क्रमेणाधिदैवत सूर्योऽध्यात्म चक्षु प्रातःकाले पुरुषप्रबोधकाले च क्रमश उदेतीति योज्यम् । ६ अभग्नव्रत वादिस्मेवेत्यर्थ ।

अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इति यद्वा एतेऽ-

इसी अर्थ का प्रकाशक यह मन्त्र है। "जिस वायुदेव से सूर्य उदित होता है और जिसमें वह सूर्य अस्त होता है" इत्यादि। यह प्राण से ही उदित होता है और प्राण में ही अस्त होता है। उस धर्म को देवताओं ने धारण किया अर्थात् अध्यात्म और अधिदैव ने क्रमशः प्राणव्रत और वायुव्रत को धारण

च्छति सूर्योऽध्यात्मं च चक्षुरात्मना प्राणादस्तं यत्र वायौ प्राणे च गच्छत्यपरसंध्यासमये स्वापसमये च पुरुषस्य तं देवास्तं धर्मं देवाश्चक्रिरे धृतवन्तो वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतं च पुरा विचार्य स एवाद्येदानीं श्वोऽपि भविष्यत्यपि कालेऽनुवर्ततेऽनुवर्तिष्यते च देवैरित्यभिप्रायः। तत्रेमं मन्त्रं संक्षेपतो व्याचष्टे ब्राह्मणम्। 'प्राणाद्वा एष सूर्य उदेति

च्छति तत्र चापरसंध्यासमयेऽस्तं गच्छति। "स एव चाध्यात्मं प्रबोधसमये चक्षुरात्मना प्राणादुदेति पुरुषस्य स्वापसमये च तस्मिन्नेवास्तं गच्छतीति यतश्चे"त्यादौ "विभाग। श्लोकस्योत्तरार्धं प्राणादित्यादिब्राह्मणव्यवहितं श्लोके पूर्णताज्ञापनार्थं प्रथमं व्याचष्टे—त देवा इति। धारणस्य प्रकृतत्वात्सामान्येन" विशेष" लक्षयित्वाऽऽह—धृतवन्त इति। स एवेति धर्मपरामर्शः। तत्रेति सप्तमी संपूर्णमन्त्रमधिकरोति।

इसी ही अर्थ का प्रकाशक यह 'श्लोक' अर्थात् मन्त्र भी है। क्योंकि 'यतश्च' यानी जिस वायु से 'उदेति' यानी सूर्य उदय होता है तथा जिस अध्यात्मप्राण से वह चक्षुरूप से उदय होता है, जहाँ वायु और प्राण में सायंकालीन सन्ध्या के समय एवं पुरुष की सुषुप्ति के समय वह अस्त हो जाता है, उस (प्राण और वायु के) धर्म को देवताओं ने 'चक्रिरे' अर्थात् धारण किया अर्थात् वागादि इन्द्रियों और अग्न्यादि-देवताओं ने प्राचीनकाल में विचार कर प्राणव्रत और वायुव्रत धारण किया। वही प्राण-

१ अथ शब्दोऽप्यर्थकः। २ अत्र वार्तिककृद्भिः प्राणाद्वा इत्यादिब्राह्मणवाक्यमुत्तरत्वेनाभ्युपगम्य यतश्चोदेतीत्यादि मन्त्रस्य पूर्वार्धं प्रश्नत्वेन व्याख्यातमिति बोध्यम्। ३ उशब्दोऽप्यर्थः। ४. श्वोऽपि। ५ धर्ममिति—अध्यात्मं प्राणस्य वागादिजातधारित्ववदधिदैवं वायोरग्न्यादिगणधारित्वात्प्राणस्य वायोश्च व्रतं धर्ममागमिका विदुरित्यर्थः। चरीतर्धारणार्थत्वे प्रकरणं नियामकमभिप्रेत्याह—धृतवन्त इति। तदुक्तं वार्तिके—"वागादिगणधारित्वाद्धर्मं वायुव्रतं विदुः। चक्रिरे दध्रिरे धर्मं धारणं प्रकृतं यतः" ॥३८२॥ इति। ६ प्राणवायुव्रतलक्षणो धर्मः। ७ अनुष्ठितो भवतीति यावत्। ८ प्राणाद्वा एष इति—नन्वादित्यस्योत्पत्तिलयहेतुत्वं प्रसिद्धप्राणस्य कथमुपगम्यते तस्यात्पर्याप्तत्वादित्याशङ्क्य समाहितं वार्तिके—'आत्मैव प्राणशब्दः स्यात्प्राणबन्धनवाक्यतः" ॥३८०॥ इति। अज्ञातात्मनोऽत्र प्राणशब्दत्वे नियामकमाह—प्राणेति। तत्र मनःशब्देन तदुपाधिको जीवो गृह्यते। न च स प्राणानां धारयिता मुख्ये प्राणः स्यातुमर्हत्यतो जीवायतनं प्राणशब्दः परमेव ब्रह्म तथाऽत्रापीत्यर्थः। अत्र च वार्तिकद्वयम्—'यदा वै पुरुषः शेते प्राणमप्येति वाक्तदा। चक्षुः श्रोत्रं मनस्तद्वज्जायते तत एव च ॥ अधिदैवतमप्येवं वायोरग्न्यादिसंभवः। अप्ययश्च यथाऽध्यात्मं श्रेयान्प्राणस्ततोऽयतः" ॥३७८-३७९॥ इति। ९ वायावेव। १० सूर्यः। ११ मन्त्रे। १२ विवेकः। १३. कृपात्वर्थेन। १४ धृधात्वर्थम्।

मुह्यं धियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नु-वदिति यद्यु चरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यᳬ सलोकतां जयति ॥ २३ ॥

## इति प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

किया, वही आज भी चल रहा है और कल भी रहेगा। देवताओं ने उस समय जो व्रत को धारण किया था, वे वही कार्य आज भी कर रहे हैं। अतः प्रत्येक व्यक्ति एक ही व्रत का आचरण करे। प्राणन और अपानन व्यापार करे। इन्द्रियों की भाँति मुझे भी कहीं पापी मृत्यु दबोच न डाले, इस भय से इस व्रत का आचरण प्रारम्भ करे, तो इसे समाप्त करने की इच्छा रक्खे। इससे यह व्रत करने वाला उस देवता के साथ सायुज्य और सालोक्य प्राप्त करता है ॥ २३ ॥

॥ इति पञ्चम ब्राह्मणम् ॥

---

प्राणेऽस्तमेति ।

तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इत्यस्य कोऽर्थ इत्युच्यते । 'यद्वा एते व्रतममुह्यं'स्तस्मिन्काले' वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतं चाध्रियन्त तदेवाद्यापि कुर्वन्त्यनुवर्तन्तेऽनुवर्तिष्यन्ते च व्रतं तैरभग्नमेव । यत्तु वागातिव्रतमग्न्यादिव्रतं च तद्भग्नमेव । तेषामस्तमनकाले स्वापकाले च वायौ प्राणे च निम्लुक्तिदर्शनात् ।

---

इमं मन्त्रमिति पूर्वार्धोक्तिः ।

उत्तरार्धस्य ब्राह्मणमाकाङ्क्षापूर्वकमुत्थाप्य व्याचष्टे—तमित्यादिना । तैरभग्नं देवैरभग्नत्वेन मीमांसितं तेऽनुगच्छन्तीत्यर्थः । 'विशेषणस्यार्थवत्त्वं साधयति—यत्त्विति ।

---

वायुव्रत का लक्षणरूप धर्म ही आज इस समय अनुष्ठान किया जाता है और आगे भविष्यकाल में भी देवताओं द्वारा उसी का अनुष्ठान किया जायगा यह इसका अभिप्राय है। यहाँ ब्राह्मण इस मन्त्र की संक्षेप से व्याख्या करता है कि प्राण से ही सूर्य का उदय होता है और प्राण में ही विलय होता है।

"तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व" इस श्रुतिवाक्य का क्या अर्थ है? ऐसी आकाङ्क्षा होने पर कहा जाता है। इन वागादि और अग्न्यादि ने उस (मीमांसावच्छिन्न) भूतकाल में क्रमशः जिन प्राणव्रत और वायुव्रत को धारण किया था, उन्हीं को आज भी धारण करते हैं, उसी का वे अनुष्ठान करते हैं और उसी का अनुष्ठान करेंगे। उनका यह व्रत भङ्ग नहीं हुआ है। किन्तु जो वागादि और अग्न्यादि का व्रत है, वह तो भग्न ही है। उन वागादि और अग्न्यादि का सायंसन्ध्या एवं सुषुप्ति के समय वायु और प्राण में विलय होना देखा जाता है।

---

१ यदेव। २ मीमांसावच्छिन्ने भूतकाले। ३ वागादीनामग्न्यादीनां च। ४ अभग्नत्वरूपस्य।

'अथैतदन्यत्रोक्तम्—"यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं मनः प्राणं चक्षुः प्राणं श्रोत्रं यदा प्रबुध्यते [१]प्राणादेवाधि [२]पुनर्जायन्त इत्यध्यात्ममथाधिदैवतं यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुं ह्यनूद्वाति यदादित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्ते" इति।

यस्मादेतदेव व्रतं वागादिष्वग्न्यादिषु चानुगतं यदेतद्वायोश्च प्राणस्य च परिस्पन्दात्मकत्वं सर्वैर्देवैरनुवर्त्यमानं व्रतम्। [३]तस्मादन्योऽप्येकमेव व्रतं चरेत्। किं तत्प्राण्यात्प्राणनव्यापारं कुर्यादपान्यादपाननव्यापारं च। न हि प्राणापानव्यापारस्य प्राणनापाननलक्षणस्योपरमोऽस्ति। [४]तस्मात्तदेवैकं व्रतं [५]चरेद्धित्वेन्द्रियान्तरव्यापारं नेन्मा [६]मां पाप्मा मृत्युः

उक्तं हेतुमग्निरहस्यमाश्रित्य विशदयति—अथेति। यथाऽत्रेरथुपमार्थोऽथशब्दः। अनुगच्छति शाम्यतीत्येतत्। वायुमनु तदधीन एव तस्मिन्काल उद्वात्यस्तमेति। उदवासीदस्तं गत इत्यर्थः। इतिशब्दोऽग्निरहस्यवाक्यसमाप्त्यर्थः।

अध्यात्मं प्राणव्रतमधिदैवं च वायुव्रतमित्येकमेव व्रतं धार्यमिति मन्त्रब्राह्मणाभ्यां प्रतिपाद्य तस्मादिति व्याचष्टे—यस्मादिति। न हि वागादयोऽग्न्यादयो वा परिस्पन्दविरहिणः स्थातुमर्हन्ति तेन प्राणादिव्रतं तैरनुवर्त्यत एवेत्यर्थः। एकमेवेति नियमे प्राणव्यापारस्याभग्नत्वं हेतुमाह—न हीति। तदनुपरमे फलितमाह—तस्मादिति। ननु प्राणनाद्यभावे जीवनासंभवात्तस्याऽऽर्थिकत्वात्तदनुष्ठानमविधेयमित्याशङ्क्य चकारलभ्यं नियमं दर्शयति—हित्वेति। नेदित्यादिवाक्यस्याक्षरार्थमुक्त्वा तात्पर्या-

प्राण से आदित्यादि को उदय और अस्त होने वाली यह बात अन्यत्र भी श्रुति द्वारा प्रतिपादित की गई है। जब यह पुरुष सोता है, तो उस समय वाक्-इन्द्रिय प्राण में लीन हो जाती है तथा मन, चक्षु एवं श्रोत्र भी प्राण में लीन हो जाते हैं। जिस समय यह पुरुष उठता है, उस

१ प्राणादादित्यादेरुदयास्तमयत्वम्। २ प्राणाधिष्ठिता एव जायन्त इत्यर्थः। ३ उपासकोऽपि नैरन्तर्येण यावज्जीवमेकमेव व्रतं चरेदित्यर्थः। ४ प्राणव्रतस्याभग्नत्वात्। ५ हित्वेति—ननु कथं वागादिव्यापारं हित्वा प्राणव्यापारस्यैवानुष्ठेयत्वमित्याशङ्क्य समाहितं वार्तिके—"अन्तर्भावो यतोऽमीषां श्रोत्रादीन्द्रियकर्मणाम्। प्राणकर्मणि तेनैतदेकमेव व्रतं चरेत्॥ प्राणात्मनैव वागादिव्रतान्यपि चरेत्सदा। प्राणापानात्मकं यस्मादव्रतं प्राणैककर्तृकम्॥ प्राण्यादपान्याच्च ततो नित्यमा मरणाद्बुधः" ॥३८६-३८८॥ इति। एकमेवेत्यवधृतवागादिव्रतस्य त्यक्तत्वात्तदुक्तिरनर्थिकेत्याशङ्क्यान्तर्भावादित्यक्तोक्तं स्मारयति—प्राणात्मनैवेति। वागादीनामुपसर्जनत्वात्प्राणस्य प्रधानत्वादवधारणमित्यर्थः॥ प्राणोपासितुरुपास्यप्राणात्मनस्तद्व्रतमेव धार्यमित्यत्र हेत्वन्तरमाह—प्राणापानात्मकमिति। नित्यं निरन्तरम्। बुधः सर्वेषु वागादिव्यापारेषु प्राणव्यापारदृष्टिस्तदुपासितेति यावत्। ६ उपासकम्। ७ निम्लुक्तिदर्शनादित्युक्तं हेतुम्। ८ तस्य प्राणनादेः आर्थिकत्वात् जीवनान्यथानुपपत्त्यैव लब्धत्वादिति। ९ ननु सर्वप्राणिनां प्राणादिव्यापारस्य स्वारसिकत्वादिच्छया तदनुष्ठातुमशक्यत्वात्कथं तत्र विधिरित्याशङ्क्य प्राङ्मुखभुक्तिवाक्यवत् व्यापारान्तरनिवृत्तिपरत्वाद्वाक्यस्य मैवमित्याह—हित्वेति। इत्यवतरणान्तरम्।

श्रमरूप्याप्नुवदाप्नुयात्। नेच्छब्दः परिभये। यद्यहमस्माद्व्रतात्प्रच्युतः स्यां ग्रस्त एवाहं मृत्युनेत्येव त्रस्तो धारयेत्प्राणव्रतमित्यभिप्रायः[१]। यदि कदाचिद्व चरेत्प्रारभेत प्राणव्रतं समापिपयिषेत्समापयितुमिच्छेद्यदि ह्यस्माद्व्रतादुपरमेत्प्राणः परिभूतः स्याद्देवाश्च[२]। [३]तस्मात्समापयेदेव।

तेन उ तेनानेन व्रतेन प्राणात्मप्रतिपत्त्या सर्वभूतेषु वागादयोऽग्न्यादयश्च मदात्मका एवाहं प्राण आत्मा [४]सर्वपरिस्पन्दकृदेवं तेनानेन व्रतधारणेनैतस्या एव प्राणदेवतायाः सायुज्यं सयुग्भावमेकात्मत्वं सलोकतां समानलोकतां वैकस्थानत्वं

यमाह—यद्यहमिति। प्राणव्रतस्य सकृदनुष्ठानमाशङ्क्य सर्वेन्द्रियव्यापारनिवृत्तिरूपं संन्यासमामरणमनुवर्तयेदित्याह—यदीति। विपक्षे दोषमाह—यदि हीति। प्राणादिपरिभवपरिहारार्थं नियमं निगमयति—तस्मादिति।

विद्याफलं वक्तुं भूमिकां करोति—तेनेति। व्रतमेव विशिनष्टि—प्राणेति। प्रतिपत्तिमेव प्रकटयति—सर्वभूतेष्विति। [५]संप्रति विद्याफलं कथयति—एवमिति। कथमेकस्मिन्नेव विज्ञाने फलविकल्पः स्यादित्याशङ्क्य विज्ञानप्रकर्षापेक्षं सायुज्यं तन्निकर्षापेक्षं च सालोक्यमित्याह—

समय ये सभी प्राण से अधिष्ठित होकर उत्पन्न होते है, यह अध्यात्मदृष्टि है। अब अधिदैवदृष्टि बतलायी जाती है, जब अग्नि शान्त होने लगती है तो उस समय वह वायु के अधीन होकर ही विलीन होती है। इसीलिए "यह इसमे विलीन हो गया' ऐसा कहते हैं। जब सूर्य अस्त होता है, तो वह वायु में ही विलीन हो जाता है, यानी वायु मे ही प्रविष्ट हो जाता है, वायु मे ही चन्द्रमा, और दिशाएं भी वायु मे प्रतिष्ठित है, एव वायु के आश्रित होकर ही वे पुन उत्पन्न होती हैं" इत्यादि।

क्योंकि वागादि और अग्न्यादि मे यही व्रत अनुगत है अर्थात् वायु और प्राण का जो परिस्पन्दन-रूप धर्म है, वही सभी देवताओ द्वारा अनुष्ठान किया जाने वाला व्रत है। इसलिए उपासक को भी निरन्तर जीवन भर एक ही व्रत का आचरण करना चाहिए। वह अद्वितीय व्रत क्या है ? 'प्राण्यात्' अर्थात् प्राणन व्यापार करे और 'अपान्यात' यानी अपानन व्यापार करे, क्योंकि प्राणन और अपानन लक्षणरूप प्राण और अपान के व्यापार की कभी निवृत्ति नही होती। इसलिए (प्राणव्रत के भङ्ग न होने के कारण) इस भय से कि कहीं मुझ उपासक को श्रमरूपी पापी मृत्यु वरण न कर ले, इन्द्रियों के अनन्तर व्यापार को छोडकर इसी एक ही व्रत का अनुष्ठान करना चाहिये। श्रुतिमन्त्र मे 'नेत्' शब्द परिभय अर्थ मे है। भावाशय यह है कि यदि मैं इस व्रत से स्खलित हो जाऊंगा तो मृत्यु का ग्रास बन जाऊंगा। इस पर भयभीत हुआ प्राणव्रत को धारण करे। यदि कभी प्राणव्रत का आचरण प्रारम्भ करे तो उसे 'समापिपयिषेत्' यानी समाप्त करने की इच्छा रखे। क्योंकि यदि उसे इस व्रत से उपरामता हो जायगी तो अनुष्ठाता को प्राण और देवताओ का परिभव हो जायगा। इसलिए (प्राणादि का परिभव इष्ट न होने के कारण) इस व्रत को समाप्तिपर्यन्त अनुष्ठान करना ही चाहिए।

'तेन उ' अर्थात उसी इस प्राणात्म की उपलब्धिरूप व्रत से समस्त भूतो मे वागादि और

१ सन्। २ वागाद्यासङ्गवत्समा पाप्मा प्रापदासुर इत्यवमभिसन्धि सन् विद्वान्प्राणव्रतं चरेत्। ३ तद्व्रतानुष्ठायिन। ४ प्राणादिपरिभवस्यानिष्टत्वात्। ५ एव। ६ सर्वव्यापारकृत्। ७ भूमिकाकरणानन्तरम्।

(अथ प्रथमाध्यायस्य षष्ठं ब्राह्मणम् ।)

[१]त्रयं वा [२]इदं नाम रूपं कर्म [३]तेषां [४]नाम्नां [५]वागि-
त्येतदेषा[६]मुक्थमतो हि सर्वाणि नामान्युत्-

नाम, रूप और कर्म यह तीन या समुदाय है और यही त्रय है। उन नामों को "वाक्" यह उक्थ अर्थात् कारण है, क्योंकि सम्पूर्ण नाम इसी वाक् से उत्पन्न होते हैं। यह वाक् ही इन नामों का साम है (क्योंकि देवदत्त यज्ञदत्तादि नामविशेष इसीसे विभक्त होते हैं) यही सब

---

विज्ञानमान्द्यापेक्षमेतज्जयति प्राप्नोतीति ॥ २३ ॥

इति बृहदारण्यकभाष्ये प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

यदेतदविद्याविषयत्वेन प्रस्तुतं साध्यसाधनलक्षणं व्याकृतं जगत्प्राणात्मप्राप्त्य-न्तोत्कर्षवदपि फलम् । या चैतस्य व्याकरणात्प्रागवस्थाऽव्याकृतशब्दवाच्या वृक्षबीज-

---

विज्ञानेति ॥ २३ ॥

इति बृहदारण्यकभाष्यटीकायां प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

'प्रपञ्चित'स्याविद्याकार्यस्य संक्षेपेणो"पसंहारार्थं ब्राह्मणान्तरमवतारयति—यदेतदिति । फलमपि ज्ञानकर्मणोरुक्तविशेषणवदेतत्प्रस्तुतमिति संबन्धः । "अव्याकृतप्रक्रियायामुक्तं स्मारयति—या चेति ।

---

अग्न्यादि मेरे ही स्वरूप है, मैं प्राणरूप आत्मा सब व्यापार करने वाला हूँ, इसलिए इस व्रत को धारण करने से इसी प्राणदेवता के 'सायुज्यम्' अर्थात् साहचर्य या एकात्मकता को तथा 'सलोकताम्' यानी विज्ञान की मन्दता की अपेक्षा से समानलोकता या स्थानैकता को 'जयति' अर्थात् प्राप्त कर लेता है ॥२३॥

इस प्रकार बृहदारण्यकभाष्य के हिन्दीभाषानुवाद में प्रथमाध्याय का सप्तान्नसञ्ज्ञक पञ्चम ब्राह्मण पूर्ण हुआ ॥५॥

यह जो साध्यसाधन लक्षण व्याकृत जगत् और प्राणात्मप्राप्ति पर्यन्त अविद्या-विषयक उत्कर्ष-रूप फल प्रस्तुत किया गया तथा वृक्ष-बीज के समान जो 'अव्याकृत' शब्द से कही जाने वाली इस जगत् की व्याकृत' होने से पूर्व की अवस्था है, वह सब त्रय है । वह 'त्रय' क्या पदार्थ है ? इस के निर्णय के लिए कहा जाता है। नाम रूप और कर्म यह अनात्मा ही वह त्रय है, जो साक्षात् अपरोक्ष ब्रह्म

---

१ त्रयात्मकमेन । अविद्यामूत्रामारभ्य सार्धब्राह्मणवर्णितम् । विद्यासूत्रात्पुरोक्तं च जगत्संक्षिप्य वर्ण्यते ॥ बल्पत्वे मति तत्याय सभावयति धीन् णाम् । षष्ठेऽस्मिन् ब्राह्मणे तेन जगत् संक्षिपति श्रुति ॥' (बृ०वा०सा० १६ १-२) २ यथोक्तव्याकृताव्याकृत जगत् । ३ त्रयाणां मध्ये । ४ देवदत्तादिनामविशेषाणाम् । ५ शब्दसामान्यम् । ६ उपादानकारणम् । ७ जगत । ८ प्रेति—ननु सूत्रिताया अविद्याया विवृतत्वा-दविद्याप्रकरणे वक्तव्याभावादध्यायसमाप्तिरेव युक्तेत्याशङ्क्येत्यादि । ९ व्याख्यातस्य । १० उपसंहारार्थ-मिति—अव्याकृतवाक्ये साभासा प्रत्यगविद्या सकार्या सूत्रिता तस्याश्चाय योऽयमित्यत्राष्टाया गतेन संदर्भेण कार्य प्रपञ्चितं तस्य सहेतोरुपसंहारायोत्तरं ब्राह्मणमित्यर्थः । संक्षेपविस्तरौ च सुखप्रतिपत्त्यर्थाभिष्टाविति भावः । ११ तद्धेदं तर्ह्यव्याकृतमासीदित्यत्र प्रकरणे ।

**ष्ठन्ति । एतदेषाᳬ सामैतद्धि सर्वैर्नामभिः सम-**
**मेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥१॥**

नामो मे समान है (वाक्रूप सामान्य से ही नामविशेष का विभाग लोक मे देखा गया है, इसीलिये नाम का उत्पादन कारण वाक् को कहा गया है। यह वाक् ही नामविशेष का 'ब्रह्म' यानी आत्मा है, क्योंकि यही समस्त नामो को धारण पोषण करती है ॥ १ ॥

यत्सर्वमेतत्त्रयम् । किं तत्त्रयमित्युच्यते । नाम रूपं कर्म चेत्यनात्मैव नाऽऽत्मा यत्सा-क्षादपरोक्षाद्ब्रह्म । 'तस्माद्'स्माद्विरज्येतेत्येवमर्थस्त्रयं वा इत्याद्यारम्भः । न 'ह्यस्मादना-त्मनोऽव्यावृत्तचित्तस्याऽऽत्मानमेव लोकमहं ब्रह्मास्मीत्युपासितुं बुद्धिः प्रवर्तते । बाह्यप्रत्यगात्मप्रवृत्त्यो'र्विरोधात् । तथा च काठके—

व्याकृताव्याकृतस्य जगत सगृहीतं 'रूपमाह—सर्वमिति । वाङ्मनःप्राणाख्य त्रयमिति शङ्कां प्रत्याह—किं तदित्यादिना । किमर्थं पुनरयमुपसंहार इत्याशङ्क्याऽऽह—अनात्मैवेति । आत्मशब्दार्थमाह—यत्साक्षादिति । अनात्मत्वेन जगतो हेयत्व तच्छब्देन परामृश्यते । वैराग्यमपि किमर्थमित्याशङ्क्याऽऽह—बाह्येति । 'अनात्म—न हीति । अविरक्तोऽपि 'कुतूहलितया 'तत्राधिकारी स्यादित्याशङ्क्याऽऽह—बाह्येति । कथं "तर्हि प्रमाणमप्यात्मान प्रत्यायपिष्यत्यात्मन सर्वात्मत्वात्कुतो विरोध" इत्याशङ्क्याऽऽह—"तथेति ।

है, वह आत्मा नही। इसलिए (अनात्मरूप से जगत् के हेय होने के कारण) इस जगत् से वैराग्य ले ले, इसी प्रयोजन को लेकर "त्रय वा' इस श्रुतिमन्त्र का प्रारम्भ किया जाता है । इस अनात्म (ऐहिक-आमुष्मिक फल के साधनस्वरूप ससार) मे आसक्तचित्त वाले की बुद्धि 'मैं ब्रह्म हूँ' इस प्रकार आत्मलोक के अनुसधान करने के लिए प्रवृत्त नही होती क्योंकि बाह्य प्रवृत्ति और प्रत्यगात्म-विषयिणी प्रवृत्ति मे पारस्परिक विरोध है। इसी को कठश्रुति मे भी प्रतिपादित किया है—'स्वयम्भु भगवान् ने इन्द्रियो को बहिर्मुख करके हिंसित कर दिया है (क्योकि विषयबुद्धि विषयत्वरूप से आत्मा को जानने मे समर्थ नहीं है) इसलिए पुरुष बाह्यविषयो को देखता है, अन्तरात्मा को नही । (आत्म-बुद्धि और अनात्मबुद्धि मे परस्पर विरोध होने के कारण) अमृतत्व की इच्छा करने वाले किसी-किसी धीर पुरुष ने ही इन्द्रियो को विषयो से हटाकर प्रत्यगात्मा को देखा है' इत्यादि ।

१ तस्मादिति—अनात्मत्वेन जगतो हेयत्वात् । अस्मात् उक्तरूपाज्जगत सकाशादधिकारी विरज्येत वैराग्य-माप्नुयादित्यर्थ । तथा च वार्तिकम्—"एवमुक्ते विरक्तोऽस्मान्मुमुक्षु श्रद्धयान्वित । ब्रह्मज्ञानेऽधिकारी स्यात्कथ नामेति भण्यते" ॥३॥ नामरूपात्मक जगदाविद्यमनात्मत्वेन हेयमिति निश्चितेऽस्माद्विरक्तो मुमुक्षुस्तद्धेतु श्रद्धया-ऽनुसदधानो ब्रह्मधीहेतौ श्रवणादौ सन्यासपूर्वके कथमधिकुर्यादिति यत श्रुतिरात्तोचयतऽतोऽयमुपसहार क्रियते—तथेति ॥ २ जगत । ३ ऐहिकामुष्मिक फलतत्साधनात्मकात्ससारात् । ४ अनुसधातुम् । ५ विरोधा-दिति—अनात्मा सङ्गस्यात्मवेदनस्य च अन्योन्य प्रत्यनीकत्वादित्यर्थ । ६ त्रयात्मकम् । ७ अर्थवादोक्ता-नात्मरूपफलविशेषेप्सुतया । ८ सन्यासपूर्वके ब्रह्मधी हेतुश्रवणादौ । ९ अनात्मविषयक ज्ञानमपि । १० तद्धियोरिति शेष । ११ "अनात्मप्रमाण (ज्ञान) मपि आत्मानमाश्रयत्वेन (विषयत्वेन) प्रत्यायपिष्यत्यतो न तद्धियोर्विरोधितेत्याशङ्क्याऽऽह—तथेतीति" पाठान्तरम् । १२ आत्मानात्मधियोर्मिथो विरोधित्वे सतीत्यर्थ ।

"पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इत्यादि ॥

कथं पुनरस्य व्याकृताव्याकृतस्य क्रियाकारकफलात्मनः संसारस्य नामरूप-कर्मात्मकत्वं न पुनरात्मत्वमित्येतत्संभावयितुं शक्यत इति । अत्रोच्यते—तेषां नाम्नां यथोपन्यस्तानां वागिति शब्दसामान्यमुच्यते । यः कश्च शब्दो वागेव सेत्युक्तत्वाद्वागित्येतस्य शब्दस्य योऽर्थः शब्दसामान्यमात्रमेतदेषां नामविशेषाणामुक्थं कारणमुपादानं सैन्धवलवणकणानामिव सैन्धवाचलस्तदाहातो ह्यस्मा अग्रसामान्यात्सर्वाणि नामानि यज्ञदत्तो देवदत्त इत्येवमादिप्रविभागान्युत्तिष्ठन्त्युत्पद्यन्ते प्रविभज्यन्ते लवणाचलादिव लवणकणाः । कार्यं च कारणेनाव्यतिरिक्तम् । तथा विशेषाणां च सामान्येऽन्तर्भावात् ।

---

प्रत्यगात्मधीस्तत्राऽऽह—कश्चिदिति ।

उपसंहारस्यैत्थं सफलत्वेऽपि सर्वस्य जगतो नामादिमात्रत्वं प्रमाणाभावादयुक्तमिति शङ्कते—कथमिति । अनुमानैः संभावना दर्शयति—अत्रेति । तत्र कार्यत्वहेतुकमनुमानमाह—तेषामिति । वागस्येतिवुक्थमिति संबन्धः । इन्द्रियव्यावृत्त्यर्थं वाक्पदार्थमाह—शब्देति । संगृहीतमर्थं विवृणोति—यः कश्चेत्यादिना । उक्थत्वमुपपादयितुमुत्तरं वाक्यमित्याह—तदाहेति । कार्यकारणभावेऽपि किमायातमत आह—कार्यं चेति । सर्वे नामविशेषास्तन्मात्रास्तत्त्वतो न भिद्यन्ते तत्कार्यत्वाद्यत्कार्यं तत्ततो न भिद्यते यथा मृदो घट इत्यर्थः । सर्वे नामविशेषास्तत्सामान्ये कल्पिताः प्रत्येकं तदनुविद्धत्वाद्रज्जिवदंशानुविद्धमर्पाविवदित्यनुमानान्तरमाह—तथेति । कार्याणां कारणेऽन्तर्भाववदिति यावत् ।

---

किन्तु इस व्याकृत और अव्याकृत क्रिया-कारक-फलरूप जगत की नामरूप और कर्मात्मकता ही क्यों है ? आत्मरूपता क्यों नहीं है ? ऐसी सम्भावना की जा सकती है । ऐसी शङ्का होने पर उसका समाधान दिया जाता है—'तेषां नाम्नां' यानी (देवदत्त इत्यादि) लोकप्रसिद्ध जिन नामों का उपरोक्त वर्णन है, उन नामों का 'वाक्' यह शब्दसामान्य कहा जाता है । क्योंकि (पञ्चम ब्राह्मण के तृतीय मन्त्र

---

१ पश्यतीति—न हि विषयधीराश्रयत्वेन (विषयत्वेन) आत्मानमावेदयितुमलं तस्या विषय (विशेष्य) मात्रावसायित्वादतो विरोधस्तद्वियोरिति भावः । २ अत्रेति—अस्मिंश्चोद्ये समाधानमुच्यते । उक्तं च वार्तिके—"नामाद्यात्मकतैवास्य ब्रह्मादेः स्थावरावधेः । न तु वस्त्वन्तरं तत्स्याद्यथा तदिह वर्ण्यते" ॥ इति ॥ ३ देवदत्त इत्यादीनां लोकप्रसिद्धानाम् । ४ बृ० उ० १ ५ ३ । ५ शब्दसामान्यात् । ६ अन्तर्भावाद्विशेषा अपि न सामान्यातिरिक्ता इति शेषः । ७ अनात्मबोधनेन जगतः । ८ जगतस्त्र्यात्मकत्वसंभावनाम् । ९ त्रिष्वनुमानेषु मध्ये । १० सामान्यविशेषयोः । ११ किं फलं निष्पन्नम् । १२ वाक्छब्दितशब्दसामान्यमात्रात् । १३ काल्पनिकभेदं व्यावर्तयितुमिदम् । १४ इत्यर्थ इति—कार्यकारणयोरविभागस्य मृद्घटादौ दृष्टत्वात् प्रकृते च कार्यकारणभावसत्त्वात् तादात्म्यदर्शनात् वाचारम्भणं विकार इति च कार्यानृतत्वोक्तेः शब्दसामान्यमन्तरेण न तद्विशेषा वस्तुतः सन्तीति भावः । १५ एतदेवानन्तरानुमानेन सूचयति—सर्वं इति । १६ तदनुविद्धत्वात्—नामसामान्यव्याप्तत्वात् ।

कथं सामान्यविशेषभाव इति । एतच्छब्दसामान्यमेषां नामविशेषाणां साम समत्वात्साम सामान्यमित्यर्थः । एतद्धि,यस्मात्सर्वैर्नामभिरात्म विशेषैः समम् । किंचाऽऽत्मलाभाविशेषाच्च नामविशेषाणाम् । यस्य च यस्मादात्मलाभो भवति स तेनाप्रविभक्तो दृष्टो यथा घटादीनां मृदा । कथं नामविशेषाणामात्मलाभो वाच इत्युच्यते । यत एतदेषां वाक्शब्दवाच्यं वस्तु ब्रह्माऽऽत्मा । ततो ह्यात्मलाभो नाम्नां शब्दव्यतिरिक्तस्वरूपानुपपत्तेः ।

उक्तमेव प्रश्नपूर्वकं प्रपञ्चयति—कथमित्यादिना । सामत्वं साधयति—एतद्धीति । इतश्च नामविशेषा नाममात्रेऽन्तर्भवन्तीत्याह—किंचेति । नामविशेषाणां नाममात्रादात्मलाभा"त्तस्मादविशेषा"त्तत्रैवान्तर्भाव इत्यक्षरार्थः । सर्वे नामविशेषास्तत्सामान्यान्न पृथग्वस्तुतः सन्ति तेनाऽऽत्मवत्त्वाद्येनाऽऽत्मवन्तस्ते ततोऽन्ये वस्तुतो न सन्ति यथा मृदाऽऽत्मवन्तो घटादयो वस्तुतस्ततोऽन्ये न सन्तीत्युक्तेऽनुमाने" व्याप्ति साधयति—यस्य चेति । "हेतुसमर्थनार्थमुत्तरं वाक्यमुत्थापयति—कथमित्यादिना । "अतः शब्दमात्रात्तद्विशेषाणामात्मलाभो भवतीति शेषः । "तत्रैव युक्तिमाह—ततो हीति । "तत्रैव वाक्यमवतार्य

मे) कहा गया है कि "जो कुछ शब्द है; वह सभी कुछ वाक् ही है।" इसलिए 'वाक्' इस शब्द का जो
अर्थ है; वह शब्दसामान्यमात्र 'एतदेषाम्' अर्थात् इन नामविशेषों का 'उक्थम्' यानी उपादानकारण
है । जिस प्रकार सैन्धव नमक के कणों का उपादानकारण सैन्धव पहाड़ है । इसी को श्रुति कहती है—
'अतो हि' यानी इस शब्दसामान्य से ही लवण के पहाड़ से लवण के कणों के समान समस्त नाम, यज्ञदत्त-
देवदत्तादि इस प्रकार नामविभागपूर्वक 'उत्तिष्ठन्ति' यानी विभक्त होते हैं । तथा कार्य कारण से व्यति-
रिक्त नहीं होता । (सामान्य से अतिरिक्त न होने के कारण) विशेष भी सामान्य के अन्तर्गत रहते हैं ।

किन्तु वाक् और उसके विशेष का सामान्य-विशेषभाव किस प्रकार सिद्ध होगा ? इस पर
कहते हैं । "एतद्" यानी यह शब्दसामान्य "एषाम्" अर्थात् इन नामविशेषों का साम है । समता होने
के कारण साम नाम पड़ा; अर्थात् यह सामान्य है । क्योंकि यही वाग्रूपशब्दसामान्य अपने विशेषभूत
सम्पूर्ण नामों से अविशेषरूप से अनुस्यूत है । इसके अतिरिक्त जितने नामविशेष हैं, उन्हें नामसामान्य
के कारण ही आत्मोपलब्धि होती है, उनसे अभिन्न होने के कारण उनका नाममात्र में अन्तर्भाव होता
है । जिससे जिसको अपने स्वरूप की प्राप्ति होती है, वह उससे अभेदरूप में ही देखा गया है, जिसप्रकार
मिट्टी का घड़े में कोई भेद नहीं है । नामविशेषों को 'वाक्' यानी नामसामान्यरूप आत्मीयत्वप्राप्ति कैसे
होती है ? इस पर कहा जाता है । क्योंकि 'एतदेषाम्' वह वाक्शब्दवाच्य वस्तु इन विशेषों का "ब्रह्म"
अर्थात् आत्मा है क्योंकि उसीसे नामों को अपना स्वरूप प्राप्त होता है; शब्द से भिन्न तो नामों का कोई
स्वरूप सिद्ध नहीं होता । इसी को श्रुति द्वारा वर्णन किया जाता है । क्योंकि यह शब्दसामान्य ही

१. वाक्तद्विशेषयोरिति शेषः । २. सर्वविशेषानुगतत्वात् । ३ एतद्धीति—वाग्रूपं शब्दसामान्यं स्वविशेषभूतैर्नामभिः समम् अविशेषेणानुस्यूतमिति हि प्रसिद्ध सामान्याननुविद्धस्य विशेषस्याभावादित्यर्थः । ४. वाग्विशेषैः । ५. विशेषाणाम् । ६. अतिरेकेण । ७. सामान्यविशेषत्वमेव । ८ वाचः । ९ नामसामान्यात् । १०. नाममात्रादवैलक्षण्यात् । ११. सामान्य एव । १२. अनुमानघटकीभूताम् । १३. उक्तानुमानघटकहेतुरिति यावत् । १४. नामविशेषाणां नामसामान्यात्मीयत्वात् । १५ तत्रैवेति—नामसामान्यात्म—[illegible] एवेत्यर्थः । १६. उक्तार्थम् ।

**अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाᳪ सामतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥२॥**

अब शुक्लनीलादि रूपों का सामान्य चक्षु है। यह उपादान कारण है। इसी चक्षु से समस्त रूप उत्पन्न होते हैं। यह चक्षु ही उन रूपों का साम है क्योंकि यह समस्त रूपों का प्रकाशक होने से उनमें सम है। यह चक्षु ही इन नीलादि रूपों का आत्मा है क्योंकि यही समस्त रूपों को धारण करता है ॥ २ ॥

---

'तत्प्रतिपादयत्येतच्छब्दसामान्य हि यस्माच्छब्दविशेषान्सर्वाणि नामानि बिभर्ति धारयति स्वरूपप्रदानेन । एवं कार्यकारणत्वोपपत्तेः सामान्यविशेषोपपत्तेरात्मप्रदानोपपत्तेश्च नामविशेषाणां शब्दमात्रता सिद्धा । एवमुत्तरयोरपि सर्वं योज्यं यथोक्तम् ॥१॥

अथेदानीं रूपाणां सितासितप्रभृतीनां चक्षुरिति चक्षुर्विषयसामान्यं चक्षुःशब्दाभिधेयं 'रूपसामान्यं प्रकाश्यमात्रमभिधीयते । अतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषां

---

व्याचष्टे—तदित्यादिना । 'तस्मात्तन्मात्रात्तद्विशेषाणामात्मलाभ इति वाक्यशेषः । प्रथमकण्डिकया सिद्धमर्थमुपसंहरति—एवमिति । उपपत्तित्रयमुत्तरवाक्यद्वयेऽपि तुल्यमित्यतिदिशति—एवमुत्तरयोरिति ॥ १ ॥

'तत्र व्याख्यानसापेक्षाणि पदानि व्याकरोति— अथेत्यादिना । नामव्याख्यानानन्तर्यमथशब्दार्थः । चक्षुरुक्थमिति सबन्धः । चक्षुरिति चक्षुःशब्दाभिधेयं चक्षुर्विषयसामान्यमभिधीयते तच्च रूपसामान्य

---

शब्दविशेषरूप सम्पूर्ण नामों को अपना स्वरूप प्रदान कर "बिभर्ति" अर्थात् धारण करता है। इस प्रकार कार्यकारणत्व, सामान्यविशेषत्व और आत्मीयोपपत्ति होने से नामविशेषों की शब्दमात्रता सिद्ध होती है। इसी प्रकार इस ब्राह्मण में आगे वर्णन किये गये दो श्रुतिवाक्यों में भी उपरोक्त सम्बन्ध लगा लेना चाहिये ॥ १ ॥

---

१ तदिति—विशेषाणां सामान्यादात्मलाभत्वमित्यर्थः । २ आत्मात्मीयत्वोपपत्तेः । ३ रूपसामान्यमिति—रूपाणां चक्षुरुक्थमित्यत्र रूपविशेषाणां कार्यत्वं चक्षुषः कारणत्वमिति (कार्यकारणभाव) सम्बन्धदर्शनात् रूपसामान्यं चक्षुरुक्तं प्रसिद्धाच्चक्षुषो रूपविशेषानुत्पत्तेः रूपसामान्याच्च तद्विशेषोत्पत्तिरिष्टत्वात् । चक्षुषो रूपमात्रतेजोविकारत्वेन रूपात्मत्वाच्चक्षुःशब्देन रूपसामान्यग्रहणमिति भावः । चक्षुषो रूपात्मत्वमुपपादितं वार्तिके—

यद्यद्धि रूप्यते किंचिच्छब्दस्पर्शादिकं धिया । तत्तद्रूपमिति ज्ञेयं तैजसत्वाविशेषतः ॥ त्वाष्ट्रमेव हि सर्वत्र तेजो रूपादिलक्षणम् । तस्माद्विषयसामान्यं चक्षुःशब्देन भण्यते ॥ १९ २० ॥ इति । बुद्ध्या रूप्यमाणेऽर्थे रूपशब्दप्रवृत्तेरौचित्यद्योतनार्थो हिशब्दः । रूप्यमाणकार्यमात्रस्य रूपत्वे हेतुमाह—तैजसत्वेति । कार्यमात्रस्य तैजसत्वाविशेषात्तस्य च रूपात्मत्वस्वीकारादित्यर्थः ॥ कथं कार्यमात्रस्य तैजसत्वं तदाह—त्वाष्ट्रमिति । सर्वं हि कार्यं सावित्रेण तेजसा पच्यमानमात्मानं लभते तथा च तदेव तदित्यर्थः । चक्षुषस्तैजसत्वेन रूपात्मत्वमुक्त्वा फलितमाह—तस्मादिति । एतेन प्रकाश्यमात्रमिति भाष्यं व्याख्यातम् । ४ धारकत्वात् । ५ तत्सामान्यात् । ६ उत्तरवाक्यद्वये ।

**अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषाᳬ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्रयᳬ सदेकमयमात्माऽऽत्मो एकः सन्नेतत्त्रयं**

तथा चलन, दर्शन, मननादि सम्पूर्ण कर्मों का सामान्य शरीर है। यही उन क्रियाओं का उपादान कारण है, इस शरीर से ही सब कर्म उत्पन्न होते है। यह शरीर इसका साम है क्योंकि यह समस्त कर्मों मे समान होने से सम है। यह शरीर उन कर्मों का आत्मा है क्योंकि यही समस्त कर्मों को धारण करता है। वह यह नाम, रूप और कर्म तीन होते हुए भी सघातरूप

---

सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥२॥

अथेदानीं सर्वकर्मविशेषाणां मननदर्शनात्मकानां चलनात्मकानां च क्रियासामान्यमात्रेऽन्तर्भाव उच्यते। कथं, सर्वेषां कर्मविशेषाणामात्मा शरीरं सामान्यमात्माऽऽत्मनः कर्मेत्युच्यते। आत्मना हि शरीरेण कर्म करोतीत्युक्तम्। शरीरे च सर्वं कर्माभि-

---

तदपि प्रकाश्यमात्रमिति योजना ॥ २ ॥

रूपप्रकरणानन्तर्यमथेत्युच्यते। क्रियाविशेषाणां क्रियामात्रेऽन्तर्भावं प्रश्नद्वारा स्फोरयति—कथमित्यादिना। आत्मशब्देनात्र शरीरनिर्वर्त्यकर्मग्रहणे पुरुषविधब्राह्मणशेषमनुकूलयति—आत्मना हीति। तत्रैवोपपत्तिमाह—शरीरे चेति। तथाऽपि कथमात्मशब्द. शरीरनिर्वर्त्यं कर्म ब्रूयादित्याशङ्क्य

---

'अथ' माने इसके बाद 'रूपाणाम्' अर्थात् शुक्ल-कृष्ण आदि रूपो का 'चक्षु' अर्थात् चक्षु सामान्य है। चक्षु के विषयभूत रूपो का सामान्य चक्षुशब्द से कहा जाने वाला रूपसामान्य अथवा कार्यमात्र कहा जाता है। इसलिए सारे रूप उत्पन्न होते है, यह इनका साम है क्योंकि यह समस्त रूप से विशेष द्वारा अनुगत है। यह इनका ब्रह्म है, क्योंकि यही सब रूपो को धारण करता है ॥ २ ॥

अब इसके बाद मनन दर्शनात्मक एव चलनात्मक समस्त कर्मविशेषो की क्रियासामान्यमात्र मे

---

१ कर्मसामान्यम्। २ कर्मविशेषाणाम्। ३ शरीरम्। ४ उत्तम्भोऽप्यर्थ। ५ क्रियासामान्यं कर्मेत्यर्थ।
६ ननु कथमात्मा कर्मणामुक्थमिति विशेषतो व्यपदिश्यते तस्य सर्वोपादानत्वादित्याशङ्क्यात्मशब्दार्थमाह—आत्मा शरीरमिति। शरीरविषयात्मशब्देनात्र तन्निर्वर्त्यं कर्मसामान्यं लक्ष्यत इति प्रतीकोपादानपूर्वकमाह—आत्मेति। तथा च वार्तिकम्—'वाक्चक्षुःशब्दतो यद्वद्गृह्यते विषयस्तयोः। आत्मनो विषयस्तद्वदात्मशब्देन गृह्यते' ॥ २५ ॥ इति। ७ शरीरस्य। ८ बृ० उ० १।४।१७। ९ सर्वं कर्मेति। तदुक्तं वार्तिके—"सर्वेन्द्रियपरिस्पन्दो व्यज्यते न शरीरके। शरीरविषयस्तस्मादात्मत्वेनाभिधीयते ॥२६॥ इति। शरीरविषयस्त-उज्जन्यपरिस्पन्द इति यावत्। अत्र प्रकृतवाक्य॥ १० कार्यमात्रम्। ११ चतुर्थब्राह्मणे। १२ तत्रैवेति—अत्रात्मशब्दितदेहनिर्वर्त्यकर्मग्रह इत्यर्थ। १३ शरीरस्य कर्मनिर्वर्तकत्वेऽपि।

तदेतदमृतꣳ सत्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥३॥

इति प्रथमाध्याये षष्ठं ब्राह्मणम् ॥६॥

इति बृहदारण्यकोपनिषदि प्रथमोऽध्यायः ॥१॥

बृहदारण्यकक्रमेण तृतीयोऽध्यायः ॥३॥

से एक आत्मा (शरीर) है और यह कार्यकरणसघातरूप आत्मा एक होते हुए तीन हैं। वह यह अमृत शरीरावस्थित कार्यात्मक नाम, रूप सत्य से अच्छादित है। यहाँ पर प्राण ही अमृत है और नाम रूप सत्य है इनसे यह अविनाशी प्राण अप्रकाशित है। (यहाँ तक अविद्या के विषय ससार का स्वरूप दिखलाया गया। अब विद्या के विषय आत्मा को कहेंगे) ॥ ३ ॥

व्यज्यते । [1]अतस्तात्स्थ्यात्तच्छब्दं कर्म कर्मसामान्यमात्रं सर्वेषामुक्थमित्यादि पूर्ववत् । तदेतद्यथोक्तं नाम रूपं कर्म त्रयमितरेतराश्रयमितरेतराभिव्यक्तिकारणमितरेतर-

लक्षणयेत्याह—अत इति ।

[2]सक्षेपस्यापि सक्षेपान्तरमाह—तदेतदिति । तदेतत्त्रयं त्रिदण्डविष्टम्भवत्संहतं सदेकमिति संबन्ध । कथ सहतत्वमत आह—इतरेतराश्रयमिति । [3]रूपं विषयमाश्रित्य नामकर्मणो सिध्यत इत्यातन्त्र्येण

एकता वतलायी जाती है। किस प्रकार यह एकता है ? सभी कर्मविशेषो का 'आत्मा' यानी शरीर सामान्य आत्मा है। अथवा शरीर का कर्म होने से यहाँ कर्म को आत्मा कहा जाता है। (चतुर्थ ब्राह्मण के सतरहवें मन्त्र म) पहले कह चुके है कि "आत्मा ही से यानी शरीर से कर्म करता है", शरीर मे ही सभी कर्मों का परिस्पन्दन होता है। इसलिए (आत्मशब्दित शरीर के सर्व कर्मो के जनक होने के कारण) आत्मस्थ कर्म को उसी शब्द से कहा जाता है, वह कर्म सामान्यमात्र आत्मा समस्त कर्मों का उपादान कारण है इत्यादि पूर्ववत् ग्रन्थ की तरह समझ लेना चाहिए।

वे ये उपरोक्त नाम, रूप और कर्म तीनो एक दूसरे के आश्रित, एव एक दूसरे की अभिव्यक्ति के कारण है, एक दूसरे में लय को प्राप्त होने वाले और परस्पर सम्मिलित हुए तीन दण्डो के समूह के समान (आश्रय-आश्रयी भाव से रहने के समान) एक है। उनकी किस प्रकार एकरूपता है ? इसका प्रतिपादन किया जाता है। इस आत्मा, कार्यकरणसघातरूप पिण्ड तथा अन्नत्रय के प्रकरण मे "वह यह आत्मा एतन्मय है' इस श्रुति से व्याख्या की गई है। यह जो नाम, रूप और कर्म है वह इतना ही बस

१ अत इत्यादे । आत्मशब्दितदेहस्य सर्वकर्मजनकत्वात् सर्वकर्मणामात्मशब्दितदेहस्थत्वात् । अजहल्लक्षणयाऽत्मशब्दित कर्म । तदपि कर्मसामान्यमात्रमित्यर्थ । २ सक्षेपस्यापीति—नामरूपकर्मात्मना सक्षिप्तस्यापि जगत. पुन सक्षेपान्तरमित्यर्थ । ३ इतरेतराश्रयमिति विशेषणस्य तात्पर्यं वदन् नामकर्माश्रयत्व रूपस्य प्रदर्शयति—रूपमिति । तदुक्त वार्तिके—' रूपमेव प्रतिष्ठा स्यात्सर्वदा नामकर्मणो । न हि रूपमनाश्रित्य विद्येते नामकर्मणी" ॥३०॥ इति । सर्वदा दैहिकयोर्द्वयो सत्त्वावच्छिन्नकाले । अत्र युक्तिमाह—न हीति । तयोरस्वातन्त्र्यादित्यर्थ. ॥

प्रलय सहतं त्रिदण्डविष्टम्भवत्सदेकम् । केनाऽऽत्मनेकत्वमित्युच्यते । अयमात्माऽस्य पिण्ड कार्यकरणात्मसघातस्तथाऽन्नत्रये व्याख्यात एतन्मयो वा अयमात्मेत्यादिना । एतावद्धीद सर्वं व्याकृतमव्याकृत च यदुत नाम रूप कर्मेत्यात्मा उ एकोऽय कार्यकरणसघात सन्नध्यात्माधिभूताधिदैवभावेन व्यवस्थितमेतदेव त्रय नाम रूप कर्मेति ।

निर्विषययोस्तयो सिद्धयदर्शनान्नामकर्मणो चाऽऽश्रित्य रूप सिध्यति । न हि ते हित्वा किंचिदुत्पद्यत इत्यर्थं । वाचकेन वाच्यस्य तेनेतरस्य ताभ्यां च क्रियायास्तथा तयोरपेक्षादर्शनादन्योन्यमभिव्यञ्जक त्वमाह—इतरेतरेति । सति नाम्नि रूपसहारदर्शनाद्रूपे च सति नामसहारदृष्टे सतोश्च तयो कर्मण स्तस्मिश्च सति तयोरुपसहारोपलम्भादितरेतरप्रलयमित्याह—इतरेतरप्रलयमिति । त्रयाणामेकत्व विरुद्धमिति शङ्कित्वा परिहरति—केनेत्यादिना । कथ कार्यकरणसघातात्मना त्रयाणामेकत्व तत्राऽऽह —तथेति । नामरूपकर्मणा कार्यकरणसघातमात्रत्वेऽपि ततो व्यतिरिक्त सघातादन्यस्यादित्याश ङ्कयाऽऽह—एतावदिति । नामादित्रयस्य सघातमात्रत्वे कथ 'व्यवहारा' साकर्यमित्याशङ्क्याऽऽह— आत्मेति । सघातोऽयमात्मशब्दित स्वयमेकोऽपि सन्नध्यात्मादिभेदेन स्थित "त्रयमेव" भवतीति व्यवहारासाकर्यमित्यर्थं ।

सम्पूर्ण व्याकृत और अव्याकृत ससार है । एव देह भी कार्यकरणसघातमात्र एक होते हुए यही अध्यात्म, अधिभूत और अधिदैव भाव से स्थित नाम, रूप और कर्म त्रयात्मकस्वरूप है ।

प्राणात्मक सौत्र शरीर का अब आगे विवेचन किया जाता है । अमृत सत्येन च्छन्नम इस

१ सहतमिति—सम्मिलितम् । उक्त वार्तिके— आश्रयाश्रयिभावेन नामरूपक्रियात्मनाम् । एकार्थाना सता तेषा सहति स्याच्छरीरक ॥ एवामानमिवस्य भोक्तु सुखदु खप्रदत्वेनैकशरीरारम्भकत्वेनावस्थितानामित्यर्थ । २ आश्रयाश्रयिभावेनावस्थानवत् । ३ कार्येति—प्रत्यक्षोपलभ्यकार्यकरणसघातात्मना त्रयाणामेकत्वमिति यावत् । ४ तथेति—कार्यकरणसघातो यथात्त्रयात्मकस्तथाऽन्नत्रये (तत्प्रकरण) एत मय इत्यादिना व्याख्यात इत्यन्वय । ५ बृ०उ० १ ५ ३ । ६ देह । ७ अपि । देहस्य त्रयात्मत्व न केवल प्रत्यक्ष वाक्यीयमपीति भाव । ८ इत्यर्थ इति—एव कर्मणो नामरूपाश्रयत्वमुक्त वार्तिके— 'प्राण एव प्रतिष्ठैव तथा स्यान्नामरूपयो । प्राणे धात्म्याश्रयाद्यस्मादात्मलाभ सदा तयो ॥३१॥ इति । एव रूपस्य नामकर्माश्रयत्वमवदित्यर्थ । प्राणस्य क्रियासामान्यात्मना नामरूपाश्रयत्वे हेतुमाह—प्राणेति । नामरूपयोर्देहस्थयो सत्त्व सदा प्राणाधीनमिति प्राणस्य तदाश्रयत्वोक्तिरित्यर्थ । नाम्नो रूपाद्याश्रयत्वमपि तत्रैवोक्त— तद्वद्वागाश्रयत्व च तयो स्याद्रूपकर्मणो । वाचा प्रकाश्यमाने ते प्रयुज्येते यत सदा ॥३२॥ इति । रूपस्य कर्मणश्च प्रत्येकमितरेतराश्रयत्ववदित्यर्थ । वाक्छब्दस्य नाममात्रस्य रूपाद्याश्रयत्वे हेतुमाह—वाचेति । न हि रूपस्य कर्मणश्चाप्रकाशितस्य क्वचिद्विनियोगस्तेन प्रकाश्ययोस्तयोरुक्त प्रकाशकाश्रयत्वमित्यर्थ ॥ ९ वाचकस्य । १० नामादीनाम् । ११ भिन्नत्वेन व्यवहरणम् । १२ नामरूपकर्मात्मकमेव । १३ भवतीति—एकस्यैव देहस्य कृतस्त्रिरूपत्वमत आहुर्वार्तिके— नामरूपक्रियाभिन्नो देहोऽत्र गृह्यते यत ॥३४॥ इति । नामादिभिन्नस्य देहस्य गृह्यमाणत्वादित्यर्थ । नामादिव्यतिरेकेण तस्यागृह्यमाणत्वादिति यावत् । अभिन्न इति च्छेदे तु सरला योजना । भिन्नशब्दस्य त्वभिन्नार्थत्व तु सरलतरेति द्रष्टव्यम् । तथा च वनवृक्षवत् समुदायविवक्षयाऽत्र देह इति व्यवहार । समुदायिविवक्षया त्वपरत इति तदसाङ्कर्यमित्यभिप्रत्याह—इति व्यवहारासाङ्कर्यमिति ।

तदेतद्वक्ष्यमाणम् । अमृतं सत्येन च्छन्नमित्येतस्य वाक्यस्यार्थमाह—'प्राणो वा अमृतं करणात्मको'ऽन्तरुपष्टम्भक आत्मभूतोऽमृतोऽविनाशी । नामरूपे सत्यं कार्यात्मके शरीरावस्थे क्रियात्मकस्तु प्राण'स्तयोरुपष्टम्भको बाह्याभ्यां शरीरात्मकाभ्यामुपजनापायधर्मभ्यां 'मर्त्याभ्यां छन्नोऽप्रकाशीकृतः । 'एतदेव 'संसारसतत्त्वम'विद्याविषयं प्रदर्शितम् । अत ऊर्ध्वं विद्याविषय आत्माऽधिगन्तव्य इति चतुर्थ आरभ्यते ॥३॥

इति बृहदारण्यकभाष्ये प्रथमाध्याये षष्ठं ब्राह्मणम् ॥६॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ बृहदारण्यकभाष्ये प्रथमोऽध्यायः ॥१॥

---

एकस्मिन्नपि संघाते 'कार्यकरणरूपेणावान्तरविभागमाह—तदेतदिति । आत्मभूतस्त'स्योपाधित्वेन स्थित इति यावत् । अविनाशी स्थूलदेहे गच्छत्यपि यावन्मोक्षं न गच्छतीत्यर्थः । सच्च त्यच्च सत्य भूतपञ्चकं तदात्मके नामरूपे इत्याह—नामेति । करणयाथात्म्यं कथयति—क्रियात्मकस्त्विति । पञ्चीकृतपञ्चमहाभूतात्मकं तत्कार्यं सर्वं सच्च त्यच्चेति व्युत्पत्ते' सत्यं वैराजं शरीरं कार्यमपञ्चीकृतपञ्चमहाभूततत्कार्यात्मककरणरूपसप्तदशकलिङ्गस्य सूत्राख्यस्याऽऽयतन तस्यैवाऽऽच्छादकं "तत्खल्वात्माऽपि स्थूलदेहच्छन्नत्वादुर्विज्ञान" तेनापि" च्छन्नं प्रत्यग्वस्तु सुतरामिति तज्ज्ञानेऽवहितं भाव्यमिति भावः । इदानीमविद्याकार्यप्रपञ्चमुपसंहरति—एतदिति । "अविद्याविषयविवरणस्य "वक्ष्यमाणोपयोगमुपसहरति—अत इति । प्रपञ्चिते सत्यविद्याविषये ततो विरक्तस्याऽऽत्मानं विविदिषो"स्तज्ज्ञापनार्थं चतुर्थप्रमुख' संदर्भो भविष्यति । "तस्मादविद्याविषयविवरणमुपयोगीति भावः ॥ ३ ॥

इति बृहदारण्यकभाष्यटीकाया षष्ठ ब्राह्मणम् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्येण भगवदानन्दज्ञानेन कृतायां बृहदारण्यकोपनिषद्भाष्यटीकायां प्रथमोऽध्याय. ॥ १ ॥

---

श्रुतिवाक्य का अर्थ किया जाता है । लिङ्गात्मप्राण ही अमृत है । जो इन्द्रियस्वरूप, शरीर के भीतर धारकरूप से विद्यमान, आत्मस्वरूप है, वह प्राण ही अमृत है यानी अविनाशी है तथा शरीरावस्थित कार्यात्मक नाम और रूप सत्य हैं, उन (नाम और रूप) का आधारभूत क्रियात्मक प्राण वृद्धि और क्षरणशील, बाह्य, शरीररूप विनश्वर नाम-रूपो से 'छन्न' अर्थात् अप्रकाशित किया हुआ है । (स्थूल-सूक्ष्म देहद्वय आत्मा से उपसहृत है) यही अविद्या का कार्यभूत ससार का स्वरूप प्रदर्शित किया गया है । इसके बाद अग्रिम ग्रन्थ मे विद्या का विषयभूत आत्मावबोध करना चाहिए—इसीलिए चतुर्थ अध्याय (उपनिषत् क्रम से द्वितीय अध्याय) का प्रारम्भ किया जाता है ॥३॥

इस प्रकार बृहदारण्यकभाष्य के हिन्दीभाषानुवाद मे प्रथमाध्याय का षष्ठ ब्राह्मण पूर्ण हुआ ॥६॥

---

१ प्राणात्मक सौत्र शरीरमित्यर्थ । २ लिङ्गात्मैव । ३ अन्त सन् धारक । ४ नामरूपयो । ५ विनश्वरनामरूपाभ्याम् । ६ देहद्वयात्मनोपसहृतमेव । ७ ससारस्वरूपम् । ८ अविद्याकार्यम् । ९ कार्यकरण इति यावत् । १० आत्मन । ११ सूक्ष्मशरीरम् । १२ अप्रत्यक्षम् । १३. अपिना स्थूलसमुच्चय । १४ अविद्याकार्यप्रपञ्चनस्य । १५ वक्ष्यमाणे तत्त्वज्ञाने य उपकारस्त दर्शयति । १६ आत्मयाथात्म्यबोधनार्थम् । १७ तस्मादित्यादि—प्रपञ्चिताविद्याकार्यस्यात्मज्ञानोपयोगिवैराग्यप्रतियोगित्वात्तत्कार्यप्रपञ्चनमात्मज्ञानोपकारकमित्यर्थं ।

## अथ द्वितीयोऽध्यायः ।

'आत्मेत्येवोपासीत 'तदन्वेषणे च 'सर्वमन्विष्टं स्यात्तदेव चाऽऽत्मतत्त्वं सर्वस्मात्प्रेय-स्त्वादन्वेष्टव्यम् । आत्मानमेवा'वेदहं ब्रह्मास्मीत्यात्मतत्त्वमेकं 'विद्याविषयः । यस्तु 'भेददृष्टिविषयः सोऽन्योऽसावन्योऽहमस्मीति न स वेदेत्य'विद्याविषय. ।

"'एकधैवानुद्रष्टव्यं" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्येव-मादिभिः प्रविभक्तौ विद्याविद्याविषयौ सर्वोपनिषत्सु । तत्र चाविद्याविषयः सर्व एव

'तृतीयेऽध्याये सूत्रितविद्याविद्ययोरविद्या प्रपञ्चिता, संप्रति विद्यां प्रपञ्चयितु चतुर्थमध्यायमारभमाणो सूत्रं कीर्तयति—आत्मेति । किमित्यर्थान्तरेषु सत्स्वात्मतत्त्वमेवानुसधातव्यं तत्राऽऽह—तदन्वेषणे चेति । तस्यैवान्वेष्टव्यत्वे परप्रेमास्पदत्वेन परमानन्दत्वं हेत्वन्तरमाह—तदेवेति । आत्मतत्त्वज्ञानस्य सर्वाभि-फलत्वाच्च तदेवान्वेष्टव्यमित्याह—आत्मानमिति । उक्तया 'परिपाट्या "सिद्धमर्थं संगृह्णाति—'आत्म-तत्त्वमिति । उक्तमर्थान्तरमनुवदति—यस्त्विति । सोऽविद्याविषय इति संबन्ध । कथ भेददृष्टिविषय-स्याविद्याविषयत्वं तत्राऽऽह—अन्योऽसाविति । यो भेददृष्टिपर स न वेदेत्य"विद्या तद्दृष्टिमूलं सूत्रिता "तेन "तद्विषयो भेददृष्टिविषय इत्यर्थ. ।

कथ यथोक्तौ "विद्याविद्याविषयाव"सङ्कीर्णावियसातु शक्येते तत्राऽऽह—एकधेति । सप्ताऽन्नब्राह्मणे वृत्तमर्थं कथयति—तत्र चेति । विद्याविद्याविषययोरिति यावत् । आदिपद साध्यसाधना"वान्तरभेद-

'आत्मा है' इस प्रकार (शब्दप्रत्यय से अगम्य आत्मा की) उपासना करे । उसका अनुसन्धान कर लेने पर (यह सब एक हो जाते हैं, इससे) सब का अनुसन्धान हो जाता है और वह आत्मतत्त्व सब से प्रिय होने के कारण अनुसन्धान करने योग्य है । "उसने (सघात मे अधिकारीरूप से स्थित ब्रह्म कर्ता) आत्मा को ही जाना कि मैं ब्रह्म हूँ", इससे ज्ञान का विषय केवल आत्मतत्त्व ही है । जो भेददृष्टि (अनात्मप्रपञ्च) का विषय है —"वह यह अन्य है, मैं अन्य हूँ, इस प्रकार जो सोचता है, वह नहीं जानता" ऐसा कहना अज्ञान का कार्य है ।

"विज्ञानघन, एकरसत्वलक्षण आत्मा को एक ही रूप से देखना चाहिए"; "जो यहाँ नानात्व देखता है, वह मृत्यु से मृत्यु को प्राप्त होता है" इस प्रकार के श्रुतिवाक्यो द्वारा विद्या और अविद्या

१ आत्मेति—आत्मन शब्दधियोरविषयत्वद्योतक इतिशब्द । यस्यात्मन स प्राणन्नेव प्राणो नाम भवतीति प्राणा-दिविशेषणान्युक्तानि यत्र तानि सर्वाण्याप्नुवन्नात्मेत्युच्यते तमात्मेत्येवोपासीत न केनचिद्विशेषणेन विशिष्टतया । शब्दप्रत्ययागम्यमात्मानमनुसदधीतेति यावत । २ तदनुसन्धाने । ३ "अत्र ह्येते सर्व एक भवन्ती'ति वाक्य-शेषात् । ४ सघातेऽधिकारितया स्थित ब्रह्म कर्तृरूपम् । ५ अनात्मप्रपञ्च । ६ अज्ञानकार्यमिति यावत् । ७ एकधेति—विज्ञानघनैकरसत्वलक्षणेनैकेनैव रूपेणेत्यर्थं । ८ उपनिषत्प्रथमे । ९ उक्तवृत्ता-नुवादेनेति यावत् । १० उक्तक्रमेण । ११ इत्युक्त्या । १२ अविद्याया भेददृष्टिमूलत्वेन । १३ अविद्याविषय । १४ आत्मानात्मानौ । १५ विविक्तौ । १६ अवान्तरभेदश्चाध्यात्मादि । भूतभवि-ष्यदादिश्चेति बोध्यम् ।

साध्यसाधनादिभेदविशेषविनियोगेन व्याख्यात आ तृतीयाध्यायपरिसमाप्तेः । स च व्याख्यातोऽविद्याविषयः सर्व एव द्विप्रकारः । अन्तःप्राण उपष्टम्भको गृहस्येव स्तम्भादिलक्षणः प्रकाशकोऽमृतः । बाह्यश्च कार्यलक्षणोऽप्रकाशक उपजनापायधर्मकस्तृणकुशमृत्तिकासमो गृहस्येव सत्यशब्दवाच्यो मर्त्यः । तेनामृतशब्दवाच्यः प्राणश्छन्न इति चोपसंहृतम् ।

स एव च प्राणो बाह्याधारभेदेष्वनेकधा विस्तृतः । प्राण एको देव इत्युच्यते ।

सग्रहार्थम् । यथोक्तो भेद एव विशेषः तस्मिन्विनियोगो व्यवस्थापनं तेनेत्यर्थः । उपसंहारब्राह्मणान्ते वृत्तमनुभाषते—स चेति । अथवोक्तौ विद्याविद्याविषयौ कथमसंकीर्णौ मन्तव्याविरयाशङ्क्याऽऽह—एकधेति । 'तत्रो'त्तरग्रन्थस्य विषयपरिशोधार्थं' पुरुषविधब्राह्मणशेषमारभ्योक्तं दर्शयति—तत्र चेति । "तर्हि समाप्तत्वादविद्याविषयस्य कथमविदुषो गार्ग्यस्य प्रवृत्तिरित्याशङ्क्य "तदर्थमवान्तरविभागमनुवदति—स चेति । तावेव प्रकारौ दर्शयन्नादौ सूक्ष्मं शरीरमुपन्यस्यति—अन्तरिति । "तस्य बाह्यकरणद्वारा स्थूलेषु विषयेषु प्रकाशकत्वममृतत्व" च व्युत्पादितम् । द्वितीयं प्रकारमाचक्षाणः स्थूलं शरीरं दर्शयति—बाह्यश्चेति । "तस्य कयाऽपि विद्यया सूक्ष्मदेहं प्रत्यप्रकाशकत्वादप्रकाशकत्वम् । आगमापायित्वेनावहेयत्वं सूचयति—उपजनेति । यथा "गृहस्य तृणादि बहिरङ्गं तथा सूक्ष्मस्य देहस्य स्थूलो देह"स्तथाऽपि तृणादि विना गृहस्य व्यवहारायोग्यत्ववत्तस्यापि स्थूलदेहं विना न तद्योग्यत्वमिति मत्वाऽऽह—तृणेति । "तस्य पूर्वब्राह्मणान्ते नामरूपे सत्यमित्यत्र प्रस्तुतत्वमस्तीत्याह—सत्येति । सर्वथा बाधवैधुर्यं सत्यत्वमिति शङ्कां निरसितुं विशिनष्टि—मर्त्य इति । तस्य कार्यं दर्शयति—तेनेति ।

वृत्तमनूद्याजातशत्रुब्राह्मणमवतारयति—स एवेति । "आदित्यचन्द्रादयो बाह्याधारभेदा अनेकधात्वमतिष्ठा मूर्धेत्यादिवक्ष्यमाणगुणवशाद्ब्रह्मद्वयम् । कथं "तर्हि तस्यैकत्वं तत्राऽऽह—प्राण इति ।

के आत्म और अनात्मविषयों को समस्त उपनिषदों में पृथक्-पृथक् कर दिया है। उन (विद्या और अविद्या विषयों) में साध्यसाधनादि भेदविशेष के विनियोग द्वारा अविद्या के सभी विषयों (कार्य) की (ब्राह्मणक्रम से) तृतीयाध्याय (उपनिषत्क्रम से प्रथमाध्याय) की समाप्तिपर्यन्त व्याख्या कर दी गई है। एवं वह व्याख्या किया गया समस्त अविद्या का कार्य (स्थूलसूक्ष्मदेहात्मक संघातरूप) दो प्रकार का है। पहला, घर के स्तम्भ के समान स्थूलशरीर को धारण करने वाला स्थूलदेह के अन्तर्गत प्राण है जो प्रकाशक और अमृत है; दूसरा, बाह्य कार्यरूप प्रपञ्च है जो अप्रकाशक, वृद्धि और क्षरणशील, घर के तृण, कुश और मृत्तिका के समान मरणस्वभाव वाला 'सत्य' शब्द वाच्य है, उससे अमृतशब्दवाच्य प्राण आवृत है—ऐसा पहले उपसंहार कर आये हैं।

१. स्थूलसूक्ष्मदेहात्मकः संघातरूप इति यावत् । २ अन्तर्गतः स्थूलस्य । ३ स्थूलस्य धारकः । ४. सूक्ष्मदेहः । ५ तृतीयाध्याये । ६ तत्रेति—विद्याऽविद्याविषययोरसंकीर्णत्वेनावगमो । ७ उत्तरग्रन्थस्येति—उत्तरग्रन्थस्य चतुर्थाध्यायस्य यो विषयो विद्यारूपस्तस्य परिशोधो विवेचनं तदर्थमित्यर्थः । ८ दोषिरूपमिति यावत् । ९ सप्तान्नब्राह्मणम् । १० सर्वाविद्याविषयस्य व्याख्यातत्वे । ११ तत्प्रवृत्तिप्रदर्शनार्थम् । १२ प्राणस्य लिङ्गदेहस्येति यावत् । १३ आनमृतेऽनाशयत्वम् । १४ स्थूलदेहस्य । १५ आकाशविशेषकारमरस्य । १६ ननु तद्घटकत्वाभावात्कथमन्तरङ्गत्वमत आह—तथाऽपीति । तद्घटकत्वाभावेऽपीत्यर्थः । १७ स्थूलस्य । १८ वक्ष्यमाणा । १९ अनेकत्वे ।

तस्यैव बाह्य पिण्ड एकः साधारणो विराड्वैश्वानर आत्मा पुरुषविधः प्रजापतिः को हिरण्यगर्भ इत्यादिभिः पिण्डप्रधानैः शब्दैराख्यायते सूर्यादिप्रविभक्तकरणः । एकं चानेकं च ब्रह्म तावदेव नातः परमस्ति प्रत्येकं च शरीरभेदेषु परिसमाप्तं चेतनावत्कर्तृ भोक्तृ चेत्य विद्याविषयमेवाऽऽत्मत्वेनोपगतो गार्ग्यो ब्राह्मणो वक्तोपस्थाप्यते । तद्विपरीतात्मदृगजातशत्रुः श्रोता ।

एवं हि यतः । पूर्वपक्षसिद्धान्ताख्यायिकारूपेण समर्प्यमाणोऽर्थः श्रोतुश्चित्तस्य वशमेति । विपर्यये हि तर्कशास्त्रवत्केवलार्थानुगमवाक्यैः समर्प्यमाणो दुर्विज्ञेयः स्यादत्यन्त-

प्राणस्य नानात्वमेकत्वं चोक्तं तत्रैकत्वं विवृणोति—तस्यैवेति । प्राणस्यैव स्वभावभूतोऽनात्मलक्षणः पिण्डः समष्टिरूपो हिरण्यगर्भादिशब्दैरधिविषयैस्तत्र तत्र श्रुतिस्मृत्योरुच्यते । स च "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्यादिश्रुतेः सूर्यादिभिः प्रविभक्तैः करणैरुपेतो भवतीत्यर्थः । यद्ब्रह्म समस्तं व्यस्तं च तदिदं हिरण्यगर्भमात्रमेव न तस्मादधिकमस्तीति हिरण्यगर्भं स्तौति—एक चेति । एकत्वं विशदीकृत्य प्राणस्य नानात्वं विशदयति—प्रत्येक चेति । घोरत्वादिसामान्यतुल्यत्वं व्यावर्तयति—चेतनावदिति । केवलभोक्तृत्वपक्षं वारयति—कर्त्रिति । वक्ता पूर्वपक्षवादीति यावत् । तस्मादमुख्याद्ब्रह्मणो विपरीतं मुख्यं ब्रह्म तस्मिन्नात्मदृष्टी राजा श्रोता सिद्धान्तवादीत्यर्थः ।

किमिति वक्तृश्रोतृरूपाख्यायिका प्रणीयते तत्राऽऽह—एव हीति । एवंशब्दार्थमेव स्फुटयति—पूर्वपक्षेति । अतो भवितव्यमाख्यायिकयेति शेषः । आख्यायिकानङ्गीकारे दोषमाह—विपर्यये हीति । यथा तर्कशास्त्रेण समर्थ्यमानोऽर्थो ज्ञातुं न शक्यते उत्प्रेक्षिकतर्काणां निरङ्कुशत्वात्तथा केवलमर्थोऽनुगम्यते प्रश्नप्रतिवचनभावरहितैर्वाक्यैस्तैः समर्प्यमाणोऽपि दुर्विज्ञेयोऽर्थः स्यात्तस्मादाख्यायिका नानुश्रीयते तेन सा सुखप्रतिपत्त्यर्थमनुसर्तव्येत्यर्थः । कुतो दुर्विज्ञेयत्वं तत्राऽऽह—अत्यन्तेति । यथोक्तस्य वस्तुनो

वही प्राण (सूक्ष्मदेह), बाह्य आधार भेदों से अनेक प्रकार से फैला हुआ है और "प्राण एक ही देव है" ऐसा (पूर्व अध्याय में) कहा गया है । उसी का अनात्मरूप बाह्यदेह-समष्टिरूप एक है, जिसके सूर्यादिरूप असंकीर्ण करण , जो विराट्, वैश्वानर, आत्मा, पुरुषविध, प्रजापति, क और हिरण्यगर्भ इत्यादि देहविषयक शब्दों से पुकारा जाता है । समष्टि और व्यष्टि ब्रह्म—बस इतना ही है, इसके अतिरिक्त और कुछ भी नहीं है । वह प्रत्येक शरीरभेदों में परिसमाप्त होने वाला चैतन्य-रूप, कर्ता और भोक्ता है । इस प्रकार अविद्या के कार्य प्राण को ही आत्मरूप से समझने वाला गार्ग्य ब्राह्मण यहाँ वक्तारूप से प्रस्तुत किया जाता है, तथा इसके विपरीत (सिद्धान्तवाले) आत्मद्रष्टा राजा अजातशत्रु श्रोता है ।

क्योंकि इस प्रकार (वक्ता और श्रोता द्वारा) पूर्वपक्ष और सिद्धान्तरूप आख्यायिका द्वारा उपदिश्यमान विषय श्रोता के चित्त में प्रवेश कर जाता है । इसके विपरीत (कपोलकल्पित) तर्क-

१ अनात्मरूप । २ देह । ३ समष्टिरूप । ४ देहविषयैः । ५ सूर्यादिरूपा । ६ समष्टिरूपम् । ७ व्यष्टिरूपम् । ८ चैतन्यरूपम् । ९ अविद्याकार्यं प्राणम् । १० उपदिश्यमान । ११ चित्तमार्गे-हृति । १२ स्वरूपम् । १३ समष्टिव्यष्टिरूपम् । १४ साक्षम् । १५ कपोलकल्पितानाम् । १६ स्वतन्त्रत्वात् । १७ अवबुध्यन्ते । १८ आख्यायिकामृतेऽर्थस्य दुर्विज्ञेयत्वेन ।

सूक्ष्मत्वाद्वस्तुनः। तथा च काठके—"श्रवणायापि बहुभिर्यो न लभ्यः" इत्यादिवाक्यं सुसंस्कृतदेवबुद्धिगम्यत्वं सामान्यमात्रबुद्ध्यगम्यत्वं च सप्रपञ्चं दर्शितम्। "आचार्यवान्पुरुषो वेद" "आचार्याद्धैव विद्या" इति च छान्दोग्ये। "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति च गीतासु। इहापि च शाकल्ययाज्ञवल्क्यसंवादेनातिगह्वरत्वं महता संरम्भेण ब्रह्मणो वक्ष्यति। तस्माच्छ्लिष्ट एवाऽऽख्यायिकारूपेण पूर्वपक्षसिद्धान्तरूपमापाद्य वस्तुसमर्पणार्थं आरम्भः।

आचारविध्युपदेशार्थश्च। एवमाचारवतोर्वक्तृश्रोत्रोराख्यायिकानुगतोऽर्थोऽवगम्यते।

---

दुर्विज्ञेयत्वे श्रुतिस्मृतिसंवादं दर्शयति—तथा चेति। सुसंस्कृता परिशुद्धा देवबुद्धिः सात्त्विकी बुद्धिः। सामान्यमात्रबुद्धिस्तामसी राजसी च बुद्धिः। अतिगह्वरत्वमत्यन्तगम्भीरत्वम्[4]। संरम्भस्तात्पर्यम्[5]। ब्रह्मणो दुर्विज्ञेयत्वे फलितमाह—तस्मादिति।

आख्यायिकाया मुख्यप्रतिपत्त्यर्थत्वमुक्त्वाऽर्थान्तरमाह—आचारेति। उत्तमाधमेन प्रणिपातोपसदनादिद्वारा[6] विद्या ग्राह्या। अधमात्तूत्तमेन तद्व्यतिरेकेण श्रद्धादिमात्रेण[7] सा लभ्येत्याचारप्रकारज्ञापनार्थश्चायमारम्भ इत्यर्थः। आख्यायिकायां यथोक्तेऽर्थेऽन्वितत्वं[8] कथयति—एवमिति। वक्तृश्रोत्रोर्मध्ये यथोक्ताचारवता श्रोत्रा विद्या लब्धव्या। वक्त्रा च तादृशेन सोपदेष्टव्येत्येषोऽर्थोऽस्यामाख्यायिकायामनुगतो गम्यते। तस्मादाचारविशेषं दर्शयितुमेषाऽऽख्यायिका युक्तेत्यर्थः। 'आगमानुसारिगुरुसंप्रदायादेव[9] तत्त्वधीर्लभ्यते। यत्तु "केवलस्तर्कस्तत्त्वज्ञानमेषा बुद्धिः सिध्यति।" तथा च

---

शास्त्र के समान केवल वस्तु का बोध कराने वाले वाक्यों से तो उपदिश्यमान विषय सरलता से समझ में नहीं आता क्योंकि आत्मतत्त्व अत्यन्त सूक्ष्म है। इसी बात को कठोपनिषत् में समर्थित किया गया है—"जो बहुतों को सुनने पर भी प्राप्त नहीं होता" इत्यादि श्रुतिवाक्यों में आत्मतत्त्व परिशुद्ध, सात्त्विकबुद्धिगम्य, तामसी और राजसीबुद्धि से न प्राप्त होने योग्य है, ऐसा विस्तारपूर्वक दिखलाया गया है। "आचार्य की शरणापन्न हुआ पुरुष इसे जानता है" तथा "आचार्य से ही विद्या फलीभूत होती है" इत्यादि छान्दोग्य उपनिषत् में एवं "तत्त्वद्रष्टा ज्ञानी लोग तुझे आत्मतत्त्व का उपदेश करेंगे" इस स्मृतिवाक्य श्रीमद्भगवद्गीता में भी ऐसा ही कहा है। इस बृहदारण्यक उपनिषद् में भी शाकल्य-याज्ञवल्क्यसंवाद द्वारा बड़ी तत्परतापूर्वक (प्रत्यक्षादि के अविषय) ब्रह्मतत्त्व की अत्यन्त गम्भीरता को कहा जायगा। इसलिए (आत्मतत्त्व के अत्यन्त सूक्ष्म होने से सरलता से समझ में न आने के कारण) आख्यायिकारूप से पूर्वपक्ष और सिद्धान्तपक्ष के स्वरूप का वर्णन करके आत्मतत्त्व बोध के लिए (ग्रन्थ का) आरम्भ करना उचित ही है।

अर्थान्तररूप से आचारविधि का उपदेश करने के लिये भी ग्रन्थारम्भ की उपादेयता है। इस प्रकार के आचार वाले वक्ता और श्रोता के होने पर ही आख्यायिका द्वारा प्रस्तुत विषय का ज्ञान होता

---

१. श्रोतुमपि। २ आत्मनोऽत्यन्तसूक्ष्मत्वेन दुर्विज्ञेयत्वात्। ३ बोधनाय.। ४ प्रत्यक्षाद्यविषयत्वम्। ५ तत्परत्वम्। ६ आदिना शुश्रूषा। ७ आदिनाऽनुज्ञानुसरणादि। ८ सम्बद्धत्वम्। ९ आगमानुसरणशीलानां गुरूणां परम्परात एव। १० आगमासहकृतस्तद्विरुद्धो वा। ११ केवलतर्कस्य तत्त्वबुद्ध्यप्रयोजकत्वे च।

ॐ ॥ दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचा-जातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः

किसी कालविशेष में गार्ग्यगोत्रीय गर्वीला बालाकि नामक बहुत बोलने वाला था। वह काशीराज अजातशत्रु के पास जाकर बोला, मैं तुम्हें ब्रह्म का उपदेश करूँ? इस पर अजातशत्रु ने कहा—इस माङ्गलिक वचन के लिए मैं आपको सहस्र गौएँ देता हूँ। लोग जनक-जनक ऐसा कह कर

---

केवलतर्कबुद्धिनिषेधार्था चाऽऽख्यायिका। नैषा तर्केण मतिरापनेया। न तर्कशास्त्रदग्धा-येति श्रुतिस्मृतिभ्याम्। श्रद्धा च ब्रह्मविज्ञाने परमं साधनमित्याख्यायिकार्थः। तथा हि गार्ग्याजातशत्र्वोरतीव श्रद्धालुता दृश्यत आख्यायिकायाम्। "श्रद्धावाँल्लभते ज्ञानम्" इति च स्मृतिः।

तत्र 'पूर्वपक्षवाद्यविद्या'विषयब्रह्मविद्दृप्तबालाकिर्दृप्तो गर्वितोऽसम्यग्ब्रह्मवित्त्वा-

---

केवलतर्कप्रयुक्ता तत्त्वबुद्धिरितिसंभावनानिषेधार्थाऽऽख्यायिकेति पक्षान्तरमाह—केवलेति। केवलेन तर्केण तत्त्वबुद्धिर्न सिध्यतीत्यत्र श्रुतिस्मृती दर्शयति—नैषेति। 'मति वद्यादिति शेषः। 'प्रकारान्तरेणाऽऽख्यायिकामवतार्य तत्राऽऽख्यायिकानुगुण्यं दर्शयति—तथा हीति। श्रद्धा ब्रह्मज्ञाने परमं साधनमित्यत्र भगवतोऽपि संमतिमाह—श्रद्धावानिति।

आख्यायिकार्थे बहुधा स्थिते तदक्षराणि व्याचष्टे—तत्रेत्यादिना। पूर्वपक्षवादित्वे हेतुमाह—अविद्याविषयेति। गर्वितत्वे हेतुमाह—असम्यगिति। इयमेव तु वाङ्निमित्तमित्यत्रापि कस्मादित्यनुष-

---

है। यह आख्यायिका केवल तर्कबुद्धि का निषेध करने के लिए भी है। "स्वकल्पनामात्र से ही तत्त्वबुद्धि नहीं प्राप्त होती", "तर्कशास्त्र से दग्धबुद्धि वाले का आत्मज्ञान नहीं होता" इत्यादि श्रुति-स्मृतियों से यही सिद्ध होता है। ब्रह्मविज्ञान में श्रद्धा ही चरम साधन है, यह इस आख्यायिका का भाव है। इसी-लिए इस आख्यायिका में गार्ग्य और अजातशत्रु की अतीव श्रद्धा देखी जाती है। स्मृति भी इसका समर्थन करती है, "श्रद्धावान् साधक पुरुष ही ब्रह्मज्ञान को प्राप्त करता है" इत्यादि।

यहाँ किसी समय में अविद्या के कार्य प्राणादि को ब्रह्म जानने वाला, गोत्र से गार्ग्य पूर्वपक्षवादी दृप्त-बालाकि जो ब्रह्म का यथार्थस्वरूप न जानने के कारण 'दृप्त' यानी अभिमानी था और बलाका की सन्तान होने के कारण बालाकि कहलाता था, इस प्रकार दृप्त और बालाकि होने के कारण जो दृप्तबालाकि

---

१ स्वकल्पनामात्रेण। २ टीकोक्तार्थम्। ३ पूर्वपक्षवादीति। तदुक्तं श्रीमद्विद्यारण्यस्वामिभिर्बृहदारण्य-कवार्तिकसारे—"योऽध्यारोपस्तृतीयस्तच्चतुर्थेऽऽत्रापोद्यते। विद्यासूत्रस्य तात्पर्यमथवाऽत्र निरूप्यते॥ सन्ति षड् ब्राह्मणान्यत्र प्रथमं ब्राह्मणद्वयम्। अपवादप्रधानं सद्ब्रह्मतत्त्वनिरूपकम्॥ चतुर्थं त्वात्मसूत्रस्य साक्षात्तात्पर्य-विस्तृतिः। फलानुसारी संन्यासविस्तारः पञ्चमे स्मृतः॥ विद्यावंशस्य विस्तारो जपार्थं षष्ठ ईरितः। जपाद्गुरूननुसृत्य विद्यां प्राप्नोति मुक्तिदाम्॥ अपवादप्रधानं यद्ब्राह्मणद्वयमीरितम्। तत्राऽऽद्ये गार्ग्यमता तावत्प्राणादीनामपोद्यते॥ अतः प्राथमिकेऽत्र गार्ग्यः पूर्वपक्षभृत्। ब्रह्मात्मतत्त्वविद्राजा सिद्धान्ती प्रतिवक्ति तम्" ॥१-६॥ इति। ४ अविद्याकार्यप्राणादि। ५ ब्रह्मविषयम्। ६ श्रद्धाख्येन।

**सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥१॥**

उसी के पास दौड जाते हैं (लोक में यह प्रसिद्ध है, जनक बडा दानी और बडा श्रोता है, ये दोनो बाते आपने अपने इस माङ्गलिक वचन से मुझे अत्यन्त सुलभ कर दी है। अतएव मैं आपको हजार गौएँ देता हूँ) ॥ १ ॥

---

देव बलाकाया अपत्यं बालाकिर्दृप्तश्चासौ बालाकिश्चेति दृप्तबालाकिर्हशब्द ऐतिह्यार्थं आख्यायिकायामनूचानोऽनुवचनसमर्थो वक्ता वाग्मी गार्ग्यो गोत्रत आस बभूव क्वचित्कालविशेषे स होवाचाजातशत्रुमजातशत्रुनामानं काश्यं काशिराजमभिगम्य *ब्रह्म ते ब्रवाणीति ब्रह्म ते तुभ्यं ब्रवाणि कथयानि । स एवमुक्तोऽजातशत्रुरुवाच—सहस्रं गवां दद्म

---

ज्यते । अतो ब्रह्म ते ब्रवाणीति वाचैव सहस्रदाने निमित्तमिति शेषः । श्रुतिं व्याचष्टे—जनक इति ।

---

नाम से प्रसिद्ध था, वह 'अनूचानः' अर्थात् अनुवचन मे समर्थ 'वक्ता' यानी बोलने वाला था। आख्यायिका मे 'ह' शब्द परम्परागत उपदेशार्थक है। उसने 'अजातशत्रुम्' अर्थात् अजातशत्रु नामक 'काश्य' यानी काशिराज से, उसके पास जाकर कहा। 'ब्रह्म ते ब्रवाणि' अर्थात तुम्हें मैं निरुपाधिक, सत्यादिलक्षण वाले ब्रह्म का निरूपण करता हूँ। इस प्रकार कहे जाने पर वह अजातशत्रु बोला—

---

१. परम्परागतोपदेशार्थक । २ 'पारम्पर्योपदेशे स्यादैतिह्यमिति ह्यव्ययमि त्यमर । चकार शेप । ३ अनूचान साङ्गवेदाध्यायी । 'अनूचान प्रवचने साङ्गेऽधीतीत्यमर'' 'अनूचाना विनीत स्यात्साङ्गवेदविचक्षण'' इति च विश्व । ४ निरुपाधिक सत्यादिलक्षणमेवात्र ब्रह्म ग्राह्यम् 'यस्मात्पर नापरमस्ति किंचित्तद्ब्रह्मापूर्वमनपरमि''त्यादिश्रुते । ५ आह्वानन्तरम् ।

---

*ब्रह्म ते ब्रवाणीति अत्र वार्तिकानि सप्त सन्ति तथाहि—"नापृष्ट इति मन्वेतद्विरुद्धमकरोद्दपि । यद्ब्रह्म ते ब्रवाणीति ह्यपृष्ट काश्यमब्रवीत् ॥ दर्पादिदर्शनान्नून वेत्त्यकृत्स्नात्मदर्शनम् । कृत्स्नत्वार्थमतोऽप्राक्षीत्काश्य प्रज्ञासमन्वितम् ॥ श्रद्धालुरधिकारी यो जिज्ञासुर्विनयान्वित । अपृष्टेनापि वक्तव्या तस्मै विद्या विपश्चिता । धर्मार्थौ यत्र न स्याता शुश्रूषा वापि तद्विधा । तत्र विद्या न वक्तव्या शुभ बीजमिवोषरे ॥ धर्मार्थौ यत्र च स्याता शुश्रूषा वापि तद्विधा । वक्तव्या तत्र विद्येति निषेधादेव लिङ्गयते ॥ गह्वरवदगरयवल्याय चाऽऽश्रित्य भूमिपम् । प्राह मानुषवित्ताढ्य दैववित्तसमन्वितम् ॥ वित्तद्वयेन सपन्नो यतोऽधिक्रियत नर. । सर्वकर्मस्वतोऽवादीद्बालाकि काश्यमन्तिकादिति' ॥३३–३६॥ इति । "नापृष्ट कस्यचिद्ब्रूयान्न चान्यायेन पृच्छत । जानन्नपि हि मेधावी जडवल्लोकमाचरेत्" ॥ इति स्मृतिविरुद्धमृषिचेष्टितमिति शङ्कते—नेत्यादिना । काश्यस्य गार्ग्यं प्रति प्रथमतो न प्रश्नोऽस्तीतिप्रसिद्धयर्थो हिशब्द । यच्छब्दो यस्मादर्थे तदभिव्यक्त्यर्थं हीत्युक्तम् ॥ ब्रवाणीत्येतत्पृच्छानीत्यर्थं धातूनामनेकार्थत्वात्तथ स्मृतिविरोध इत्येकदेश्याह—दर्पादीति । अर्थित्वादिप्रहार्थमादिपदम् । अकृत्स्नात्मदर्शनं स्वात्मान गार्ग्यो वेत्तीति शेष । कृत्स्नत्वार्थं पूर्णवस्तुविज्ञानार्थमित्यर्थ । त प्रति सम्यग्ज्ञानार्थं प्रश्नस्य प्रवृत्तिरुचितेति सूचयितु प्रज्ञेत्यादिविशेषणम् । अत्र श्रुतेरनाञ्जस्याद्यपाश्रुतमादाय स्वपक्षमाह—श्रद्धालुरिति । अधिकारित्वसिद्धयर्थानि विशेषणानि विपश्चितेति वक्तुस्तदधिगतियोग्यतोक्ता—'अधर्मेण तु यः

एतस्यां वाचि यां मा प्रत्यवोचो ब्रह्म ते ब्रवाणीति तावन्मात्रमेव गोसहस्रप्रदाने निमित्तमित्यभिप्रायः। साक्षाद्ब्रह्मकथनमेव निमित्तं कस्मान्नापेक्ष्यते सहस्रदाने ब्रह्म ते ब्रवाणीति। इयमेव तु वाङ्निमित्तमपेक्ष्यत इत्युच्यते। यतः श्रुतिरेव राज्ञोऽभिप्रायमाह—जनको दाता जनकः श्रोतेति चैतस्मिन्वाक्यद्वये पदद्वयमभ्यस्यते जनको जनक इति। वैशब्दः प्रसिद्धाद्योतनार्थः। जनको दित्सुर्जनकः शुश्रूषुरिति ब्रह्म शुश्रूषवो विवक्षवः प्रतिजिघृक्षवश्च जना धावन्त्यभिगच्छन्ति। तस्मात्तत्सर्वं मय्यपि संभावितवानसीति ॥१॥

प्रसिद्धं जनकस्य दातृत्वादि तदद्योतको वैनिपात इति यावत्। वाक्यार्थमाह—जनको दित्सुरित्यादिना। संभावितवानसीति' प्रागुक्तं वाङ्मात्रं सहस्रदाने निमित्तमिति शेषः। 'तस्मान्मुग्धप्रसिद्ध्यतिक्रमणादिति यावत्। तत्सर्वं दातृत्वादिकमित्यर्थः। इतिशब्दोऽभिप्रायसमाप्त्यर्थः' ॥ १ ॥

आपने जो कहा कि "मैं तुम्हारे प्रति ब्रह्म का निरूपण करूँ" इस आपके कथन के लिए हम सहस्र गौएँ देते हैं। भावाशय यह है कि सहस्र गौएँ प्रदान करने में केवल गार्ग्य की वाक्‌मात्र ही निमित्त थी। सहस्र गौएँ देने में साक्षात् ब्रह्मनिरूपण की ही अपेक्षा क्यों नहीं की गई, केवल 'ब्रह्म ते ब्रवाणि' इस वाक्य की ही अपेक्षा क्यों थी? इस पर कहा जाता है, क्योंकि श्रुति भी राजा के अभिप्राय को बतला रही है। (श्रुतिवाक्य में) 'जनको जनक' इन दो पदों की आवृत्ति जनक दाता है, जनक श्रोता है" इन दो वाक्यों के अर्थ में हुई है। 'वै' शब्द प्रसिद्धि का द्योतन करने के लिए है। "जनक दान करने की इच्छा वाला है, जनक श्रवण करने की इच्छा वाला है' इतना जानते हुए 'ब्रह्मज्ञान को सुनने और कहने की इच्छा वाले तथा (धन के) प्रतिग्रह की इच्छा वाले लोग 'धावन्ति' उसके पास चले जाते हैं।

१ गार्ग्यीयवाङ्मात्रमेव २ वाक्यद्वयार्थमिति यावत्। ३ ज्ञानत। ४ धनम्। ५ इतिशब्दोऽय शेषान्तर्गत इत्यवधेयम्। ६ भाष्यस्यतस्माच्छब्दस्यायमाह—मुग्धेति। जनको दित्सुरित्यादिप्रसिद्धिर्मुग्धानाम् तस्योपदेशाद्विद्या गृहीत्वैव दातृत्वात् मामुपगतस्तु तामतिक्रान्तवान् न मुग्ध मम प्रतिज्ञामात्रेणेव दित्सुत्वादित्यर्थं।

प्राह यश्चाधर्मेण पृच्छति। तयोरन्यतर प्रैति विद्वेष वा निगच्छति ॥ विद्या ब्राह्मणमित्याह शेवधिस्तेऽस्मि रक्ष माम्। असूयकाय मा माऽदास्तथा स्या वीर्यवत्तमा" ॥ इत्याविशेषादुक्तस्मृतेरनधिकारिणे विद्या न वाच्येत्येवपरत्वान्न तद्विरुद्धमृपिचेष्टितमिति भाव। शेवधि विधिरूपा ॥ अनधिकारिणि अप्ष्टेऽपि विद्या [illegible] देयेत्यत्र स्मृतिमुदाहरति—धर्मेति। सप्तमीद्वय शिष्यविषयम्। तद्विधा विद्या देशकालसामर्थ्यानुरोधिनीति यावत्। तत्र विद्या दत्तापि न फलवतीति दर्शयितुमुदाहरणम्। विद्यासम्बन्धिदेशकालसामर्थ्यानुकूला न [illegible] श्रद्धाभक्तिपुरःसरेति भाव ॥ अधिकारिण्यपृष्टेनापि सोपदेष्टव्येत्यत्र मानमाह—धर्मार्थाविति। ननु निषेधवचन विना नैव विधमस्ति स्मृतिवचन तत्राऽऽह—इति निषेधादिति। अयोग्ये पात्रे विद्याप्रदाननिषेधाद्योग्ये प्रश्न विनाऽपि सा देयेति गम्यते इत्यर्थं ॥ अधिकारिणे विद्या वक्तु गार्ग्यंश्चेदुपचक्रमे तर्हि योग्य ब्राह्मण हित्वा किमिति राजानमुपेत्य ब्रवीति तत्राह—नष्टेति। यथाऽऽहु भर्तृप्रपञ्चा—युक्त सयोगोऽधिकारित्वेन हेतुना नष्टाश्वदग्धरथवदिति। (उचित काश्यगार्ग्ययो श्रोतृवक्तृभावसम्बन्धस्तयो श्रोतृवक्तृत्वयोरधिकारादिति यावत्। अधिकाररूपार्थाभिन्नहेतोरिति वर्णार्थं ॥ उक्तनीत्या गार्ग्यकाश्यसम्बन्धफल प्रकटयति—वित्तेति। यथाऽऽहु—उभयवित्तवतोऽस्य ह्यधिकारस्तस्मादधिकारार्थेन हेतुना युक्तमुपेत्य वचनमिति। अधिकार सम्बन्ध। फलस्वाम्यमिति यावत्। तदभिन्नोऽर्थो विद्यते यत्र स तथा तेन हेतुना इत्यर्थ। राज्ञोऽधिकारित्वादिति यावत्।

**स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा**

उस गार्ग्य ने कहा—यह जो आदित्य मे पुरुष है, मैं ब्रह्मरूप से इसी की उपासना करता हूँ। इस पर उस अजातशत्रु ने कहा—नही-नही; इस सम्बन्ध मे बात न करो (इस ब्रह्म को मैं भी जानता हूँ)। यह तो सबका अतिक्रमण करके स्थित है, यह समस्त भूतो का मस्तक है एव दीप्तिमान् है। इसी

---

[1]एवं राजानं शुश्रूषुमभिमुखीभूतं स होवाच गार्ग्यः। य एवासावादित्ये चक्षुषि चैकोऽभिमानी [2]चक्षुर्द्वारेणेह हृदि प्रविष्टोऽहं भोक्ता कर्ता चेत्यवस्थितः। एतमेवाहं ब्रह्म पश्याम्यस्मिन्कार्यकरणसंघात उपासे। [3]तस्मात्तमहं पुरुषं ब्रह्म तुभ्यं ब्रवीम्युपास्स्वेति। स एवमुक्तः प्रत्युवाचाजातशत्रुर्मा मा मेति हस्तेन विनिवारयन्। एतस्मिन्ब्रह्मणि [4]विज्ञेये मा [5]संवदिष्ठाः। मा मेत्या[6]बाधनार्थं द्विवंचनम्। एवं समाने विज्ञानविषय आवयो-

---

[7]हृदि प्रविष्टो भोक्ताऽहमित्यादि प्रत्यक्ष [8]प्रमाणयति—अहमिति। [9]दृष्टिफलं नैरन्तर्याभ्यासं दर्शयति—उपास इति। [10]तावता मम [11]किमायातं [12]तदाह—तस्मादिति। मा मेति [13]प्रतीकमादायाभ्यासस्यार्थमाह—मा मेति। विनिवारयन्प्रत्युवाचेति सबन्ध.। एकस्य माङो निवारकत्वमपरस्य [14]संवादेन [15]संगतिरिति विभागे संभवति कुतो द्विवंचनमित्याशङ्क्याऽह—मा मेत्यावाधनार्थमिति। [16]तदेव स्फुटयति

---

मत इससे आपने वह सब मेरे लिए सम्भव कर दिया॥ १॥

इस प्रकार सुनने के इच्छा वाले और अपने प्रति अभिमुख हुए राजा से उस गार्ग्य ने कहा—"यह जो सूर्य मे और चक्षु मे उनका एक ही अभिमानी चक्षु के द्वार से यहाँ हृदय मे प्रविष्ट होकर "मैं भोक्ता हूँ और मैं कर्ता हूँ, इस प्रकार प्रतिष्ठित है, उसी को मैं ब्रह्म देखता हूँ, इस कार्यकरणसघात मे मैं उसकी उपासना करता हूँ। इसलिये (मेरा वह उपासक होने के कारण) उस पुरुष को ही मैं तुम्हे ब्रह्मरूप से बतलाता हूँ, उसी की तुम उपासना करो। इस प्रकार कहे जाने पर उस अजातशत्रु ने "नही, नही" इस प्रकार हाथ से निषेध करते हुए कहा—'एतस्मिन्' अर्थात इस विज्ञेयब्रह्म के

---

१. श्रोतुकाम राजान प्रति ब्राह्मणो बालाकि कीदृग्ब्रह्मोक्तवानित्याशङ्क्य य एवासावित्यादेरर्थं वक्तुमुपक्रमते—एवमित्यादिना। २ हृदि प्रविष्टस्य प्रमातुर्द्रष्टृत्वस्य चक्षुर्द्वारकत्वमभिप्रेत्याह—चक्षुर्द्वारेणेत्यादि। ३ मम तदुपासकत्वात्। ४. न तूपास्य इति भाव। विज्ञेये अविद्याविषयान्तःपातिनि विज्ञेये उपास्ये इति यावत्। स्पष्ट चेतत् बृ० उ० २।१।१४ भाष्ये। ५ सवाद मा कार्षी। ६ आवाधे चेति सूत्रेण पीडाया द्योत्यायां द्वित्वमित्यभिप्रेत्याह—आबाधनार्थमिति। गार्ग्यस्येषद्बाधनार्थमित्यर्थः। तथाहि गार्ग्यो हि विना स्वोपदेश राज्ञा ज्ञातस्य ब्रह्मण प्रवदनशीलोऽनस्येषद्बाधित्वबुद्ध्या राज्ञा निषेधोऽभ्यस्त (निषेधार्थे द्वित्व बोध्यम्) तेन मुख्य ब्रह्म प्रतिज्ञाय तदनुक्ते प्रतिज्ञाहानिरूपो बाध इत्यर्थः। ७ हृदि प्रविष्टे आत्मनीत्यर्थः। ८ अध्यात्माधिदैवतयोरेकत्वे प्रत्यक्ष प्रमाणयतीत्यर्थः। ९ यथोक्तब्रह्मदर्शनफलकम्। १० यथोक्तत्वदीयोपासनेन। ११ लब्धम्। १२ यदायात तद्। १३ द्विरुक्ते। १४ क्रियापदेन। १५ सम्बन्ध। १६ द्विर्वचनस्येषद्बाधनार्थत्वमेव।

**अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥२॥**

प्रकार से मैं इसकी उपासना करता हूँ। जो भी कोई पुरुष इसकी इस प्रकार उपासना करता है, वह सभी भूतों का अतिक्रमण करके स्थित हो समस्त प्राणियों का मस्तक और राजा हो जाता है (क्योंकि जैसे गुण वाले की उपासना की जाती है, वैसा ही फल मिलता है) ॥ २ ॥

---

रस्मानविज्ञानवत इव दर्शयता [1]बाधिताः स्यामा[2]ऽतो मा संवदिष्ठा मा [3]संवादं कार्षीर-[4]स्मिन्ब्रह्मणि । अन्यच्चेज्जानासि तद्ब्रह्म वक्तुमर्हसि न तु यन्मया [5]ज्ञायत एव । [6]अथ चेन्मन्यसे जानीषे त्वं ब्रह्ममात्रं न तु [7]तद्विशेषणोपासनफलानीति । तन्न मन्तव्यं यतः सर्वमेतदहं जाने यद्ब्रवीषि । कथम्, अतिष्ठा अतीत्य[8] भूतानि तिष्ठतीत्यतिष्ठाः[9] । सर्वेषां च भूतानां मूर्धा [10]शिरो राजेति वै राजा दीप्तिगुणोपेतत्वादेतै[11]र्विशेषणैर्विशिष्टमेतद्ब्रह्मा-

---

—एवमिति । इत्थमनेन प्रकारेण यो विज्ञानविषयोऽर्थस्तस्मिन्नावयोर्विज्ञानसाम्यादेव समानेऽपि विज्ञानवत्त्वे सत्यस्मानविज्ञानवत इव स्वीकृत्य तमेवार्थमस्मान्प्रत्युपदेशेन ज्ञापयता भवता वयं बाधिता स्यामेति योजना । "तथाऽपि" गार्ग्यस्य कथमीषद्बाधनं तत्राऽऽह—अत इति । अतिष्ठा सर्वेषामित्यादि वाक्यं शङ्काद्वाराऽवतार्य व्याकरोति—अथेत्यादिना । एतं पुरुषमिति शेषः । इतिशब्दो गुणोपास्तिसमा-

---

विषय में संवाद मत करो। 'मा-मा' यह द्विरुक्ति (गार्ग्य की उक्ति का) सम्यक् बाधन करने के लिए है। क्योंकि इस प्रकार हम दोनों के विज्ञान का विषय समान होने पर भी हमें अविज्ञात सा देखने वाले तुमसे हम बाधित (अज्ञानवान्) हो जायँगे, इसलिए संवाद मत करो (मुझ से) इस विज्ञात ब्रह्म का कथन न करो। यदि तुम किसी दूसरे ब्रह्म को जानते हो, तो उसका कथन करो, जिसे मैं जानता हूँ, उसका वर्णन न करो। पक्षान्तर में यदि तुम यह मानो कि तुम तो ब्रह्ममात्र को जानते हो, उसके गुणों की उपासना के फल को तो नहीं जानते, ऐसा तुम्हें नहीं मानना चाहिये क्योंकि तुम जो कहते हो, वह तो सब कुछ मैं जानता हूँ। किस प्रकार ? 'अतिष्ठा' यानी क्योंकि यह समस्त प्राणियों का अतिक्रमण करके स्थित है इसलिए 'अतिष्ठा' यानी प्रधान है। समस्त प्राणियों का 'मूर्धा' अर्थात् मस्तक है यानी पूज्य है, 'राजेति' अर्थात् दीप्तिगुण से विशिष्ट होने से वह राजा है। इन (प्रधानत्व, पूज्यत्व और दीप्तिमत्व) विशेषणों से विशिष्ट इस ब्रह्म की जो कार्यकरण संघात में कर्ता और भोक्ता है, इसको मैं निरन्तर देखता हूँ। इस प्रकार विशेषणों से युक्त ब्रह्म को देखने वाले को फल भी वैसा मिलता है। जो इस पुरुष की इस प्रकार (त्रिगुणविशिष्ट) उपासना करता है,

---

१ बाधिता—भवदुक्तार्थाज्ञानवन्त । २ अत—मया त्वच्छासनमृतेऽपि यथोक्तब्रह्मणो ज्ञातत्वात् । ३ कथनम् । ४ मद्विज्ञाते । ५ ज्ञायत एवेति—तद्वक्तुमर्हसीति पूर्वेण सम्बन्ध तथा चापूर्वार्थविज्ञान प्रतिज्ञाय तदनुक्तेर्गार्ग्यस्येषद्बाध इति भाव । ६ पक्षान्तरे । ७ गुणेत्यर्थ । ८ सर्वाणि । ९ प्रधान । १० पूज्य । ११ प्रधानत्वपूज्यत्वराजत्वाख्यगुणैं राजत्व दीप्तिः । १२ राज्ञो बाधितत्वेऽपि । १३ आदावेव चेत्यत्राह ईषदर्थत्वमाश्रित्य बाधन प्रयोक्तृगत श्रोतृगत वेत्यनियम चाभ्युपेत्याह—तथाऽपीत्यादि ॥

**स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति**

उस गार्ग्य ने कहा—यह जो चन्द्रमा में पुरुष स्थित है, उसी की मैं ब्रह्मरूप से उपासना करता हूँ। तब उस अजातशत्रु ने कहा—नहीं-नहीं, इसके सम्बन्ध में बात न करो (इस ब्रह्म को मैं भी जानता हूँ)। यह तो महान् है, शुक्ल वस्त्रधारी सोम राजा है। मैं इसी प्रकार इसकी उपासना करता हूँ। जो भी कोई पुरुष इसकी इस प्रकार उपासना करता है, उसके लिए प्रतिदिन सोमसुत और प्रसुत-

---

स्मिन्कार्यकरणसंघाते कर्तृ भोक्तृ चेत्यहमेतमुपास इति फलमप्येव विशिष्टोपासकस्य। स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति। यथागुणोपासनमेव हि फलम्। "तं यथा यथोपासते तदेव भवति" इति श्रुतेः॥ २॥

संवादेनाऽऽदित्यब्रह्मणि प्रत्याख्यातेऽजातशत्रुणा चन्द्रमसि ब्रह्मान्तरं प्रतिपेदे

---

त्यर्थः। पूर्वोक्तरीत्या त्रिभिर्गुणैर्विशिष्टं ब्रह्म तदुपासकस्य फलमपि जानामीत्युक्त्वा फलवाक्यमुपादत्ते—स य इति। किमिति यथोक्तं फलमुच्यते तत्राऽऽह—यथेति॥ २॥

मनसि चेति चकाराद्बुद्धौ चेत्यर्थः। य एक पुरुषस्तमेवाहं ब्रह्मोपासे स्व चेत्यमुपास्वेत्युक्ते

---

वह सभी का प्रधान, पूज्य और दीप्त होता है। (इस में हेतु प्रदर्शन करते हैं—) जिस प्रकार के गुणों से युक्त उपास्य की उपासना की जाती है, वैसा फल मिलता है। इसी बात की सङ्गति श्रुति द्वारा प्रदर्शित की जाती है। "उस (निरुपाधिक ब्रह्म) की जो जिस भाव से उपासना करता है, वह तादात्म्यरूप को प्राप्त हो जाता है।" २॥

(ज्ञातज्ञापनरूप) संवाद के जय द्वारा राजा अजातशत्रु ने आदित्यब्रह्मविषयक उपदेश का निषेध कर दिया, तो गार्ग्य ने चन्द्रमण्डलान्तर्गत दूसरे ब्रह्म का व्याख्यान करना प्रारम्भ किया। यह जो चन्द्रमा और मन में एक ही पुरुष कर्ता और भोक्ता है, इसके, पिछले मन्त्र में कथित विशेषण समझ लेने चाहियें (सूर्यमण्डल से द्विगुण विस्तार होने के कारण) वह बृहत् अर्थात् महान् है,

---

१ सोमो राजेति—सोम सोम्यत्वकारणात्। तदुक्त वार्तिके— ज्योत्स्नया राजतेऽयं सोमो ब्राह्मणराजत। सोमो राजेत्यतो वक्ति तदुपासाविधित्सया" ॥ ८६ ॥ सोमो ब्राह्मणानां राजेतिश्रुतिमाश्रित्य ब्राह्मणराजत इत्युक्तं राजत्वादित्यर्थः। गुणचतुष्टयोक्तिफलमाह—तदुपासेति। तथा च सोमत्व मनोज्ञत्व गुणो बोध्य॥ २ अनवरत पश्यामीत्यर्थः। ३ पुरुषम्। ४ त्रिगुणविशिष्टम्। ५ दीप्र। ६ संवादेन—ज्ञातज्ञापनरूपेण मतिसंवाददोषेणेत्यर्थः। उक्तञ्च—'नेत्रलो मनिसंवादो भवदुक्तिर्ममाभवत्। न त्वपूर्वार्थविज्ञानं प्रतिभात यथा त्वया" ॥ ४५ ॥ इति। भवद्विज्ञाने ब्रह्मणि संवादं वक्तुमेवोपक्रान्तं मयेति चेन्नेत्याह—प्रतिज्ञातमिति॥ ७ आदित्यब्रह्मविषयोपदेशे। ८ वक्तुमुपचक्रमे।

**नास्यान्नं क्षीयते ॥ ३ ॥**

**स होवाच गार्ग्यो य एवासौ विद्युति, पुरुष, एतमेवाहं**

रूप होकर उपस्थित होता है अर्थात प्रकृति-विकृति दोनो प्रकार के यज्ञानुष्ठान म उसे सामर्थ्य प्राप्त होता है तथा उसका अन्न कभी क्षीण नहीं होता ॥ ३ ॥

उस गार्ग्य ने कहा—यह जो विद्युत मे पुरुष है, मैं उसकी ही ब्रह्मरूप से उपासना करता हूँ ।

---

गार्ग्य. । य एवासौ चन्द्रे मनसि चैकः पुरुषो भोक्ता कर्ता चेति पूर्ववद्विशेषणम् । बृहन्महान्पाण्डरं शुक्लं वासो यस्य सोऽयं पाण्डरवासा अप्शरीरत्वात्प्राणस्य । सोमो राजा चन्द्रः । यश्चान्नभूतोऽभिषूयते लतात्मको यज्ञे तमेकीकृत्यैतमेवाह ब्रह्मोपासे 'यथोक्तगुण य उपास्ते तस्याहरहः सुतः सोमोऽभिषुतो भवति यज्ञे प्रसुतश्च विकारेष्वन्नं चास्य न क्षीयतेऽन्नात्मकोपासकस्य ॥ ३ ॥

तथा विद्युति त्वचि हृदये चैका देवता तेजस्वीति विशेषणं तस्या स्तत्फलं तेजस्वी

---

मा मेत्याविना प्रत्युवाचेत्याह—इति पूर्ववदिति । भानुमण्डलतो 'द्विगुणं चन्द्रमण्डलमिति प्रसिद्धिमाश्रित्याऽऽह—महानिति । कथं पाण्डरं वासश्चन्द्राभिमानिनः 'प्राणस्य सभवतीत्याशङ्क्याऽऽह—अप्शरीरत्वादिति । पुरुषो हि शरीरेण वाससेव वेष्टितो भवति पाण्डरत्वं चापां प्रसिद्धमापो वास प्राणस्येति च श्रुतिरतो युक्तं प्राणस्य पाण्डरवासस्त्वमित्यर्थं । न केवलं सोमशब्देन चन्द्रमा गृह्यते किं तु लताऽपि 'समाननामधमत्वादित्याह—यश्चेति । त चन्द्रमसं लतात्मकं बुद्धिनिष्ठं च पुरुषमेकीकृत्याहग्रहेणोपास्तिरित्यर्थं । सप्रत्युपास्तिफलमाह—यथोक्तेति । यज्ञशब्देन प्रकृतिरुक्ता' । विकारशब्देन विकृतयो गृह्यन्ते । यथोक्तोपासकस्य प्रकृतिविकृत्यनुष्ठानसामर्थ्यं ''लीलया लभ्यमित्यर्थं । अन्नाक्षयस्योपासनानुसारित्वादुपपन्नत्वमभिप्रेत्योपासकं विशिनष्टि—अन्नात्मकेति ॥ ३ ॥

''सर्वाववोधेन चन्द्रे ''ब्रह्मण्यपि प्रत्याख्याते ब्रह्मान्तरमाह—तथेति । कथमेकमुपासन''मनेकफल-

---

'पाण्डरवासा' यानी शुक्ल वस्त्र वाला है क्योंकि चन्द्राभिमानी प्राण जलमयशरीर से युक्त है । 'सोमो राजेति' यानी सोम राजा चन्द्रमा है तथा जो यज्ञ मे पेय अन्न के रूप मे टपकाया जाता है, वह सोमलता भी सोम ही है । उस चन्द्र एव लतात्मकपुरुष का अद्वैत रूप मान कर इन गुणो से

---

१ कण्ठचत । २ गुणचतुष्टयोपेत पुरुषम् । ३ कृतकण्डव । ४ यद्यपि तेजस्वित्व पूर्वोक्तादित्यादावप्यस्ति तथापि तत्तेजसो जलदादिभिरभिभाव्यत्वाद्विद्युत्तेजसस्तथात्वादत्रैव तदुक्तमिति ध्येयम् । ५ उपासनफलम् । ६ द्विगुणमिति— नवयोजनसाहस्रो विष्कम्भ सवितु स्मृत । द्विगुणस्तस्य विस्तारो मण्डलस्य प्रमाणत ॥ द्विगुण सूर्यविस्ताराद्विस्तार शशिन स्मृत ॥' इति पुराणप्रसिद्धि । अत्र विष्कम्भ विस्तार, प्रमाणत परिमाणत, सवितु अभिमानिपुरुषस्य मण्डलस्य तदाश्रयस्य पुरुषापेक्षया द्विगुणविस्तार मण्डलमिति । ७ पुरुषस्य । ८ समाननामधमत्वादिति—सोम इत्यभिधानस्य वृद्धिह्रासाख्यधर्मस्य चोभयत्र समत्वादित्यथ । द्वयोश्च द्देवताकत्वादित्यपि बोध्यम् । ९ उभय प्राणात्मकमेवेति प्राणात्मनैकीकृत्येत्यर्थं । १० प्रकृताख्ययज्ञ । ११ अनायासेव । १२ ज्ञातज्ञापकत्वेन प्रतिज्ञाहानिरूपेण । १३ चन्द्र उपदेशे ब्रह्मविषयके इत्यथ । १४ स्वस्मि प्रजाया चेत्यनेकवृत्तित्वमेव फलस्य बाहुल्यमिति ध्येयम् ।

ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदि-
ष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेव-
मुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा
भवति ॥ ४ ॥

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं
ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संव-

तब अजातशत्रु ने कहा—नही नही, इस सम्बन्ध मे बात न करो (इसे मैं जानता हूँ) और इसकी तो मैं तेजस्वीरूप से उपासना करता हूँ। जो भी कोई पुरुष इसको इस प्रकार उपासना करता है, वह स्वय तेजस्वी होता है, उसकी प्रजा भी तेजस्वी होती है (विद्युत् के बाहुल्य से इस उपासक का प्रजाबाहुल्यरूप भी सम्भव है) ॥ ४ ॥

उस गार्ग्य ने कहा—यह जो आकाश मे पुरुष है, मैं इसी की ब्रह्मरूप से उपासना करता हूँ। उस अजातशत्रु ने कहा—नही-नही, इस सम्बन्ध मे बात न करो (मैं जानता हू) और इसकी उपासना

---

ह भवति तेजस्विनी हास्य प्रजा भवति । विद्युतां बहुत्वस्याङ्गीकरणादात्मनि प्रजायां च [1]फलबाहुल्यम् ॥ ४ ॥

तथाऽऽकाशे हृदाकाशे चैका देवता पूर्णमप्रवर्ति चेति विशेषणद्वयं पूर्णत्व-

---

मित्याशङ्क्याऽऽह—विद्युतामिति ॥ ४ ॥

---

विशिष्ट ब्रह्म की मैं उपासना करता हूँ। जो पुरुष उपरोक्त गुणचतुष्टय से युक्त ब्रह्म की उपासना करता है, उसके लिए नित्यप्रति 'सुत' यानी यज्ञ मे लतात्मक सोम उपस्थित रहता है और विकृति-यज्ञ मे 'प्रसुत' अधिक प्रमाण मे सोम (अनायास ही) प्राप्त हो जाता है। तथा ब्रह्म की इस प्रकार अन्नात्मक उपासना करने वाले का अन्न कभी क्षीण नही होता ॥ ३ ॥

(ब्रह्मविषयक चन्द्र उपदेश मे भी दोष आने पर) इसी प्रकार विद्युत्, त्वक् और हृदय मे भी एक ही देवता है। (यद्यपि आदित्य चन्द्रमा मे भी तेजस्विता है, परन्तु मेघ आदि के द्वारा उनके तेज के परिभव हो जाने के कारण) विद्युत् का तेजस्वी यह विशेषण दिया गया है। (जो कोई विद्युत् के तेजस्वी रूप की उपासना करता है) इसकी उपासना का फल यह है कि वह तेजस्वी होता है, उसकी प्रजा भी तेजस्विनी होती है। विद्युत् की अनेकता अङ्गीकार की गई है, इसलिए अपने और प्रजा के लिए (उपास्यबाहुल्य होने से) फल का बाहुल्य समव है ॥ ४ ॥

---

१ उपास्यबाहुल्यात्फलबाहुल्यम् ।

दिष्ठाः [1]पूर्णमप्रवर्तीति वा [2]अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥ ५ ॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास

पूर्ण तथा अप्रर्वितरूप से करता हूँ। जो कोई इस आकाश की इस प्रकार उपासना करता है, वह प्रजा और पशुओं से पूर्ण होता है तथा इस लोक में उसकी प्रजासंतति का विच्छेद नहीं होता ॥ ५ ॥

उन गार्ग्य ने कहा—यह जो वायु में पुरुष है, ब्रह्मरूप से मैं इसी की उपासना करता हूँ। उस अजातशत्रु ने कहा—नहीं नहीं, इस सम्बन्ध में बात न करो, इसे मैं जानता हूँ। इसकी तो मैं परमेश्वर, वैकुण्ठ और अपराजिता सेनारूप से उपासना करता हूँ (मरुतों का एकरूप होना प्रसिद्ध

---

विशेषणफलमिदं पूर्यते प्रजया पशुभिरप्रवर्तिविशेषणफलं नास्यास्माल्लोकात्प्रजोद्वर्तत इति प्रजा संतानाविच्छित्तिः ॥ ५ ॥

तथा वायौ प्राणे हृदि चैका देवता तस्या विशेषणमिन्द्रः परमेश्वरो [2]वैकुण्ठो[3]ऽप्रसह्यो न परैर्जितपूर्वा[4]ऽपराजिता सेना मरुतां गणत्वप्रसिद्धेरुपासनफलमपि । जिष्णुर्ह

---

[5]अप्रवर्तित्वमप्रवर्तकत्वमक्रियावत्त्वं वा ॥ ५ ॥

कथमेकस्मिन्वायावपराजिता सेनेति गुण संभवति तत्राऽऽह—मरुतामिति । विशेषणत्रयस्य फलत्रयं क्रमेण व्युत्पादयति—जिष्णुरित्यादिना । अन्यतस्त्यानामन्यतो [6]मातृतो जातानाम् ॥ ६ ॥

---

इसी प्रकार आकाश, हृदयाकाश और हृदय में भी एक ही देवता है। (उसके घटादि के समान अविभक्त) पूर्ण और अक्रियात्व (स्वयं का अप्रवृत्तत्व होना) ये दो विशेषण हैं। पूर्णत्व विशेषण (वाले ब्रह्म की उपासना) का फल यह है कि वह प्रजा और पशुओं से पूर्ण होता है तथा अक्रियात्व' विशेषण का यह फल है कि इस लोक से उसकी 'प्रजाद्वर्तते' यानी प्रजा का सन्तानविच्छेद नहीं होता ॥ ५ ॥

इसी प्रकार वायु, प्राण और हृदय में भी एक ही देवता है। उसके विशेषण हैं, 'इन्द्र' अर्थात् परमेश्वर, "वैकुण्ठ" यानी आलस्यरहित या अजित स्वभाव वाला, "अपराजिता सेना" यानी जो सेना किसी दूसरे से पहले कभी पराजित न हुई हो, ऐसे अपराजितसेनात्व गुण वाला। मरुत्

---

१ पूर्णत्वं घटादिवदविभक्तत्वम् । दृष्टान्तो व्यतिरेके विभागोऽवयवशो घटादीनाम् । २ कुण्ठा मन्दक्रिया आलस्य तद्रहित स्वार्थेऽण् । ३ अजितस्वभाव इत्यर्थः । ४ अपराजितसेनात्व गुण । ५ स्वयमप्रवृत्तत्वमिति यावत् । ६ मातुः सपत्नीतो जातानाम् ।

इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यत-
स्त्यजायी ॥ ६ ॥

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं
ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संव-
दिष्ठा 'विषासहिरिति वा अहमेतमुपास इति स य
एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य
प्रजा भवति ॥ ७ ॥

है)। जो कोई इसकी इस रूप से उपासना करता है, तो वह जयनशील, दूसरे से कभी न हारने वाला और शत्रुओं का विजेता होता है ॥ ६ ॥

उस गार्ग्य ने कहा—यह जो अग्नि में पुरुष है, मैं इसी की ब्रह्मरूप से उपासना करता हूँ। उस अजातशत्रु ने कहा—नहीं-नहीं, इस सम्बन्ध में चर्चा न करो। (इसे मैं जानता हूँ और) इसकी मैं विषासहि (दूसरों को सहन करने वाले) रूप से उपासना करता हूँ। जो कोई इसकी इस प्रकार उपासना करता है, निःसन्देह वह स्वयं विषमहि होता है और उसकी प्रजा भी विषासहि होती है ॥७॥

---

जयनशीलोऽपराजिष्णुर्न च परैर्जितस्वभावो भवति। अन्यतस्त्यजाय्यन्यतस्त्यानां सपत्नानां जयनशीलो भवति ॥ ६ ॥

अग्नौ वाचि हृदि चैका देवता तस्या 'विशेषणं विषासहिर्मर्षयिता' परेषाम्। अग्निबाहुल्यात्फलबाहुल्यं पूर्ववत् ॥ ७ ॥

---

यद्वाविविष्यते सिप्यते तत्सर्वं भस्मीकरणेन सहते तेनाग्निर्विषासहिः। यथा पूर्वं विद्युतां बाहुल्याबात्मनि प्रजायां च फलबाहुल्यमुक्तं तथाऽग्राप्यग्नीनां 'बहुलत्वादुपासकस्याऽऽत्मनि प्रजायां च दीप्ताग्नित्वं सिप्यतीत्याह—अग्नीति ॥ ७ ॥

---

देवताओं का भी गणत्व (समूह या संघरूप) होना प्रसिद्ध है। ब्रह्म के इन गुणों की उपासना का फल इस प्रकार है—वह "जिष्णुर्ह" अर्थात् जयनशील होता है, "अपराजिष्णुर्भवति" यानी दूसरों के द्वारा कभी पराजित न होने के स्वभाव वाला होता है तथा "अन्यतस्त्यजायी" अर्थात् विरोधी या शत्रुओं को जीतने के स्वभाव वाला होता है ॥ ६ ॥

अग्नि, वाक् और हृदय एक ही देवता है। उसका गुण है—"विषासहि" अर्थात् दूसरों को सहन करने वाला। पूर्व मन्त्रों की तरह उपास्य अग्नि की बहुलता होने के कारण उसके फल की भी बहुलता है ॥ ७ ॥

---

१ विष्यते सिप्यत इति विष हविः तद् आसहते इति विषासहि। यद्वा विशेषेण सहते इति तथा। २ गुण।
३. फलोक्तिरियम्। ४ गार्हपत्यादिभेदत।

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं
ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्सं-
वदिष्ठाः- प्रतिरूप इति वा अहमेतमुपास इति स य
एतमेवमुपास्ते प्रतिरूपꣳ हैवैनमुपगच्छति नाप्रतिरूप-
मथो प्रतिरूपोऽस्माज्जायते ॥८॥

स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं
ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा
रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेव-

उस गार्ग्य ने कहा—यह जो जल मे पुरुष है, मैं ब्रह्मरूप से इसी की उपासना करता हूँ। तब उस अजातशत्रु ने कहा—नही-नही, इस सम्बन्ध मे बात न करो। इसकी मैं (श्रुति, स्मृति के अनुकूल) प्रतिरूप से उपासना करता हूँ। जो कोई इसकी इस प्रकार उपासना करता है, उसके पास प्रतिरूप ही आता है, उसके विपरीत नही आता और उससे प्रतिरूप संतति उत्पन्न होती है ॥ ८ ॥

उस गार्ग्य ने कहा—यह जो दर्पण मे पुरुष है, मैं इसी की ब्रह्मरूप से उपासना करता हूँ। इस पर अजातशत्रु ने कहा—नही-नही, इसकी चर्चा न करो, इसकी तो मैं दीप्तिशालीरूप से उपासना करता हूँ। जो कोई इसकी इस रूप से उपासना करता है, निःसन्देह वह दीप्तिस्वभाव वाला हो जाता

---

अप्सु रेतसि हृदि चैका देवता तस्या विशेषणं प्रतिरूपोऽनुरूपः श्रुतिस्मृत्यप्रतिकूल इत्यर्थः। फलं प्रतिरूपं श्रुतिस्मृतिशासनानुरूपमेवैनमुपगच्छति प्राप्नोति न विपरीतमन्यच्चास्मात्तथाविध एवोपजायते[1] ॥ ८ ॥

आदर्शे प्रसादस्वभावे चान्यत्र खड्गादौ हार्दे च [2]सत्त्वशुद्धिस्वाभाव्ये चैका देवता

---

प्रतिरूपत्वं प्रतिकूलत्वमित्येतद्व्यावर्तयति'—अनुरूप इति। अन्यच्च फलमिति सबन्धः। अस्मादुपासितुरित्यर्थः। तथाविध श्रुतिस्मृत्यनुकूल इति यावत् ॥ ८ ॥

हार्दे चेत्येतदेव स्पष्टयति—सत्त्वेति। सर्वत्रैकेति विशेषणस्य देवतेति विशेष्यतया संबध्यते।

---

जल, वीर्य और हृदय मे एक ही देवता है। उसका गुण है—"प्रतिरूप" अर्थात् अनुरूप अथवा यूँ कहो कि श्रुति स्मृति के अनुकूल होना। ब्रह्म के इस गुण की उपासना का फल है—"प्रतिरूपम्" यानी श्रुति-स्मृति के अनुकूल पदार्थ ही उपासक को "उपगच्छति" यानी प्राप्त हो जाता है, इसके विपरीत नही। इसके अतिरिक्त उससे वैसा ही पुत्र उत्पन्न होता है ॥ ८ ॥

स्वाभाविक निर्मल दर्पण और खड्गादि अन्य पदार्थों मे तथा सत्त्वगुणयुक्त स्वाभाविक शुद्ध

---

१ पुत्र इति शेष। २ बुद्धाविति यावत्। ३ तथा च प्रतिशब्दोऽत्रानुशब्दार्थ इति भाव।

मुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगच्छति [1]सर्वाᳪस्तानतिरोचते ॥९॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं [2]ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वᳪहैवास्मिँल्लोक आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥१०॥

है और उसकी प्रजा भी दीप्तिवाली होती है। तथा जिनमे उसका समागम होता है, उन सभी से बढकर दीप्तिमान् होकर चमकता है ॥ ९ ॥

उस गार्ग्य ने कहा—जाते हुए वायु के पीछे जो यह शब्द होता है, इसी की मैं ब्रह्मरूप से उपासना करता हूँ। तब उस अजातशत्रु ने कहा—नहीं-नहीं, इसके विषय मे बात न करो। इसकी मैं प्राणरूप से उपासना करता हूँ। जो कोई इसकी इस प्रकार उपासना करता है, वह इस लोक में पूर्ण आयु प्राप्त करता है और नियत समय से पूर्व इसे प्राण नहीं छोडता ॥ १० ॥

---

तस्या विशेषणं रोचिष्णुर्दीप्तिस्वभावः फलं च तदेव [3]रोचनाधारबाहुल्यात्फलबाहुल्यम् ॥९॥

यन्तं [4]गच्छन्तं य एवायं शब्दः पश्चात्पृष्ठतो [5]ऽनूदेत्यध्यात्मं च जीवनहेतुः प्राणस्तमेकीकृत्याऽऽहासुः[6] प्राणो जीवनहेतुरिति गुणस्तस्य फलं सर्वमायुरस्मिँल्लोक एतीति।

---

तदेव रोचिष्णुत्वमित्यर्थः ॥ ९ ॥

आहैतमेवाहमित्यादीनि ज्ञेय । तस्य गुणवदुपासनस्येत्यर्थः । सर्वमायुरित्येतद्व्याचष्टे—

---

बुद्धि वाले हृदय मे एक ही देवता है। उसका गुण है, "रोचिष्णु" यानी प्रकाशमान् स्वभाव वाला। उस गुण की उपासना का फल भी वही है। दीप्ति के आधारबाहुल्य होने से फल की भी बहुलता हो जाती है ॥ ९ ॥

"यन्तम्" यानी मार्ग मे जाते हुए के "पश्चात्" यानी पीछे जो यह शब्द उत्पन्न होता है, और जो अध्यात्म दृष्टि से जीवन का हेतुरूप प्राण है, उसको यहाँ एक करके कहा है। उस शब्द-

---

१ सर्वेभ्योऽतिरोचते। २ ब्रह्म धिया ध्यायामि। ३ रोचना दीप्ति। ४ अध्वनि धावन्तम्। ५ अनूदेति—उत्पद्यते। तत्र कारणम् वार्तिके— "पुंसोऽभिधावतस्तूर्णं देहदेशे समाहृत। प्राणो वृत्तिविशेषेण बहिर्व्यक्तुरुते ध्वनिम्" ॥७५॥ इति। वृत्तिविशेषेण गतिभेदेनेति यावत्। यद्वा प्राणनादिवृत्तीरत्यक्त्वा वृत्त्यन्तरेणेत्यर्थः। ६ शब्दपुरुषस्यासुरिति विशेषण तस्यायमर्थः उपासना प्राणनादिवृत्तीनामेव बाह्यांशेन त्यागात्स प्राणात्मा असुगुणक इति। तदुक्तं वार्तिके—' वृत्तिक्षेपादसुस्त्वमायुषश्च तदाश्रिते ॥७६॥ अस्यतीत्यसु।

**स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥११॥**

उस गार्ग्य ने कहा—यह जो दिशाओं मे पुरुष है इसकी मैं ब्रह्मरूप से उपासना करता हूँ। तब उस अजातशत्रु ने कहा—नहीं-नहीं, इस सम्बन्ध मे बात न करो। इसकी तो मैं द्वितीय और अनपगम (पृथक न होने वाले) रूप से उपासना करता हूँ। जो कोई इसकी इस प्रकार से उपासना करता है, वह द्वितीयवान् होता है और उससे गण का विच्छेद नही होता ॥ ११ ॥

---

यथोपात्तं कर्मणाऽऽयुः कर्मफलपरिच्छिन्नकालात्पुरा पूर्वं रोगादिभिः पीड्यमानमप्येनं प्राणो न जहाति ॥ १० ॥

दिक्षु कर्णयोर्हृदि चैका देवताऽश्विनौ देवावविमुक्तस्वभावौ गुणस्तस्य द्वितीयवत्त्वमनपगत्वमवियुक्तता चान्योन्यं दिशामश्विनोश्चैवंधर्मित्वात्तदेव च फलमुपासकस्य गणाविच्छेदो द्वितीयवत्त्वं च ॥ ११ ॥

---

यथोपात्तमिति ॥ १० ॥

का पुनरसावेका देवता तत्राऽऽह—अश्विनाविति। तस्य देवस्येति यावत्। यथोक्तं गुणद्वयमुपपादयति—दिशामिति। द्वितीयवत्त्व साधुभृत्यादिपरिवृतत्वम् ॥ ११ ॥

---

पुरुष का "असु" यानी जीवनहेतुकप्राण गुण है। उसकी उपासना का फल यह है कि वह उपासक इस लोक मे पूर्ण आयु लाभ करता है, उसके कर्मफल से परिच्छिन्न समय से पहले, रोगादि से पीडित होने पर भी उसे प्राण परित्याग नही करता ॥ १० ॥

दिशा, कर्ण और हृदय मे एक ही देवता अश्विनी है, (युगल होने पर भी) अवियुक्त स्वभाव होने पर एक ही है। उसके गुण है—द्वितीयत्व और अनपगत्व यानी अवियुक्तता, क्योंकि दिशाएँ और अश्विनीकुमार ये परस्पर (द्वितीयत्व और अवियुक्तत्व) ऐसे ही स्वभाव वाले हैं। उसकी उपासना का फल यह है कि इससे उपासक का सदा पुत्रादिगण-सन्तानस्थैर्य होता है और दूसरे से युक्त होता है ॥ ११ ॥

---

१ अतएव द्वयोरेकेत्युक्ति। २ एवधर्मित्वम्—स द्वितीयत्वम्। परस्परमवियुक्तत्व च दिशा सद्वितीयत्व वार्तिके—"दु सम्भाव्या हि पूर्वा दिङ्मुक्त्वाऽऽशां पश्चिमा जनैरिति" ॥७७॥ ३ "पुत्रादिगणसन्तानस्थैर्यमेव सदा भवेत्" ॥७८॥ इति वार्तिकम्।

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳ हैवास्मिंल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥१२॥

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं

उस गार्ग्य ने कहा—यह जो छाया में पुरुष है, इसकी ही मैं ब्रह्मरूप से उपासना करता हूँ। तब उस अजातशत्रु ने कहा—नहीं-नहीं, इस सम्बन्ध में बात न करो। इसकी मैं मृत्युरूप से उपासना करता हूँ। जो कोई इसकी इस प्रकार से उपासना करता है, वह इस लोक में पूर्ण आयु प्राप्त करता है और नियत समय से पहले इसके पास मृत्यु नहीं आता ॥ १२ ॥

उस गार्ग्य ने कहा—यह जो बुद्धि में पुरुष है, उसी की मैं ब्रह्मरूप से उपासना करता हूँ।

---

छायाया बाह्ये तमस्यध्यात्मे चाऽऽवरणात्मकेऽज्ञाने हृदि चैका देवता विशेषणं मृत्युः फलं सर्वं पूर्ववन्मृत्योरनागमनेन रोगादिपीडाभावो विशेषः ॥ १२ ॥

आत्मनि प्रजापतौ बुद्धौ हृदि चैका देवता तस्या विशेषणमात्मन्व्यात्मवानिति

---

शब्दब्रह्मोपासकस्येव तमोब्रह्मोपासकस्यापि फलमित्याह—फलमिति । फलभेदाभावे कथमुपासनभेदः स्यादित्याशङ्क्याऽऽह—मृत्योरिति ॥ १२ ॥

*व्यस्तानि ब्रह्माण्युपन्यस्य समस्तं ब्रह्मोपदिशति—प्रजापताविति । आत्मवत्त्वं वश्यात्मक-

---

शरीरछायारूप बाह्य अन्धकार, शरीर के अन्दर आवरणरूप अज्ञान और हृदय में भी एक ही देवता है। इसका गुण मृत्यु है। उसकी उपासना का फल है कि मृत्यु के आगमन से पूर्व रोगादि-पीडा का भी अभाव रहता है, यही विशिष्टता है ॥ १२ ॥

---

१. शरीरच्छायारूपे । २. मृत्योरागमनात्प्राक् रोगादिपीडाया अप्यभाव इति यावत् । ३. चिराजि । ४. हृदयदेशे । ५ यस्य आत्मा विद्यतेऽस्याऽसावात्मन्वी स्वतन्त्र इति यावत् । तदाह—आत्मवानिति । ६ तत्तुल्यम् । ७. व्यष्टिरूपाणि । ८ समष्ट्यात्मकम् ।

---

*व्यस्तानि ब्रह्माण्युपन्यस्य समस्त ब्रह्मोपदिशतीति । अत्र वार्तिकानि चत्वारि सन्ति । तथाहि—"व्यस्ताना पूर्वमुद्देश समस्ताना त्विहोदित । विवक्षाऽवमितिर्गार्ग्यो तथा सत्युपपद्यते ॥ प्रत्याख्यातोपदेश सन् सवादेन पुन पुन । ब्रह्मान्यदन्यदवददात्मन्वीत्यन्तमादरात् ॥ विशेषाणामनन्तत्वात्समस्त ब्रह्म सोऽवदत् ॥ तस्मिन्नपि निषिद्धेऽथ तूष्णी गार्ग्यो बभूव ह ॥ यत्कृत्स्न ब्रह्म पूर्वोक्त तदेवेदमविद्यया । एकधाऽनेकधा मूढ कल्प्यते रज्जुसर्पवत्" ॥८१–८४॥ इति । पूर्वोत्तरपर्यायेऽवान्तर भेद दर्शयति—व्यस्तानामिति । उद्देशो ध्येयत्वेनोक्तिरित्यर्थ । अन्ते पर्याये समस्तोपदेशे नियामकमाह—विवक्षेति । तथा सति समस्तव्यस्तोपदेशे सति ॥ गार्ग्यसबन्धिनी

ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैत-स्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवत्या-त्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥

स होवाचाजातशत्रुरेतावन्नू ३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥ १४ ॥

तब उस अजातशत्रु ने कहा—नहीं-नहीं, उसके विषय मे बात न करो। इसकी तो मैं आत्मन्वीरूप से उपासना करता हूँ। जो कोई इसकी इस रूप से उपासना करता है, वह निःसन्देह आत्मवान होता है और उसकी प्रजा की सन्तति भी बुद्धिमती होती है। इसके बाद वह गार्ग्य चुप हो गया (क्योंकि ब्रह्म का इससे अधिक ज्ञान उसे था नहीं)। अतः वह नतमस्तक हो गया ॥ १३ ॥

उस अजातशत्रु ने कहा—क्या इतना ही तू जानता है? गार्ग्य ने कहा—हाँ, मुझे इतना ही ब्रह्म विदित है। अजातशत्रु ने कहा—इतना जानने से तो ब्रह्म विदित नहीं होता। तब उस गार्ग्य ने कहा—मैं आपकी शरणापन्न हूँ, मुझे आप ब्रह्म का उपदेश करें ॥ १४ ॥

---

विशेषणं फलमात्मन्वी ह भवत्यात्मवान्भवति। आत्मन्विनी हास्य प्रजा भवति बुद्धि-बहुलत्वात्प्रजायां संपादनम्। स्वयं परिज्ञातत्वेनैव क्रमेण प्रत्याख्यातेषु ब्रह्मसु स गार्ग्यः क्षीणब्रह्मविज्ञानोऽप्रतिभासमानोत्तरस्तूष्णीमवाक्शिरा आस ॥ १३ ॥

---

त्वम्। फलस्याऽऽत्मगामित्वात् प्रजाया तदभिधानमुचितमित्याशङ्क्याऽऽह—बुद्धीति ॥ १३ ॥

---

"आत्मनि" यानी विराट् प्रजापति, बुद्धि और हृदय देश में एक ही देवता है। उसका गुण है, "आत्मन्वी" अर्थात् आत्मवान् या स्वतन्त्र होना। इसकी उपासना का फल है, वह आत्मन्वी अर्थात् आत्मा को वश में कर लेता है। उसकी प्रजा भी आत्मा को वश में कर लेती है। उपासना की बहुलता से वस्तुतः वाचनिक फलबहुलता होने से प्रजा में उस फल का सम्पादन होता है, यह इसकी विशेषता है। स्वयं परिज्ञात होने के कारण इस प्रकार उपदेश किये हुए आदित्य ब्रह्मविषयक प्रत्याख्यान होने

---

१ उपासनबाहुल्यात् वस्तुतस्तु वाचनिकं फलबाहुल्यम्। २ आदित्यादिब्रह्मविषयोपदेशेषु। ३ उपासकगामित्वौचित्यात्।

---

वक्तव्यचर्चा परिसमाप्तिरुपपद्यते तत्समाप्तिमेव प्रकटयति—प्रत्याख्यातेति। ब्रह्मोपदेशप्रत्याख्यानानन्तरमज्ञाना-देव गार्ग्यो विवक्षारहितोऽभूदित्यर्थं ॥ कतिपयविशेषानुक्त्वा सर्वोपसंहारं विना किं अन्ये समस्तब्रह्मोक्तिरित्या-शङ्क्याऽऽह—विशेषाणामिति। अनन्तत्वात्प्रत्येकं वक्तुमशक्यत्वादिति शेषः। तत्र सर्वान्तर्भावाच्चेति भावः।

**स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषꣳ सुप्तमाजग्मतु-,**

उस अजातशत्रु ने कहा—यद्यपि यह विपरीत वात है कि क्षत्रिय के प्रति ब्राह्मण। इस उद्देश्य से जावे कि यह क्षत्रिय मुझे ब्रह्म का उपदेश करेगा, (इस प्रतिलोमविधि का शास्त्रों में निषेध किया गया है) तो भी मैं तुझे उस ब्रह्म का बोध कराऊँगा ही। उसके बाद वह अजातशत्रु उस गार्ग्य ब्राह्मण के हाथों को पकड़कर उठ खड़ा हुआ और वे दोनों एक सोये हुये पुरुष के पास आये। वहाँ

---

ज्ञातव्यमस्तीति दर्शितं भवति। तस्मादनुपसन्नाय न वक्तव्यमित्याचारविधिज्ञो गार्ग्यः स्वयमेवाऽऽहोप त्वा यानीत्युपगच्छानीति त्वा यथाऽन्यः शिष्यो गुरुम् ॥ १४ ॥

स होवाचाजातशत्रुः प्रतिलोमं विपरीतं चैतत्किं तद्यद्ब्राह्मण उत्तमवर्ण आचार्यत्वेऽधिकृतः सन्क्षत्रियमनाचार्यस्वभावमुपेयादुपगच्छेच्छिष्यवृत्त्या ब्रह्म मे वक्ष्यतीत्येतदाचारविधिशास्त्रेषु निषिद्धम्। तस्मात्तिष्ठ त्वमाचार्य एव सन्। विज्ञपयिष्याम्येव

---

मनवाक्यमुत्थाप्य व्याचष्टे—तच्चेति ॥१४॥

"अब्राह्मणादध्ययनमापत्काले विधीयते।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरो ॥
नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्"

इत्यादीन्याचारविधिशास्त्राणि।

---

का द्वार है, इसलिये यह कहना उचित ही है कि 'इतना मात्र जानने से ब्रह्म का ज्ञान नहीं होता।' अविद्यावस्था में ब्रह्म विज्ञानस्वरूप और नामरूपकर्मात्मक है। यह बात तृतीय अध्याय (उपनिषत् के प्रथम अध्याय) में प्रदर्शित की जा चुकी है। इसलिये "इतना मात्र जानने से ब्रह्म का ज्ञान नहीं होता" ऐसा कहकर यह सिद्ध किया गया है कि अभी इससे पूर्णब्रह्म का ज्ञान प्राप्त करना है। उस निरुक्तब्रह्म का उपदेश जो शरणापन्न न हो, उसे नहीं करना चाहिये। अतः आचारविधि को जानने वाला गार्ग्य स्वयं ही कहता है, "उप त्वा यानीति" अर्थात् जैसे कोई दूसरा शिष्य अपने गुरु के शरणापन्न होता है, उसी तरह मैं भी तुम्हारे शरणापन्न होऊँ ॥१४॥

---

१ ज्ञपयिष्यामीति। वर्णतो गार्ग्यस्याधिक्यादुपसत्त्यभावेऽपि विद्यातो राज्ञो वैशिष्ट्यात्ततस्तद्ग्रहो (विद्याग्रहो) युक्तः 'न हायनैर्न पलितैर्न वित्तेन च बन्धुभिः। ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महानिति' स्मृतेः। धर्मं धर्मनिर्णयम्। २ निरुक्तं ब्रह्म। ३ उपसीदानि। ४ निषिद्धम्। ५ तथा च विद्यार्थमेवोपगमनं निषिद्धं न तु योगक्षेमाद्यर्थमिति सूच्यते। ६ मत्तस्तवोत्तमत्वात्। ७ अनुपसन्नमेव शिष्यवत्त्वां विज्ञापनमात्रं करिष्यामि न त्वाचार्यवदुपदेक्ष्यामि ब्रह्म। ८ ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमामिति' शेषः (—मनु)। अनूचानः साङ्गवेदाध्यायी।

**स्तमेतैर्नामभिरामन्त्रयांचक्रे बृहन्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिनाऽऽपेषं बोधयांचकार स होत्तस्थौ ॥ १५ ॥**

पर हे बृहन्! हे पाण्डरवास! हे सोम राजन्! इन नामों से अजातशत्रु ने उस सुपुप्त पुरुष को पुकारा, किन्तु वह सोया हुआ पुरुष न उठा। तत्पश्चात् हाथ से दवा-दवा कर उस सुपुप्त पुरुष को जगाया, इससे वह उठ बैठा ॥ १५ ॥

त्वामहम्। [1]यस्मिन्विदिते [2]ब्रह्म विदितं भवति [3]यत्तन्मुख्यं ब्रह्म वेद्यम्। त गार्ग्यं सलज्जमालक्ष्य [4]विश्रम्भजननाय पाणौ हस्त आदाय गृहीत्वोत्तस्थावुत्थितवान्। [5]तौ ह गार्ग्याजातशत्रू पुरुषं सुप्तं राजगृहप्रदेशे क्वचिदाजग्मतुरागतौ। तं च पुरुषं सुप्तं प्राप्यैतैर्नामभि[6]र्बृहन्पाण्डरवासः सोम राजन्नित्येतैरामन्त्रयाचक्रे। एवमामन्त्र्यमाणोऽपि स सुप्तो नोत्तस्थौ। तमप्रतिबुध्यमानं *पाणिनाऽऽपेषमा[7]पिष्याऽऽपिष्य बोधयाचकार

आदित्यादिब्रह्मभ्यो[8] विशेषमाह—यस्मिन्निति। प्राणस्य व्याप्रियमाणस्यैव सबोधनार्थं प्रयुक्तनामाश्रवणादापेषणाच्चोत्थानात्तस्याभोक्तृत्वं[9] सिध्यतीति फलितमाह—तस्मादिति।

उस राजा अजातशत्रु ने कहा—यह तो "प्रतिलोम" यानी निपिद्ध है कि उत्तमवर्ण में उत्पन्न ब्राह्मण आचार्यत्व का अधिकारी होकर "क्षत्रियम्" अर्थात् जिसका आचार्य होना स्वभाव नहीं है, उस क्षत्रिय के प्रति "उपेयात्" अर्थात् शिष्यभाव से शरणापन्न हो, इस प्रयोजन से कि यह मुझे ब्रह्म का उपदेश करेगा, यह आचारविधिपरक शास्त्रों में निपिद्ध माना है (क्योंकि विद्या के लिए क्षत्रिय के पास जाना निपिद्ध है, योगक्षेम के लिए उसके पास जाने में कोई दोष नहीं)। इसलिए (मेरे से तुम उत्तम होने के कारण) तुम ही आचार्यपद को अलंकृत किये रहो। फिर भी (क्षत्रिय होने पर) जिसका ज्ञान होने पर ब्रह्म का ज्ञान हो जाता है और इस प्रकार जो मुख्यब्रह्म

१ यस्मिन् मुख्ये ब्रह्मणि। २ आदित्याद्यमुख्य ब्रह्म। ३ ईदृग्यत्। ४ मद्विजेताऽसौ कथ मामुपदिशेत्स्वमित्यविश्वासपरिजिहीर्षू राजा। ५ आजग्मतुरिति—'गार्ग्योक्तब्रह्माभोक्तृत्व तथाऽमीयामनात्मताम्। बालाकर्बोधयिष्यामीत्यत सुप्तमगा नृप ॥वा ९७॥ ६ उक्तार्थानि विशेषणानि। ७ पुन पुनश्चालयित्वा। ८ वक्ष्यमाणे मुख्ये ब्रह्मणि। ९ अनात्मत्वम्।

*पाणिनेत्यादि स होत्तस्थावित्यन्ता तथा च वार्तिकम्— पाणिनाऽऽपिष्य बहुश सुप्त काश्योऽप्यबोधयत्। आपेषोद्भूतसक्षोभस्ततोऽसौ प्रत्यबुध्यत ॥ कारणानामिद वृत्त यन्निमित्तान्तराश्रयात्। स्वात्मकार्यसमुद्भूतिरम्बरादभ्रभूतिवत् ॥ आपेषाल्लीनबुद्ध्यादिसमुत्पत्तौ परात्मन। घटाकाशवदुत्पत्तिर्नाञ्जसैव सदा दृशेरिति ॥ १७८—१८०॥ उत्थानकर्तृत्वादात्मन स्वात श्यात्कर्तुस्तल्लक्षणत्वात्कि पेषणादिनेत्याशङ्क्याऽऽह—कारणानामिति। आकाशमभ्रोद्भूतिकारणमपि पुरोवाताद्यपेक्षते तथाऽऽत्मोत्थानकर्ताऽपि पेषणाद्यपेक्षिष्यते कारकान्तराप्रयोज्यस्य तत्प्रयोक्तु कर्तृत्वादित्यथ ॥ ननूत्थानमात्मन सुप्तेरुद्बोधस्तस्य स्वरूपत्वेनानुत्पत्तेर्न हेत्वपेक्षत्या-

प्रतिबोधितवान्। तेन स होत्तस्थौ। तस्माद्यो गार्ग्येणाभिप्रेतो नासावस्मिञ्छरीरे कर्ता भोक्ता ब्रह्मेति।

कथं पुनरिदमवगम्यते सुप्तपुरुषगमनतत्संबोधनानुत्थानैर्गार्ग्याभिमतस्य ब्रह्मणोऽब्रह्मत्वं ज्ञापितमिति। जागरितकाले यो गार्ग्याभिप्रेतः पुरुषः कर्ता भोक्ता ब्रह्म संनिहितः करणेषु यथा तथाऽजातशत्रवभिप्रेतोऽपि तत्स्वामी भृत्येष्विव राजा संनिहित एव। किं तु भृत्यस्वामिनोर्गार्ग्याजातशत्र्वभिप्रेतयोर्विवेकावधारणकारणं, तत्संकीर्णत्वाद् नवधा-

तो ह सुप्तमित्यादिसुप्तपुरुषगत्युक्तिमाक्षिपति—कथमिति। गार्ग्यकाश्याऽभिमतयोरुभयोरपि जागरिते करणेषु संनिधानाविशेषात्तत्रैव किमिति विवेको न दर्शित इत्यर्थः। जागरिते करणेषु द्वयोः संनिधानेऽपि सांकर्याद् दुष्करं विवेचनमिति परिहरति—जागरितेति। ब्रह्मशब्दादूर्ध्वं सशब्दमध्याहृत्य योजना। तर्हि स्वामिभृत्यन्यायेन तयोर्विवेकोऽपि सुकरः स्यादित्याशङ्क्याऽऽह—किं त्विति। किं

वेद्य है, उसका ज्ञान मैं तुम्हें कराऊँगा ही (हां, आचार्य की तरह उपदेश नहीं करूँगा)। उस (ब्राह्मण) गार्ग्य को लज्जित देखकर उसे विश्वास दिलाने के लिए वह राजा उसका हाथ पकड़कर खड़ा हुआ, तथा वे दोनों गार्ग्य और राजा अजातशत्रु राजभवन के भीतर कहीं सोए हुए पुरुष के पास "आजग्मु" यानी आये। उस सोये हुए पुरुष के पास जाकर राजा ने उसे 'हे बृहन्! हे पाण्डरवास! हे सोम! राजन्!' इन नामार्थक विशेषणों से पुकारा। इस प्रकार बुलाये जाने पर भी वह सोया हुआ पुरुष न उठा, तब नहीं सुनने वाले उस पुरुष को हाथ से "आपेष" यानी पुन पुनः हिलाकर "बोधयाञ्चकार" यानी जगाया; उससे वह उठ बैठा। अतः जिस प्राणदेवता को गार्ग्य ब्रह्म मानता था, वह इस शरीर मे कर्ता भोक्ता ब्रह्म नहीं है।

किन्तु फिर यह कैसे सिद्ध होता है कि सोए हुए पुरुष के पास जाने, उसे पुकारने और उसके

१. टीकाकारार्थम्। २ नासाविति—गार्ग्याभिमतप्राणदेवतातिरिक्त एवात्माऽस्मिञ्छरीरे कर्ता भोक्ता न प्राण इति निश्चीयते उच्छ्वासनिश्वासरूपेण व्याप्रियमाणस्य प्राणस्य बृहन्नित्यादि प्राणात्मचन्द्रादित्यादिनामभि, संबोधनाश्रवणमनुत्थानं च न स्यात्। आपेषणेन च संघातो भोक्ता नेति निर्णीतम् अन्यथा स्पर्शमात्रेणाप्युत्थानं स्यादिति भाव.। ३ ज्ञापित राजेति शेष। ४ प्राणात्मा। ५ आत्मनो। ६ भेदनिश्चयप्रयोजकम्। ७ अनिश्चितस्वरूपम्। ८ पुरुषम्। ९ किमिति—सुप्तपुरुषगमनमित्याक्षेप। १० साक्ष्यसाक्षिरूपयो. पुरुषयो। ११ किमिति न दर्शित इति—संनिहितं हित्वा व्यवहितगमनस्य युक्तत्वात् स्वापे सर्वव्यापारलोपे न तद्गतरनर्थकत्वात् जाग्रति सर्वस्याप्युपदिष्ट(उपदेष्टव्य)स्यार्थस्य विविच्य वक्तुं शक्यत्वाच्चेति भाव। १२ क्षीरनीरवत्। १३ जाग्रति द्वयोःसंनिहितत्वे।

शङ्क्याऽऽह—आपेषादिनि। स्वापे प्रतीच्यज्ञात लीनस्य बुद्ध्यादेर्जाग्रद्धेतुकर्मादिना परस्मादुत्पत्तौ बोधोदयो व्यवह्रियते घटाद्युत्पत्तौ तदाकाशोत्पत्तिवच्च साक्षादेव तदुत्पत्तिरित्यत्र हेतुमाह—सदेति। "तस्मादप्रतिबोधेन प्राणोऽभोक्तेति गम्यताम्। पुंसस्तु प्रतिबोधेन भोक्तृतैवानमीयते॥ अदाहकाना दग्धृत्वं यथा दाहकसंगते। भोक्तृसंयोगतस्तद्वदभोक्तृत्वं देवतात्मन" ॥१८१-१८२॥ पुरुषस्यैव भोक्तृत्वं चेत्कथं प्राणदेवतायास्तत्प्रसिद्धिस्तत्राह—अदाहकानामिति॥

रितविशेषम् । यद् द्रष्टृत्वमेव भोक्तुर्न दृश्यत्वं यच्चाभोक्तुर्दृश्यत्वमेव न तु द्रष्टृत्वं तच्चोभयमिह संकीर्णत्वाद्विविच्य दर्शयितुमशक्यमिति सुप्तपुरुषगमनम् ।

ननु सुप्तेऽपि पुरुषे विशिष्टैर्नामभिरामन्त्रितो भोक्तैव प्रतिपत्स्यते नाभोक्तेति

तद्विवेकावधारणकारणं तदाह—यद्द्रष्टृत्वमिति । कथं तदनवधारितविशेषमिति तदाह—तच्चेति । इहेति जागरितोक्तिः ।

यद्यपि जागरितं हित्वा सुप्ते पुरुषे विवेकार्थं "तयोरुपगतिस्तत्र" च भोक्तैव सबोधितः स्वनाम-

न उठने से गार्ग्य द्वारा अभिमत ब्रह्म का अब्रह्मत्व राजा द्वारा सूचित किया गया है ? (इस शङ्का का समाधान देते हैं—) गार्ग्य से अभिप्रेत जो प्राणात्मा पुरुष है, जिस तरह जाग्रत् अवस्था मे वह कर्ता, भोक्ता ब्रह्म है और वह इन्द्रियों से सन्निहित है, उसी प्रकार अजातशत्रु से अभिप्रेत उसका स्वामी नौकरो मे राजा के समान सन्निहित ही है । किन्तु गार्ग्य के माने हुए भृत्यस्थानीय आत्मा और अजातशत्रु के अभिमत स्वामीस्थानीय आत्मा के भेदनिश्चय का जो प्रयोजक है, वह सकीर्ण होने के कारण अनिश्चितस्वरूप वाला है । चेतन मे साक्षित्व ही है, दृश्यत्व नही है । तथा जो (जड प्राण) अभोक्ता मे साक्षी ही है, द्रष्टा नही है, ऐसे (द्रष्टृत्व और दृश्यत्व) विवेक का जो कारण है, वे दोनो तादात्म्य होने से भिन्न-भिन्न करके नही दिखाये जा सकते । इसीसे सुप्तपुरुष के पास जाया गया ।

किन्तु सुप्तपुरुष को विशेषणयुक्त नामों से पुकारे जाने पर (राजा द्वारा अभिमत) चेतन ही समझेगा, (गार्ग्य द्वारा अभिमत) अचेतन नही समझेगा । इसलिए तब भी निर्णय न हो सकेगा ।

१ साक्षित्वम् । २ चेतनस्य । ३ जडस्य प्राणस्य । ४ साक्ष्यत्वम् । ५ द्रष्टृत्व दृश्यत्व च । ६ उभयोस्तादात्म्यात् । ७ राजाभिमत । ८ गार्ग्याभिमत । ९ द्रष्टृत्वादि । १० उचितेति शेष । ११ सुप्ते ।

तच्चोभयमिह सकीर्णत्वाद्विविच्य दर्शयितुमशक्यमिति सुषुप्तपुरुषगमनमिति । ननु स्वापेऽपि साङ्कर्यसाम्यात् कुतो विवेकधीरित्याशङ्क्य समादधुर्वार्तिककाचार्याः—"आत्मन प्रोषितस्वास्तु भोगोऽस्मै न प्रयुज्यते । उदासतेऽखिला सुप्त देवता करणै सह ॥ जाग्रद्भोगप्रयुक्तस्य कर्मण प्रक्षयात्तदा । शेरते करणान्यस्य सह भोक्त्राऽऽत्मनाऽऽत्मनि ॥ प्राण एवस्तु जागर्ति भोक्ता यो गार्ग्यसमत । प्राणेन रक्षन्निति च तथोक्तं प्रवक्ष्यते ॥ प्राणाग्नय इति स्पष्ट तथाऽनस्तमिति श्रुत । अश्रान्त प्राण एवातो जागर्त्यत्र दिवानिशम् ॥ यथा जाग्रदवस्थाया भोक्ता प्राण पुराऽभवत् । स्वप्नेऽप्येष तथैवाऽऽस्ते बोद्धा चेदबुध्यतामयम् ॥ प्राणस्येन्दोस्तथा चाभा व्यक्षात्माविष्कृतो मत । ऐक्यमुक्तमत प्राणो बोध्यते चन्द्रनामभि ॥ बृहन्नित्येवमादीनि सन्तु चेहोपलक्षणम् । अनुक्तदेवतानाम्नामप्युक्तदेवतानाम्ना साम्प्रदायिकदुपलादिवदिति ॥१०५ ११२॥ आत्मन इति । भोक्तृकरणसहिताधिष्ठातृदेवतानां सुषुप्तावुपसहाराद्शाङ्कर्यात्तत्र विवेकसौकर्यमित्यर्थ ॥ सुषुप्तावुपसहारे हेतुमाह—जाग्रदिति । तदा सुषुप्तौ आत्मनि अज्ञाते परस्मिन्नित्यर्थ ॥ गार्ग्याभिमतात्मनोऽपि तत्रोपसहारान्न भोगप्रसक्तिरित्याशङ्क्याऽऽह—प्राण इति । तत्र मानमाह—प्राणनेति । प्राणेन रक्षन्नवर कुलायमित्युत्तरत्र तस्य स्वापेऽनुपसहारो वक्ष्यत इत्यर्थ ॥ तत्र श्रुत्यन्तरमाह—प्राणेति । प्राणाग्नय एवैतस्मिन्पुरे जाग्रतीति श्रुतिरिमेवार्थमाहेत्यर्थ । 'न व्यथतेऽथो न रिष्यति' (बृ उ १ ५ २० ) सैषाऽनस्तमिता देवता यद्वायुरित्यादिवाक्यादपि स्वापे तस्य नोपसहृतिरित्याह—तथेति । उक्तमानफलमुपसहरति—अश्रान्त इति । प्राणस्य सदा जागरे लब्धमर्थमाह—यथेति । स्वप्नेऽपीति अपिना स्वाप समुच्चीयते ॥ प्राणस्यासुप्तस्यैव अत्र देहे ॥

नन्वनिर्णयः स्यादिति । न, निर्धारितविशेषत्वाद्गार्ग्याभिप्रेतस्य । यो हि सत्येन च्छन्नः प्राण आत्माऽमृतो वागादिष्वनस्तमितो निम्लोचत्सु यस्याऽऽपः शरीरं पाण्डरवासा यश्चासपत्नत्वाद्बृहन्यश्च सोमो राजा षोडशकलः स स्वव्यापारारूढो यथानिर्ज्ञात एवानस्तमितस्वभाव आस्ते । न चान्यस्य कस्यचिद्व्यापारस्तस्मिन्काले गार्ग्येणाभिप्रेयते तद्विरोधिनः । तस्मात्स्वनामभिरामन्त्रितेन प्रतिबोद्धव्यं न च प्रत्यबुध्यत । तस्मात्सा-

भिस्तच्छब्दं श्रोष्यति नाचेतनस्तथाऽपि नेष्टविवेकसिद्धिर्गार्ग्यकाश्याभीष्टात्मनोरित्यतिसंशयादिति शङ्कते—नन्विति । संशयं निराकरोति—नेत्यादिना । विशेषावधारणमेव विशदयति—यो हीत्यादिना । स्वव्यापारस्तुमुलशब्दादिः । यथानिर्ज्ञातो यथोक्तैर्विशेषणैरुपलक्ष्य रूपमनतिक्रम्य वर्तमानः । प्राणस्योक्तविशेषणवतः स्वापेऽवस्थानेऽपि तस्य सदा भोगाभावस्तत्र भोक्त्रन्तराभ्युपगमादित्याशङ्क्याऽऽह—न चेति । तस्यैव भोक्तृत्वे फलितमाह—तस्मादिति । अस्तु तस्य प्राप्तशब्दश्रवणं तत्राऽऽह—न चेति । परिशेषसिद्धमर्थमाह—तस्मादिति ।

(उक्त शङ्का का समाधान करते हैं—) ऐसा कहना ठीक नहीं है । क्योंकि गार्ग्य से अभिमत ब्रह्म का विशिष्टरूप (अभोक्ता) निश्चित कर दिया गया है। गार्ग्याभिमत नामरूपादिरूप विराडात्मा स्थूलदेह से आच्छादित प्राणात्मा मोक्षपर्यन्त नाश न होने वाले वागादि के अस्त होने पर भी अस्त

१ निर्धारितविशेषत्वादिति—गार्ग्येष्टस्य प्राणस्य काश्यपेष्टात्मनः सकाशाद्यो विशेषः सदा व्यापृतत्वं तस्य प्रबोधात् प्रागपि प्रमितत्वात् प्राणोत्थाने शब्दाश्रवणायोगात् पाणिपेषानुपपत्तेः स न भोक्तेत्यर्थः । २ गार्ग्याभिमत प्राणात्मा । ३ नामरूपापरपर्यायेण विराडात्मकस्थूलदेहेन । ४ आमोक्षमनाशी । ५ अस्तमितेषु । ६ नन्वनस्तमितत्वं काश्यपेष्टेऽप्यात्मन्यक्षतमित्याशङ्क्य विशेषणान्तरमाह—यस्येति । ७ प्रतिपक्षाभावात् । ८ महान् । ९ षोडशकल इति—ताश्च कलाश्छान्दोग्यचतुर्थाध्याये सत्यकामविद्यायामुक्ताः । तथाहि—"प्राचीदिक्कला । प्रतीची । दक्षिणा । उदीची । पृथिवीकला । अन्तरिक्षम् । द्यौः । समुद्रः । अग्निः कला । सूर्यः । चन्द्रः । विद्युत् । प्राणकला । चक्षुः । श्रोत्रम् । मनः ।" इति ऋषभाद्युपदिष्टा ग्राह्याः ।। १० प्राणभिन्नस्य । ११ स्वापे । १२ प्राणविरोधिनः इत्यर्थः । १३ प्राणस्यैव भोक्तृत्वादिमतत्वात् । १४ प्राणेन । १५ अश्रौषीत् शब्दमित्यर्थः । १६ पुंसः साक्षित्वमेव प्राणस्य साक्ष्यत्वमेवेत्याकारकेष्टविवेकः । १७ उक्तात्मनोर्वा उत्थित इति संशयः । १८ तुमुलत्वं जागरापेक्षया सुप्तौ प्राणशब्दस्याधिक्याद्बोध्यम् । १९ विशिष्टम् । २० स्वापे । २१ स्वापे । २२ जागरे प्राण एव भोक्ता सुप्तौ चान्य इति गार्ग्याभिप्रायात् । २३ स्वनामाप्रतिबोधनात् ।

स्वापे संबोधनशब्दाश्रवणादभोक्तृत्वयुक्तं प्राणचन्द्रमसोर्भेदात्तस्य चन्द्रनामभिः संबोधनादप्रतिबोधो नाचेतनत्वादित्याशङ्क्याऽऽह—प्राणस्येति । व्यथात्माविष्कृतौ अर्थं तस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्र इत्यादावित्यर्थः ।। अथापि कुतश्चन्द्रनामभिरेव संबोधनं प्राणस्य सर्वात्मत्वादादित्यादिनामभिरपि तत्संभवादित्याशङ्क्याऽऽह—बृहन्नितीति । इह संबोधनवाक्ये । ततस्तैरपि संबोधितवानिति शेषः । यद्वा संबोध्यमानप्राणस्य सूत्रैक्यात्तत्सामर्थ्यादनुक्तसूत्रावयवादित्यादिनाम्नां चन्द्रनामवद्ग्रहात्तैरपि संबोधितवानित्याह—सामर्थ्यादिति ।। चन्द्रनामभिः संबोधनं प्रसाध्य तच्छब्दाश्रवणात्तदभोक्तृत्वं यथा जाग्रदवस्थायामित्यत्रोक्तमुपसंहरति—यदीति । स चेत्प्राश्रोष्यत भोक्ता स्यादिति योजना ।।

रिशेष्याद्गार्ग्याभिप्रेतस्याभोक्तृत्वं ब्रह्मणः।

[1]भोक्तृस्वभावश्चेद्भुञ्जीतैव स्व विषयं प्राप्तम्। न हि दग्धृस्वभावः प्रकाशयितृस्वभावः सन्वह्निस्तृणोलपादि दाह्यं [2]स्वविषयं प्राप्तं न दहति, प्रकाश्यं वा न प्रकाशयति। न चेद्दहति प्रकाशयति वा प्राप्तं स्व विषयं नासौ वह्निर्दग्धा प्रकाशयिता वेति निश्चीयते। तथाऽसौ प्राप्तशब्दादिविषयोपलब्धृस्वभावश्चेद्गार्ग्याभिप्रेतः प्राणो बृहन्पाण्डरवास इत्येवमादिशब्दं स्व विषयमुपलभेत। यथा प्राप्तं तृणोलपादि वह्निर्दहेत्प्रकाशयेच्चाव्यभिचारेण तद्वत्। तस्मात्प्राप्तानां शब्दादीनामप्रतिबोधादभोक्तृस्वभाव इति निश्चीयते। न हि यस्य यः स्वभावो निश्चितः स तं व्यभिचरति कदाचिदपि। अतः सिद्धं प्राणस्याभोक्तृत्वम्।

---

प्राणस्याभोक्तृत्वं व्यतिरेकद्वारा साधयति—भोक्तृस्वभावश्चेदिति। न च 'भुङ्क्ते तस्मादभोक्तेति शेषः। 'उक्तमर्थं दृष्टान्तेन स्पष्टयति—न हीत्यादिना। उलपं बालतृणम्। 'विपक्षे दोषमाह—न चेदिति। 'उक्तमर्थं संक्षिप्याऽऽह—यथेत्यादिना। प्राणस्याभोक्तृत्वमुक्तमुपसंहरति—तस्मादिति। यद्यपि प्राणः स्वापे शब्दादीन्न प्रतिबुध्यते तथाऽपि भोक्तृस्वभावो भविष्यति। नेत्याह—न हीति। संबोधनशब्दाश्रवणमतःशब्दार्थः।

---

नहीं होता। जिसका जल शरीर है, इसलिये जो पाण्डरवास है तथा जो प्रतिपक्ष के अभाव होने के कारण महान् है और जो सोलह कलाओं वाला सोम राजा है, वह अपने व्यापार में आरूढ हुआ, पहले जिन विशेषणों से विशिष्ट जाना गया है, उसी के अनुसार अनस्तस्वभाव वाला है। इसके अतिरिक्त प्राणविरोधी (प्राणभिन्न) किसी अन्य का व्यापार गार्ग्य को सुषुप्ति के समय अभीष्ट नहीं है। (प्राण के ही भोक्तृत्व इष्ट होने से) इसलिए अपने नामों से पुकारे जाने पर (प्राण के द्वारा) उसे जागना चाहिये किन्तु वह (शब्द सुनकर) जागा नहीं। इसलिए परिशेषतः गार्ग्य से अभिमत ब्रह्म का अभोक्तृत्व (अचेतनत्व) ही सिद्ध होता है।

यदि वह भोक्तृस्वभाव वाला होता तो अपने को प्राप्त विषय का उपभोग करता। दाहक और प्रकाशकस्वभाव वाला अग्नि अपने में आये हुए तृण और फूस आदि दाह्य पदार्थों को न जलाये, प्रकाशित होने वाली वस्तुओं को प्रकाशित नहीं करे, यह नहीं हो सकता। यदि वह अपने में प्राप्त पदार्थों को जलाता या प्रकाशित नहीं करता तो वह अग्नि जलाने या प्रकाशित करने वाला है—ऐसा निश्चय नहीं किया जा सकता। इसी प्रकार यदि गार्ग्य द्वारा अभिमत प्राणात्मा अपने को प्राप्त हुए शब्दादिविषय को ग्रहण करने के स्वभाव वाला है तो अपने लिए प्रयुक्त 'बृहन्, पाण्डरवास' इत्यादि शब्दों को ग्रहण कर लेता। जिस प्रकार अपने को प्राप्त घास-फूस आदि को अग्नि, निश्चय ही दग्ध और प्रकाशित कर देता है, उसी तरह यहाँ भी अर्थ समझ लेना चाहिये। इसलिए अपने को प्राप्त हुए शब्दादि का ज्ञान न होने से यह निश्चय होता है कि प्राणों का भोक्तृस्वभाव नहीं है। क्योंकि जिसका जो स्वभाव होता है, उसका वह कभी त्याग नहीं करता। इससे प्राण का अभोक्तृत्व

---

१ प्राण उपलब्धृस्वभावश्चेत्तर्हि 'बृहन् पाण्डरवास' इत्येवमादिशब्दं स्वीयं विषयं प्राप्तमुपलभेतैवेत्यर्थः।
२ शृणोति। ३ प्राप्ते विषये शक्तस्य कार्यकरत्वरूपम्। ४ प्राप्ते विषये शक्तस्यापि कार्याकरत्वं।
५ अभोक्तृत्वम्।

सबोधनार्थनामविशेषेण सबन्धाग्रहणादप्रतिबोध इति चेत् । स्यादेतत् । यथा बहुष्वासीनेषु स्वनामविशेषेण संबन्धाग्रहणान्मामय सबोधयतीति शृण्वन्नपि सबोध्यमानो विशेषतो न प्रतिपद्यते, तथेमानि बृहन्नित्येवमादीनि मम नामानीत्यगृहीतसबन्धत्वात्प्राणो न गृह्णाति सबोधनार्थं शब्दं न त्वविज्ञातृत्वादेवेति चेत् । न । देवताभ्युपगमेऽग्रहणानुपपत्ते । यस्य हि चन्द्राद्यभिमानिनी देवताऽध्यात्म प्राणो भोक्ताऽभ्युपगम्यते तस्य तया सव्यवहाराय विशेषनाम्ना सबन्धोऽवश्यं ग्रहीतव्योऽन्यथाऽऽह्वानादिविषये सव्यवहारोऽनुपपन्न स्यात् ।

व्यतिरिक्तपक्षेऽप्यप्रतिपत्तेरयुक्तमिति चेत् । यस्य च प्राणव्यतिरिक्तो भोक्ता तस्यापि बृहन्नित्यादिनामभि सबोधने बृहत्त्वादिनाम्ना सदा तद्विषयत्वाप्रतिपत्तिर्युक्ता ।

"तस्य स्वनामाग्रहण सबन्धाग्रहणकृत नानात्मत्वकृतमिति शङ्कते—सबोधनार्थेति । शङ्कामेव विशदयति—स्यादेतदित्यादिना । देवताया सबन्धाग्रहणमयुक्त सर्वज्ञत्वादित्युत्तरमाह—न देवतेति । "तदेव प्रपञ्चयति—यस्य हीत्यादिना । तयेति ग्रहणकर्तृनिर्देश । अहमिति सूचितामनुपपत्तिमाह—अन्यथेति । आदिपदेन यागस्तुतिनमस्कारादि गृह्यते । सव्यवहारो"ऽभिज्ञाभोगप्रसादादि ।

सबोधननामाग्रहस्तत्कृतानात्मत्वदोषश्च त्वदिष्टात्मनोऽपि तुल्य इति शङ्कते—व्यतिरिक्तेति । सगृहीत चोद्य विवृणोति—यस्य चेति । तदा सुषुप्तिदशाया प्रतिपत्तिर्युक्तेति सबन्ध । तद्विषयत्वादित्यतिरिक्तात्मविषयत्वादिति यावत् । अस्त्येवातिरिक्तस्याऽऽत्मन सबोधनशब्दश्रवणमिति चेन्नेत्याह—

(अचेतनत्व) ही सिद्ध होता है ।

(यहाँ शङ्का होती है कि) सम्बोधन के लिये प्रयुक्त नामविशेष से अपना सम्बन्ध ग्रहण न करने के कारण प्राण का अप्रतिबोध रहा हो तो ? यदि ऐसा कहो हो कि जिस प्रकार बैठे हुए बहुत से पुरुषों में अपने नामविशेष से सम्बन्ध ग्रहण न करने कारण 'यह मुझे ही बुलाता है' ऐसा न समझ सकने से, पुकारे जाने पर सुनते हुए भी कोई पुरुष विशेषरूप से नहीं समझता, उसी प्रकार 'ये बृहन् आदि मेरे नाम हैं' ऐसा सम्बन्ध ग्रहण न करने के कारण प्राण अपने को सम्बोधन करने के लिये प्रयुक्त शब्दों को ग्रहण नहीं करता अविज्ञाता होने के कारण ही नहीं । (समाधान देते हैं—) ऐसा कहना ठीक नहीं है क्योंकि देवता स्वीकृत किये जाने के कारण (इसके सर्वज्ञत्व होने से) उसका ग्रहण न करना सिद्ध नहीं होता । जिस वादी के मत में चन्द्रमा आदि का अभिमानी देवता अध्यात्मप्राण भोक्ता स्वीकृत किया जाता है उसे उस देवता के सम्यक्व्यवहार के लिए उसे अपने विशेष नाम से अवश्य सम्बन्ध ग्रहण करना चाहिये । अन्यथा स्वनाम का शक्तिग्रह न होने पर आह्वानविषयक सव्यवहार असम्भव होने लगेगा ।

(पुन शङ्का होती है—) प्राणातिरिक्त आत्मपक्ष में भी सम्बन्ध की प्रतिपत्ति से अभोक्तृत्व में

१ सामान्येन । २ विशेषण । ३ वादिनो मते । ४ देवतया । ५ स्वनाम्नि शक्तिग्रहानुपगमे । ६ विषयक । ७ प्राणातिरिक्तात्मपक्ष । ८ सबोधनाप्रतिपत्तेरभोक्तृत्वे कारणत्व न युक्तमित्यर्थ । ९ तव मते । १० तवापि आत्मनो वा । ११ प्राणात्मन । १२ अग्रहणानुपपन्नत्वमेव । १३ बोध ।

न च कदाचिदपि बृहत्त्वादिशब्दैः संबोधितः प्रतिपद्यमानो दृश्यते । तस्मादकारणमभोक्तृत्वे संबोधनाप्रतिपत्तिरिति चेत् । न । [1]तद्वतस्तावन्मात्राभिमानानुपपत्तेः । [2]यस्य प्राणव्यतिरिक्तो भोक्ता स प्राणादिकरणवान्प्राणी [3]तस्य न प्राणदेवतामात्रेऽभिमानो यथा हस्ते । [4]तस्मात्प्राणनामसंबोधने कृत्स्नभिमानिनो युक्तैवा प्रतिपत्तिः । न तु प्राणस्यासाधारणनामसंयोगे[5] ।

[6]देवतात्मत्वानभिमानाच्चाऽऽत्मनः । [7]स्वनामप्रयोगेऽप्यप्रतिपत्तिदर्शनादयुक्तमिति

---

न च कदाचिदिति । स्वविशिष्टात्मनः संबोधनशब्दाप्रतिपत्तावपि भोक्तृत्वाङ्गीकारस्तच्छब्दार्थः । अभोक्तृत्वे प्राणस्येति शेषः । यथा हस्तः पादोऽङ्गुलिरित्यादिनामोक्तौ मंत्री नोत्तिष्ठति सर्वदेहाभिमानित्वेन तन्मात्रानभिमानित्वादेवं कार्यकरणात्मनः सर्वकार्यकरणाभिमानित्वादङ्गुलिस्थानीयप्राणमात्रे तदभावात्तन्नामाग्रहणं न त्वचेतनत्वादिति परिहरति—न तद्वत इति । [8]तदेव स्फुटयति—यस्येति । प्राणमात्र प्राणादिकरणवतोऽभिमानाभावे फलितमाह—तस्मादिति । चन्द्रस्यापि प्राणैकदेशत्वा[11]त्तन्नामभिः संबोधने कृत्स्नाभिमानो [12]न नोत्तिष्ठति ।[13]अत्राप्यङ्गुल्यादिदृष्टान्तायेपत्तेरित्याशङ्क्याऽऽह—न त्विति । गोत्वव[14]त्तस्य सर्ववस्तुषु[15] [16]समाप्तेरहमिति सर्वत्राभिमानसंभवाच्चचन्द्रनामोक्तावपि नाप्रतिपत्तिर्युक्तेत्यर्थः ।

प्राणवच्चिदात्मनोऽपि पूर्णतया सर्वात्माभिमानसिद्धेर्बोधाबोधौ तुल्यावित्याशङ्क्याऽऽह—देवतेति । [17]विशिष्टस्याऽऽत्मनो [18]देवतायामात्मत्वाभिमानाभावा[19]दितरस्य च कूटस्थज्ञप्तिमात्रत्वेन [20]सर्वो-

---

कारण होना उपयुक्त नही है । तुम्हारे मत मे भी भोक्ता प्राण से अतिरिक्त है, आत्मा को भी जब बृहन् बृहन् इत्यादि नामो से पुकारा जाय तो उसे उसका ज्ञान होना चाहिये क्योकि उस समय 'बृहन्' आदि शब्दो से बुलाये जाने पर कभी भी बोध होते हुए नही दिखाई देता । इसलिए सम्बोधन को न जान पाना, यह अभोक्तृत्व मे कारण नही हो सकता । (सिद्धान्ती समाधान करता है—) ऐसा कहना ठीक नही है क्योकि कार्यकरणसघातवान् प्राणातिरिक्त आत्मा को प्राणमात्र का अभिमान होना सभव नही है । हमारे मत मे भोक्ता प्राण से भिन्न है । वह प्राणादि इन्द्रियो वाला प्राणी है । उस आत्मा को (अथवा मुझे) प्राणदेवतामात्र मे (आत्मा का) अभिमान नही हो सकता । जिस प्रकार हाथ वाले को हस्त मे अभिमान नही हो होता । इसलिये (सघातवान का केवल एक देशमात्र मे अभिमान होने से) समग्र शरीर के अभिमानी को प्राण नाम लेकर पुकारे जाने पर उसमे श्रवण न हो पाना उचित ही है, किन्तु प्राण का उसके किसी असाधारण नाम से सयाग होने पर श्रवण न हो पाना

---

१. कार्यकरणसघातवत प्राणातिरिक्तात्मन प्राणमात्राभिमानित्वानुपपत्ते । २ मम मते । ३ आत्मन ममेति वा । ४ सघातवत एकेदेशमात्रनभिमानित्वात् । ५ अश्रवणम् । ६. अप्रतिपत्तिर्युक्तेत्यन्वय । ७ प्राणदेवताया नात्मत्वाभिमान । ८ आत्मनः चित । ९ अभिमानाभावात् । १० सग्रहवाक्यमेव । ११ चन्द्रनामभि । १२. प्राण । १३ प्राणेऽपि । १४ प्राणस्य । १५ प्रत्येकम् । १६ व्याप्ते । १७ सघाताभिमानिन । १८ प्राणे । १९. स एवात्मा मुख्यो नान्योऽस्तीत्याशङ्क्याऽऽह—इतरस्य सघातसाक्षिण । जलस्थादित्यान्मुख्यादित्यवत् चैतन्याभासात् कूटस्थबोधोऽन्योऽस्तीति भाव । २० कुत्राप्यभिमानासभवात् ।

चेत् । सुपुप्तस्य ह्लौकिकं देवदत्तादि नाम तेनापि संबोध्यमानः कदाचिन्न प्रतिपद्यते सुपुप्तस्तथा भोक्ताऽपि सन्प्राणो न प्रतिपद्यत इति चेत्, न । आत्मप्राणयोः सुप्तासुप्तत्वविशेषोपपत्तेः । सुपुप्तत्वात्प्राणग्रस्ततयोपरतकरण आत्मा स्वनाम प्रयुज्यमानमपि न प्रतिपद्यते । न तु तदसुप्तस्य प्राणस्य भोक्तृत्वं उपरतकरणत्वं संबोधनाग्रहणं वा युक्तम् ।

अप्रसिद्धनामभिः संबोधनमयुक्तमिति चेत् । सन्ति हि प्राणविषयाणि प्रसिद्धानि प्राणादिनामानि । तान्यपोह्याप्रसिद्धैर्बृहत्त्वादिनामभिः संबोधनमयुक्तं लौकिकन्याया-

---

गाद्य सुल्यतेत्यर्थः । प्रकारान्तरेण प्राणस्याभोक्तृत्वं वारयन्नाशङ्कते—स्वनामेति । अयुक्तं प्राणेतरस्य भोक्तृत्वमिति शेषः । तदेव विवृणोति—सुप्तस्येति । विशेषं दर्शयन्नुत्तरमाह—नाऽऽत्मेति । कार्यां भीष्टात्मनः सुप्तत्वविशेषप्रयुक्तं फलमाह—सुपुप्तत्वादिति । प्राणस्यापि संहृतकरणत्वात्स्वनामाग्रहणमित्याशङ्क्य तस्यासुप्तत्वकृतं कार्यं कथयति—न त्विति । न हि करणस्वामिनि व्याप्रियमाणे करणोपरमः संभवति तस्य चानुपरतकरणस्य स्वनामाग्रहणमयुक्तमित्यर्थः ।

"प्राणनामत्वेना"प्रसिद्धनामभि सबोधना"तदनुत्थानं नानात्मत्वादिति शङ्कते—अप्रसिद्धेति । "तदेव स्पष्टयति—सन्ति हीति । "प्रसिद्धमनूद्याप्रसिद्धं विधेयमिति लौकिको न्याय । अप्रसिद्धसंज्ञाभिः

---

ठीक नही है ।

क्योकि आत्मा अथवा चित को प्राणदेवता मे आत्माभिमान नही होता । (यहाँ शङ्का होती है—) अपने नाम का प्रयोग करने पर भी देखा जाता है कि बोध नही होता । इसलिए उपरोक्त कथन ठीक नही । सुपुप्त पुरुष का लोकव्यवहार मे देवदत्तादि नाम होता है, उसके द्वारा बुलाये जाने पर भी कभी कभी सोया हुआ पुरुष नही सुनता है । इसी प्रकार भोक्ता होते हुए भी प्राण को उसका बोध नही होता । (समाधान देते हैं—) तो ऐसा कहना ठीक नही है क्योकि आत्मा और प्राण मे सुप्त और असुप्त का भेद सभव है । सुप्त पुरुष का इन्द्रियसमुदाय प्राण मे विलीन होने के कारण उपरत हो जाता है । इसलिये उसे अपने नाम के प्रयुक्त किये जाने पर भी श्रवण नही होता । किन्तु असुप्त प्राण मे भोक्तृत्व मानने पर उनमे उपरतकरणत्व और सम्बोधन के न सुनने की सिद्धि नही हो सकती ।

(पुन शङ्का होती है—) किन्तु अप्रसिद्ध नामो से सम्बोधन करना तो ठीक नही है । प्राणविषयक प्रसिद्ध नाम तो प्राणादि हैं, उन्हे त्याग कर अप्रसिद्ध बृहन् आदि नामो से सम्बोधन करना उचित नही है क्योकि इससे लौकिक मार्ग का भी त्याग होता है, इसलिये भोक्ता होने पर भी प्राण को उसकी जानकारी न हुई । ऐसी शङ्का करना ठीक नही है क्योकि वह सम्बोधन देवता का निषेध करने के

---

१ प्रतिपद्यते—शृणोति । अथापि भोक्ता यथेति शेष । २ करणग्रामस्य प्राणविलीनतया । ३ गार्ग्यं । ४ सगृहीतचोद्यम् । ५ आत्मप्राणयो । ६ नत्वभोक्तृत्वादिति भाव । ७ फलम् । ८ सभवतीति । 'नामात्मा शेरेते यस्माद्राज्ञि स्वामिनि जाग्रतीति' वार्तिके ॥१३०॥ प्राणस्य प्राधान्यञ्च तत्रैवोक्तम्—"श्रोत्रादेर्गुणभूतत्वात्प्रधान प्रति सर्वदा । तस्मिञ्जाग्रति जागर्ति सुप्ते स्वपिति तद्वशात् ॥ नेन्द्रियाणा भवेत्स्वापो यदि प्राणप्रधानतेति" ॥१२९–१३०॥ गुणस्य प्रधानानुवर्तित्वादिति भाव । ९ प्राणस्य । १० प्राणवाचकत्वेन । ११ बृहन्नित्यादिशब्दैः । १२ प्राणेति यावत् । १३. सगृहीतचोद्यम् । १४ प्राणस्येद नामेत्येवम् ।

'पोहात् । तस्माद्भोक्तुरेव सतः प्राणस्याप्रतिपत्तिरिति चेन्न । देवताप्रत्याख्यानार्थत्वात् । 'केवलसंबोधनमात्राप्रतिपत्त्यैवासुप्तस्याऽऽध्यात्मिकस्य प्राणस्याभोक्तृत्वे सिद्धे यच्चन्द्रदेवताविषयैर्नामभिः सबोधन तच्चन्द्रदेवता प्राणोऽस्मिञ्छरीरे भोक्तेति गार्ग्यस्य 'विशेषप्रतिपपत्तिनिराकरणार्थम् । न हि 'तल्लौकिकनाम्ना सबोधने शक्य कर्तुम् ।

'प्राणप्रत्याख्यानेनैव 'प्राणग्रस्तत्वात्करणान्तराणां' प्रवृत्त्यनुपपत्तेर्भोक्तृत्वाशङ्कानुपपत्तिः । 'देवतान्तराभावाच्च । नन्वतिष्ठा इत्याद्यात्मन्वीत्यन्तेन ग्रन्थेन गुणवद्देवताभेदस्य 'दर्शितत्वादिति चेन्न । ''तस्य प्राण एवैकत्वाभ्युपगमात्सर्वश्रुतिष्वरनाभिनिदर्शनेन ।

संबोधनस्यायुक्तत्वे फलितमाह—तस्मादिति । चन्द्रदेवताऽस्मि देहे कर्त्री भोक्त्री चाऽऽत्मेति गार्ग्याभिप्रायनिषेधे देवतानामग्रहस्य तात्पर्यात्तद्ग्रहोऽयंवानिति परिहरति—न देवतेति । ''तदेव प्रपञ्चयति—केवलेति । प्राणादिनामभि. संबोधनेऽपि ''तन्निराकरण कर्तुं शक्यमित्याशङ्क्याऽऽह—न हीति । लौकिकनाम्नो देवताविषयत्वाभावादित्यर्थः ।

प्राणस्याभोक्तृत्वेऽपीन्द्रियाणां भोक्तृत्वमिति केचित्तान्प्रत्याह—प्राणेति । प्राणकरणचन्द्रदेवतानामभोक्तृत्वेऽपि देवतान्तरमत्र'' भोक्तृ स्यादित्याशङ्क्याऽऽह—देवान्तराभावाच्चेति । भोक्तृत्वाशङ्कानुपपत्तिरिति पूर्वेण संबन्धः । ''तत्रोपक्रमविरोधं शङ्कते—नन्विति । दर्शितत्वाद्देवतान्तराभावो नास्तीति शेषः । स्वसन्धो देवताभेदो नास्तीति समाधत्ते—न तस्येति । प्राणे देवताभेदस्यैक्ये युक्तिमाह

लिए था। केवल सम्बोधनमात्र की अप्रतिपत्ति के द्वारा ही असुप्त आध्यात्मिक प्राण का अभोक्तृत्व सिद्ध होने पर जो उसे चन्द्रमादेवताविषयक नामो से सम्बोधन किया है। वह गार्ग्य के इस विलक्षण अभिप्राय को खण्डन करने के लिए है कि इस शरीर मे चन्द्रमा देवता ही भोक्ता प्राण है। यह खण्डन प्राण इत्यादि लोकप्रसिद्ध नाम से सम्बोधन करने पर सभव नही है।

प्राण के निषेध से अन्य इन्द्रियो के भोक्तृत्व की आशङ्का नही हो सकती क्योकि सुपुप्त अवस्था मे प्राण के अधीन रहने के कारण उसकी (स्वतन्त्र) प्रवृत्ति सभव नही है। प्राण के अतिरिक्त और कोई देवता भी (इस शरीर मे) नही है। (देह मे देवतान्तर स्वीकार न करने पर उपक्रम-विरोध होता है) इस पर शङ्का करते हैं। किन्तु "अतिष्ठा सर्वेषां भूतानाम्" इति श्रुतिवाक्य से

१ त्यागात् । २ केवलेति—चन्द्रदेवतानाम व्यावृत्तप्राणादिनाम्ना यत्सबोधन यद्वाऽविवेचितप्रसिद्धाप्रसिद्धप्रतिपत्तिभिन्नेस्वनाम्ना यत्सबोधन तन्मात्रापरिज्ञानादेवेत्यर्थः । प्रतिपत्तिविषयचौरादिव्यावृत्त्यर्थं भात्रपदम् । ३ विलक्षणाभिप्रायेति यावत् । ४ प्राण इत्यादि लोकप्रसिद्धनाम्ना । च्छाकृत्यादिव्यावृत्तये च एवकार । अपूपलग्ने दण्डे ५ प्राणप्रत्याख्यानेनैवेति । तदुक्तम्—"दण्डापूपकनीत्यैव कारणानामभोक्तृता" ॥वा १३५॥ इति । गृह्यमाणे बलादपूपोऽपि गृह्यते तया नीत्या प्राणस्याऽऽत्मत्वनिरासे तद्ग्रस्ताना करणानामप्यनात्मताऽर्थिकीत्यर्थः । ६ प्राणाधीनत्वात् । ७ स्वतन्त्रप्रवृत्तिरिति यावत् । ८ देवतान्तरेति—न च प्राणातिरिक्ता देवताऽन्योपपद्यते । ९ दर्शितत्वादिति । तदुक्त वार्तिके—"प्राणे सर्वदेवतान्तर्भावस्याभिधानस्य मानत्वादिति भाव । 'ननु तद्व्यतिरेकेण प्राणादित्यादिरीरित । देवताविषयो भेद स कथ निनिवार्यते" ॥१३६॥ इति । १० देवताभेदस्य । ११ सगृहीतम् । १२ तत्—चन्द्रदेवताया आत्मत्वादि । १३ देहे । १४ देहे देवतान्तरानभ्युपगमे ।

सत्येन च्छन्नः 'प्राणो वा अमृतमिति च प्राणवाह्यस्यान्यस्यानभ्युपगमाद्धोक्तुः । 'एष उ ह्येवं सर्वे देवाः 'कतम एको देव इति प्राण इति 'च । सर्वदेवाना प्राण एवैकत्वोपपादनाच्च ।

तथा 'करणभेदेष्वनाशङ्का । 'देहभेदेष्विव स्मृतिज्ञानेच्छा'दिप्रतिसंधानानुपपत्तेः । न ह्यन्यदृष्टमन्यः स्मरति 'जानातीच्छति "प्रतिसंदधाति वा । "तस्मान्न करणभेदविषये भोक्तृत्वाशङ्का विज्ञान"मात्रविषया वा कदाचिदप्युपपद्यते ।

---

—आरभ्याभोति । न देवतान्तरस्य भोक्तृत्वं गार्ग्यस्य स्वपक्षविरोधादिति शेष । सर्वश्रुतिष्वित्युक्तताः सक्षेपतो दर्शयति—एष इति । "कति देवा याज्ञवल्क्येत्यादिना सक्षेपविस्तराभ्यां सर्वषा देवानां प्राणात्मन्येवैकत्वमुपपाद्यते । "अतो न देवताभेदोऽस्तीत्याह—सर्वदेवानामिति । प्राणात्पृथग्भूतस्य देवस्या"ऽऽत्मातिरेके "सत्यसत्त्वा"पत्तेश्च प्राणान्तर्भाव सर्वदेवताभेदस्येति वदत् चशब्द ।

"करणानामभोक्तृत्वे हेत्वन्तरमाह—तथेति । देवताभेदेष्विवेति यावत् । अनाशङ्का भोक्तृत्वस्येति शेष । "तत्रोदाहरणा"न्तरमाह—देहभेदेष्विवेति । "न हि हस्तादिषु प्रत्येकं भोक्तृत्व शङ्क्यते । तथा श्रोत्रनेत्रादिष्वपि न भोक्तृत्वाशङ्का युक्ता । "तेषु स्मृतिरुपज्ञानस्येच्छाया योऽह रूपमद्राक्ष—स शब्द शृणोमीत्यादिप्रतिसंधानस्य चायोगादित्यर्थं । अनुपपत्तिमेव स्फुटयति—"न हीति । क्षणिकविज्ञानस्य "निराश्रयस्य भोक्तृत्वाशङ्काऽपि प्रतिसधानासभवादेव प्रत्युक्तेत्याह—विज्ञानेति ।

---

प्रारम्भ कर "आत्मन्वी ह भवति" इत्यादि ग्रन्थपर्यन्त विशेष विशेष गुणो से युक्त देवता का भेद प्रदर्शित किये जाने के कारण उपरोक्त कथन ठीक नही । (सिद्धान्ती कहता है—) ऐसा कहना ठीक नही क्योकि सभी श्रुतिवाक्यो मे अर और नाभि के दृष्टान्त द्वारा उस देवताभेद का प्राण मे ही एकत्व स्वीकृत किया गया है । "(नामरूपात्मक विराटस्थूलदेह) सत्य से आच्छादित है,(सूत्रात्मा) प्राण ही अमृत है" इत्यादि श्रुतिवाक्यो से प्राण के अतिरिक्त कोई अन्य भोक्ता स्वीकृत नही किया गया, तथा "यही समस्त देवता है', 'वह एक देव कौन है ? प्राण है' इस श्रुतिवाक्य से भी (अग्नि की अपेक्षा वायु की प्रधानता होने से) प्राण मे ही समस्त देवताओ के एकत्व का सम्पादन किया गया है ।

---

१ नामरूपात्मकविराट्स्थूलदेहन । २ सूत्रम् । ३ बृ०उ० १४६ । ४ बृ०उ० ३९६ । ५ अग्न्याद्यपेक्षया वायो प्राधान्य सवर्गविद्याया प्रसिद्ध तथा च तदात्मक (वाय्वात्म) प्राणातिरेकेण नास्ति देवतेति चशब्दार्थ । ६ करणविशेषेषु । ७ देहावयवेषु हस्तादिष्विव । ८ आदिना धृति । ९ अनुव्यवस्यति । १० प्रतिसदधातीति—न ह्यन्यदृष्टेऽन्यस्तत्सपादनाय यतत इत्यपि द्रष्टव्यम् । ११ प्रतिसधानस्यासभवात् । १२ मात्रशब्दाऽधिष्ठान व्यावर्तयति । १३ बृ०उ० ३९१ । १४ प्राणाभेदोपपादनात् । १५ आत्मातिरेक इति—आत्मत्वे त्वस्मत्पक्षसिद्धिरिति भाव । १६ असत्त्वापत्तेरिति साधकमानाभावादिति भाव । १७ अनात्मत्वादिति भाव । १८ सिंहावलोकनन्यायेन । १९ करणानामभोक्तृत्वे । २० देवतोदाहरणादन्यत् । २१ करणाना प्रत्यक भोक्तृत्व तत्समुदायस्य वेति विकल्प्याऽऽद्य दूषयति—न हीत्यादिना । २२ करणेषु । २३ न हीति—प्रतीकानन्तरम् न द्वितीय । यथा समुदाय समुदायिभ्यो भेदाभेदाभ्यामयुक्त (अनिर्वाच्य ) तथा चेतनाद्भिन्नस्य करणग्रामस्य घटादिवज्जडत्वान्नभोक्तृत्व चिदन्यस्य च भोज्यत्वान्न भोक्तृत्वमुभयपक्षनिरासे साधारणी युक्तिद्रष्टव्येति शेषो द्रष्टव्य । २४ निरधिष्ठानस्य ।

ननु संघात एवास्तु भोक्ता किं व्यतिरिक्तकल्पनयेति । न, * आपेषणे विशेषदर्शनात् । यदि हि प्राणशरीरसंघातमात्रो भोक्ता स्यात्संघातमात्राविशेषात्तदाऽपिष्टस्या-

---

प्राणादीनामनात्मत्वमुक्त्वा स्थूलदेहस्य तद्वत्तु पूर्वपक्षयति—नन्विति । संघातो [1]'भूतचतुष्टयसमाहार: स्थूलो देह इति यावत् । गौरोऽहं पश्यामीत्यादिप्रत्यक्षेण [2]'तस्याऽऽत्मत्वदृष्टेरिति भावः । प्रमाणाभावादतिरिक्तकल्पना न युक्तेत्याह—किं व्यतिरिक्तेति । संघातस्याऽऽत्मत्वं दूषयति—नाऽऽपेषण इति । [3]'विशेषदर्शनं व्यतिरेकद्वारा विशदयति—यदि हीति । प्राणेन सहितं स्थूलं शरीरमेव संघातस्त-

---

इसके अतिरिक्त (सिंहावलोकन न्याय से) करणविशेष में भी भोक्तृत्व की आशङ्का नहीं हो सकती क्योंकि देहावयव हस्तादि के समान उनमें स्मृतिज्ञान, एवं इच्छा (कृति) आदि का प्रतिसन्धान होना सम्भव नहीं है। अन्यथा पुरुष के देखे हुए पदार्थ के विषय में कोई दूसरा पुरुष स्मरण, बोध, इच्छा अथवा प्रतिसंधान नहीं करता। इसलिए (प्रतिसंधानादि सम्भव न होने से) करणविशेष के विषय में अथवा विज्ञानमात्र के विषय में भोक्तृत्व की आशङ्का होनी कभी भी सम्भव नहीं है।

(इस पर पूर्वपक्षी शङ्का करता है—) अच्छा तो संघात को ही भोक्ता मान लिया जाय, उससे अतिरिक्त कल्पना करने की क्या आवश्यकता है? (सिद्धान्ती उत्तर देता है—) ऐसा कहना ठीक है, क्योंकि उसे हाथ से हिलाने पर विशेष अनुभव (जागरण) देखा जाता है। यदि प्राण और शरीर

---

१ देहात्मवादि (चार्वाक) मते आकाशस्यावरणाभावात्मत्वादाह—भूतचतुष्टयेति। २ रूपादौ तस्य ज्ञातृत्वदर्शनादिति पाठान्तरम्। ३ आपेषणप्रयुक्तेत्यादि।

---

* आपेषणे विशेषदर्शनादित्यादि तथा शब्दादिषट्सम्बन्धादिकृतश्चेत्यन्तभाष्यतात्पर्यसंग्राहकाणि वार्तिकानि प्रदर्श्यन्ते। तथाहि—'आपेषणे विशेषस्य दृष्टत्वाद्देहसंहतिः। न भोक्त्री सुखदुःखादिफलानां स्यात् कदाचन॥ यदि संघातमात्रस्य भोक्तृत्वमिह कल्प्यते। संघातस्याविशिष्टत्वान्नातिशीतिर्मवेत्तदा॥ ईषत्स्पृष्टमात्रस्य बलाद्वाऽऽपेषणात्तथा। देहादिभिन्नजातीयो भोक्ता यस्य च वादिनः॥ धर्मादिहेतुसंबन्धबहुत्वात्स्यात्समञ्जसम्। पेषणापेषणकृतवेदनाया भवद्भिदा॥ सुखदुःखादिहेतूनामुत्तमाधममध्यतः। तत्प्रबोधविशेषोऽस्य युक्त एव भवेत्तदा॥ १४८—१५२॥ इति। पेषणं पाणिना देहस्यप्रचालनमापेषणं तु तेन तस्य तीव्रचालनं पेषणापेषणयोः सतोरुत्थाने विशेषः। शीघ्रत्वविलम्बितत्वरूपोऽतिशयापरपर्यायः। देहस्यानात्मत्वे हेत्वन्तरमाहाऽऽपेषण इति। स्थूलदेहाख्या इह भूतचतुष्टयसंहतिरिति यावत्॥ आदिपदं तदवान्तरभेदसंग्रहार्थम्। उक्तं व्यतिरेकद्वारा व्यनक्ति—यदीति। विशेषस्तद्भोज्यः। संघातस्य भोक्तृत्वे तस्य पेषणापेषणयोरविशेषान्नोत्थाने विशेषः स्यान्न च तस्मिन्नपि ताभ्यां विशेषस्तद्भावेऽपि प्रागुत्थाने हेत्वदृष्टेर्न च पेषणजन्यविशेषस्यैवोत्थापकत्वं नियमेन प्रागुत्थानप्राप्तेरिति भावः॥ सदा संघातस्याविशिष्टत्वं स्पष्टयति—ईषदिति। यथा मृदुस्पर्शस्पृष्टमात्रस्य संघातस्याविशेषस्तथा बलादापेषणेऽपि तस्याविशेषात्प्रबोधे नातिशयः स्यादित्यर्थः। त्वत्पक्षेऽपि कथं पेषणापेषणयोरुत्थाने विशेष इत्याशङ्क्याऽऽह—देहादीति। आदिपदं तदवान्तरभेदसंग्रहार्थकम्। धर्मादिहेतूनामात्मसंबन्धस्य च बहुत्वात्तद्धेतुकमुत्थानादि मत्पक्षे युक्तमित्यर्थः। उत्थानादेः सामञ्जस्यमेव साधयति—पेषणेति॥ यथोक्तवेदनाया समुत्थानहेतोर्विशेषे हेतुमाह—सुखेति। सुखं दुःखं सबुद्धिरित्यादीनां समुत्थानहेतूनां हेतवो दृष्टादृष्टरूपा धर्मादयस्तत्तारतम्याद्वेदनाभिदेत्यर्थः। प्रागुक्तनीत्या प्रबोधहेतुविशेषे सतीति यावत्। तद्भेदे फलितमाह—तत्प्रबोधेति। संघातातिरिक्तमात्मानं तच्छब्दोऽधिकरोति—तदेति।

सिद्धम् ।

संहतत्वाच्च पारार्थ्योपपत्तिः प्राणस्य । गृहस्य स्तम्भादिवच्छरीरस्यान्तरुपष्टम्भकः प्राणः शरीरादिभिः संहत इत्यवोचाम । अरनेमिवच्च । नाभिस्थानीय एतस्मिन्सर्वमिति च । तस्माद्गृहादिवत्स्वावयवसमुदायजातीयव्यतिरिक्तार्थं संहन्यत इत्येवमवगच्छामः ।

स्तम्भकुड्यतृणकाष्ठादिगृहावयवाना स्वात्मजन्मोपचयापचयविनाशनामाकृतिकार्य-

---

देहादेरनात्मत्वमुक्त्वा प्राणस्यानात्मत्वे हेत्वन्तरमाह—संहतत्वाच्चेति । हेतु साधयति—गृहस्येति । यथा नेमिरराश्च मिथ संहन्यन्ते तथैव प्राणस्य संहतिरित्याह—अरनेमिवच्चेति । किं च प्राणे नाभिस्थानीये सर्वं समर्पितमिति श्रूयते तद्युक्त तस्य संहतत्वमित्याह—नाभीति । संहतत्वफलमाह—तस्मादिति ।

प्राणस्य गृहादिवत्पारार्थ्येऽपि संहतशेषित्वमेषितव्य गृहादेस्तथा दर्शनादित्याशङ्क्याऽऽह—, स्तम्भेति । स्वात्मना स्तम्भादीनां जन्म चोपचयश्चापचयश्च विनाशश्च नाम चाऽऽकृतिश्च कार्यं चेत्येते धर्मास्तन्निरपेक्षतया लब्धा सत्ता स्फुरण च येन स च तेषु स्तम्भादिषु विषयेषु द्रष्टा च श्रोता च मन्ता च विज्ञाता च तदर्थत्व तेषां तत्संघातस्य च दृष्ट्वा प्राणादीनामपि तथात्व भवितुमर्हतीति मन्यामह

---

होते हुए के समान देह से मानो कहीं से आकर उसे सुप्तादि अवस्था से विलक्षण बोध, चेष्टा एव आकृति विशेषादि से युक्त कर दिया । वह गार्ग्य के द्वारा उपदिष्ट ब्रह्मों से भिन्न है, ऐसा सिद्ध होता है ।

संहत होने के कारण भी प्राण की परार्थता सिद्ध हो जाती है । गृह के स्तम्भ आदि के समान शरीर के अन्दर वर्तमान होते हुए धारक प्राण शरीरादि से सम्मिलित है—ऐसे (द्वितीय अध्याय के उपक्रम में) हम पहले प्रतिपादित कर चुके हैं । तथा जिस प्रकार अरे और नेमि संहत है, उसी प्रकार देह और प्राण मिले हैं एव नाभिस्थानीय प्राण में सब इन्द्रियाँ समर्पित हैं (ऐसा छान्दोग्यश्रुति कहती है) इसलिए संहत होने के कारण वह गृहादि के समान अपने (स्तम्भादि) अवयव-समुदाय की जाति वाले पदार्थों से भिन्न आत्मा के लिए संहत हुआ है—ऐसा हम समझते हैं ।

गृह के स्तम्भ, दीवार, तृण एव काष्ठादि अवयवों के जन्म, वृद्धि, क्षय, विनाश, नाम, आकृति

---

१ अन्तर्वर्तमान सन् धारक । २ सम्मिलित । ३ द्वितीयाध्यायोपक्रमे । ४ संहतत्वात् । ५ स्वावयवेति—स्वस्य गृहादेरवयवस्तम्भादिस्तस्य समुदायोऽवयवी स्वयमेव गृहादिस्तत्सजातीयमन्यद्गृहादि-तद्व्यतिरिक्तस्यासंहतस्यार्थं भोग्य यथा गृहादि तथा प्राणोऽपि संहतत्वात्स्वासंहतस्य भोग्य इत्यर्थ । ६ स्तम्भेति । वार्तिके यथा— स्वात्मोपाधिसजातीयविविक्तफलरूपवत् । संहतत्वात्तथा प्राणोऽसंहता भोग-भोगवत् ॥ १६० ॥ इति । स्वात्मनो गृहादेरंश स्तम्भादिरंशी स्वयमेव गृहादि एभ्यो विविक्तस्यासंहतस्य भोग्य गृहादि तथा प्राणोऽपि संहतत्वात्स्वासंहतस्य भोग्य इत्यर्थ । ७ सिंहावलोकनन्यायेन । ८ चक्रनाभि-स्थानीये । ९ सर्वं समर्पितमिति श्रूयत इति—तथाहि 'प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राण सर्वं समर्पित' मित्यादि (छा उ ७ १५ १) । १० छां० उ० ७।१५ । ११ तस्मात् । १२ आत्मार्थत्वेऽपि । १३ संघात । १४ संहतस्तम्भादिशेषित्वदर्शनात् । १५ स्व गृह तदवयवतया तद्रूपाणाम् । १६ तद्धर्मेषु चेत्यपि बोध्यम् । १७ स्तम्भादिसंघातस्य गृहस्य ।

धर्मनिरपेक्षलब्धसत्तादितद्विषयद्रष्टृश्रोतृमन्तृविज्ञात्रर्थत्वं दृष्ट्वा मन्यामहे 'तत्संघातस्य च तथा 'प्राणाद्यवयवानां तत्संघातस्य च स्वात्मजन्मोपचयापचयविनाशनामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादितद्विषयद्रष्टृश्रोतृमन्तृविज्ञात्रर्थत्वं भवितुमर्हतीति ।

'देवताचेतनावत्त्वे 'समत्वाद्गुणभावानुपगम इति चेत् । प्राणस्य विशिष्टैर्नामभिरामन्त्रणदर्शनाच्चेतनावत्त्वमभ्युपगतम् । चेतनावत्त्वे च पारार्थ्योपगमः समत्वादनुपपन्न इति चेन्न । 'निरुपाधिकस्य केवलस्य विजिज्ञापयिषितत्वात् ।

'क्रियाकारकफलात्मकता ह्यात्मनो नामरूपोपाधिजनिताऽविद्याध्यारोपिता । 'तन्निमित्तो लोकस्य क्रियाकारकफलाभिमानलक्षणः संसारः स निरुपाधिकात्मस्वरूपविद्यया

इति संबन्धः । प्राणादिः स्वातिरिक्तद्रष्टृशेषः संहतत्वाद्गृहादिवदित्यनुमानात्सत्ताया प्रतीतौ च प्राणादिविक्रियानपेक्षतया सिद्धो द्रष्टा निर्विकारो युक्तस्तस्य विकारवत्त्वे हेत्वभावादिति भावः ।

प्राणदेवतापारार्थ्यानुमानं व्याप्त्यन्तरविरुद्धमिति शङ्कते—देवतेति । प्राणदेवतायाश्चेतनत्वमेव कथमभ्युपगतं तत्राऽऽह—प्राणस्येति । "तथाऽपि प्रकृतेऽनुमाने कथं व्याप्त्यन्तरविरोधस्तत्राऽऽह—चेतनावत्त्वे चेति । यो येन समः स तच्छेषो न भवति । यथा दीपो दीपान्तरेण तुल्यो न तच्छेष इति व्याप्तिविरोधः स्यादित्यर्थः । नायं विरोधः समाधातव्यः "शेषशेषिभावस्या"त्र "प्रतिपाद्यत्वादिति परिहरति—न निरुपाधिकस्येति ।

"तदेव स्फुटयति—क्रियेत्यादिना । उपनिषदारम्भो निरुपाधिकं स्वरूपं ज्ञापयितुमित्यत्र

और कार्यरूप से निरपेक्ष रहकर जिसने सत्ता उपलब्ध की है, वही इन विषयों (स्तम्भादि और उनके धर्मों) का द्रष्टा, श्रोता, मन्ता और विज्ञाता है । तथा संघातरूप घर के स्तम्भादि अवयवों की स्थिति को देखकर हम मानते हैं कि प्राणादिसंघात अवयवों का और उनके संघात को भी उसी के लिये होना चाहिये—जिसने इनके जन्म, वृद्धि, क्षय, विनाश, नाम, आकृति और कार्यरूप धर्म से निरपेक्ष रहकर सत्तादि उपलब्ध की हो और जो इन प्राणादि विषयों का द्रष्टा, श्रोता, मन्ता और विज्ञाता भी हो ।

(पूर्वपक्षी शङ्का करता है—) प्राणदेवता के चेतन होने के कारण आत्मा के तुल्य होने के कारण उसका गौणत्व होना स्वीकृत नहीं किया जा सकता । प्राण का विशिष्ट नामों द्वारा आमन्त्रण देखे जाने से उसका चेतन होना स्वीकृत किया गया है । इसलिए चेतन होने के कारण आत्मा के तुल्य ही होने से उसको परार्थ मानना उचित नहीं है । (सिद्धान्ती उक्त शङ्का का समाधान करता है—) ऐसा कहना ठीक नहीं है । क्योंकि यहाँ केवल निरुपधिक अशेषविशेषशून्य आत्मा का ज्ञान कराना इष्ट है ।

' आत्मा की क्रियाश्रयता, कारकरूपता, फलभोक्तृता तो नाम और रूप के निमित्त होने के कारण

१ तेषां स्तम्भाद्यवयवानां संघातरूपगृहस्य । २ संघातावयवानां प्राणादीनामित्यर्थः । ३ प्राणदेवतायाश्चेतनत्वे । ४ आत्मतुल्यत्वात् । ५ शेषशेषित्वाद्यशेषविशेषशून्यस्येत्यर्थः । ६ क्रियाश्रयता कारकरूपता फलभोक्तृतेत्यर्थः । ७ निमित्तेति यावत् । ८ अविद्यापादानित्ता । ९ अविद्याप्रयुक्त । १० प्राणदेवतायाश्चेतनत्वेऽपि । ११ गुणप्रधानभावस्य । १२ अत्र—अस्यामुपनिषदि । १३ तात्पर्यविषयत्वात् । १४. यथोक्तात्मनो विजिज्ञापयिषितत्वमेव ।

निवर्तयितव्य इति तत्स्वरूपविजिज्ञापयिषयोपनिषदारम्भः । ब्रह्म ते ब्रवाणि नैतावता विदितं भवतीति चोपक्रम्यैतावदरे खल्वमृतत्वमिति चोपसंहारात् । न चातोऽन्यदन्तराले विवक्षितमुक्तं वाऽस्ति । तस्मादनवसरः समत्वाद्गुणभावानुपगम इति चोद्यस्य ।

विशेषवतो हि सोपाधिकस्य सव्यवहारार्थो गुणगुणिभावो न विपरीतस्य । निरुपाख्यो हि विजिज्ञापयिषित सर्वस्यामुपनिषदि । स एष नेति नेतीत्युपसंहारात् । तस्मादादित्यादिब्रह्मण एतेभ्योऽविज्ञानमयेभ्यो विलक्षणोऽन्योऽस्ति विज्ञानमय इत्येतत्सिद्धम् ॥ १५ ॥

गमकमाह—ब्रह्मेति । "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चेत्यादिदर्शनादस्यामुपनिषदि सोपाधिकमपि ब्रह्म विवक्षितमित्याशङ्कयाऽऽह—न चेति । "द्वित्ववादस्य कल्पितविषयत्वान्नेति नेतीति" निर्विशेषवस्तुसमर्पणादतोऽन्यदातमिति' चोक्तेरत्र निरुपाधिकमेव ब्रह्म प्रतिपाद्यमिति भाव । शेषशेषिभावस्या"प्रतिपाद्यत्वे फलितमाह—तस्मादिति ।

किमर्थं "तर्हि शेषशेषिभावस्तत्र" तत्रोक्तस्तत्राऽऽह—विशषवतो हीति । सोपाधिकस्य शेषशेषिभावो विवक्षितस्तत्र च "स्वामिभृत्यन्यायेन विशेषसभवादसिद्ध समत्वमित्यर्थं । न विपरोतस्य निरुपाधिकस्य शेषशेषित्वमस्तोत्यत्र हेतुमाह—निरुपाख्यो हीति । शेषशेषित्वाद्यशेषविशेषशून्य इत्यर्थं । पाणिपेषवाक्यविचारार्थं" सक्षिप्योपसहरति—आदित्यादीति ॥१५॥

अविद्या की उपादानिका है। उसके अविद्या से प्रयुक्त होने के कारण पुरुष को क्रिया, कारक एव फलाभिमानरूप ससार की प्राप्ति हुई है। उसे अशेषविशेषशून्य आत्मस्वरूप के ज्ञान से निवृत्त करना है। इसलिये उसके स्वरूप का ज्ञान कराने की इच्छा से ही इस उपनिषत् का आरम्भ हुआ है। क्योंकि "मैं तुम्हे ब्रह्म का उपदेश करूँ 'इतना मात्र जानने से ब्रह्म का ज्ञान नही होता" इस प्रकार उपक्रम करके 'अरे ! निश्चय ही इतना मात्र अमृतत्व है' इस प्रकार उपसहार किया गया है। बीच मे भी इस निरुपाधिक स्वरूप से भिन्न कोई और तात्पर्य का विषय व्याख्याता द्वारा नही बतलाया गया। इसलिये (शेषशेषिभाव के प्रतिपाद्य न होने से) 'तुल्य होने के कारण इसका गौणस्वभाव स्वीकृत नही किया जा सकता'—ऐसा कहना नही बनता।

विशेषवान से सोपाधिक का ही कर्तृत्वादि व्यवहार के लिए शेषशेषिभाव होता है। इससे विपरीत (निरुपाधिक) का नही। और समस्त उपनिषदो मे निरुपाधिक ब्रह्म का ज्ञान कराना इष्ट

१ अमृतत्वसाधन ज्ञानम्। २ बृ० उ० ४।५।१५। ३ चतुर्थाध्याये। ४ निरुपाधिकस्वरूपात्। ५ मध्ये। ६ तात्पर्यविषयम्। ७ केनापि व्याख्यात्रा तात्पर्यविषयतया नोक्तमित्यर्थ। ८ अत्र शेषशेषिभावस्याप्रतिपाद्यत्वात्। ९ कर्तृत्वादिव्यवहारार्थ। १० शेषशेषिभाव। ११ निरुपाधिकस्य। १२ निरुपाधिक। १३ बृ० उ० ४।४।२२। १४ प्रागुक्तश्रुतिस्मृतियुक्तिवशात्। १५ बुद्धिप्राय। १६ बृ० उ० २।३।१। १७ सोपाधिकब्रह्मकथनस्य। १८ बृ० उ० २।३।६। १९ बृ० उ० ३।४।२। २० तात्पर्याविषयत्वे। २१ तदविवक्षितत्व। २२ प्रघट्टके। २३ द्वयोश्चेतनत्वे तुल्येऽपि स्वामिभृत्ययोर्यथा न साम्यं तथा प्राणदेवताऽऽत्मनोरित्यर्थ। २४ विचारसिद्धमर्थम्।

**स होवाचाजातशत्रुर्यत्रैष[1] एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः[2]क्वैष तदाऽभूत्कुत[3] एतदागादिति तदु ह न मेने गार्ग्यः ॥१६॥**

(इस प्रकार देह से भिन्न आत्मा के अस्तित्व का प्रतिपादन करके गार्ग्य से) उस अजातशत्रु ने कहा—हाथ से दबाकर जगाने से पूर्व जब यह विज्ञानमय पुरुष सोया हुआ था, उस समय वह कहाँ था और यह कहाँ से आया ? इस प्रश्न का उत्तर गार्ग्य न जान सका और न ही बतला सका ॥१६॥

---

स एवमजातशत्रु[4]र्व्यतिरिक्तात्मास्तित्वं प्रतिपाद्य गार्ग्यमुवाच । यत्र यस्मिन्काल एष विज्ञानमयः पुरुष एतत्स्वप्नं सुप्तोऽभूत्प्राक्पाणिपेषप्रतिबोधात् । विज्ञानं विज्ञायतेऽनेनेत्यन्तःकरणं बुद्धिरुच्यते तन्मय[5]स्तत्प्रायो विज्ञानमयः । किं पुनस्तत्प्रायत्वम् । [6]तस्मिन्नु-

---

वृत्तमनूद्यानन्तरग्रन्थमवतार्य व्याचष्टे—स एवमित्यादिना । [7]एतत्स्वपनं यथा भवति तथेति यावत् । यत्रेत्युक्तं कालं विशिनष्टि—प्रागिति । तदा क्वाभूदिति सम्बन्धः । विज्ञानमय इत्यत्र विज्ञानं परं ब्रह्म तद्विकारो जीवस्तेन विकारार्थे मयडिति केचित्तान्निराकरोति—विज्ञानमिति । अन्तःकरणप्रायत्वमात्मनो न प्रकल्पते तस्यासङ्गस्य [8]तेनासम्बन्धादित्याक्षिपति—किं पुनरिति । असङ्गस्याप्या[9]विद्यं

---

है। क्योंकि 'वह यह कार्य नहीं है, कारणरूप नहीं है" ऐसा श्रुतिमन्त्रों द्वारा उसका उपसंहार किया गया है'। इसलिये (पूर्वोक्त श्रुति, स्मृति और युक्ति के कारण) यह सिद्ध हो जाता है कि इन अविज्ञानमय आदित्य आदि ब्रह्म से विज्ञानमय (बुद्धिप्राय) भिन्न और विलक्षण है ॥ १५ ॥

उस अजातशत्रु ने इस प्रकार (देह इन्द्रिय मन व बुद्धि से) व्यतिरिक्त आत्मा का अस्तित्व प्रतिपादन करके गार्ग्य से कहा— 'यत्र' अर्थात् जिस समय यह विज्ञानमय पुरुष हाथ से हिलाने पर जागने से पूर्व सोया हुआ था जिससे विशेषरूप से जाना जाता है, उस अन्तःकरण या बुद्धि को

---

१ यद्ययमात्मा स्वापे स्थितोऽन्यत्राभूत् (स्वरूपात्) यदि वाऽऽगतो ततोऽन्यस्मादागतस्तदा क्रियाकारकफलव्यवहारो वास्तव स्यात् । स्थित्यावागतो च स्वयमेवावधिर्नान्यश्चेत्तदा भ्रान्तोऽयं व्यवहारः स्यादेकत्र तदनुपपत्तेरित्यभिप्रायेण प्रश्नाविति द्रष्टव्यम् । क्रिया आगमनम् । कारकं तत्कर्ता । फलं जागरस्थित्यादि । अवधिशब्दोऽधिकरणापादानोभयपरो द्रष्टव्यः । २ कस्मिन् स्थाने । ३ कीदृग्विधात्स्वरूपात् प्रच्युतः सन् । ४ व्यतिरिक्तेति — देहेन्द्रियमनोधीभ्यो विविच्याऽऽत्मानमेकलम् । ओंकार दर्शयित्वाथ राजा गार्ग्यमपृच्छत' ॥ वा० १८३ ॥ विवेकान्तरं वक्ष्यमाणप्रश्नस्यावकाशं दर्शयितुमथेत्युक्तम् । ५ तत्प्रचुरस्तत्प्रधान इति यावत् । प्राचुर्ये मयट् । ६ अन्तःकरणे बुद्धौ । ७ एतत्स्वपनमिति—विप्रकृष्टस्वपनव्यावृत्तये एतदिति विशेषणम् । एतत्प्रकृतस्वपनाभिन्नस्वपनविशिष्टो यथा भवति तथेत्यर्थः । ८ विकारत्ववदिति द्रष्टव्यम् । ९ अन्तःकरणेन । १० आविद्यमिति । वार्तिके यथा—'स्वाभासवदविद्योत्थबुद्ध्यादिव्याप्तिविभ्रमात् । तदात्मत्वाभिमानित्वाद्विज्ञानमयतात्मन' ॥ १८७ ॥ इति । प्रत्यगाभासवती याऽविद्या तदुत्थबुद्ध्यादिव्याप्तिकृतं भ्रममेव व्याकरोति—तदात्मत्वेति । भ्रान्तिफलमाह—विज्ञानेति ॥

पलभ्यत्वं तेन चोपलभ्यत्वमुपलब्धृत्वं च। कथं पुनर्मयटोऽनेकार्थत्वे प्रायार्थतैवावगम्यते। 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय इत्येवमादौ प्रायार्थ एव प्रयोगदर्शनात्परविज्ञानविकारत्वस्याप्रसिद्धत्वाद्य एष विज्ञानमय इति च प्रसिद्धवदनुवादादवयवोपमार्थयोश्चाप्यासंभवात्पारिशेष्यात्प्रायार्थतैव। 'तस्मात्सकल्पविकल्पाद्यात्मकमन्तःकरणं' 'तन्मय इत्येतत्।' 'पुरुषः पुरि शयनात्।

बुद्ध्यादिस्वरूपमुपेत्य परिहरति—तस्मिन्निति। 'तत्साक्षित्वाच्च तत्प्रायत्वमित्याह—उपलब्धृत्व चेति। 'नियामकाभाव शङ्कित्वा परिहरति—कथमित्यादिना। 'एकस्मिन्नेव वाक्ये पृथिवीमय इत्यादौ 'प्रायार्थत्वोपलम्भाद्विज्ञानमय इत्यत्रापि तदर्थत्वमेव मयटो निश्चितमित्युक्तमिदानीं जीवस्य परमात्मरूपविज्ञानविकारत्वस्य श्रुतिस्मृत्योरप्रसिद्धत्वाच्च प्रायार्थत्वमेवेत्याह—परेति। अप्रसिद्धमपि विज्ञानविकारत्व "श्रुतिवशाद्विष्यतामित्याशङ्क्याऽऽह—य एष इति। य एष विज्ञानमय इत्यत्र विज्ञानमयस्यैव इति "प्रसिद्धवदनुवादादप्रसिद्धविज्ञानविकारत्व "सर्वनामश्रुतिविरुद्धमित्यर्थः। जीवो ब्रह्मावयवस्तत्सदृशो वा तदर्थो मयडित्याशङ्क्याऽऽह—अवयवेति। ब्रह्मणो निरवयवत्वश्रुतेस्तस्यैव जीवरूपेण प्रवेशश्रवणाच्च प्रकृते वाक्ये मयटोऽवयवाद्यर्थयोगा"न्निर्विषयत्वासंभवाच्च पारिशेष्यात्पूर्वोक्ता प्रायार्थतैव तस्य प्रत्येतव्येत्यर्थः। विज्ञानमयपदार्थमुपसहरति—तस्मादिति।

विज्ञान कहते हैं। जो बुद्धिमय या बुद्धिप्राय हो, वह विज्ञानमय है। किन्तु आत्मा की विज्ञानमयता क्या है? जो उस अन्तःकरण या बुद्धि मे प्राप्त किया जा सकता है तथा जो उपलब्धा है, उसे विज्ञानमय कहते है। किन्तु 'मयट' प्रत्यय के अनेक अर्थों मे प्रयुक्त होने पर यहाँ (प्रचुर या प्रधानरूप) प्राय अर्थ कैसे समझा जाता है? "वह यह आत्मा है—ब्रह्म विज्ञानमय है।" इत्यादि श्रुतिवाक्यो में भी 'प्राय' अर्थ में ही इसका प्रयोग देखा जाने से परब्रह्मरूप विज्ञान का विकार अर्थ प्रसिद्ध न होने से "जो यह विज्ञानमय है" इत्यादि श्रुतिवाक्यो मे "यह" इस प्रकार विज्ञानमय का प्रसिद्धवत अनुवाद करने से तथा (मयट् प्रत्यय का) अवयव और उपमारूप अर्थ सम्भव होने से परिशेषत इसका 'प्राय' अर्थ ही सिद्ध होता है। इसलिए सकल्प-विकल्पादिरूप अन्तःकरण विज्ञानप्रधान आत्मा है—यह

१ बृ० उ० ४।४।५। २ विज्ञानशब्दस्य करणव्युत्पन्नत्वात् मयटोऽर्थान्तरासभवाच्च। ३ विज्ञानम्। ४ तत्प्रधान इति यावत्। ५ पुरुष पुरि शयनादिति। वार्तिकाचार्यस्तु—'अनात्मनो यतोऽप्यात्मकल्पितत्वादकल्पित। पूरय पुरुष प्रत्यक् पादीन् स्वात्मा यथा॥ व्युत्पत्तिरियमेवात्र तात्पर्यस्य समीक्षणात्। ... वा इतिह्युपक्रम्य नैनेनेत्यादिनिर्णयात् ॥ १६२-१६३॥ इत्याहु। अत्र स वा अयं पुरुष सर्वासु पूर्ष्वित्युपक्रम्य पुरुष नैनेन किंचनानावृतमित्याद्युपसहारात्तत्पूर्णत्व निर्णीयत इति वाक्यशेषेणात्रापि तथा। सदिग्धस्य वाक्यशेषेण निर्णयो भवतीति हि शब्दाथ। ६ बुद्ध्यादि। ७ मयट प्रायार्थकत्वे। ८ एकस्मिन्निति—'विज्ञानमय इत्युक्त्वा पृथिव्यादिमयश्रुतित। षड्विकारनिषेधाच्च प्रायार्थत्व समञ्जसम्" ॥ वा० १६१॥ न हि पृथिव्यादिविकारत्व प्रतीतोऽभ्युपगतम्। तथाच समभिव्याहाराद्विज्ञानमयत्वमपि न विकारत्वमित्यर्थ। ९ प्रायार्थत्वोपलम्भादिति—न हि पृथिव्यादिविकारत्वमङ्गीकृत सभवति च तथाच समभिव्याहाराद्विज्ञानमय इत्यत्रापि प्रायार्थत्वमेव मयट इत्यर्थ॥ १० प्रकृतश्रुतीत्यर्थ। ११ प्रसिद्धस्यानुवादोऽप्रसिद्धस्य भवत्यपूर्वम्। १२ एष इति सर्वनामश्रुति। १३ निरर्थकत्वासभवात्।

क्वैष तदाऽभूदिति प्रश्नः 'स्वभावविजिज्ञापयिषया। प्राक्प्रतिबोधा'त्क्रियाकारकफलविपरीतस्वभाव आत्मेति 'कार्याभावेन दिदर्शयिषितम्'। न हि प्राक्प्रतिबोधात्कर्मादि'कार्यं सुखादि किंचन' गृह्यते। तस्मादकर्मप्रयुक्त'त्वात्तथा'स्वाभाव्यमेवाऽऽत्मनोऽवगम्यते यस्मिन्स्वाभाव्येऽभूत्। यतश्च स्वाभाव्यात्प्रच्युतः संसारी 'स्वभावविलक्षण 'इत्येतद्विवक्षया पृच्छति गार्ग्यं "प्रतिभानरहितं "बुद्धिव्युत्पादनाय। क्वैष तदाऽभूत्कुत एतदागादित्येत"दुभयं गार्ग्येणैव प्रष्टव्यमासीत्तथाऽपि गार्ग्येण न पृष्टमिति' नोदास्तेऽजातशत्रुर्बोधयितव्य एवेति प्रवर्तते। ज्ञपयिष्याम्येवेति प्रतिज्ञातत्वात्"। एवमसौ "व्युत्पाद्यमानोऽपि गार्ग्यो यत्रैष

यत्रेत्यादि "व्याख्याय वाक्यशेषमवतार्य तात्पर्यमाह—क्वैष इति। स्वरूपज्ञापनार्थं प्रश्नप्रवृत्तिरित्येतत्प्रकटयति—प्रागिति। कार्याभावेनेत्युक्तं व्यनक्ति—न हीति। तस्मादित्यस्यार्थमाह—"अकर्मप्रयुक्तत्वादिति। किं तथास्वाभाव्यमिति तत्राह—यस्मिन्निति। द्वितीयप्रश्नार्थं संक्षिपति—यतश्चेति। तथास्वाभाव्यमेवेति" सम्बन्धः। एतदित्यधिकरणमपादानं च गृह्यते। किमिति तं प्रत्युभयं पृच्छ्यते स्वकीया प्रतिज्ञा निर्वोढुमित्यभिप्रेत्याऽऽह—बुद्धीति। ननु शिष्यत्वाद्गार्ग्येणैव प्रष्टव्यं स चेदज्ञत्वान्न पृच्छति तर्हि राज्ञस्तस्मिन्नौदासीन्यमेव युक्तं तत्राऽऽह—इत्येतदुभयमिति। तद्धु हेत्यादि व्याकरोति—एवमिति। एतदागमनं यथा भवति तथेति यावत्।

इसका भावार्थ है। (शरीररूप) पुरी में शयन करने के कारण 'पुरुष' है।

'उस समय वह कहाँ था'? यह प्रश्न आत्मा का स्वाभाविकस्वरूप बोधन कराने की इच्छा से है। जागने से पूर्व आत्मा कूटस्थ अद्वैत चैतन्य स्वभाव वाला है। यहाँ उसमे कर्मादि के कार्यसुखादि अभाव से दिखाना अभीष्ट है, क्योंकि उठने से पहले कर्मादि का कार्य (अज्ञातस्वरूप सुख का कार्य न होने से) सुखादि कुछ भी ग्रहण नहीं होता। अत (स्वाभाविकस्वरूप से) अकर्म द्वारा प्रयुक्त आत्मा की क्रियाकारकफल-विपरीतस्वरूपता सिद्ध होती है। जिस स्वरूप मे यह था और जिस स्वभाव से च्युत होकर यह संसारी और स्वाभाविकस्वरूप से विलक्षण है, यह बताने की इच्छा से उक्त उभयविषयकबोधहीन गार्ग्य से बुद्धि के आधान के लिए राजा अजातशत्रु पूछता है। उस समय यह कहाँ था और कहाँ से आया है? ये दोनो (अधिकरण और अपादान) प्रश्न गार्ग्य को ही पूछने चाहिये थे, परन्तु गार्ग्य ने इन्हें नहीं पूछा। इसमें अजातशत्रु ने उपेक्षा नहीं की कि इसे बताना ही है। ऐसा निर्णय करके वह (उपदेश करने मे) प्रवृत्त हो गया, क्योंकि (इसे) "बोध कराऊँगा ही' ऐसी उसने प्रतिज्ञा

१ आत्मनः स्वाभाविकस्वरूपबोधनेच्छया। २ कूटस्थाद्वैतचैतन्यस्वरूप। ३ कर्मादिकार्यसुखाद्यभावेन। ४ इत्यन्तं कर्मात्र। ५ अज्ञातस्वरूपसुखस्याकार्यत्वात्। ६ स्वाभाविकस्वरूपस्य। ७ क्रियाकारकफलविपरीतस्वरूपत्वमेव। ८ स्वाभाविकस्वरूपविलक्षण। ९ इत्येतदिति—विज्ञानमयस्य स्वापे सर्वेशनाधिकरणं तस्य जागरे प्रत्यागतावपादानं च वक्तुमिच्छया तथा स्वाभाव्यमेव पृच्छतीत्यर्थः। १०. उक्तोभयविषयकबोधहीनम्। ११ उक्तोभयविषयकबुद्ध्याधानस्य। १२ अधिकरणमपादानं च। १३ हेतो। १४. न च सत्पुरुषैः प्रतिज्ञा हेया। १५ बोध्यमान। १६ यत्रेत्यादिपुरुष इत्यन्तवाक्यस्य पदार्थान्प्रदर्श्येत्यर्थः। १७ कर्मादिहेत्वप्रयोज्यत्वात् निर्निमित्तत्वादिति यावत्। १८ इति कर्मणः पृच्छतिक्रियया संबन्धः।

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि

उस अजातशत्रु ने कहा—यह जो विज्ञानमय पुरुष है, जिस समय यह सोया हुआ था, उस समय अन्तःकरण उपाधि में अभिव्यक्त आभासरूप विज्ञान के द्वारा इन वागादिप्राणों के विषय विज्ञान को ग्रहण कर, यह जो हृदय में आकाश है, उसमें सोता है। जिस समय यह इनको ग्रहण कर लेता है अर्थात् शरीर और इन्द्रियों की अध्यक्षता छोड़ देता है। उस समय यह पुरुष 'स्वपिति'

---

आत्माऽभूत्प्रायप्रतिबोधाद्यतश्चैतदागमनमागात्तदुभयं न व्युत्पेदे वक्तुं वा प्रष्टुं वा गार्ग्यो ह न मेने न ज्ञातवान् ॥ १६ ॥

स होवाचाजातशत्रुर्विवक्षितार्थसमर्पणाय। यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्कुत एतदागादिति यदपृच्छाम तच्छृणूच्यमानं यत्रैष एतत्सुप्तो-

---

'तत्र क्रियापदयोर्यथाक्रमं वक्तुं प्रष्टुं वेत्याभ्यां सबन्धः ॥१६॥

कूटस्थविवेकरसोऽयमात्मा तत्र क्रियाकारकफलव्यवहारो वस्तुतो नास्तीति विवक्षितोऽर्थस्तस्य प्रकटीकरणार्थं प्रस्तुतं प्रश्नद्वयमनुवदति—यत्रेति। उपाधिरन्तःकरणं तस्य स्वभावस्तदुपादानमज्ञानं तेन जनितमन्तःकरणगतमभिव्यक्तं विशेषविज्ञानं चैतन्याभासलक्षणं तेन करणेनेत्यर्थः।

---

की थी। इस प्रकार बोधित किये जाने पर जहाँ यह आत्मा जागने से पहले था और जहाँ से यह आया है' इन दोनों बातों को गार्ग्य न समझ सका इन्हें कहने और पूछने का उसे ज्ञान न हुआ॥ १६॥

उस अजातशत्रु ने विवक्षित अर्थ को प्रकट करने के लिए कहा। यह जो विज्ञानमय पुरुष है, जिस समय यह सोया हुआ था, उस समय यह कहाँ था कहाँ से आया?—इस प्रकार जो हमने पूछा था उसका उत्तर देते हैं—सुनो। जिस समय वह सुप्त था उस समय (अन्तःकरणस्वरूप) उपाधि के स्वभाव से जनित विज्ञान यानी अन्तःकरणस्थ अभिव्यक्ति-विशेषविज्ञान से (चैतन्याभास लक्षणरूप करण द्वारा) वागादि प्राणों के विज्ञान को अपने अपने विषयों में प्रकाशनसामर्थ्य को ग्रहण कर 'एषोऽन्तर्हृदये' अर्थात् यह जो हृदय के मध्य में आकाश है, जो यह आकाशशब्द से अपना प्रत्यगात्मा

---

१ यत्र काले सुप्तोऽभूत् विशेषविज्ञानरहितोऽभूत् स्वनामामन्त्रणध्वनिमपि नाश्रौषीदिति यावत्। २ तत् तदा। ३ एषाम्—प्रत्यगात्मचिदाभासकरणानां मध्ये वागादिप्राणानां स्वविषयप्रकाशनसामर्थ्यं विज्ञानेन चैतन्याभासलक्षणेन आदाय गृहीत्वेति योजना। ४ य वेदान्तप्रसिद्ध। एष विद्वदनुभवसिद्ध। ५ य एष इति—स्वप्रकाशतत्पदार्थो यच्छब्दार्थः स एव प्रत्यग्भूत एतच्छब्दार्थः। ६ एतदिति—विप्रकृष्टभूतभाव्यनुपस्थितागमनव्यावृत्तये प्रकृतोपस्थितसमीपतरवर्त्यागमनोपस्थापकमेतदिति विशेषणं तथाच प्रकृतागमनाभिन्नागमनं कृतवानित्यर्थः। ७ तच्छृणूच्यमानमिति— पृष्टेनापि न विज्ञातं भवता तदिदं मया। उच्यमानं यथा तत्त्वं सम्यक्तत्त्व श्रोतुमर्हसि ॥ वा २१३॥ इत्यर्थः। ८ व्याख्येयभाष्य। ९ यथोक्तात्मनि। १० पूर्ववाक्य।

यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव
प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतꣳ श्रोत्रं
गृहीतं मनः ॥१७॥

नाम वाला कहा जाता है। उस समय प्राण गृहीत रहता है, वाक् निगृहीत रहता है, चक्षु निगृहीत रहता है, श्रोत्र निगृहीत रहता है और मन भी निगृहीत हो जाता है अर्थात् अन्तःकरण और इन्द्रियों के उपसंहार हो जाने पर आत्मा अपने स्वरूप में स्थित रहता है ॥१७॥

ऽभूत्तत्वा तस्मिन्काल एषां वागादीनां प्राणानां विज्ञानेनान्तःकरणगताभिव्यक्तिविशेष-विज्ञानेनोपाधिस्वभावजनितेनाऽऽदाय विज्ञानं ॐवागादीनां स्वस्वविषयगतसामर्थ्यं

वागादीनां स्वस्वविषयगतं प्रतिनियतं प्रकाशनसामर्थ्यं विज्ञानमित्यर्थः। य एषोऽन्तरिति प्रतीकमादाय

ही कहा गया है; 'तस्मिन्' अर्थात् उस स्वाभाविक असांसारिक स्वात्मा आकाश में ही सोता है, (उक्त विशेषणों से रहित) केवल भूताकाश में नहीं सोता। इस का अन्य श्रुतियाँ भी समर्थन करती

ॐवागादीनां स्वस्वविषयगतसामर्थ्यमिति। य एष विज्ञानमय पुरुषस्तदया प्राणानां विज्ञानेन विज्ञानमादायेत्या-दिवाक्यस्य जीवश्चिदाभासेन करणेनेन्द्रियाणामर्थग्रहणसामर्थ्यं संहृत्याकाशेऽज्ञाते ब्रह्मणि शेते तिष्ठतीत्यर्थो भगवत्पादैरुक्तः। वार्तिककारास्तूक्तवाक्यस्यार्थान्तरमप्याहुस्तथाहि— "शक्तय करणान्यत्र गृह्यन्ते कारणात्मना। परमात्मा ग्रहीताऽत्र स्वाभाविकमविग्रह ॥ तथा संवर्गविद्यायां प्राणवाय्वात्मना श्रुति। वागग्न्याद्युपसंहार वक्ति नान्येन कारणात् ॥ नामाद्याशावसानं च प्राणे सर्वं प्रतिष्ठितम्। प्राणबन्धनवाक्याच्च सूक्तमेतद्यथोदितम् ॥ आविर्भूतस्वकार्यस्य संसर्ग कारणात्मना। वागादीनामत्र स्याद्बुद्बुदानां यथाऽम्भसा ॥ सहार्थं वा तृतीयम विज्ञानेनेति या श्रुता। सह प्रमातृज्ञानेन वागादेरुपसंहृति ॥ यदि वाऽस्तु तृतीयेयमित्थंभूतार्थवाचिनी। प्रत्यग्ज्ञानस्वभावेन कार्यकारणसंहृति" ॥२२७–२३२॥ इति ॥ शक्तयोऽर्थग्रहशक्तिमन्ति समर्थानीति करणानि विज्ञानमिति द्वितीयान्तपदोक्तानि विज्ञानानि विज्ञानेनेतीत्थंभूतार्थकतृतीयान्तपदोक्ताज्ञातचैतन्यात्मना सुषुप्त्यावादानकर्माणि तत्र च स्वस्याऽऽभासो यस्मिन्नज्ञाने तदैक्याध्यासमुपगत स्वभासेन वा जीवेनाभिन्न पर. कर्ता स चाऽऽकाश शुद्धे स्वरूपे तिष्ठतीत्यर्थ ॥ स्वापे सर्वस्य कार्यस्य कारणात्मनोपसंहार श्रौत लिङ्गमाह—तथेति। सुषुप्तौ कार्यलयानुसारेण संवर्गविद्याधिकारे वायुर्वाव संवर्ग इत्यारभ्य वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यन्तेन च वाग्न्यादीनां वाय्वात्मनोपसंहारमुक्त्वा प्राणो वाव संवर्ग इत्युपक्रम्य प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इत्यन्तेन च वागादीनां प्राणात्मनोपसंहार वक्ति श्रुति। न च कार्यस्य कारणादन्यात्मनोपसंहारोऽतो वागादीनां प्राणात्मनोपसंहार स्वापे वदन्ती श्रुतिस्तत्र कार्यस्य कारणात्मनोपसंहार विवक्षतीत्यर्थ ॥ भूमविद्याप्रकरणमपि यथोक्तार्थोपसंहार स्वापे वदन्ती श्रुतिस्तत्र कार्यस्य कारणात्मनोपसंहार विवक्षतीत्यर्थ ॥ भूमविद्याप्रकरणमपि यथोक्तावद्यो-तनमित्याह—नामादीति ॥ प्राण इति प्राणशब्देनाज्ञातं ब्रह्मोच्यते। सर्वमपि कार्यं नाम शब्दितजीवपूर्वकमज्ञाते ब्रह्मणि प्रतिष्ठितमित्यत्रैव वाक्यान्तरमाह—प्राणेति। स्वापे कारणात्मना कार्यं सर्वमुपसंहृतमित्युपपादितमु-पसंहरति—सूक्तमिति। आदायेत्यत्र प्रत्ययार्थमुक्त्वा प्रकृत्यर्थमाह—आविर्भूतेति। परात्मविषय स्वशब्द। अत्र सुप्ताविति यावत्। असंसर्गस्तादात्म्यमिति वक्तुमुदाहरणम् ॥ करणेत्यभावयोस्तृतीया व्याख्यायार्थान्तरमाह —सहेति। तमेव विशदयति—सहेति। प्रमात्रा तदधिष्ठार्थज्ञानेन च सह करणानां संहृतिरित्यर्थ ॥ तृतीयाया शक्तय करणानीत्यत्रोक्तार्थेऽपि न दूषणमस्तीत्याह—यदि वेति। तर्हि पुनरुक्तिरित्याशङ्क्य विज्ञानशब्दयोर-

गृहीत्वा य एषोऽन्तर्मध्ये हृदये हृदयस्याऽऽकाशो य आकाशशब्देन पर एव स्व आत्मोच्यते तस्मिन्स्व आत्मन्याकाशे शेते स्वाभाविकेऽसंसारिके न केवल आकाश एव, श्रुत्यन्तरसामर्थ्यात्सता सोम्य सदा संपन्नो भवतीति। लिङ्गोपाधिसंबन्धकृतं विशेषात्मस्वरूपमुत्सृज्याविशेषे स्वाभाविक आत्मन्येव केवले वर्तत इत्यभिप्रायः।

---

व्याचष्टे—मध्य इति। आकाशशब्दस्य भूताकाशविषयत्वमाशङ्क्याऽऽकाशोऽर्थान्तरत्वादिव्यपदेशादिति न्यायेनाऽऽह—आकाशशब्देनेति। सद्रूपे ब्रह्मण्येव सुषुप्तस्य शयनं भूताकाशे तु न भवतीत्यत्र छान्दोग्यश्रुतिसंमतिमाह—श्रुत्यन्तरेति। कीदृगत्र शयनं विवक्षितमित्याशङ्क्याऽऽह—लिङ्गेति। स्वापाधिकारे स्वाभाविकत्वमविद्यामात्रसंमिश्रितस्वं 'सति संपद्य न विदुः' इत्यादिश्रुतेरिति प्रष्टव्यम्।

---

हैं। "हे सोम्य!—उस समय यह सत्-वस्तु से युक्त हो जाता है।" सूक्ष्मशरीर की उपाधि के सम्बन्ध से होने वाले अपने कर्तृत्वादिविशेष आत्मस्वरूप को छोड़कर अशेषविशेषशून्य निर्निमित्त आत्मा में ही वह विद्यमान रहता है, यह इसका अभिप्राय है।

जब यह शरीर और इन्द्रियों की अध्यक्षता छोड़ देता है, उस समय यह कैसे जाना जाता है

---

१ अन्तर्मध्ये हृदय इति। 'अनन्यबोधप्रत्यक्षो य एष इति भण्यते। तस्य सम्प्रतिपत्त्यर्थमन्तर्हृदयकीर्तनम्॥ तात्स्थ्याद्धृदयशब्देन बुद्धिरत्राभिधीयते। ऐकात्म्यप्रतिपत्त्यर्थं क्षेत्रज्ञपरमात्मनोरिति" वार्तिके आह॥ २३३, २३६॥ य एष इति पदयोरर्थमाह—अनन्येति। स्वप्रकाशतत्पदार्थो य इत्युक्त स एव प्रत्यग्भूत एषशब्दोक्त इत्यर्थः। अन्तरित्यादेस्तात्पर्यमाह—तस्येति। प्रतीचो हृदयं स्थानं तदेव ब्रह्मणोऽपीत्युक्ते सति तयोरैक्यसिद्धिस्तस्य सम्यक्प्रतिपत्त्यर्थं हृदयऽन्तर्ब्रह्मेति ब्रह्मणो हृदयस्थानत्वोक्तिरित्यर्थः॥ अन्तर्हृदय इत्यत्र हृदयशब्दार्थमाह—तात्स्थ्यादिति। पुण्डरीकाकारमांसपिण्डस्यैव हृदयत्वं किं न स्यात्तत्र तच्छब्दस्य मुख्यत्वादित्याशङ्क्याह—ऐकात्म्येति। जीवस्य विज्ञानमयशब्दितस्य बुद्धिस्थत्वप्रसिद्धेरात्मशब्दितस्यापि तन्निष्ठत्वोक्तौ तयोरैक्यं सिध्यति तदर्थं हृदयशब्देन बुद्धिग्रहणमित्यर्थः। २ एष। ३ पर एवेति। 'बुद्धेरन्तः प्रतीचोऽन्यो नार्थः समाप्यते यतः। तस्मादाकाशशब्देन प्रत्यगात्माऽभिधीयते"॥ २४१॥ यद्यपि भूताकाशस्यापि तदन्तःस्थत्वं संभवति सर्वगतत्वात् तथाप्यत्राऽऽकाशशब्दोक्तस्यास्मादात्मन इत्युत्तरत्र (क० २०) आत्मशब्दितस्य प्राणादिजन्महेतुत्वश्रुतेर्ब्रह्मैवात्राऽऽकाशशब्दितमन्यथा वाक्यशेषविरोधः स्यात्। "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति च श्रुतेः। तस्यापि वाक्यस्य भूताकाशविषयत्वे तु ('आकाश इति' ब्र० सू० १।३।४१) सूत्रविरोधः स्यात्। ४ उक्तविशेषणनिर्मुक्ते भूताकाशे। ५ सूक्ष्मशरीरोपाधिप्रयुक्तकर्तृत्वादिविशेषात्मस्वरूपम्। ६ अशेषविशेषशून्ये। ७ निर्निमित्ते। ८ प्रत्यक्चैतन्ये निद्रात्मकप्रसिद्धशयनानुपपत्तेरिति ध्येयम्। ९ इन्द्रियपतिभावं। १० आशङ्क्येति। तथा च 'तस्या ब्रह्मार्थत्वाच्च प्रत्यग्ब्रह्मणोरैक्यधीः॥" ११ आकाश इति—(ब्र० सू० १।३।४१) "आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" (छा० उ० ८।१४।१) इत्यत्र परमेव ब्रह्माकाशशब्दं कस्मात् अर्थान्तरत्वादिव्यपदेशात्॥ यदन्तरेति नामरूपाभ्यामर्थान्तरव्यपदेशात्। ते नामरूपे यस्मादन्तरा—भिन्ने। इति सूत्रार्थः। १२ सत्संपद्यामह इति शेषः।

---

र्थान्तरस्वीकारान्नैवमित्याह—प्रत्यगिति। अनुभवात्मना सहेतोर्जगतो महाराजोऽत्र विवक्षितोऽस्ति स्वमहिम्नि तिष्ठत्यात्मेत्यर्थः॥

यदा शरीरेन्द्रियपार्थक्यतामुत्सृजति तदाऽसौ स्वात्मनि वर्तते इति कथमवगम्यते। नामप्रसिद्ध्या। काऽसौ नामप्रसिद्धिरित्याह—तानि वागादीनि विज्ञानानि यदा यस्मिन्काले गृह्णात्यादत्तेऽस्य तदा हैतत्पुरुषः स्वपिति नाम। एतन्नामास्य पुरुषस्य तदा प्रसिद्धं भवति गौणमेवास्य नाम भवति स्वमेवाऽऽत्मानमपीत्यपिगच्छतीति स्वपितीत्युच्यते। सत्यं स्वपितीतिनामप्रसिद्ध्याऽऽत्मनः संसारधर्मविलक्षणं रूपमवगम्यते न त्वत्र युक्तिरस्तीत्याशङ्क्याऽऽह—तत्तत्र स्वापकाले गृहीत एव प्राणो भवति। प्राण इति घ्राणेन्द्रियं वागादिप्रकरणात्। वागादिसंबन्धे हि सति तदुपाधित्वादस्य संसारधर्मित्वं

तानि यदेत्यादिवाक्यमाकाङ्क्षापूर्वकमादत्ते—यदेत्यादिना। विज्ञानानि तत्साधनानीत्येतत्। पुरुष इति प्रथमा षष्ठ्यर्थेऽतो वक्ष्यति—अस्य पुरुषस्येति। अश्वकर्णादिनाम्नो विशेषमाह—गौणमेवेति। गौणत्वं व्युत्पादयति—स्वमेवेति। नाम्नोऽर्थव्यभिचारस्यापि दृष्टत्वात्तद्वशात्स्वापे स्वरूपावस्थानमिति शङ्कामनूद्य तद्गृहीत एवेत्यादि वाक्यमुत्थाप्य व्याचष्टे—सत्यमित्यादिना। का पुनरात्मनः स्वापावस्थायामसंसारिस्वरूपेऽवस्थानमित्यत्र युक्तिरिहोक्ता भवति तत्राऽऽह—वागादीति।

कि यह स्वात्मा मे विद्यमान रहता है ? नाम की प्रसिद्धि से (विद्यमान रहता है)। वह नाम की प्रसिद्धि क्या है ? इस पर श्रुति कहती है। "तानि" उन वागादि विज्ञानो को "यदा" जिस समय यह "गृह्णाति" स्वीकार करता है, "अथ" यानी उस समय 'स्वपिति' नाम होता है। यह 'स्वपिति' नाम इस पुरुष का प्रसिद्ध होता है, यौगिक अरूढ नाम इसका होता है। 'स्व' इस यौगिक शब्द आत्मा को ही 'अपीति' अर्थात् प्राप्त हो जाता है, इसलिये स्वपिति कहा जाता है। यह सच है कि "स्वपिति" इस नाम की (आत्मा के लिए) प्रसिद्धि हो जाने पर आत्मा का रूप सांसारिक धर्मों से विलक्षण प्रतीत होता है। परन्तु इसके (स्वप्न मे सासारिक धर्मों से विलक्षणस्वरूप) होने मे कोई युक्ति नही है। ऐसी आशङ्का होने पर श्रुति कहती है। उस समय उस सुषुप्ति अवस्था म प्राण लीन ही हो जाता है। वागादि इन्द्रियो का प्रकरण होने से "प्राण" शब्द से घ्राण इन्द्रिय का ग्रहण करना चाहिये। क्योकि (जाग्रत् आदि अवस्था मे) वागादि इन्द्रियो का सम्बन्ध होने पर ही इनका संसारी होना देखा जाता है। उस समय (स्वप्नावस्था मे) उन वागादिको का वह उपसंहार ही कर लेता है। किस प्रकार सम्बन्धाभाव हो जाता है ? उस समय वाक् भी लीन हो जाता है, चक्षु भी लीन हो जाता है, श्रोत्र भी लीन हो जाता है और मन भी लीन हो जाता है। इससे यह सिद्ध होता है कि वागादिकों के लय हो जाने पर क्रिया, कारक और फलरूपता का अभाव हो जाने से आत्मा अपने

"समाख्यासश्रयात्तस्मादमुत्राप्रत्ययात्मनीति ॥ वा० २५८ ॥

१ यौगिक न रूढम्। २ स्वमेवेति। ३ स्वापे संसारधर्मविलक्षणस्वरूपे। ४ आहेति—अनन्तरवाक्येन युक्तिरपि तत्रोच्यत इत्यर्थः। ५ उपसंहृत लीन इति यावत्। ६ करणप्रकरणात्। ७ प्रकरणात्—श्रुते प्रकरणाद्बलीयस्त्वे मुख्ये प्राणस्य तदा प्रत्यक्ष एवानुपसहार इति ध्येयम्। ८ जाग्रदादौ। ९ स्वविषयप्रकाशसाधनानि। १० वक्ति। ११ सालवृक्षवाचिन। १२ यौगिकत्वम्। १३ अश्वकर्णादिनाम्न। समाख्या यौगिक शब्द।

१४ "स्वमपीतो भवति" इति छान्दोग्यश्रुतिवशात्।

**स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं**

यह प्रकृत आत्मा जब दर्शनरूपा स्वप्नवृत्ति से व्यवहार करता है, उस समय इसके वे कर्मफल उदित होते हैं। वहाँ भी यह महाराज-सा होता है या महाब्राह्मण होता है या ऊँची-नीची देव-असुरादि

---

लक्ष्यते। वागादयश्चोपसंहृता एव तदा तेन। कथम्। गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः। तस्मादुपसंहृतेषु वागादिषु क्रियाकारकफलात्मताभावात्स्वात्मस्थ एवाऽऽत्मा भवतीत्यवगम्यते ॥ १७ ॥

ननु दर्शनलक्षणायां स्वप्नावस्थायां कार्यकरणवियोगेऽपि संसारधर्मित्वमस्य दृश्यते। यथा च जागरिते सुखी दुःखी बन्धुवियुक्तः शोचति मुह्यते च। तस्माच्छोक-

---

तदा सुषुप्त्यवस्थायां तेनाऽऽत्मना चैतन्याभासेन हेतुनेत्यर्थः। स्वापे करणोपसंहारं विवृणोति—कथमित्यादिना। तदुपसंहारफलं कथयति—तस्मादिति ॥ १७ ॥

अन्वयव्यतिरेकाभ्यां वागाद्युपाधिकमात्मनः संसारित्वमुक्तं तत्र व्यतिरेकासिद्धिमाशङ्कते—नन्विति। व्यतिरेकासिद्धौ फलितमाह—तस्मादिति। स्वप्नस्य रज्जुसर्पवन्मिथ्यात्वेन वस्तुधर्मत्वाभावा-

---

स्वरूप में ही प्रतिष्ठित हो जाता है ॥ १७ ॥

(पूर्वपक्षी शङ्का करता है—) किन्तु (वासनाप्रयुक्त ज्ञानाधिकरणरूपा) दर्शनरूपा सुषुप्ति व जाग्रत अवस्था से भिन्न स्वप्नावस्था में तो शरीर और इन्द्रियों का अभाव होने पर भी इसका (सुखादिमत्व) संसारी स्वभाव देखा जाता है। जिस प्रकार जाग्रत् अवस्था में सुखी, दुःखी, बन्धुओं से वियुक्त होता है, शोक करता है एवं मोहित होता है, उसी प्रकार संसारी स्वभाव वाला होता है। इसलिए (व्यतिरेकव्यभिचार होने से) यह शोकमोहरूप धर्मों वाला है। इसके शोकमोहादि और सुख दुःखादि, देह और इन्द्रियों के संयोग से जनित भ्रान्ति से आरोपित नहीं है। (सिद्धान्ती उक्त शङ्का का समाधान करता है—) ऐसा कहना ठीक नहीं है क्योंकि स्वप्न (रज्जुसर्प की तरह) मिथ्या है। "स" अर्थात् वह प्रकृत आत्मा "यत्र" अर्थात् जिस समय "स्वप्न्यया" यानी दर्शनलक्षणा स्वप्न-वृत्ति से "चरति" यानी वर्तता है, उस समय उसके वे कर्मफल उदित होते हैं। वे कर्म कौन से हैं?

---

१ एतदिति क्रियाविशेषणं विप्रकृष्टव्यावृत्तये। २ उपसंहृता एवेति—तथा च स्वापे वागादिसंबन्धाभावात् कर्तृत्वाद्यसंबन्धो जागरादौ च तत्संबन्धात्कर्तृत्वाद्यतस्तदुपाधिकमेवेति निश्चितमिति। ३ स्वप्ने करणोपरमेऽपि नाससार इति व्यभिचारोऽशङ्क्य तत्र वासनात्मना करणसत्त्वादित्यपि द्रष्टव्यम्। ४ वासनाप्रयुक्तज्ञानाधिकरणरूपायाम्। ५ सुषुप्तिव्यावृत्तये विशेषणं जागरव्यावृत्तये तत्र प्रयुक्तान्तम्। ६ सुखादिमत्त्वम्। ७ तद्वत्। ८ व्यतिरेकव्यभिचारात्। ९ कर्त्रा। १० करणेन। ११ स्वापे वागाद्युपसंहारात्। १२ वागादिसंबन्धे संसारस्तदभावनति। १३ अन्वयव्यतिरेकयोः। १४ वस्तु आत्मा।

निगच्छति स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥१८॥

गति को प्राप्त होता है। जैसे कोई महाराजा अपने प्रजाजनो को स्वाधीन कर स्वेच्छापूर्वक अपने देश मे विचरता है ; वैसे ही यह स्वप्नपुरुष कल्पित प्राणो को ग्रहण कर अपने देह मे यथेच्छ विचरता है ॥१८॥

---

मोहधर्मवानेवायं नास्य शोकमोहादयः सुखदुःखादयश्च कार्यकरणसंयोगजनितभ्रान्त्याऽध्यारोपिता इति। न मृषात्वात् स्वप्नस्य। स प्रकृत आत्मा यत्र [1]यस्मिन्काले दर्शनलक्षणया [2]स्वप्न्यया स्वप्नवृत्त्या चरति वर्तते तदा ते ह्यस्य लोकाः कर्मफलानि। के ते। तत्रोतापि महाराज इव भवति। सोऽयं महाराजत्वमिवास्य [3]लोको न महाराजत्वमेव जागरित इव। तथा [5]महाब्राह्मण इवोताप्युच्चावचमुच्चं च देवत्वाद्यवचं च तिर्यक्त्वाद्युच्चमिवावचमिव च निगच्छति।

मृषैव महाराजत्वादयोऽस्य लोका [6]इवशब्दप्रयोगाद्व्यभिचारदर्शनाच्च। [7]तस्माच्च

---

त्वाऽऽत्मन ससारित्वमित्युत्तरमाह—न मृषात्वादिति। तदुपपादयन्नादौ न यत्रेत्यादीन्यक्षराणि योजयति—स प्रकृत इत्यादिना।

"अथात्र" स्वप्नस्वभावो निर्दिश्यते न तस्य मिथ्यात्वं कथ्यते तत्राऽऽह—मृषैवेति। स्वप्ने दृष्टानां महाराजत्वादीनां जाग्रत्यनुवृत्तिराहित्य व्यभिचारदर्शनम्। स्वप्नस्य मिथ्यात्वे सिद्धमर्थमाह—

---

तव उस समय वह महाराज के समान हो जाता है। आत्मा का वह लोक (कर्मफल) महाराजत्व के समान हो जाता है, जागरित अवस्था के समान महाराजत्व ही नही होता इसी प्रकार ब्रह्मवेत्ता के समान होता है अथवा 'उच्चावचम्" अर्थात् देवत्वादि ऊँची एवं तिर्यक्त्वादि नीची गतियो को प्राप्त होता है।

इस आत्मा के ये महाराजत्वादिलोक मिथ्या ही हैं क्योकि दृष्टचर्य के साथ "इव" शब्द का

---

१ स्वप्नयोग्यकाले। २ स्वप्नयति काण्वशाखापाठ। स्वप्न्ययेति माध्यदिनशाखापाठ स्वप्ने भवा स्वप्न्यातयेत्याशयेनाऽऽह—स्वप्नवृत्त्येति। ३ आत्मन। ४ कर्मफलम्। ५ ब्रह्मवेत्ता। ६ इवेति—कर्मफलभूतमहाराजत्वादीना मिथ्यात्वमैकात्म्यस्य स्पष्ट दृष्टचर्यमिव शब्देनोच्यत इति यावत्। ७ स्वप्नो मिथ्या व्यभिचारित्वाद्रज्जुसर्पवत्। ८ स्वप्नस्य मृषात्वात्। ९ स्वप्नमिथ्यात्वम्। १० अथ ननु। ११ अत्र—वाक्ये।

बन्धुवियोगादिजनितशोकमोहादिभिः स्वप्ने सम्बध्यत एव ॥ ननु च यथा जागरिते जाग्रत्कालाव्यभिचारिणो लोका एव स्वप्नेऽपि तेऽस्य महाराजत्वादयो लोकाः स्वप्नकालभाविनः स्वप्नकालाव्यभिचारिण आत्मभूता एव न त्वविद्याध्यारोपिता इति। ननु च जाग्रत्कार्यकरणात्मत्वं देवतात्मत्वं चाविद्याध्यारोपितं न परमार्थत इति व्यतिरिक्तविज्ञानमयात्मप्रदर्शनेन प्रदर्शितम्। तत्कथं दृष्टान्तत्वेन स्वप्नलोकस्य मृत इवोज्जीवितुमुत्प्रादुर्भविष्यति। सत्यं विज्ञानमये व्यतिरिक्ते कार्यकरणदेवतात्मदर्शनमविद्याध्यारोपितं शुक्तिकायामिव रजतत्वदर्शनमित्येतत्सिध्यतीति व्यतिरिक्तात्मास्तित्वप्रदर्शनन्यायेनैव न

तस्मादिति। विमता लोका न मिथ्या तत्कालाव्यभिचारित्वाज्जाग्रल्लोकवदिति शङ्कते—ननु न यथेति। साध्यवैकल्यं परस्तु सिद्धान्ती पाणिपेयवाक्योक्तं स्मारयति—ननु चेति। जाग्रल्लोकस्य मिथ्यात्वे फलितमाह—तत्कथमिति। प्रादुर्भावे जाग्रल्लोकस्य कर्तृत्वं प्राकरणिकमेष्टव्यम्। तद् मुख्यवादी दृष्टान्त साधयति—सत्यमित्यादिना। अन्वयव्यतिरेकाख्यो न्यायः। देहद्वयस्याऽऽत्मनश्च विवेकमात्रं प्रागुक्तं न तु प्राधान्येनाऽऽत्मनः शुद्धिरुक्तेति विभागमङ्गीकृत्य वस्तुतोऽसन्तमपि दृष्टान्तं सन्तं कृत्वा तेन स्वप्नसत्यत्वमाशङ्क्य तन्निरासेनाऽऽत्यन्तिकी शुद्धिरात्मनः स्वप्नदृष्टान्तेनोच्यते तथा च जाग्रतोऽपि तथा

प्रयोग किया गया है और रज्जुसर्प की तरह स्वप्न का मिथ्याव्यभिचार भी देखा गया है। इसलिये (स्वप्न के मृषा होने से) स्वप्नावस्था में बन्धुवियोगादिजनित शोक-मोहादि से सम्बन्ध होता ही हो, ऐसी कोई बात नहीं है। (इस पर पूर्वपक्षी शङ्का करता है—) किन्तु जिस प्रकार जागरित अवस्था के कर्मफल जाग्रत् अवस्था में अव्यभिचरित होने वाले हैं, उसी प्रकार वे स्वप्नावस्था में होने वाले आत्मा के महाराजत्व आदि कर्मफल स्वप्नावस्था में अव्यभिचारी और आत्मस्वरूप ही होते हैं, अविद्या से अध्यस्त नहीं होते। (प्रत्युत्तर में सिद्धान्ती आक्षेप करता है—) लेकिन जाग्रदवस्था का भी देह-इन्द्रिय, आत्मत्व और देवतात्मत्व भी अविद्या से अध्यस्त है, वस्तुतः नहीं है। यह मत (पहले ही) विज्ञानमय आत्मा को प्राणादि से भिन्न सिद्ध करके प्रदर्शित कर दिया गया है। तो वह पुनः जीवित होने वाले मृत के समान स्वप्नगत कर्मफल के दृष्टान्तरूप से किस प्रकार उपस्थित हो सकता है, (उक्त अनुमान में पूर्ववादी आक्षेप करता है—) ठीक है, आत्मा प्राणादिव्यतिरिक्त है इसे प्रदर्शित करते में प्रयुक्त "अन्वयव्यतिरेक" न्याय से ही विज्ञानमय के व्यतिरिक्त सिद्ध होने पर शरीर-इन्द्रिय-देवतात्म

१ ननु चेति—निपातसमुदायो विरोधार्थः। यदि स्वप्नस्य मिथ्यात्वं मन्यसे तर्ह्यनुमानविरोधः स्यादित्यर्थः। ननु च स्याद्विरोधोक्ताविति भट्टः। निपातद्वयस्य समाहारद्वन्द्वः तद्विरोधमेवाह—यथेति। २ ननु चेति—अत्र ननुशब्दः प्रयुक्ताक्षेपे वा बोध्यः। 'नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावप्यवधारणे। वाक्यारम्भेऽप्यनुनयेऽऽमन्त्रणानुनयोरपी'ति हैमः। ३ भविष्यतीति—जाग्रल्लोक इति कर्तृपदं प्रकरणाल्लभ्यत इति टीकाकृत्। ४ स्वप्ने कर्मफलानि। ५ अनुमानप्रसङ्गादागतम्। ६ अनुमाने। ७ तच्छुद्धद्युद्देशेन। ८ इति विभागमिति—उक्तविवेकात्मविशुद्धयोर्भेदमित्यर्थः। ९ पाणिपेयवाक्यनोक्तविवेके सिद्धे सति स्थूलोऽहं क्षुधितोऽहमित्याद्यात्मत्वस्योक्त्यादिधीर्मिथ्येति जाग्रन्मिथ्यात्वस्याधिकत्वाच्च स्वप्नलोकाऽमिथ्यात्वे जाग्रल्लोके दृष्टान्तत्वमित्यभिप्रेत्याऽऽह—वस्तुत इति। १० स्वप्नसत्यत्वचोद्ये निरस्ते सति च।

तु तद्विशुद्धिपरतयैव न्याय उक्त इत्यसत्यपि दृष्टान्तो जाग्रत्कार्यकरणदेवतात्मत्वदर्शनलक्षणः पुनरुद्भाव्यते । सर्वो हि न्याय किंचिद्विशेषमपेक्षमाणोऽपुनरुक्तो भवति ।

न तावत्स्वप्नेऽनुभूतमहाराजत्वादयो लोका आत्मभूताः । आत्मनोऽन्यस्य जाग्रत्प्रतिबिम्बभूतस्य लोकस्य दर्शनात् । महाराज एव तावद् व्यस्तसुप्तासु प्रकृतिषु पर्यङ्के शयानः स्वप्नान्पश्यन्नुपसंहृतकरणः पुनरुपगतप्रकृतिः महाराजमिवाऽऽत्मानं जागरित इव पश्यति यात्रागतं भुञ्जानमिव चाभोगान् । न च तस्य महाराजस्य पर्यङ्के शयानाद्द्वितीयोऽन्यः प्रकृत्युपेतो विषये पर्यटन्नहनि लोके प्रसिद्धोऽस्ति यमसौ सुप्तः पश्यति । न

मिथ्यात्वादात्मैकरस शुद्ध स्यादित्याशयवानाह—इत्यसन्नपाति । पाणिपेषवाक्ये जाग्रं मिथ्यात्वमित्यर्थादुक्ता शुद्धिरत्रापि सैवोच्यते चेत्पुनरुक्तिरित्याशङ्क्याऽऽह—सर्वो हीति । यत्किंचित्सामान्यात्पौनरुक्त्य सर्वत्र तुल्यम् । प्रयोजनान्तरभेदादपौनरुक्त्य प्रकृतेऽपि सम पूर्वत्र शुद्धिद्वारस्याऽऽर्थिकत्वादिह वाचनिकत्वादिति भाव ।

जाग्रद्दृष्टान्तेन स्वप्नस्य सत्यत्वबोधसंभवान्मिथ्यात्वं तस्य समाधिरिति पूर्ववादिमुखेनोक्त्वा समाधिमधुना कथयति—न तावदिति । विमता न द्रष्टुरात्मानो धर्मा वा तद्दृश्यत्वाद्घटादिवदित्यर्थ । किंच स्वप्नदृष्टाना जाग्रद्दृष्टार्थान्तरत्वेन दृष्टेर्मिथ्यात्वमित्याह—महाराज इति । तेषा जाग्रद्दृष्टार्थान्तरत्वमसिद्धमित्याशङ्क्याऽऽह—न चेति । प्रमाणसामग्र्यभावाच्च स्वप्नस्य मिथ्यात्वमित्याह—न चेति । योग्यदेशाभावाच्च तन्मिथ्यात्वमित्याह—न चेति । देहाद्बहिरेव स्वप्नदृष्टपञ्जीकाराद्योग्य-

प्रदर्शन शुक्ति मे रजतदर्शन के समान अविद्या से अध्यस्त है यह सिद्ध हो जाता है। किन्तु यह न्याय आत्मा की विशुद्धि सिद्ध करने मात्र मे नहीं कहा गया है। अत असत् होते हुए भी इस जाग्रत कार्य करण देवतात्मरूप दृष्टान्त की पुन उद्भावना की जाती है। सभी वाक्य कुछ विशिष्टता की अपेक्षा रखने पर अपुनरुक्त माने जाते हैं।

(सिद्धान्ती उक्त आक्षेप का खण्डन करता है—) किन्तु स्वप्नावस्था मे अनुभव किये गये महाराजत्वादि लोकफल तो आत्मभूत नहीं है यानी आत्मावस्थित नहीं हैं क्योंकि उस समय स्वप्न-द्रष्टा आत्मा से भिन्न जाग्रत संस्काररूप प्रतिबिम्बभूत कर्मफल देखा जाता है। आरम्भ मे उस समय जिसकी इन्द्रियाँ लीन रहती है वह पलग पर सोया हुआ अमात्यादि श्रेणियों से पृथक् सोते रहने पर स्वप्न देखता हुआ अपने को जागरित अवस्था के समान पुन अमात्यादि से युक्त व्यवहरित महाराज के समान यात्रा मे चलते हुए एव भोग का उपभोग करते हुए देखता है। उस महाराज के पलग पर सोने वाली देह से पृथक् अमात्यादि के सहित जागरित अवस्था मे भ्रमण करने वाला कोई अन्य देह दिन मे नहीं देखा जाता जिसे वह सोते हुए देखता हो। जिसकी इन्द्रियाँ लीन हो गई हैं उसे रूपादि

१ सर्वमेव वाक्यमिति यावत्। २ स्वप्नद्रष्टु। ३ जाग्रत्संस्काररूपस्य। ४ तावत्—यादौ जागरिते। ५ पृथक्सुप्तासु। ६ अमात्यादिपौरश्रेणीषु। ७ जागरिते। व्यावहारिको महाराज इति यावत्। ८ जाग्रन्मिथ्यात्वस्य। ९ व्यभिचारित्वेन स्वाप्नार्थाना मिथ्यात्वम्। १० स्वप्नानात्मस्य। ११ अत्र सर्वत्र हेतुषु शुक्तिरूप्यादिदृष्टान्त ।

चोपसंहृतकरणस्य रूपादिमतो[1] दर्शनमुपपद्यते। न च देहे देहान्तरस्य तत्तुल्यस्य [2]संभवोऽस्ति। [3]देहस्थस्यैव हि स्वप्नदर्शनम्।

[4]ननु पर्यङ्के शयानः पथि प्रवृत्तमात्मानं पश्यति न बहिः स्वप्नान्पश्यतीत्येतदाह—'स [7]महाराजो जानपदाञ्जनपदे भवान्राजोपकरणभूतान्भृत्यान[8]न्यांश्च गृहीत्वोपादाय स्व आत्मीय एव जयादिनोपार्जिते जनपदे यथाकामं यो यः कामोऽस्य यथाकाममिच्छातो यथा परिवर्ततेत्यर्थः। एवमेवैष विज्ञानमय एतदिति क्रियाविशेषणं प्राणान्गृहीत्वा जागरितस्थानेभ्य उपसंहृत्य स्वे शरीरे स्व एव देहे न बहिर्यथाकामं परिवर्तते। कामकर्मभ्यामु[9]द्भासिताः पूर्वानुभूतवस्तुसदृशीर्वासना अनुभवतीत्यर्थः। [10]तस्मात्स्वप्ने मृषाऽध्यारो-

---

देशसिद्धिरित्याशङ्क्याऽऽह—देहस्यस्येति।

[4]एतदेव साधयितुं शङ्कयति—नन्विति। तत्र स यथेत्यादिवाक्यमुत्तरत्वेनावतार्य व्याचष्टे—न बहिरित्यादिना। यथाकामं त तं काममनतिक्रम्येत्यर्थः। एतदिति क्रियाया ग्रहणस्य विशेषण[12]मेतद्ग्रहणं यथा भवति तथेत्यर्थः। परिवर्तनमेव विवृणोति—कामेति। योग्यदेशाभावे सिद्धे सिद्धमर्थं दर्शयति—तस्मादिति। स्वप्नस्य मिथ्यात्वे तद्दृष्टान्तेन जडत्वादिहेतुना [13]जागरितस्यापि तथात्वं शक्यं

---

मान्-घटादिपदार्थ का दर्शन नहीं हो सकता। देह के अन्दर उसके समान किसी अन्य देह का होना भी सिद्ध नहीं होता क्योंकि स्वप्न दर्शन देहस्थ जीव को ही होता है।

किन्तु पलग मे सोने वाला देह ही तो अपने को मार्ग मे ही चलता हुआ देखता है, ऐसी बात भी नही है, वह शरीर के बाहर तो स्वप्न नही देखता। इसी बात को श्रुति प्रतिपादित करती है। दृष्टान्तस्वरूप वह सार्वभौम महाराज जनपद मे होने वाले जानपद राजा के अमात्य-भृत्य भोगोपकरण को "गृहीत्वा" अर्थात् लेकर "स्वे जनपदे" अर्थात् विजयादि द्वारा प्राप्त किये हुए अपने देश मे "यथाकाम परिवर्तेत" यानी जो जो इसे इच्छा होती है, उसे पूर्ण करता हुआ यथेच्छा स विचरता है, यह इसका अर्थ है। इसी प्रकार "एष" यह विज्ञानमय "प्राणान्गृहीत्वा" अर्थात् प्राणो को जागरित विषयो से हटाकर "स्वे शरीरे" अर्थात् अपनी देह मे इच्छानुसार विचरता है, बाहर नही। काम और

---

१ घटादे। २ संभवोऽस्तीति—चक्षुरादीनां बाह्यार्थदर्शनकरणानां देहमध्यस्थार्थेक्षण न च प्रामाणिकम्। नापि तद्विषयमहापरिमाणहिमवदादीनामत्यल्पपरिमाणे हृदि संभवोऽस्तीति शेष। ३ देहस्थस्यैवेति। वार्तिके यथा—"नापि देहाद्विनिष्क्रम्य पर्वतादीन्समीक्षते। देह विना कथमगाद्गतिसाधनवर्जित ॥ अन्तरेणापि देहादीस्तत्कार्यं चेत्करोत्ययम्। व्यर्थं देहाद्युपादानमस्य प्राप्नोत्यसंशयम्" ॥२९९-३००॥ इति। ४ नन्विति। वार्तिके यथा—"ननु पर्यङ्क आसीनो गच्छन्दिग्विवया वनम्। वेश्मतो बहिरात्मानं द्रक्ष्यतीति न तद्यत" ॥३०१॥ इति। देहान्त स्वप्नोक्तिरनुभवविरुद्धेत्यर्थ ॥ ५ स्वप्नो मिथ्याऽन्तरुपलभ्यमानत्वाद्दर्पणाद्यन्तरुपलभ्यमाननगरादिवदित्यत्र विवक्षित प्रयोग। ६ दृष्टान्त। ७ सार्वभौम स्वदेशस्य एवेति शेष। ८. भोगोपकरणीभूतान्। ९. उद्बोधिता। १० योग्यदेशकालाद्यभावात्। ११ देहान्तरेव स्वप्नदर्शनम्। १२ मरणादिकालीनग्रहणव्यावृत्त्यर्थम्। १३ जागरित मिथ्या जडत्वादिना स्वप्नवत्।

अथ यदा सुषुप्तो भवति *यदा न कस्यचन वेद हिता

इसके बाद जिस समय वह सो जाता है यानी जब वह किसी विषय मे कुछ भी नही जानता

---

पिता एवाऽऽत्मभूतत्वेन [1]लोका अविद्यमाना एव सन्तस्तथा जागरितेऽपीति प्रत्येतव्यम् । [3]तस्माद्विशुद्धोऽक्रियाकारकफलात्मको विज्ञानमय इत्येतत्सिद्धम् । यस्माद्दृश्यन्ते द्रष्टुर्विषयभूताः क्रियाकारकफलात्मकाः कार्यकरणलक्षणा लोकास्तथा स्वप्नेऽपि । [4]तस्मादन्योऽसौ दृश्येभ्यः स्वप्नजागरितलोकेभ्यो द्रष्टा विज्ञानमयो विशुद्धः ॥१८॥

[5]दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वाद[6]तद्धर्मतेति विशुद्धताऽवगताऽऽत्मनस्तत्र यथाकामं परिवर्तत इति कामवशात्परिवर्तनमुक्तम् । द्रष्टुर्दृश्यसंबन्धश्चास्य स्वाभाविक [7]इत्यशुद्धता शङ्क्यते[8]ऽतस्त[9]द्विशुद्धयर्थमाह—

---

निश्चेतुमित्याह—तथेति । द्वयोर्मिथ्यात्वे प्रतीचो विशुद्धि. सिद्धेत्युपसंहरति—तस्मादिति । अक्रियाकारकफलात्मक इति विशेषणं समर्थयते—यस्मादिति । जागरितं दृष्टान्तोकृत्य दार्ष्टान्तिकमाह—तथेति । द्रष्टृदृश्यभावे सिद्धे फलितमाह—तस्मादिति । अन्यत्वकरं कथयति—विशुद्ध इति ।

वृत्तानुवादपूर्वकमुत्तरश्रुतिनिरस्यामाशङ्कामाह—दर्शनवृत्तावित्यादिना । तत्रेति स्वप्नोक्तिः । कामादिसबन्धप्रकारार्थः । निवर्त्यशङ्कासद्भावान्निवर्तकानन्तरश्रुतिप्रवृत्तिं प्रतिजानीते—अत इति ।

---

कर्मो से उद्बोधित पूर्वानुभूत वस्तुओ के सदृश वासनाओ का अनुभव करता है। मन्त्र मे "एतत्" शब्द क्रियाविशेषण है। अत. योग्य देशकालादि के होने से आत्मधर्मरूप से अविद्यमान ही होने के कारण स्वप्नावस्था मे जो कर्मफल है, वे मिथ्या ही अध्यस्त है—इसी प्रकार जाग्रत् अवस्था मे भी वे मिथ्या ही अध्यस्त है, ऐसा जानना चाहिये। इसलिए (दोनो के मिथ्या सिद्ध होने के कारण) यह सिद्ध होता है कि क्रिया कारक और फलरूपता से भिन्न विज्ञानमय विशुद्ध ही है। क्योकि क्रिया, कारक एव स्वरूप कार्यकरणात्मक कर्मफल द्रष्टा के विषयभूत ही देखे जाते है, उसी प्रकार वे स्वप्न मे भी होते है। इसलिए (विषय और विषयी के द्रष्टा और दृश्य होने से) इन स्वप्न और जागरित के दृश्यभूत कर्मफलो से विज्ञानमय द्रष्टा भिन्न और विशुद्ध है॥ १८ ॥

वासनाप्रयुक्त ज्ञानाधिकरण मे स्वप्नावस्थ वासनाराशि दृश्यरूप होने के कारण अनात्मधर्मता है, इससे आत्मा की विशुद्धता ज्ञात होती है। उस स्वप्नावस्था मे वह इच्छानुसार विचरता है, इस प्रकार उसका यथेच्छ विचरण बतलाया गया। किन्तु इस द्रष्टा का दृश्य से सम्बन्ध

---

१. आत्मधर्मत्वेन । २ कर्मफलानि । ३ द्वयोरपि मिथ्यात्वात् । ४ विषयविषयिणा द्रष्टृदृश्यभावात् । ५ वासनाप्रयुक्तज्ञानाधिकरणे । ६ अनात्मधर्मता । ७ दृश्यादिसबन्धस्य द्रष्टु स्वाभाविकत्वात् । ८ निवर्त्यशङ्कासद्भावात् । ९ आत्मविशुद्धयर्थं शङ्किता विशुद्धिनिवृत्त्यर्थमिति वाथ ।

---

*यदा न कस्यचन वेदेतिश्रुतिभाष्याभिप्रेतार्थाविष्करणपराणि वार्तिकानि प्रदर्श्यन्ते—'न वेदेत्यात्मन श्रुत्या कर्तृत्व प्रतिषिध्यते । पश्यन्नपि यत प्राज्ञो कौटस्थ्यान्न प्रपश्यति ॥ अथ यो वेदेति तथा ज्ञातृमात्रत्वमात्मन । प्रती-

नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीतत-

है, उस समय उस हिता नाम की नाडी द्वारा बुद्धि के साथ जाकर यह देह में व्याप्त होकर सोता है।

'अथ यदा सुपुप्तो 'भवति तदा स्वप्न्यया चरति तदाऽप्ययं विशुद्ध एव। अथ

स्वप्नेऽपि शुद्धिरुक्ता किं सुषुप्तिप्रहेलेत्याशङ्क्याऽऽह—यदेति। गतो भवति तदा सुतरामस्य शुद्धि-

स्वाभाविक है, इसलिये उसकी अशुद्धता पर शङ्का की जाती है। अत श्रुति उसकी विशुद्धि के लिए कहती है।

"अथ यदा सुपुप्तो भवति' अर्थात् जिस समय (अवस्थाद्वयद्रष्टा) स्वप्नावस्था में वर्तता है, उस समय भी यह विशुद्ध ही होता है। इसके अनन्तर दर्शनवृत्ति-स्वप्न में "यदा" अर्थात् जिस समय

१ आप्रस्वप्नत आत्मनो व्यतिरेकशुद्धयो कथनान्तरम्। २ अवस्थाद्वयद्रष्टा।

योऽस्मारकत्व न सर्वत्र प्रतिपाद्यते ॥ क्वचित्प्रमातृविरसाक्षी क्वचित्प्रत्ययविस्पर। क्वचिद्वाह्यार्थविन्वाऽऽत्मा तत्कर्तृत्व निषिध्यते ॥ परप्रयुक्त वेतृत्व यदस्य प्रत्यगात्मन। सब धजत्वात्तस्यास यस्येत्यत्राभिधीयते ॥ कर्मोत्थत्वात्प्रमात्रादेस्तत्क्षये क्षयवत्त्वत। षष्ठीय कर्मणि व्याख्या द्वयाभावविवक्षया ॥ अप्यर्थे चनशब्दोऽयमभावस्यापि वारक। दोषदोषितिरोभावे सुषुप्तिरिह भण्यते" ॥ (३१३-३१८) इति। यदेत्यादी न ददेत्यस्यार्थमाह—नेति। तथा ज्ञानकर्तृत्वमात्मनो न निषेद्धु युक्त तस्य साक्षित्वेन तत्कर्तृत्वादित्याशङ्क्याऽऽह—पत्यक्षिति। अतो निषेधश्रुतिरविरुद्धेति शेष ॥ ज्ञानकर्तृ साक्ष्यात्मा न तत्कर्तेत्यत्र श्रुत्यन्तरमाह—अर्थाति। स्वमथपरिशोधनप्रारम्भार्थोऽथशब्द। इद जिघ्राणीति स्थित ज्ञातार यो वेद स आत्मेत्यादिश्रुतावस्मदुक्तानुसारेणाऽऽत्मनो ज्ञातृसाक्षित्वोक्तेन कर्तृतेत्यर्थ। किंच कर्माध्यक्ष सर्वभूताधिवास साक्षीत्याद्युपनिषत्सु कूटस्थत्वेनाद्वयचिन्मात्रत्व प्रतीचो मुमुक्षु प्रत्युच्यते तस्म तस्य कर्तृतेत्याह—प्रतीच इति ॥ ज्ञातृसाक्षीतिनिविशेषणकृत सकोचमाशङ्क्याऽऽह—क्वचिदिति। कदाचित्क्वचित्कुत्रचित्प्रमात्रादावपि सर्वसाक्षित्वमक्षत चर च न वेदेतिनिषधोक्तिस्तत्राऽऽह—तदिति। कस्यति षष्ठीमवतारयति—परति। विषयसब धात्प्रतीचो वेत्तृत्व तस्यास्माद्विषयसबन्धजत्वाद्वेतोरत्र सब धे कस्येति षष्ठीत्यर्थ ॥ ता विशेष योजयति—कर्मेति। एषा षष्ठी हि कर्मण्यव व्याख्या मात्रादे कर्मकार्यत्वात्कर्मण सुप्तौ क्षय तज्जस्यापि तत्र क्षयात्सर्वद्वितीयाभावाभिप्रायेण न किंचिदपि मात्राद्यनुभवतीत्यस्यार्थस्य विवक्षितत्वादित्यर्थ ॥ चनेत्यस्य पदद्वयस्व व्यावर्तयति—अप्यर्थ इति। अपिशब्दस्य विवक्षितमाह—अभावस्येति। स्वापे अगद्भाववत्तदभावोऽपि निषिध्यत इत्यर्थ। भावनिषधस्यभावो न निषध्यस्तद्भावेऽपि स्वापाविरोधादित्याशङ्क्याऽऽह—दोषति। दोषोऽभावागुणत्वात्क्षेपीभाव प्रधानत्वात्तयास्तिरोभावो विशेषज्ञानाभावोऽतोऽभावस्यापि स्वापे निषध भाव्यमित्यर्थ। इह पुरुष। अशुद्धता शङ्क्यत इति। तथा च वार्तिकम्— ननु कामवशादस्य त्वयोक्त परिवर्तनम्। द्रष्टृदृश्यादिभावश्च कथ शुद्धस्तथा सति ॥ नैव स्मतोऽप्यशुद्धत्वात्कुतोऽज्ञानेन सगति। अज्ञानसगति मुक्त्वा न स्यात्तज्जेन सगति ॥ एव यस्मात्स्वत शुद्धो द्वितीयासगतेरयम्। आत्मा तस्मात्स्वतो मुक्त कूटस्थज्ञप्तिमात्रत ॥ न यथा श्रोत्रविज्ञान रूपेणेति समागमम्। ससारेण तथैवाऽऽत्मा कौटस्थ्यान्नेति सगतिम् ॥ इत्यर्थस्यावबोधार्थं परो ग्रन्थोऽवतार्यत। विशुद्धि व्यतिरेक च स्वप्नजाग्रदवस्थयो। उक्त्वाऽऽत्मनोऽद्वयत्व च सुषुप्तऽथाधुनोच्यते ॥ (३०७-३१२) इति। स्वप्नादिमिथ्यात्वेन तद्द्रष्टु शुद्धतामुक्त्वाऽथ यदेत्याद्यवतारयितुमुक्त शुद्धत्वमाक्षिपति—नन्विति। अस्येति स्वप्नदृशो निर्देश। चकारेणोक्तपदानुवृत्ति सूच्यते। आदिना श्रोतव्यादिभावो गृह्यते। कामादिसम्बन्धे द्रष्टुर्न शुद्धतेति फलितमाह—कथमिति ॥ आत्मनो न कामादियोगोऽस्तीत्याह—नैवमिति। तत्र हेतुमाह—स्वत इति। बोधैकरसस्याज्ञाना-

मभिप्रतिष्ठन्ते ॐताभिः प्रत्यवसृप्य पुरीतति शेते

जो बहत्तर हजार नाड़ियाँ हृदय से सम्पूर्ण देह में व्याप्त होकर स्थित हैं । जैसे कोई बालक या

---

पुनर्यदा हित्वा दर्शनवृत्तिं स्वप्नं यदा यस्मिन्काले सुषुप्तः 'सुष्ठु सुप्तः संप्रसादं 'स्वाभाव्यं भवति सलिलमिवान्यसंबन्धकालुष्यं हित्वा स्वाभाव्येन प्रसीदति । कदा सुषुप्तो भवति ।

---

सिध्यतीति शेषः । तमेव सुषुप्तिकालं प्रश्नपूर्वकं प्रकटयति—कदेति । विकल्पं व्यावर्तयति—पूर्वं

---

"सुषुप्त." अच्छी तरह सोया हुआ अर्थात् सम्प्रसाद या स्वाभाविक स्थिति को प्राप्त हुआ होता है यानी जल के समान अन्य वस्तु के सम्बन्ध से प्राप्त मलिनता को त्यागकर स्वस्वरूपब्रह्मैक्य अवस्था से प्रसन्न

---

१ विशेषज्ञानविक्षेपाभावेन सप्रसन्न । २ स्वस्वरूपब्रह्मैक्यम् ।

---

सम्बन्धेऽपि कामादिसम्बन्ध. स्यादिति चेन्नेत्याह—अज्ञानेति ॥ द्रष्टृज्ञानतज्जासम्बन्धे फलितमाह—एवमिति । उक्तरीत्या द्वयायोगादात्मा मत. स्वत. शुद्धोऽत्र स्वतो मुक्त कूटस्थचिन्मात्रो भवतीत्यर्थं । प्रथमार्थे तमि ॥ आत्मन॰ कामादिसबन्धाभाव दृष्टान्तेन स्पष्टयति—नेत्यादिना ॥ तत्र मानत्वेनायेत्यादिवाक्यमादत्ते—हृत्यर्थस्येति । उक्तमनूद्यायेत्यादि व्याचष्टे—विशुद्धिमिति । अवस्थाद्वये विशुद्धयादिकथनानन्तर स्वापे प्रतीचोऽद्वयब्रह्मत्व विवक्षितमित्यर्थं ॥

ॐताभि प्रत्यवसृप्य पुरीतति शेत इति । अत्र वार्तिकानि—"स्वाप्ना॰भोगानशेषेण भुक्त्वा स्वप्नक्रियाक्षये । जाग्रत्स्वप्नक्रियोद्भूतान्भुक्त्वा भोगानशेषत । इन्द्रियाण्युपसहृत्य प्राज्ञो याति सुषुप्तताम् ॥ ताभिरेवोपसहृत्य प्राज्ञो याति सुषुप्तताम् ॥ सामान्यप्रज्ञया देह सव्याप्यान्तर्वहि श्रमात् । श्यनवत्परम स्थानमात्मनाऽप्येति सहृत्य शेते नाडीभिरात्मनि ॥ सामान्यप्रज्ञया देह सव्याप्यान्तर्वहि श्रमात् । श्यनवत्परम स्थानमात्मनाऽप्येति सुषुप्तताम्" ॥३३०-३३२॥ इति । ताभिरित्यादेरर्थमाह—स्वाप्नानिति । वासनामयानि करणानीति शेष ॥ स्वप्नभोगात्तत्कर्मक्षयेऽपि कथ करणसहारद्वारा स्वापो जागरस्यापि सभवादित्याशङ्क्याह—जाग्रदिति ॥ ननु स्वप्नजागरिते कर्मणा गच्छति न स्वाप नहि तत्कृता ब्रह्माप्तिस्तत्कथ सुप्तिस्तत्राऽऽह—सामान्यति । यथा श्येनो भ्रान्त श्रान्त. स्वनीडमासाद्य निर्वृणाति तथाऽऽत्मा स्थानद्वयवतिकृतभ्रान्तिध्वस्त्यै विशेषबुद्धि हित्वा साधारणया चिन्मात्रप्रज्ञया स्वदेह तप्तायोवदन्तर्बहि सव्याप्य प्रत्यक्त्वेन ब्रह्म गत्वा तद्रूपेणासङ्गादासीनगामेती॰ त्यर्थः ॥ "स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतेति" । अत्रापि वार्तिकानि प्रदर्श्यन्ते—"स्तनधयो यथा बालो रागद्वेषविवर्जित । तदभावाद्धि कुर्वन्ति चेतो न विषया सदा ॥ मृदुकण्टकवस्त्वादीनाल वेद्धु स्वगोचरान् ॥ सर्वत्राव्याहताज्ञत्व अप्ररूढेन्द्रियत्वाच्च रागद्वेषाद्यसप्लुति । विज्ञाताऽशेषतत्त्वो वा ब्राह्मण कृतकृत्यत । विधेयप्रकृतित्वत. । राजा वाऽतिसुखी लोके प्ररूढेन्द्रियवानपि ॥ बालादित्रयमप्यतदेको दृष्टान्त इष्यते । बालमौढ्यमदान्ध- आनन्दस्य परां काष्ठामतिघ्नीमेत्य निर्वृत ॥ त॰मदान्ध्यनिषेधार्थं महाब्राह्मण त्वनिवृत्त्यर्थं तथोच्यते ॥ बालस्य निर्विवेकत्वात्सविवेक क्षितीश्वर । कुमारदृष्टान्त व्याकुर्वन्बाल्यादेव तस्य रागाद्यभावमाह—स्तनधय इति । स्तन उच्यते" ॥३४४-३४६॥ इति । दार्ष्टान्तिकस्यैवशब्देन यथाशब्दस्य सम्बन्ध । रागाद्यभावफलमाह— धयति पिबतीत्यत्यन्तशिशुरिति यावत् । तथापि बालस्य बुद्धेर्विषय- तदभावादिति ॥ बालस्य बाल्यमिव रागाद्यभावे हेत्वन्तरमाह—अप्ररूढेति । तत्र हेतुमाह प्रवणत्वात्कुतो रागादिराहित्यमत आह—मृद्विति ॥ महाराजदृष्टान्त व्याचष्टे—सर्वत्रेति । ब्राह्मणो —विधेयेति । पूर्वस्माद्वैलक्षण्यमाह—प्ररूढेति ॥ महाब्राह्मणदृष्टान्त विभजते—विज्ञातेति ।

**स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽति-**
**घ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥१९॥**

महाराज अथवा महाब्राह्मण आनन्द की दुःखविनाशक अवस्था को प्राप्त हो, सो जाता है, ठीक उसी प्रकार यह सो जाता है ॥ १९ ॥

---

यदा यस्मिन्काले न कस्यचन न किंचनेत्यर्थो वेद विजानाति । कस्यचन वा शब्दादेः संबन्धि वस्त्वन्तरं किंचन न वेदेत्यध्याहार्यम् । पूर्वं तु न्याय्य 'सुप्ते तु विशेषविज्ञानाभावस्य विवक्षितत्वात् ।

एवं तावद्विशेषविज्ञानाभावे सुप्तो भवतीत्युक्तम् । केन पुनः क्रमेण सुषुप्तो भवतीत्युच्यते—हिता नाम 'हिता इत्येवंनाम्न्यो नाड्यः 'शिरा देहस्यान्नरसविपरिणामभूतास्ताश्च द्वासप्ततिः सहस्राणि द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि ता द्वासप्ततिः सहस्राणि

---

त्विति ।

वृत्तमनूद्य प्रश्नपूर्वकं 'सुषुप्तिगतिप्रकारं दर्शयति—एवं तावदिति । हितफलप्राप्तिनिमित्तत्वान्नाड्यो हिता उच्यन्ते । तासां देहसंबन्धानामन्वयव्यतिरेकाभ्यामन्नरसविकारत्वमाह—अन्नेति । तासामेव 'मध्यमसंख्यां कथयति—ताश्चेति । तासां च हृदयसंबन्धिनीनां ततो निर्गत्य देहव्याप्त्या

---

होता है। सुषुप्त कब होता है ? "यदा" जिस समय "न कस्यचन" अर्थात् कुछ भी नहीं, "वेद" यानी जानता । अथवा किसी शब्दादि के सम्बन्ध वाली किसी अन्य वस्तु को नहीं जानता, ऐसा अध्याहार करना चाहिये क्योंकि सोये हुए पुरुष में विज्ञान का अभाव विवक्षित है, इसलिए पहला अर्थ ही उचित है ।

इस तरह विशेषविज्ञान के अभाव में पुरुष सुषुप्तावस्था में होता है । पुनः किस क्रम से वह सुषुप्तावस्था में होता है ? इस पर श्रुति कहती है । "हिता" यानी (हितफलप्राप्तिनिमित्तक) हिता नाम

---

१. कर्मार्थां षष्ठीस्याश्रयन व्याचष्टे—न किंचनेति । संबन्धषष्ठीपक्षमाश्रित्याऽऽह—कस्यचन वेति । २ प्रमात्रादिरूम् । ३ गुणस्याधिकरणमाकाशादिद्रव्यम् । ४ स्वस्मात् । ५ न कस्यचनेत्यस्य न किञ्चनेति पूर्वोक्तार्थो न्याय्य इत्यत्र हेतुमाह—सुप्ते त्विति । ६ हितफलप्राप्तिनिमित्तत्वात् । ७ कदम्बकुसुमोद्भूतकेशरसमा । ८ सुषुप्तिं प्रति गमनप्रकारम् । ९ अनेन ७२७२१०२०१ इत्युक्तसंख्या १०१ इत्यधमापि संख्या न हेयेत्यसूचि ।

---

विशिष्ट सधान दस्य काष्ठा परगमत्य कृनकृ यनो निर्वृत शयीतेति संबन्ध ॥ दृष्टान्तश्रुतेरक्षरार्थमुक्त्वा विवक्षितमाह—कुमारेति । यदेतद्बालादित्रय दृष्टान्तत्वेनोक्त तत्र तथा किंस्वर्गो महाब्राह्मणो दृष्टान्त इत्यर्थ । अपिस्तद्बालादिनाप्तिता नत्रमनुकर्पति । दृष्टान्तेषु त्रिषु श्रौतेषु किमिति द्वयपुपेक्ष्यत तत्राऽऽह—बालेति । बालस्य मौढ्य राज्ञो मदाद्यपरिमितदोषद्वयापनुत्त्यर्थमन्त्यदृष्टान्तग्रहणमित्यर्थ ॥ तृतीयमुपपादयितु बाल त्यक्त्वा राज्ञो भेदे हेतुमाह—बालस्येति । दृष्टान्तत्वेनोच्यत इति संबन्ध । पूर्वत्र दोषे राज्ञो ग्रहस्तत्रापि दोषसन्निपाधान्महाब्राह्मणग्रहोऽन्त्य स एव दृष्टान्त इत्याह—तदिति ॥

हृदयाद्धृदय नाम [1]मासपिण्डस्तस्मान्मासपिण्डात्पुण्डरीकाकारात्पुरीतत [2]हृदमपरिवेष्टनमाचक्षते तदुपलक्षित शरीरमिह पुरीतच्छब्देनाभिप्रेत पुरीतत[3]मभिप्रतिष्ठन्त इति शरीर कृत्स्न व्याप्नुवत्योऽश्वत्थपर्णराजय इव बहिर्मुख्य प्रवृत्ता [4]इत्यर्थ ।

तत्र बुद्धे[5]रन्त करणस्य हृदय स्थान तत्र बुद्धितन्त्राणि चेतराणि बाह्यानि करणानि। [6]तेन बुद्धि कर्मवशाच्छ्रोत्रादीनि ताभिर्नाडीभि र्मत्स्यजालवत्कर्णशष्कुल्यादिस्थानेभ्य [7]प्रसारयति प्रसार्य [8]चाधितिष्ठति [9]जागरितकाले। ता विज्ञानमयो [10]ऽभिव्यक्तस्वात्मचैतन्यावभासतया [11]व्याप्नोति। [12]सकोचनकाले च [13]तस्या अनुसकुचति। [14]सोऽस्य विज्ञानमयस्य

[15]बहिर्मुखत्वमाह—हृदयादिति ।

ताभिरित्यादि व्याकर्तु भूमिका करोति—तत्रेति । शरीर सप्तम्यर्थं । शरीरे करणानां बुद्धितन्त्रत्वे किं स्यात्तदाह—तेनेति। [16]तथाऽपि जीवस्य किमायातमित्याशङ्कयाऽऽह—ता विज्ञानमय इति।

वाली नाडियाँ (कदम्ब कुसुम से उद्भूत पराग के समान) अन्नरस की परिणामभूता देह की शिराएँ है। वे द्वासप्तति सहस्राणि अर्थात् बहत्तर हजार ह हृदयात' यानी हृदय नाम का जो कमल के आकार के समान मासपिण्ड है उससे 'पुरीततमभिप्रतिष्ठन्ते यानी सम्पूर्ण शरीर को व्याप्त होकर स्थित है। 'पुरीतत् हृदयपरिवेष्टन का नाम है। यहाँ उससे उपलक्षित शरीर 'पुरीतत् शब्द से अभिप्रेत है। सम्पूर्ण शरीर को व्याप्त करती हुई बहिर्मुख होकर प्रवृत्त है, जैसे पीपल के पत्तो की नसें बाहर की ओर व्याप्त है।

शरीर म बुद्धि या अन्त करण का हृदय स्थान है उसम स्थित बुद्धि के अधीन दूसरी बाह्य इन्द्रियाँ है। इसी स बुद्धि कमवश श्रोत्रादि इन्द्रियो को मछली पकडने क लिए जाल के समान उन नाडियो के द्वारा कणरन्ध्रादि स्थानो से बाहर फैलाती है। तब उन्ह फलाकर जाग्रत् अवस्था के आरम्भ म उनकी अध्यक्ष होकर स्थित रहती ह। इस (पूर्वोक्त) बुद्धि को विज्ञानमय आत्मा अनावृत

१ मासपिण्ड इति— आ नाभितस्तथा कण्ठाद्धृदय मध्यत स्थितम्। सनाल पद्मकोशाभ पञ्चच्छिद्रमधामु खमिति वार्तिकम् ॥ ३२० ॥ २ अभिनि मरन्ति। ३ इत्यथ इति। अभिप्रतिष्ठन्त इत्यस्य तात्पयमाह वार्तिके— स्वप्नकमसमुद्भूता वासना या हृदि स्थिता। नाडीभिस्ता वितत्याऽऽत्मा स्वप्नान्पश्यति वामत ॥ ३२६ ॥ इति। स्वप्नकम—स्वप्नभोगप्रद कम तनोद्बोधिता इत्यथ। ४ तत्र तेषा तत्तत्त्वेन। ५ बहि। ६ प्रसारयतीति—बुद्धि स्वाधीनकरणानि जाग्रद्धतुकमणा नाडीद्वारा मत्स्यबन्धनाथजालवत्। ७ अधितिष्ठतीति—कर्णशष्कुल्यादिस्थानानि धीवृत्तिद्वाराणि करणानीति विषयाभिमुखानि करोतीति यावत्। ८ अधितिष्ठतीति—कर्णशष्कुल्यादिस्थानानि धीवृत्तिद्वाराणि करणानीति विषयाभिमुखानि करोतीति यावत्। ९ एतदारम्भे। १० यथोक्ता धियम्। ११ अनावृतेत्यथ। १२ व्याप्नोतीति—यतो बुद्धेरेव करणाना च बहिगमण तत स्वतोऽनवयवोऽक्रियोऽप्यात्मा स्वाज्ञानविशिष्टो व्यक्तचैतन्याभासाम्यविशेषयुक्तधी सहित श्रोत्रादिद्वारा सर्वानर्थान् व्याप्नोति रश्मिद्वारा सवव्यापकसवितृवदित्यथ। १३ एवमात्मनो जाग्रद्धोगेऽपि कथ सुषुप्तिरित्याशङ्कयाऽऽह—सङ्कोचनकाल इति। १४ धिय। १५ धीसङ्कोचमनुसङ्कोचनास्य। १६ सूर्यादिरश्मीनामिव। १७ तथापि—बुद्धेरिन्द्रियाणा च सावयवत्वसक्रियत्वाभ्यां बहिगमणेऽपि निरवयवस्य चात्मनो न तद्युक्तमिति भाव।

[1]स्वापः। [2]जाग्रद्विकासानुभवो भोगः। [3]बुद्ध्युपाधिस्वभावानु[4]विधायी हि [5]स चन्द्रादिप्रतिबिम्ब इव जलाद्यनुविधायी। तस्मात्तस्या बुद्धे[6]र्जाग्रद्विषयायास्ताभिर्नाडीभिः प्रत्यवसर्पणमनु[7]प्रत्यवसृप्य पुरीतति शरीरे शेते तिष्ठति तप्तमिव लोहपिण्डमविशेषेण संव्याप्याग्निव[8]त्तच्छरीरं संव्याप्य वर्तत इत्यर्थः। स्वाभाविक एव स्वात्मनि वर्तमानोऽपि कर्मानुगतबुद्ध्यनुवृत्ति-त्वात्पुरीतति शेत इत्युच्यते। न हि सुषुप्तिकाले शरीरसंबन्धोऽस्ति। [9]तीर्णो [10]हि तदा [11]"सर्वाञ्छोका[12]न्हृदयस्येति हि [13]वक्ष्यति।

---

भोगशब्दो जागरविषयः। बुद्धिविकासमनुभवन्नात्मा जागर्तीत्युच्यते तत्संकोचं चानुभवन्स्वपितीत्यत्र हेतुमाह—बुद्धीति। बुद्ध्यनुविधायित्वं "परामृश्य ताभिरित्यादि व्याचष्टे—तस्मादिति। प्रत्यवसर्पणं व्यावर्तनम्। पदार्थमुक्त्वा वाक्यार्थमाह—तप्तमिवेति। कर्मत्वे देहस्य कर्तृत्वे चाऽऽत्मनो दृष्टान्तद्वयम्। "हृदयाकाशे ब्रह्मणि शेते विज्ञानात्मेत्युक्त्वा पुरीतति शयनमाचक्षाणस्य पूर्वापरविरोध. स्यादित्या-शङ्क्याऽऽह—स्वाभाविक इति। "औपचारिकमिदं वचनमित्यत्र हेतुमाह—न हीति।

---

स्वात्मचैतन्य प्रकाशरूप से व्याप्त कर लेता है। तथा संकुचित अवस्था में उसी बुद्धि के साथ संकुचित हो जाता है। (अनुसंकोच नामक) यह (धीसंकोच) विज्ञानमय का सोना है, और जाग्रत्कालीन बुद्धि के विकास का अनुभव जाग्रत् विषय है। जिस प्रकार चन्द्रादि का प्रतिबिम्ब जलादि का अनुकरण करने वाला होता है, उसी प्रकार वह विज्ञानमय बुद्धिरूप उपाधि के स्वभाव का अनुकरण करता है। इसलिये उस जाग्रद्विषयिणी बुद्धि के वापिस लौटने के साथ-साथ वह उन नाडियों द्वारा लीन होकर "पुरीतति" यानी शरीर में "शेते" यानी रहता है। भावार्थ यह है कि तप्त लोहपिण्ड में अग्नि के समान वह शरीर में सामान्यरूप से व्याप्त होकर प्रतिष्ठित है। वह स्वस्वरूप ब्रह्मैक्य में स्थित रहते हुए भी कर्मानुगत बुद्धि का अनुकरण करने के कारण "शरीर में शयन करता है" ऐसा कहा जाता है। ऐसा इसलिए कहा जाता है क्योंकि सुषुप्ति अवस्था में उसका शरीर से सम्बन्ध नहीं रहता। आगे बृहदारण्यक श्रुति में भी कहा जायगा "उस समय विज्ञानमय हृदय के सारे शोकों को पार कर

---

१ स्वाप इति। "सा एवेन्द्रियवृत्ती स्वात्मचैतन्यसंचिता यदा। संप्रयच्छति प्रतीच्यात्मा स्वपितीति तदोच्यते" ॥ वा० १३७॥ इति। स्वकीयेन्द्रियवृत्तीनां जाग्रद्भोगहेतूनां चैतन्याभासव्याप्तानां प्रतीच्युपसंहारे सुषुप्ति-रित्यर्थः॥ २ जाग्रत्कालीनधीविकासानुभवः प्रतीचो जागरः। ३ बुद्धीति—"बुद्ध्युपाध्यनुरोधेन प्रतीचः प्रभवाप्ययौ। विक्षेपलयहीनस्तु स्वतः कूटस्थवत्परः" ॥ ३३८॥ स्वाभाविकावात्मनस्तौ प्रभवाप्ययौ जागरसुप्तौ किं न स्यातां तत्राऽऽह—विक्षेपेति। ४ अनुकरणशील। ५ विज्ञानमय। ६ उपसंहृतीभूय। ७ शरीरं संव्याप्येति। देहेन्द्रियाणां स्वापे संहारात्कुतः शरीरं व्याप्य शयनमित्याशङ्क्य समादधुर्वार्तिके—'स्वहेतु-मात्रया स्यानमिन्द्रियाणां न कार्यतः। यतोऽतश्चित्प्रभेनैव व्याप्तिः स्यात्कारणात्मना" ॥ ३४०॥ स्वहेतुमात्रया कारणात्मना इति संबन्धः। देहेन्द्रियाणां न स्वापे स्वरूपेणावस्थितिः किन्तु कारणात्मनाऽऽस्ते तदात्मकदेहादेश्चिदा-भासव्याप्तिसंभवाद्देहं व्याप्य स्वापे स्वात्मनि शयनं युक्तमित्यर्थः॥ ८ तत्र मानमाह—तीर्णं इति। नन्वत्र शोकसम्बन्धो वार्यते न शरीरादिसम्बन्धस्तत्राह—हीति। तेन शब्देनात्र 'पिताऽपिता भवतीति' सर्वसम्बन्धवारण-श्रुतिवचनं सूचितम्। ९ विज्ञानमय। १० बृ० उ० ४।३।२२। ११ भवति। १२ चतुर्थाध्याय। १३ अनुसंधाय हेतुत्वेन। १४ बृ० उ० २।१।१७। १५ गौणम्।

सर्वसंसारदुःखविप्रमुक्तेयमवस्थेत्यत्र दृष्टान्तः—स यथा 'कुमारो वाऽत्यन्तबालो वा महाराजो वाऽत्यन्त'वश्यप्रकृतिर्यथोक्तकृ॰न्महाब्राह्मणो वाऽत्यन्तपरि॰क्वविद्याविनयसंपन्नोऽ'तिघ्नीमतिशयेन दुःखं हन्तीत्यतिघ्न्यानन्दस्यावस्था सुखावस्था तां प्राप्य गत्वा शयीताऽवतिष्ठे॰त । एषा च कुमारादीनां 'स्वभावावस्थानां 'सुखं निरतिशयं प्रसिद्धं लोके। 'विक्रियमाणानां हि तेषां दुःखं न स्वभावतस्तेन' ॐतेषां स्वाभाविक्यवस्था दृष्टान्तत्वेनोपादीयते

इयमवस्थेति प्रकृता सुषुप्तिरुच्यते । उक्तेषु दृष्टान्तेषु विवक्षितमंशं दर्शयति—एषा चेति । दुःखमपि तेषां प्रसिद्धमित्याशङ्क्याऽऽह—विक्रियमाणानां हीति । 'कुमारादिस्वापस्यैव दृष्टान्तत्वं किं

लेता है" इत्यादि।

यह सुषुप्ति अवस्था ससार के सारे दुःखों से विलग है। इस विषय मे यह दृष्टान्त दिया जाता है। वह "कुमार" यानी (दुधमुहा, विषयविकारों से रहित रागादिशून्य) अत्यन्त छोटा बालक, अथवा "महाराज" यानी सर्वत स्थिरबुद्धि वाला एव विहित अनुष्ठान करने वाला महाराज, "महाब्राह्मण" यानी अशेषज्ञ होने से आनन्द को पराकाष्ठा को प्राप्त करके कृतार्थ ब्रह्मविद्, विद्याविनयसम्पन्न महाब्राह्मण, "अतिघ्नीम्" अतिशय दुःख से छुड़ाकर दुःख के कारणों का हनन कर देने वाली "आनन्दस्य" यानी सुख की अवस्था को प्राप्त होकर "शयीत" अर्थात् प्रतिष्ठित होवे। अपनी स्वाभाविक अवस्था वाले इन कुमारादि का सुख लोकव्यवहार मे सब से बढ़कर प्रसिद्ध ही है। क्षुधा और पिपासा आदि विकार को प्राप्त मनुष्यों को ही दुःख होता है, स्वाभाविकरूप से नहीं। वक्ष्यमाण हेतु से प्रसिद्ध होने से उनकी स्वाभाविक अवस्था को दृष्टान्तरूप से प्रतिपादित किया जाता है।

१ कुमारः स्तनधयोऽप्ररूढेन्द्रियो विषयप्रावण्यरहितो रागाद्यभाववानित्यर्थः । २ सर्वत्राव्याहताज्ञो विहितानुष्ठायी । ३ अशेषज्ञत्वात् आनन्दस्य परां काष्ठामेत्य कृतार्थः ब्रह्मवित् । ४ अतिघ्नीमिति । "अतीव दुःखहेतून्या हन्ति दुःखान्यशेषतः । आनन्दस्य परा काष्ठा तेनातिघ्नीति भण्यते" ॥ वा० ३५० ॥ ५ स्वाभाविकावस्थावताम् । ६ सुखमिति । "निर्विकारात्मना यस्माद्बालादीनां स्व आत्मनि । अतीव जायते ह्लादो दृष्टान्तः स विवक्षितः' ॥ वा० ३५१ ॥ ७ क्षुत्पिपासादिविकारं प्राप्तानाम् । ८ वक्ष्यमाणहेतुना । ९ कुमारादिस्वापस्यैवेति—दृष्टान्ते शयीतेति श्रुतेः बालादिस्वस्थावस्थाया न दृष्टान्तेति तदाशयः ।

ॐतेषां स्वाभाविक्यवस्था दृष्टान्तत्वेनोपादीयते प्रसिद्धत्वादिति अत्राहुर्वार्तिककाचार्याः—'अव्याहतमतिर्बालः सर्वातिशयवर्जिताम् । आनन्दस्य परां काष्ठामतिघ्नीं प्रतिपद्यते ॥ यावद्यावत्प्ररूढत्वं रागादेर्जायते शिशोः । तावत्तावत्प्ररूढत्वं दुःखस्याप्यभिजायते ॥ यथैव तत्तनुत्वं च यावद्यावदिहाऽऽत्मनः । दुःखस्यापि तनुत्वं स्यात्तावत्तावत्सुखात्मनः ॥ उत्तरोत्तरवृद्धश्चाऽसौ दुःखहेतुक्षयाच्छ्रुतौ । सहस्रदलभावेन निष्ठाऽऽनन्दस्य भण्यते ॥ आनन्दः स्वयमेवाऽऽत्मा अव्यावृत्ताननुगतप्रत्यङ्मात्रसमाप्तितः । भूम्न्येव तु परा निष्ठाऽऽनन्दस्येति श्रुतेर्वचः ॥ ननु बालस्याविवेकप्रधानत्वात्प्रभेदसमगवर्जितः । दुःखहेतुविनिर्मुक्तावतिघ्नीमेत्यतः स्वतः" ॥ ३५७ ३६२ ॥ ननु रागाद्यनुपहतधीस्वस्थावस्था परानन्दरूपाऽस्ति तत्कथं तद्दृष्टान्तसिद्धिरित्याशङ्क्याऽऽह—अव्याहतेति ॥ रागाद्यनुपहतधीशिशुरनतिशयानन्दावस्था दुःखतद्धेतुहीनामाप्नोतीत्युक्तं तस्यापि क्षुत्पिपासादिदृष्ट्या रागाद्युपहतेरित्याशङ्क्याऽऽह—यावदिति । रागादिभूयस्त्वे दुःखबाहुल्यात्सुखाल्पतेत्यर्थः ॥ उक्तमन्वयं वैधर्म्यमाह—यथेति । रागादिमान्द्ये दुःखाल्पतया सुखप्राचुर्यादप्ररूढरागादिशिशुरनुपहतधीरनतिशयानन्दावस्था दृष्टान्त इत्यर्थः । इदैनि व्यवहार-

प्रसिद्धत्वात्। न तेषां स्वाप एवाभिप्रेतः। स्वापस्य दार्ष्टान्तिकत्वेन विवक्षितत्वाद्विशेषाभावाच्च। विशेषे हि सति दृष्टान्तदार्ष्टान्तिकभेदः स्यात्। तस्मान्न तेषां स्वापो दृष्टान्तः। एवमेव यथाऽयं दृष्टान्त 'एष विज्ञानमय एतच्छयनं शेत इत्येतच्छब्दः क्रियाविशेषणार्थः। एवमयं स्वाभाविके स्व आत्मनि सर्वसंसारधर्मातीतो वर्तते स्वापकाल इति ॥ १९ ॥

क्वैष तदाऽभूदित्यस्य प्रश्नस्य प्रतिवचनमुक्तम्। अनेन च प्रश्ननिर्णयेन विज्ञान·

---

न स्यादित्याशङ्क्याऽऽह—न तेषामिति। तत्स्वापस्य दृष्टान्तत्वमस्मत्स्वापस्य दार्ष्टान्तिकत्वमिति विभागमाशङ्क्याऽऽह—विशेषाभावादिति। क्वैष तदाऽभूदिति प्रश्नस्योत्तरमुपपादितमुपसंहरति—एवमिति ॥ १९ ॥

स यथेत्यादेः संगतिं वक्तुं वृत्तं संकीर्तयति—क्वैष इति। किं पुनराद्यप्रश्ननिर्णयेन फलति

---

यहाँ केवल उनकी सुषुप्तावस्था का ग्रहण करना इष्ट है क्योंकि सुषुप्तावस्था तो दार्ष्टान्तिकरूप से विवक्षित की गई है और उनमें भेदाभाव भी है। भेद के रहने पर ही दृष्टान्त और दार्ष्टान्तिक का भेद रह सकता है, इसलिए (अभेदापत्ति होने से) उनका सुषुप्ति दृष्टान्त संभव नहीं है। इसी प्रकार जैसे यह दृष्टान्त है, "यह विज्ञानमय 'एतच्छेते' यानी इसमें शयन करता है"। यहाँ 'एतत्' शब्द क्रियाविशेषणार्थक है। इस प्रकार यह विज्ञानमय सुषुप्तावस्था में अपने स्वाभाविक ब्रह्मैक्यस्वरूप में सब सांसारिक धर्मों से अतीत होकर रहता है ॥ १९ ॥

---

१ प्रसिद्धत्वादिति। "इन्द्रियस्याऽप्रवृत्तत्वात् स्वेष्टप्राप्तविवेकत। भीरागाणां बालराजब्राह्मणानां क्रमात्सुखम् ॥ दुःख रागद्वेषजन्य तदभावे सुखं स्वतः। इति व्याप्तिगृहीत्यर्थं बहुदृष्टान्तवर्णनम्" ॥ वा० सा० ११५-११६ ॥ इति श्रीमद्भगवत्पादानामाशयः। २ भेदाभावात्। ३ कुमारादिस्वापस्य दृष्टान्तत्वेऽस्मत्स्वापस्य दार्ष्टान्तिकत्वे चाभ्युपगते तयोर्विशेषाभावेनाभेदापत्ते भेदे सत्येव तयोर्युक्तत्वात्। ४ एष विज्ञानमय — सर्वसंसारधर्मातीत एतच्छयनं यथा स्यात्तथा शेते सुषुप्तो ब्रह्मात्मना वर्तत इत्यर्थः। अहंकारादिविशिष्ट आत्माऽज्ञातेन ब्रह्मणा तादात्म्यं स्वापे प्राप्नोतीत्यतः साक्षाद्ब्रह्मरूपेण स्थितिस्तस्य शयनमित्यर्थः। तदानीं चातिसामीप्यादेव न वेत्यहं ब्रह्मेति सामीप्यातिशयस्यापि ज्ञानविरोधित्वदर्शनात्कज्जलादाविति ध्येयम्। ५ विज्ञानमयः। ६. तथाविधा शुद्धिरन्यत्रापि श्रुतिवाक्येषु प्रसिद्धेति प्रथमचकारेण सूच्यते। ७ भेदम्।

---

भूमिरुक्ता। रागादिक्षये दुःखक्षयादभूयस्त्वं सुखस्येत्यत्र मानमाह—उत्तरेति। स एको मानुष आनन्द इत्यारभ्य स एको ब्रह्मण आनन्द इत्यन्तश्रुतौ पूर्वपूर्वभूमेः शतशतगुणोत्कर्षेणोत्तरोत्तरभूमौ वृद्ध्या ब्रह्मण्यानन्दस्याधिक्यमुच्यते तत्र श्रोत्रियस्य चाकामहतस्येति श्रुतं सर्वेन रागादिक्षयात्सत्त्वोत्कर्षाद् सत्त्वस्था सुखबाहुल्यसिद्धिरित्यर्थः ॥ आनन्दस्य परा निष्ठा ब्रह्मणीत्यत्र श्रुत्यन्तरं संवादयति—अध्यावृत्तेति। सर्वस्यैतस्य प्रतीच्यवसानात्तत्रैवाऽऽनन्दस्य निष्ठेति मत्वा यो वै भूमा तत्सुखमित्यादिवाक्यमित्यर्थः ॥ आनन्दस्य भूम्नि निष्ठेत्युक्तेरानन्दात्मनामभेदमाशङ्क्याऽऽह—आनन्द इति। तस्याऽऽत्मना क्रियाकारकफलात्मनोत्पलवद्वा सङ्गतिरित्याशङ्क्याऽऽह—भेदेति। आत्मानन्दैकत्वे फलितमाह—दुःखेति। अतिघ्नीमानन्दस्य निष्ठामिति शेषः। अवस्थाद्वयसंचारोऽथमादुःखद्वन्द्वनावरणस्य विनैव ज्ञानमेषा निष्ठाऽस्यातोऽतो युक्त पुनरुत्थानमिति मत्वाऽऽह—अत एवेति।

मयस्य स्वभावतो [1]विशुद्धिरसंसारित्वं चोक्तम् । कुत एतदागादित्यस्य प्रश्नस्यापा-करणार्थं [2]आरम्भः । ननु यस्मिन्ग्रामे नगरे वा यो भवति सोऽन्यत्र गच्छंस्तत एव ग्रामान्नगराद्वा गच्छति [3]नान्यतः । [4]तथा सति क्वैष तदाऽभूदित्येतावानेवास्तु प्रश्नो यत्राभूत्तत एवाऽऽगमनं प्रसिद्धं स्यान्नान्यत इति कुत एतदागादिति प्रश्नो [5]निरर्थक एव । किं श्रुतिरुपालभ्यते भवता । न, किं तर्हि द्वितीयस्य प्रश्नस्यार्थान्तरं[6] श्रोतुमिच्छाम्यत आनर्थक्यं चोदयामि ।

[7]एवं तर्हि कुत इत्यपादानार्थता न गृह्यते । अपादानार्थत्वे हि पुनरुक्तता

---

त्वपदार्थशुद्धिरित्याह—अनेनेति । शुद्धिद्वारा ब्रह्मत्वं च तस्योक्तमित्याह—असंसारित्वं चेति । उत्तर-ग्रन्थस्य तात्पर्यमाह—कुत इति । पूर्वेणोत्तरस्य गतार्थत्वं शङ्कते—नन्विति । [8]स्थित्यवधेरेव निर्धारित-त्वाद्गत्यवधेर्निर्धारयिषया [10]प्रश्ने प्रतिवचनं सावकाशमित्याशङ्क्याऽऽह—तथा सतीति । अपौरुषेयी श्रुतिरशेषदोषशून्यत्वाद्[11]नातिशङ्कनीयेति सिद्धान्ती गूढाभिसन्धिराह—किं श्रुतिरिति । न श्रुतिराक्षिप्यते निर्दोषत्वादिति पूर्ववाद्याह—नेति । श्रुतेरनाक्षेप्यत्वे त्वदीयं चोद्यं निरवकाशमित्याह—किं तर्हीति । तस्य सावकाशत्वं पूर्ववादी साधयति—द्वितीयस्येति ।

पूर्ववादिन्यपादानादर्थान्तरे पञ्चम्याः शुश्रूषमाणे सत्येकदेशी ब्रवीति—एवं तर्हीति । कथमन्या-

---

"वह कहाँ गया था ?" इस प्रश्न का उत्तर बतला दिया गया। इस प्रश्न के निर्णय से ही विज्ञानमय आत्मा की (मोह से उत्पन्न सम्पूर्ण कार्यों से असंसर्गित्वरूपा) स्वभावतः विशुद्धि और असंसारिता कह दी गयी। इस प्रश्न के समाधान के लिए कि 'वह कहाँ से आया' आगे का ग्रन्थ प्रारम्भ किया जाता है। (पूर्वपक्षी शङ्का करता है—) (लोकव्यवहार में) जो पुरुष जिस ग्राम या नगर में होता है, वह अन्यत्र जाते समय (स्थिति के अधिकरण) उसी ग्राम या नगर से जाता है (गति का अपादान वही स्थान होता है), दूसरे स्थान से नहीं जाता। इस प्रकार (स्थिति-आधार के निर्णय से ही गति का अवधि निर्णीत हो जाने पर) 'उस समय वह कहाँ था' बस इतना ही प्रश्न हो, जहाँ वह था वहीं से आगमन प्रसिद्ध होगा दूसरी जगह से नहीं। इसलिये यह प्रश्न कि 'वह कहाँ से आया' उपयुक्त नहीं है। (सिद्धान्ती पूछता है—) क्या इस प्रकार आप श्रुति का उपालम्भन कर रहे हैं ? (पूर्ववादी कहता है—) नहीं। (सिद्धान्ती पूछता है—) तो फिर क्या कर रहे हैं ? (पूर्व-वादी कहता है—) मैं दूसरे प्रश्न का (अपादान से) कोई अन्य अर्थ सुनना चाहता हूँ इसीलिए (पुनरुक्तिदोष से) इसकी अनर्थकता की आशङ्का करता हूँ।

तुम्हारी अर्थान्तर सुनने के इच्छा होने पर फिर "कुतः" इस शब्द को अपादानार्थता ग्रहण नहीं

---

१ मोहोत्थाशेषकार्यासंसर्गित्वरूपा। २ समाधानाय। ३ स्थित्यधिकरणस्यैव गत्यपादानत्वं लोके प्रसिद्ध-मिति भावः। ४ तथा सति—स्थित्याधारनिर्णयादेव गत्यवधिनिर्णीतत्वे मनीषया। ५ निरर्थक एवेति—स्थित्यधिकरणनिश्चयेन तद्द्वारा देवागत्यवधेरपि निश्चयसम्भवात्तादर्थ्येनोत्तरग्रन्थारम्भो न युज्यते पौनरुक्त्यादिति भावः। ६ अपादानादन्यमर्थम्। ७ त्वमर्थान्तरं श्रोतुमिच्छसि यदि। ८ अधिकरणस्य। ९ अपा-दानस्य। १० प्रश्ने सत्युत्तरमावश्यकमिति भावः। ११ आक्षेपानास्पदम्।

नान्यार्थत्वे । अस्तु तर्हि निमित्तार्थः प्रश्नः कुत एतदागात्किंनिमित्तमिहाऽऽगमनमिति । न, निमित्तार्थताऽपि प्रतिवचनवैरूप्यात् । आत्मनश्च सर्वस्य जगतोऽग्निविस्फुलिङ्गादिवदुत्पत्तिः प्रतिवचने श्रूयते । न हि विस्फुलिङ्गानां विद्रवणेऽग्निनिमित्तमपादानमेव तु सः । तथा परमात्मा विज्ञानमयस्याऽऽत्मनोऽपादानत्वेन श्रूयतेऽस्मादात्मन इत्येतस्मिन्वाक्ये । तस्मात्प्रतिवचनवैलोम्यात्कुत इति प्रश्नस्य निमित्तार्थता न शक्यते वर्णयितुम् ।

नन्वपादानपक्षेऽपि पुनरुक्ततादोषः स्थित एव । नैष दोषः । प्रश्नाभ्यामात्मनि क्रियाकारकफलात्मतापोहस्य विवक्षितत्वात् । इह हि विद्याविद्याविषयावुपन्यस्तौ ।

र्थत्वं तदाह—अस्त्विति । तर्हि तस्यामपादानार्थत्वेन पुनरुक्तत्वात्तस्यामित्यर्थः । एकदेशिनं पूर्ववादी दूषयति—नेति । अपादानार्थतावदित्यपेरर्थः । तदेव स्फुटयति—आत्मनश्चेति । जगतः सर्वस्य चेतनस्याचेतनस्य चेति वक्तुं चशब्दः ।

तर्हि भयस्यपादानार्था पञ्चमीत्याशङ्क्य पूर्ववादी पूर्वोक्तं स्मारयति—नन्विति । सर्वविद्यातज्जनिर्मुक्तं प्रत्यगद्वयं ब्रह्म प्रश्नद्वयव्याजेन प्रतिपिपादयिषितमिति न पुनरुक्तिरिति सिद्धान्ती स्वाभिसंधिमुद्घाटयति—नैष दोष इति । यथोक्तं वस्तु प्रश्नाभ्यां विवक्षितमिति कुतो ज्ञातमित्याशङ्क्य तद्वक्तुं तात्पर्यमर्थमनुवदति—इह हीति । विद्याविषयनिर्णयस्य कर्तव्यत्वमत्र न प्रतिभातीत्याशङ्क्याऽऽह

की जाती क्योंकि पुनरुक्तिदोष अपादान अर्थ करने पर ही होता है, अन्य अर्थ ग्रहण करने पर नहीं । अच्छा तो इस प्रश्न को निमित्तार्थक माना जाय कि "कुत एतदागात्" (सुखरूप ब्रह्म में स्थित रहकर दुःखबहुल शरीर में) यहाँ किस निमित्त से आया ? (सिद्धान्ती समाधान करता है—) इस (पञ्चमी विभक्ति) की निमित्तार्थता भी नहीं हो सकती क्योंकि ऐसा मानने से उत्तर प्रश्न के अननुरूप हो जायगा । प्रत्युक्ति में अग्नि से विस्फुलिङ्ग आदि के समान आत्मा से ही समस्त जगत् की उत्पत्ति सुनी जाती है । चिनगारियों का ऊपर गमन अग्निनिमित्तक नहीं है, वह तो अपादान ही है । उसी प्रकार "इस आत्मा से" इस श्रुतिवाक्य में परमात्मा विज्ञानमय आत्मा के अपादानरूप से सुना जाता है । इसलिए प्रत्युक्ति से विरोध आने के कारण 'कुत एतदागात्" इस प्रश्न की निमित्तार्थता वर्णन नहीं की जा सकती ।

(पूर्वपक्षी आक्षेप करता है—) किन्तु पूर्वोक्त प्रश्न में अपादानपक्ष को स्वीकार करने पर भी पुनरुक्तिदोष तो ज्यों का त्यों बना रहता है । (सिद्धान्ती अपना मत प्रस्तुत करता है—) इसमें दोष की

१ ब्रह्मणि स्थितस्य सुखरूपे दुःखभूयिष्ठे शरीरे । २ पञ्चम्या । ३ प्रत्युक्तिविरोधात् उत्तराननुरूपत्वात्प्रश्नस्येति यावत् । उत्तरं ह्यग्निमवाक्येऽपादानत्वमाश्रित्य दत्तं भाति । ४ उद्गमन । ५ यथोक्तप्रतिवचनविरोधात् । ६ अज्ञानतत्कार्यविनिर्मुक्तं शुद्धस्वरूपं प्रथमप्रश्नेन विवक्षितं । अव्यावृत्ताननुगत(अजातिव्यक्ति)पूर्णं प्रत्यङ्मात्रैकयाथात्म्यं ब्रह्मविवक्षितं द्वितीयप्रश्नेनेत्यभिप्रत्याऽऽह—प्रश्नाभ्यामिति । [illegible] अतिक्रान्ताध्याये । ८ तथाहीति शेषः । [illegible] तर्हीति—प्रत्युक्तौ निमित्ता प्रतीतिमुपेत्य श्रौतप्रयोगस्यार्थवत्तानियमेऽर्थान्तरस्य चाभावे इत्यर्थः । १० उपनिषदि प्रथमाध्यायगतम् । ११ ब्राह्मणे ।

'आत्मेत्येवोपासीत' 'आत्मानमेवावेद' 'आत्मानमेव लोकमुपासीत' इति विद्याविषयः । तथा-ऽविद्याविषयश्च पाङ्क्तं कर्म तत्फलं चान्नत्रयं नामरूपकर्मात्मकमिति । तत्राविद्याविषये वक्तव्यं सर्वमुक्तम् । 'विद्याविषयस्त्वात्मा केवल उपन्यस्तो न निर्णीतः । तन्निर्णयाय च, ब्रह्म ते ब्रवाणीति प्रक्रान्तं ज्ञपयिष्यामीति च । 'अतस्तद्ब्रह्मविद्याविषयभूतं ज्ञापयितव्यं याथात्म्यतः । 'तस्य च याथात्म्यं क्रियाकारकफलभेदशून्यमत्यन्तविशुद्धमद्वैतमित्येतद्विवक्षितम् । अत'स्तदनुरूपौ प्रश्नावुत्थाप्येते श्रुत्या क्वैष तदाऽभूत्कुत एतदागादिति ।

"तत्र यत्र भवति तदधिकरणं यद्भवति तदधिकर्तव्यं तयोश्चाधिकरणाधिकर्त-

—तन्निर्णयाय चेति । "अन्यथा "प्रक्रमभङ्गः स्यादिति भावः । किं तद्याथात्म्यं तदाह—तस्य चेति । कथं "यथोक्तयाथात्म्यव्याख्यानोपयोगित्वं प्रश्नयोरित्याशङ्क्य तयोः "श्रौतमर्थमाह—तत्रेति ।

कोई बात नहीं है क्योंकि उक्त प्रथम और द्वितीय प्रश्न से आत्मा में क्रिया-कारक और फलात्मकता की निवृत्ति करना अभीष्ट है। पिछले अध्याय में विद्या और अविद्या दोनों ही के विषयों का वर्णन किया है। "आत्मा है, इस रूप से उसकी उपासना करे", "आत्मा के तत्त्व को ही जाना", "आत्मलोक की ही उपासना करे" इत्यादि श्रुतिवाक्यों में आत्मा विद्या का विषय है। तथा पाङ्क्तकर्म और उसका फल नामरूपकर्मात्मक-अन्नत्रय अविद्या का विषय है। प्रथमाध्याय की समाप्तिपर्यन्त अविद्या के विषय में जो कुछ कहना था, वह सब कह दिया। विद्या का विषय तो विशुद्ध आत्मा ही है, उसका वर्णन किया गया परन्तु निर्णय नहीं लिया गया। उसका निर्णय करने के लिए "मैं तुम्हें ब्रह्म का उपदेश करूँगा" इस श्रुतिवाक्य से तथा "ज्ञान कराऊँगा" इस श्रुतिमन्त्र में उपक्रम किया है। अत. विद्या के विषयभूत उस ब्रह्म का याथात्म्य ज्ञान कराना है। उसका तात्त्विक स्वरूप क्रिया-कारक-फलरूप भेद से शून्य, अत्यन्त विशुद्ध और अद्वैत है, यह बतलाना अभीष्ट है। इसी से यथोक्त याथात्म्य-व्याख्यान के अनुकूल ही श्रुति "उस समय वह कहाँ था" और "यह कहाँ से आया" इन दोनों प्रश्नों को उठाती है।

उन दोनों प्रश्नों में, जहाँ रहता है, वह अधिकरण होता है और जो रहता है, वह अधिकर्तव्य

१ बृ०उ० १।४।७ । २ बृ०उ० १।४।१० । ३ बृ०उ० १।४।१५ । ४ आत्मा । ५ तत्तार्थ-विद्यासूत्रमातृतीयसमाप्तेर्व्याख्यातम् । ६ विद्याविषयस्त्विति । वार्तिके यथा—'अविद्यानिरासाय विद्याया विषयोऽधुना । प्रवक्तव्योऽस्तद्योग्यौ प्रश्नौ द्वौ समुदाहृतौ ॥ हेतुस्वरूपकार्याणि विरोधीनि परस्परम् । अविद्याविद्ययोर्यस्मात्तद्योग्यप्रश्नमीरत ' ॥३७५–३७६॥ विद्यासूत्र न प्रपञ्चितमतस्तादर्थ्येन प्रश्नयोरुत्थानमित्याद्यभिप्राय ॥ कथमविद्याप्रतिपदा विद्येति तत्राऽऽह—हत्विति । अविद्याज्ञापकोऽविवेकरागादिर्विद्यायाःन्तूत्तरो ज्ञापकश्चविवेकवैराग्यादिस्तयो स्वरूप प्रकाशोऽप्रकाशश्च कार्यं बन्धस्तन्निवृत्तिश्चैतानि मिथो विरुद्धानि । ७ शुद्ध । ८ विद्याविषयस्य प्रक्रान्तत्वात् । तस्मादविद्याप्रतिकूलविद्याव्याख्यानयोग्यप्रश्नद्वयप्रवृत्तिरित्यर्थः । ९ विद्याविषयब्रह्मणः । १० यथोक्तयाथात्म्यव्याख्यानानुकूलौ । ११ प्रश्नयोर्मध्ये । १२ कथयेति— विद्याविषयनिर्णयस्य कर्तव्यत्वानभ्युपगमे । १३ प्रक्रान्तयोरेव निर्णीतमेव च नेति । १४. विद्याविषयस्यात्मनः । १५ श्रुत्यभिप्रेतम् ।

व्ययोर्भेदो दृष्टो लोके। तथा यत आगच्छति तदपादानं य आगच्छति स कर्ता तस्मादन्यो दृष्टः। तथाऽऽत्मा क्वाप्यभूदन्यस्मिन्नन्यः कुतश्चिदागादन्यस्मादन्यः केनचिद्भिन्नेन साधनान्तरेणेत्येवं लोकवत्प्राप्ता बुद्धिः सा प्रतिवचनेन निवर्तयितव्येति। नायमात्माऽन्योऽन्यत्राभूदन्यो वाऽन्यस्मादागतः साधनान्तरं वाऽऽत्मन्यस्ति। किं तर्हि स्वात्मन्येवाभूत् "स्वमात्मानमपीतो भवति सता सोम्य तदा संपन्नो भवति" "प्राज्ञेनाऽऽत्मना संपरिष्वक्तः परं आत्मनि संप्रतिष्ठते" इत्यादिश्रुतिभ्यः। अत एव नान्योऽन्यस्मादागच्छति। तच्छ्रुत्यैव प्रदर्श्यतेऽस्मादात्मन इति। आत्मव्यतिरेकेण वस्त्वन्तराभावात्।

प्रश्नप्रवृत्तिमुक्त्वा प्रतिवचनप्रवृत्तिमाह—सेति। निवर्तयितव्येति तत्प्रवृत्तिरिति शेषः। संप्रति प्रतिवचनयोस्तात्पर्यमाह—नायमिति। स्वात्मन्येवाभूदित्यत्र प्रमाणमाह—स्वमात्मानमिति। सुषुप्तौ स्वात्मन्येव स्थितिरत्र शब्दार्थः। प्रबोधदशायामात्मन एवाऽऽगमनापादानत्वमित्यत्र मानत्वेनानन्तरश्रुतिमुत्थापयति—तच्छ्रुत्यैवेति। स्थित्यागत्योरात्मन एवावधित्वमित्यत्रोपपत्तिमाह—आत्मेति।

होता है। लोकव्यवहार में अधिकरणों और अधिकर्तव्यों का भेद देखा जाता है। (अब द्वितीय प्रश्न का अर्थ संग्रह करते हैं—) इसी प्रकार जहाँ से आता है, वह अपादान होता है, और जो आता है, वह कर्ता अपादान से भिन्न देखा जाता है। इसी प्रकार आत्मा किसी अन्य में उससे भिन्नरूप में था और किसी अन्य स्थान से उससे भिन्नरूप से अथवा किसी दूसरे साधन के द्वारा आया है, ऐसी लोकव्यवहार की तरह बुद्धि प्राप्त होती है। इसका आत्मयाथात्म्य-सम्यग्ज्ञानजनक प्रत्युक्तिवाक्य से समाधान करना है। (तात्पर्य यह है कि) यह आत्मा न तो अन्यरूप से किसी अन्य स्थान में अथवा न यह अन्यरूप से किसी अन्य के पास से आया है और न आत्मा में (अश्वादिस्थानीय) कोई अन्य साधन ही है। तो फिर क्या विवक्षित है? यह अपने स्वरूप में ही था। "वह अपने परमार्थरूप को प्राप्त हो जाता है", "हे सोम्य! उस समय यह सत् से युक्त हो जाता है", "प्राज्ञ आत्मा से भली भाँति मिला हुआ रहता है", "परमात्मा में सम्यक्रूप से प्रतिष्ठित हो जाता है" इत्यादि श्रुतिवाक्यों से यही सिद्ध होता है। इसलिए अन्य आत्मा किसी अन्य के पास से नहीं आता। यह बात "इस आत्मा से" इत्यादि श्रुतिमन्त्र से भी सिद्ध हो जाती है क्योंकि आत्मा से भिन्न वस्तु की सुषुप्ति में तो सत्ता ही नहीं है।

१ भेद इति—अनेन सर्वोऽप्ययं कारकव्यवहारः स्वसत्ताकालेऽविद्याविषय एवेति ध्वनितम्। २ आद्यप्रश्नस्य श्रुत्यभिप्रेतमर्थं संक्षिप्य द्वितीयप्रश्नस्य तदभिमतमर्थं संगृह्णाति—तथेति। ३ अपादानात्। ४ बुद्धिरिति। वार्तिके यथा— क्रियाकारकभेदाद्या लोकस्य धिषणा त्वभूत्। यथास्थितात्मयाथात्म्यसम्यग्ज्ञानेन बाध्यते"॥३७६॥ द्वैतधीरविद्या संस्कारात्मधिया बाध्यते तस्मात्तदुत्पादनाय तद्विषयाविद्याविषयौ प्रश्नाविति भावः। ५ प्रतिवचनेनेति। उक्तात्मयाथात्म्यसम्यग्ज्ञानजनकप्रतिवचनवाक्येनेत्यर्थः। ६ अश्वादिस्थानीयम्। ७ किं तर्हीति—आधाराधेयभावोऽपादानकर्तृभावश्चाविवक्षितश्चेत्किं तर्हि विवक्षितमित्यर्थः। ८ स्वात्मन्यवति—आत्मविद्याद्वारा निःशेषात्माविद्यावाध्वसोऽत्र विवक्षितः प्रश्नप्रतिवचनवाक्ययोरभेदव्यतिरेकाभ्यां (भेदाभेदाभ्यां) भेदहेतोरज्ञानस्य प्रतिषेधेन तत्कार्याधाराधेयादेर्निषेधादिति भावः। ९ (छा०उ०) स्वीयपरमार्थरूपम्। १० बृ० उ० ४।३।२१। ११ सुषुप्तौ। १२ प्रवृत्त्यभिप्रायमिति यावत्। १३ प्रतिवचनप्रवृत्ति। १४ क्रमादधिकरणत्वमपादानत्वं चेत्यर्थः।

ॐनन्वस्ति प्राणाद्यात्मव्यतिरिक्तं वस्त्वन्तरं,[1] न,[2] प्राणादेस्तत एव निष्पत्तेः। तत्कथमिति ? उच्यते—

वस्त्वन्तराभावस्यासिद्धिं शङ्कित्वा दूषयति—नन्वित्यादिना। क्रियावतो मृदादेर्घटाद्युत्पत्तिदर्शनाद्ब्रह्मणोऽक्रियत्वात्ततो न प्राणाद्युत्पत्तिरिति शङ्कते—तत्कथमिति। सृष्टेर्मायामयत्वमाश्रित्य

किन्तु (पूर्वपक्षी के मत में) आत्मा से भिन्न प्राणादि भी तो वास्तव में है। (समाधान में सिद्धान्ती कहता है—) नहीं, क्योंकि प्राणादि की निष्पत्ति तो आत्मा से ही होती है। वह किस

१. वास्तवमिति भावः। २. नेति। "नाऽऽत्मन्येव तदध्यासाच्छुक्तिकारजतादिवत्" ॥ वा० ३८२ ॥

ॐनन्वस्ति प्राणाद्यात्मव्यतिरिक्तं वस्त्वन्तरमित्यादिभाष्यार्थविष्करणपराणि नववार्तिकानि प्रदर्श्यन्ते। मृदादिदृष्टान्तैर्या सृष्टिर्नानाविधोपदिष्टा स सर्वोऽप्युपदेशप्रकारो जीवपरयोरेकत्वज्ञानोत्पत्तय उपायो भवति। सृष्ट्यादिप्रयुक्तो भेदस्तु न कथमपि सम्भवतीत्यर्थः। 'ननु प्राणादिभिः भिन्नैः कथं निर्भेदतात्मनः। नाऽऽत्मन्येव तदध्यासाच्छुक्तिकारजतादिवत् ॥ कथं तदिति दृष्टान्ते ऊर्णनाभ्यादिरुच्यते। वास्तवं वृत्तमापेक्ष्य न त्वियं सृष्टिरात्मनः ॥ नासतो जन्मना योगः सतः सत्त्वान्न चेष्यते। कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः ॥ निःशेषवेदसिद्धान्तपुरुप्रबोधप्रसिद्ध्यर्थं सृष्टिव्याजोऽयमुच्यते। कौटस्थ्यात्स्वात्मनः सृष्टिर्न कथंचन युज्यते ॥ मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या विद्वद्भिरपि भाषितम्। गौडाचार्यैरिदं वस्तु यथाऽस्माभिः प्रपञ्चितम् ॥ मृत्स्नाहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा। उपायः सोऽवताराय नास्ति भेदः कथंचन ॥ सृष्टावन्यपरायां तु न चोद्यस्यास्ति सम्भवः। कूटस्थात्कथमुत्पत्तिरचितश्चेतनात्कथम् ॥ निःसाधनं च कार्याणि कथं कुर्यादनेकधा। विश्वरूपसमुत्पत्तिरेकरूपात्कथं भवेत् ॥ इत्येवमादिचोद्यानां पुंस्वभावानुरोधतः। परिहारवचः श्रौतं न च वस्त्वनुरोधतः ॥ ३८२-३९० ॥ इति आत्मनो निर्भेदत्वमाक्षिपति—नन्विति। तैस्तस्य भेदादिति शेषः। न प्राणादीनां सत्त्वं शुक्त्यादौ रजतादिवदात्मन्यारोपादिति परिहरति—नात्मनीति ॥ तत्र तेषां कल्पितत्वमप्रामाणिकमित्याह—कथमिति। तत्रोत्तरत्वेन यथेत्याद्यवतारयति—दृष्टान्त इति। नन्वत्र दृष्टान्तेन प्राणादेरात्मनो वास्तवी सृष्टिरुच्यते न तस्य तस्मिन्नध्यासस्तद्द्योतकाभावान्नेत्याह—वास्तवमिति। कूटस्थासङ्गाद्वयमात्मरूपमपेक्ष्य प्राणादिसृष्टेरयोगात् कल्पितैव सेत्यर्थः ॥ किं च प्राणादेरसतः सतो वा जन्म नाद्य इत्याह—नासत इति। न द्वितीय इत्याह—सत इति। जन्यस्वरूपालोचनया जन्मायोगमुक्त्वा जनकस्वभावालोचनयाऽपि तदयोगमाह—कूटस्थ इति। भासमानजनेस्तर्हि का गतिस्तत्राऽऽह—तस्मादिति ॥ सृष्टिरवास्तवी चेत्किमर्थं कथ्यते तत्राऽऽह—पुरुप्रबोधेति। मायामय्या सृष्टेरात्मज्ञानार्थत्वे सृष्टिश्रुतेरफलवती तर्हि वास्तव्येव किं न स्यात्तत्राऽऽह—कौटस्थ्यादिति ॥ सृष्टिश्रुतेरैक्यपरतया सृष्ट्यादेरप्रामाणिकत्वं प्रदर्श्य वृद्धसम्मतिमाह—निःशेषेति ॥ तदेवानुवदति—मृदिति ॥ किं तदसम्भावितं चोद्यं तदाह—कूटस्थादिति। क्रियावतो तदन्यपरत्वे फलितमर्थान्तरमाह—सृष्टाविति। किं तदसम्भावितं चोद्यं तदाह—कूटस्थादिति। क्रियावतो मृदादेर्घटाद्युत्पद्यते ब्रह्मणोऽविकारित्वान्न ततो विश्वोत्पत्तिरित्यर्थः। किंच सालक्षण्ये हेतुफलभावो दृष्टो न च चेतनाचेतनयोर्ब्रह्मजगतोस्तदस्त्यतो न ततो जगज्जन्मेत्याह—अचितमिति ॥ ब्रह्मणो विश्वोपादानत्वानुपपत्तिमुक्त्वा तन्निमित्तत्वानुपपत्तिमाह—निःसाधनं चेति। अद्वयत्वान्निःसाधनत्वमनन्तरस्याच्च ब्रह्मणो द्विधाऽपि न हेतुतेत्याह—विश्वेति। एतच्चोद्यजातमयुक्तं सृष्टिश्रुतेरन्यपरत्वेन सृष्टेर्मायात्मकत्वादिति भावः ॥ सा चेन्मायामयी तर्हि तत्परिहारार्थं स यथेत्यादि कथमित्याशङ्क्याऽऽह—इत्येवमिति। वस्त्वनुरोधं विना केवलं पुंबुद्ध्यनुसारेण पूर्वोक्तनीत्या भवता चोद्यानां परिहारार्थं स यथेत्यादीत्यर्थः। एवंशब्दः प्रकृतवाक्यपरामर्शी। ईश्वरस्य न स्वार्था सृष्टिराप्तकामत्वान्नान्यार्थाऽद्वयत्वादिति चोद्यमादिशब्दार्थः ॥

**स यथोर्णनाभिस्तन्तुनोच्चरे* द्यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्-**

लोक मे जैसे मकडा तन्तुओ पर ऊपर की ओर जाता है तथा जैसे एक ही अग्नि से अनेको क्षुद्र चिनगारियाँ निकलती है; उसी प्रकार इस आत्मा से सम्पूर्ण प्राण, सम्पूर्ण लोक, सभी देवगण, सभी भूत अनेकरूप से उत्पन्न होते है। वह सत्य का सत्य है, यही उस आत्मा की रहस्यमय उपनिषत् है।

तत्र दृष्टान्तः—'स यथा लोक ऊर्णनाभिः। ऊर्णनाभिर्लूताकीट एक एव प्रसिद्धः स्वस्वात्माप्रविभक्तेन तन्तुनोच्चरेदुद्गच्छेत्। न चास्ति तस्योद्गमने स्वतोऽतिरिक्त

म् त्या परिहरति—उच्यत इति। स्वात्माप्रविभक्तेनेत्युक्तमन्वयं व्यतिरेकद्वारा स्फोरयति—न चेति।

प्रकार होती है? इस पर कहते हैं—

उस (निष्क्रियब्रह्म मे प्राणादिप्रपञ्च की उत्पत्ति) मे एक दृष्टान्त है। लोकव्यवहार मे प्रसिद्ध जिस प्रकार जाल बनाने वाला कीडा होता है। "ऊर्णनाभि" यानी वह लूताकीट अकेला ही अपने सर्वथा अभिन्न तन्तुओ द्वारा "उच्चरेत्" अर्थात् ऊपर की ओर जाता है, उसके ऊपर जाने मे अपने से अतिरिक्त कोई दूसरा कारक नही है, जिस प्रकार एक रूप वाली एक ही अग्नि से "क्षुद्रा"

१. अज्ञाताच्चेतनात्। २ अक्रियाद्ब्रह्मण प्राणादिप्रपञ्चोत्पत्तौ। ३ प्रसिद्ध। ४ एक एवेत्यनेन स्वातिरिक्तसाधनाभावमुक्त्वा स्वाव्यतिरिक्तसाधन नानकधा स्पष्टत्वमाह—स्वात्मेति। असहाय एव सस्तन्तून् सृष्ट्वा तन स्वाप्रविभक्तेन गच्छतीत्यर्थ।

*यथाऽग्न क्षुद्रा विस्फुलिङ्गा इति। अत्र वार्तिकानि—'विस्फुलिङ्गा यथा चाग्नेर्जायन्तेऽग्निस्वभावका। सुषुप्तादात्मनस्तद्वत्प्राणादीना समुद्भव॥ सुषुप्तोदाहृतिर्येय तया समुपलक्ष्यत। विश्वाभिव्यक्तित पूर्वं ब्रह्मैवानात्मप्रपञ्चम्॥ सर्वासूपनिषत्स्वेव कारण नान्यदात्मन। भूयतश्च परात्मैव जगत कारण परम्॥ ब्रह्मण्यस्तमितेऽप्यर्थ जगत्यस्मिन्प्रदोषत। जगत्प्रसूतौ को हेतुस्तदन्यात्मव्यतिरक्त॥ अस्तीशो व्यतिरिक्तश्चेत्सोऽपि केन प्रवर्तित। जगद्धिमनुपादेतस्त्वनश्वम् सर्वदा न किम्॥ ऐश्वर्यं पारतन्त्र्य च नापि सभाव्यते मिते। नापि कार्यं विलीनत्वात्स्वात्मोत्पत्तौ प्रवर्तत॥ ३६१-३६८॥ इत्यादि विस्तरस्तु तत एव द्रष्टव्य। सुषुप्तात्प्राणादीनामुत्पत्तिरित्युक्त स्यात्तस्यापि कारणत्व शङ्क्येत तत्राऽऽह—सुषुप्तेति। अस्मादात्मन इति सुषुप्तस्यापादानत्वोक्त्या प्राग्बोधादव्यक्तनामरूपमज्ञात ब्रह्म लक्ष्यत सत्तदेव कारणमित्यर्थ॥ किंचाज्ञातब्रह्मातिरिक्ते कारणे मानाभावात्तदेव तथेत्याह—सर्वास्विति। एवमित्यज्ञातब्रह्मपरामर्श। प्रधानादि व्यावर्तयति—नान्यदिति। अत श्रूयमाणत्वादिति यावत्॥ स्वपक्षमुक्त्वा स्वयूथ्य प्रत्याह—ब्रह्मणीति। सप्तम्यर्थं तमि। न हि सर्वात्मना लीनस्य पुनरुदये ब्रह्मणोऽन्यो हेतुरनिष्टेर्नापि ब्रह्मकीटस्यादित्यर्थ॥ तदुपादानातिरेकेणेशस्य तदधिष्ठातृत्वादुपादाने लीनस्यापि जगतस्तद्वशाज्जन्मेति तटस्थेश्वरवाद्याह—अस्तीति। न तावत्तटस्थ सोऽस्ति मानाभावात्मत्त्वेऽपि स केनचित्प्रवर्तित स्वतो वा जगत्कुर्यादिति विकल्पयति—सोऽपीति। द्वितीयमनूद्य दूषयति—स्वतश्चेदिति॥ आद्ये दोषमाह—ऐश्वर्यमिति। न हि द्वयमेकस्य प्रामाणिक मिथो विरोधादित्यर्थ। कार्यमेव स्वोत्पत्तौ व्याप्रियते न कारणापेक्ष्यति स्वभाववादिन प्रत्याह—नापीति। लीनस्यापि स्वोत्पत्तौ व्यापारश्चेत्तत्कालानियतिस्तस्यासत्त्वाविशेषादिति भाव॥

'सत्यस्य 'सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥२०॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्यायस्य

प्रथमं ब्राह्मणम् ॥१॥

प्राण ही सत्य है और उन्हीं के यह सत्यमय प्रपञ्च है ॥ २० ॥

इति प्रथम ब्राह्मणम् ॥१॥

---

यथा चैकरूपादेकस्मादग्नेः क्षुद्रा अल्पा विस्फुलिङ्गास्त्रुटयोऽग्न्यवयवा व्युच्चरन्ति विविधं नाना वोच्चरन्ति । यथेमौ दृष्टान्तौ 'कारकभेदाभावेऽपि 'प्रवृत्तिं दर्शयतः, प्राक्प्रवृत्तेश्च स्वभावत एकत्वमेवमेवास्मादात्मनो विज्ञानमयस्य प्राक्प्रतिबोधाद्यत्स्वरूपं तस्मादित्यर्थः । सर्वे प्राणा 'वागादयः सर्वे लोका भूरादयः सर्वाणि कर्मफलानि सर्वे देवाः प्राणलोकाधिष्ठातारोऽग्न्यादयः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि प्राणिजातानि सर्वं एत आत्मान इत्यस्मिन्पाठ 'उपाधिसंपर्कजनितप्रबुध्यमानविशेषात्मान इत्यर्थो व्युच्चरन्ति ।

यस्मादात्मना स्थावरजङ्गमं जगदिदमग्निविस्फुलिङ्गवद्व्युच्चरत्यनिशं यस्मिन्नेव

---

'असहायस्य कारणत्वे दृष्टान्तमुक्त्वा कूटस्थस्य तद्भावे दृष्टान्तमाह—यथा चेति । 'माध्यंदिनश्रुतिमाश्रित्याऽऽह—सर्व एत इति ।

तस्येत्याद्यवतार्य व्याचष्टे—यस्मादित्यादिना । ननु प्रत्यग्भूतस्य ब्रह्मणो वाचकेषु शब्दान्त-

---

अर्थात् छोटी-छोटी "विस्फुलिङ्गा" यानी चिनगारियाँ या अग्निकण "व्युच्चरन्ति" अर्थात विविध या नानारूप से उडते है । जिसप्रकार ये दोनो दृष्टान्त कर्ता-अपादानादि कारकभेद न होने पर भी (प्रसर्पणादिरूपा) प्रवृत्ति प्रदर्शित करते हैं और प्रवृत्ति से पूर्व वास्तविक एकता प्रदर्शित करते हैं, इसी प्रकार इस आत्मा यानी बोध होने से पूर्व विज्ञानमय (हार्दाकाशाख्य अज्ञातब्रह्म) स्वरूप से वागादि-सघात समस्त प्राण, भूरादि समस्त लोक, सम्पूर्ण कर्मफल, प्राण और लोको के अध्यक्ष अग्नि आदि समग्र देवतागण, ब्रह्मा से लेकर स्तम्बपर्यन्त समस्त प्राणीसमुदाय उत्पन्न होते है । माध्यन्दिनशाखा के "सव एत आत्मान" इस पाठ का अर्थ है कि अन्त करणरूप उपाधि के ससर्ग के कारण जिनका विशेष कर्तृत्वादि-विशिष्टस्वरूप अनुभव किया जाता है, वे अनन्त जीव उत्पन्न होते हैं ।

अग्नि से निकली चिनगारियो के समान जिस आत्मा से यह चराचर जगत् निरन्तर उत्पन्न

---

१ प्राणोपलक्षितस्य जगत । २ अवाच्यमधिष्ठानम् । ३ कारकेति—कर्त्रपादानादिकारकभेदाभावेऽपीत्यर्थः । अग्नेरेवाग्नित्वेनोच्चरणापादानत्वम् । तस्यैव स्फुलिङ्गत्वेन कर्तृत्वमिति कारकैक्यम् । ४ प्रसर्पणादिरूपाम् । ५ हार्दाकाशाख्यमज्ञात ब्रह्म । ६ आदिना करणसघात । ७ उपाधीति—अन्त करणादिससर्गजोऽनुभूयमानो विशेष कर्तृत्वादिविशिष्ट स्वरूप येषा ते च त आत्मान जीवा इत्यर्थः । ८ परमात्मन । ९ तच्छाखापठितप्रकृतश्रुतिम् ।

पादकवाक्येषु ब्रह्म विजिज्ञासूनां 'बुद्धिव्युत्पादनाय विचारयिष्यामः ।

न तावदसंसारी परः 'पाणिपेषणप्रतिबोधिताच्छब्दादिभुजोऽवस्थान्तरविशिष्टा- 'दुत्पत्तिश्रुतेः । न 'अशनायादिवर्जितः 'परो विद्यते । कस्मात् । यस्माद्ब्रह्म ज्ञपयिष्यामीति प्रतिज्ञाय सुप्तं पुरुषं 'पाणिपेषं बोधयित्वा 'तं शब्दादिभोक्तृत्वविशिष्टं दर्शयित्वा 'तस्यैव 'स्वप्नद्वारेण सुषुप्त्याख्यमवस्थान्तरमुन्नीय" तस्मादेवाऽऽत्मनः सुषुप्त्य"- वस्थाविशिष्टादग्निविस्फुलिङ्गोर्णनाभिदृष्टान्ताभ्यामुत्पत्तिं दर्शयति श्रुतिरेवमेवास्मादि- त्यादिना । न "चान्यो जगदुत्पत्तिकारणमन्तराले" श्रुतोऽस्ति । विज्ञानमयस्यैव हि "प्रकरणम् ।

"संशयाविना विचारकार्यतामयतार्य पूर्वपक्षयति—न तावदिति । जगत्कर्ता हीश्वरो "विवक्ष्यते "प्रकृते च सुषुप्तिविशिष्टाज्जीवाज्जगज्जन्मोच्यते तस्मादीश्वरो जीवादतिरिक्तो नास्तीत्यर्थः । "तदेव प्रपञ्चयति—नेत्यादिना । "प्रकृतेऽपि जीवे जगत्कारणत्वमीश्वरस्यैवात्र" श्रुतमित्याशङ्क्याऽऽह—न चेति । "तत्र प्रकरणविरोध हेतुमाह—विज्ञानेति ।

ब्रह्म हूँ ' इत्यादि परब्रह्म की एकता का प्रतिपादन करने वाली श्रुतियों का विरोध हो जायगा क्योंकि ब्रह्म से भिन्न किसी संसारी की सत्ता न होने के कारण उसका उपदेश निरर्थक होगा। इस प्रकार जिस का प्रत्युत्तर नहीं दिया गया है, उस ऐकात्म्यविज्ञानविषयक प्रश्न का विषय लौकिक पण्डितों के लिए भी अत्यन्त अज्ञान का स्थान है। इसलिए ब्रह्मजिज्ञासुओं की बुद्धि को यथार्थतत्त्व में अवगाहन करने के लिए ब्रह्मविद्या का प्रतिपादन करने वाले वाक्यों में प्रवृत्त करने के लिए हम यथाशक्ति विचार करेंगे।

इनमें से असंसारी परमात्मा तो जीव से भिन्न नहीं हो सकता क्योंकि हाथ दबाने से उठे हुए शब्दादि के भोक्ता एवं सुषुप्तिसंज्ञक अवस्थान्तर से विशिष्ट जीव में जगत् की उत्पत्ति सुनी गई है। जीव से भिन्न क्षुत्पिपासादि से वर्जित परमेश्वर नहीं है। क्यों नहीं है? क्योंकि "मैं तुझे ब्रह्म का ज्ञान कराऊँगा" इस प्रकार प्रतिज्ञा करके सोए हुए पुरुष को हाथ से दबा दबा कर जगा करके उस प्रबोधावस्था वाले को शब्दादि भोक्तृत्वविशिष्ट दिखाकर, उसी प्रबोधावस्थायुक्त जीव को स्वप्न उपन्यास द्वारा सुषुप्तिसंज्ञक अवस्थान्तर को प्राप्त करा कर श्रुति "एवमेवास्मात" इस मन्त्र में सुषुप्ति-अवस्थाविशिष्ट उस आत्मा से ही अग्नि की चिनगारी और लूताकीट के दृष्टान्तों द्वारा संसार की उत्पत्ति दिखलाती है। यहाँ ( ब्रह्म ते ब्रवाणि" से लेकर "एवमेवास्मादात्मन" इस श्रुति-

१ धियं यथातत्त्वमवगाहिनीं कर्तुम् । २ असंसारी परमात्मा परः जीवभिन्नो नास्तीति प्रतिज्ञाते हेतुमाह—पाणीति । ३ उत्पत्तीति—एवमेवास्मादात्मन सर्वे प्राणा इति प्राणाद्युत्पत्तिश्रवणादनयोर्मध्यस्थेयमुपनिषदिति शङ्कैव नास्तीति शेषः । ४ परमेश्वर । ५ जीवान्य । ६ पाणिनाऽऽपिष्याऽऽपिष्य । ७ प्रबोधावस्थम् । ८ प्रबोधावस्थजीवस्य । ९ स यत्र स्वप्न्यया चरतीति वाक्येन स्वप्नोपन्यासद्वारा । १० प्रापय्य । ११ जीवात् । १२ ईश्वरास्य जीवेतर । १३ ब्रह्म ते ब्रवाणीत्युपक्रम एवमेवास्मादात्मन इत्युपसंहारयोर्मध्ये । १४ अतो जीवस्यैव ब्रह्मशब्देन प्रकृतत्वमिति भाव । १५ संशयप्रयोजनाभ्याम् । १६ अभिमत । १७ वाक्ये । १८ संग्रहवाक्यम् । १९ ब्रह्मशब्देन । २० प्रकरणे । २१ ब्रह्म ते ब्रवाणीति ।

समानप्रकरणे च श्रुत्यन्तरे कौषीतकिनामादित्यादिपुरुषान्प्रस्तुत्य स होवाच यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्य इति प्रबुद्धस्यैव विज्ञानमयस्य वेदितव्यतां दर्शयति नार्थान्तरस्य। तथा चाऽऽत्मनस्तु कामाय सर्वं प्रियं

श्रुत्यन्तरवशादपि जीव एवात्र जगत्कर्तेत्याह—समानप्रकरणे चेति। श्रुत्यन्तरस्य च जीवविषयत्वं जगद्वाचित्वाधिकरणपूर्वपक्षन्यायेन द्रष्टव्यम्। वाक्यशेषवशादपि जीवस्यैव वेदितव्यत्वं वाक्यान्वयाधिकरणपूर्वपक्षन्यायेन दर्शयति—तथा चेति। जीवातिरिक्तस्य परस्य वेदितव्यस्याभावे

मन्त्र तक के) मध्य मे जगत् की उत्पत्ति का ईश्वरसंज्ञक जीव से अन्य कोई कारण नही सुना गया है और यह विज्ञानमय जीव का ही प्रकरण है।

इसके समान प्रकरण मे ही कौषीतकीशाखा वालो की एक अन्य श्रुति म आदित्यादि पुरुषो को प्रस्तुत कर श्रुति "वह बोला—हे बालाकि! जो भी इन पुरुषो का कर्ता है और जिसका यह जगत् कार्य है, वह निश्चय ही ज्ञातव्य है" इस प्रकार जगे हुए विज्ञानमय जीव की ही ज्ञातव्यता सिद्ध होती है, अन्य वस्तु की नही। उसी प्रकार ही "आत्मा के लिए ही सब प्रिय होता है" इस श्रुतिवाक्य द्वारा ऐसा कहकर यह दिखाना है कि जो आत्मा प्रयरूप से प्रसिद्ध है, वही द्रष्टव्य, श्रोतव्य, मन्तव्य और निदिध्यासितव्य है। तथा उसी प्रकार ही विद्यासूत्र के उपन्यास समय मे "आत्मा है—इस रूप से उसकी उपासना करे", "वह यह आत्मा पुत्र से प्रिय है और धन से भी प्रिय है", "उसने

१ विज्ञानमयविषयस्त्व नैव प्रकरणतुल्यप्रकरणे। २ एतच्छाखीयानाम्। ३ जगत्। ४ कार्यम्। ५ तथैव। ६ बृ० उ० २।४।५, बृ० उ० ४।५।६। ७ प्रियं पुत्रवित्तादिभिर्भोगोपायैरुपलक्षित भोक्तारमनूद्येत्यर्थः। ८ 'जगद्वाचित्वात्' (ब्र सू १।४।१६) पूर्वपक्षति। कौषीतकिब्राह्मण बालाकयजातशत्रुसंवादे श्रूयते। यो वै इत्यादिवाक्य किमत्रादित्यादि पुरुषाणां कर्ता जीवो वेदितव्यत्वेनोपदिश्यत उत मुख्य प्राण आहोस्वित् परमात्मेति विचार। जीव इति तावत्प्राप्त जीवोऽपि भोक्तृत्वात्स्वभोगोपकरणभूतानामपा पुरुषाणां कर्तोपपद्यते तथा तस्यापि धर्माधर्मलक्षण कर्म शक्यते श्रावयितुम्। यस्य चैतत्कर्मेति वाक्यशेषे च सुप्तोत्थापनाख्य जीवलिङ्गमत्र गम्यते। तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिन भुञ्जते एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्तीति वाक्यशेषे भोक्तृत्वाख्य जीवलिङ्गमवगम्यते। श्रेष्ठी प्रधान पुरुष स्वैः भृत्यैः रुपकरणैर्भुङ्क्ते भृत्या अप्यशनाच्छादनादिना प्रधानमुपजीवन्ति। एव जीवोऽप्यादित्यादिभि प्रकाशादिना भोगोपकरणैर्भुङ्क्ते भृत्यादिवदादित्यादयो देवा अपि जीव हविर्ग्रहणादुपजीवन्तीति वक्ष्य। अथास्मिन् प्राण एकधा भवतीति श्रुत्युक्त प्राणशब्दादपि जीव तस्य प्राणभृत्वाच्चोपपन्नस्ततो जीवसमन्वितमिद वाक्यमिति तत्सूत्रपूर्वपक्षन्याय। ९ वाक्यशेषेति—उपक्रमानुसारेण संसारिणो वेद्यत्वमुक्त्वेत्यादि। १० वाक्यान्वयेति—वाक्यान्वयात् (१।४।१६) इति वेदान्तसूत्रे। बृहदारण्यके श्रूयते न वा अरे पत्यु कामायेत्युपक्रम्य न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्य इत्यादिरूपेणोपदिश्यते परमात्मा वेति। तत्र जीव इति प्राप्त कुत पतिजायादिभोग्यजातवतो भोक्तुरुपक्रमात् मध्येऽपीद महद्भूतमनन्तमपार विज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय 'तान्येवानु विनश्यति न प्रेत्य सञ्ज्ञाऽस्तीति' प्रकृतस्य द्रष्टव्यस्य भूतेभ्य समुत्थान जीवरूपेण वदन् जीवस्य द्रष्टव्यत्व दर्शयति विज्ञातारमरे केन विजानीयादिति' विज्ञानकर्तृवचनेन (वाचकेन) शब्देनोपसहरन् विज्ञातारमेवेहोपदिष्ट दर्शयति। तस्मादात्मविज्ञानेन सर्वविज्ञानवचन (अत्रोक्तम्) भोक्त्रर्थत्वाद्भोग्यजातस्योपचारिक द्रष्टव्यमिति तदधिकरणपूर्वपक्षन्याय।

भवतीत्युक्त्वा य एवाऽऽत्मा प्रियः प्रसिद्धस्तस्यैव द्रष्टव्यश्रोतव्यमन्तव्यनिदिध्यासितव्यतां दर्शयति। तथा च विद्योपन्यासकाल 'आत्मेत्येवोपासीत तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्' 'दात्मानमेवावेदहं ब्रह्मास्मीत्येवमादिवाक्यानामानुलोम्यं स्यात्परामावे। वक्ष्यति च– "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः" इति।

सर्ववेदान्तेषु च प्रत्यगात्मवेद्यतैव प्रदर्श्यतेऽहमिति न बहिर्वेद्यता शब्दादिवत्प्रदर्श्यतेऽसौ ब्रह्मेति। तथा कौषीतकिनामेव "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादिना वागादिकरणैर्व्यापृतस्य कर्तुरेव वेदितव्यतां दर्शयति।

अवस्थान्तरविशिष्टोऽसंसारीति चेत्। अथापि स्याद्यो जागरिते शब्दादिभुग्विज्ञानमयः स एव सुषुप्ताख्यमवस्थान्तरं गतोऽसंसारी पर." प्रशासिताऽन्यः स्यादिति चेत्। न,

पूर्वोत्तरवाक्याना(णा)मानुकूल्यं हेत्वन्तरमाह—तथा चेत्यादिना।

इतश्च जीवस्यैव वेद्यतेत्याह—सर्वेति। तत्रैव हेत्वन्तरमाह—तथेति। स वै वेदितव्य इत्यत्र" न स्पष्टं जीवस्य वेदितव्यत्वमिह तु स्पष्टमिति "भेद।

स्वापावस्थाज्जीवाज्जगज्जन्मश्रुतेस्तस्यैव वेद्यत्वदृष्टेश्च जगद्धेतुरीश्वरो वेदान्तवेद्यो नास्तीत्युक्ते सेश्वरवादी चोदयति—अवस्थान्तरेति। चोद्यमेव विवृणोति—अथापीति। उक्तोपपत्तिस्त्वेऽपीति यावत्"। नावस्थाभेदाद्वस्तुभेदस्तथाऽननुभवादपराद्धान्ताच्चेति परिहरति—नादृष्टत्वादिति। अवस्था-

आत्मतत्त्व को ही जाना कि मैं ब्रह्म हूँ" इत्यादि श्रुतिवाक्यो की पराभाव मे अनुकूलता हो सकती है। आगे भी श्रुति इसे प्रतिपादित करेगी—"वह परमात्माख्य पुरुष मैं ही हूँ, इस प्रकार सत्त्वशुद्धि से किसी तरह आत्मा को जान जाय।"

समस्त वेदान्तो मे ब्रह्म की "मैं ब्रह्म हूँ" इस रूप से प्रत्यगात्मभाव से वेद्यता प्रदर्शित की गयी है, शब्दादि के समान "यह ब्रह्म है" इस प्रकार बहिर्वेद्यता प्रदर्शित नही की गयी। इसी तरह कौषीतकीशाखा वालो की श्रुति भी 'वाणी को जानने की इच्छा न करे, बोलने वाले को जाने" इत्यादि वाक्य से वागादि-इन्द्रियों से भिन्न कर्ता की वेद्यता प्रदर्शित करती है।

यदि कहो कि अवस्थान्तरविशिष्ट होने पर ईश्वर असंसारी हो जाता है अर्थात् यदि ऐसे कहो कि जागरित अवस्था मे शब्दादि का भोक्ता विज्ञानमय है, वही सुषुप्तसंज्ञक अवस्थान्तर मे जाने पर उससे भिन्न प्रशासक परमात्मा असंसारी हो जाता है, ऐसा कहना ठीक नही क्योकि ऐसा देखा नही जाता। क्षणिकवादी सिद्धान्त के सिवा और कही ऐसे धर्मवाला पदार्थ नही देखा गया। लोकव्यवहार मे ऐसा नही देखा जाता कि गाय बैठते और चलते समय तो गाय रहे और सोते समय वह अश्वादि कोई

१ तथैव। २ विद्यासूत्रोपन्यासकाले। ३ बृ० उ० १।४।७। ४ बृ० उ० १।४।८। ५ बृ० उ० १।४।१०। ६ आदिना आत्मानमेव लोकमुपासीतेति। ७ बृ० उ० ४।४।१२। ८ अहं ब्रह्मेति। ९ परमात्मा। १० पर इति—अवस्थाद्वयसम्बन्धी स्वतः संसार्येवाऽयं जीवः स्वापाख्यमवस्थान्तरं गतः परो भवतीति परस्मादेव जगज्जन्मश्रुत्योच्यत इति तदाशयः। ११ पूर्वभाष्योक्तकौषीतकिवाक्य। १२ इति न पौनरुक्त्यमिति भावः। १३ परस्मादेव जगज्जन्म स्यादिति शेषः।

प्रदृष्टत्वात्। न ह्येवं[1]धर्मकः पदार्थो दृष्टोऽन्यत्र [2]वैनाशिकसिद्धान्तात्। न हि लोके गौस्तिष्ठन्गच्छन्वा गौर्भवति शयानस्त्वश्वादिजात्यन्तरमिति[3]। न्यायाच्च। यद्धर्मको यः पदार्थः प्रमाणेनावगतो भवति स देशकालावस्थान्तरेष्वपि तद्धर्मक एव भवति। स चेत्तद्धर्मकत्वं व्यभिचरति सर्वः प्रमाणव्यवहारो [4]लुप्येत। [5]तथा च न्यायविदः सांख्यमीमांसकादयोऽसंसारिणोऽभावं युक्तिशतैः प्रतिपादयन्ति।

संसारिणोऽपि जगदु[6]त्पत्तिस्थितिलयक्रियाकर्तृत्वविज्ञानस्याभावादयुक्तमिति चेद्य-[7]न्महता प्रपञ्चेन स्थापितं भवता शब्दादिभुक्संसार्येवावस्थान्तरविशिष्टो जगतः कर्तेति। तदसत्। यतो जगदुत्पत्तिस्थितिलयक्रियाकर्तृत्वविज्ञानशक्तिसाधनाभावः सर्वलोकप्रत्यक्षः

भेदाद्वस्तुभेदाभाव दृष्टान्तेन स्पष्टयति—न हीति। तत्रैव हेत्वन्तरमाह—न्यायाच्चेति। जागरादिविशिष्टस्यैव स्वापवैशिष्ट्यात्तस्य संसारित्वान्नेश्वरोऽन्योऽस्तीत्युक्त्वा [8]तदभावे वादिसंमतिमाह—तथा चेति। आदिशब्दो लोकायतादिसमस्तनिरीश्वरवादिसंग्रहार्थः। युक्तिशतैरिति। [9]तस्य देहित्वेऽस्मदादितुल्यत्वा[10]त्तदभावे [11]"मुक्तवज्जगत्कर्तृत्वायोगाज्जीवानामेवादृष्टद्वारा तत्कर्तृत्वसंभवा[12]त्तस्याकिंचित्करत्वमित्यादिभिरित्यर्थः।

जीवो जगज्जन्मादिहेतुर्न भवति तत्रासमर्थत्वात्पाषाणवत्तस्य संसारित्वादिति शङ्कते—संसारिणोऽपीति। ईश्वरस्येवेत्यपेरर्थः। अयुक्तं प्राणादिकर्तृत्वमिति शेषः। संग्रहवाक्यं विवृणोति—

अन्य जाति का पशु हो जाय। तथा यह न्यायसंगत भी है कि जो पदार्थ प्रमाण द्वारा जिन धर्मों वाला जाना जाता है; वह अन्य देश, काल अथवा अवस्थाओं में भी उन्हीं धर्मों वाला होता है। यदि वह उन धर्मों का परित्याग कर दे तो सारे ही प्रमाण-व्यवहार का लोप हो जाय। इसी प्रकार ही सांख्यवादी, मीमांसक और नैयायिकादि भी सैकड़ों युक्तियों द्वारा असंसारी परमेश्वर के अभाव का प्रतिपादन करते हैं।

जगत् की उत्पत्ति, स्थिति और लयरूप क्रियात्रय के कर्तृत्व का विज्ञान न होने के कारण संसारी जीव को संसार का कर्ता मानना उचित नहीं है—यदि ऐसा मानें तो जगत्कर्ता ईश्वर के निरास के लिए तुमने यह विस्तार से स्थापित किया है कि शब्दादि का भोक्ता अवस्थान्तरविशिष्ट संसारी जीव ही यहाँ जगत् का कर्ता है। यह कहना ठीक नहीं है क्योंकि संसारी जीव में जगत् की उत्पत्ति, स्थिति और लयरूप क्रियात्रय के कर्तृत्वविज्ञान की शक्ति के साधनों का अभाव लोकव्यवहार में

१ स्वनोऽन्यजातिविशिष्टो गमनशयनाद्यवस्थाभेदाज्जात्यन्तरभाग्भवतीत्येतादृक्। २ क्षणिकवादिसिद्धान्त इति यावत्। ३ इतीति—दार्ष्टान्तावद्योतीतिशब्द। तथा च एवमारम्यपि नावस्थाभेदात्स्वरूपभेद इत्यर्थः। ४ लुप्येतेति कुप्येतेति पाठान्तरम्। वार्तिके यथा—"स्वभावमपि जह्याच्चेदग्निः शीतो भवेद्ध्रुवम्। सर्वप्रमाणकोपश्च सर्वं स्याद्धरोत्तरमिति" ॥४४०॥ यो भावो यद्धर्मको मितो नासौ तद्धर्मं व्यभिचरत्यतिप्रसङ्गादिति भाव। ५. तथैव। ६ उत्पत्त्यादिक्रियात्रयम्। ७ प्रपञ्चेन—जगत्कर्त्रीश्वरनिरासकयुक्तिविस्तरेण महत्त्व युक्तिषु निर्दोषत्वम् तासामागमवत्साधकत्व च। ८. ईश्वराभावे। ९ ईशितु। १० देहाभावे। ११. मुक्तपुरुषवत्। १२. ईश्वरस्य।

संसारिणः[1]। स कथमस्मदादिः संसारी[2] मनसाऽपि चिन्तयितुमशक्यं पृथिव्यादि[3] विन्यास[4]-विशिष्टं जगन्निर्मिमीतुं नयादतो[5]ऽयुक्तमिति चेत्। न, शास्त्रात्[7]। शास्त्रं संसारिण एवमेवास्मादात्मन इति जगदुत्पत्त्यादि दर्शयति[6]। तस्मात्सर्वं श्रद्धेयमिति[8] स्यादयमेकः पक्षः।

"य: सर्वज्ञः सर्ववित्[9]" "योऽशनायापिपासे अत्येति[10]" "असङ्गो न हि सज्जते[11]" "एतस्य वा अक्षरस्य प्रशासने[12]" "यः सर्वेषु भूतेषु तिष्ठन्नन्तर्याम्यमृतः[13]" "स यस्तान्पुरुषान्निरुह्यात्यक्रामत्[14]" "स वा एष महानज आत्मा[15]" "एष सेतुर्विधरणः[16]" "सर्वस्य वशी सर्वस्येशानः[17]"

---

यन्महतेत्यादिना। कालात्ययापदेशेन[18] दूषयति—न शास्त्रादिति। निरीश्वरवादमुपसंहरति—तस्मादिति।

सेश्वरवादमुत्थापयति[19]—य सर्वज्ञ इत्यादिना। तान्पृथिव्याद्यभिमानिनः पुरुषान्निरुह्योत्पाद्य योऽतिक्रान्तवान्स[20] एष सर्वविशेषशून्य इति यावत्। उदाहृताः श्रुतयः स्मृतयश्च। न्यायस्तु विचित्रं

---

सर्वविदित है। उक्त विशेषणवान् हमारी तरह संसारी जीव इस पृथिवी आदि लोक को समुचित स्थान में स्थापित कर विभिन्न प्रकार की रचना से विशिष्ट, मन द्वारा अचिन्तनीय जगत् की रचना किस प्रकार कर सकता है? इसलिए ऐसा मानना सर्वथा अनुचित है। ऐसी शङ्का करना ठीक नहीं क्योंकि शास्त्र से यही सिद्ध होता है। "इसी प्रकार इस आत्मा से (जगत् की उत्पत्ति हुई)" इत्यादि श्रुति-वाक्य संसारी जीव से ही जगत् की उत्पत्ति आदि सिद्ध करता है। शास्त्रप्रमाण द्वारा सब को पूर्वरीति से श्रद्धा करनी चाहिये कि यह भी एक पक्ष है।

"जो सर्वज्ञ और सर्ववित् है", "जो क्षुधा और पिपासा को अतिक्रमण कर जाता है", "जो असंग होने से किसी में आसक्त नहीं होता", "इस अक्षर के प्रशासन में (हे गार्गी! सूर्य और चन्द्र स्थित हैं)", "जो समस्त भूतप्राणियों में रहता हुआ अन्तर्यामी और अमृत है", "(ये आठ आयतन हैं, आठ लोक हैं, आठ देव हैं और आठ पुरुष हैं) वह जो उन पुरुषों को जानकर औपाधिक कर्मों का अतिक्रमण किये हुए है", "वही यह महान् अजन्मा आत्मा (अजर, अमर, अमृत एवं अभय ब्रह्म) है", "(इन

---

१. उक्तविशेषण। २ जगतो विचित्रकार्यत्वाद्विशिष्टबुद्धिमत्कर्तृकत्वं प्रासादादिवदनुमेयमित्यभिप्रेत्याह—मनसेति। एतेन जगत्कर्तुः सर्वशक्तिमत्त्वं सम्भावितम्। ३ आदिना स्वर्गपातालादिलोकग्रह। ४ विन्यासो-ऽपरोत्तरभावेनावस्थानम्। ५ अनुमानं निगमयति—अत इति। सामर्थ्याभावाज्जीवस्य प्राणादिकर्तृत्वमयुक्तमित्यर्थ। ६ दर्शयतीति—एवमेवेत्यादिश्रुतेरपि प्रत्यक्षाद्यगोचरे संसारिणो जगद्धेतुत्वेन प्रवृत्तिरित्याशङ्क्याऽऽह वार्तिके—'अक्षाद्यगोचरो यद्वच्छास्त्रादध्यवसीयते। तद्वत्संसारिकारित्वं जगतो गम्यतां श्रुतेरिति" ॥ ४४३ ॥ प्रत्यक्षाद्यगोचरो धर्मादि न हि मानान्तरमपेक्ष्य श्रुतिः स्वार्थमवगमयति स्वतो मानत्वादिति भाव। ७ शास्त्रात्। ८ एवंरीत्या। ९ मु० उ० १।१।९। १० बृ०उ० ३।५।१। ११ बृ० उ० ३।९। २६। १२. बृ० उ० ३।८।९। १३ बृ० उ० ३।७।१५। १४ बृ० उ० ३।९।२६। १५ बृ० उ० ४।४।२५। १६ बृ० उ० ४।४।२२। १७ बृ० उ० ४।४।२२। १८ पक्षे साध्याभावात्मकबाधेन हेत्वाभासेन साध्यकालाभावे पक्षे हेतोः प्रयोगः कालात्ययापदेशो नाम हेतोर्दोष। १९ जीवादिभिन्नतटस्थेश्वर-वादम्। २० अक्षण एव स्थितवान्।

"य आत्माऽपहतपाप्मा विजरो विमृत्यु." "तत्तेजोऽसृजत" "आत्मा वा इदमेक एवाग्र आसीत्" "न लिप्यते लोकदुःखेन बाह्य." इत्यादिश्रुतिशतेभ्यः। स्मृतेश्च "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति 'परोऽस्त्यससारी श्रुतिस्मृतिन्यायेभ्यश्च 'स च कारणं जगतः।

नन्वेवमेवास्मादात्मन इति ससारिण एवोत्पत्तिं दर्शयतीत्युक्तम्। न, 'य एषोऽन्तर्हृदय आकाश इति परस्य प्रकृतत्वादस्मादात्मन इति युक्तः परस्यैव परामर्शः। क्वैष तदाऽभूदित्यस्य प्रश्नस्य प्रतिवचनत्वेनाऽऽकाशशब्दवाच्य पर आत्मोक्तो "य एषोऽन्तर्हृदय

कार्यं विशिष्टज्ञानवत्पूर्वक प्रासादादौ तथोपलम्भादित्यादि।
"प्रकरणमनुसृत्य जीवस्य प्राणादिकारणत्वमुक्त स्मारयति—"नन्विति। नैव जीवस्य प्रकरणमिति" परिहरति—नत्यादिना। "प्रतिवचनस्याकाशशब्दस्य परविषयत्वमसिद्धमित्याशङ्क्या"ऽऽह—क्वैष

लोको की मर्यादा भङ्ग न हो—इस प्रयोजन से) वह इनको धारण करने वाला सेतु है", "वह सबको वश मे रखने वाला, सब का शासन करने वाला (और सब का अधिपति) है', "जो पाप, जरा और मृत्यु से रहित आत्मा है', 'उसने तेज को रचा', 'सृष्टि के प्रारम्भ मे वह आत्मा एक ही था", "वह लोकदुःख से लिप्त नही होता क्योंकि वह उससे परे है'—इत्यादि सैकड़ो श्रुतिवाक्यो से तथा "मैं सबका उत्पत्तिस्थान हूँ और मुझमे ही यह सब प्रवृत्ति होती है' इत्यादि स्मृतियो से परमात्मा जीव से भिन्न असमारी सिद्ध होता है एव श्रुति, स्मृति और तर्क से वही जगत का कारण है।

(इस पर पूर्ववादी स्मरण कराता है—) किन्तु "उसी प्रकार इस आत्मा से (समस्त प्राण, समस्त लोक, समस्त देवगण और समस्तभूत उत्पन्न होते है)' इत्यादि बृहदारण्यक श्रुति तो ससारी-जीव से ही प्राणादि की उत्पत्ति दिखाती है। ऐसा मन्त्र में कहा जा चुका है। (आक्षेप का समाधान किया जाता है—) ऐसा कहना ठीक नही। "यह जो हृदय के भीतर आकाश है (उसमे विज्ञानमय पुरुष शयन करता है)" इस श्रुतिमन्त्र मे परमात्मा का ही उपक्रम होने के कारण "इस आत्मा से (समस्तभूत उत्पन्न होते हैं) इत्यादि श्रुतिवाक्य द्वारा परब्रह्म का परामर्श मानना ही युक्त है। "उस समय यह कहाँ था" इस प्रकार इस प्रश्न के प्रत्युत्तररूप मे "यह जो हृदय के भीतर आकाश है,

१ छा उ ८।७।१। २ छा उ ६।२।३। ३ ऐत उ १।१।१। ४ क उ २।५।१२। ५ परमात्मा जीवभिन्न। ६ श्रौते तस्मिन् कार्यलिङ्गकमनुमानमपि दर्शयति—स चेति। यथा वार्तिके—"स एव जगत्कारी सत्यज्ञानादिलक्षण। तस्मादित्यात्मनश्चेति सामानाधिकरण्यत ॥४४७॥ 'ब्रह्मविदाप्नोति परमित्यारभ्य सत्य ज्ञानमित्यादिलक्षणमुक्त्वा तस्मादित्यनुकृष्य तत्रात्मपद प्रयुज्य ब्रह्मवाचितच्छब्दस्याऽऽत्मशब्दस्य च सामानाधिकरण्यात् प्रत्यग्ब्रह्मण सकाशादाकाशादिसृष्टिरुक्तेत्यर्थ॥ ७ सकाशात्। ८ प्राणाद्युत्पत्तिम्। ९ बृ० उ० २।१।१७। १० बृ० उ० २।१।१७। ११ जैवमिद प्रकरणमित्यनुसधाय। १२ न तैत्तिरेयश्रुतेरीश्वरो जगद्धतु वाजसनेयिश्रुतिविरोधादिति शङ्कते—नेत्यवतीत्यवतरणान्तरम्। १३ य एषोऽन्तर्हृदये आकाशस्तस्मिन्नित्यत्र परस्यैवाकाशत्वस्वीकारादेवमेवास्मादिति प्रकृतपरमात्माकाशपरामर्शात्ततो जगदुत्पत्तिरत्रोच्यते तत्र तैत्तिरीयकश्रुतिविरोधो वाजसनेयश्रुत्येति परिहरति—नेत्यादिनेति अवतरणान्तरम्। १४ राजोक्तोत्तरस्थेति यावत्। १५ आहेति—प्रकरणानुसधानपूर्वकमाहेत्यर्थ।

[1]आकाशस्तस्मिञ्छेत [2]इति। [3]"सता सोम्य [4]तदा [5]संपन्नो भवत्यहरहर्गच्छन्त्य एतं ब्रह्मलोकं न [6]विन्दन्ति [7]प्राज्ञेनाऽऽत्मना संपरिष्वक्तः [8]पर आत्मनि संप्रतिष्ठते" इत्यादिश्रुतिभ्य आकाशशब्दः पर आत्मेति निश्चीयते। [9]दहरोऽस्मिन्नन्तराकाश इति प्रस्तुत्य तस्मिन्नेवाऽऽत्मशब्दप्रयोगाच्च। प्रकृत एव पर आत्मा। [10]तस्माद्युक्तमेवमेवास्मादात्मन इति परमात्मन एव[11] [12]सृष्टिरिति। संसारिणः सृष्टिस्थितिसंहारज्ञानसामर्थ्याभावं चावोचाम।

अत्र चाऽऽत्मेत्येवोपासीताऽऽत्मानमेवावेदहं ब्रह्मास्मीति ब्रह्मविद्या प्रस्तुता। ब्रह्म-

---

इति। इतश्चाऽऽकाशशब्दस्य परमात्मविषयतेत्याह— दहरोऽस्मिन्निति। य आत्माऽपहतपाप्मेत्यात्मशब्दप्रयोग। प्रतिवचने परस्याऽऽकाशशब्दवाच्यत्वे फलितमाह—प्रकृत एवेति। तस्य प्रकृतत्वे लब्धमर्थमाह—तस्मादिति। इतश्च परस्मादेव प्राणादिसृष्टिरित्याह—संसारिण इति। [13]यन्महता प्रपञ्चेनेत्यादावितिशेष।

अस्तीश्वरो जगत्कारणं ब्रह्म [14]तदेव जीवस्य स्वरूप [15]तस्येयमुपनिषदिति सिद्धान्तमाशङ्क्य दूषयति—अत्र चेति। [16]तृतीयोऽध्याय. समम्यर्थं। का पुन· सा ब्रह्मविद्येति तत्राऽऽह—ब्रह्मविषय चेति।

---

उसमें यह सोया करता है" इस श्रुतिवाक्य द्वारा आकाशशब्दवाच्य परमात्मा ही कहा गया है। "हे सोम्य! सोते हुए वह सत् से पूर्ण रहता है", "प्रतिदिन वहाँ जाती हुई भी इस ब्रह्मलोक को नहीं जानती है", "यह पुरुष प्राज्ञात्मा से आलिङ्गित होने पर (न कुछ बाहर का विषय जानता है और न भीतर का)", "परमात्मा में सम्यक् प्रकार से स्थित होती है" इत्यादि श्रुतिवाक्यों से आकाशशब्द से कहा जाने वाला परमात्मा ही है, ऐसा निश्चय होता है। तथा "इसमें अन्तराकाश दहर है" इस प्रकार उपक्रम करके उसी अर्थ में "आत्मा" शब्द का प्रयोग भी किया गया है। इसलिए यहाँ परमात्मा का प्रकरण है। अत "इसी प्रकार इस आत्मा से" इस श्रुतिमन्त्र द्वारा परमात्मा से ही सृष्टि होती है, यह कहना ठीक ही है। इसके अतिरिक्त जगत् की उत्पत्ति, स्थिति और संहार के ज्ञान की शक्ति का अभाव संसारी जीव में हम पहले ही कह चुके हैं।

(पूर्वपक्षी शङ्का करता है—) उपनिषद् के प्रथम अध्याय में भी "आत्मा है—उसकी इस रूप से उपासना करे', "उसने आत्मा को ही जाना कि मैं ब्रह्म हूँ' —इस श्रुतिवाक्य से ब्रह्मविद्या का

---

१ आकाश इति—आकाशशब्दस्यात्रह्मत्वे प्रकृतहानाप्रकृतप्रक्रिय स्याता॥ हि धीपूर्वकारिणोऽप्रकृतोक्तिर्युक्तेति भाव। वार्तिके यथा—'ब्रह्म तेऽह ब्रवाणीति प्रकृत्य अब्रह्मबोधनम्। अब्रह्माप्रकृत ब्रूयात् कथ राजाऽतिपण्डित"॥४४१॥ २ वाक्ये। ३ छा० उ०। ४ सुप्तौ। ५ किं च प्रतिवचनवाक्यस्थाकाशशब्दस्य संसारिपरत्वे श्रुत्यन्तरविरोध इत्याह—सतेति। अस्या अपि श्रुते संसारिविषयत्वमस्त्विति चेन्न सन्नाम्ना ब्रह्मणोऽत्र विवक्षितत्वात् अन्यथा सदेवेत्यादिप्रक्रमभङ्गादिति भाव। न ववस्थात्रययोगिप्रकृताकाशस्य संसारित्वमेव युक्तमित्याशङ्क्याऽऽह—अहरहरिति। ६ जानति। ७ बृ० उ० ४।३।२१। ८ प्र० उ० ४।६। ९ छा० उ० ८।१।१। १० तस्मात्—प्रतिवचने परस्यैवाकाशशब्दवाच्यत्वेन प्रकृतत्वात्। ११ मकाशात्। १२ प्राणादे। १३ बृ० उ० ४४५ पृष्ठभाष्ये। १४ नेश्वरस्तदस्य इति भाव। १५ प्रत्यगभिन्नब्रह्मण। १६ उपनिषदि प्रथमोऽध्याय।

विषयं च ब्रह्मविज्ञानमिति। ब्रह्म ते ब्रवाणीति ब्रह्म ज्ञपयिष्यामिति प्रारब्धम्। तत्रेदानीमसंसारि ब्रह्म जगतः कारणमशनायाद्यतीतं नित्यशुद्धबुद्धमुक्तस्वभावं तद्विपरीतश्च संसारी तस्मादहं ब्रह्मास्मीति न गृह्णीयात्। परं हि देवमीशानं निकृष्टः संसार्यात्मत्वेन स्मरन्कथं न 'दोषमाप्नुयात्। 'तस्मान्नाहं ब्रह्मास्मीति युक्तम्।

तस्मात्पुष्पोदकाञ्जलिस्तुतिनमस्कारबल्युपहारस्वाध्यायाध्ययनध्यानयोगादिभिराराधयिषेत्। 'आराधनेन विदित्वा सर्वेशितृ ब्रह्म भवति। न पुनरसंसारि ब्रह्म 'संसार्यात्मत्वेन चिन्तयेदग्निमिव शीतत्वेनाऽऽकाशमिव मूर्तिमत्त्वेन। ब्रह्मात्मत्वप्रतिपादकमपि

---

इति ब्रह्मविद्या प्रसिद्धमिति शेषः। चतुर्थं च ब्रह्मविद्या प्रस्तुतेत्याह—ब्रह्मेति। सत्यमस्ति प्रस्तुता ब्रह्मविद्या सा जीवविद्याऽपि भवति जीवब्रह्मणोरभेदादित्याशङ्क्याऽऽह—तत्रेति। ब्रह्मविद्यायां प्रस्तुतायामिति यावत्। इदानीं न गृह्णीयादिति संबन्धः। मिथोविरुद्धत्वप्रतीत्यवस्थायामित्येतत्। अन्योन्यविरुद्धत्व तच्छब्दार्थः। 'विपक्षे दोषमाह—परमिति।

कथं 'तर्हीश्वरे मतिं कुर्यादित्याशङ्क्य स्वामित्वेनेत्याह—तस्मादिति। आदिपदं प्रदक्षिणादिसंग्रहार्थम्। ऐकात्म्यशास्त्रादात्ममतिरेव ब्रह्मणि कर्तव्येत्याशङ्क्याऽऽह—न पुनरिति। का 'तर्हि

---

प्रकरण प्रस्तुत किया गया है। तथा (ब्रह्मवेत्ताओं को) ब्रह्मविज्ञान ब्रह्मविषयक ही होता है। इसलिए "मैं तुझे ब्रह्म का उपदेश करूँ", "तुझे ब्रह्म का ज्ञान कराऊँगा" इत्यादि श्रुतियों से ब्रह्मज्ञान का उपक्रम किया है। वहाँ क्षुधा-पिपासादि से अतीत, नित्यशुद्ध-बुद्ध-मुक्त स्वभाव, असंसारी ब्रह्म जगत् का कारण कहा गया है, संसारी जीव उससे विपरीत स्वभाव वाला है। इसलिए ब्रह्मविद्या से प्रकरण में "मैं ब्रह्म हूँ" इस प्रकार अपने का ग्रहण नहीं कर सकता है। निकृष्ट अल्पज्ञ संसारी जीव सर्वनियन्ता परमात्मा को आत्मरूप से भावना करके प्रत्यवाय का भागी कैसे नहीं होगा? इसलिए (अभेद अनुसंधान करने वाला दोषभाक् होने से) "मैं ब्रह्म हूँ" ऐसी भावना करना उचित नहीं है।

इसलिए पुष्पाञ्जलि, जलाञ्जलि स्तुति, नमस्कार, बलि, उपहार, स्वाध्याय, भगवद्गुणवर्णनात्मक भेदस्तोत्रों का अध्ययन, और योगादि साधनों द्वारा उसकी आराधना करने की इच्छा करे। (पञ्चरात्रमतानुसारी) आराधना के द्वारा उसे जानकर जीव सर्वनियन्ता ब्रह्म हो जाता है। जिस प्रकार अग्नि को शीतरूप से एवं आकाश को मूर्तरूप से चिन्तन करना उचित नहीं है, उसी प्रकार

---

१ तद्विपरीतश्चेति संसार्यसंसारिणौ नाऽभिन्नौ मिथो विरुद्धत्वात् तमःप्रकाशवदिति तदाशयः। २. दोषभागिति—यथाऽमात्य आत्मानं राजानं भावयन् प्रत्यवैति तथेशमात्मानं पश्यञ्जीवः प्रत्यवेयादिति भावः। ३ अभेदानुसंधातुर्दोषभाक्त्वात्। ४ भगवद्गुणवर्णनात्मकभेदस्तोत्राद्यध्ययनम्। ५ अहं ब्रह्मेति ज्ञानाभावेन मुक्तिस्तमेवेत्यादिश्रुतेरित्याशङ्क्याऽऽह—आराधनेनेति। उक्तं हि भगवता—"मत्कर्मकृन्मत्परम" इत्यादि। 'ये संश्रयन्ति तं भक्त्या सूक्ष्ममध्यात्मचिन्तकाः। ते यान्ति वै पदं विष्णोर्जरामरणवर्जितं' मिति च"॥ ६ संसारी जीवः। ७ अभेदे। ८ तर्हि ईशमात्मानं भावयितुं प्रत्यवायित्वे। ९ तर्हीति—ब्रह्मात्मैक्यज्ञानाभाव इत्यर्थः। ऐक्यप्रतिपादकशास्त्रस्य कथमुपपत्तिः प्रामाण्यम्।

शास्त्रमर्थवादो भविष्यति । सर्वतर्कशास्त्रलोकन्यायैश्च विरोधः स्यात् ।

न । मन्त्रब्राह्मणवादेभ्यस्तस्यैव प्रवेशश्रवणात् । पुरश्चक्र इति प्रकृत्य पुरः पुरुष आविशदिति "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" इति सर्वशाखासु सहस्रशो मन्त्रवादाः सृष्टिकर्तुरेवासंसारिणः शरीरप्रवेशं दर्शयन्ति । तथा ब्राह्मणवादाः—"तत्सृष्ट्वा तदेवानुप्राविशत्" "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" "सेयं देवतेमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" इत्याद्याः । सर्वश्रुतिषु च ब्रह्मण्यात्मशब्दप्रयोगादात्मशब्दस्य च प्रत्यगात्माभिधायकत्वात् "एष सर्वभूतान्तरात्मा"

---

शास्त्रगतिस्तत्राऽऽह—ब्रह्मे ति । मुख्यार्थत्वसंभवे किमित्यर्थवादतेत्याशङ्क्याऽऽह—सर्वे ति । संसारित्वासंसारित्वाविना मिथो विरुद्धयोर्जीवेश्वरयोः शीतोष्णवदैक्यानुपपत्तिर्न्यायः ।

विज्ञानात्मविषयत्वं तदस्येश्वरविषयत्वं सोपनिषदो निवारयन्परिहरति—नेत्यादिना । परस्यैव प्रवेशवादो मन्त्रब्राह्मणवादानुदाहरति—पुर इत्यादिना । मन्त्रस्यहं ब्रह्मे ति न गृह्णीयादिति तत्राऽऽह—सर्वश्रुतिषु चेति ।

---

जीव असंसारी ब्रह्म की आत्मरूप से भावना नहीं कर सकता । आत्मा को ब्रह्मभाव से प्रतिपादन करने वाला शास्त्र भी अर्थवाद ही होगा । उनका अर्थवाद स्वीकार करने पर समस्त युक्ति, शास्त्र और लौकिक न्यायों से अविरोध हो जायगा ।

(सिद्धान्ती उक्त आक्षेप का निरास करता है—) ऐसा कहना ठीक नहीं क्योंकि मन्त्र और ब्राह्मणवाक्यों द्वारा उस परब्रह्म का प्रवेश सुना गया है । "परमात्मा ने दो पैरों वाले शरीर बनाये और चार पैरों वाले शरीर बनाये" इस प्रकार उपक्रम करके "(पहले वह पुरुष पक्षी होकर) शरीरों में प्रविष्ट हो गया", "वह रूप-रूप के प्रतिरूप हो गया, इसका वह प्रतिबिम्बरूप प्रकट करने के लिए है", "जो धीर सम्पूर्ण रूपों की उत्पत्ति करके उनके नाम रखकर उन्हीं के द्वारा बोलता रहता है" इस प्रकार सभी शाखाओं में सहस्रों मन्त्रवाक्य सृष्टि के कर्ता असंसारी ब्रह्म का ही शरीर प्रवेश प्रदर्शित करते हैं । इसी प्रकार "इस जगत की सृष्टि करके वह उसी में प्रविष्ट हो गया", वह इसी ही सीमा को विदीर्ण कर इसी के द्वारा प्रविष्ट हो गया", "उस इस देवता ने सघातात्मा द्वारा परिणत भूतत्रय को त्रिवृत्प्रक्रिया से देवताओं में जीवरूप से अनुप्रवेश करके", "सम्पूर्ण भूतों में छिपा हुआ यह आत्मा प्रकाशित नहीं होता" इत्यादि वाक्य प्रमाण हैं । इसके अतिरिक्त समस्त श्रुतिवाक्यों में 'ब्रह्म' को विषय करके ही 'आत्मा' शब्द का प्रयोग होने से तथा 'आत्मा' शब्द प्रत्यगात्मा का बोधक होने से एवं "यह परमात्मा समस्त भूतों का अन्तरात्मा है" इस मुण्डक श्रुति से परमात्मा से व्यतिरिक्त संसारी

---

१. एवम्—तेषामर्थवादत्वाभ्युपगमे । २. बृ उ. २।५।१८ । ३. बृ उ. २।५।१९ । ४. उपाधिभूत देहम् । ५. प्रतिबिम्ब । ६ प्रतिबिम्बत्वम् । ७ स्वयाथात्म्यप्रख्यापनाय । ८. महावाक्योपनिषदि तै. आ. च । ९. उत्पाद्य । १०. यत्—यः । ११. छा. उ. । १२. सघातात्मना परिणत भूतत्रयम् त्रिवृत्प्रक्रियात्वादिदम् । १३. परमात्मेति यावत् (मु० उ) १४. सत्यस्य सत्यमिति नाम्न. । १५. सिद्धान्ती ।

इति च श्रुतेः परमात्मव्यतिरेकेण संसारिणोऽभावात् "एकमेवाद्वितीयम्" "ब्रह्मैवेदम्" "आत्मैवेदम्" इत्यादिश्रुतिभ्यो युक्तमेवाह ब्रह्मास्मीत्यवधारयितुम् ।

यदैवं[1] स्थितः शास्त्रार्थस्तदा परमात्मनः संसारित्वम् । तथा च[2] सति शास्त्रानर्थक्यमसंसारित्वे चोपदेशानर्थक्य स्पष्टो दोषः प्राप्तः । यदि तावत्परमात्मा सर्वभूतान्तरात्मा[3] सर्वशरीरसंपर्कजनितदुःखान्यनुभवतीति स्पष्टं परस्य संसारित्वं प्राप्तम् । तथा च परस्यासंसारित्वप्रतिपादिकाः श्रुतयः कुप्येरन्स्मृतयश्च सर्वे च न्यायाः । अथ कथंचित्प्राणिशरीरसंबन्धजैर्दुःखैर्न संबध्यत इति शक्यं प्रतिपादयितुं परमात्मनः साध्यपरिहाराभावादुपदेशा-

शास्त्रीयमप्येकत्वमनिष्टप्रसङ्गान्न स्वीकर्तव्यमिति शङ्कते—यदेति । परस्य संसारित्वे तदसंसारित्वशास्त्रानर्थक्यं फलितमाह—तथा चेति । संसारिणोऽन्यस्यापि परस्यासंसारित्वे संसारित्वाभिमनोऽस्य"संसारीत्युपदेशानर्थक्यं तु विनैव मुक्तिसिद्धेरिति दोषान्तरमाह—असंसारित्वे चेति । तत्राऽऽद्यं दोषं विवृणोति—यदि तावदिति । 'न लिप्यते लोकदुःखेन बाह्यः' इत्याद्याः श्रुतयः । 'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते' इत्याद्याः स्मृतयः । "कूटस्थासङ्गत्वादयो न्यायाः । द्वितीयं दोषं "प्रसङ्गमापाद्य प्रकटयति—अथेत्यादिना ।

जीव का अभाव होने के कारण (हे सोम्य ! उत्पत्ति से पूर्व यह दीखने वाला नामरूपात्मक जगत (सजातीय-विजातीय-स्वगतभेदशून्य) एकमात्र अद्वितीय सत ही था", "यह अमृतस्वरूप ब्रह्म ही सबके आगे है", "(विशेष क्या कहें) यह सब कुछ आत्मा ही है" इत्यादि श्रुतियों से "मैं ब्रह्म हूँ" ऐसा निर्णय करना उचित ही है ।

जब इस प्रकार उक्त रीति से शास्त्र का अर्थ अभेद में सिद्ध हो जाता है, तब परमात्मा का संसारी होना मान लिया जाता है । ऐसे में शास्त्र की अनर्थकता हो जाती है और यदि जीव को असंसारी मान लिया जाय, तो उसे उपदेश करना व्यर्थ है, इस प्रकार स्पष्ट दोष प्राप्त हो जाता है । तथा यदि परमात्मा ही सभी भूतों का अन्तरात्मा है तो सभी शरीरों से होने वाले दुःखों को अनुभव करता है, इस प्रकार परमात्मा की संसारित्व प्राप्ति स्पष्ट हो जाती है । परमात्मा के संसारित्व स्वीकृति होने पर परमात्मा को असंसारित्व प्रतिपादक श्रुति स्मृति और युक्तियाँ बाधित हो जाती हैं । एवं यदि किसी प्रकार परमात्मा को 'प्राणियों के शरीर से होने वाले दुःखों से सम्बन्ध न होना' प्रतिपादित कर

१ छा उ । २ नृ उ । ३ नृ उ, छा उ च । ४ उक्तरीत्या । ५ अभेदे । ६ तर्हीति शेषः । ७ परस्य संसारित्वाभ्युपगमे च । ८ अथेत्ययमथशब्दो यद्यर्थकः । कथंचिदिति असङ्गत्वादिश्रुतिबलेनेत्यर्थः । प्राणिशरीरेत्यत्र प्राणशरीरेति पाठान्तरम् । ९ परमात्मन इति—परम् आत्मनः इति च्छेदः । परशब्दः परन्त्वर्थकः । आत्मनः जीवस्य । तदेति शेषः । १० साध्येति—साध्यम् असंसारित्वं परिहार्यं संसारित्वमुपदेशेन तदभावादित्यर्थः । ११ असंसारीति—संसारिणा सहाभेदस्यासंसारित्वप्रयोजकत्वं यतो दृष्टमीश्वरे इत्याशयः । १२ कूटस्थेति—कूटस्थत्वे नावगतस्य श्रुत्या संसारित्वानुपपत्तिः । असङ्गस्य चेत्थंविधा न्याया इति द्वन्द्वार्थः । यद्वा कूटस्थस्यासङ्गत्वादयः कूटस्थत्वेनासङ्गत्वसाधिका युक्तय इत्यर्थः । १३ भूमिकां कृत्वा ।

नर्थक्यदोषो न शक्यते निवारयितुम् ।

[1]अत्र केचित्परिहारमाचक्षते । [2]परमात्मा न साक्षाद्भूतेष्व[3]नुप्रविष्टः स्वेन [4]रूपेण । [5]किं तर्हि विकारभावमापन्नो विज्ञानात्मत्वं [6]प्रतिपेदे । स च विज्ञानात्मा परस्मा[7]दन्योऽनन्यश्च । [8]येनान्यस्तेन संसारित्वसंबन्धी[9] येनानन्यस्तेनाहं ब्रह्मे[10]त्यवधारणार्हः । [11]एवं [12]सर्वमविरुद्धं भविष्यतीति ।

तत्र विज्ञानात्मनो विकारपक्ष एता गतयः । पृथिवीद्रव्यवदनेकद्रव्यसमाहारस्य

दोषद्वये स्वयूथ्यसमाधिमुत्थापयति—अत्रेति । कथं तर्हि तस्य कार्ये [13]प्रविष्टस्य जीवत्व तत्राऽऽह—किं तर्हीति । जीवस्य ब्रह्मविकारत्वेऽपि ततो भेदेनाहं ब्रह्मेति धीरभेदे ब्रह्मणोऽपि संसारितेत्याशङ्क्याऽऽह—स चेति । [14]तथाऽपि कथं शङ्कितदोषाभावस्तत्राऽऽह—येनेति । एवमिति भिन्नाभिन्नत्वपरामर्शः । सर्वमित्युपदेशा[15]दिनिर्देशः ।

एकदेशिमतं निराकर्तुं विकल्पयति[16]—तत्रेति । एता गतय इत्येते पक्षा वक्ष्यमाणाः संभवन्ति न गत्यन्तरमित्यर्थः । यथा पृथिवीशब्दितं द्रव्यमनेकावयवसमुदायस्तथा भूतभौतिकात्मकानेकद्रव्यसमु-

भी लिया जाय तो भी असंसारित्व और संसारित्व उपदेश के अभाव होने के कारण जीव की अनर्थकतारूप दोष से विमुक्ति मिलनी असंभव है ।

कुछ लोग उपरोक्त प्रस्तुत किये हुए मत का इस प्रकार परिहार करते हैं । कार्य और करण का स्पर्श न हो सकने से ईश्वर का अपने अविकृतस्वरूप से साक्षात् अनुप्रविष्ट होना संभव नहीं है । तो फिर स्वरूपप्रवेश किस रूप मे होता है ? ईश्वर ही विकारभाव को प्राप्त होकर जीवात्मत्व को प्राप्त हुआ है और वह जीवात्मा परमात्मा से भिन्न और अभिन्न भी है । जिस रूप से वह भिन्न है, उससे संसारित्व सम्बन्धी है और जिस हेतु से अभिन्न है, उससे "मैं ब्रह्म हूँ" इस प्रकार निर्णय की योग्यता रखता है । भेद और अभेद दोनो रूप स्वीकार कर लेने से असंसारित्व उपदेशादि की सार्थकता सिद्ध हो जायगी ।

(एकदेशीमतनिरास के लिए सिद्धान्ती विकल्प करता है—) उपरोक्त सिद्धान्त मे जीवात्मा

१. अत्र चोदिते एव प्रचोदिते सतीति यावत् । २ तस्य साक्षादप्रवेशे कार्यकरणास्पृष्टत्व हेतुमाह—परमात्मेति । ३ अनुप्रविष्ट ईश्वर इति दोष । ४ अविकृतस्वरूपेण । ५ किं तर्हीति—स्वरूपेणाप्रवेशे किं केन रूपेणेत्यर्थ । ६ जीवात्मत्वम् । ७ प्रतिपेद इति—तथा चेश्वरविकार एव जीव इति भाव । "ममैवांश" इत्यादिशास्त्रात् । ८ अन्योऽनन्यश्चेति—सर्वस्य वस्तुनो भिन्नाभिन्नस्वभावत्वात् (घटत्वद्रव्यत्वादिना) जीवस्यापि वस्तुत्वाद्ब्रह्मणो भिन्नाभिन्नत्व समुद्रतरङ्गवदिति भाव । ९ रूपेण हेतुना वा । १० उक्तरीत्या व्यवस्थायां ब्रह्मणो न संसारित्व नाप्युपदेशवैयर्थ्यमिति फलितमाह—एवमिति । तथा च वार्तिके—"यथोक्तदोषसबन्धो नैव सति भविष्यति । इतोऽन्यथा कल्पनाया यतो दोषेणसंगति " ॥४७२॥ इति । एवस्य भिन्नाभिन्नत्व विरुद्धत्वादनिष्टमित्याशङ्क्य समुद्रतरङ्गादिन्यायेन नैवमित्याह—इत इति । अत्यन्त भिन्नत्वेऽभिन्नत्वे वा कल्प्यमाने नोपदेशार्थवत्ता नापि ब्रह्मणोऽसंसारिता तद्भिन्नाभिन्नता पारिशेष्यादित्यर्थ ॥ ११. एव भेदाभेदाभ्युपगमे । १२ प्रवेश इति पाठान्तरम् । १३ जीवस्य परभिन्नाभिन्नत्वेऽपि । १४. आदि असंसारित्वोपदेशसार्थक्यस्पृक् । १५ सिद्धान्ती ।

सावयवस्य परमात्मन एकदेशविपरिणामो विज्ञानात्मा घटादिवं[1]त्पूर्वसंस्थानावस्थस्य वा परस्यैकदेशो विक्रियते केशोपरादिवत्सर्व एव वा परः परिणमेत्क्षीरादिवत् । तत्र समानजातीयानेकद्रव्यसमूहस्य[2] कश्चिद्द्रव्यविशेषो विज्ञानात्मत्वं प्रतिपद्यते यदा तदा च समानजातीयत्वादेकत्वमु[3]पचरितमेव न तु [4]परमार्थतः । [5]तथा च सति [6]सिद्धान्तविरोधः ।

[7]अथ [8]नित्यायुतसिद्धावयवानुगतोऽवयवी पर आत्मा तस्य तदवस्थस्यैकदेशो

दाय. सावयवः परमात्मा तस्यैकदेशश्चैतन्यलक्षणस्तद्विकारो जीवः पृथिव्येकदेशमृद्विकारघटशरावादिवदित्येक· कल्पः । यथा भूमेरूपरादिदेशो नगरदेशादिर्वा पुरुषस्य विकारस्तथाऽवयविनः परस्यैकदेशविकारो जीव इति द्वितीयः कल्प. । यथा क्षीरं स्वर्णं वा सर्वात्मना दधिरुचकादिरूपेण परिणमते तथा कृत्स्न एव परो जीवभावेन परिणमेदिति कल्पान्तरम् । तत्राऽऽद्यमनूद्य दूषयति—तत्रेत्यादिना । नानाद्रव्याणां समाहारो वा तानि वाऽन्योन्यापेक्षाणि परश्चेन्न तस्यैक्यं स्यान्नहि[9] बहूना मुख्यमैक्यं समाहारस्य च समुदायापरपर्यायस्य समुदायिभ्यो भेदाभेदाभ्या [10]दुर्भणत्वेन [11]कल्पितत्वादित्यर्थ· । [12]तर्हि ब्रह्मणो मुख्यमैक्य मा भूत्तत्राऽऽह—तथा चेति । न हि तन्नानात्व [13]कस्यापि समतमिति भावः ।

द्वितीयमनूद्य निराकरोति—अथेत्यादिना । सर्वदैवापृथगवस्थितेष्ववयवेषु जीवेष्वनुस्यूतश्चेतनोऽवयवी परश्चेत्तर्हि यथा प्रत्यवयव मलससर्गे देहस्य मलिमत्वं तथा परस्य जीवगतैर्दु खमेहद्दु खं

को परमात्मा का विकार मानने के पक्ष मे ये तीन गतियाँ सभव हैं। प्रथम, पृथिवीद्रव्य के समान (भूतभौतिक) अनेक द्रव्यों के सघातरूप सावयव परमात्मा का जीवात्मा घटादि के समान एकदेशी विपरिणाम है, अथवा दूसरे अनुपमर्दित अपने पूर्वरूप मे स्थित ईश्वर का केश या ऊसर भूमि के समान एक ही देश मे विकार होता है, अथवा तीसरे दूध, सुवर्ण से दही और आभूषण के समान सारा ही परमात्मा विकारभाव को प्राप्त हो जाता है। उक्त तीनो विकल्पो मे से यदि समानजाति वाले अनेक द्रव्यो के सघात का कोई द्रव्यविशेष परमात्मा ही जीवात्मभाव को प्राप्त होता है, तो समानजातीय होने के कारण उनका एकत्व गौण होगा, मुख्य नही । ईश्वर के मुख्य, ऐक्य स्वीकार न करने पर सर्वसिद्धान्त मे विरोध आने लगेगा ।

तथा पक्षान्तर मे यदि ईश्वर अयुतसिद्ध अवयवो मे अनुगत अवयवी है और उसी रूप मे स्थित हुए उस ईश्वर का एकदेश ससारी जीवात्मा है, तो भी अवयवगत गुण या दोष समस्त अवयवो मे अनुगत रहने के कारण अवयवी मे ही रहेगा, इस प्रकार जीवात्मा के ससारित्वरूप दोष से ईश्वर

१ अनुपमर्दितपूर्वावस्थस्य । २ परमात्मन । ३ गौणम् । ४ मुख्यम् । ५ परस्य मुख्यैक्यानभ्युपगमे । ६ सर्वसिद्धान्तविरोध । ७ पक्षान्तरे । ८ नित्यति—न पूर्वोक्तस्वरूप पर किन्तु सतत मिथ सबन्धेष्ववयवेषु जीवेष्वेकमवयविद्रव्यमनुवर्तमान ब्रह्म तस्यानुपमर्दितपूर्वावस्थस्य परिणामो जीव ससारितामगादित्यर्थ । ९ ननु बहूना खण्डमुण्डादीनामेकगोत्वयोगादेकत्ववत् बहुष्वपि द्रव्येष्वेकजातिद्वारकमेकत्व स्यादित्याशङ्क्याऽऽह—न हीति । १० दुर्भणत्वेनेति—दुर्निरूप्यत्वेनेत्यर्थ । तथाहि न, तावत्समुदाय समुदायिभ्यो भिन्नस्तद्व्यतिरेकेण तत्स्वरूपानुपलम्भात् । नाप्यभिन्न प्रत्येकस्मिन् समुदायिनि समुदायव्यवहारापत्ते मिथ समुदायिनामभेदापत्तेश्च तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् । ११ कल्पितत्वादिति—न परत्वमिति शेष । अवस्तुत्वादित्यथ । १२ यथोक्तपक्षे मुख्यैक्यासभवे । १३ वादिन प्रतिवादिन उदासीनस्य मध्यस्थस्य च ।

विज्ञानात्मा संसारी तदाऽपि सर्वावयवानुगतत्वादवयविन एवावयवगतो दोषो गुणो वेति विज्ञानात्मनः संसारित्वदोषेण पर एवाऽऽत्मा संबध्यत इतीयमप्यनिष्टा कल्पना। क्षीरवत्सर्वपरिणामपक्षे सर्वश्रुतिस्मृतिकोपः, स चानिष्टः।

"निष्कलं निष्क्रियं शान्तम्" "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः" "आकाशवत्सर्वगतश्च नित्यः" "स वा एष महानज आत्माऽजरोऽमरोऽमृत." "न जायते म्रियते वा कदाचित्" "अव्यक्तोऽयम्" इत्यादिश्रुतिस्मृतिन्यायविरुद्धा एते सर्वे पक्षाः। अचलस्य परमात्मन एकदेशपक्षे विज्ञानात्मन. कर्मफलवद्देशसंसरणानुपपत्ति.। परस्य वा संसारित्वमित्युक्तम्"।

स्यादिति प्रथमकल्पनावद्द्वितीयाऽपि कल्पना युक्तेत्यर्थः। तृतीयं प्रत्याह—क्षीरवदिति। "न जायते म्रियते वा विपश्चित्' इत्याद्याः श्रुतयः। 'न जायते म्रियते वा कदाचित्' इत्याद्याः स्मृतयः। श्रुत्यादिकोपस्येष्टत्वमाशङ्क्य वैदिकं प्रत्याह—स चेति।

श्रुतिस्मृती विवेचयन्पक्षत्रयसाधारणं दूषणमाह—निष्कलमित्यादिना। कूटस्थस्य निरवयवस्य कार्त्स्न्यैकदेशाभ्यां परिणामासंभवो न्यायः। जीवस्य परमात्मैकदेशत्वे दोषान्तरमाह—अचलस्येति। एकदेशस्यैकदेशिव्यतिरेकेणाभावाज्जीवस्य स्वर्गादिषु गत्यनुपपत्तिरित्युक्तमन्यथा" परस्यापि गतिः स्यान्नहि पटावयवेषु चलत्सु पटो न चलतीत्याह—परस्य वेति। उक्तं यदि तावत्परमात्मैकत्या'वादिति शेषः।

का ही सम्बन्ध सिद्ध होता है। इस प्रकार यह भी एक अनिष्ट कल्पना है। दुग्ध-सुवर्ण का दही-रुचक के समान सम्पूर्णरूप मे परमेश्वर का परिणाम मानने वालो के पक्ष में भी समस्त श्रुति-स्मृतियो से असगति होती है, (वेद में विश्वास की अभिव्यक्ति करने वालो के मत मे) यह भी अनिष्ट-कल्पना है।

"वह कला रहित है अत क्रिया शून्य (असङ्ग-उदासीनरूप म स्थित) शान्त है", '(वह अक्षर ब्रह्म स्वयप्रकाश होने के कारण) निश्चय ही दिव्य आकार रहित, बाहर-भीतर अधिष्ठानरूप और कूटस्थ है', "वह आकाश क समान सर्वगत और नित्य है", "वही यह अजन्मा, आत्मा, महान्, अजर अमर, अमृत एव अभय ब्रह्मरूप है", 'यह आत्मा न कभी उत्पन्न होता है और न कभी मरता है", 'वह अव्यक्त रूप से स्थित है" *(आत्मा विमल व्योम के समान स्थित है।)* इत्यादि श्रुतिवाक्य यही सिद्ध करते है कि उक्त तीनो-विकल्प श्रुति, स्मृति और युक्ति के प्रतिकूल हैं (अत प्रयत्न द्वारा उक्त सभी पक्ष त्याज्य है)। कूटस्थ ईश्वर के एकदेश मे जीवात्मा है, इस विकल्प म जीवात्मा का कर्मफल वाले स्वर्गादि देशविशेष म जाना असभव है, तथा परमेश्वर की ससारित्वप्राप्ति आपके द्वारा पहले ही

१ वेदे बद्धावस्थस्येति शेष। २ श्वे उ ६ १९। ३ अत। ४ असङ्गोदासीनतया स्थितम्। ५ [illegible] उ २ २। ६ बाह्याभ्यन्तराधिष्ठान। ७ कूटस्थ। ८ बृ उ ४।४।२४। ९ विमल व्योमवत्स्थितम्। १० त्याज्यास्तेऽत्र प्रयत्नत। ११ कूटस्थस्य। १२ कर्मफलवन्त देश स्वर्गादिक प्रति। १३ भवद्भिरेवेति शेष। १४ क उ १ २ १८। १५ 'एष महानज आत्मा'। १६ 'अविकार्योऽयमुच्यते'। १७ गत्यभ्युपगमे। १८ बृ उ ४११ पृष्ठभाष्ये।

परस्यैकदेशोऽग्निविस्फुलिङ्गवत्स्फुटितो[1] विज्ञानात्मा संसरतीति चेत्तथाऽपि[2] परस्यावयवस्फुटनेन क्षतप्राप्तिस्तत्संसरणे च परमात्मप्रदेशान्तरावयवव्यूहे छिद्रताप्राप्तिर व्रणत्वयाक्यविरोधश्च । आत्मावयवभूतस्य विज्ञानात्मनः संसरणे परमात्मशून्यप्रदेशाभावादवयवान्तर[4]नोदनव्यूहनाभ्यां हृदयशूलेनेव परमात्मनो [5]दुःखित्वप्राप्तिः । ।

अग्निविस्फुलिङ्गादिदृष्टान्तश्रुतेर्न दोष इति चेन्न । श्रुतेर्ज्ञापकत्वात् । न शास्त्रं

जीवस्य संसारित्वेऽपि परस्य तन्नास्तीति शङ्कते—परस्येति । परस्य निरवयवत्वश्रुतेरवयवस्फुटनानुपपत्तिं मन्वानो दूषयति—तथाऽपीति । यत्र परस्यावयवः स्फुटति तत्र तस्य क्षतं प्राप्नोति तदीयावयवसंसरणे च परमात्मनः प्रदेशान्तरेऽवयवानां व्यूहे सत्युपचयः स्यात्तथाच परस्यावयवा यतो निर्गच्छन्ति तत्र छिद्रताप्राप्तिर्यत्र च ते गच्छन्ति तत्रोपचयः स्यादित्यकायमव्रणमस्थूलमनण्वह्रस्वमित्यादिवाक्यविरोधो भवेदित्यर्थः । परस्यैकदेशो विज्ञानात्मेति पक्षे दुःखित्वमपि तस्य दुर्वारमापतेदिति दोषान्तरमाह—आत्मावयवेति ।

मृल्लोहविस्फुलिङ्गदृष्टान्तश्रुतिवशात्परस्यावयवा जीवाः सिध्यन्तीत्यतो जीवानां परैकदेशत्वे नोक्तो दोषोऽवतरति श्रुत्यपेक्षया श्रुतेर्बलवत्त्वादिति शङ्कते—अग्निविस्फुलिङ्गादीति । शास्त्रार्थो युक्तिविरुद्धो न सिध्यतीति दूषयति—न श्रुतेरिति । नजर्थं विवृणोति—न शास्त्रमिति । हेतुभाग-

प्रतिपादित की जा चुकी है।

यदि कहो कि अग्नि से चिनगारी के समान परमात्मा का एकदेश रूप जीवात्मा उससे वियुक्त होकर संसरण करता है, तो भी जीव के अवयव के स्फुटित अंश होने से परमात्मा में क्षतप्राप्ति होगी, तथा उसके संसरण होने पर परमेश्वर के अन्य देशस्थ अवयवसंघात में छिद्रता की भी प्राप्ति होगी। "वह आत्मा सूक्ष्मशरीर से रहित अक्षत है" इस ईशोपनिषद्वाक्य में विरोध आने लगेगा। परमेश्वर के अवयवभूत जीवात्मा के संसरण होने पर से शून्य देश का सर्वथा अभाव होने के कारण आत्मा के अवयवभूत जीवात्मा के संसरण होने पर परमात्मा को हृदयशूल के समान दुःख की प्राप्ति होगी। अवयवान्तर के निर्गमन और समूहन के कारण परमात्मा को हृदयशूल के समान दुःख की प्राप्ति होगी।

(यहाँ पूर्वपक्षी शङ्का करता है—) किन्तु "अग्नि की चिनगारियों" आदि का दृष्टान्त प्रति-

१ परस्माद्वियुक्तः । २ तथापि—परस्मादात्मनोऽग्नेर्विस्फुलिङ्गवत् स्फुटितोऽंशो जीवः तस्य च गतिरिति स्वदुक्ताभ्युपगमेऽपि । ३ अकायमव्रणम् (ई० उ० ८) । ४ निर्गमसमूहनाभ्याम् । नोदनेति—"वारिणो मत्स्यसंचारे छिद्रसंघने यथा । भवन्तु तद्वज्जीवेषु प्राप्नुतः परमात्मनः ॥वा० ४८८॥ ५ दुःखित्वेति—जीवस्य संचरणमुपेत्यैदमुक्तं वस्तुतस्तदेव नास्तीत्याहुर्वार्तिकाचार्यास्तथाहि—"स्वकारणातिरेकेण वृत्तिः कार्यस्य नान्यतः ॥ परमात्मैकवृत्तित्वात्कुतो जीवस्य संसृतिः । स्वप्नसंचारवत्तस्माज्जीवसंचार इष्यते ॥ स्थास्नुष्वपि महद्दुःखं कण्टकादिषु देहिनाम् । परमात्मनो महद्दुःखं जीवसंचरणेऽप्यतः ॥४८९ ४९१॥ इति । उक्तं सामान्यन्याय प्रकृते योजयति—परमेति । कथं तर्हि तस्य संचरणधीर्भ्रान्त्येत्याह—स्वप्नेति ॥ तत्संचारो वस्तुतस्त्वया नेष्टश्चेन्मयाऽपि भ्रान्त्योपेतस्तेन स्थास्नवस्ते ब्रह्मवदित्याशङ्क्याऽऽह—स्थास्नुष्विति । ६ ज्ञापकत्वं हि भवति प्रमाणस्य न कारकत्वम् । ७ यद्देशावच्छेदेन । ८ समूहे । ९ परमात्मानि क्षतोपचयस्वीकारे च । १० तयोरशाशित्वादेः शास्त्रासिद्धत्वात् । ११ नोक्तः—अनन्तस्य परमात्मन इत्यारभ्योक्तः ।

१२ नावतरति—तन्नित्यत्वादेरपि शास्त्रत एव सिद्धेरिति भावः । १३ प्रतिज्ञाभागम् ।

'पदार्थानन्यथा 'कर्तुं प्रवृत्तम् । किं 'तर्हि 'यथाभूतानामज्ञातानां ज्ञापने । 'किंचातः । शृण्वतो यद्भवति । 'यथाभूता 'मूर्तामूर्तादिपदार्थधर्मा' लोके प्रसिद्धास्तद्दृष्टान्तो'पादानेन 'तदविरोध्येव वस्त्वन्तरं ज्ञापयितुं प्रवृत्तं शास्त्रं न लौकिकवस्तुविरोधज्ञापनाय लौकिकमेव दृष्टान्तमुपादत्ते । उपादीयमानोऽपि दृष्टान्तोऽनर्थकः स्याद्दार्ष्टान्तिकासंगतेः" । न ह्यग्निः शीत आदित्यो न तपतीति वा "दृष्टान्तशतेनापि प्रतिपादयितुं शक्यम् । "प्रमाणान्तरेणान्यथाधिगतत्वाद्वस्तुनः ।

साकाङ्क्षापूर्वकं विभजते—किं तर्हीति । स्मृत्यादिव्यावृत्त्यर्थमज्ञातानामित्युक्तम् । अस्तु शास्त्रमज्ञातार्थज्ञापकं तथाऽपि परस्य नास्ति सावयवत्वमित्यत्र किमायातमिति पृच्छति—किंचात इति । शास्त्रस्य यथोक्तस्वभावत्वे यत्परस्य निरवयवत्वं फलति तदुच्यमानं समाहितेन श्रोतव्यमित्याह—शृण्विति । "तत्र प्रथमं लोकाविरोधेन शास्त्रप्रवृत्तिं दर्शयति—यथेति । आदिपदेन भावाभावादि गृह्यते । पदार्थस्येव धर्मत्वं"पारतन्त्र्याद्धर्मशब्दस्तेषां लोकप्रसिद्धपदार्थानां दृष्टान्तानामुपन्यासेनेति यावत् । तदविरोधि लोकप्रसिद्धपदार्थविरोधीत्यर्थः । वस्त्वन्तरं निरवयवादि दार्ष्टान्तिकम् । तदविरोध्येवेत्येवकारस्य व्यावर्त्यमाह—न लौकिकेति । विपक्षे दोषमाह—उपादीयमानोऽपीति । सामान्येनोक्तमर्थं दृष्टान्तविशेषनिविष्टतया स्पष्टयति—न हीति । अग्नेरुष्णत्वमादित्यस्य तापकत्वमन्यथेत्युच्यते ।

पादन करने वाली श्रुति होने के कारण ऐसा मानने में भी कोई दोष नहीं (इसपर सिद्धान्ती कहता है—) ऐसा कहना ठीक नहीं क्योंकि श्रुति के प्रमाणों की नकारात्मकता सिद्ध होती है। शास्त्र प्रत्यक्षादिप्रमा से निश्चित हुए पदार्थों का अन्यथा करने के लिए प्रवृत्त नहीं होता। तो फिर क्या करने के लिए प्रवृत्त होता है? यथास्वरूप यथास्थित अज्ञात अर्थों का ज्ञान कराने के लिए प्रवृत्त होता है। शास्त्र के अज्ञातज्ञापन स्वभाव होने पर भी परमात्मा के निरवयवस्वरूप होने पर क्या उपलब्धि हुई? इससे जो होता है, वह सुनिये। लोकव्यवहार में जिस प्रकार के स्थूल-सूक्ष्मादि पदार्थ यानी धर्म प्रसिद्ध हैं, उन्हें दृष्टान्त के द्वारा लोकप्रसिद्ध पदार्थ के अविरोधी एक अन्य वस्तु को बतलाने के लिए शास्त्र प्रवृत्त होता है। वह लौकिक वस्तुओं का विरोध ज्ञापन करने के लिए लौकिक दृष्टान्तों को ही ग्रहण नहीं करता। दार्ष्टान्तिक से वैषम्य होने के कारण ऐसा दृष्टान्त ग्रहण किए जाने पर भी व्यर्थ ही होगा। अग्नि शीतस्वभाव वाली है, अथवा सूर्य तपनशील नहीं है, यह बात सैकड़ों अनुमानों से भी प्रतिपादित नहीं हो सकती है क्योंकि प्रत्यक्षादि अन्य प्रमाणों से वह वस्तु दूसरे प्रकार की जानी जाती है।

एक प्रमाण का दूसरे प्रमाण से (लौकिक-वैदिक व्यवहार में) विरोध भी नहीं होता। जो वस्तु एक प्रमाण से नहीं ज्ञात होती, उसी को दूसरा प्रमाण ज्ञात करवाता है। लौकिक पद और

१. प्रत्यक्षादिमाननिश्चितान् । २ तर्हि किं कर्तुं प्रवृत्तम् । ३ यथास्वरूपाणां यथास्थितानामर्थानाम् । ४. शास्त्रस्याज्ञातज्ञापनस्वभावत्वेऽपि परस्य निरवयवत्वे किं लब्धम् । ५. यादृशा । ६ स्थूलसूक्ष्माः । ७. पदार्था एव धर्माः । ८ उपन्यासेन । ९ लोकप्रसिद्धपदार्थाविरोधि । १०. असम्बन्धात्—असाम्यात् वैषम्यादिति यावत् । ११. अनुमानशतेनापीति यावत् । १२ प्रत्यक्षादिना । १३. शास्त्रस्य यथोक्तस्वभावत्वे स्थिते सति । १४. पारतन्त्र्यं हि धर्मलक्षणम् ।

न च प्रमाणं प्रमाणान्तरेण विरुध्यते। 'प्रमाणान्तराविषयमेव हि प्रमाणान्तरं ज्ञापयति। न च लौकिकपदपदार्थाश्रयणव्यतिरेकेणाऽऽगमेन शक्यमज्ञातं वस्त्वन्तरमवगमयितुम्। 'तस्मात्प्रसिद्धन्यायमनुसरता 'न शक्या परमात्मनः 'सावयवांशांशित्वकल्पना परमार्थतः प्रतिपादयितुम्'।

क्षुद्रा विस्फुलिङ्गा ममैवांश इति च श्रूयते स्मर्यते चेति चेन्न। 'एकत्वप्रत्ययार्थपरत्वात्। अग्नेर्हि विस्फुलिङ्गोऽग्निरेवेत्येकत्वप्रत्ययार्हो दृष्टो लोके। 'तथा चांशोऽंशि-

ननु लौकिकं प्रमाणं लौकिकपदार्थाविरुद्धमेव स्वार्थं समर्पयति वैदिकं पुनरपौरुषेयं तद्विरुद्धमपि स्वार्थं प्रमापयेदलौकिकविषयत्वादत आह—न चेति। ननु श्रुतेरज्ञातज्ञापकत्वे लोकानपेक्षत्वात्तद्विरोधेऽपि का हानिस्तत्राऽऽह—न चेति। लोकावगतसामर्थ्यं शब्दो वेदेऽपि बोधक इति न्यायात्तदनपेक्षा श्रुतिर्नाज्ञातं ज्ञापयितुमलमित्यर्थः। शास्त्रस्य लोकानुसारित्वे सिद्धे फलितमाह—तस्मादिति। प्रसिद्धो न्यायो लौकिको दृष्टान्तः। न हि निरयस्याऽऽकाशादेः सावयवत्वं परश्च निरयोऽभ्युपगतस्तस्य सावयवत्वेनांशांशित्वकल्पना वस्तुतः सम्भवति लोकविरोधादित्यर्थः।

जीवस्य परांशत्वानङ्गीकारे श्रुतिस्मृत्योर्गतिर्वक्तव्येति शङ्कते—क्षुद्रा इति। तयोर्गतिमाह—नेत्यादिना। विस्फुलिङ्गे दर्शितं न्यायं सर्वत्रांशमात्रेऽतिदिशति—तथा चेति। दृष्टान्ते यथोक्तमीश्वा

पदार्थों के आश्रय के अभाव में शास्त्र के द्वारा किसी दूसरी अज्ञात वस्तु का ज्ञान नहीं हो सकता। इसलिए (अवतरण के उक्त अर्थ के लिए) इस प्रसिद्ध न्याय का अनुसरण करने वाले पुरुष के द्वारा परमात्मा की सावयवरूप से अंश और अंशित्वकल्पना (शास्त्र द्वारा) परमार्थतः प्रतिपादन करना संभव नहीं है।

यदि कहो कि 'क्षुद्र चिनगारियाँ जैसे अग्नि से उड़ती हैं' इत्यादि श्रुतिवाक्य एवं 'ईश्वर का जीवभूत अंश सनातन और मेरा ही अंश है" इत्यादि स्मृतिवाक्य भी उपरोक्त पक्ष प्रस्तुत करते हैं, तो ऐसा कहना उचित नहीं है क्योंकि वे तो ऐकात्म्यप्रतिपत्ति के लिए हैं। अग्नि की चिनगारी अग्निरूप होती है, इस प्रकार लोकव्यवहार में अग्नि से अभेदनिश्चय का विषय देखा जाता है।

१ ननु तत्त्वमस्यादिवाक्यमध्यक्षादिविरुद्धार्थबोधि दृष्टमित्याशङ्क्याऽऽह—प्रमाणान्तराविषयमेव होति। तथा च वार्तिके—'मानान्तरविरुद्धं च न च मानं सदिष्यते। मानान्तरेणासंव्याप्ते मेये स्यान्मानता यतः॥ तथा पदतदर्थांश्च लिङ्गप्रत्यक्षगोचरान्। मानादृत्याऽऽगमेनार्थमज्ञातं वक्ति कश्चन॥४६७ ४६८॥ इति॥ तत्र हेतुमाह—मानान्तरेणेति॥ कल्पितद्वैतविषयाध्यक्षाद्यगोचरे वस्तुनि वस्तुतोऽद्वये शास्त्रप्रामाण्याद्भिन्नविषयतया विरोधसमाधिमुक्त्वा तदविरोध एव हेत्वन्तरमाह—तथेति। तेन न विरोधो मानान्तरेण शास्त्रस्येति शेषः॥ २ अवतरणोक्तार्थम्। ३ न शक्येति। तथा च वार्तिके—'लोकप्रसिद्धन्यायार्थैरंशांशित्वादिकल्पना। परात्मनः कल्पयितुं नातो युक्ता कथंचन' ॥४६९॥ इति। लोकप्रसिद्धन्याया विस्फुलिङ्गादयो दृष्टान्तास्तैरर्थैरग्न्यादिवत्परस्यांशित्वादिकल्पना न स्वीकर्तुं युक्ता तन्निष्फलत्वादद्वयत्वादिशास्त्रविरोधादतो दृष्टान्तश्रुतेन विरुद्धार्थबोधितेत्यर्थः॥ ४ सावयवत्वेनांशांशित्वकल्पना। ५ शास्त्रेणेति शेषः। ६ एकत्वनिश्चयरूपेऽर्थे श्रुतिस्मृत्योस्तात्पर्यवत्त्वात् ऐकात्म्यप्रतिपत्त्यर्थत्वादिति यावत्। ७ अग्न्यभेदनिश्चयविषयः। ८ तथैव। ९ स्वार्थसमर्पकः। १० नित्यत्वात्। ११ भवति विषयः।

मैकत्वप्रत्ययार्हः। तत्रैवं सति विज्ञानात्मनः परमात्मविकारांशत्ववाचकाः शब्दाः परमात्मैकत्वप्रत्ययाधित्सवः। उपक्रमोपसंहाराभ्यां च। सर्वासु ह्युपनिषत्सु पूर्वमेकत्वं प्रतिज्ञाय दृष्टान्तैर्हेतुभिश्च परमात्मनो विकारांशादित्वं जगतः प्रतिपाद्य पुनरेकत्वमुपसंहरति। तद्यथेहैव तावदिदं सर्वं यदयमात्मेति प्रतिज्ञायोत्पत्तिस्थितिलयहेतुदृष्टान्तैर्विकारविकारित्वाद्येकत्वप्रत्ययहेतून्प्रतिपाद्यानन्तरमबाह्यमयमात्मा ब्रह्मेत्युपसंहरिष्यति। तस्मादुपक्रमोपसंहाराभ्यामयमर्थो निश्चीयते परमात्मैकत्वप्रत्ययद्रढिम्ने उत्पत्तिस्थितिलयप्रतिपादकानि वाक्यानीति। अन्यथा वाक्यभेदप्रसङ्गाच्च।

स्थिते दार्ष्टान्तिकमाह—तत्रेति। परमात्मना सह जीवस्यैकत्वविषयं प्रत्ययमाधातुमिच्छन्तीति तथोक्ताः। तेषामेकत्वप्रत्ययाधायकत्वहेतुत्वे हेत्वन्तरं संगृह्णाति—उपक्रमेति। तदेव स्फुटयति—सर्वासु हीति। उक्तमर्थमुदाहरणनिष्ठतया विभजते—तद्यथेति। इहेति प्रकृतोपनिषदुक्तिः। आदिशब्देनाशाशित्वादि गृह्यते। विवृतं संग्रहवाक्यमुपसंहरति—तस्मादिति। तेषां स्वार्थनिष्ठत्वे दोषं वदन्नेकत्वप्रत्ययार्थत्वे हेत्वन्तरमाह—अन्यथेति।

उसी प्रकार अंशी के साथ अंश भी अभेदनिश्चय का विषय है। ऐसा समझ लेने पर जीवात्मा को परमात्मा का विकार या अंश बतलाने वाले शब्द परमात्मा के साथ उसकी ऐकात्म्यप्रतिपत्ति कराने के लिए है। उपक्रम और उपसंहारपरक श्रुतिवाक्य से ऐकात्म्यप्रतिपत्ति सिद्ध होती है। समस्त उपनिषन्मन्त्रो मे पहले जीवात्मा और परमात्मा के एकत्व की प्रतिज्ञा कर दुन्दुभि आदि दृष्टान्त एवं तज्जन्यत्वादिरूप हेतुओं के द्वारा जगत् को परमात्मा का विकार या अंशादि बतलाकर पुन, उनके ऐकात्म्य का उपसंहार किया है। जैसा कि यहाँ भी उपनिषत् मे "यह जो कुछ है, यह सब एकमात्र आत्मतत्त्व ही है (क्योंकि आदि, मध्य और अन्त मे आत्मा को छोडकर पृथक् इनकी उपलब्धि नही होती है" ऐसी प्रतिज्ञा कर उत्पत्ति, स्थिति एवं लयरूप उक्त हेतु और दृष्टान्तो द्वारा उनके ऐकात्म्यप्रतिपत्ति के हेतुभूत विकार और विकारित्वादि का प्रतिपादन कर "वह यह ब्रह्म (कारणरहित, करणरहित, विजातीय द्रव्य) संसर्गशून्य और अबाह्य है", "यह आत्मा ही सब का अनुभव करने वाला परमात्मा है" इस प्रकार उपसंहारात्मक श्रुतिवाक्य का प्रतिपादन किया जाएगा। अत, उपक्रम और उपसंहार के द्वारा यह अर्थ निश्चित होता है कि जगत् की उत्पत्ति, स्थिति और लय का प्रतिपादन करने वाले श्रुतिवाक्य परमात्मा के लिए उसकी ऐकात्म्यप्रतिपत्ति की दृढता कराने के लिए है। ऐसा न मानने से वाक्यभेद का प्रसङ्ग आ जायगा।

सभी उपनिषदो मे परमात्मा के साथ जीवात्मा के ऐकात्म्यज्ञान का उपदेश किया जाता है, आगम के तात्पर्य जानने वालो को इसमे जरा भी संशय नही है। उत्पत्त्यादिवाक्यो को भी उस

१ अभेदनिश्चयविषय। २ ऐकात्म्यप्रतिपत्त्यर्था इति यावत्। ३ जीवपरयो। ४ दुन्दुभ्यादिभि। ५ तज्जन्यत्वादिरूपैं। ६ अत्रैवोपनिषदि। ७ बृ उ २।४।७। ८ उक्तैः। ९ कार्यकारणजातिव्यक्तिवर्जितम्। १० अनेन प्रत्यगभेद प्रादर्शि। ११ बृ उ २।५।१९। १२ आदिमध्यावसानेषु श्रुतेरेकरूपत्वात्। १३ निश्चयम्। १४ सृष्टिवाक्यानामैकात्म्यप्रतिपत्तौ तात्पर्यवत्त्व। १५ संगृहीतहेतुत्वमेव। १६ विवृणोति। १७ सृष्टिवाक्यानाम्।

सर्वोपनिषत्सु हि विज्ञानात्मनः परमात्मनैकत्वप्रत्ययो विधीयत इत्यविप्रतिपत्तिः सर्वेषामुपनिषद्वादिनाम् । तद्विध्येकवाक्ययोगे च संभवत्युत्पत्त्यादिवाक्यानां वाक्यान्तरत्व-कल्पनायां न प्रमाणमस्ति । फलान्तरं च कल्पयितव्यं स्यात् । तस्मादुत्पत्त्यादिश्रुतय आत्मैकत्वप्रतिपादनपराः ।

अत्र च संप्रदायविद आख्यायिकां संप्रचक्षते—कश्चित्किल राजपुत्रो जातमात्र

"संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते" इति न्यायेनोक्तं प्रपञ्चयति—सर्वोपनिषत्स्विति । किंच तेषां स्वार्थनिष्ठत्वे श्रुतफलाभावात्फलान्तरं कल्पनीयम् । न चैकत्वप्रत्ययशेषतया तत्फले निराकाङ्क्षेषु तेषु तत्कल्पना युक्ता । दृष्टे सत्यदृष्टकल्पनानवकाशादित्याह—फलान्तरं चेति । उत्पत्त्यादिश्रुतीनां स्वार्थनिष्ठत्वासंभवे फलितमुपसंहरति—तस्मादिति ।

तत्त्वमस्यादिवाक्यमैक्यपरं तच्छेषः सृष्ट्यादिवाक्यमित्युक्तेऽर्थे द्रविडाचार्यसंमतिमाह—अत्र चेति । तत्र दृष्टान्तरूपामाख्यायिकां प्रणयति—कश्चिदिति । जातमात्रे प्रागवस्थायामेव राजा-ऽस्मीत्यभिमानाभिव्यक्तेरित्यर्थः । ताभ्यां तत्परित्यागे निमित्तविशेषस्यानिश्चितत्वद्योतनार्थं किलेत्यु-

"तत्त्वमसि" इत्यादि वाक्य के साथ ऐक्यविधि के साथ शेषशेषित्वभाव संभव होने पर उन्हें विभिन्न अर्थों का प्रतिपादन करने वाला मानने में कोई प्रमाण नहीं है। इसके अतिरिक्त ("फलवत्सन्निधौ अफलं तदङ्गम्" इस न्याय के विरोध से) फलान्तर की कल्पना करनी पड़ेगा। इसलिए उत्पत्त्यादि श्रुतियाँ जीवात्मा-परमात्मा का ऐकात्म्यज्ञान स्थापित करती हैं।

(ब्रह्मात्मैक्य ही समस्त वेदान्तों का सार है, इस अभीष्ट अर्थ में) यहाँ साम्प्रदायिक लोग यह आख्यायिका कहते हैं—किसी राजपुत्र का, जन्मते ही माता-पिता द्वारा त्यक्त कर दिये जाने पर व्याध के घर में लालन-पालन किया गया। वह राजपुत्र अपनी राजा की स्वनिष्ठ वंश-परम्परा को न जानने के कारण अपने को व्याधजाति का ही मानकर व्याधजाति के कर्मों का ही अनुशीलन करता था; "मैं राजा हूँ" ऐसा मानकर राजोचित किसी कर्म का भी अनुशीलन नहीं करता था। फिर जब परम करुणालु पुरुष, जो राजपुत्र की राज्यलक्ष्मी-प्राप्ति की योग्यता जानता है, उसे उसकी राजपुत्रता

१. उपदिश्यते । २. सर्वेषामिति । तथा चैक्यमेवागमार्थोऽखिलवृद्धसंमतत्वादिति भावः । सर्वेषां वेदान्त-वाक्यानामैक्ये महातात्पर्येऽप्यवान्तरतात्पर्येण सृष्ट्यादिरपि विवक्षितस्तद्वाक्यैरित्याशङ्क्याऽऽह—तद्विधीति । ऐक्यविधिस्तत्त्वमादिवाक्यं तेनैकवाक्यत्वेन योगः शेषशेषित्वं तस्मिन् संभवति सति सृष्ट्यादिवाक्यानां सृष्ट्याद्यर्थत्वकल्पना न युक्ता संभवत्येकवाक्यत्वे तद्भेदस्यान्याय्यत्वादिति भावः । ३ आगमतात्पर्यविदाम् । ४. किं च सृष्ट्यादिवाक्यानां स्वार्थनिष्ठत्वे मानं फलं वा कल्पकं नाऽऽद्य इत्याह—न प्रमाणमिति । ५ न द्वितीयः—फलान्तरमिति । न च तत्कल्पयितुं शक्यं फलवत्सन्निधावफलं तदङ्गमिति न्यायविरोधादिति भावः । ६ ब्रह्मात्मैक्ये सर्ववेदान्तावसानमित्यभिमतेऽर्थे । ७ जातमात्रे जन्मनि सत्येवेति यावत् । ८ तन्त्रवार्तिकवाक्यमिदम् । ९ सृष्टिवाक्यानाम् । १०. एकत्वं प्रतीयते येभ्यस्तान्येकत्वप्रत्ययानि वाक्यानि तच्छेषतयेत्यर्थः । एकत्वप्रत्यायकतत्त्वमस्यादिवाक्यशेषतयेति यावत् । फलवत्सन्निधावफलं तदङ्गमिति न्यायादिति भावः । ११. स्वार्थनिष्ठत्वपक्षे स्वतन्त्रफले । १२ फलान्तरकल्पना । १३. श्रुते फले । १४. दृष्टान्तदार्ष्टान्तिकरूपाख्यायिकयोर्मध्ये । १५. कथयति । १६ जातमात्र इतीति पाठान्तरम् ।

एव मातापितृभ्यामपविद्धो व्याधगृहे संवर्धितः सोऽमुष्य वंश्यतामजानन्व्याधजातिप्रत्ययो व्याधजातिकर्माण्येवानुवर्तते न राजाऽस्मीति राजजातिकर्माण्यनुवर्तते । यदा पुनः कश्चित्परमकारुणिको राजपुत्रस्य राजश्रीप्राप्तियोग्यतां जानन्नमुष्य पुत्रतां बोधयति न त्वं व्याधोऽमुष्य राज्ञः पुनः कथंचिद्व्याधगृहमनुप्रविष्ट इति । स एवं बोधितस्त्यक्त्वा व्याधजातिप्रत्ययकर्माणि पितृपैतामहीमात्मनः पदवीमनुवर्तते राजाऽहमस्मीति । तथा किलायं परस्मादग्निविस्फुलिङ्गादिव तज्जातिरेव विभक्त इह देहेन्द्रियादिगहने प्रविष्टोऽसंसारी

क्तम् । व्याधजातिप्रत्ययस्तत्प्रयुक्तो व्याधोऽस्मीत्यभिमानो यस्य स तथा । व्याधजातिकर्माणि तत्प्रयुक्तानि मांसविक्रयणादीनि । राजाऽस्मीत्यभिमानपूर्वकं तज्जातिप्रयुक्तानि परिपालनादीनि कर्माणि । अज्ञानं तत्कार्यं चोक्त्वा ज्ञानं तत्फलं च दर्शयति—यदेत्यादिना । बोधनप्रकारमभिनयति—न त्वमिति । कथं तर्हि शबरवेश्मप्रवेशस्तत्राऽऽह—कथंचिदिति । राजाऽहमस्मीत्यभिमानपूर्वकमात्मनः पितृपैतामहीं पदवीमनुवर्तेत इति संबन्धः । दार्ष्टान्तिकरूपामाख्यायिकामाचष्टे—तथेति । जीवस्य परस्माद्विभागे निमित्तमज्ञानं तत्कार्यं च प्रसिद्धमिति द्योतयितुं किलेत्युक्तम् । तज्जातिस्तत्स्वभावो वस्तुतः परमात्मैवेति यावत् । इहेत्यपरोक्षानुभवगम्यतोक्तिः । गहनं गम्भीरं वनम् । संसारधर्मानुवर्तने हेतुमाह—

का बोध करा देता है और यह बतला देता है कि "तू व्याध की वंशपरम्परा में नहीं हुआ, अमुक राजा का पुत्र है जो कि किसी प्रकार व्याध के घर में तू आ गया है" ऐसा आप्तपुरुष का उपदेश है। वह इस प्रकार उस कथन के फल से ज्ञान प्राप्त कर व्याधजाति के प्रत्यय से होने वाले सभी कर्मों को छोड़कर "मैं राजा हूँ" ऐसा प्रत्यय करके (राज्याभिषेक प्रजापालनादि) अपने पिता-पितामहों की मर्यादा का अनुशीलन करने लगता है। उसी प्रकार अग्नि की चिनगारियों के समान परमात्मा से विभक्त यह जीव उसी परमात्मा के स्वरूप में ही यहाँ देह और इन्द्रियादिरूप गहनवन में प्रविष्ट होकर असंसारी होते हुए भी आत्मा-परमात्मा का ऐकात्म्यज्ञान न होने के कारण "मैं देह और इन्द्रियादि का संघातरूप, कृश, स्थूल, सुखी या दुःखी हूँ" ऐसा प्रत्यय होने के कारण देह और इन्द्रियादि सांसारिक धर्मों का अनुशीलन करने लगता है। किन्तु 'तू संघातात्मक रूप नहीं है, बल्कि असंसारी ब्रह्म ही है" इस प्रकार आचार्य द्वारा प्रतिबोधित कराये जाने पर यह एषणात्रय की अनुवृत्ति को छोड़कर "मैं ब्रह्म ही हूँ" ऐसा जान लेता है।

१ त्यक्त्वा । २ राज्ञः । ३ स्वनिष्ठाम् । ४ इत्याप्तोपदेशः । ५ अथ तत्फलं स इति । ६ पदवीमिति—सिंहासनारोहणराज्याभिषेकप्रजाशासनादिमार्गं (मर्यादा) मित्यर्थः । तथा च वार्तिके—"राज्याभिषेकमाप्नोति प्राप्य सिंहासनं पितुः । अवाप्तराजसूनुत्वात्तत्प्राप्तौ नापि चेष्टते ॥ मोहाध्वस्तात्मव्याधत्वान्मोहध्वस्तातिरेकतः । राजपुत्रत्वसंप्राप्तौ नान्यत्किंचिदपेक्षते" ॥५१५-५१६॥ इति । ननु सुचिरं शबरसदने निवसतो राजसुतस्य पुना राजपुत्रत्वाप्तौ ज्ञानात्प्रतिबन्धध्वंसादृते व्यापारान्तरमपेक्षितं स्यान्नेत्याह—अवाप्तेति ॥ स्वतश्चेदाप्तं राजपुत्रत्वं कुतस्तर्हि व्याधत्वधीस्तत्राऽऽह—मोहेति । आरोपितव्याधत्वबाधेन राजत्वाप्त्यर्थं तज्ज्ञानमावर्तनीयमित्याशङ्क्याऽऽह—मोहध्वसेति । तद्ध्वंसश्च ज्ञानादेवेति नाऽऽवृत्तिरर्थवतीत्यर्थः । ७ प्रत्ययः सन् । ८ जीव । ९ परस्वरूप एव । १० प्रत्यक्षे । ११ वने ।

सन्देहेन्द्रियादिसंसारधर्ममनुवर्तते देहेन्द्रियसंघातोऽस्मि कृशः स्थूलः सुखी दुःखीति परमात्मतामजानन्नात्मनः। न त्वमेतदात्मकः परमेव ब्रह्मास्यसंसारीति प्रतिबोधित आचार्येण हित्वैषणात्रयानुवृत्तिं च ब्रह्मैवास्मीति प्रतिपद्यते।

अत्र राजपुत्रस्य राजप्रत्ययवद्ब्रह्मप्रत्ययो दृढो भवति विस्फुलिङ्गवदेव त्वं परस्माद्ब्रह्मणो भ्रष्ट इत्युक्ते। विस्फुलिङ्गस्य प्रागग्नेर्भ्रंशादग्न्येकत्वदर्शनात्। तस्मादेकत्वप्रत्ययदार्ढ्याय सुवर्णमणिलोहाग्निविस्फुलिङ्गदृष्टान्ता नोत्पत्त्यादिभेदप्रतिपादनपराः। सैन्धवघनवत्प्रज्ञप्त्येकरसनैरन्तर्यावधारणादेकधैवानुद्रष्टव्यमिति च। यदि च ब्रह्मणश्चित्रपटवद्वृक्षसमुद्रादिवच्चोत्पत्त्याद्यनेकधर्मविचित्रता विजिग्राहयिषिताऽभविष्यदेकरसं सैन्धवघनव-

परमात्मतामिति। उक्तविद्यातत्कार्यविरोधिनीं ब्रह्मात्मविद्यां सम्भयति—न त्वमिति।

राजपुत्रस्य राजाऽस्मीतिप्रत्ययवद्वाक्यादेवाधिकारिणि ब्रह्मास्मीति प्रत्ययश्चेत्कृतं विस्फुलिङ्गादिदृष्टान्तश्रुत्येत्याशङ्क्याऽऽह—अत्रेति। तथापि कथं ब्रह्मप्रत्ययदार्ढ्यं तत्राऽऽह—विस्फुलिङ्गस्येति। दृष्टान्तेष्वेकत्वदर्शनं तस्मादिति परामृष्टम्। उत्पत्त्यादिभेदे नास्ति शास्त्रतात्पर्यमित्यत्र हेत्वन्तरमाह—सैन्धवेति। चकारोऽवधारणादिति पदमनुकर्षति। संगृहीतमर्थं विवृणोति—यदि

(श्रुतिवाक्य द्वारा ब्रह्मज्ञान होने पर भी) यहाँ "अग्नि से विस्फुलिङ्ग के समान तू परमेश्वर से विश्लिष्ट हुआ है" राजपुत्र के इस राजप्रत्यय के समान उसका ब्रह्मीभावप्रत्यय दृढ हो जाता है। क्योंकि अग्नि से विशिष्ट होने से पूर्व विस्फुलिङ्ग की अग्नि के साथ एकता देखी जाती है। इसलिए सुवर्णपिण्ड, मणि, लोह एवं अग्नि-विस्फुलिङ्गादि दृष्टान्त ऐकात्म्यज्ञान की दृढताप्रतिपादन के लिए हैं, उत्पत्ति आदि का प्रपञ्च प्रतिपादन करने के लिए नहीं हैं। इसके अतिरिक्त "उसे एकरूप से ही देखना चाहिए" इस श्रुतिवाक्य से लवणपिण्ड के समान उसे ज्ञानरूप एकरस से व्यवधानरहित परिपूर्ण भी सिद्ध किया गया है। यदि चित्र, पट अथवा वृक्ष या समुद्रादि के समान उत्पत्ति आदि अनेक-धर्मों के कारण ब्रह्म की विचित्रता का ही ग्रहण करना इष्ट होता तो "वह लवणपिण्ड के समान एकरस एवं अन्दर-बाहर से शून्य है" इस प्रकार उपसंहारात्मक श्रुतिवाक्य का प्रतिपादन न किया जाता। तथा "(आचार्योपदेश के बाद उस ब्रह्म को) आकाश के समान अन्तर-बाह्यशून्य एकमात्र विज्ञानघनरूप से ही देखना चाहिए" ऐसे आदेश का और "जो इसमें नाना के समान देखता है, (उसे अज्ञान के कारण बारम्बार जन्म लेना पड़ता है)" ऐसे निन्दासूचक वचन का प्रयोग न होता।

१. संघातात्मकः। २. औपदेशिकज्ञानफलमाह—हित्वेति। वार्तिके यथा—"सम्यग्ज्ञानाग्निसंप्लुष्टप्रत्यक्तत्त्वमहातमाः। हित्वा मोहोत्थमखिलं ब्रह्मैव ब्रह्म यात्ययम्॥ प्रत्यक्तत्त्वतमोध्वस्तव्यतिरेकेण मुक्तये। अपेक्षते यतो नान्यत् किंचित्साधनमण्वपि" ॥५२१-५२२॥ इति। अन्यस्यान्यत्वायोगमाशङ्क्याऽऽह—ब्रह्मैवेति। तर्हि ब्रह्म यातीत्ययुक्तम्। स्वात्मनो गन्तव्यत्वायोगादित्यत आह—हित्वेति। ज्ञानतत्फलयोर्मध्ये कार्यान्तरवारणार्थमुभयत्र चापशब्दौ॥ तत्र हेतुमाह—प्रत्यगिति। ३ वाक्याद्ब्रह्मप्रतिपत्तौ जातायामपि। ४. विश्लिष्टः। ५. सुवर्णपिण्ड.। ६. प्रपञ्चेति यावत्। ७ बृ० उ० २।४।१२। ८. बृ० उ० ४।४।१३। ९. अव्यवधानेनेत्यर्थः। १०. एकरूपेण (बृ० उ० ४।४।२०)। ११. ज्ञापयत्याचार्यः। १२. उक्तोत्तावपि। १३. प्रपञ्चे। १४ सृष्टिशास्त्रेति यावत्। १५. श्रुत्यन्तरविरोधात्स्यम्।

'दनन्तरमबाह्यमिति नोपसमहरिष्यदेदयंवानुद्रष्टव्यमिति' च न प्रायोक्ष्यत। 'य इह नानेव पश्यतीति निन्दावचनं च।

'तस्मादेकरूपैकत्वप्रत्ययदार्ढ्यायैव सर्ववेदान्तेषूत्पत्तिस्थितिलयादिकल्पना न 'तत्प्रत्ययकरणाय। न च निरवयवस्य परमात्मनोऽसंसारिणः संसार्येकदेशकल्पना न्याय्या स्वतोऽदेशत्वात्परमात्मनः। 'अदेशस्य परस्यैकदेशसंसारित्वकल्पनायां पर एव संसारीति कल्पितं भवेत्।

अथ 'परोपाधिकृत एकदेशः परस्य घटकरकाद्याकाशवत्। न, "तदा "तत्र विवेकिनां

---

चेत्यादिना। निन्दावचनं च न प्रायोक्ष्यतेति सबन्ध।

"एकत्वस्यावधारणफलमाह—तस्मादिति। "एकत्वस्य भेदसहत्वं "वारयितुमेकरूपविशेषणम्। आदिशब्देन प्रवेश"नियमने गृह्येते। न तत्प्रत्ययकरणायेत्यत्र तच्छब्देनोत्पत्त्याविभेदो विवक्षित.। "किंच परस्यैकदेशो विज्ञानात्मेत्यत्र तदेकदेश स्वाभाविको वा स्यादौपाधिको वेति विकल्प्याऽऽद्यं दूषयति—न चेति। "विपक्षे दोषमाह—अदेशस्येति।

द्वितीयमुत्थापयति—अथेति। एकदेशस्योपाधिकत्वपक्षे परस्मिन्विवेकवतां तदखण्डत्वबुद्धिभाजां तदेकदेशो वस्तुत पृथग्भूत्वा व्यवहारालम्बनमिति नैव बुद्धिर्जायते औपाधिकस्य स्फटिकलौहित्यवन्मिथ्यात्वाविस्युत्तरमाह—न तदेति। ननु जीवे कर्ताऽहं भोक्ताऽहमिति परिच्छिन्नधी. "सर्वेषामुप-

---

इसलिए समस्त वेदान्तवाक्यो मे जो उत्पत्ति, स्थिति एव लय आदि की कल्पना है। वह "मैं ब्रह्म हूँ" इस अभेदनिश्चय की दृढता के लिए ही है, उन (उत्पत्त्यादि वाक्यो) के निश्चयप्रतिपादन कराने के लिए नही है। इसके अतिरिक्त निरवयव और असंसारी परमात्मा मे ससारित्व एव एकदेश की कल्पना करना उचित नही है क्योकि परमात्मा मे स्वत ही अवयवाभाव है। निरवयव परमात्मा मे एकदेश व संसारीकल्पना करने से "परमात्मा ही ससारी है"—ऐसी कल्पना होने लग जायगी।

और यदि ऐसा माना जाय कि घटाकाश और मठाकाश आदि के समान किसी कल्पित उपाधि

---

१ बृ० उ० २।५।१६, ४।५।१४। २ इति चेति—'यद्वाचानभ्युदितमि"त्यादिवाङ्मनसातीतत्वप्रतिपादकवचनसमुच्चयार्थश्चकार। तथा च समुद्रतरङ्गादेरिव ब्रह्मज्ञापके सृष्टिवाक्ये ब्रह्मणो वस्तुतोंऽशाशित्वादीष्ट चेत्तदा तस्य वाङ्मनसातीतत्वमद्वितीयत्व च तात्पर्येण श्रुतिन ब्रूयात्सविशेषस्य तद्विषयत्वादित्यर्थ। ३ बृ० उ० ४।४।१६। ४ उक्तानेकवाक्यविरोधेन सृष्ट्यादिवाक्याना स्वार्थे तात्पर्याभावावधारणात्। ५ अहं ब्रह्मास्मीत्येवमभेदनिश्चय। ६ तन्निश्चयोत्पादनाय। ७ अवयवाभावात्। ८ निरवयवस्य। ९ कल्पितोपाधिकृत। १० एकदेशस्योपाधिकत्वावसरे। ११ परस्मिन्—तदभिन्ने विज्ञानात्मनीति यावत्। १२ एकत्वावधारणमेव फल विस्फुलिङ्गादिदृष्टान्तश्रुतीनामित्यर्थ। १३ एकत्वस्य भेदसहत्वमिति तादात्म्यरूपत्वमित्यर्थ। भेदसहिष्णोरभेदस्य तादात्म्यत्वात्। किञ्चिद्रूपेण भेद किञ्चिद्रूपेणाभेद। १४ भेदाभेदापनुत्त्यर्थम्। १५ नियमन शासनम्। १६ ननु घटस्याशांशित्वादावतात्पर्यात्तद्वास्तवकल्पना मा भूदुपादानस्य मृदादे सावयवत्वदृष्टेर्ब्रह्मणोऽपि जगदुपादानतया तथात्वमित्यादिन्यायात्तु भविष्यतीत्याशङ्क्याऽऽह—किंचेति। १७ विपक्षे स्वतोऽदेशस्यापि तस्य संसार्येकदेशकल्पनायाम्। १८ विवेकाविवेकवताम्।

परमात्मैकदेशः 'पृथक्संव्यवहारमागिति बुद्धिरुत्पद्यते । अविवेकिनां विवेकिनां चोपचरिता बुद्धिर्दृष्टेति चेत् । न, अविवेकिनां मिथ्याबुद्धित्वात् । विवेकिना च 'संव्यवहारमात्रालम्बनार्थत्वात् ।

यथा कृष्णो रक्तश्चाऽऽकाश इति विवेकिनामपि कदाचित्कृष्णता रक्तता चाऽऽकाशस्य संव्यवहारमात्रा'लम्बनार्थत्वं प्रतिपद्यत इति न परमार्थतः कृष्णो रक्तो वाऽऽकाशो

लभ्यते । सा च 'तस्य वस्तुतोऽपरिच्छिन्नब्रह्ममात्रत्वान्मञ्चक्रोशनधीवदु'पचरिता । तस्मादु'भयेषामुक्तात्म'बुद्धिदर्शना'त्परमात्मैकदेशत्वं जीवस्य दुर्वारमिति चोदयति–अविवेकिनामिति । 'तत्राविवेकिनां यथोक्ता बुद्धिरुपचरिता न भवत्यतस्मिंस्तद्बुद्धित्वेना"विद्यात्वादिति परिहरति–नेत्यादिना । "तथाऽपि विवेकिनामीदृशी धीरुपचरितेति चेत्तत्राऽऽह—विवेकिना चेति । तेषां संव्यवहारो"ऽभिज्ञाभिवदनात्मकस्तावन्मात्रस्याऽऽलम्बन"माभासभूतो"ऽर्थस्तद्विषयत्वात्तद्बुद्धेरपि मिथ्याबुद्धित्वादु"पचरित्वासिद्धिरित्यर्थः ।

विवेकिनामविवेकिनां चाऽऽत्मनि परिच्छिन्नधीरुपचरितेत्येतावता न "तस्य "वस्तुतो ब्रह्मांशत्वादि सिध्यतीत्येतद्दृष्टान्तेन साधयति– यथेति । अविवेकिनामित्यपेरर्थः, । ब्रह्मणि वस्तुतोऽशावि-

के कारण जीवात्मा परमात्मा का एकदेश है तो परमात्मा से अभिन्न विज्ञानात्मा मे विवेकी मनुष्यो को ऐसी बुद्धि उत्पन्न नही हो सकती कि परमात्मा का एकदेश "मैं जानता हूँ" इस पृथक् व्यवहार का विषय होने मे समर्थ है । यदि शङ्का करो कि परिच्छिन्न बुद्धि तो अज्ञानी और ज्ञानी दोनो को होती हुई देखी जाती है—तो ऐसा कहना ठीक नही क्योकि अविवेकियो की वह बुद्धि मिथ्या होती है और विवेकियो को "मैं जानता हूँ" ऐसे व्यवहारमात्र के आलम्बन करने के लिए होती है ।

जिस प्रकार (अज्ञानियो की तरह) विवेकियो को भी कभी-कभी "आकाश काला या लाल है" इस प्रकार आकाश की मलिनता या लालिमा व्यवहारमात्र के मिथ्या-विषयत्व को प्राप्त हो जाती है किन्तु परमार्थत आकाश मलिन अथवा लाल नही हो सकता, अत विद्वानो को ब्रह्मस्वरूप के ज्ञान के विषय मे, ब्रह्म के अश-अशी, एकदेश-एकदेशी अथवा विकार-विकारित्वादि की कल्पना नही करनी चाहिए क्योकि समस्त श्रुतियो का तात्पर्य समस्त कल्पनाओ की निवृत्तिसार बतलाने मात्र मे है ।

१ जानामीति व्यवहारविषय । २ संव्यवहारेति—कर्ता भोक्ताऽहमित्यादिरूपस्य संव्यवहारमात्रस्य आलम्बन स्वनिष्ठकर्तृत्वादिरूपो मिथ्याभूतो विषयोऽर्थो विषयो यस्याविवेकिबुद्धे सा तथा तत्त्वादित्यर्थं । ३. मिथ्याविषयत्वम् । ४ जीवस्य । ५ उपचरितेति—उपचारो गुणस्तत्प्रयुक्ता गौणीत्यर्थं न तु मिथ्याभूतेति यावत् । प्रकृतेऽन्त करणाद्युपाधिससर्ग एव गुणो द्रष्टव्य । मञ्चक्रोशनधियां तु क्रोशनकर्तृपुससर्ग स । ६ विवेकाविवेकवताम् । ७ परिच्छिन्नधीरिति यावत । ८ परमात्मैकदेशत्व जीवस्येति उक्तधीविषयत्वमेव जीवत्व तच्च परिच्छिन्ने एव नत्वपरिच्छिन्ने ब्रह्मणीति परैकदेशस्यैव जीवत्वमानुभविकमिति भाव । ९ उभयोरात्मनि वा । १० मिथ्यात्वादिति यावत् । ११ अविवेकिधीमिथ्यात्वेऽपि । १२ ज्ञानशब्दप्रयोगात्मक । १३ मिथ्याभूत । १४ विषय । १५ उपचरित्वासिद्धिरिति—उपचारस्थले हि मञ्चादि सत्यमे[illegible] । १६ जीवस्य । १७ पारमार्थिकम् ।

सर्वोपनिषदां परमात्मैकत्वज्ञापनपरत्वेऽस्य 'किमर्थं[1] 'तत्प्रतिकूलोऽर्थो[2] विज्ञानात्मभेद-परिकल्प्यत इति । कर्मकाण्डप्रामाण्यविरोधपरिहारायेत्येके[3] । कर्मप्रतिपादकानि हि वाक्यान्य[4]नेकक्रियाकारकफलभोक्तृकर्त्राश्रयाणि । 'विज्ञानात्मभेदाभावे[5] ह्यसंसारिण एव परमात्मन 'एकत्वे[6] 'कथमिष्टफलासु[7] क्रियासु 'प्रवर्तयेयुरनिष्टफलाभ्यो[8] वा क्रियाभ्यो 'निवर्तयेयु-[9] ।

कस्य वा बद्धस्य मोक्षायोपनिषदारभ्येत । अपि च परमात्मैकत्ववादिपक्षे कस्मा उपदेशः कस्य चोपदेश[10]ग्रहणफलम् । बद्धस्य हि बन्धनाशायोपदेशस्तदभाव उपनिषच्छास्त्र[11]निर्विषयमेव ।

न्यायागमाभ्यां जीवेश्वरयोरंशांशित्वादिकल्पनां निराकृत्य वेदान्तानामद्वयपरत्वे स्थिते सति द्वैतासिद्धिः फलतीत्याह—सर्वोपनिषदामिति । एकत्वज्ञानस्य सनिदानद्वैतध्वंसि[12]त्वमथशब्दार्थः । प्रकृतं ज्ञानं तत्पदेन परामृश्यते । इत्यद्वैतमेव तत्त्वमिति शेषः । किमर्थमिति प्रश्नं मन्वानो द्वैतिनां मतमुत्थापयति—कर्मकाण्डेति । वेदान्तानामद्वयपरत्वेऽपि कथं तत्प्रामाण्यविरोधप्रसङ्गस्तत्राऽऽह—कर्मेति । तथाऽपि कथं विरोधावकाशः स्यादित्याशङ्क्याऽऽह—विज्ञानात्मेति ।

[13]केवलाद्वैतपक्षे कर्मकाण्डविरोधमुक्त्वा तत्रैव ज्ञानकाण्डविरोधमाह—कस्य वेति । परस्य नित्यमुक्तत्वादन्यस्य[14]स्वतः [15]परतो वा बद्धस्याभावाच्छिष्याभावस्तथा[16]चाधिकार्यभावादुपनिषदारम्भासिद्धिरित्यर्थः । कर्मकाण्डस्य काण्डान्तरस्य च प्रामाण्यानुपपत्तिर्विज्ञानात्माद्विभेदं कल्पयतीत्यर्थापत्तिद्वयमुक्तं तत्र द्वितीयामर्थापत्तिं प्रपञ्चयति—अपि चेति । [17]का पुनरुपदेशस्यानुपपत्तिस्तत्राऽऽह—बद्धस्येति । तदभाव इत्यत्र तच्छब्दो बद्धम[18]धिकरोति । निर्विषयं निरधिकारम् । [19]किञ्च यद्यर्थापत्तिद्वय-

समस्त उपनिषदों का प्रयोजन परमात्मा के एकत्वप्रतिपादन में है फिर विज्ञानात्मा के भेद-रूप ब्रह्मात्मैक्यज्ञान से प्रतिकूल विषय की कल्पना किसलिए की जाती है? इस पर कुछ द्वैतवादी मीमांसकों का मत है कि यह कल्पना कर्मकाण्ड के प्रामाण्य के विरोध का परिहार करने के लिए है क्योंकि कर्म के प्रतिपादक श्रुतिवाक्य अनेक कर्ता और भोक्ताओं की क्रिया, कारक और फल का आश्रय करने वाले हैं। परमात्मप्रतियोगिक भेद न होने पर असंसारी परमात्मा का अद्वैत रहते हुए, वे वाक्य लोगों को इष्टफलों वाली क्रियाओं में किस प्रकार प्रवृत्त करेंगे अथवा अनिष्ट फलों वाली क्रियाओं से किस प्रकार निवृत्त करेंगे?

तथा किस बद्ध जीव के मोक्ष के लिए उपनिषत् का प्रारम्भ किया जायगा? इसके अतिरिक्त परमात्मा जीवात्मा का एकत्वप्रतिपादन करने वालों के मत में किसी को परमात्मा के ऐकात्म्यज्ञान का उपदेश कैसे दिया जायगा और किस प्रकार उसके उपदेश का फल ज्ञान होगा? क्योंकि बद्ध जीव

१ तत्कल्पना न न्याय्यस्यातस्तत्र किंशब्दः । २ ब्रह्मात्मैक्यज्ञानप्रतिकूलः । ३ मीमांसकाः । ४ अनेके ये भोक्तारः कर्तारः । ५ परमात्मप्रतियोगिकभेदाभावे । ६ अद्वैतत्वे । ७ कथं प्रवर्तयेयुरिति यावत् । ८ वाक्यानीति शेषः । ९ निवर्तयेयुरिति—तथा चाधिकार्यभावप्रयुक्तमप्रामाण्यमिति भावः । १० ज्ञानेति यावत् । ११ निरधिकारकम् । १२ वरकथनानन्तरमिति यावत् । १३ द्वैताद्वैत (भेदाभेद) व्यावृत्तये केवलेति । १४ स्वभावतः । १५ उपाधितः । १६ शिष्याभावे च । १७ विरूपा । १८ गोचरयति । १९. इत एवाग्रिमभाष्यावतरणं बोध्यम् ।

'एवं तर्ह्युपनिषद्वादिपक्षस्य कर्मकाण्डवादिपक्षेण चोद्यपरिहारयोः समानः पन्थाः। येन भेदाभावे कर्मकाण्डं निरालम्बनमात्मानं न लभते प्रामाण्यं प्रति तथोपनिषदपि। एवं तर्हि यस्य प्रामाण्ये स्वार्थविघातो नास्ति तस्यैव कर्मकाण्डस्यास्तु प्रामाण्यम्। उपनिषदां तु प्रामाण्यकल्पनायां स्वार्थविघातो भवेदिति मा भूत्प्रामाण्यम्। न हि कर्मकाण्डं प्रमाणं सदप्रमाणं भवितुमर्हति न हि प्रदीपः प्रकाश्यं प्रकाशयति न प्रकाशयति

मुक्तया विधयोलिङ्गति 'तर्हि भेदस्य दुर्निरूपत्वात्कथं कर्मकाण्डं प्रमाणमिति, यद्ब्रह्मवादिना कर्मवादी चोद्यते 'तद् ब्रह्मवादस्य कर्मवादेन तुल्यम्। ब्रह्मवादेऽपि शिष्यशास्त्रादिभेदाभावे कथमुपनिषत्प्रामाण्यमित्याक्षेपस्तु सुकरस्तथा चोपनिषदा प्रतीयमानं शिष्यशास्त्रादिभेदमाश्रित्य प्रामाण्यमिति परिहारः कर्मकाण्डस्यापि समानः।

तथापि प्रातीतिकभेदमादाय प्रामाण्यस्य सुप्रतिपन्नत्वान्न च भेदप्रतीतिभ्रान्तिर्बाधाभावादित्यभिप्रेत्याऽऽह—एवं तर्हीति। चोद्यसाम्यं विवृणोति—येनेति। इति चोद्यसाम्यात्परिहारस्यापि साम्यमिति शेषः। ननु कर्मकाण्डं भेदपरं ब्रह्मकाण्डमभेदपरं प्रतिभाति न च वस्तुनि विकल्पसंभवस्ततोऽन्यतरस्याप्रामाण्यमत आह—एवं तर्हीति। तुल्यमुपनिषदामपि स्वार्थविघातकत्वमित्याशङ्क्याऽऽह—उपनिषदामिति। स्वार्थं शब्दशक्तिवशात्प्रतीयमानं सृष्ट्यादिभेदं। यत्तूच्यते कर्मकाण्डस्य व्यावहारिकं प्रामाण्यं न तात्त्विकं तात्त्विकं तु काण्डान्तरस्येति तत्राऽऽह—न हीति। यद्वि प्रामाण्यस्य व्यावहारिकत्वं तदेव तस्य तात्त्विकत्वं न हि प्रमाणं तत्त्वं च नाऽऽवेदयति व्याघातादित्यभिप्रेत्य दृष्टान्तमाह—न हीति। स्वार्थविघातात्कर्मकाण्डविरोधाच्चोपनिषदामप्रामाण्य-

के बन्धनों के नाश के लिए ही मोक्षशास्त्र का उपदेश किया जाता है बन्धन न होने पर तो उपनिषच्छास्त्र का कोई अधिकारी ही नहीं रहता।

इस प्रकार (प्रातीतिकभेद को लेकर उपनिषदों का प्रामाण्य स्वीकार करने पर) तो उपनिषद्वादी पक्ष के आक्षेप और परिहार का मार्ग कर्मकाण्डवादी पक्ष के समान है क्योंकि भेद के दुर्निरूपकत्व होने से जिस प्रकार कर्मकाण्ड आत्मा के प्रति निरधिकारी होकर अपना प्रामाण्य सिद्ध नहीं कर सकता उसी प्रकार उपनिषत् भी स्वयंप्रामाण्य नहीं हो सकता। (दोनों जगह शङ्का-समाधान के साम्य होने पर) तब तो जिसका प्रामाण्य मानने पर शब्दशक्ति से प्रतीयमान यागादिभेद का विघात नहीं होता, उस कर्मकाण्ड की ही प्रामाणिकता माननी चाहिए। उपनिषदों के प्रामाण्य की कल्पना करने में तो स्वार्थ का विघात होता है, इसलिए उनका प्रामाण्य भले हो न भी हो। (व्यावहारिक दृष्टि से) कर्मकाण्ड प्रामाणिक होकर (तात्त्विक दृष्टि से) अप्रामाणिक नहीं हो सकता क्योंकि दीपक अपने प्रकाश्यपदार्थ को कभी प्रकाशित करता है और कभी नहीं भी करता हो,

१ प्रातीतिकभेदमादायोपनिषदां प्रामाण्ये सति। २ भेदस्य दुर्निरूपत्वेन। ३ निरधिकारित्वम्। ४ आत्मानं प्रतीत्यन्वय। ५ उभयत्र चोद्यपरिहारसाम्ये। ६ शब्दशक्त्या प्रतीयमानो यागादिभेद। ७ उत्थाने सत्यपि। ८ तस्य दुर्निरूपत्वं प्रागुक्तश्रुत्यादिभिर्बोध्यम्। ९ चोद्यम्। १० कर्मकाण्डस्य। ११ तौल्यमेवोपपादयति। १२ प्रातीतिकम्। १३ मिथ्यादिभेद। १४ ब्रह्मात्मनि। १५ भेदाभेदात्मक। १६ वस्तुनि विकल्पासंभवात्। १७ 'यतो वा इमानी'त्यादौ। १८ तत्त्वावेदकत्वं हि तात्त्विकत्वम्।

चेति ।

प्रत्यक्षादिप्रमाणविप्रतिषेधाच्च । न केवलमुपनिषदो ब्रह्मैकत्वं प्रतिपादयन्त्यः स्वार्थविघातं कर्मकाण्डप्रामाण्यविघातं च कुर्वन्ति प्रत्यक्षादिनिश्चितभेदप्रतिपत्त्यर्थ-प्रमाणैश्च विरुध्यन्ते । तस्मादप्रामाण्यमेवोपनिषदाम्। [1]अन्यार्थता वाऽस्तु न त्वेव ब्रह्मै-[2]कत्वप्रतिपत्त्यर्थता।

न, [3]उक्तोत्तरत्वात् । [4]प्रमाणस्य हि प्रमाणत्वमप्रमाणत्वं वा [5]प्रमोत्पादनानुत्पा-दननिमित्तम् । अन्यथा चेत्स्तम्भादीनां [6]प्रामाण्यप्रसङ्गाच्छब्दादौ प्रमेये । [7]किंचातः ।

---

मित्युक्तमुपसंहर्तुमितिशब्दः ।

उपनिषदप्रामाण्ये हेत्वन्तरमाह—प्रत्यक्षादीति । प्रत्यक्षादीनि निश्चितानि [7]भेदप्रतिपत्त्यर्थानि प्रमाणानि तैरिति विग्रहः । [8]अध्ययनविध्युपादापितानां कुतस्तासामप्रामाण्यमित्याशङ्क्याऽऽह—अन्यार्थता वेति ।

सिद्धान्तयति—नेत्यादिना । [9]तदेव स्फुटयितुं [10]सामान्यन्यायमाह—प्रमाणस्येति । [11]स्वार्थे प्रमोत्पादकत्वाभावेऽपि प्रामाण्यमिच्छन्तं प्रत्याह—अन्यथेति । यथोक्तप्रयोजकप्रयुक्तं प्रामाण्यमप्रामाण्यं वेत्येतस्मिन्पक्षे किं [12]फलतीति पृच्छति—किंचेति । [13]तत्र किमुपनिषदः स्वार्थं [14]बोधयन्ति न वेति

---

ऐसा नहीं होता ।

इसके अतिरिक्त ऐकात्म्यप्रतिपादक श्रुतियों का प्रत्यक्षादि प्रमाणों से भी विरोध है । ब्रह्म की ऐकात्म्यप्रतिपादक श्रुतियाँ केवल स्वार्थविघात और कर्मकाण्ड के प्रामाण्य का ही विघात नहीं करतीं, अपितु निश्चितभेदज्ञान के प्रयोजक प्रत्यक्षादि प्रमाणों से उनका विरोध भी करती हैं । इसलिए उपनिषदें अप्रामाण्य ही हैं अथवा उन श्रुतियों के अध्ययनकाल में जपार्थादि अन्य प्रयोजन हो सकता है; । वे केवल ब्रह्मैकात्म्यज्ञान प्रतिपादन करने के लिए ही नहीं हो सकतीं ।

(सिद्धान्ती उक्त आक्षेप का समाधान करता है—) ऐसा कहना ठीक नहीं है क्योंकि इसकी प्रत्युक्ति पहले ही हो चुकी है । प्रमाण का प्रामाण्य या अप्रामाण्य प्रमा की उत्पत्ति करने या न करने के कारण होता है, अन्यथा स्वप्रमेय में प्रमा के उत्पादकत्व का अभाव होने पर तो शब्दादि प्रमेय में स्तम्भादि के भी प्रामाण्य का प्रसङ्ग उपस्थित हो जायगा । (पूर्ववादी आक्षेप करता है—) तो इससे

---

१ जपार्थं वा स्तुता सामध्ययनम् । २ बृ० उ० २२६पृष्ठभाष्ये । उक्तति—ज्ञानकाण्डं नाफलं नाप्यन्यशेष इति सम्बन्धग्रन्थादावुक्तमित्यर्थः । तथा च वार्तिके "ब्रह्मास्मीति धियो जन्मसमकाला विमुक्तता । यतोऽनुभूयते साक्षाज्ज्ञानपैक्य भवेत्तत ॥ वस्तुमात्रावसायित्व मस्वन्धे प्रावप्रपञ्चितम् । यतोऽतो नोपनिषदामन्यार्थत्व कथंचनेति" ॥५४१-५४२॥ ३ उक्त स्मारयित्वोपनिषत्प्रामाण्यार्थं प्रमाणाप्रमाणलक्षण तावदाह—प्रमाणस्य हीति । ४. प्रमेति—प्रमोत्पादकत्वमन्तरा न प्रमाणत्व घटादेरपि तत्प्रसङ्गात्तथापि तदनुत्पादकत्व विनाऽप्रमाणत्व चक्षुरादेरपि रूपादौ तत् प्रसङ्गादिति भाव । ५. तथा सति वस्तुत्वस्यैव प्रमाणत्वत्वादिति भाव । ६. उपनिषन्मानत्वोपयुक्त तव किं सिद्धम् । ७ भेदप्रतिपत्तिफलकानि । ८. स्वाध्यायोऽध्येतव्यो द्विजातिभि । ९. उक्तोत्तरत्वमेव । १०. प्रमाणाप्रमाणसामान्यलक्षणम् । ११. स्वप्रमेये । १२. वस्तुत उपनिषदि किमायाति । १३. मानामानयोरुक्तलक्षणत्वे सति । १४ स्वप्रमेये प्रमा जनयन्ति न वा ।

यदि तावदुपनिषदो ब्रह्मैकत्वप्रतिपत्तिप्रमां कुर्वन्ति कथमप्रमाणं भवेयुः । न कुर्वन्त्येवेति चेद्यथाऽग्निः शीतमिति स भवानेवं वदन्वक्तव्य उपनिषत्प्रामाण्यप्रतिषेधार्थं भवतो वाक्यमुपनिषत्प्रामाण्यप्रतिषेधं किं न करोत्येवाग्निर्वा रूपप्रकाशम् । अथ करोति । यदि करोति भवतु तदा प्रतिषेधार्थं प्रमाणं भवद्वाक्यमग्निश्च रूपप्रकाशको भवेत् । प्रतिषेधवाक्यप्रामाण्ये भवत्येवोपनिषदां प्रामाण्यम् । अत्र भवन्तो ब्रुवन्तु कः परिहार इति ।

नन्वत्र प्रत्यक्षा मद्वाक्य उपनिषत्प्रामाण्यप्रतिषेधार्थप्रतिपत्तिरग्नौ च रूपप्रकाशनप्रतिपत्तिः प्रमा । कस्तर्हि भवतः प्रद्वेषो ब्रह्मैकत्वप्रत्ययप्रमां प्रत्यक्षां कुर्वतीषूपनिषत्सूप-

विकल्प्याऽऽद्यमनूद्य दूषयति—यदि तावदिति । द्वितीयमुत्थाप्य निराकरोति—नेत्यादिना । अग्निर्यथा शीतं न करोति तथोपनिषदोऽपि ब्रह्मैकत्वे प्रमां न कुर्वन्तीति वदन्तं प्रति प्रतिबन्दिग्रहो न युक्तोऽनुभवविरोधादित्याशङ्क्याऽऽह—यदीति । तर्हि स्वार्थे प्रमितिजनकत्वान्मद्वाक्यस्य प्रामाण्यं स्यादित्याशङ्क्याऽऽह—प्रतिषेधेति । उपनिषदप्रामाण्ये भवद्वाक्याप्रामाण्यं तत्प्रामाण्ये तूपनिषत्प्रामाण्यं दुर्वारमिति साम्ये प्राप्ते व्यवस्थापकः समाधिर्वक्तव्य इत्याह—अत्रेति ।

उक्तमेवार्थं चोद्यसमाधिभ्यां विशदयति—नन्वित्यादिना । प्रतिषेधमङ्गीकृत्योक्ता यथोक्तो-

क्या प्रयोजन सिद्ध हुआ ? (इसका समाधान यह है कि—) यदि श्रुतियाँ ब्रह्मज्ञानरूप प्रमा उत्पन्न करती हैं, तो वे अप्रामाणिक किस प्रकार होंगी ? किन्तु अग्नि शीतगुणवाला है, इस वाक्य के समान यदि श्रुतिवाक्य प्रमा उत्पन्न करते ही न हों तो ? (पूर्ववादी से सिद्धान्ती पूछता है—) इस प्रकार आक्षेप करने वाले आप से हमें यह कहना है कि उपनिषत् के प्रामाण्य प्रतिषेध के लिए प्रवृत्त क्या आपका वाक्य उपनिषत्प्रामाण्य प्रतिषेध नहीं करता है, तथा क्या अग्निरूप के समान प्रकाशित नहीं करता है ? (पूर्ववादी कहता है—) प्रतिषेध तो करता है । (इस पर सिद्धान्ती कहता है—) यदि वह उसका प्रतिषेध करता है, तो प्रतिषेध करने में आपका वाक्य प्रमाण हो सकता है, तथा अग्नि भी रूप का प्रकाशक हो सकता है । अतः यदि आपका प्रतिषेधवाक्य प्रामाणिक है तो उपनिषद्वाक्यों की भी प्रामाणिकता होनी ही चाहिए । अब आप ही बतलाएँ कि इस का क्या समाधान हो सकता है ?

(पूर्ववादी कहता है—) यहाँ "उपनिषदें स्वप्रमेय में प्रमा उत्पन्न नहीं करतीं" मेरे इस वाक्य में उपनिषत्प्रामाण्य के प्रतिषेध की बोधरूपा प्रमा एवं अग्नि में रूपप्रकाशन की ज्ञानरूपा प्रमा तो प्रत्यक्ष ही है । (इस पर सिद्धान्ती पूछता है—) तुम्हारे वाक्य को उसी रूप में स्वीकार कर लिए

१ इवार्थे वाशब्दः । २. चशब्दो यथार्थे । ३ उपनिषदः स्वप्रमेये प्रमां न जनयन्तीति वाक्ये । ४. चशब्दोऽयं यथार्थकः । ५ स्वद्वाक्यस्य तथात्वस्वीकारे । ६ तदप्रामाण्यं दूषयति । ७ मम । ८. प्रतिबन्दिः तुल्ययुक्त्या दोषोद्भावनं तस्या ग्रहः उद्भावनीयत्वेन स्वीकारः । ९ अनुभवविरोधादिति—प्रतिवादिवाक्यस्योपनिषत्प्रामाण्यप्रतिषेधकारकत्वाभावाभिधानस्यानुभवविरुद्धत्वादित्यर्थः । उपनिषदो ब्रह्मात्मैकत्वे प्रमाजनकत्वाभावानुभवविरोधादिति यावत् । १०. मद्वाक्यस्योक्तप्रतिषेधप्रमापकत्वे सति । ११ वाक्यत्वाविशेषादिति भावः । १२ मद्वाक्यमेव प्रमाणं नोपनिषदिति व्यवस्थाकरः । १३. साम्यप्राप्तिरूपम् । १४ उक्तेति—प्रद्वेषानुपपत्तिरिति सम्बन्धः । तथा चाभ्युपगमवादेन स्वद्वाक्यजप्रतिषेधं स्वीकृत्य सोपत्तेत्यर्थः । अथुनेति शेषः । १५ स्वप्रमेये प्रमां कुर्वदुपनिषद् ।

लभ्यमानासु । प्रतिषेधानुपपत्तेः । शोकमोहादिनिवृत्तिश्च [1]प्रत्यक्षं फलं ब्रह्मात्मैकत्वप्रतिपत्तिपारम्पर्यजनितमित्य[2]वोचाम । तस्मादुक्तोत्तरत्वादुपनिषदं प्रत्यप्रामाण्यशङ्का तावन्नास्ति ।

यच्चोक्तं स्वार्थविघातकरत्वादप्रामाण्यमिति तदपि न । [3]तदर्थप्रतिपत्तेर्बाधका-

---

पनिषदुपलम्भे सति [4]तस्य निरवकाशत्वात्प्रद्वेषानुपपत्तिरित्याह—प्रतिषेधेति । [5]उपनिषदुत्थाया धियो [6]वैफल्यात्तासाममानतेत्याशङ्क्याऽऽह—शोकेति । एकत्वप्रतिपत्तिस्तावद्वाक्यपातेन जायते । सा च [7]विचारं [8]प्रयुज्य मननादिद्वारा दृढी भवति । [9]सा पुनरशेषं शोकादिकमपनयतीति पारम्पर्यजनितं फलमिति द्रष्टव्यम् । स्वार्थे प्रमाजनकत्वादुपनिषदां प्रामाण्यमित्युक्तमुपसंहरति—तस्मादिति ।

प्रामाण्यहेतुसद्भावादुपनिषदां प्रामाण्यं प्रतिपाद्य तदप्रामाण्यं परोक्तमनुवदति—यच्चोक्तमिति । कथं हि तासां [10]स्वार्थविघातकत्वं किं ताभ्यो ब्रह्मात्मैकत्वमद्वितीयं नैव चेति प्रतिपत्तिरुत्पद्यते किं वा काश्चिद्ब्रह्मात्मैकत्वप्रतिपत्तिमन्याश्चोपनिषदस्तत्प्रतिषेधं कुर्वन्तीति विकल्प्याऽऽद्यं दूषयति—

---

जाने पर ब्रह्मात्मैक्यज्ञान में प्रमा को प्रत्यक्ष करती हुई उपलभ्यमान उपनिषदों में ही आपका क्या द्वेष है? क्योंकि उनके प्रामाण्य का प्रतिषेध करना असंभव ही है। तथा यह भी कहा जा चुका है कि 'शोक-मोह आदि की निवृत्ति होना' यह ब्रह्मात्मैक्य ज्ञान की परम्परा से होने वाला प्रत्यक्ष फल है। इसलिए इस का उत्तर पूर्व में दे दिए जाने के कारण उपनिषदों में अप्रामाण्य शङ्का के लिए कोई स्थान ही नहीं रह जाता।

इसके अतिरिक्त यह जो कहा कि स्वार्थविघातकारक होने से उनकी अप्रामाणिकता है तो ऐसा कहना भी ठीक नहीं, क्योंकि वेदान्तप्रतिपाद्य ब्रह्मात्मैकत्व प्रमा का (विरोध नहीं होने से)

---

१. प्रत्यक्षमिति—यथाग्निदाहात्प्रत्यक्षं स्फोटाख्यं फलं यथा च मन्त्रौषधादिप्रयुक्त्या विषादिनिरासो यथा चोदकपानादजीर्णे तद्ध्वस्तिरध्यक्षा तद्वदित्यर्थः । २. बृ० उ० २२१ पृष्ठभाष्ये । ३. तदर्थेति—वेदान्तप्रतिपाद्यब्रह्मात्मैकत्वप्रमाया बाधकाभावादित्यर्थः । विरोधाभावेनेति शेषः । वार्तिके यथा—"किमेकविषयत्वेन किंवा विषयभेदतः । विरोधः स्यात्प्रमाणानामित्येतदभिधीयताम् ॥ मानान्तरेण संवादो यदि चेदनुवादिता । विरोधी न तु मानाना सदेवार्थममागमे ॥ भिन्नप्रमेयतायां च श्रोत्रादीनां यथा तथा । परस्परानपेक्षत्वान्नितरामविरुद्धता" ॥५५३-५५४॥ इति । मानानां विरोधस्य दुरुपपादत्वान्न तेषु बाध्यबाधकतेति वक्तुं विकल्पयति—किमिति ॥ तत्राऽऽद्यमनूद्य दूषयति—मानान्तरेणेति । यदि मानस्य मानान्तरेण संवादस्तुल्यविषयत्वं तदाऽनुवादत्वेव न विरोधश्चेच्छब्दस्यावधारणार्थत्वादेकार्थोपनिपाते मानानां विरोधायोगादन्यथा नैकार्थत्वरूप्यतदभावादिधीष्वदृष्टत्वादित्यर्थः ॥ कल्पान्तरं निराह—भिन्नेति । अर्थभेदे विरोधस्य वार्ताऽपि नेत्याह—नितरामिति ॥ ४. प्रतिषेधस्य । ५. उपनिषदिति—उपनिषदामनुत्पत्तिरूपा प्रामाण्याभावेऽपीत्यादिः । द्विविधं ह्यप्रामाण्यम् प्रमानुत्पत्तिप्रयुक्तम् । उत्पन्नाया अपि तस्या वैफल्यप्रयुक्तम् । ६. पारोक्ष्यात्मना अप्रामाण्यज्ञानानास्कन्दितेति यावत् । ७. विचारं श्रवणाख्यम् । ८. प्रयुज्य संपाद्य । ९. सा दृढीभूता अप्रामाण्यज्ञानानास्कन्दितेति यावत् । १०. स्वार्थेति—वेदान्तानां स्वार्थविघातकत्वं वक्तुं सामान्यतस्तावन्मानानां स्वार्थमाहुर्वार्तिकाचार्यास्तथाहि—"स्वप्रमेयावबोधो हि मानानां स्वार्थ उच्यते । तं चेत्कुर्वन्ति वेदान्ताः कुतस्तेषाममानता" ॥५५०॥ इति । अत्र लौकिकपरीक्षकसंप्रतिपत्त्यर्थो हिशब्दः । उक्तस्वार्थकारिणो वेदान्ता न तद्विघातकास्ततो नाऽमानता तेषामित्याह—तं चेदिति ॥

**भावात् । न ह्युपनिषद्भ्यो ब्रह्म कमेवाद्वितीयं नैव चेति प्रतिपत्तिरस्ति । 'यथाऽग्निरुष्णः शीतश्चेत्यस्माद्वाक्याद्विरुद्धार्थद्वयप्रतिपत्तिः । अभ्युपगम्य चैतदवोचाम । न तु वाक्यप्रामाण्य'समय एष 'न्यायो यदुतैकस्य वाक्यस्यानेकार्थत्वम् । सति चानेकार्थत्वे स्वार्थश्च स्यात्तद्विघातकृच्च विरुद्धोऽन्योऽर्थः । न त्वेतद्वाक्य'प्रमाणकानां 'विरुद्धमविरुद्धं चैकं वाक्यमनेकमर्थं प्रतिपादयतीत्येष 'समयः । 'अर्थैकत्वाद्ध्येकवाक्यता ।**

-तदपि नेति । 'तदेव प्रपञ्चयति—न हीति । एकस्य वाक्यस्यानेकार्थत्वमङ्गीकृत्य वैधर्म्योदाहरणमुक्तमित्याह—अभ्युपगम्येति । "तस्याङ्गीकारवादत्वे हेतुमाह—न त्विति । "उक्तमर्थं व्यतिरेकद्वारा विवृणोति—सति चेति । भवत्वेकस्य वाक्यस्यानेकार्थत्वं नेत्याह—न त्विति । कस्तर्हि तेषां समयस्तत्राऽऽह—अर्थैकत्वादिति । तदुक्तं प्रथमे तन्त्रे*—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति ।

बाधकाभाव है । उपनिषद्वाक्यों से यह ज्ञान नहीं होता कि ब्रह्म एकमात्र अद्वितीय भी है और नहीं भी है । जिस प्रकार "अग्नि उष्ण स्वभाववाला भी होता है और शीतल स्वभाव वाला भी होता है", इस एक ही वाक्य से दो विरुद्ध अर्थों का ज्ञान होता है । ऐसा विचार कर ही हम पहले कह आये हैं कि मीमांसक के वाक्यप्रामाण्य के सिद्धान्त में एक ही वाक्य के अनेक अर्थ मानना उचित नहीं है । अनेक अर्थों के मान लेने पर एक अर्थ स्वार्थपरक होगा और दूसरा उसका विघातक विरुद्ध अर्थ होगा और 'एक ही वाक्य विरुद्ध और अविरुद्ध अर्थविशेषणों का प्रतिपादन करता है' वाक्य को प्रमाण मानने वाले मीमांसकों का यह सिद्धान्त नहीं है क्योंकि (जिस प्रकार एक वाक्य में अनेकार्थता का अभाव होता है, उसी प्रकार) अर्थ की एकता होने से एकवाक्यता होती है ।

१ तत्र वैधर्म्योदाहरणमाह—यथेति । २ मीमांसकसिद्धान्ते । ३ नीतिः । ४ एतत्किमित्यत आह—वाक्येति । ५. मीमांसकानाम् । ६ अर्थविशेषणे । ७ सिद्धान्तः । ८ अर्थैकत्वादिति—यथाऽर्थे हिशब्दः । यथैकस्य वाक्यस्यानेकार्थत्वाभावस्तथाऽर्थैकत्वादेकं वाक्यमित्येकवाक्यलक्षणं तज्ज्ञैरुच्यते । लौकिकस्य वैदिकस्य वा एकस्यैव वाक्यस्य द्व्यर्थबोधित्वे तदुक्तलक्षणानाक्रान्तमिति न तदेकं वाक्यं स्यादित्यर्थः । वार्तिके यथा—"अर्थैकत्वादिति तथा वाक्यलक्षणमुच्यते । अनेकार्थावबोधित्वं न स्याल्लक्षणबद्धत" ॥२६४॥ इति ।
९. बाधकाभावत्वमेव । १०. एकवाक्यस्यानेकार्थत्वस्य । ११. एकवाक्यस्यानेकार्थत्वाभावरूपम् । १२. अर्थैकत्वादिति—(जै० सू० २।१।४६) विभागे—विच्छिद्य पाठे साकाङ्क्षत्वे सति अर्थैकत्वं यावति स्यात्तावदेकं वाक्यमित्यर्थः । यथा "देवस्य त्वा सवितुः प्रसवे" इति । अर्थैकत्वमात्रोक्तौ "भगो वो विभजतु पूषा वो विभजतु" इत्यत्रापि विभागरूपार्थैक्यादेकवाक्यता स्यादत साकाङ्क्षं चेदिति । विभागे साकाङ्क्षत्वं "स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेघसुमनस्यमानः" इत्यत्राप्यस्ति तच्छब्दस्य पूर्वसाकाङ्क्षत्वादतस्तद्वारणायार्थैकत्वादिति । तत्र तु सदनसादनरूपार्थभेद इति नातिव्याप्तिरिति ।

*एकवाक्यत्वलक्षणाधिकरणसूत्रम्—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" जै० सू २।१।४६ । अथ प्रश्लिष्टपठितेषु यजुःषु कथमवगम्यते, इयदेकं यजुरिति । यावता पदसमूहेनेज्यते तावान् पदसमूह एकं यजुः । कियता चेज्यते । यावता क्रियाया उपकारः प्रकाश्यते तावद्वक्तव्यत्वाद् वाक्यमित्युच्यते तेनाभिधीयते—अर्थैकत्वादेकं वाक्यमिति । एतस्माच्चेत्कारणादेकवाक्यता भवति तस्मादेकार्थः पदसमूहो वाक्यम् । यदि च

न च कानिचिदुपनिषद्वाक्यानि ब्रह्मैकत्वप्रतिषेधं कुर्वन्ति । यत्तु लौकिकं वाक्यमग्निरुष्णः शीतश्चेति न तत्रैकवाक्यता तदेकदेशस्य प्रमाणान्तरविषयानुवादित्वात् । अग्निः शीत इत्येतदेकं वाक्यमग्निरुष्ण इति तु प्रमाणान्तरानुभवस्मारकं न तु स्व-

---

द्वितीयं दूषयति—न चेति । 'एकस्य वाक्यस्यानेकार्थत्वं लोके दृष्टमित्याशङ्कयाऽऽह—यत्त्विति । तदेकदेशस्येत्यादिवाक्यं विवृणोति—अग्निरिति । अनुवादकबोधकभागयोरेकवाक्यत्वाभावं

---

ऐसा कहना भी ठीक नहीं है कि कुछ श्रुतिवाक्य ब्रह्मात्मैक्य का प्रतिषेध करते हैं—"अग्नि उष्ण स्वभाव वाला है, और शीतल स्वभाव वाला भी होता है" यह जो लौकिक वाक्य है, वहाँ एकवाक्यता नहीं होती क्योंकि उसके एकदेश का प्रमाणान्तर के विषयभूत अर्थ का अनुवादक होना सिद्ध

---

१. उक्तौ । २ अनुभवमाश्रित्य शङ्कते—एकस्येति ।

---

विभज्यमानं साकाङ्क्षं पदं भवति । किमुदाहरणं 'देवस्य त्वा सवितुः प्रसवे' इति । दर्शपूर्णमासयोराम्नायते—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये जुष्टं निर्वपामि इति वाक्यानि भिन्नानि भवितुमर्हन्ति । कुतः । एकत्वनियामकस्य दुर्बोधत्वात् । अर्थैक्यं वाक्यैक्यं प्रयोजकमिति चेन्न । एकस्मिन्पदेऽतिव्याप्तेः पदसमूहस्य वाक्यत्वे समूहानामत्र बहूनां सम्भवाद्वाक्यभेदः स्यादिति चेन्मैवम् । यद्विभागे साकाङ्क्षमविभागे चैकार्थं तदेकं वाक्यमिति प्रयोजकस्य बोद्धुं शक्यत्वात् । विभागे साकाङ्क्षमित्युक्तेऽतिव्याप्तिः स्यात् 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधसुमनस्यमानः' इत्यत्र । तस्मिन्नित्यादिपदसमूहस्य विभागे सति प्रकृतवाचि तच्छब्दार्थनिर्णयाय पूर्वपदसमूहे साकाङ्क्षत्वमस्ति । अतस्तद्व्यवच्छेत्तुमेकार्थमित्युच्यते । न हि तत्रैकार्थत्वमस्ति पूर्वसमूहस्य सदनकरणमर्थः उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनम् । अत्र द्वयोः समूहयोर्वाक्यद्वयमुभयवादिसिद्धं तदेकार्थमित्यनेन व्यावर्त्यते । एकार्थमित्युक्तेऽतिव्याप्तिः स्यात् 'भगो वां विभजतु पूषा वां विभजतु' इत्यत्र । अनयोर्विभजनमन्त्रत्वेन समतयोः पदसमूहयोस्तात्पर्यविषयस्य द्रव्यविभागरूपार्थस्यैकत्वात्तद्व्यवच्छेत्तुं विभागे साकाङ्क्षमित्युक्तम् । प्रकृते तु अग्नये जुष्टमित्यादिसमूहे पृथक्कृते पूर्वो देवस्य त्वा इति समूहः साकाङ्क्षो भवति । एकीकृते तु कृत्स्नस्यैक एव निर्वापोऽर्थः एतनैकवाक्यत्वनिर्णयेनानियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यमिति माधवीयव्याख्या । "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" । अर्थैकवाक्यतालक्षणमाह—अर्थेति । विभागे वाक्यघटकपदानां विभागे साकाङ्क्षमेकपदरहितस्यापरपदस्य शाब्दबोधाजनकत्वं तयोरेवार्थैकत्वमेकफलप्रतिपादकत्वम् । विभागे साकाङ्क्षत्वे सति एकफलप्रतिपादकं यत्तदेव वाक्यमित्यर्थः । यथाऽग्नये जुष्टं निर्वपामीत्यत्र विभागे परस्परसाकाङ्क्षं निर्वापरूपैकार्थप्रतिपादकमिति जैमिनिसूत्रवृत्तिः सुबोधिनीनामिका । अत्र विशेष्यानुपादाने 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधसुमनस्यमानः' ॥ इत्यत्र तस्मिन्नित्याद्युत्तरार्द्धघटकतत्पदस्य बुद्धिविषयतावच्छेदकधर्मावच्छिन्नवाचकत्वेन बुद्धिविषयतावच्छेदकत्वज्ञानापेक्षशाब्दबोधोपयोगिशक्तिग्रहविषयत्वाद्बुद्धिविषयतावच्छेदकत्वज्ञानस्य च सादनादिपदार्थज्ञानाधीनत्वादुत्तरार्धस्य विभागे सति साकाङ्क्षत्वस्य स्फुटत्वेन तत्रैकवाक्यत्वलक्षणातिव्याप्तिः स्यादतस्तद्वारणाय तदुपादानम् । 'भगो वां विभजतु पूषा वां विभजतु' अनयोरेकवाक्यत्ववारणाय सत्यन्तम् । विशेष्यविशेषणयोरुभयोरुपादाने तु न कश्चिद्दोषः पूर्वत्र सदनसादनरूपभिन्नपदार्थप्रतिपादकत्वात् उत्तरत्र च विभागे साकाङ्क्षत्वाभावादिति रामेश्वरसूरीया व्याख्या ।

यम'र्थावबोधकम् । 'अतो नाग्निः शीत इत्य'नेनैकवाक्यता प्रमाणान्तरानुभवस्मारणेनैवो-पक्षीणत्वात् । यत्तु विरुद्धार्थप्रतिपादकमिदं वाक्यमिति 'मन्यते तच्छीतोष्णपदाभ्यामग्निपद-सामानाधिकरण्यप्रयोगनिमित्ता भ्रान्तिर्न त्वेकस्य वाक्यस्यानेकार्थत्वं लौकिकस्य वैदिकस्य वा ।

यच्चोक्तं कर्मकाण्डप्रामाण्यविघातकृदुपनिषद्वाक्यमिति तन्न, 'अन्यार्थत्वात् । 'ब्रह्मै'क-त्वप्रतिपादनपरा ह्यु'पनिषदो नेष्टार्थप्राप्तौ साधनोपदेशं 'तस्मिन्वा 'पुरुषनियोगं वारयन्त्य-नेकार्थत्वानुपपत्तेरेव । न च कर्मकाण्डवाक्यानां स्वार्थे प्रमा नोत्पद्यते । 'असाधारणे

---

फलितमाह—अत इति । हेत्वर्थमुक्तमेव स्फुटयति—प्रमाणान्तरेति । शीतः "शैशिरोऽग्निरित्येतद्बो-धकमेव चेद्वाक्यं कथं "तर्हि तत्र लोकस्य विरुद्धार्थधीरित्याशङ्क्याऽऽह—यत्त्विति ।

स्वार्थविघातकत्वादप्रामाण्यमुपनिषदामित्येतन्निराकृत्य चोद्यान्तरमनूद्य निराकरोति—यच्चेत्यादिना । तस्मिन्निति इष्टार्थप्रापकसाधनोक्तिः । ननूपनिषद्वाक्यं ब्रह्मात्मैकत्व "साक्षात्प्रतिपादय-द"र्थात्कर्मकाण्डप्रामाण्यविघातकमिति चेत्तत्र "तद"प्रामाण्यमनुत्पत्तिलक्षणं "विपर्यासलक्षणं वेति विकल्प्याऽऽद्यमनूद्य दूषयति—न चेति । विदितपदतदर्थसंगते"र्वाक्यार्थन्यायविदस्तदर्थे" प्रमोत्पत्तिदर्शना-

---

है । "अग्नि शीतलस्वभाव वाला है" यह एकवाक्य है, और "अग्नि उष्णस्वभाव वाला होता है" यह प्रमाणान्तर से प्राप्त अनुभव का स्मारक है; (अपूर्व अर्थबाधक होने से अप्रामाणिक होने के कारण) स्वयं किसी अर्थविशेष का बोधक नहीं है । अतः (वक्ष्यमाण हेतु से) "अग्नि शीतलस्वभाव वाला है" इस (अपूर्वबोधक) वाक्य से उसकी एकवाक्यता नहीं है क्योंकि वह प्रमाणान्तर से होने वाले अनुभव की स्मृति दिला कर ही समाप्त हो जाता है । इसके अतिरिक्त ऐसा जो प्रतीत होता है कि यह वाक्य विरुद्ध अर्थों का प्रतिपादन करने वाला है, वह शीत और उष्णपदों का अग्निपद की समाना-धिकरण प्रयुक्त भ्रान्ति है क्योंकि एक वाक्य के अनेक अर्थ तो न ही लौकिक वाङ्मय में हो सकते हैं, न ही वैदिक वाङ्मय में हो सकते हैं ।

इसके अतिरिक्त जो यह कहा कि उपनिषद्वाक्य कर्मकाण्ड की प्रामाणिकता के विघातक है;

---

३. अनेन अपूर्वबाधकतदेकदेशेन । अग्निरुष्ण
१. अपूर्वार्थबोधकत्वेनाप्रमाणत्वात् । २. वक्ष्यमाणात् । ६ हेतुवाक्यं विवृणोति ब्रह्मेति । इत्यनुवादकभागस्येति शेषः । ४ प्रतीयते । ५. उपनिषदाम् । ९. प्रमाणान्तराविषये । १०. शीताग्नेरसंभावितत्वमाशङ्क्याऽऽह—
७. साधने । ८. पुरुषप्रवृत्तिम् । तदा हि सेव्यमानेऽपि तस्मिन्नृतुप्रभावादपनीयते शीतं तदेत्य प्रयुज्यते शैशिर इति । शिशिरर्तुभवः । यद्वा विद्युन्मेघादिप्रभवोऽपि हन्ताग्निरपि शीतायत इति शीत इति वा इति शीतानपहारकत्वेन तस्य तत्त्वम् । ११. अग्निरुष्णः शीतश्चेत्यंकोक्ति. दिव्योऽविन्धनः शैशिरो विवक्षितः । पार्थिवस्तूष्णोऽग्निरिति बोध्यम् । शीतोऽग्निरित्येकदेशान्तरेणापूर्वः शैशिरः शीतोऽग्नि-वदेकदेशोऽग्निरुष्ण इति तेनाध्यक्षसिद्धोष्णाग्न्यनुवादेन विरोधोऽतुल्यबलत्वादित्यभिप्रेत्याऽऽह—तर्हीति । उक्तरीत्या यथोक्तवाक्यस्याविरुद्धत्वे बोध्यते न चानुवादकबोधकयोर्विरोधोऽतुल्यबलत्वादित्यभिप्रेत्याऽऽह—तर्हीति । १३. जीवस्य कर्तृत्वे ब्रह्मत्वं नानुपपत्तिरित्यर्थापत्त्या । १४. इत्यर्थः । तत्र यथोक्तवाक्ये । १२. शक्त्या । १६. भ्रमजनकत्वरूपम् । १७. वाक्यार्थ-कर्मकाण्डेति यावत् । १५. स्वार्थे प्रमाजनकत्वाभावरूपम् । १८. वाक्यार्थे ।
बोधप्रक्रियाभिज्ञस्य ।

चेत्स्वार्थे प्रमामुत्पादयति वाक्यं कुतोऽन्येन विरोधः स्यात् ।

[1]ब्रह्मैकत्वे निर्विषयत्वात्प्रमा नोत्पद्यत एवेति चेत् । न, [2]प्रत्यक्षत्वात्प्रमायाः । "[3]दर्शपूर्णमासाभ्यां [4]स्वर्गकामो यजेत" "ब्राह्मणो न [5]हन्तव्य." इत्येवमादिवाक्येभ्यः प्रत्यक्षा प्रमा जायमाना [6]सा नैव भविष्यति यद्युपनिषदो ब्रह्मैकत्वं बोधयिष्यन्तो[7]त्यनुमानम् । न चानुमानं प्रत्यक्षविरोधे प्रामाण्यं लभते । तस्मादसदेवैतद्गीते प्रमैव नोत्पद्यत इति ।

---

विरत्यर्थं । स्वार्थे प्रमामुत्पादयदपि वाक्यं मानान्तरविरोधादप्रमाणमित्याशङ्क्याऽऽह—असाधारणे चेदिति । [10]स्वगोचरशूरत्वात्प्रमाणानामित्यर्थः ।

विमतं कर्मकाण्डवाक्यं न प्रमोत्पादकं [10]प्रमाणापहृतविषयत्वादनुष्णाग्निवाक्यवदिति शङ्कते —ब्रह्मे ति । प्रत्यक्षविरोधादनुमानमनवकाशमिति परिहरति—नेत्यादिना ।

---

यह बात भी ठीक नही है क्योकि उपनिषदो का अर्थ तो दूसरा ही है । ब्रह्मात्मैक्य प्रतिपादन करने वाली उपनिषदें इष्ट अर्थ की प्राप्ति के साधन का उपदेश तथा उस साधन में पुरुष की प्रवृत्ति का निवारण नही करती क्योकि उनके अनेक अर्थ होना असम्भव है । इसके अतिरिक्त कर्मकाण्डपरक वाक्यो की स्वार्थ मे प्रमा उत्पन्न न होती हो—ऐसा भी नहीं कहा जा सकता। यदि कोई वाक्य अपने (प्रमाणान्तराविषय) असाधारण अर्थ मे प्रमा उत्पन्न करता है तो उसका दूसरे वाक्य से विरोध कैसे होगा ?

(पूर्ववादी कहता है—) ब्रह्मात्मैक्यबोधक वेदान्तवाक्यो मे तो कर्मकाण्डपरक वाक्यो का विषय ही नही रहता, इसलिए प्रमा उत्पन्न नही हो सकती। (सिद्धान्ती उक्त आक्षेप का परिहार करता है—) ऐसा कहना ठीक नही है । अनुमान के उपजीव्य प्रत्यक्षप्रमाण के प्रबल होने से उसके विरोध मे अनुमान की अप्रवृत्ति होने से प्रमा होगी ही। "स्वर्ग की इच्छा वाला दर्श और पूर्णमास यागो द्वारा यजन करे" (ऐसा विधिवाक्य है), "ब्राह्मण का वध नही करना चाहिए" (ऐसा निषेध-वाक्य है) इत्यादि विधिनिषेधपरक वाक्यो से प्रत्यक्षप्रमा उत्पन्न होती है । यदि उपनिषद्वाक्य ब्रह्मात्मैक्य का बोध कराएँगे, तो प्रमा नही होगी"—यह अनुमान प्रमाण का स्वरूप है । प्रत्यक्ष प्रमाण से विरोध होने से अनुमान प्रमाण की प्रामाणिकता नही हो सकती। इसलिए प्रमा के प्रत्यक्ष होने से यह कहना अनुचित ही है कि उनसे प्रमा उत्पन्न नही होती ।

इसके अतिरिक्त जो पुरुष अविद्या के द्वारा मन मे आरूढ यथाप्राप्त क्रिया, कारक और फल का आश्रय करके सामान्य इष्टप्राप्ति, अनिष्टपरिहार और उपाय मे प्रवृत्त है, वह विशेष को नही

---

१ ब्रह्मैकत्वे इति—ब्रह्मात्मैक्य बाधयता ब्रह्मवाक्येन (वेदान्तवाक्येन) कर्मवाक्यार्थस्य भेदस्यापहृतत्वात् न तद्वाक्यात् प्रमोत्पत्तिरित्यर्थः । २ प्रत्यक्षत्वादिति—अनुमानोपजीव्यस्याध्यक्षस्य प्राबल्यात्तद्विरोधेऽनुमानाप्रवृत्तिरित्यर्थः । ३ प्रत्यक्षप्रमामेव दर्शयति—दर्शेति । ४ विधिवाक्यम् । ५ निषेधवाक्यम् । ६ अनुमानस्वरूपं दर्शयति—सा नैवेति । ७ इत्यनुमानमिति—प्रत्यक्षविरोधे निरवकाशमिति शेषः । ८ प्रमाया प्रत्यक्षत्वात् । ९ स्वविषयबोधनसमर्थत्वात् । १० प्रमाणेति—उपनिषत्प्रमाणेनापहृतो भेदात्मको विषयो यस्य तत्त्वात् ।

अपि च यथाप्राप्तस्यैवा'विद्याप्रत्युपस्थापितस्य क्रियाकारकफलस्याऽऽश्रयणेने'ष्टा-निष्टप्राप्तिपरिहारोपायसामान्ये प्रवृत्तस्य 'तद्विशेषमजानतस्तदाचक्षाणा श्रुतिः क्रिया-कारकफलभेदस्य लोकप्रसिद्धस्य सत्यतामसत्यतां वा नाऽऽचष्टे न च वारयति । इष्टानिष्ट-फलप्राप्तिपरिहारोपायविधिपरत्वात् ।

यथा काम्येषु प्रवृत्ता श्रुतिः 'कामानां मिथ्याज्ञानप्रभवत्वे सत्यपि 'यथाप्राप्तानेव कामानु'पादाय तत्साधनान्येव विधत्ते न तु कामानां मिथ्याज्ञानप्रभवत्वादनर्थरूपत्वं' चेति न विदधाति, तथा नित्याग्निहोत्रादिशास्त्रमपि मिथ्याज्ञानप्रभवं क्रियाकारकभेदं यथा-प्राप्तमेवा'ऽऽदायेष्टविशेषप्राप्तिमनिष्टविशेषपरिहारं वा किमपि प्रयोजनं पश्यदग्निहोत्रादीनि कर्माणि विधत्ते नाविद्यागोचरासद्वस्तु''विषयमिति न प्रवर्तते । यथा काम्येषु । न च

इतश्च कर्मकाण्डस्य नाप्रामाण्यमिति वदन्नितोपं प्रत्याह—अपि चेति । यथाप्राप्तस्येत्यस्यैव व्याख्यानमविद्याप्रत्युपस्थापितस्येति । साध्यसाधनसंबन्धबोधकस्य कर्मकाण्डस्य न ''विपर्यासो ''मिथ्यार्थत्वेऽपि ''तस्यार्थक्रियाकारित्वसामर्थ्यानपहारात्प्रामाण्योपपत्तेरिति भावः ।

ननु कर्मकाण्डस्य मिथ्यार्थत्वे ''मिथ्याज्ञानप्रभवत्वाद''नर्थनिष्ठत्वेना''प्रवर्तकत्वादप्रामाण्यमत आह—यथेति । ''विमतमप्रमाणं मिथ्यार्थत्वाद्विप्रलम्भकवाक्यवदित्याशङ्क्य व्यभिचारमाह—यथा काम्येष्विति । अग्निहोत्रादिषु काम्येषु कर्मसु मिथ्याज्ञानजनितं मिथ्याभूतं काममुपादाय शास्त्रप्रवृत्त-वन्नित्येष्वपि तेषु ''साधनमसद्वेवाऽऽदाय शास्त्रं प्रवर्तता ''तथाऽपि बुद्धिमन्तो न ''प्रवर्तिष्यन्ते वेदान्ते-ष्व''स्तन्मिथ्यात्वावगमादित्याशङ्क्याऽऽह—न चेति ।

जानता। तब विशेषप्रतिपादक वह श्रुति लोकप्रसिद्ध क्रिया, कारक और फलभेद की सत्यता और असत्यता का न तो विधान ही करती है और न ही निषेध करती है क्योंकि वह तो इष्टप्राप्ति और अनिष्टपरिहार के उपाय का विधान करती है ।

जिस प्रकार काम्यकर्मों मे प्रवृत्त हुई श्रुति विषयो के मिथ्याज्ञानजनित होने पर भी अविद्या से प्रत्युपस्थित विषयों का सकीर्तन करके उनके साधनो का ही विधान करती है। किन्तु विषय मिथ्या-ज्ञानजनित होने के कारण अनर्थरूप नही है—ऐसा हेतुविधान नही करती । इसी प्रकार अग्निहोत्रादि-नित्यकर्मों का प्रतिपादक शास्त्र भी मिथ्याज्ञानजनित अविद्याप्रत्युपस्थित क्रिया, कारक और फलरूप

१. अविद्यया भनस्याण्डस्य । २. इष्टेत्यादि—सुखजनकत्वावच्छिन्ने वैधकर्मसामान्ये एव परिहारोपायसामान्य-मपि बोध्यम् । ३. पुसः । ४. तद्विशेषमिति—ज्योतिष्टोमादि हिंसादिनिवृत्ति चेत्यर्थः । ५. विषया-णाम् । ६. अविद्याप्रत्युपस्थितान् । ७. उद्दिश्य । ८. हेतोः । ९. उपजीव्य । १०. वर्म । ११. विपर्यासलक्षणमप्रामाण्यम् । १२. कल्पितकर्मादिविषयत्वेऽपि । १३. कर्मकाण्डस्य । १४. मिथ्याज्ञान-जनकत्वात् । १५. सुखसाधननिष्ठत्वाभावेन । १६. स्वविषय प्रवृत्तिजनकत्वाभावात् अप्रवर्तकत्वलक्षण-मेवाप्रामाण्यम् । १७ नित्यकर्मवाक्यम् । १८. परेच्छासाधनमुपलक्षयति साधनेच्छा जनयतीति न्यायमभिप्रेत्य साधनमित्युक्तम् । १९ यथाप्राप्त नाममुपादाय शास्त्रप्रवृत्तावपि । २०. तथा चानुष्ठान-लक्षणमप्रामाण्यमिति भाव. । २१ तत्र साधनादि ।

पुरुषा न प्रवर्तेरन्नविद्यावन्तो दृष्टत्वाद्यथा कामिनः।

विद्यावतामेव कर्माधिकार इति चेन्न। ब्रह्मैकत्वविद्यायां कर्माधिकारविरोधस्योक्तत्वात्। एतेन ब्रह्मैकत्वे निर्विषयत्वादुपदेशेन तद्ग्रहणफलाभावदोषपरिहार उक्तो वेदितव्यः।

पुरुषेच्छारागादिवैचित्र्याच्च। अनेका हि पुरुषाणामिच्छा रागादयश्च दोषा विचित्रास्ततश्च बाह्यविषयरागाद्यपहृतचेतसो न शास्त्रं निवर्तयितुं शक्तम्। नापि

---

अविद्यावतां कर्मसु प्रवृत्तिमाक्षिपति—विद्यावतामेवेति। द्रव्यदेवतादिज्ञानं वा ब्रह्मैकत्वज्ञानं वा कर्मसु प्रवर्तकमिति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—नेत्यादिना। कर्मकाण्डप्रामाण्यानुपपत्तिरित्याद्यामर्थापत्तिं निराकृत्य द्वितीयामर्थापत्तिमतिदेशेन निराकरोति—एतेनेति। कर्मकाण्डस्याज्ञं प्रति सार्थकत्वोपपादनेनेति यावत्।

ननु कर्मकाण्डं साध्यसाधनसंबन्धं बोधयत्प्रवृत्त्या विपरमतो रागविवशात्तदयोगाच्छास्त्रीयप्रवृत्त्याविविषयस्य द्वैतस्य सत्यत्वमन्यथा तद्विषयत्वानुपपत्तिरित्यर्थापत्त्यन्तरमायातमिति तत्राऽऽह—पुरुषेच्छेति। न प्रवृत्तिनिवृत्ती शास्त्रवशादिति शेषः। तदेव स्फुटयति—अनेका हीति। शास्त्रम्या-

---

भेद को उद्देश करके इष्टविशेष की प्राप्ति और अनिष्टविशेष के परिहाररूप किसी प्रयोजन को देखकर अग्निहोत्रादि कर्मों का विधान करता है। इसकी, अविद्यागोचर असद्वस्तु कर्म से सम्बन्ध होने से प्रवृत्ति न होती हो—ऐसी बात नहीं है जैसा कि काम्यकर्मों के प्रसग में देखा गया है। अविद्यावान् पुरुषो की उन कर्मों मे प्रवृत्ति न होती हो—ऐसा भी नही है क्योकि काम्यकर्मों के अनुष्ठान करने वाले पुरुषो के समान उनकी भी प्रवृत्ति देखी गई है।

विद्यावान् पुरुषो का ही कर्म मे अधिकार है, ऐसा कहना ठीक नही है क्योकि ब्रह्म की एकता के ज्ञान मे कर्म की विधि पुरुष और सम्बन्धादि-अधिकार का विरोध तो पहले ही कहा जा चुका है। इससे उपनिषदो मे ब्रह्मात्मैक्यज्ञान निरधिकारी होने से ब्रह्मात्मैक्य के उपदेश से उसका ज्ञानरूप फलाभाव दोष का परिहार बतलाया गया, ऐसा जान लेना चाहिए।

इसके अतिरिक्त पुरुषो की इच्छा एव रागादि की विचित्रता होने के कारण भी उपदेश की

---

१ दृष्टत्वादिति—अतत्त्वविदां प्रवृत्तेर्दृष्टत्वात् प्रत्यक्षसिद्धत्वादित्यर्थः। तत्प्रवृत्तौ प्रयोजकं दर्शयति—यथा कामिन इति। अज्ञानां प्रवर्तकं कामसङ्गत्वादिति भावः। स यथाकामो भवति 'अकामतः क्रिया काचित्' इत्यादिश्रुतिस्मृतिभ्यः। कामनिमित्तैव कर्मसु प्रवृत्तिरिति तत्त्वम्। २ काम्यकर्मानुष्ठायिनः। ३ जातायां सत्याम्। ४ कर्मेति—अधिकारो विधिपुरुषसम्बन्धादिः। विरोधस्येति तदुक्तं वार्तिके—"सर्वाधिकारप्रध्वंसाच्च कृत्स्नारम्भवाधिनः। प्रवृत्तौ वा निवृत्तौ वा गुणभावः सदेष्यते" ॥५८०॥ गुणभावः कर्तृत्वम्। ५ सम्बन्धादौ बृ० उ० ६०पृष्ठभाष्ये। ६ निरधिकारित्वादुपनिषदाम्। ७ ब्रह्मात्मैक्योपदेशेनैतज्ज्ञानफलाभाव दोषपरिहारः। ८ वैचित्र्यात्। ९ अर्थापत्तिद्वयमुक्तं प्राक् बृ० उ० ५०६पृष्ठटीकायाम्। १० तथा च उपनिषत्प्रामाण्यमपि समधिकृत्यैवत्यर्थः। ११ आदिना निषिद्धनिवृत्तिः। १२ तस्य तत्परत्वात्। १३ प्रवृत्त्याद्ययोगात्। १४ तत्सत्यत्वानभ्युपगमे। १५ द्वैतस्य शास्त्रविषयत्वानुपपत्तिरिति यावत्। १६. शास्त्रस्याकारकत्वादिति भावः। १७ सगृहीतमेव। १८ ज्ञापकत्वमेव हि शास्त्रस्य।

स्वभावतो बाह्यविषयविरक्तचेतसो विषयेषु प्रवर्तयितुं शक्तम्। [1]किंतु शास्त्रादेतावदेव भवतीदमिष्टसाधनमिदमनिष्टसाधनमिति साध्यसाधनसंबन्धविशेषाभिव्यक्तिः। प्रदीपादिवत्तमसि रूपाविज्ञानम्। न तु शास्त्रं भृत्यानिव बलान्निवर्तयति नियोजयति वा। दृश्यन्ते हि पुरुषा रागादि[2]गौरवाच्छास्त्रमप्यतिक्रामन्तः।

[3]तस्मात्पुरुषमतिवैचित्र्यमपेक्ष्य साध्यसाधनसंबन्धविशेषाननेकधोपदिशति। [4]तत्र पुरुषाः स्वयमेव यथारुचि साधनविशेषेषु प्रवर्तन्ते शास्त्रं तु सवितृप्रदीपादिवत्तस्त एव। तथा कस्यचित्परोऽपि पुरुषार्थोऽपुरुषार्थवदवभासते यस्य यथा[5]ऽवभासः स [6]तथारूपं

कारकत्वात्प्रवर्तकत्वाद्यभावमुक्त्वा 'तत्रैव युक्त्यन्तरमाह—दृश्यन्ते हीति।

'तर्हि शास्त्रस्य किं कृत्यमित्याशङ्क्याऽऽह—तस्मादिति। तत्र संबन्धविशेषोपदेशे सतीति यावत्। यथारुचि पुरुषाणां प्रवृत्तिश्चेत्परमपुरुषार्थं कैवल्यमुद्दिश्य सम्यग्ज्ञानसिद्धये तदुपायश्रवणादिषु संन्यासपूर्विका प्रवृत्तिर्बुद्धिपूर्वकारिणामुचितेत्याशङ्क्याऽऽह—तथेति। रागादिवैचित्र्यानुसारेणेति यावत्। उक्तं हि—

'अपि "वृन्दावने शून्ये शृगालत्वं स इच्छति।
न तु निर्विषयं मोक्षं गन्तुमर्हति गौतम' इत्यादि।

"तर्हि कथं पुरुषार्थविवेकसिद्धिस्तत्राऽऽह—यस्येति। पुरुषार्थदर्शनकार्यमाह—तदनुरूपाणीति।

उपयुक्तता सिद्ध होती है। पुरुषो की इच्छाएं अनेक हैं, रागादि भी विभिन्न प्रकार के दोष है। वैचित्र्य से जिनका चित्त बाह्य विषयो के राग से अनुरक्त है, उन्हे उन विषयो से निवृत्त कराने मे शास्त्र समर्थ नही है। इसी तरह जिनका चित्त स्वभाव से ही बाह्य विषयो से विरक्त है; उनकी प्रवृत्ति विषयो के प्रति कराने मे भी शास्त्र की सामर्थ्य नही है। (तो फिर शास्त्र क्या करता है?) शास्त्र तो इतना ही कर पाता है कि इष्टप्राप्ति साधन और अनिष्टपरिहार साधन है, इस प्रकार साध्य-साधन के सम्बन्ध-वैशिष्टय की प्रतीति ही होती है। जिस प्रकार दीपक आदि से अन्धकार मे रूपादि का ज्ञान होता है अथवा जिस प्रकार नौकरो को (स्वामी अपने) बलाधिकार का प्रयोग करके कार्य मे प्रवृत्त या निवृत्त करता है, उस प्रकार शास्त्र नही करता। क्योकि (विषयो के प्रति) रागादि के अतिशय होने पर लोग शास्त्र का अतिक्रमण करते हुए देखे जाते हैं।

इसलिए पुरुषो की विभिन्न बुद्धि को देखते हुए शास्त्र अनेक प्रकार से साध्य-साधनरूप सम्बन्ध-विशेषो का उपदेश करता है। (शास्त्र की उपेक्षा कर विषयो मे प्रवृत्ति होने के कारण) वहां पुरुष स्वय ही अपनी रुचि के अनुसार (शास्त्र द्वारा ही निर्दिष्ट प्रदीप के समान) साधनविशेषो मे प्रवृत्त होते है। शास्त्र तो सूर्य और प्रदीपादि के समान तटस्थ ही रहता है। इस प्रकार किसी पुरुष को

१. किं तर्हि करोति शास्त्रम्। तत्राऽऽह—शास्त्रादिति। २ अतिशयात्। ३. शास्त्रस्याकारकत्वेनाप्रवर्तकत्वात्। ४. कामस्य प्रवर्तकत्वं न शास्त्रस्येत्युपसंहरति—तत्रेति। ५. शास्त्रैकप्रदीपेषु। ६. अवबोध.। ७. स्वाभिप्रायानुरूपम्। ८. शास्त्रप्रयुक्तप्रवृत्त्याद्यभावे। ९. अकारकत्वेनाप्रवर्तकत्वे। १०. भक्तत्वात्। ११. रागादिवैचित्र्यानुरोधेन पुरुषार्थादिप्रतिभाने सति।

पुरुषा न प्रवर्तेरन्नविद्यावन्तो 'दृष्टत्वाद्यथा 'कामिनः ।

विद्यावतामेव कर्माधिकार इति चेन्न । ब्रह्मैकत्वविद्याया 'कर्माधिकारविरोध-स्योक्तत्वात् । एतेन ब्रह्मैकत्वे 'निर्विषयत्वादुपदेशेन 'तद्ग्रहणफलाभावदोषपरिहार उक्तो वेदितव्य. ।

पुरुषेच्छारागादिवैचित्र्याच्च । अनेका हि पुरुषाणामिच्छा रागादयश्च दोषा विचित्रास्ततश्च' बाह्यविषयरागाद्यपहृतचेतसो न शास्त्रं निवर्तयितुं शक्तम् । नापि

---

अविद्यावतो कर्मसु प्रवृत्तिमाक्षिपति—विद्यावतामेवेति । द्रव्यदेवतादिज्ञानं वा ब्रह्मैकत्वज्ञानं वा कर्मसु प्रवर्तकमिति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीय दूषयति—नेत्यादिना । कर्मकाण्डप्रामाण्यानुपपत्तिरित्याद्या'मर्थापत्ति निराकृत्य द्वितीयामर्थापत्तिमनिवेशेन निराकरोति—एतेनेति । कर्मस्थ पहस्याम प्रति सार्थकत्वोपपादनेनेति "यावत् ।

ननु कर्मकाण्ड साध्यसाधनसबन्ध बोधयत्प्रवृत्त्या विपरमतो" रागादिवशा"त्तदयोगाच्छास्त्रीय-प्रवृत्त्यादिविषयस्य द्वैतस्य "सत्यत्वमन्यथा "तद्विषयस्यानुपपत्तिरित्यर्थापत्त्यन्तरमायातमिति तत्राऽऽह—पुरुषच्छति । न प्रवृत्तिनिवृत्ती "शास्त्रवशादिति शेष । तदेव "स्फुटयति—अनेका हीति । "शास्त्रमन्या-

---

भेद को उद्देश करके इष्टविशेष की प्राप्ति और अनिष्टविशेष क परिहाररूप किसी प्रयोजन को देखकर अग्निहोत्रादि कर्मों का विधान करता है। इसकी, अविद्यागोचर असद्वस्तु कर्म से सम्बन्ध होने से प्रवृत्ति न होती हो—ऐसी बात नही है जैसा कि काम्यकर्मो के प्रसग मे देखा गया है। अविद्यावान् पुरुषो की उन कर्मों मे प्रवृत्ति न होती हो— एसा भी नही है क्योकि काम्यकर्मों के अनुष्ठान करने वाले पुरुषो के समान उनकी भी प्रवृत्ति देखी गई है।

विद्यावान् पुरुषो का ही कम म अधिकार है, ऐसा कहना ठीक नही है क्योकि ब्रह्म की एकता के ज्ञान मे कर्म की विधि पुरुष और सम्बन्धादि-अधिकार का विरोध तो पहले ही कहा जा चुका है। इसमे उपनिषदो म ब्रह्मात्मैक्यज्ञान निरधिकारी होने से ब्रह्मात्मैक्य के उपदेश से उसका ज्ञानरूप फलाभाव दोष का परिहार बतलाया गया ऐसा जान लेना चाहिए।

इसके अतिरिक्त पुरुषो की इच्छा एव रागादि की विचित्रता होने के कारण भी उपदेश की

---

१ दृष्टत्वादिति—अतत्त्वविदा प्रवृत्तदृष्टत्वात् प्रत्यक्षसिद्धत्वादित्यर्थ । तत्प्रवृत्तौ प्रयोजक दर्शयति—यथाकामिन इति । अज्ञाना प्रवर्तके काममद्भावादिनि भाव । स यथाकामो भवति 'अकामत क्रिया काचित्' इत्यादिश्रुतिस्मृतिभ्य । कामनिमित्तैव कर्मसु प्रवृत्तिरिति तत्त्वम् । २ काम्यकर्मानुष्ठायिन । ३ जातायां सत्याम् । ४ कर्मेति—अधिकारो विधिपुरुषसम्बन्धादि । विरोधस्येति तदुक्त वार्तिके—"सर्वाधिकारप्रध्वंसात्र कृत्स्नात्मावबोधिन । प्रवृत्तौ वा निवृत्तौ वा गुणभाव सदेष्यते ॥५८०॥ गुणभाव कर्तृत्वम् । ५ सम्बन्धादौ बृ० उ० ९०पृष्ठभाष्ये । ६ निरधिकारित्वादुपनिषदाम् । ७ ब्रह्मात्मैक्योपदेशेनैतज्ज्ञानफला-भाव दोषपरिहार । ८ वैचित्र्यात् । ९ अर्थापत्तिद्वयमुक्त प्राक् बृ० उ० ५०६पृष्ठटीकायाम् । १० तथा च उपनिषत्साधकमपि तमधिकृत्यैवत्यर्थ । ११ आदिना निषिद्धनिवृत्ति । १२ तस्य तत्परत्वात् । १३ प्रवृत्त्याद्ययोगात् । १४ सत्यत्वानभ्युपगमे । १५ द्वैतस्य शास्त्रविषयत्वानुपपत्तिरिति यावत् । १६ शास्त्रस्याकारकत्वादिति भाव । १७ सगृहीतमेव । १८ ज्ञापकत्वमेव हि शास्त्रस्य ।

स्वभावतो बाह्यविषयविरक्तचेतसो विषयेषु प्रवर्तयितुं शक्तम्। [1]किंतु शास्त्रादेतावदेव भवतीदमिष्टसाधनमिदमनिष्टसाधनमिति साध्यसाधनसंबन्धविशेषाभिव्यक्तिः। प्रदीपादिव-तमसि रूपादिज्ञानम्। न तु शास्त्रं भृत्यानिव बलान्निवर्तयति नियोजयति वा। दृश्यन्ते हि पुरुषा रागादि[2]गौरवाच्छास्त्रमप्यतिक्रामन्तः।

[3]तस्मात्पुरुषमतिवैचित्र्यमपेक्ष्य साध्यसाधनसंबन्धविशेषाननेकधोपदिशति। [4]तत्र पुरुषाः स्वयमेव यथारुचि साधनविशेषेषु प्रवर्तन्ते शास्त्रं तु सवितृप्रदीपादिवदुदस्त एव। तथा कस्यचित्परोऽपि पुरुषार्थोऽपुरुषार्थवदवभासते यस्य यथाऽवभासः स [5]तथारूपं

कारकाबाह्यप्रवर्तकत्वाद्यभावमुक्त्वा [6]तत्रैव युक्त्यन्तरमाह—दृश्यन्ते हीति। तत्र संबन्धविशेषोपदेशे सतीति [7]तर्हि शास्त्रस्य किं कृत्यमित्याशङ्क्याऽऽह—तस्मादिति। तत्र संबन्धविशेषोपदेशे सतीति यावत्। यथारुचि पुरुषाणां प्रवृत्तिश्चेत्परमपुरुषार्थं कैवल्यमुद्दिश्य सम्यग्ज्ञानसिद्धये तदुपायश्रवणादिषु संन्यासपूर्विका प्रवृत्तिर्बुद्धिपूर्वकारिणामुचितेत्याशङ्क्याऽऽह—तथेति। रागादिवैचित्र्यानुसारेणेति यावत्। उक्तं हि—

> 'अपि [8]वृन्दावने शून्ये शृगालत्वं स इच्छति।
> न तु निर्विषयं मोक्षं गन्तुमर्हति गौतम' इत्यादि।

[9]तर्हि कथं पुरुषार्थविवेकसिद्धिस्तत्राऽऽह—यस्येति। पुरुषार्थदर्शनकार्यमाह—तदनुरूपाणीति।

उपयुक्तता सिद्ध होती है। पुरुषो की इच्छाएं अनेक है, रागादि भी विभिन्न प्रकार के दोष हैं। वैचित्र्य से जिनका चित्त बाह्य विषयो के राग से अनुरक्त है, उन्हे उन विषयो से निवृत्त कराने मे शास्त्र समर्थ नही है। इसी तरह जिनका चित्त स्वभाव से ही बाह्य विषयों से विरक्त है; उनकी प्रवृत्ति विषयो के प्रति कराने मे भी शास्त्र की सामर्थ्य नही है। (तो फिर शास्त्र क्या करता है?) शास्त्र तो इतना ही कर पाता है कि इष्टप्राप्ति साधन और अनिष्टपरिहार साधन है, इस प्रकार साध्य-साधन के सम्वन्ध-वैशिष्टय की प्रतीति ही होती है। जिस प्रकार दीपक आदि से अन्धकार मे रूपादि का ज्ञान होता है अथवा जिस प्रकार नौकरो को (स्वामी अपने) बलाधिकार का प्रयोग करके कार्य मे प्रवृत्त या निवृत्त करता है, उस प्रकार शास्त्र नही करता। क्योकि (विषयो के प्रति) रागादि के अतिशय होने पर लोग शास्त्र का अतिक्रमण करते हुए देखे जाते हैं।

इसलिए पुरुषो की विभिन्न बुद्धि को देखते हुए शास्त्र अनेक प्रकार से साध्य-साधनरूप सम्वन्ध-विशेषो का उपदेश करता है। (शास्त्र की उपेक्षा कर विषयो मे प्रवृत्ति होने के कारण) वहां पुरुष स्वय ही अपनी रुचि के अनुसार (शास्त्र द्वारा ही निर्दिष्ट प्रदीप के समान) साधनविशेषो मे प्रवृत्त होते है। शास्त्र तो सूर्य और प्रदीपादि के समान तटस्थ ही रहता है। इस प्रकार किसी पुरुष को

१. किं तर्हि करोति शास्त्रम्। तत्राऽऽह—शास्त्रादिति। २ अतिशयात्। ३. शास्त्रस्याकारकत्वेना-प्रवर्तकत्वात्। ४. कामस्य प्रवर्तकत्व न शास्त्रस्येत्युपसंहरति—तत्रेति। ५. शास्त्रैकप्रदीपेषु। ६. भक्तत्वात्। ७. स्वाभिप्रायानुरूपम्। ८. शास्त्रप्रयुक्तप्रवृत्त्याद्यभावे। ९. अकारकत्वेनाप्रवर्तकत्वे। १०. अवबोध। ११. रागादिवैचित्र्यानुरोधेन पुरुषार्थादिप्रतिभाने सति।

शैकत्वं विरुध्यत इत्यथ न विरुध्यते न 'तर्हि प्रत्यक्षविरोधः ।

यच्चोक्तं प्रतिशरीरं शब्दाद्युपलब्धारो धर्माधर्मयोश्च कर्तारो' भिन्ना अनुमीयन्ते तथाच' ब्रह्मैकत्वेऽनुमानविरोध इति । भिन्नाः कैरनुमीयन्त इति प्रष्टव्याः ।

अथ यदि ब्रूयुः सर्वैरस्माभिरनुमानकुशलैरिति । के यूयमनुमानकुशला इत्येवं

---

भूतस्यमेकमाकाशमित्यत्र' न शब्दादिभेदग्राहिप्रत्यक्षविरोधस्तथैकं ब्रह्मेत्य'त्रापि न 'तद्विरोधो'ऽस्तीत्याह—अथेति । 'तस्य कल्पितभेदविषयत्वादिति भाव. ।

अनुमानविरोध परोक्तमनुवदति—यच्चेति । या चेष्टा सा प्रयत्नवत्पूर्विकेत्ये'तावता ना''ऽऽत्मभेदः ''स्वप्रयत्नपूर्वकत्वस्यापि सभवादनुपलब्धिर्विरोधे त्वनुमानस्यैवानुत्थाना''त्स्वदेहचेष्टायाः स्वप्रयत्नपूर्वकत्ववत्परदेहचेष्टायास्तद्यत्नपूर्वकत्वे चा''ऽऽदावेव स्वपरभेदः सिध्येत्स च ''नाध्यक्षात्परस्यानध्यक्षत्वान्नाप्यनुमानादन्योन्याश्रयादिरमाशयवानाह—भिन्ना इति ।

दोषान्तराभिधित्सया शङ्कते—अथेति । अस्मदर्थं पृच्छति—के यूयमिति । ''स हि स्थूलदेहो

---

श्रोत्रादिकरणों से प्रत्यक्ष उपलब्ध होने वाले शब्दादि से ब्रह्मात्मैक्य का विरोध है, इस प्रकार कहने वाले भेदवादियों से अद्वैतवादियों को पूछना चाहिए, क्या शब्दादि के भेद से आकाश की एकता का विरोध है ? यदि विरोध नहीं है, तो (ब्रह्मात्मैक्य के शब्दादिभेदग्राही) प्रत्यक्ष से विरोध नहीं हो सकता ।

इसके अतिरिक्त यह जो कहा कि प्रत्येक शरीरों में शब्दादि को उपलब्ध करने वाले तथा धर्माधर्म का अनुष्ठान करने वाले जीव भिन्न-भिन्न ही अनुमान किये जाते हैं और उनके भिन्न होने पर ब्रह्मात्मैक्य में अनुमानप्रमाण से विरोध होगा । जीव भिन्न-भिन्न हैं, ऐसा अनुमान किनके द्वारा किया जाता है ? यह पूछा जाना चाहिए ।

इस पर यदि वे तार्किक उत्तर दें कि अनुमान करने में कुशल हम सभी के द्वारा जीवों की

---

१ शब्दादिभेदेन खस्यैकत्वस्य विरोधाभाव न ब्रह्मैकत्वस्य शब्दादिभेदग्राहिप्रत्यक्षेण विरोधोऽस्ति । २ जीवा । ३ तेषां भिन्नत्वे च । ४ इत्युक्तौ । ५ इत्युक्तावपि । ६ प्रत्यक्षविरोध । ७ भिन्नविषयत्वादिति शेष । ८ प्रत्यक्षस्य । ९ व्याप्तिमात्रेण । १० जीवभेद । ११ स्वप्रयत्नपूर्वकत्वस्यापीति अत्र स्वशब्देनानुमाता गृह्यते । पक्षीभूतचेष्टाया इत्यादौ शेष । तथा चार्थान्तर प्रसक्तमिति भाव । अर्थान्तरपरिहारमाशङ्क्य निषेधति—अनुपलब्धिविरोधे त्विति । उक्तचेष्टानुकूलप्रयत्नस्य स्वस्मिन्ननुपलब्धेस्तत्पूर्वकत्वस्य बाधान्न तत्पूर्वकत्व पक्षीभूतचेष्टाया अनुमितिविषय इति भाव । अनुत्थानादिति परप्रयत्नस्याप्यनुपलम्भादिति भाव । तथा चानुपलभ्यमानोऽपि परप्रयत्नो यथानुमानबलादास्थीयत तथैवानुपलभ्यमानोऽपि स्वप्रयत्न एव तद्बलात्कि नास्थीयत विनिगमनाविरहात् । न च स्वप्रयत्नानुपलब्धेर्योग्यतयाऽभावनिश्चायकत्वादनुमितिबाधकत्व परप्रयत्नानुपलब्धेस्त्वयोग्यत्वान्न तथात्वमित्येव विनिगमकमिति वाच्य स्वव्यवहारस्य परसापेक्षत्वेन तत्सिद्धे प्रागसभवादिति । १२ व्याप्त्यन्तरेण भेदानुमितिमाशङ्क्य परिहरति—स्वदेहेति । देवदत्तशरीरे चेष्टा तदीयप्रयत्नपूर्विका मदीयशरीरचेष्टावत् । १३ आदावेवेति—अनुमितेः प्रागेवेत्यर्थं । (तथा च सिद्धसाधनम्) ननु सिद्ध न समीहितमत आह—स चेति । परसिद्धौ व्याप्तिसिद्धया परानुमानम् अनुमिते च परस्मिन् व्याप्तिसिद्धिरित्यभिप्रेत्याह—अन्योन्याश्रयादिति । १४ धर्मिप्रतियोगिप्रत्यक्षसापेक्षत्वाद्भेदाध्यक्षस्येति भाव । १५ अनुमानकुशल ।

'सा शरीरेन्द्रियमन'आत्मसाधनैः 'कारकैरात्मकर्तृका निर्वर्त्यत इत्येतत्प्रतिज्ञातम् । 'तत्र वयमनुमानकुशला इत्येवं वदद्भिः शरीरेन्द्रियमनःसाधना आत्मनः प्रत्येकं वयमनेक इत्यभ्युपगतं स्यात् । अहो अनुमानकौशलं दर्शितमपुच्छशृङ्गैस्तार्किकबलीवर्दैः । यो ह्यात्मानमेव न जानाति ॥ कथं मूढस्तद्गतं भेदमभेदं वा जानीयात् ।

'तत्र 'किमनुमिनोति केन वा लिङ्गेन । न ह्यात्मनः 'स्वतो भेदप्रतिपादकं किंचिल्लिङ्गमस्ति येन लिङ्गेनाऽऽत्मभेदं साधयेत् । यानि लिङ्गान्यात्मभेदसाधनाय नाम-

'एतेन देहादिष्वपि कारकत्वं "प्रत्युक्तमिति भाव । यस्त्वात्माऽऽत्मप्रतियोगिकभेदवान्वस्तुत्वाद्घटवदिति, "तत्राऽऽत्मा "प्रतिपन्नोऽप्रतिपन्नो वेति विकल्प्य द्वितीयं प्रत्याह—यो हीति ।

प्रतिपन्नत्वपक्षेऽपि भेदेनाभेदेन वा तत्प्रतिपत्तिरुभयथाऽपि नानुमानप्रवृत्तिरित्याह—तत्रेति । "इतश्चाऽऽत्मभेदानुमानानुत्थानमित्याह—केनेति । किंशब्दस्याऽऽक्षेपार्थत्वं स्फुटयति—न हीति । ❀"जन्मादीनां प्रतिनियमादिलिङ्गवशादात्मभेदं सेत्स्यति" चेन्नेत्याह—यानीति । आत्मनः सजातीयभेदे

अनुमान भी क्रिया ही है। वह क्रिया शरीर, इन्द्रिय, मन व आत्मस्वरूप करणकारकसाधनों के द्वारा आत्मकर्तृक होकर सम्पादित होती है, ऐसी प्रतिज्ञा आप कर चुके हैं। उक्त प्रतिज्ञा के होने पर "हम अनुमानकुशल हैं"—ऐसा कहकर आप यह मान लेते हैं कि हम प्रत्येक शरीर, इन्द्रिय और मनरूप साधन वाले जीवात्मा अनेक हैं। वाह जी वाह! बिना सींग-पूँछ वाले आप तार्किक सांडो ने अच्छा

१ धात्वर्थत्वाद्भाट्टमते वा ज्ञानस्य क्रियात्वाभ्युपगमादित्यर्थः । तथात्वे लब्धमर्थमाह—सेति । २ आत्मशब्दः स्वरूपवचनः । ३ करणकारकैः । ४ उक्तप्रतिज्ञायां सत्याम् । ५ अनुमिनुयात् । ६ तत्रेति—भेदेनाभेदेन वा प्रतिपन्ने आत्मनि नानुमानप्रवृत्तिरिति भावः । आद्यऽनुमाने सिद्धसाधनता अन्त्ये बाध इति गूढाभिसंधिः । ७ आक्षेपे किम् । ८ अन्तरेणोपाधिम् । ९ आत्मन्युक्तं न्यायं देहादावतिदिशति—एतेनेति । आत्मनि कारकत्वप्रत्युक्तिन्यायेनेत्यर्थः । १० प्रत्युक्तमिति—तथाहि देहादेरवान्तरक्रियाऽस्ति न वाऽन्त्येऽकारकत्वमाद्ये प्रत्यक्रमनेकत्वं देहादेरवान्तरक्रिया किमनेककारकसाध्या न वेत्याद्युक्तरीत्या द्रष्टव्यम् । ११ अनुमाने पक्षीभूत आत्मा । १२ ज्ञातोऽज्ञातो वा । १३ अनुमातुरयोगेऽनुमानानुत्थानमुक्त्वा तल्लिङ्गमपि दुर्वचमिति मत्वा सांख्येष्टजन्मादीनां प्रतिनियमादिलिङ्गं दूषयितुमवतारयति—इतश्चेति । १४ जन्मादीनाम्—आदिपदेन मरणं त्रयोदशकरणानि च गृह्यन्ते । तानि च महत्तत्त्वाहंकारमनांसि त्रीणि ज्ञानकर्मेन्द्रियाणि दशेति द्रष्टव्यानि । तेषां प्रतिनियमो व्यवस्था । आदिना अयुगपत्प्रवृत्तिस्त्रैगुण्यविपर्ययौ गृह्येते । उक्तहेतुवशादात्मभेद इत्यर्थः । तदुक्तं सांख्याचार्यैः—जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैवेति' ॥ एकस्मिञ्जाते सर्वे जायन्त इति जन्मप्रतिनियम एवं मरणेऽपि करणप्रतिनियम एकस्यान्धत्वेन सर्वेषां तथात्वमिति । एकस्य धर्मेऽन्यस्याऽधर्मे प्रवृत्तिरित्ययुगपत्प्रवृत्तिः । एको राजसोऽन्यस्तामसोऽपरः सात्त्विक इति त्रैगुण्यवैलक्षण्याच्च पुरुषाणां नानात्वं सिद्धमित्यर्थः । (सा० का० १८) १५ इति ।

❀जन्मादीनां प्रति नियमादिलिङ्गवशादात्मभेद इति । तदुक्तं सांख्याचार्यैः—'जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैवेति' । पुरुषबहुत्वं सिद्धं कस्माज्जन्ममरणकरणानां

रूपवन्त्युपन्यस्यन्ति[1] तानि [2]नामरूपगतान्युपाधय एवाऽऽत्मनो घटकरका[4]पवरकभूछिद्राणी-वाऽऽकाशस्य । यदाऽऽकाशस्य भेदलिङ्गं पश्यति[5] तदाऽऽत्मनोऽपि भेदलिङ्गं [6]लभेत स. ।

लिङ्गाभाव दृष्टान्तेन साधयति—यदेति । किंचौपाधिको वा स्वाभाविको वाऽऽत्मभेदः साध्यते नाऽऽद्यः

अनुमानकौशल दिखलाया है । जो आत्मस्वरूप को ही नहीं जानता, वह मन्दबुद्धि पुरुष उसके भेद या अभेद का किस प्रकार अनुमान कर सकता है ?

उक्त आक्षेप में वह क्या अनुमान करता है और किस लिङ्ग के द्वारा अनुमान करता है ? उपाधि के बिना आत्मा का अपने से भेदप्रतिपादन करने वाला कोई लिङ्ग तो है नहीं, जिस लिङ्ग के द्वारा आत्माओं का भेद सिद्ध कर लिया जा सके । वे (सांख्यदर्शनावलम्बी) जिन नामरूप लिङ्गों की आत्मभेदसिद्धि प्रस्तुत करते है, वह सब तो आकाश को उपाधि घट, कमण्डलु, मठ और भूछिद्र के समान आत्मा की (अनात्मधर्मभूत) नामरूपगत उपाधियां ही हैं । यदि वादी आकाश के भेद का अनुमापक लिङ्ग देखता है, तो आकाश के भेद का अनुमापक लिङ्ग भी प्राप्त कर सकता है । किन्तु उपाधि

१ सांख्याः । २ नामरूपगतानीति—नहि पुरुषबहुत्वसाधकं जन्मादियुक्तं तस्य नामरूपात्मकदेहनिष्ठत्वेना-त्मन्यवृत्तेरित्यर्थः । ३ अनात्मधर्मभूतानि । ४ अपवरको मठः । ५ वादी । ६ लभेतेति—"आकाशवत्सर्वगतश्च नित्य इति" इत्यादिश्रुतत्वादिति भावः ।

प्रतिनियमात् निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो जन्म न तु पुरुषस्य परिणामः तस्यापरिणामित्वात्तेषामेव च देहादीनामुपात्तानां परित्यागो मरणं न त्वात्मनो विनाशः तस्य कूटस्थनित्यत्वात् । करणानि बुद्ध्यादीनि त्रयोदश तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था सा खल्वियं सर्वशरीरेष्वेकस्मिन्पुरुषे नोपपद्यते । तदा खल्वेकस्मिन् जायमाने सर्वे जायेरन्म्रियमाणे च म्रियेरन्नन्धादौ चैकस्मिन्सर्व एवान्धादयो विचित्ते चैकस्मिन्सर्व एव विचित्ताः स्युरित्यव्यवस्था प्रतिक्षेत्र पुरुषभेदे तु भवति व्यवस्था । न चैकस्यापि पुरुषस्य देहोपाधानभेदाद्व्यवस्थेति युक्तं पाणिस्तनादि उपाधिभेदेनापि जन्ममरणादि-व्यवस्थाप्रसङ्गात् । नहि पाणौ कृत्ते जाते वा स्तनादौ महत्यवयवे युवतिर्जाता मृता वा भवतीति । इतश्च प्रतिक्षेत्र पुरुषभेद इत्याह—अयुगपत्प्रवृत्तेश्च । प्रवृत्तिश्च प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी तथापि पुरुष उपचर्यते । तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत । ततश्च सर्वाण्येव शरीराणि युगपच्चालयेत्तन्नानात्वे तु नायं दोष इति । इतश्च पुरुषभेद इत्याह—त्रैगुण्यविपर्ययाच्चेति । एवकारो भिन्नक्रमः सिद्धमित्यस्यानन्तरं द्रष्टव्यः सिद्धमेव नासिद्धमित्यर्थः । त्रयो गुणास्त्रैगुण्यं तस्य विपर्ययोऽन्यथाभावः । केचित्खलु सत्त्वनिकायाः सत्त्वबहुला यथोर्ध्वरेतसः, केचिद्रजोबहुला यथा मनुष्याः, केचित्तमोबहुला यथा तिर्यग्योनयः । सोऽयमीदृशस्त्रैगुण्यविपर्ययोऽन्यथाभावस्तेषु तेषु सत्त्वनिकायेषु न भवेद्यद्येकः पुरुषः स्यात्तद्भेदे त्वयमदोष इति । आत्मनो जनिविकारप्रयुक्तपरिणामित्वाभावायोद्द्योतकराचार्योक्त जन्मपदार्थमाह—निकायविशिष्टाभिरिति । निकायो देवमनुष्यतिर्यगादीनामन्योन्यधर्मभावस्थितः सधानस्तद्विशिष्टाभिरित्यर्थः इति तात्पर्यटीकायां मिश्रा एव च "सङ्घे चानौत्तराधर्ये (पा सू ३।३।४२)" इति सूत्रेण निकायपदनिष्पत्तिरिति दर्शितम् । यद्यपि महाभाष्यादिव्याख्यानात्प्राणिनां समूह एव अत्र सूत्रे सङ्घपदेन गृह्यते न समूहमात्रमन एव ब्राह्मणनिकाय इतिवत् प्रमाणनिकाय इति प्रयुञ्जतेऽपि तु प्रमाणनिचय इति । तथापि प्राणिसर्वाधिकत्वेन यथा-चिदत्रापि प्राणिसमूह सभाव्यनिकायपदप्रयोगोपपत्तिर्ज्ञेया ॥ ननु देवदत्तो जात इति व्यवहारदर्शनात् पुरुषमेव

'न ह्यात्मनः 'परतो 'विशेषमभ्युपगच्छद्भिस्तार्किकशतैरपि भेदलिङ्गमात्मनो दर्शयितुं शक्यते । स्वतस्तु 'दूरादपनीतमेवाविषयत्वादात्मनः ।

सिद्धसाध्यत्वादित्यभिप्रेत्याऽऽह—न हीति । न द्वितीय इत्याह—स्वतस्त्विति ।

से भेद स्वीकार न करने वाले सैकड़ों तार्किकों द्वारा भी आत्मा के भेद का लिङ्ग नहीं दिखलाया जा सकता । स्वयं आत्मा में भिन्नत्व होना तो सर्वथा निराकृत कर दिया जाता है क्योंकि आत्मा किसी का विषय न होने के कारण अद्वितीय है ।

१ आकाशस्यवात्मन स्वतो भेदस्तु नैव सम्भवतीत्यभिप्रेत्याह—न हीति । तथा च भेदप्रतीत्युपपत्तये परत एव भेदोऽभ्युपेय । एवं च सिद्धसाधनमिति भाव । २. उपाधित । ३. भेदम् । ४. दूरनिरस्त भिन्नत्वमिति शेष ।

घटादेरिवात्मनो जन्म न जायमानदेहादिसंबन्धरूप भाक्तमिति तत्राऽऽह—न तु पुरुषस्य परिणाम इति । घटादेरिव मुख्य उत्पत्तिरूप परिणाम पुरुषस्य न चेत्यर्थ । अपरिणामित्वादात्मनो मुख्य जन्मेति यावत् । मरण तु यद्यपि मृङ् प्राणत्याग इति स्मरणात्प्राणोपलक्षितदेहादीना त्यागरूप मुख्यमेवात्मनि संभवति तथापि घटादेरिव विनाशरूप मरणमत्र मा कश्चिद्ग्रहीदित्याशयेनाऽऽह—न तु विनाश इति । "न जायते म्रियते वा विपश्चित्" "अजो नित्य शाश्वतोऽयं पुराण" इत्यादिश्रुत्याऽऽत्मनो जन्मादिपरिणामशून्यत्वेन कूटस्थनित्यत्वाऽऽन्नानादात्मनो मुख्यौ जन्मनिधनाविरत्यर्थ । मा नाम भूज्जातो मृत इति व्यवहाराशरणा व्यामोह इत्यनुकम्पावती बृहदारण्यकश्रुतिरपि 'स वा अयं पुरुषो जायमान शरीरमभिसपद्यमान स उत्क्रामन्म्रियमाण" इत्येव स्वयमेव शरीरादिना संयुज्यमानत्वमेवात्मनो जायमानत्व शरीरादुत्क्रमणमेव चात्मनो म्रियमाणत्वमिति निराह । एवं च देवदत्तो जात इत्यादिव्यवहारो भाक्त इत्यत्र फलितम् । एतच्च चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वादित्यादि ब्रह्मसूत्रभाष्ये व्यक्तम् । कथमोपपद्यत इति पृष्टोऽनुपपत्ति स्पष्टयति—सदा खल्विति । इद चार्थापत्तिप्रदर्शनमात्मैक्यवादिन वेदान्तिन प्रति स्वमत तु जन्मादिव्यवस्था वस्तुभेदनिबन्धना व्यवस्थात्वात् सम्मतवत् इत्यनुमान मनसि निधाय तत्र तदा खल्वेकस्मिन्पुरुष इत्यादिना विपक्षबाधकस्तर्क उच्यत इति ध्येयम् । ननु यथाऽऽकाशस्यैकत्वेऽपि घटाद्युपाधिभेदेनौपाधिक भेदमादाय व्यवस्थाऽभ्यीयते तथाऽत्रापि देहोपाधिक भेदमास्थाय व्यवस्थाऽऽस्थीयता किं गौरवग्रस्तेन पारमार्थिकेन भेदेन । तथा चाहु —यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते न सर्वे संप्रयुज्यन्ते तथा जीवा सुखादिभिरितीत्याशङ्का निरस्यति—न चैकस्यापीति । तथा सति देहवद्धस्तनादीना देहावयवानामप्युपाधित्वेन भेदकत्व स्यात्तथा च देहावयवोद्भवनिरोधाभ्यामपि पुरुषस्य जन्ममरणादिव्यवहार स्यादित्यभिप्रेत्यायुक्तत्वे हेतुमाह—पाणिस्तनादीति । प्रसङ्गस्येष्टत्वमाशङ्क्य व्यवहारविरोधेन परिहरति—न हीति । भवतीत्यनेन चात्र स्वगोचरो व्यवहार स्वविषयक वा ज्ञानमुपलक्षणीयमेव हस्ते पतिते युवतिर्मृतेति स्तनादौ च जाते युवतिजातेति च न केनापि व्यवह्रियते नापि ज्ञायते इत्यर्थोऽत्र फलित । यद्यपि स्तनादौ जाते बाल्य विहाय युवत्व प्राप्त सञ्जातस्तथापि तदवच्छेदेन तदधिष्ठात्र्या न जातत्वव्यवहार । सैवेयमबलेति प्रत्यभिज्ञानात् भवन्मते तु कायोपाधिजन्मना तदवच्छेदेनात्मनि जातत्वव्यवहारवत्कायावयवजन्मनाप्यात्मनि जातत्वव्यवहार स्यादुपाधित्वाविशेषात्स च बाधित इति नौपाधिकभेदकल्पनया निस्तार इति भाव । शरीराणि प्रतिशरीर विभिन्नपुरुषाधिष्ठेयानि अयुगपत्प्रवृत्तिमत्त्वाद्रथादिवदित्याशयेन प्रवृत्त हेत्वन्तर-

एतेनाऽऽगमविरोधः प्रत्युक्तः ।

यदुक्तं 'ब्रह्मै'कत्वे यस्मा उपदेशो यस्य चोपदेशग्रहणफलं तदभावादेकत्वोपदेशानर्थक्यमिति । तदपि न, 'अनेककारकसाध्यत्वात्क्रियाणां 'कश्चोद्यो भवति । एकस्मि-

देशेन निराकरोति—एतेनेति । औपाधिकभेदाश्रयत्वेन 'व्यवहारस्यो'पपन्नत्वोपदर्शनेनेति यावत् ।

प्रत्यक्षानुमानागमैरद्वैतस्याविरोधेऽपि स्याद्विरोधोऽर्थापत्त्येति चेदत आह—यदुक्तमिति । उपदेशो 'यस्मै' क्रियते यस्य चोपदेशग्रहणप्रयुक्तं फलं 'ययोर्ब्रह्मै'कत्वे सत्युपदेशानर्थक्यमित्यनुवादार्थः । किं क्रियाणामनेककारकसाध्यत्वादेव चोद्यते किं वा ब्रह्मणो नित्यमुक्तत्वादिति विकल्प्याऽऽद्यं दूषयति —तदपीति । 'तासामनेककारकसाध्यत्वस्य प्रत्युक्तत्वादिति भाव । यदि ब्रह्मणो नित्यमुक्तत्वाभिप्रायेणोपदेशानर्थक्यं चोद्यते 'तत्र नित्यमुक्ते ब्रह्मणि ज्ञातेऽज्ञाते वा तदानर्थक्यं चोद्यत इति विकल्प्याऽऽद्य-

एवं प्रलयरूप हैं तथा ब्रह्म उनसे भिन्न है, अतः आत्मा, अनुमान का विषय न होने के कारण, अनुमान से उसका विरोध किस प्रकार हो सकता है ? उक्त विवेचन से आगमविरोध का भी परिहार कर दिया गया ।

और जो ऐसा कहा कि ब्रह्म की एकता के पक्ष मे जिसे उपदेश दिया जायगा एवं जिसे उपदेश-ग्रहण का फल होगा, उन दोनो का अभाव होने के कारण ब्रह्मैकत्व-उपदेश का आनर्थक्य ही सिद्ध होगा । ऐसा समझना भी उचित नही है, क्योकि क्रियाओ के अनेक कारको द्वारा संपादित होने के

१ ब्रह्मैकत्वपक्षे । २ अनेकेत्यादि—ब्रह्मैकत्वमभ्युपगम्य कथमुपदेशं करोपीति यत्त्वया चोद्यते तदेतत्त्वयापि कं प्रति चोद्यते त्वत्पक्षे क्रियाणामनेककारकसाध्यत्वे नोपदेशकर्तुरेकस्य कस्यचिदनिर्णयादिति मयापि शक्यं चोदयितुमित्यर्थ इति स्थितस्य गतिः । वस्तुतस्तु अनेककारकसाध्यत्वादित्येवमुक्तः पाठः । ३ कुचोद्यमेतत् । ४ उपदेशादिव्यवहारस्येति यावत् । ५ व्यवहारो ग्रामकामो यजेतेत्यादिरूपः ५००पृष्ठभाष्ये । ६ यस्मै यस्येत्युभयत्र यच्छब्दार्थस्यैकत्वेऽपि पुनरुक्तिशङ्का नावतरति । ७ यस्मा इति यस्मै फलायेत्यर्थं । यत्फलमुद्दिश्येति यावत् । तयो फलफलिनो रित्यर्थ । 'लोके तथैवानुवाददर्शनात् लोकप्रसिद्धानुवादत्वेनेति' पाठ । ८ क्रियाणाम् । ९ द्वितीयपक्षे ब्रह्मणि वा ।

प्रमेयाश्च नाऽऽत्मनः स्तम्भकुम्भवत्" ॥५६८॥ "अनुमानादनेकत्वमात्मनो य प्रपश्यति । तथा प्रत्यक्षमानेन बाधो लिङ्गधियो भवेत्' ॥६११॥ इति । प्रतिवादिदेहाद्यदहाभवदात्मना तादात्म्यवन्तो जीवदेहत्वात्समतदित्यर्थं ॥ देहगृहत्याद्यमिन्द्रियादिष्वतिदिशति—अथेति । विमतानि प्रतिवादिभोगसाधनानीन्द्रियत्वात्प्रतिवादीन्द्रियवदेव मनोबुद्धिविषयान्पक्षीकृत्यानुमातव्य तद्देहवदित्यादिष्वप्यैकात्म्यमनुमानं योजयदित्यर्थ । भेदानुमानस्यानुमाविरोधवदध्यक्षादिबाधमाह—सर्वेति ॥ किं तत्प्रत्यक्षं तदाह—जाग्रतीति । सर्वेषु चराचरशरीरेष्वात्मा स्वप्रकाशश्चिदेकरसः सदा विदुषाऽनुभूयते तद्विरुद्धध्यक्षविरुद्धानुमेत्यर्थ । अविरुद्धदृष्टेरनुमाऽनगुणत्वात्तयैव बलवत्त्वादध्यक्ष बाध्यमित्याशङ्क्याऽऽह—नेत्यादिना । आत्मन स्वप्रकाशत्वे दृश्यत्वे च तदभेदो मानतो न सिध्यतीत्युक्तमिति भाव ॥ तदसिद्धिमेव प्रकटयति—अन्येनेति । यस्याऽऽत्मनो भेद साध्य स स्वप्रकाशो दृश्यो वाऽऽद्ये तस्यागोचरत्वात्तद्भेदो न मानत सिध्यद्द्वितीये दृश्यस्य स्तम्भादिवदनात्मत्वादन्यसिद्धेस्तद्भेदासिद्धिरित्यर्थ ॥ अनुमानग्राहकाध्यक्षाभावान्न तेनाध्यक्ष बाध्य किंतु तेनैवानुमेत्युपसंहरति—अनुमानादिति । एवं प्रत्यगसंसारिब्रह्मणो वेदान्तप्रमाणकस्य सत्यस्य सत्यमित्युपनिषदिति स्थितम् ॥

न्ब्रह्मणि निरुपाधिके[1] [2]नोपदेशो नोपदेष्टा न [3]चोपदेशग्रहणफलम् । तस्मादुपनिषदां चाऽनर्थक्यमित्येतदभ्युपगतमेव । अथानेककारकविषयानर्थक्यं चोद्यते । न, [4]स्वतोऽभ्युपगमविरोधादात्मवादिनाम् ।

तस्मात्तार्किकचाटभटराजाप्रवेश्यमभयं दुर्गमिदमल्पबुद्ध्यगम्यं[5] शास्त्रगुरुप्रसादरहितैश्च । "कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति" "देवैरत्रापि विचिकित्सितं पुरा" "नैषा तर्केण मतिरापनेया" [7]वरप्रसादलभ्यत्वश्रुतिस्मृतिवादेभ्यश्च । "तदेजति तन्नैजति तद्दूरे

मङ्गो करोति—एकस्मिन्निति । द्वितीयमुत्थापयति—अथेति । उपदेशस्तावदनेकेषां कारकाणां साध्यतया विषयस्तदानर्थक्यमज्ञाते नित्यमुक्ते ब्रह्मणि चोद्यते चेदित्यर्थः । सर्वै रात्मवादिभिरुपदेशस्य ज्ञानार्थमिष्टत्वात्तद्विरोधादज्ञाते ब्रह्मणि तदानर्थक्यचोद्यमनुपपन्नमित्याह—न स्वत इति ।

अद्वैते विरोधान्तराभावेऽपि तार्किकसमयविरोधोऽस्तीत्याशङ्क्याऽऽह—तस्मादिति । प्रमाणविरोधाभावस्तच्छब्दार्थः । आर्यमर्यादां भिन्दानाश्चाटा विवक्ष्यन्ते । भटास्तु सेवका मिथ्याभाषिणस्तेषां सर्वेषां राजानस्तार्किकास्तैरप्रवेश्यमनाक्रमणीयमिदं ब्रह्मात्मैकत्वमिति यावत् । शास्त्रादिप्रसादशून्यैरगम्यत्वे प्रमाणमाह—कस्तमिति । देवतादेर्वरप्रसादेन लभ्यमित्यत्र श्रुतिस्मृतिवादाः सन्ति तेभ्यश्च शास्त्रादिप्रसादहीनैरलभ्यं तत्त्वमिति निश्चितमित्यर्थः । शास्त्रादिप्रसादवतामेव तत्त्वं सुगममित्यत्र श्रौतं स्मार्तं च लिङ्गान्तरं दर्शयति—तदेजतीति । ब्रह्मणोऽद्वितीयत्वे सर्वप्रकारविरोधाभावे फलित-

कारण यह दुरुक्तिमान है । निरुपाधिक एक ही ब्रह्म का ज्ञान हो जाने पर न उसमें उपदेश संभव है, न उपदेष्टा संभव है और न ही उपदेशग्रहण का फल ही संभव है । ब्रह्मज्ञान हो जाने पर सभी उपनिषदों की अनर्थकता सिद्ध हो जाती है, यह तो हम भी मानते ही हैं । तथा यदि अनेक कारकों के विषयभूत उपदेश को व्यर्थ कहे तो ऐसा कहना भी उचित नहीं है क्योंकि (उपदेश के ज्ञान के लिए इष्ट होने के कारण) इसका तो आत्मोपदेशक विद्वानों के मत से भी विरोध है ।

इसलिए अल्पबुद्धि वाले पुरुषों के लिए अप्राप्य, शास्त्र तथा गुरुकृपा से रहित जीवों द्वारा अगम्य यह (ब्रह्मात्मैक्य ज्ञानरूप) अभय दुर्ग आर्यमर्यादा को तोड़ने वाले एवं मिथ्यावादियों के सिरमौर तार्किकों द्वारा अनाक्रमणीय है । "(वह अचल होता हुआ भी दूर तक जाता है तथा सोता हुआ भी सभी ओर जाता है) वह मद से युक्त और हर्ष से रहित है, उस देव को मेरे अतिरिक्त और कौन जान सकता है", "इस विषय में पहले देवताओं को सन्देह हुआ था (क्योंकि यह अत्यन्त सूक्ष्म धर्म सरलता से जानने योग्य नहीं है)", "(हे प्रियतम ! तुम बड़े ही सत्य धैर्य वाले हो) तुम जिस बुद्धि

१. ज्ञाते सति । २ ब्रह्मणो ज्ञातत्वात् । ३ आनर्थक्यम् । ४ स्वस्य उपदेशस्य । ५. अगम्यम् । ६. विरुद्धधर्माध्यासाधिष्ठानमिति यावत् । ७ वरप्रसादेत्यादि—वरायाभिलाषिताय प्रसादोऽनुग्रह इष्टप्राप्तिप्रयोजकोऽनुग्रह इति यावत् । तेन लभ्यत्वबोधका ये श्रुत्यादिवाक्यानि तेभ्य इत्यर्थः । ८. आत्मोपदेशकैर्विद्वद्भिः । ९. विद्वदभ्युपगमविरोधात् । १० सिद्धान्तेति यावत् । ११ श्रुतिस्मृतिवादा इति वादा वचांसि तानि च 'तृतीयं वरं नचिकेतो वृणीष्व", कौषीतकिब्राह्मणे दिवोदासपुत्र प्रतर्दन प्रतीन्द्रवाक्यं यथा 'प्रतर्दन वरं ते ददानीति' । स्मृतिवादाश्च "ईश्वरानुग्रहादेव पुंसामद्वैतवासना । महाभयकृतत्राणा द्वित्राणामुपजायते" ॥ "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इत्यादयः । १२. विरुद्धधर्मपरम् ।

तद्वन्तिके" इत्यादि विरुद्धधर्म समवायित्वप्रकाशकमन्त्रवर्णेभ्यश्च । गीतासु च "मत्स्थानि सर्वभूतानि" इत्यादि । तस्मात्परब्रह्मव्यतिरेकेण संसारी नाम नान्यद्वस्त्वन्तरमस्ति । तस्मात्सुष्ठूच्यते "ब्रह्म वा इदमग्र आसीत्" "तदात्मानमेवावेत्" "अहं ब्रह्मास्मीति" "नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ" इत्यादिश्रुतिशतेभ्यः । तस्मात्परस्यैव ब्रह्मणः सत्यस्य सत्यं नामोपनिषत्परा ॥२०॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

---

अथ द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम्

ब्रह्म ज्ञपयिष्यामीति प्रस्तुतम् । तत्र यतो जगज्जातं यन्मयं यस्मिंश्च लीयते

---

माह—तस्मादिति । संसारिणो ब्रह्मणोऽर्थान्तरत्वाभावे श्रुतीनामानुकूल्यं दर्शयति—तस्मादिति । अद्वैते श्रुतिसिद्धे विचारनिष्पन्नमर्थमुपसंहरति—तस्मात्परस्येति ॥२०॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

वृत्तवर्तिष्यमाणयोः संगतिं वक्तुं वृत्तं कीर्तयति—ब्रह्मेति । ब्रह्म ते ब्रवाणीति प्रक्रम्य व्येव त्वा ज्ञपयिष्यामीति प्रतिज्ञाय जगतो जन्मादयो यतस्तदद्वितीयं ब्रह्मेति व्याख्यातमित्यर्थः । जन्मादि-

---

को प्राप्त किये हो, यह स्वकल्पनामात्र से प्राप्त होने योग्य नहीं है" तथा देवताओं के अभिलषित वर और इष्टप्राप्तिप्रयोजक अनुग्रह में उसके बोधकत्व का प्रतिपादन करने वाले श्रुति और स्मृतिवाक्यों से एवं "वह आत्मतत्त्व (सोपाधिकरूप से) चलता है और (निरुपाधिकरूप से) नहीं भी चलता, वह (अत्यन्त) दूर में है और वही अत्यन्त निकट में भी है" इत्यादि ब्रह्म में विरुद्धधर्मों का आश्रयत्व-प्रतिपादन करने वाले उपनिषन्मन्त्रों से भी यही सिद्ध होता है। श्रीमद्भगवद्गीता में भी कहा है—"सब भूत मुझमें स्थित हैं" इत्यादि। इसलिए परब्रह्म से पृथक् संसारी जीवनाम की कोई वस्तु नहीं है। इसलिए "उत्पत्ति से पूर्व यह नामरूपात्मक जगत् ब्रह्मस्वरूप ही था। उसने अपने को ही जाना कि "मैं ब्रह्म हूँ (इसी विज्ञान से वह सर्वरूप हो गया)", "इससे भिन्न कोई द्रष्टा नहीं, इससे भिन्न कोई श्रोता नहीं" इत्यादि सैकड़ों श्रुतियों द्वारा ठीक ही कहा गया है। श्रौत अद्वैत के विचारनिष्पन्न होने के कारण "सत्य का सत्य है" यह परम गुह्य रहस्य नाम उपनिषत् परब्रह्म की ही है ॥२०॥

इस प्रकार बृहदारण्यक उपनिषत् द्वितीय अध्याय के अजातशत्रु नामक प्रथम ब्राह्मण में शाङ्करभाष्य का हिन्दी अनुवाद पूर्ण हुआ ॥१॥

(दोनों ब्राह्मणों की संगति का निरूपण करते हैं—) "मैं तुझे उस ब्रह्म का बोध कराऊँगा ही" इस प्रकार राजा अजातशत्रु ने गार्ग्य से प्रतिज्ञा की थी। यह प्रतिज्ञा करके "जिससे जगत् की

---

१ अनेजदेकमित्यादिरादि । २ आश्रयत्वेति यावत् । ३ 'न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्' । ४. संसारिणो ब्रह्मातिरिक्तत्वात् । ५ श्रौताद्वैतस्य विचारनिष्पन्नत्वात् । ६ परम गुह्य रहस्य नाम । ७. तस्मिन्प्रस्तुते सति । ८ स्थितो । ९ संवादम् । १० उक्तवक्ष्यमाणब्राह्मणयोः । ११ जन्मादिमत् इति यावत् ।

तदेकं ब्रह्मेति विज्ञापितम्। किमात्मकं पुनस्तज्जगज्जायते लीयते च। पञ्चभूतात्मकम्। भूतानि च नामरूपात्मकानि। नामरूपे सत्यमिति ह्युक्तम्। तस्य सत्यस्य पञ्चभूतात्मकस्य सत्यं ब्रह्म। कथं पुनर्भूतानि सत्यमिति मूर्तामूर्तब्राह्मणम्। मूर्तामूर्तभूतात्मकत्वात्कार्यकरणात्मकानि भूतानि प्राणा अपि सत्यम्। तेषां कार्यकरणात्मकानां भूतानां सतत्त्वनिर्दिधारयिषया ब्राह्मणद्वयमारभ्यते सैवोपनिषद्व्याख्या। कार्यकरणसत्त्वावधारणद्वारेण हि सत्यस्य सत्यं ब्रह्मावधार्यते। अत्रोक्तम् 'प्राणा वै सत्यं तेषामेष सत्यम्'

विषयस्य जगतः स्वरूपं पृच्छति—किमात्मकमिति। विप्रतिपत्तिनिरासार्थं तत्स्वरूपमाह—पञ्चेति। कथं तर्हि नामरूपकर्मात्मकं जगदित्युक्तं तत्राऽऽह—भूतानीति। तत्र गमकमाह—नामरूपे इति। भूतानां सत्यत्वे कथं ब्रह्मणः सत्यस्यवाचो युक्तिरित्याशङ्क्याऽऽह—तस्येति। तत्सत्यमित्यवधारणात्तद्वाध्येषु भूतेषु सत्यत्वासिद्धिरिति शङ्कयित्वा समाधत्ते—कथमित्यादिना। सच्च त्यच्च सत्यमिति व्युत्पत्त्या भूतानि सत्यशब्दवाच्यानि विवक्ष्यन्ते चेत्कथं तर्हि कार्यकरणसंघातस्य प्राणाना च सत्यत्वमुक्तं तत्राऽऽह—मूर्तेति। यथोक्तभूतरूपत्वात्कार्यकरणानां तदात्मकानि भूतानि सत्यानीत्यङ्गीकारात्कार्यकरणानां सत्यत्वं प्राणा अपि तदात्मकाः सत्यशब्दवाच्या भवन्तीति प्राणा वै सत्यमित्यविरुद्धमित्यर्थः। एवं पातनिकां कृत्वोत्तरब्राह्मणद्वयस्य विषयमाह—तेषामिति॥ उपनिषद्व्याख्यानाय ब्राह्मणद्वयमित्युक्तिविरुद्धमेतदित्याशङ्क्याऽऽह—सैवेति। कार्यकरणात्मकानां भूतानां स्वरूपनिर्धारणं वोपनिषद्व्याख्येत्यत्र हेतुमाह—कार्येति। ब्राह्मणद्वयमेवम् वतार्य शिशुब्राह्मणस्यावान्तरसंगतिमाह—

सृष्टि हुई है, जिसमें यह जगत् स्थित है और जिसमें यह लीन हो जाता है, वह एक ही ब्रह्म है" ऐसा उपदेश किया गया। तो यह जगत् किस प्रकार उत्पन्न होता है, लीन होता है और स्थित होता है? (संशयपरिहार के लिए जगत् का स्वरूप कहते हैं—) पञ्चभूतरूप से जगत् (उत्पन्न, लीन और स्थित) होता है। वे पञ्चमहाभूत नामरूपात्मक हैं और नाम व रूप सत्य हैं—ऐसा कहा जा चुका है। उस पञ्चभूतात्मक सत्य का ब्रह्म सत्य है। किन्तु वह पञ्चभूत सत्य किस प्रकार है, यह निर्धारण करने के लिए ही मूर्तामूर्त ब्राह्मण का आरम्भ किया जाता है। मूर्तामूर्त पञ्चभूतात्मक होने के कारण देह-इन्द्रियरूप भूत और प्राण भी सत्य हैं। उन देह-इन्द्रियरूप भूतों के स्वरूप की सत्यता निर्धारण करने की इच्छा से ये दो ब्राह्मण प्रारम्भ किये जाते हैं, यही इस ब्राह्मण की व्याख्या है क्योंकि देह और इन्द्रियों के स्वरूप की सत्यता निर्धारण से ही 'सत्य के सत्य' ब्रह्म का निश्चय होता है। सृष्टिवाक्य में कहा गया है कि "प्राण ही सत्य है और यह उनका भी सत्य है।" सो प्राण कौन से हैं तथा प्राण ही अभिधेय विषय जिनका है, ऐसी उपनिषदें कितनी हैं और कौन-कौन सी हैं? "सत्य के सत्य" इस

१. चातिष्ठति। २. भूतानां सत्यत्वनिर्धारणार्थमितीतिशब्दार्थः। ३. आरभ्यत इति शेषः। ४. स्वरूपेति यावत्। ५. अस्मादात्मन सर्वे प्राणा इति प्राग् १।२ प्रथमोक्तेः सृष्टिप्रस्तावेऽत्र प्राण सम्बन्धाच्छिशुब्राह्मण मूर्तामूर्तब्राह्मणापेक्षया प्रथम व्याख्यायत इति ध्येयम्। ६. सृष्टिवाक्ये। ७. जगतः पञ्चभूतात्मकत्वे सति। ८. वचनौचित्यम्। ९. छा उ ६।१२।३ 'स आत्मा तत्त्वमसि श्वेतकेतो' इति शेषः। १०. कार्यकरणात्मकानि। ११. कार्यकरणभूतात्मकाः। १२. प्रतिपाद्यम्। १३. सत्यस्य सत्यमित्युपनिषद्व्याख्यानाय। १४. बृ. उ ४०५पृष्ठभाष्ये। १५. उत्थाप्य।

[1]यो ह [2]वै शिशुँ साधानँ सप्रत्याधानँ सस्थूणँ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि । अयं [3]वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाऽऽधानमिदं प्रत्याधानं प्राणः स्थूणाऽन्नं दाम ॥१॥

जो भी कोई आधान, प्रत्याधान, स्थूणा और बन्धनरज्जु के सहित शिशु को जानता है, वह अपने से द्वेष करने वाले शीर्षस्थ सात शत्रुओं को अपने वश मे कर लेता है। यह जो मध्यमप्राण है, वही शिशु है। यहं वर्तमान देह ही उसका आधान है और शिर प्रत्याधान है। प्राण स्थूणा (अन्न-पान-जनित शक्ति) है और अन्न बाँधने की रस्सी के समान है ॥१॥

---

इति । [1]तत्र के प्राणाः कियन्तो वा [3]प्राणविषया उपनिषदः का इति च [4]ब्रह्मोपनिषत्प्रसङ्गेन करणानां प्राणानां स्वरूपमवधारयति । पथिगतकूपारामाद्य[5]वधारणवत् ।

यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद तस्येदं फलम् । किं तत् । [6]सप्त सप्तसंख्याकान्ह द्विषतो द्वेषकर्तॄन्भ्रातृव्यान्भ्रातृव्या हि द्विविधा भवन्ति द्विषन्तोऽद्विषन्तश्च तत्र द्विषन्तो ये भ्रातृव्यास्तान्द्विषतो भ्रातृव्यानवरुणद्धि । सप्त ये शीर्षण्याः

---

अत्रेत्यादिना । [1]उपनिषदः काः कियत्यो वेत्यु[2]पसंख्यातव्यमित्याकाङ्क्षायामिति शेषः । ब्रह्म चेदवधारयितुमिष्टं तर्हि तदेवावधार्यतां किमिति मध्ये करणस्वरूपमवधार्यते तत्राऽऽह—पथीति ।

ब्राह्मणतात्पर्यमुक्त्वा तदक्षराणि योजयति—यो हेत्यादिना । विशेषणस्यार्थवत्त्वार्थं भ्रातृव्यान्भिनत्ति—भ्रातृव्या हीति । के पुनरत्र भ्रातृव्या विवक्ष्यन्ते तत्राऽऽह—सप्तेति । कथं श्रोत्रादीनां सप्तत्वं

---

प्रकार ब्रह्मोपनिषत् के प्रसङ्ग से, मार्ग मे पड़ने वाले कुएँ, बगीचे आदि के निश्चय के समान श्रुति इन्द्रियों और प्राणों के स्वरूप का निर्धारण करती है।

जो भी कोई आधान, प्रत्याधान, स्थूणा और बन्धनरज्जु के सहित शिशु को जानता है, उसे यह फल प्राप्त होता है। क्या फल मिलता है? "सप्त ह द्विषतः" अर्थात् वह द्वेष करने वाले सात भ्रातृव्यों को अपने वश मे कर लेता है। भ्रातृव्य दो प्रकार के होते हैं; द्वेष करने वाले और मैत्रीभाव करने वाले। उनमें जो द्वेष करने वाले भ्रातृव्य होते हैं; उन द्वेषयुक्त भ्रातृव्यों को वश मे करता है। (यहाँ भ्रातृव्य कौन है?) शिर मे स्थित सात प्राण जो विषयानुभूति के द्वार है, उनसे होने वाले

---

१. एव प्राणा वै सत्यमित्यादि ब्राह्मणभागेन व्याख्याताया अप्युपनिषदो विशेषतोऽर्थप्रकाशनाय ब्राह्मणद्वयम् । तत्र प्राणा वै सत्यमित्यन्तेनोक्तप्राणोपनिषद्व्याख्यानाय शिशुब्राह्मणं प्रवर्तते—यो ह वा इत्यादि । २. उक्तार्थं । ३. प्राणाः विषया अभिधेया यासां ता उपनिषद अभिधानानि । ४. सत्यस्य सत्यमिति ब्रह्मोपनिषत् । ५. यथा ग्रामादुद्दिश्य गच्छन् पथि प्राप्य कूपादिकमप्यवधारयति तद्वदित्यर्थः । ६. सप्तेति—चक्षुर्द्वयघ्राणद्वयश्रोत्रद्वयमुखात्मकसप्तच्छिद्रायतनानि इन्द्रियाणि विषयासक्तत्वाद्द्विषतो भ्रातृव्यान् शत्रूनवरुणद्धि जितेन्द्रियो भवतीत्यर्थः । ७. नामानि । ८. निर्णेतव्यम् ।

**प्राणा विषयोपलब्धिद्वाराणि तत्प्रभवा विषयरागाः 'सहजत्वाद्भ्रातृव्याः । ते हि अस्य 'स्वात्मस्थां दृष्टिं विषयविषयां कुर्वन्ति तेन ते द्वेष्टारो भ्रातृव्याः । प्रत्यगात्मेक्षणप्रतिषेधकरत्वात् । काठके चोक्तम्—"पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्" इत्यादि । तत्र यः 'शिश्वादीन्वेद तेषां याथात्म्यमवधारयति स एनान्भ्रातृव्यानवरुणद्धचपावृणोति विनाशयति ।**

**'तस्मै फलश्रवणेनाभिमुखीभूतायाऽऽह—'अयं वाव शिशुः । कोऽसौ । योऽयं मध्यमः प्राणः शरीरमध्ये यः प्राणो लिङ्गात्मा यः पञ्चधा शरीरमाविष्टो बृहन्पाण्डरवासः सोम राजन्नित्युक्तः । यस्मिन्वाङ्मनःप्रभृतीनि करणानि 'विषक्तानि । 'पड्वीशशङ्कु-**

---

द्वारमेदावित्याह—विषयेति । कथं तेषां भ्रातृव्यत्वमित्याशङ्क्य विषयाभिलाषद्वारेणेत्याह—तत्प्रभवा इति । 'तथाऽपि कथं तेषां द्वेष्टृत्वमत आह—ते हीति । अथेन्द्रियाणि विषयविषयां दृष्टिं कुर्वन्त्येवाऽऽत्मविषयामपि तां करिष्यन्ति तत्र यथोक्तभ्रातृव्यत्वं तेषामिति तत्राऽऽह—प्रत्यगिति । इन्द्रियाणि विषयप्रवणानि तत्रैव दृष्टिहेतवो न प्रत्यगात्मनीत्यत्र प्रमाणमाह—काठके चेति । फलोक्तिमुपसंहरति—तत्रेति । "उक्तविशेषणेषु भ्रातृव्येषु सिद्धेष्विति यावत् ।

प्राणे वागादीनां विषक्तत्वे हेतुमाह—पड्वीशेति । यथा "जात्यो हयश्चतुरोऽपि पादबन्धन-

---

विषयसम्बन्धी राग साथ-साथ जन्म लेने के कारण (भ्राता ही सहजशत्रु होने से) भ्रातृव्य हैं । वे ही इस अधिकारी की आत्मस्थ दृष्टि को विषयाभिलाषी करते हैं, इसीलिए वे द्वेषी भ्रातृव्य हैं क्योंकि वे प्रत्यगात्मदृष्टि के अपहारक हैं । कठोपनिषत् में भी कहा गया है—"स्वयम्भू (परमेश्वर) ने (शब्दादि विषयों को प्रकाशित करने के लिए प्रवृत्त होने वाली) इन्द्रियों को बहिर्मुख करके उनका हनन कर दिया है । अतः (जीव सर्वदा) अनात्मभूत बाह्य विषयों को ही देखता है, अन्तरात्मा को नहीं" इत्यादि । यहाँ जो कोई इन शिशु आदि को गुणसहित जानता है अर्थात् उनका याथात्म्यज्ञान करता है, वह इन भ्रातृव्यों को "अवरुणद्धि" अर्थात् अपावृत यानी विनष्ट कर देता है ।

इस प्रकार फलश्रवण से (प्रलोभित होकर) अभिमुख होने वाले उस शिष्य (गार्ग्य) से (राजा अजातशत्रु) कहता है—निश्चय ही यही शिशु है । वह शिशु कौन है ? जो यह मध्यम प्राण है, जो यह शरीर के बीच में लिङ्गात्मा प्राण है, जो शरीर में पाँच प्रकार से प्रविष्ट होकर बृहन्, पाण्डरवास, सोम और राजन् इन नामों से कहा जाता है, जिसमें वाणी और मन आदि इन्द्रियाँ तादात्म्यरूप से आपन्न हैं । जिस प्रकार सिन्धुदेशीय महान् अश्व परीक्षा के समय पर बाँधने के खूँटो

---

१. भ्रातरो हि सहजशत्रव । २ अधिकारिण । ३ आत्मदृष्ट्यपहारकत्वादित्यर्थ । ४ सगुण शिशुम् । ५ एव फलेन प्रलोभित को वा शिश्वादिपदार्थ इत्युत्पन्नजिज्ञास प्रति शिश्वादिपदार्थानाहेत्यर्थ प्रेत्याह—तस्मा इति । शिष्यायेत्यर्थ । ६ अय वाव—अयमेव शिशु 'शिशुर्बालपयागङ्करहित प्राण इष्यत । वागादीनामिव यतो विषयोऽस्य न दृश्यत" ॥२।२।६॥ इति वार्तिककारे । ■ तादात्म्यापन्नानि । ८ बृ उ ६।१।१३ । ९. सहजत्वेऽपि । १० शीर्षण्येषु द्वेष्टृष्विति वा । ११ प्रशस्तजातीय. ।

निदर्शनात् । स एष शिशुरिव विषयेष्वि[१]तरकरणवदनासक्तत्वात् । शिशुं साधान-मित्युक्तम् । किं पुनस्तस्य शिशोर्वत्सस्थानीयस्य [२]करणात्मन आधानम् । तस्ये[३]दमेव शरीरमाधानं कार्यात्मकमाधीयतेऽस्मिन्नित्याधानम् । तस्य हि शिशोः प्राणस्येदं शरीरम-धिष्ठानम् । [६]अस्मिन्हि करणान्यधिष्ठितानि लब्धात्मकान्युपलब्धिद्वाराणि भवन्ति [७]न तु प्राणमात्रे विषक्तानि । तथा हि दर्शितमजातशत्रुणा । उपसंहृतेषु करणेषु [८]विज्ञानमयो [८]नोपलभ्यते । शरीरदेशव्यूढेषु तु करणेषु विज्ञानमय [१०]उपलभमान उपलभ्यते । तच्च दर्शितं पाणिपेषप्रतिबोधनेन ।

कीलानमयविष्णो"स्पाट्योत्क्रामति तथा प्राणो वागादीनीति निदर्शनवशात्प्राणे "विषक्तानि वागादीनि सिद्धानीत्यर्थः । शरीरस्य प्राणं प्रत्याधानत्वं साधयति—तस्य हीति । शरीरस्याधिष्ठानत्वं स्फुटयति—अस्मिन्हीति । "प्राणमात्रे विषक्तानि करणानि नोपलब्धिद्वाराणीत्यत्र प्रमाणमाह—तथा हीति । "देहा-धिष्ठाने प्राणे विषक्तानि तान्युपलब्धिद्वाराणीत्यत्रानुभवमनुकूलयति—शरीरेति । "तत्रैवाजातशत्रुब्रा-ह्मणसंवादं दर्शयति—तच्चेति । शरीराश्रिते प्राणे वागादिषु विषक्तेषूपलब्धुरुपलभ्यमानत्वमिति यावत् ।

को उखाड डालता है (वैसे ही मुख्यप्राण ने भी इन वागादिप्राणों को अपने स्थान से विचलित कर दिया) इत्यादि दृष्टान्त में बतलाया है । वह यह प्राण (व्यतिरेकि दृष्टान्तरूप) इतर इन्द्रियों की तरह न होने के कारण शिशु के समान है । शिशु को आधानरहित जानने के लिए मन्त्र में कहा गया है । तो फिर उस वत्सस्थानीय सूक्ष्मशरीरात्मारूप शिशु का आधान क्या है ? उसका यह कार्यात्मकशरीर ही आधान है (—ऐसा प्रसिद्ध है) । जिसमें लिङ्गात्माप्राण प्रतिष्ठित किए जाएँ, उसे आधान कहते हैं । अतः उस शिशु अर्थात् प्राण का यह शरीर अधिष्ठान है क्योंकि इस शरीर में अधिष्ठित होकर अपने स्वरूप को प्राप्त करने वाली इन्द्रियाँ विषयों की उपलब्धि का मार्ग बन जाती हैं, वे केवल प्राणमात्र में तादात्म्यरूप से आपन्न नहीं होती । ऐसा ही राजा अजातशत्रु ने प्रदर्शित किया है । इन्द्रियों के उपसंहृत हो जाने पर (प्राप्तकर्ता) विज्ञानमय की उपलब्धि नहीं होती । शरीरस्थान में स्व-स्व गोलकसंबद्ध इन्द्रियों में तो (शब्दादि को) उपलब्ध करते हुए रूप में ही विज्ञानमय की उपलब्धि होती है । यह बात हाथ दबाकर जगा देने के द्वारा दिखायी गई है ।

यह शिर प्रत्याधान है । श्रोत्रादि छिद्ररूप प्रवेशविशेषों के प्रति इसमें प्रत्याधान किया जाता है, इसलिए यह प्रत्याधान है । प्राण "स्थूणा" अर्थात् अन्नपानजनित शक्ति है । प्राण और बल ये पर्यायवाची शब्द है । बलाधीन स्थितिस्थापक इस शरीर में प्राण ही है । 'वह यह आत्मा जब दुर्बलता

१ व्यतिरेकिदृष्टान्त । २ सूक्ष्मशरीरात्मन । ३ प्रसिद्धम् । ४ लिङ्गात्मा प्राण । ५ शरीरे । ६ त्विति—पञ्चधा व्यूह्य विभज्य देहस्थितप्राणाश्रितानि करणानि ज्ञापकराणि न तु मूर्च्छादौ प्राणमात्र-ग्रस्तान्यतः शरीरं तस्याधानमित्यर्थः । ७ उपलब्धा । ८ नोपलभ्यते—न ज्ञायते शब्दादिज्ञानलिङ्गकानु-मितिविषयो न भवतीत्यर्थः । स्वस्वगोलकसम्बद्धेषु । १० शब्दादीनिति शेषः । ११ प्राणस्य परीक्षितुं पादबन्धनं कृत्वोपर्यारूढनादवारोहेण यष्ट्याघाते कृते सतीति शेषः । १२ प्राणाधीनदेहस्थितिकानीति यावत् । १३ मूर्छादौ प्राणसामान्यं त्यक्तापानादिवृत्तिक इति यावत् । १४ देहाश्रिते उपात्तपञ्चवृत्तिक इति यावत् । १५ यत्रानुभवानुकूल्यमदर्शि ।

इदं प्रत्याधानं शिरः [1]प्रदेशविशेषेषु प्रति प्रत्याधीयत[2] इति [3]प्रत्याधानम्। प्राणः स्थूणाऽन्नपानजनिता शक्तिः प्राणो बलमिति पर्यायाः। [4]बलावष्टम्भो हि प्राणोऽस्मिञ्शरीरे। [5]स यत्रायमात्माऽबल्यं [6]न्येत्य [7]संमोहमिवेति दर्शनात्। यथा वत्सः स्थूणावष्टम्भ एवम्। [8]शरीरपक्षपाती वायुः प्राणः स्थूणेति केचित्। अन्नं दाम। अन्नं हि भुक्तं त्रेधा परिणमते। यः स्थूलः परिणामः स एतद्द्वयं भूत्वे[9]मामप्येति मूत्रं च पुरीषं च। यो मध्यमो रसः[10] स रसलोहितादिक्रमेण स्वकार्यं शरीरं सप्तधातुकमुपचिनोति। स्वयोन्यन्नागमे[11] हि शरीरमुपचीयते[12]ऽन्नमयत्वात्। [13]विपर्ययेऽपक्षीयते पतति। यस्त्वणिष्ठो रसोऽमृतमूर्गमृतमूर्क्प्रभाव इति च कथ्यते। स नाभेरूर्ध्वं हृदयदेशमागत्य हृदयाद्विप्रसृतेषु द्वासप्तति-

---

प्रत्याधानत्वं शिरसो व्युत्पादयति—प्रदेशेति। बलपर्यायस्य प्राणस्य स्थूणात्वं समर्थयते—बलेति। अयं मुमूर्षुरात्मा यस्मिन्काले देहमबलभावं नीत्वा संमोहमिव प्रतिपद्यते तदोत्क्रामतीति [14]षष्ठे दर्शनादिति यावत्। बलावष्टम्भोऽस्मिन्देहे प्राण इत्यत्र दृष्टान्तमाह—यथेति। भर्तृप्रपञ्चपक्षं [15]दर्शयति—शरीरेति। [16]उक्तं हि प्राण इत्युच्छ्वास[17]निश्वासकर्मा वायुः शरीरः [18]शरीर[19]पक्षपाती गृह्यते। एतस्यां स्थूणायां शिशु प्राणः [20]करणदेवता लिङ्गपक्षपाती गृह्यते। [21]स देवः प्राण एतस्मिन्बाह्ये प्राणे [22]बद्ध इति। [23]तद्व्याख्यातुं भूमिकां करोति—अन्नं हीति। त्वगसृङ्मांसमेदोमज्जास्थिशुक्रेभ्यः सप्तभ्यो धातुभ्यो

---

को प्राप्त हो, मानो सम्मूढता (विवेकाभाव) को प्राप्त होता है" इत्यादि श्रुति इसमें प्रमाण है। जिस प्रकार गोवत्स खूँटे के आश्रित रहता है, उसी प्रकार प्राण भी है। स्थूलशरीर का पक्षपाती वायु प्राण खूँटा है, ऐसा भर्तृप्रपञ्च आदि का मत है। अन्न बन्धनरज्जु है क्योंकि खाया गया अन्न तीन प्रकार से विकार को प्राप्त होता है। उसका जो स्थूलविकार होता है; वह मल और मूत्र दो रूपों में परिणत होकर भूमि पर गिरता है। जो मध्यम विकार होता है वह सारभूत रस है जो कि रक्तादि के क्रम से अपने कार्यभूत सप्तधातुमय शरीर को पुष्ट करता है। क्योंकि शरीर अन्नमय है, इसलिए अपने कारणभूत अन्न के प्राप्त करने से शरीर की पुष्टि व स्थिति होती है, अन्न के न प्राप्त होनेसे यह क्षीण हो जाता है एवं गिर जाता है। तथा जो अणुतम रस होता है, वह अमृत, ऊर्क् अथवा प्रभाव ऐसा कहा जाता है, वह नाभि से ऊपर हृदयदेश में आकर हृदयप्रदेश में फैली हुई बहत्तर हजार नाडियों में प्रवेश कर प्रसिद्ध शिशुसंज्ञक इन्द्रियसंघातरूप लिङ्गशरीर की स्थिति में

---

१. प्रदेशेति—प्रदेशविशेषेषु श्रोत्रादिच्छिद्रेषु प्रत्येकमाधीयत करणात्मा प्राणोऽस्मिन्निति व्युत्पत्त्या मस्तकं प्रत्याधानम्। वार्तिकं यथा—"शिरोदेशविशेषेषु प्रति प्रति स आहितः" ॥१३॥ इति। २. अस्मिन्। ३. बलाश्रयः बलाधीनस्थितिकः। ४. बृ० उ० ४।४।१। ५. नितरामेत्य। ६. समूढतामिव। ७. स्थूलशरीरेति यावत्। ८. पृथ्वीं पतति। ९ सारः। १०. प्राप्तौ। ११. तिष्ठति। १२. अन्नाप्राप्तौ। १३. प्राणोत्क्रान्तेरुक्तार्थानुसारेण दर्शनादुक्तार्थ एव ज्यायान्। १४. इदमपि शक्याङ्गीकारमित्याशयेन। १५. भर्तृप्रपञ्चैः। १६. एतद्व्यापारः। १७ स्थूलेति यावत्। १८. पक्षपातो निर्वाहकत्वम्। १९. अधिष्ठाता। २०. एकमेव स्थूलाद्युपाधिभ्यां द्वेधा विभज्येदर्शितं बोध्यम्। २१. सबद्धः। २२. उक्तवाक्यम्।

**तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन्लोहिन्यो राजयस्ताभिरेनꣳ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयाऽऽदित्यो**

ये नेत्रस्थ] सात अक्षितियाँ उस मध्यमप्राण शिशु का सदा स्तवन करती हैं। उनमें से जो ये आँख में लाल रेखाएँ हैं, उनके द्वारा 'रुद्र' इस मध्यमप्राण के अनुगत हैं तथा धूमादि से नेत्र में जो जल अभिव्यक्त होता है, उसके द्वारा 'मेघ' (उस मध्यमप्राण के अनुगत हैं) जो दर्शनशक्ति है, उसके द्वारा

नाडीसहस्रेष्वनुप्रविश्य यत्तत्करणसंघातरूपं लिङ्गं शिशुसंज्ञकं तस्य शरीरे स्थितिकारणं भवति बलमुपजनयत्[2]स्थूणाख्यं [3]तेनान्नमुभयतःपाशवत्सदामवत्प्राणशरीरयोर्निबन्धनं भवति ॥१॥

इदानीं [4]तस्यैव शिशोः [5]प्रत्याधान [6]ऊढस्य चक्षुषि [7]काश्चनोपनिषद उच्यन्ते—

तमेताः सप्ताक्षितय उपतिष्ठन्ते। [8]तं करणात्मकं प्राण शरीरे[9]ऽन्नबन्धनं चक्षुष्यू[10]ढमेता वक्ष्यमाणाः सप्त सप्तसंख्याका अक्षितयो[11]ऽक्षितिहेतुत्वादु[12]पतिष्ठन्ते। यद्यपि [13]मन्त्रकरणे

जातं सात्मघातुकम्। [14]तथाऽपि कथमन्नस्य दामत्वं तदाह—तेनेति ॥१॥

यो ह वै शिशुमित्यादौ सूत्रितशिश्वादिपदार्थान्व्याख्यायानन्तरसंदर्भस्य तात्पर्यं दर्शयन्नुत्तरवाक्यमुपादाय व्याकरोति—इदानीमित्यादिना। ननु यत्र मन्त्रेणोपस्थानं क्रियते तत्रैवोपपूर्वस्य तिष्ठतेरात्मनेपदं भवति। उक्तं हि—'उपान्मन्त्रकरणे' [पा० सू० १।३।२५] इति। दृश्यते चाऽऽदित्यं [15]गायत्र्योपतिष्ठत इति। न चात्र मन्त्रेण किंचि[16]त्क्रियते किंत्वन्नक्षयहेतुत्वा[17]त्प्राणस्य सप्ताक्षितय [18]इत्युपनिषदो[19]

कारण होता है एवं स्थूणाख्य बल को उत्पन्न करता है। (मध्यम और अणुतम विकार द्वारा अन्न के देह-प्राण की स्थितिहेतुक होने से) इस प्रकार दोनों ओर पाश के सदृश एवं बन्धनरज्जु के समान अन्न, प्राण और शरीर का बन्धन है।

अब प्रत्याधान (शिर) में आरूढ उसी करणात्मा शिशु के नेत्र में कुछ रुद्राभिधान की उपनिषदें बतलायी जाती हैं।

ये नेत्रस्थ सात अक्षितियाँ उस मध्यमप्राण शिशु की सदा स्तुति करती रहती हैं। शरीर में अन्नबन्धनरज्जु के कारण नेत्रस्थान में आरूढ उस शिशुसंज्ञक करणात्मा प्राण की जो ये वक्ष्यमाण 'सप्त'

१. प्रसिद्धम्। २ स्थूणाख्य बलमित्यन्वय। ३ तेन—अन्नस्य मध्यमाणिष्ठपरिणामद्वारा देहप्राणयो स्थितिहेतुत्वेन। ४. करणात्मन। ५. शिरसि। ६ आरूढस्य। ७ रुद्राद्यभिधानानि। ८. शिशुसंज्ञम्। ९ अन्नदामानम्। १०. आरूढम्। ११ अक्षयेति यावत्। १२ उपासते। १३ स्तवन इति शेष। १४ शिशो स्थितिकारणत्वेऽपि। १५ ऋचा। १६ स्तूयते। १७. प्राणस्यान्नेरन्वयः। १८. पदेन। १९. अभिधानानि।

**यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥२॥**

'आदित्य', जो नेत्र मे कृष्ण वर्ण है, उसके द्वारा 'अग्नि' और जो शुक्ल रूप है, उसके द्वारा इन्द्र, इस मध्यमप्राण के अनुगत है, एव नीचे के पलक द्वारा 'पृथिवी' तथा ऊपर के पलक द्वारा 'द्यु लोक' इसमे अनुगत है। जो इस प्रकार इस मध्यमप्राण को जानता है, उसका अन्न कभी भी क्षीण नही होता ॥२॥

---

तिष्ठतिरुपपूर्व आत्मनेपदी भवति। इहापि सप्तदेवताभिधानानि मन्त्रस्थानीयानि करणानि तिष्ठतेरतोऽत्राप्यात्मनेपदं न विरुद्धम्। कास्ता अक्षितय इत्युच्यन्ते। तत्तत्र या इमाः प्रसिद्धा अक्षन्नक्षणि लोहिन्यो लोहिता राजयो रेखास्ताभिर्द्वारभूताभिरेनं मध्यमं प्राणं रुद्रोऽन्वायत्तोऽनुगतः। अथ या अक्षन्नक्षण्यापो धूमादिसंयोगेनाभिव्यज्यमानास्ताभिरद्भिर्द्वारभूताभिः पर्जन्यो देवतात्माऽन्वायत्तोऽनुगत उपतिष्ठत इत्यर्थः। स चान्नभूतोऽक्षितिः प्राणस्य। "पर्जन्ये वर्षत्यानन्दिनः प्राणा भवन्ति" इति श्रुत्यन्तरात्।

---

विवक्ष्यन्ते तत्राऽऽह—यद्यपीति। मन्त्रेण कस्यचिदनुष्ठानस्य करणे विवक्षिते तिष्ठतिरुपपूर्वो यद्यप्यात्मनेपदी भवति तथाऽप्यत्र सप्त रुद्रादिदेवतानामानि मन्त्रवदवस्थितानि तैश्च करणैरुपासनानुष्ठानान्यत्र क्रियन्ते। अतस्तिष्ठतेरुपपूर्वस्याऽऽत्मनेपदमविरुद्धमिति योजना। लोहितरेखाभी रुद्रस्य प्राणं प्रत्यनुगतेरनन्तरमित्यथशब्दार्थः। पर्जन्यस्यान्नद्वारा प्राणाक्षयहेतुत्वे प्रमाणमाह—पर्जन्य इति। कथं पुनरेतेषां

---

अर्थात् सात सख्या वाली अक्षयहेतुक होने से अक्षितियाँ उपासना करती है। यद्यपि स्तवनकरण अर्थ मे 'उप' पूवक 'स्था' धातु आत्मनेपदी होता है, यहाँ भी रुद्रादि सप्तदेवतासञ्ज्ञक करण मन्त्रस्थानीय ही है, इसलिए यहाँ भी 'उप' पूर्वक 'स्था' धातु मे आत्मनेपद होना असगत नही है। वे 'अक्षितियाँ' कौन सी है? वे बतलाई जाती है। "तद्या इमा" अर्थात् यहाँ ये प्रसिद्ध जो "अक्षल्लोहिन्यो राजय" अर्थात् नेत्रस्थ रक्तवर्ण की रेखाएँ है, "ताभि" उन द्वारभूता रेखाओ के द्वारा "एन रुद्रोऽन्वायत्त" अर्थात इस मध्यमप्राण के द्वारा रुद्र उपासित है। तथा "या अक्षन्" नेत्र मे जो धूमादि के सयोग से अभिव्यक्त होने वाला जल है, "ताभि" उस द्वारभृत जल के द्वारा देवतात्मा पर्जन्य इससे उपासित है। वह पर्जन्य प्राण का अन्नभूत अक्षिति है। जैसा कि दूसरी श्रुति मे भी कहा गया है—'मेघ के बरसने पर प्राण आनन्दित हो जाते हैं'। "या कनीनका" जो गोलक कृष्णतारा की दर्शनशक्ति है, उस कनीनका के द्वारा आदित्य मध्यमप्राण की उपासना करता है, नेत्र मे जो कृष्णवर्ण है, उसके द्वारा अग्नि इसमे उपासित होता है, नेत्र मे जो शुक्लवर्ण है, उससे इन्द्र तथा नीचे की

---

१ प्रकृते। २ अप्सप्तक्षितिषु मध्य। ३ अनुगत इति—उपतिष्ठते उपास्त इत्यर्थः। वार्तिके यथा—"उपास्तेऽप्राणि प्राण रुद्राद्या सप्त देवता" ॥२३॥ इति। ४ पर्जन्य। ५. मन्त्रकरणकस्य। ६. कृतिविषयत्वे। ७ यथोक्तस्य कृतिविषयत्वेन विवक्षितत्वात्।

**तदेष श्लोको भवति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम्[1]। तस्याऽऽसत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति**

इस अर्थ में यह मन्त्र है। नीचे की ओर छिद्रवाला और ऊपर की ओर उठा हुआ चमस है, उसमें अनेक रूपों वाला यश स्थित है। उसके तीर पर सप्त ऋषिगण और वेद के द्वारा संवाद करने वाली आठवीं वाणी है। नीचे की ओर छिद्रवाला और ऊपर की ओर उठा हुआ चमस क्या है ? वह शिर ही है क्योंकि यह मस्तक ही नीचे की ओर छिद्रवाला और ऊपर की ओर उठा हुआ चमस है। उसमें विश्वरूप निहित यश क्या है ? अध्यात्मवायु प्राण ही अनेकरूपों वाला यश इसमें निहित है।

---

या कनीनका[1] दृक्शक्तिस्तया कनीनकया द्वारेणाऽऽदित्यो मध्यमं प्राणमुपतिष्ठते । यत्कृष्णं चक्षुषि तेनैनमग्निरुपतिष्ठते । यच्छुक्लं चक्षुषि तेनेन्द्रोऽधरया वर्तन्या[2] पक्ष्मणैनं[3] पृथिव्यन्वायत्ताऽधरत्वसामान्यात्[4] । द्यौरुत्तरयोर्ध्वत्वसामान्यात् । एताः सप्तान्नभूताः प्राणस्य सततमुपतिष्ठन्त इत्येवं यो वेद तस्यैतत्फलं—नास्यान्नं क्षीयते य एवं वेद ॥२॥

तत्तत्रैतस्मिन्नर्थे एष श्लोको मन्त्रो भवति—अर्वाग्बिलश्चमस इत्यादिः । तत्र

---

प्राण प्रत्यक्षितित्व सर्वथा सिध्यति तथाऽऽह—एता इति । सप्रत्युपासितफलमाह—इत्येवमिति ॥२॥

रुद्रादिशब्दानां देवताविषयत्वान्मन्त्रस्यापि तद्विषयतेत्याशङ्क्य चक्षुषि रुद्रादिगणस्योक्तत्वादिन्द्रियसबन्धात्तस्य करणग्रामस्वप्रतीतेरेतद्विषय श्लोको न प्रसिद्धदेवताविषय इत्यभिप्रेत्याऽऽह—

---

पलकस्थानीय चर्म द्वारा इसमें पृथिवी उपासित है, (अन्तरिक्ष की अपेक्षा पृथिवी की नीचे स्थिति होने से) दोनों में अधरत्वरूप समानता है, और ऊपर के पलक द्वारा इसमें द्युलोक उपासित है क्योंकि ऊर्ध्वत्व में दोनों की एकरूपता है। ये सातों प्राण के अन्न होकर सतत उपासना करते रहते हैं, "य एवं वेद" यानी जो इस प्रकार उपासना करता है, उसके अन्न का कभी भी क्षय नहीं होता, उसका यह फल है ॥२॥

"तदेष श्लोको भवति" अर्थात् वहाँ इस अर्थ में 'अर्वाग्बिलश्चमस" इत्यादि मन्त्र है। श्रुति अब इस मन्त्र का व्याख्यान करती है। "नीचे की ओर छिद्रवाला और ऊपर की ओर उठा हुआ चमस है" इत्यादि। परन्तु नीचे की ओर छिद्रवाला और ऊपर उठा हुआ चमस क्या है ? (प्राण के प्रति

---

१ गोलक कृष्णतारा । २ अधस्तन्या । ३ पक्ष्मस्थानचर्मणेति यावत् । ४ अन्तरिक्षाद्यपेक्षया पृथ्व्या अधरत्वम् । ५ उक्ता रुद्रादिदेवता प्राणोपासनात् वागाद्यात्मका एव सवृत्ता इति वागादय एवात्र रुद्रादिशब्दाभिधेया इत्यभिप्रेत्याह—चक्षुषीति । ६ रुद्रादिगणस्य । ■ करणगणविषय ।

**प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्याऽऽसत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥३॥**

प्राणो के विषय में ही (सात श्रोत्रादि और उनमे सात भागो में विभक्त होकर फैला हुआ वायु यश है) ऐसा मन्त्र कहता है। उसके तीर पर सात ऋषि रहते हैं, यहाँ पर शीर्षस्थ श्रोत्रादि सात प्राण ही ऋषि हैं क्योकि प्राणो के विषय में ही ऐसा मन्त्र कहता है। वाक् ही आठवी है क्योकि वेद के द्वारा सवाद करने वाली यही है। यही वेद के द्वारा सवाद करती है ॥३॥

---

मन्त्रार्थमाचष्टे श्रुतिः—अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति। कः पुनरसावर्वाग्बिलश्चमस ऊर्ध्वबुध्नः[1]। [2]इदं तच्छिरश्चमसाकारं हि तत्। [3]कथम्। एष [4]ह्यर्वाग्बिलो [5]मुखस्य बिलरूपत्वाच्छिरसो [6]बुध्नाकारत्वादूर्ध्वबुध्नः। तस्मिन्यशो निहितं विश्वरूपमिति यथा सोमश्चमस एवं तस्मिञ्छिरसि विश्वरूपं नानारूपं निहितं स्थितं भवति। किं पुनस्तद्यशः प्राणाः वै विश्वरूपं प्राणाः श्रोत्रादयो वायवश्च मरुतः [7]सप्तधा तेषु प्रसृता यश [8]इत्येतदाह मन्त्रः। [9]शब्दादिज्ञानहेतुत्वात्। [10]तस्याऽऽसत [11]ऋषयः सप्त [12]तीर इति [13]प्राणाः

---

तत्तत्रेति। मन्त्रस्य व्याख्यानसापेक्षत्वं तत्रेत्युच्यते। शिरसश्चमसाकारत्वम[14]स्पष्टमित्याशङ्क्य समाधत्ते—कथमित्यादिना। वागष्टमीत्ययुक्तं तस्याः [15]सप्तमत्वेनोक्तत्वात्तु चैकस्या [16]द्वित्वमित्याशङ्क्याऽऽह—ब्रह्मणेति। [17]शब्दराशिर्ब्रह्म,तेन सवादः ससर्गस्त गच्छन्ती शब्दराशिमुच्चारयन्ती वागष्टमी स्यादिति

---

प्रत्याधानरूप से युक्त) वह यह प्रसिद्ध शिर है क्योकि वह चमस के आकार वाला है। यह चमसाकार किस प्रकार है ? क्योकि यह नीचे की ओर स्थित छिद्र वाला है, मुख छिद्ररूप है और शिर गोलाकार होने के कारण यह ऊर्ध्वबुध्न है। उसमे अनेक रूपो वाला यश स्थित है। इसी प्रकार उस शिर मे "विश्वरूपम्' अर्थात् नाना रूपो वाला यश ' निहितम्" अर्थात् स्थित है। वह यश क्या है ? प्राण ही अनेक रूपो वाला यश है। प्राण यानी सात श्रोत्रादि एव इन्द्रिय से उपाधिकृत सात मरुत् ही यश है,

---

१ इद तदिति—इद प्रसिद्ध तद् प्राण प्रति प्रत्याधानत्वेनोक्तम्। शिर एव अर्वाग्बिलोऽर्वाङ्मुख ऊर्ध्वबुध्न ऊर्ध्वासिन चमस चमसपात्रमिवेत्यभिप्रेत्याह—चमसाकारमिति। २ कथ चमसाकारम्। ३. हि यस्मादेष शिरोलक्षणश्चमसोऽर्वाग्बिलो अध स्थितस्यैव मुखस्य बिलरूपत्वाच्छिरसा बुध्नाकारस्योपरि भागे दृश्यमानत्वाच्च ऊर्ध्वबुध्नस्तस्माच्छिर एवात्तलक्षणश्चमस इत्यर्थ.। ४. गोलाकारत्वात्। ५ यश.। ६. इन्द्रियोपाधिकृतमरुता सप्तधात्वम्। ७. प्राणानेव यश इत्याह। ८. शब्दादिप्रकाशनरूपयशोहेतुत्वा-त्प्राणानाम्। ९. शिरश्चमसस्य। १०. शब्दादिद्रष्टृत्वात्। ११. पार्श्वे। १२. चरणाश्रया। १३. अप्रसिद्धम्। १४. 'सप्त वै शीर्षण्या प्राणा' इत्यत्र बृ० उ० ५३०पृष्ठभाष्य। १५ द्विरूपत्वम्। १६. वेदादि.।

**इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्य-**

ये दोनो श्रोत्र ही गोतम और भरद्वाज है। यह दक्षिण श्रोत्र ही गोतम है और यह वाम श्रोत्र ही भरद्वाज है। ये दोनो नेत्र ही विश्वामित्र और जमदग्नि हैं। इनमे दक्षिण नेत्र ही विश्वामित्र है और वाम नेत्र ही जमदग्नि है। ये दोनो नासिकाछिद्र ही वशिष्ठ तथा कश्यप है। इनमे दक्षिणछिद्र ही वशिष्ठ है और वामछिद्र कश्यप है तथा वाक् ही अत्रि है क्योकि वागिन्द्रिय द्वारा ही पुरुष अन्न भक्षण

---

[1]परिस्पन्दात्मकास्त एव च [2]ऋषय प्राणानेतदाह मन्त्रः। वागष्टमी ब्रह्मणा संविदानेति। ब्रह्मणा संवादं कुर्वत्यष्टमी भवति। [3]तद्धेतुमाह—[4]वाग्घ्यष्टमी ब्रह्मणा संवित्त इति ॥३॥

[5]के पुनस्तस्य चमसस्य तीर आसत ऋषय इति। [6]इमावेव गोतमभरद्वाजौ कर्णाविमावेव गोतमोऽयं भरद्वाजो दक्षिणश्चोत्तरश्च विपर्ययेण वा। तथा चक्षुषी उपदिशन्नुवाचेमावेव विश्वामित्रजमदग्नी दक्षिणं विश्वामित्र उत्तरं जमदग्निर्विपर्ययेण वा। इमावेव वसिष्ठकश्यपौ नासिके उपदिशन्नुवाच। दक्षिणः पुटो भवति वसिष्ठः। उत्तरः कश्यपः

---

प्राणव। [7]तथाऽपि सप्तमत्व विहाय कथमष्टमत्वं तत्राऽऽह—तद्धेतुमिति। वक्तृत्वात्तृत्वभेदेन द्विधा वागिष्टा तत्र [8]वक्तृत्वेनाष्टमी सप्तमी [9]चात्तृत्वेनेत्यविरोध.। [10]रसना तूपलब्धिहेतुरिति भाव. ॥३॥

---

ऐसा श्रुति कहती है क्योकि वे प्राण शब्दादि-प्रकाशनरूप यश के हेतु हैं। उसके शिर के पास मे सप्त ऋषियो का (शब्दादिद्रष्टत्व होने के कारण) वास है। यह (करणाश्रय) प्राण परिस्पन्दनात्मक सप्तप्राण ही समझने चाहिएं, वे ही ऋषि हैं। प्राणो के विषय मे ही श्रुति ऐसा कहती है "वागष्टमी ब्रह्मणा संविदानेति" अर्थात् वेद के द्वारा सवाद करने वाली वाक् आठवी है। वक्तृत्वरूप मे अष्टम होने मे हेतु कहते है क्योकि आठवी वाणी ही वेद के द्वारा संसृष्टि करती है ॥३॥

किन्तु उस चमस के निकट किन ऋषियो का वास है? यह प्रसिद्ध दोनो कर्ण ही गोतम और भरद्वाज है। ये दांये और बांयें के कर्ण ही गोतम और भरद्वाज हैं। अथवा दांयें भरद्वाज और बांये गोतम है। इसी प्रकार नेत्रो के विषय मे उपदेश करते हुए श्रुति कहती है कि ये ही विश्वामित्र और

---

१. सप्त वायव। २ प्रसिद्धप्र्योश्रयत्वाद्वा। २ वक्तृत्वनाष्टमत्वे हेतुम्। ३ यस्मादष्टम्यद वाक् इत्यन्वय। ४ समृज्यते। ५ पूर्वं प्राणत्वसामान्यनाक्तषु विशेषतो ज्ञानायाय प्रश्नो नामसूचक. इत्यादि ना। ६ प्रसिद्धावव। ७ वक्तृत्वऽपि। ८ उच्चारणक्रियावत्वेन। ९. चर्वणक्रियावत्वेन। १० अत्तृत्वेनेति—न च चर्वणस्य वाक्कार्यत्व मूके चवणानुपपत्तेः गोलकवैगुण्येन वचनशक्तिप्रतिरोधेऽपि वाच. शक्त्यन्तराप्रतिघातादित्यूह्यम्। १० ननु वचनस्य वागिन्द्रियकार्यत्वेऽपि रसास्वादनस्य रसनकार्यत्वात्कथ वाचो द्वैविध्यमित्याशङ्क्याऽऽह—रसनेति। उपलब्धिर्मधुरस्वादिप्रत्यक्षम्।

दत्त्रिरिति, सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥४॥

## इति बृहदारण्यकोपनिषदि द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

करता है। जिसे अत्रि कहते हैं, निःसन्देह वह अत्तिनाम वाला ही है। जो इसे (इस पूर्वोक्त प्राण के यथार्थस्वरूप को) जानता है वह सबका भक्षण करने वाला हो जाता है, इसका सब भोज्य हो जाता है अर्थात् भोज्यवर्ग से निवृत्त हो जाता है ॥४॥

॥ इति द्वितीय ब्राह्मणम् ॥

---

पूर्ववत्। 'वागेवात्रिरदनक्रियायोगात्सप्तम.। वाचा ह्यन्नमद्यते। 'तस्मादत्तिर्ह वै प्रसिद्धं नामैतदत्तृत्वादत्तिरिति। अत्तिरेव सन्यदत्रिरित्युच्यते' परोक्षेण सर्वस्यैतस्यान्नजातस्य प्राणस्यात्रिनिर्वचनविज्ञानादत्ता भवति। 'अत्तैव भवति नामुष्मिन्नन्नेन पुन प्रतिपद्यत इत्येतदुक्त भवति सर्वमस्यान्नं भवतीति। य एवमेतद्यथोक्तं प्राणयाथात्म्यं वेद स एवं

---

विपर्ययेण वेत्येतत्पूर्ववदित्युच्यते। अत्रि सप्तम इति सबन्ध। अत्रित्वे हेतुरदनक्रियायोगादिति। हेतु साधयति—वाचा हीति। 'साध्यमर्थं निगमयति—तस्मादिति। तर्हि कथमत्रिरिति व्यपदिश्यतेऽत आह—अत्तिरेवेति। प्राणस्य यदन्नजातमेतस्य सर्वस्यात्ता भवत्यत्रिनिर्वचनविज्ञानादिति सबन्ध। 'सर्वमस्येत्यादिवाक्यमर्थोक्तिपूर्वकं प्रकटयति—अत्तैवेति। न केवलमत्रिनिर्वचनविज्ञानकृतमेतत्फलं किंतु प्राणयाथात्म्यवेदनप्रयुक्तमित्याह—य एवमिति ॥४॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

---

जमदग्नि है। इनमें दक्षिण नेत्र विश्वामित्र और बाँया जमदग्नि है अथवा दक्षिण नेत्र जमदग्नि और बाँया विश्वामित्र है। नासिका के विषय में उपदेश करती हुई श्रुति कहती है कि यह दोनों वसिष्ठ और कश्यप हैं दाँया नासापुट वसिष्ठ है और बाँया कश्यप है अथवा दाँया नासापुट कश्यप है और बाँया वसिष्ठ है। रसाभिव्यक्ति की हेतु चर्वणक्रिया वाली वाक् सप्तम ऋषि अत्रि है क्योंकि वाक् से ही अन्न भक्षण किया जाता है इसलिए उसके चर्वणक्रिया सम्पादन करने से प्रसिद्ध 'अत्ति' नाम वाला है भक्षण करने वाला होने के कारण यह 'अत्ति' है। (देवता परोक्षप्रिय हैं प्रत्यक्ष से द्वेष करने वाले हैं, इस उक्ति के अनुसार) 'अत्ति' होते हुए भी परोक्षरूप से 'अत्रि' कहा गया है। इस 'अत्रि' शब्द की

---

१ रसाभिव्यक्तिहेतुचर्वणक्रियावती वागत्रि सप्तम। २ यस्मात्। ३ तस्याश्चर्वणक्रियावत्त्वात्। ४ तत्। ५ परोक्षप्रिया इव हि देवा। ६ उपासितफल वक्ति—सर्वस्यति। ७ अत्तैवेति—उपासकोऽस्मा-दमुष्मिन् परत्र (पर प्रतीति यावत्) पुनरन्नेन (अन्नत्वेन) कदाचन न प्रतिपद्यते अन्नत्वेन न प्राप्यत उपासितुरन्द्रोऽस्य तस्य त प्रति न भोक्तृत्व किंतु भोक्तृत्वमेवेति यावत्। अमुष्मिन्नित्यस्य परलोक इति चार्थ। ८ इति न पौनरुक्त्यम्। ९ यदर्थं हेतूपन्यासस्तम्। १० सर्वमस्येति—पूर्ववाक्यनगतार्थतामाशङ्क्य परत्वात्।

( अथ द्वितीयाध्यायस्य तृतीयं ब्राह्मणम् )

'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ॥१॥

ब्रह्म के दो रूप हैं; मूर्त और अमूर्त, मर्त्य और अमृत, स्थावर और जंगम, सत् और त्यत् ॥१॥

---

मध्यमः प्राणो भूत्वाऽऽधानप्रत्याधानगतो भोक्तैव भवति न भोज्यं भोज्याद्व्यावर्तत इत्यर्थः ॥४॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

तत्र प्राणा वै सत्यमित्युक्तम् । याः प्राणानामुपनिषदस्ता 'ब्रह्मोपनिषत्प्रसङ्गेन व्याख्याता 'एते ते प्राणा इति च । 'ते किमात्मकाः कथं वा तेषां सत्यत्वमिति च वक्तव्यमिति 'पञ्चभूतानां 'सत्यानां 'कार्यकरणात्मकानां स्वरूपावधारणार्थमिदं 'ब्राह्मण-

---

'संबन्धं वक्तुं वृत्तं कीर्तयति—तत्रेति । अजातशत्रुब्राह्मणावसानं सप्तम्यर्थः । उपनिषदो रहस्याभिधानानि । चकारादुक्तमित्यनुषङ्गः । उत्तरब्राह्मणतात्पर्यमाह—ते किमात्मका इति । "ब्रह्मणो

---

निरुक्ति का ज्ञान होने से 'पुरुष' इस सम्पूर्ण अन्नसमुदाय का अन्न होता है (यह उपासना का फल है)। (इससे उपासक) अन्न का भोक्ता होता है, परलोक में "सर्वमस्यान्नं भवति" अर्थात् पुनः अन्नस्वरूप से भक्ष्यत्व को प्राप्त नहीं होता है। "य एव वेद" जो इस प्रकार उपर्युक्त प्राण की यथार्थरूप से उपासना करता है, वह इस प्रकार मध्यमप्राण होकर आधान-प्रत्याधानगत भोक्ता ही होता है; भोज्य नहीं होता अर्थात् भोज्य से निवृत्त हो जाता है ॥४॥

इस प्रकार बृहदारण्यक उपनिषत् के द्वितीय अध्याय के शिशुसञ्ज्ञक द्वितीय ब्राह्मण में शाङ्करभाष्य का हिन्दीभाषानुवाद पूर्ण हुआ ॥२॥

पिछले ब्राह्मण में कहा गया है कि प्राण ही सत्य हैं। जो प्राणों की प्रतिपादक उपनिषदें हैं,-

---

१. "गार्ग्योक्तं ब्रह्म निरस्य तन्निरासाय साम्प्रतम् । तृतीयब्राह्मणे प्राह राजोक्तं ब्रह्म विस्तृतम् ॥ प्रथमब्राह्मणे राजा ब्रह्म यद्यप्यशेषतः । उवाचाथाऽपि सत्यस्य सत्यता नहि विस्तृता ॥ सत्यसत्यस्वविस्तारमुखेन प्रतिपाद्यते । निष्प्रपञ्चब्रह्मतत्त्वं तृतीयब्राह्मणे स्फुटम्" ॥१-३॥ इति वार्तिकसारे । २. सत्यस्य सत्यमिति ब्रह्माभिधानप्रसङ्गेन । ३ सत्याः सप्त श्रोत्रादयः । ४. ते किमात्मकाः कथं वा तेषां सत्यत्वमितीति—ते चेतनाः, स्युरचेतना वा द्वितीये कारणात्मनो विकारा वा न तावच्चेतना अनात्मत्वात् नापि कारणात्मानो जन्मश्रुतेः विकारत्वे वाचारम्भणत्वान्न सत्या इत्याकांक्षाप्रकारानुवादार्थमितिशब्दः । इतीदं ब्राह्मणमारभ्यत इति सम्बन्धः । ५. ननु तेन (प्रकृतब्राह्मणेन) प्राणानां स्वरूपं सत्यत्वं वा नोच्यते भूतानामेव निरूपणादित्याशङ्क्याऽऽह—पञ्चभूतानामिति । कार्यकरणरूपाणि सत्यशब्दितानि भूतानि अतस्तदात्मना प्राणानां निरूपणात्तत्स्वरूपादिवक्तुमुत्तरं वाक्यमविरुद्धमित्यर्थः । ६. सत्यशब्दवाच्यानाम् । ७. स्थूलसूक्ष्मरूपाणाम् । ८. ब्राह्मणमिति—ब्राह्मणं देशभूतमधात आदेश इत्यतः प्राक्तनं वाक्यमित्यर्थः । ९. पूर्वोत्तरब्राह्मणयोः । १०. प्राणानां सत्यशब्दितानां सत्यत्वं ब्रह्म तस्य ।

मारभ्यते । यदुपाधिविशेषापनयद्वारेण नेति नेतीति ब्रह्मणः सतत्त्वं निर्दिधारयिषितम् । तत्र द्विरूपं ब्रह्म पञ्चभूतजनितकार्यकरणसंबद्धं मूर्तामूर्ताख्यं मर्त्यामृतस्वभावं तज्जनितवासनारूपं च सर्वज्ञं सर्वशक्ति सोपाख्यं भवति । क्रियाकारकफलात्मकं च सर्वव्यवहारास्पदम् । तदेव ब्रह्म विगतसर्वोपाधिविशेषं सम्यग्दर्शनविषयमजमजरममृतमभयं वाङ्मनसयोरप्यविषयमद्वैतत्वान्नेति नेतीति निर्दिश्यते । तत्र यदपोहद्वारेण नेति नेतीति निर्दिश्यते ब्रह्म, ते एते द्वे वाव वावशब्दोऽवधारणार्थः । द्वे एवेत्यर्थः । ब्रह्मणः परमात्मनो रूपे रूप्यते याभ्यामरूपं परं ब्रह्माविद्याध्यारोप्यमाणाभ्याम् । के ते द्वे । मूर्तं चैव मूर्तमेव च ।

निर्धारणीयत्वात्किमिति मूर्तानां सतत्त्वं निर्धार्यते तत्राऽऽह—यदुपाधीति । तेषामुपाधिभूतानां स्वरूपावधारणार्थं ब्राह्मणमिति संबन्धः । सत्यस्य सत्यमित्यत्र षष्ठ्यन्तसत्यशब्दित हेयप्रथमान्तसत्यशब्दितमादेयं तयोराद्यस्वरूपो वस्त्वर्थं मथेत्यत प्राक्तनं वाक्य तदूर्ध्वमा ब्राह्मणसमाप्तेरादेयनिरूपणार्थमिति समुदायार्थः । सविशेषमेव ब्रह्म न निर्विशेषमिति केचित्तान्निराकर्तुं विभजते—तत्रेति । ब्राह्मणार्थे पूर्वोक्तरीत्या स्थिते सतीति यावत् । 'द्वे वाव' इत्यादिश्रुते सोपाधिक ब्रह्मरूप विवृणोति—पञ्चभूतेति । शब्दप्रत्ययविषयत्वं सोपाख्यत्वम् । निरुपाधिक ब्रह्मरूप दर्शयति—तदेवेति । एव भूमिकामारचय्याक्षराणि व्याकरोति—तत्रेत्यादिना । द्वैरूप्ये सतीति यावत् । अमूर्तं चेत्यत्र चकारादेवकारानुषक्ति ।

उनकी "ये सप्तसंख्या वाले श्रोत्रादि प्राण हैं" (सत्यस्य सत्यम्) ऐसा कहकर ब्रह्माभिधान-प्रसङ्ग से व्याख्या कर दी गई है। उनका सत्यत्वादि किस प्रकार है और चेतन अथवा अचेतन कैसा उनका स्वरूप है ? इसलिए स्थूल और सूक्ष्मरूप सत्यशब्दवाच्य पञ्चभूतों के स्वरूप का निर्धारण करने के लिए यह ब्राह्मण प्रारम्भ किया जाता है। जिनकी उपाधिविशेष के निषेध द्वारा "नेति नेति" इत्यादि रूप से श्रुति को ब्रह्मतत्त्व निर्णय कराना इष्ट है। पञ्चभूतजनित स्थूल और सूक्ष्म शरीर से सम्बद्ध ब्रह्म के दो रूप हैं। वह मूर्त और अमूर्त, मर्त्य और अमृत स्वभाव वाला है, कार्यकरणसंघातजनित वासनारूप एवं सर्वज्ञ और सर्वशक्तिमान् शब्दप्रतीति का विषय है। वह क्रिया, कारक और फलस्वरूप तथा

१ येषामुपाधिविशेषरूपाणामिति विग्रहः । २ सोपाधिकं निरुपाधिकमिति ब्रह्मणि द्वैविध्यं सिद्धवत्कृत्य सोपाधिकस्यैव ब्रह्मणो द्वैरूप्यमाह—तत्रेति । 'रूपे वा ब्रह्मणो विद्यान्मूर्तामूर्ते सवासने । ब्रह्म च रूप्यते ताभ्यां ब्रह्मत्व न हि रूपवत्' ॥ वा० ६॥ इति । अत्र वाशब्दश्चार्थे । वासनामयं तृतीयं रूपमाशङ्क्याऽऽह—सवासने इति । कथं तयोर्ब्रह्मरूपत्वं तदाह—ब्रह्म चेति । रूप्यते ज्ञाप्यते विशेषणेति यावत् । चैतन्यादिवत्तयोर्ब्रह्मरूपत्वमाशङ्क्य निरुपाधिकं ब्रह्म विवक्षित्वाऽऽह—ब्रह्मत्वमिति । स्वार्थो भावप्रत्ययोऽरूपादिश्रुतेरित्यर्थः । ३ स्थूलसूक्ष्मशरीरसम्बद्धम् । ४ वासनामयं तृतीयं रूपमाशङ्क्याऽऽह—तज्जनितेति । कार्यकरणसंघातजनिते वासनामये वासनामयस्य सोपाधिके एवान्तर्भावाद्द्वे एवेति भावः । ५. निरासद्वारा । ६ मायामये रूपे । ७ कथं तयोर्ब्रह्मरूपत्वमित्याशङ्क्याऽऽह—रूप्यत इति । ज्ञाप्यते ज्ञायत इति वार्थः । ८ तथा च ब्रह्म ज्ञापके एवं तेन स्वरूपि ब्रह्म ताभ्यां रूपवत् । ९ स्वरूपम् । १०. पूर्वत्रेति शेषः । ११ सस्थूलसूक्ष्मप्रपञ्चजाता प्राणाः । १२ परं ब्रह्म । १३ मध्ये । १४ हेयस्वरूपप्रतिपादनार्थम् । १५ अथात इत्यत इत्यर्थः । १६ ब्रह्मस्वरूपम् । १७ सम्बन्धोक्तिं कृत्वा । १८ मन्वमूर्तमेव चेति कथं भाष्यम् । १९ एवकारस्यामूर्तं चेत्यत्राश्रुतेरत आहामूर्तं चेत्यत्रेति ।

**तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेत-**
**त्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य**
**स्थितस्यैतस्य सत एष रसो य एष तपति सतो**
**ह्येष रसः ॥ २ ॥**

जो यह वायु अन्तरिक्ष इन दो भूतो से भिन्न (पृथिवी, जल तथा तेज) है, वह मूर्त है। यह मर्त्य है। यह स्थावर है और चक्षुरादि से प्रतीत होने के कारण यह सत् उस इस मूर्त का, इस मर्त्य का, इस स्थित का और इस सत् का, यही रस है। जो यह अन्तरिक्ष मे सवितृमण्डल तपता है, यह सद्रूप तीनो भूतों का ही सारतम रस है ॥२॥

---

तथाऽमूर्तं चामूर्तमेव चेत्यर्थः । अन्तर्णीतस्वात्मविशेषणे मूर्तामूर्ते द्वे एवेत्यवधार्यते । कानि पुनस्तानि विशेषणानि मूर्तामूर्तयोरित्युच्यन्ते—मर्त्यं च मर्त्यं मरणधर्म्यमृतं च तद्विपरीतं स्थितं च परिच्छिन्न गतिपूर्वकं यत्स्थास्नु यच्च यातीति यद्व्याप्य परिच्छिन्नं स्थितविपरीत 'सच्च सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत् । त्यच्च तद्विपरीतं त्यदित्येव सर्वदा परोक्षाभिधानार्हम् ॥१॥

तत्र चतुष्टयविशेषणविशिष्ट मूर्तं तथाऽमूर्तं च । तत्र कानि मूर्तविशेषणानि

---

विवक्षितब्रह्मणो रूपद्वयमवधारित चेन्मर्त्यत्वादीनि वक्ष्यमाणविशेषणान्यवधारणविरोधादयुक्तानी-त्याशङ्क्याऽऽह—अन्तर्णीतेति । मूर्तामूर्तयोरन्तर्भावितानि स्वात्मनि यानि विशेषणानि तान्याकाङ्क्षा-द्वारा दर्शयति—कानि पुनरित्यादिना । यद्गतिपूर्वक स्थास्नु तत्परिच्छिन्न स्थितमिति योजना । विशेष्यमाणत्वं प्रत्यक्षेणोपलभ्यमानत्वम् ॥१॥

तत्रेति निर्धारणार्था सप्तमी । तत्र प्रत्येक मूर्तामूर्तचतुष्टयविशेषणवत्त्वे सतीति यावत् । कथ

---

समस्त व्यवहार का आश्रय है। वही ब्रह्म सब प्रकार के उपाधिविशेषो से अतीत सम्यक्ज्ञान का विषय, जन्म, जरा, मरण व भय स रहित तथा वाणी और मन का अविषय एव अद्वत होने के कारण उसका 'नेति नेति' ऐसा निर्देश किया जाता है। वहाँ जिस ब्रह्म का निरास द्वारा 'नेति नेति' वर्णन किया जाता है "द्वे वाव" अर्थात वे दो रूप उस "ब्रह्मण." अर्थात् परमात्मा के है। मन्त्र मे 'वाव' शब्द

---

१. सार. कार्यम् । २ मण्डलमित्यर्थः । ३ भूतत्रयभूतद्वयात्मके । ४ रूपे । ५ मरणधर्मिविनश्वर तु प्राणत्यागोऽत्र मरणमिति न पृथिव्यादावव्याप्ति । ६ मूर्तविरुद्ध ध्रुवमिति यावत् । ७ व्यापि—अपरिच्छिन्नम् । ८ व्यक्तम् । ९ अ यम्य वाय्वाकाशेभ्य बहुवचनमवान्तरभेदापेक्षम् अन्यव्यावृत्तो य प्रत्यक्षोपलभ्यमानोऽसाधारणधर्मविशेषो गन्धादिस्तद्वदित्यर्थ । १० तच्छब्दार्थकस्त्यच्छब्द । ११ भूतत्रय-भूतद्वयात्मकराशिद्वयमध्ये । १२ मूर्तादिविशेषणचतुष्टयविशिष्टमिति यावत् । १३ भूतत्रयात्मक विशेष्यमित्यर्थ । १४ एवममूर्तं भूतद्वयम् । १५ भूतत्रयविशेषणानीति यावत् । १६ सोपाधिकेत्यर्थ । १७ रूपद्वयमवधार्य मूर्तं चामूर्तं चेत्येतावदेव वक्तु घटते यत्त्वधिक विरुद्ध स्यादवधारणत ।

कानि, चेतराणीति विभज्यते । तदेतन्मूर्तं मूर्छितावयवमितरेतरानुप्रविष्टावयवं घनं संहतमित्यर्थः । किं तद्यदन्यत्कस्मादन्यद्वायोश्चान्तरिक्षाच्च भूतद्वयात्परिशेषात्पृथिव्यादि भूतत्रयमेतन्मर्त्यं यदेतन्मूर्ताख्यं भूतत्रयमिदं मर्त्यं मरणधर्मि । कस्माद्यस्मात्स्थितमेतत् । परिच्छिन्नं ह्यर्थान्तरेण संप्रयुज्यमानं विरुध्यते । यथा घटः स्तम्भकुड्यादिना तथा मूर्तं स्थितं परिच्छिन्नमर्थान्तरसंबन्धि ततोऽर्थान्तरविरोधान्मर्त्यमेतत्सद्विशेष्यमाणासाधारण-धर्मवत् । तस्माद्धि परिच्छिन्नं परिच्छिन्नत्वान्मर्त्यमतो मूर्तं मूर्तत्वाद्वा मर्त्यं मर्त्यत्वात्स्थितं स्थितत्वात्सत् । अतोऽन्योन्याव्यभिचाराच्चतुर्णां धर्माणां यथेष्टं विशेषणविशेष्य-भावो हेतुहेतुमद्भावश्च दर्शयितव्यः । सर्वथाऽपि तु भूतत्रयं चतुष्टयविशेषणविशिष्टं मूर्तं

---

स्थितत्वेऽपि मर्त्यत्वं तत्राऽऽह—परिच्छिन्नं हीति । तदेव दृष्टान्तेन स्पष्टयति—यथेत्यादिना । अतो मर्त्यत्वान्मूर्तमिति शेषः । मूर्तत्वमर्त्यत्वयोरन्योन्यहेतुमद्भावं द्योतयितुं वाशब्दः । कथं पुनश्चतुर्षु धर्मेषु विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च निश्चेतव्यस्तत्राऽऽह—अन्योन्येति । रूपरूपिभावस्यापि व्यवस्थाभावमाशङ्क्याऽऽह—सर्वथाऽपीति । तस्यैतस्यैष रस इत्येव वक्तव्ये किमिति मूर्तस्येत्याविना

---

निर्धारणार्थक है । जिस अविद्या अध्यारोप के द्वारा अरूपी ब्रह्म भी ज्ञापित होता है (वे दो ही रूप हैं) । वे दो रूप कौन से है ? "मूर्त चैवामूर्तं च" अर्थात मूर्त तथा अमूर्त ही वे दो रूप हैं । जिनमें उनके अपने अन्य भूतत्रयात्मक विशेषणों का अन्तर्भाव हो जाता है, ऐसे ये मूर्त और अमूर्त, दो ही ब्रह्म निर्धारित किए जाते हैं । वे मूर्त और अमूर्त के विशेषण कौन से है—इस पर श्रुति कहती है । वह ब्रह्म "मर्त्यं चामृतं च" यानी विनश्वरधर्मा और (ध्रुव) अविनाशी स्वभाव वाला है, "स्थित" यानी परिच्छिन्न या गतिपूर्वक स्थित रहने वाला, "यच्च" जो व्यापी अपरिच्छिन्न स्थितिरहित है, "सत्" अर्थात् दूसरों की अपेक्षा विशेषरूप से व्यक्त किए जाने वाले असाधारण धर्मविशेष वाला है, "त्यत्" यानी सत् से विपरीत अथवा "तद्" शब्द की तरह सदा अप्रत्यक्षरूप में कहने योग्य है ॥१॥

इस प्रकार भूतत्रयात्मक मूर्त और भूतद्वयात्मक अमूर्त चार विशेषणों से युक्त है । उनमें मूर्त के विशेषण कौन से है, अमूर्त के कौन से है ? इसका विभाग किया जाता है । "तदेतन्मूर्तम्" अर्थात् वह यह मूर्त मूर्छित अवयवों वाला है यानी इसके अवयव एक दूसरे में अनुप्रविष्ट घनीभूत एवं एक दूसरे से मिले हुए हैं । वह क्या है ? "यदन्यत्" अर्थात जो अन्य है । किससे अन्य है ? वायु और अन्तरिक्ष इन दो भूतों से । अतः बचे हुए पृथिवी, जल और तेज तीन भूत ही मूर्त हैं । "एतन्मर्त्यम्" यह जो मूर्तनामा तीन भूत है, वह "मर्त्यम्" यानी विनश्वरधर्मा है । विनश्वरधर्मा क्यों है ? क्योंकि वे स्थित है यानी परिच्छिन्न वस्तु ही किसी अन्य पदार्थ के संयोग किए जाने से विनाश को प्राप्त हो जाता है । मूर्त स्थित, परिच्छिन्न और अर्थान्तरसम्बन्धी उसी प्रकार है, जिस प्रकार स्तम्भ और दीवार आदि

---

१. भूतद्वयविशेषणानीत्यर्थः । २. जिज्ञासायाम् । ३. तानीति शेषः । ४. भूतत्रयं त्रिवृत्प्रक्रिययाऽन्योन्यं संमिलितावयवमित्यर्थः । ५. मर्त्यम् । ६. अन्याश्रितम् । ७. विनश्यतीति यावत् । ८. अर्थान्तरसंबन्धित्वान्मर्त्यमित्यन्वयः । ९. व्यक्तम् । १०. प्रत्यक्षेणोपलभ्यमानत्वात् । ११. स्थितत्वात् । १२. परस्पराभाववदवृत्तित्वात् परस्परं व्याप्यत्वादिति यावत् । १३. सर्वथाऽपीति—विशेष्यविशेषणभावाद्यवच्छिन्नत्वेऽपीत्यर्थः । १४. यथोक्तविरुद्धत्वमेव ।

रूपं ब्रह्मणः। तत्र चतुर्णामेकस्मिन्गृहीते विशेषण इतरद्गृहीतमेव विशेषणमित्याह— तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सतश्चतुष्टयविशेषणस्य भूतत्रयस्येत्यर्थः। एष रसः सार इत्यर्थः। त्रयाणां हि भूतानां सारिष्ठः सविता। एतत्साराणि त्रीणि भूतानि यत एतत्कृतविभज्यमानरूपविशेषणानि भवन्ति। आधिदैविकस्य कार्यस्यैतद्रूपं यत्सविता यदेतन्मण्डलं तपति। सतो भूतत्रयस्य हि यस्मादेष रस इत्येतद् गृह्यते।

विशेषणचतुष्टयमनूद्यते तत्राऽऽह—तत्रेति। सारत्वं साधयति—त्रयाणां हीति। तत्र प्रतिज्ञामनूद्य हेतुमाह—एतदिति। एतेन सवितृमण्डलेन कृतानि विभज्यमानान्यसंकीर्णानि कृष्णं शुक्लं लोहितमित्येतानि रूपाणि विशेषणानि येषां पृथिव्यप्तेजसां तानि तथा। ततो भूतत्रयकार्यमध्ये सवितृमण्डलस्य प्राधान्यमित्यर्थः। य एष तपतीत्यस्यार्थमाह—आधिदैविकस्येति। हेतुवाक्यमादाय तस्य तात्पर्यमाह—सत इति। मण्डलमेवैतच्छब्दार्थः। मण्डलपरिग्रहे हेतुमाह—मूर्तो हीति। मूर्तग्रहणस्योपलक्षण-

से घट। इसलिए (अर्थान्तरसम्बन्धी होने के कारण) अविनश्वरधर्मा का अर्थान्तर से विरोध है। यह व्यक्त अर्थात विशेष्यमाण असाधारण धर्म वाला है। इसलिए (प्रत्यक्ष प्रमाण से) उपलब्ध होने के कारण स्थित है, स्थित होने के कारण अविनश्वरधर्मा है, इसलिए मूर्त है। अथवा मूर्त होने के कारण स्थित है और स्थित होने से व्यक्त है। अत इन चारो धर्मों के परम्पराभाव के समान वृत्ति न होने से यथेष्ट विशेषणविशेष्यभाव और हेतुहेतुमद्भाव दिखलाना चाहिए। विशेषणविशेष्यभावादि मे ऐच्छिक होने पर भी, चारो विशेषणो से विशिष्ट भूतत्रयात्मकरूपी ब्रह्म का मूर्त रूप है। इन चारो विशेषणो म से किसी एक को ग्रहण करने पर दूसरे विशेषण भी गृहीत हो ही जाते हैं—इसी बात को श्रुति कहती है। 'तस्यैतस्य' अर्थात् उस मूर्त मरणधर्मा का, इस स्थित का और "सत" यानी इस सत् का अर्थात् इन चारो विशेषणो से विशिष्ट भूतत्रय का 'एष रस' अर्थात् यह (सवितामण्डल) सार है। सविता तीनो भूतो का सारतम है। तीन भूतो का यही सार है क्योकि वे इसी के द्वारा विभाजित

१ रूपिणः। २ भूतत्रयस्य चतुर्विशेषणत्वे प्रमाणसिद्धे सति। ३ इतरद्गृहीतमेव विशेषणमिति— इतरद्विशेषणमेव गृहीतं स्यादित्यन्वयः। चतुर्विशेषणमध्ये एकस्य विशेषणस्य ग्रहणे अन्यस्यापि विशेषणस्यैव ग्रहणं स्यात्तन्मा भूदिति विशेषणचतुष्टयमनूद्यते तथा च मण्डलस्य चतुर्विशेषणकभूतत्रयकार्यत्वं न त्वेकैकविशेषणकार्यतेति सिद्धम्। अधिकोक्तेरधिकार्थद्योतकत्वादित्यर्थः। ४ गृहीतमेवेति—अत्र अगृहीतमित्येव युक्तम्। तथा चायमर्थः—तस्यैतस्येत्यनावृत्त्यैवोक्तावव्यवहितपूर्वस्य सद्विशेषणस्यैव ग्रहणं भवेदितरथाऽगृहीतमेव भवेद्विशेषणं तथा च विशेषणचतुष्टयविशिष्टस्य कार्यं न सिध्यदिति सर्वमनूदितमिति। ५ सविताऽत्र मण्डलमिति यावत्। ६ सारतमः। ७ मण्डलम्। ८ बहुव्रीहिः। ९ भूतद्वयोपसर्जनानि मण्डलारम्भे त्रयाणां प्राधान्यात् मण्डलस्य च पञ्चककार्यत्वात्। १० त्रीणि भूतानीति भूतद्वयोपसर्जनानि तन्मण्डलारम्भे एव प्रधानानीति यावत् तस्यापि (मण्डलस्यापि) पञ्चभूतात्मकत्वादिति। ११ त्रयाणां भूतानामिति शेषः। १२ श्रौतमेषपदं विवृणोति—सवितेति। १३ तस्य चेतनविषयत्वमाशङ्क्याऽऽह—यदेतदिति। १४ शश्वद्विश्वमिति शेषः। १५ विशेषणान्तरोपलक्षणमिदम्। १६ एषशब्दस्य चेतनविषयत्वमाशङ्क्याऽऽह—एतदिति। १७ प्रत्यक्षमुपलभ्यते। १८ एतेन—भूतत्रयरूपाणां कृष्णादीनां सवितृमण्डलेऽसंकीर्णतया प्रतीयमानत्वात् तस्य भूतत्रयसारत्वमिति भावः। १९ भूतत्रयरूपाणां स्वस्मिन् विस्पष्टमादर्शकत्वात्। २० एषशब्देन मण्डलपरिग्रहे यद्धेतुवाक्यं तत्।

'ममूर्तत्वाद'स्थितमतोऽविरुध्यमानं केनचिद'मृतममरणधर्म्यैतद्य'त्स्थितविपरीतं 'व्याप्य-परिच्छिन्नं 'यस्मादेतद'न्येभ्योऽप्रविभज्यमानविशेषमतस्त्यदिति 'परोक्षाभिधानार्हमेव पूर्ववत्। तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्य 'चतुष्टयविशेषणस्या'मूर्तस्यैष रसः। कोऽसौ। य एष एतस्मिन्मण्डले पुरुषः "करणात्मको हिरण्यगर्भः प्राण इत्य-भिधीयते। यः स एषोऽमूर्तस्य भूतद्वयस्य रसः पूर्ववत्सारिष्ठः। एत"त्पुरुषसारं ह्यमूर्तं भूतद्वयं "हैरण्यगर्भ"लिङ्गारम्भाय हि'भूतद्वयाभिव्यक्तिर"व्याकृतात्तस्मा"त्तादर्थ्या त्तत्सारं.

---

अमूर्तत्वमुभयत्र हेतुत्वेन संबध्यते। अपरिच्छिन्नत्वमविरोधे हेतुः। अमर्तत्वादीनां मिथो विशेषणविशेष्य-भावो हेतुहेतुमद्भावश्च यथेष्टं द्रष्टव्य इत्याह—पूर्ववदिति। पुनरुक्तिरपि "पूर्ववत्। य एष इत्यादि प्रतीकग्रहणं तस्य व्याख्यानं करणात्मक इत्यादि। यथा मूर्तत्रयस्य मण्डलं सारिष्ठमुक्तं तद्वदित्याह—पूर्ववदिति। सारिष्ठत्वमनूद्य हेतुमाह—एतदिति। तादर्थ्याद्भूतद्वयस्य भूतत्रयोपसर्जनस्य "स्वयंप्रधानस्य हिरण्यगर्भारम्भार्थत्वादिति यावत्। भूतद्वयं "भूतत्रयोपसर्जनमिति शेषः। "हेतुमयुक्तार्थं व्याचष्टे—

---

के कारण वे अस्थित हैं, इसका किसी से विरोध न होने के कारण यह अमृत यानी अविनश्वरधर्मा है। "एतद्यत्" अर्थात् परिच्छिन्न विशेषण होने से स्थित है और इसके विपरीत अपरिच्छिन्न होने से व्यापी है क्योंकि भूतद्वय पृथिव्यादि अन्य से अविभक्त विशेष है, इसलिए यह "त्यत" है ('तत्' शब्दार्थ में ही 'त्यत्' शब्द है) "त्यत्" इस शब्द में परोक्षार्थाभिधान की ही योग्यता है—इत्यादि व्याख्या पूर्व के समान समझनी चाहिये। उस इस अमूर्त का, इस अमृत का, इस चल का, इस त्यत् का यानी इन चारों विशेषणों वाले भूतद्वय अमूर्त का यह सार है। वह कौन सा है ? "य एष एतस्मिन् मण्डले" जो इस अन्तरिक्षमण्डल में समष्टि अन्त करणस्वरूप पुरुष हिरण्यगर्भ प्राण कहा जाता है, वही इस अमूर्त भूतद्वय का रस अर्थात् पूर्वमन्त्रोक्त सारतम भाग है। अमूर्त भूतद्वय इस पुरुषरूप सार वाले है क्योंकि हिरण्यगर्भ लिङ्गात्मा के आरम्भ के लिए ही अव्याकृत (कारणादि ईश्वर) रूप से इन दोनों भूतों का अभिव्यक्ति होती है। इसलिए भूतद्वय उसके प्रयोजनभूत होने से उस पुरुषरूप सार

---

१. निरंशत्वात्। २ अपरिच्छिन्नमित्यर्थः। ३ तात्पर्यमभिधायाक्षरार्थमाहामृतमित्यादिना। ४. परिच्छिन्नविपरीतमिति यावत्। ५. व्यापीति च्छेदः (अपरिच्छिन्नत्वात्)। ६. भूतद्वयम्। ७. अन्येभ्य पृथिव्यादिभ्योऽप्रविभज्यमानो व्यावृत्तत्वेनाप्रत्यायितो विशेषोऽसाधारणधर्मो यस्य वाय्वादेस्ततथा पृथिव्यादीनां मण्डलमिव वाय्वाकाशयोर्विशेषाभिव्यञ्जककार्याभावादिति भावः। तत्कार्यं हि करणात्मा स च न प्रत्यक्षो मण्डलान्तर्गतः। ८. तच्छब्दार्थस्त्यच्छब्दः। ९. बहुव्रीहिः। १०. भूतद्वयस्य। ११. समष्टघन्तःकरण-स्वरूपो, मायमपि चेतन इति ध्येयम्। १२. बहुव्रीहिः। १३. हेतुमुपपादयति—हैरण्येति। १४. लिङ्गात्मेत्यर्थः। १५. कारणादीश्वरात्। १६. तादर्थ्यादिति—मण्डलाधिष्ठातृपुरुषे (करणात्मनि) अमूर्तामृतयत्त्यदां चतुर्णामन्वयोऽपरो हेतुर्द्रष्टव्यः। १७. बहुव्रीहिः। १८. पूर्ववदिति—विशेषणचतुष्टयवतो भूतद्वयस्य प्रागुक्तस्य पुनरुक्तिः किमिति वृत्तेत्युक्त मण्डलपुरुषस्य चतुर्विधविशेषणकभूतद्वयकार्यत्वं नैकैककार्यतेति यत्तु पुनरुक्तिरधिकोक्तेरधिकार्थत्वादित्यर्थः। १९. स्वयं प्रधानं यत्र समुदाये। २०. हिरण्यगर्भस्यापि पाञ्चभौतिकत्वादिति भावः। २१. हेतुमिति—एष लिङ्गात्मा रसो भूतद्वयस्येत्यत्र त्यस्य हीत्यादि हेतुवाक्यमित्यर्थः।

भूतद्वयम् । [1]त्यस्य ह्येष रसो यस्माद्यो मण्डलस्थः पुरुषो [2]मण्डलवन्न गृह्यते सारश्च भूतद्वयस्य । तस्मादस्ति मण्डलस्थस्य पुरुषस्य भूतद्वयस्य च [3]साधर्म्यम् । [4]तस्माद्युक्तं प्रसिद्धवद्धेतूपादानं त्यस्य ह्येष रस इति ।

※रसः [5]कारणं हिरण्यगर्भविज्ञानात्मा चेतन इति केचित् । तत्र च किल हिरण्य-

त्यस्य हीति । पुरुषशब्दादुपरिष्टात्सशब्दो द्रष्टव्यः । अमूर्तत्वादिविशेषणचतुष्टयवैशिष्ट्यं साधर्म्यम् । [6]तत्फलमाह—तस्मादिति ।

[7]स्वमतमुक्त्वा भर्तृप्रपञ्चमतमाह—रस इति । त्यस्य हीत्यादौ रसशब्देन भूतद्वयकारणमुक्तं न च तच्चेतनादन्यत् । न च जीवः । [8]तथाऽसामर्थ्यात् । नापि परः कौटस्थ्यात् । [9]तस्माच्चेतनः सूत्रक्षेत्रज्ञ[10]स्तथेत्यर्थः । सोऽपि कथं भूतद्वयकारणमत आह—तत्रेति । परकीयपक्षः समन्यर्थः । तत्कर्मण[11]स्तत्रा-

वाले ही हैं । त्यदादिविशेषण से विशिष्ट भूतद्वय का यह सार है क्योंकि यह जो मण्डलस्थ पुरुष है, इसकी मण्डल के समान प्रत्यक्षप्रतीति नहीं होती । इसलिए यह भूतद्वय का सार है । अतः मण्डलस्थ पुरुष और भूतद्वय का साधर्म्य है । यथोक्त साधर्म्य होने के कारण "यह त्यत् का ही सार है" इस प्रकार प्रसिद्ध के समान हेतुसम्पादन करना उचित ही है ।

भर्तृप्रपञ्च का मत है कि हिरण्यगर्भाख्य विज्ञानात्मा (क्षेत्रज्ञ) चेतन है; वही रस होने से

१. त्यदादिविशेषणविशिष्टभूतद्वयस्य । २. प्रत्यक्षं नोपलभ्यते । ३. यथा मण्डलस्य भूतत्रयसारत्वे सतो हीति चतुर्णामन्वयो हेतुरुक्तः सतश्चानुक्तोपलक्षणार्थं ग्रहणम् । तथा तस्यपुरुषस्य भूतद्वयसारत्वे चतुष्टयान्वयो हेत्वर्थः । त्यस्य च ग्रहणमनुक्तोपलक्षणार्थमित्यभिप्रेत्याह—साधर्म्यमिति । ४ यथोक्तसाधर्म्यात् । ५. त्यस्य हीति वाक्ये रसशब्देन हिरण्यगर्भाख्य क्षेत्रज्ञश्चेतन उच्यते । तत्र हेतुमाह—कारणमिति । कारणत्वादिति हेतुगर्भविशेषणम् । ६. साधर्म्यफलम् । ७ अमूर्तवाक्य इति शेष. । ८ कारणम् । ९. जीवपरयो- र्भूतद्वयकरणत्वासंभवात् । १०. कारणम् । ११ वाय्वन्तरिक्षयो कारणत्वम् ।

※रसः कारणमित्यादि रस कारणमुच्यत इतीत्यन्तभाष्यवार्तिकानि प्रदर्श्यन्ते । "हिरण्यगर्भक्षेत्रज्ञ रस केचित्प्रचक्षते । कारण रसशब्देन यस्मादत्राभिधीयते ॥ यस्माद्धिरण्यगर्भस्य कर्म वाय्वन्तरिक्षयो । प्रयोक्त्र- व्यक्तयोस्तस्माद्रसः क्षेत्रज्ञ उच्यते ॥ भूतद्वयरसो ज्ञेयो मण्डले चेतन पुमान् । त्यस्य ह्येष रस इति तत्सिद्धौ कारणाभिधा ॥ न्यायोक्तरैरेव सत्सिद्धेः प्रतिज्ञातस्य वस्तुन । क्षेत्रज्ञ कारण यस्मादित्यत्र न्याय उच्यते ॥ एतस्मिन्मण्डले योऽन्तर्विज्ञानात्मत्वमागत । अविद्याभावनाकर्महेतुतो नान्यकारणात् ॥ तस्य यत्कर्मरूप तद्वियद्वायुप्रयोजकम् । खस्यस्य कर्मणस्तस्य मरुत्प्रस्पन्दरूपिणः ॥ वाय्वाकाशप्रनाड्यैव तेजस संभवस्तत । जज्ञाते तेजसो भूते जल च पृथिवी तथा ॥ कर्मणा पौरुषेणैव रसभूतेन सम्भव । यत्स्वन्तरिक्षयोर्यस्माद्रसस्तेन पुमास्तयोः ॥ मेधया तपसेत्यादि तथाच प्रागुदाहृतम् । न्यायेनानेन पुरुषो रसशब्देन भण्यते ॥ त्यस्य ह्येष इति ह्युक्त्या न्यायः श्रुत्याऽप्युच्यते" ॥४९-५८॥ स्वमतमुक्त्वा भर्तृप्रपञ्चमतमाह—हिरण्यगर्भेति । तत्र हेतुमाह —कारणमिति । त्यस्य हीत्यादौ रसशब्देन भूतद्वयकारणमुक्त न च तच्चेतनादन्यन्न च जीवस्तथाऽसामर्थ्यान्नापि परः कौटस्थ्यात्तस्माच्चेतन. सूत्रक्षेत्रज्ञोऽत्र रस इत्यर्थ ॥ सोऽपि कथ भूतद्वयकारणमत आह—यस्मादिति ॥ स स्वकर्मद्वारा कारणमस्यूतस्य वाय्वादेरित्युक्त समर्थयितु तस्यैतस्यामूर्तस्येत्यादिवाक्यार्थं सङ्क्षिप्याऽऽह—भूतेति । हेतुवाक्यमादत्ते—त्यस्येति । तस्यार्थं सङ्क्षिपति—तत्सिद्धाविति । मण्डलपुरुषस्य भूतद्वयकारणत्वप्रतिपत्तार्थमिति

गर्भविज्ञानात्मनः कर्म वाय्वन्तरिक्षयोः 'प्रयोक्तृ 'तत्कर्म वाय्वन्तरिक्षाधारं सदन्येषां भूतानां प्रयोक्तृ भवति । 'तेन स्वकर्मणा वाय्वन्तरिक्षयोः 'प्रयोक्तेति' तयो रसः कारण-मुच्यत इति ।

तन्न, मूर्तरसेनातुल्यत्वात् । मूर्तस्य तु भूतत्रयस्य रसो मूर्तमेव मण्डलं दृष्टं भूतत्रय समानजातीयं न चेतनस्तथाऽमूर्तयोरपि भूतयोस्तत्समानजातीयेनैवामूर्तरसेन

साधारण्यम सम्प्रतिपन्नमित्यभिप्रेत्य किलेत्युक्तम् । यथाऽऽहुः—यो ह्येतस्मिन्मण्डले विज्ञानात्मैष खल्वविद्याकर्मपूर्वप्रज्ञापरिष्कृतो विज्ञानात्मत्वमापद्यते तदेतत्कर्मरूपं विज्ञानात्मनस्तद्वाय्वन्तरिक्ष-प्रयोक्तृ भवतीति । ननु हिरण्यगर्भदेहस्य पञ्चभूतात्मकत्वाद्भूतद्वयोत्पत्तावपीतरभूतोत्पत्तिं विना कुतोऽस्य भोग सिध्यत्यत आह—तत्कर्मेति । वाय्वन्तरिक्षाधारं तद्रूपपरिणतमिति यावत् । वाय्वन्त-रिक्षयोर्भूतत्रयोपसर्जनयोरिति शेषः । प्रयोक्ता हिरण्यगर्भविज्ञानात्मा ।

निराकरोति—तन्नेति । कथं मूर्तरसेन सह यथोक्तामूर्तरसस्यातुल्यतेत्याशङ्क्याऽऽह—मूर्तस्येति । अमूर्तश्चासौ रसश्चेत्यमूर्तरसस्तेनेति यावत् । अमूर्तरसस्य चेतनत्वे तु रसयोर्वैजात्यं स्यादिति भावः ।

कारण है । उस अवस्था मे हिरण्यगर्भ क्षेत्रज्ञ का कर्म वायु और अन्तरिक्ष का प्रयोजक है, उस (सूत्र क्षेत्रज्ञ) का कर्म वायु और अन्तरिक्षरूप आधार वाला होकर अन्य भूतो का प्रयोजक होता है; उस वायु-अन्तरिक्षात्मक परिणतिरूप से अपने कर्मद्वारा वायु और अन्तरिक्ष का जनक है, इसलिए (प्रयोजक होने के कारण) रसहेतुक कारण कहा जाता है ।

ऐसा कहना ठीक नही है क्योंकि मूर्त के सार से इसकी समानता नही है । मूर्त भूतत्रय का

१ प्रयोजनम् । २ सूत्रक्षेत्रज्ञस्य कर्म । ३ वाय्वन्तरिक्षात्मना परिणतम् । ४ जनक । ५ प्रयोक्तृ-त्वात् । ६ अचेतनत्वेन । ७ तत्समानेति—भूतद्वयसमानजातीयनाचेतनेनैव अन्तःकरणेनैवेत्यर्थः । ८ सिद्धान्तविरुद्ध तस्यैवाभिमतम् । ९ भर्तृप्रपञ्चा । १० सम्मिलित समवाये सुट् । ११ जीवत्वम् । १२ यदर्थं तत् । १३ कर्मस्वरूपम् । १४ जनकम् । १५ कर्मद्वारा हिरण्यगर्भादुत्पत्ता-वित्यर्थ । १६ मदुक्तक्षेत्रज्ञस्य ।

यावत् ॥ श्रौतेऽर्थे [illegible] हेतुर्नेत्याशङ्क्याऽऽह—न्यायेति ॥ न्यायमेव दर्शयन् यो ह्येतस्मिन्मण्डले विज्ञानात्मेति भर्तृप्रपञ्चभाष्यमाह—एतस्मिन्निति । एष खल्वविद्याकर्मपूर्वप्रज्ञापरिष्कृतो विज्ञानात्मत्वमापद्यत इत्येत-दस्यानुवक्ष्यजीवत्वप्रापकमाह—अविद्येति । सूत्रक्षेत्रज्ञस्य भूतद्वयकारणत्वं ब्रुवाणस्तदेव तत्कर्मरूपं विज्ञानात्मन-स्तद्वाय्वन्तरिक्षप्रयोक्तृ भवतीत्यस्यार्थमाह—तस्येति । तद्देहस्य पञ्चभूतात्मकत्वाद्भूतद्वयोत्पत्तावपीतरभूतोत्पत्ति विना न तस्य भोग इत्याशङ्क्यान्तरिक्षाधारस्य वायुपरिस्पन्दस्य कर्मणो वाय्वन्तरिक्षद्वारेणैव तेजस सम्भव इत्यस्यार्थमाह—तस्येति । तदाकाशमुत्पाद्य तद्रूपेण स्थित तस्य मरुत्कार्यं तत्र स्पन्दात्मना स्थितस्य द्वयद्वारा तेज एव कर्मणस्तयोस्तेजसश्च जन्मेत्यर्थ । तैजसे इतरे भूते इत्यस्यार्थमाह—जनाते इति ॥ तद्यस्मात्पौरुषेण कर्मणा रसभूतेनाऽऽविष्टयोर्वाय्वन्तरिक्षयो प्रवृत्तिरित्येतद्व्याकुर्वन्फलितमाह—कर्मणेति । मेधया तपसाऽजन-यत्पितेति ह्युक्तमित्यस्यार्थमाह—मेधयेति । नैयायिकमर्थं निगमयति—न्यायेनेति । श्रौतीं न्यायोक्तिमुपसंहरति —स्यस्यति । श्रुतस्तन्यायसाधनसामर्थ्यद्योतनार्थो हिशब्द ।

युक्तं भवितुम् । [1]वाक्यप्रवृत्तेरतुल्यत्वात् । यथा हि [2]मूर्तामूर्ते चतुष्टयधर्मवती [3]विभज्येते तथा [4]रसरसवतोरपि मूर्तामूर्तयोरतुल्येनैव न्यायेन युक्तो विभागः । न चार्धवैशसम् । [5]मूर्तरसेऽपि मण्डलोपाधिश्चेतनो विवक्ष्यत इति चेत् । अत्यल्पमिदमुच्यते । [6]सर्वत्रैव तु मूर्तामूर्तयोर्ब्रह्मरूपेण विवक्षितत्वात् । पुरुषशब्दोऽचेतनेऽनुपपन्न इति चेत् । न । [7]पक्ष-

अस्तु तयोर्वैजात्य नेत्याह—यथा हीति । मूर्तं मर्त्यं स्थित सदिति [8]मूर्तस्य धर्मचतुष्टयम्मूर्तममृत व्यापि त्यदित्य[9]मूर्तस्य विभजनमसकीर्णत्वेन प्रदर्शनं यथा [10]रसवतोर्मूर्तामूर्तयोस्तुल्यत्वमुक्त तथा [11]रसयोरपि तयो[12]स्तुल्येनैव प्रकारेण प्रदर्शनमुचितं नत्वमूर्तरसश्चेतनो मूर्तरसस्त्वचेतन इति युक्तो विभागोऽर्धजरतीयस्याप्रामाणिकत्वादित्याह—तथेति । अर्धवैशसं परिहर्तुं शङ्कते—मूर्तरसेऽपीति । अमूर्तरसवन्मूर्तरसशब्देनापि चेतनस्यैव ब्रह्मणो [13]मण्डलापन्नस्य ग्रहणमित्येतद्दूषयति—अत्यल्पमिति । मण्डलस्य चेतनकार्यतया चेतनत्वे सर्वस्य तत्कार्यतया तन्मात्रत्वाद्रसयोश्चेतनतेति विशेषणानर्थक्य-मित्यर्थः । [14]मण्डलाधारस्य चेतनत्वं पुरुषशब्दश्रुतिवशादेष्टव्यमिति शङ्कते—पुरुषशब्द इति । अनुपपत्ति

सार तो मूर्त मण्डल ही प्रत्यक्ष है । भूतत्रय की की समानजाति वाले अचेतन का सार चेतन नही हो हो सकता । इसी प्रकार अमूर्त भूतो का भूतद्वय के समानजातीय अचेतन अन्तःकरण से ही अमूर्त रस होना चाहिए क्योंकि मूर्त और अमूर्त प्रतिपादक श्रुतिवाक्यो की प्रवृत्ति मे एकरूपता है । जिस प्रकार (भूतत्रय और भूतद्वयरूप) मूर्तामूर्त का चार धर्मो से युक्त असकीर्णतया प्रदर्शन किया जाता है, उसी पद्धति से मूर्तामूर्त रस का भी विभाग करना उचित है आधा नाश करना उचित नही है । (पूर्वपक्षी शङ्का करता है—) यदि मूर्तमण्डल रस मे भी मण्डलोपाधिक चेतन की विवक्षा ही मानें तो ? (इस पर सिद्धान्ती कहता है—) तुम्हारी यह बात बहुत थोडे महत्व की है । वेदान्त मे सर्वत्र ही भिन्नक्रम मूर्त और अमूर्त भूतमात्र ब्रह्मरूप से विवक्षित है । (इस पर पूर्ववादी कहता है—) पुरुषशब्द का अचेतन

१ मूर्तामूर्तवाक्ययो प्रवृत्तरेकरूपत्वात् । २ भूतत्रयभूतद्वयरूपे । ३ असकीर्णतया प्रदर्श्येते । ४ अत्र रसयोरिति पाठ उचित । ५ मण्डलेऽपि । ६ वेदान्तेषु एव भिन्नक्रम । ७ पक्षपुच्छादिविशिष्टस्यैवेति —एवकारोऽप्यर्थ । अचेतनेष्वपि पक्षाद्यवयवत्सु कोशेषु पुरुषशब्दप्रयोगदर्शनादिति यावत् । यत्तु सूत्रक्षमशस्य स्वकर्मद्वारा कारणतेति तत्राहुर्वार्तिके—'न ह्यात्मव्यतिरेकेण किंचित्कारणमिष्यते । तेन तेन स्वरूपेण प्रत्यगात्मैव कारणम् ॥ मण्डलात्मनि चाऽऽधार लिङ्गात्मैवावसीयताम् । करणस्यैव तस्यात्माद्विज्ञानात्मा हि लिङ्गग ॥ अज्ञात पुरुषो यस्मात्कार्यकारणशब्दभाक् । अज्ञातमिथ्याविज्ञानरूपत्वान्न तु तत्त्वत '' ॥६३-६५॥ इति । परस्यैवाज्ञातस्य कारणताया वैदिकत्वादित्यर्थ । आकाशाद्वायुरित्यादावाकाशादेरपि कारणत्व श्रुतमित्याशङ्क्याऽऽह—तेनेति ॥ यत्तु पुरुषो मण्डलाधारो विज्ञानात्मेति तत्राऽऽह—मण्डलेति । तत्र हेतुमाह—करणस्येति । यथा गोलकेषु करणात्मैवावतिष्ठत तथा मण्डलेऽपि तस्यैवावस्थितिरित्यर्थ । तत्सत्त्वज्ञस्तर्हि कुत्रास्ति तत्राऽऽह—विज्ञानेति । मण्डलस्य लिङ्गोपाधित्ववत्तस्यापि विज्ञानात्मोपाधित्व प्रामाणिकमिति वक्तु हिशब्द ॥ परस्यापि कूटस्थत्वान्न कारणतेति तत्राहाज्ञात इति । अज्ञातरूपत्व कारणत्वे तच्छब्दभाक्त्वे मिथ्याज्ञानरूपत्व च कार्यशब्दभाक्त्वे हेतुरिति भेद । तस्मात्परस्मिन्कार्यादिभावस्याऽऽरोपान्न कौटस्थ्यादिदौ-स्थ्यमिति शेष ॥ ८ भूतत्रयस्येत्यर्थ । ९ भूतद्वयस्येत्यर्थ । १० भूतत्रयभूतद्वयरूपयोश्चतुष्टयधर्म-वत्त्वेन तुल्यम् । ११ व्यधिकरणषष्ठ्यौ । १२ अचेतनत्वेन तुल्यधर्मणैव । १३ मण्डलाभावापन्नस्य । १४ करणात्मन ।

**अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥**

अब अध्याय मे मूर्तामूर्त का निरूपण किया जाता है। जो प्राण से भिन्न है तथा देहान्तर्गत आकाश से भिन्न है, यही शरीर मे मूर्त है, यही मर्त्य है, यही स्थावर है और यही सत् है। जो यह नेत्र है, यही इस मूर्त का, इस मर्त्य का, इस स्थित का एव प्रतीयमान सत् का सारतम रस है, यही सत् का सारतम रस है ॥ ४ ॥

---

पुच्छादिविशिष्टस्यैव 'लिङ्गस्य पुरुषशब्ददर्शनात् । न वा इत्थं सन्तः शक्ष्यामः प्रजाः प्रजनयितुमिमान्सप्त पुरुषानेकं पुरुषं करवामेति त एतान्सप्त पुरुषानेकं पुरुषमकुर्वन्नित्यादावन्नरसमयादिषु च श्रुत्यन्तरे पुरुषशब्दप्रयोगात्' । 'इत्यधिदैवतमित्युक्तोपसंहारोऽध्यात्मविभागोक्त्यर्थः ॥३॥

अथाधुनाऽध्यात्मं मूर्तामूर्तयोर्विभाग उच्यते । किं 'तन्मूर्तमिदमेव । किंचेदं

---

परिहरति—नेत्यादिना । तदेव व्याकरोति—न वा इति । इत्थ विभक्ताः सन्तो नैव शक्ष्यामो 'व्यवहार प्रजनयितुमित्यालोच्य स्वस्वचक्षुःश्रोत्रजिह्वाघ्राणवाङ्मनोरूपानिमान्सप्त पुरुषानेकं पुरुषं सहत लिङ्ग करवामेति च निश्चित्यामी प्राणाः सप्त पुरुषानुक्तानेकं पुरुषं लिङ्गात्मानं कृतवन्त इति श्रुत्यर्थ । आदिशब्देन 'लौकिकमपि दर्शन सगृह्यते । श्रुत्यन्तर तैत्तिरीयकम् । पुरुषशब्दप्रयोगः स वा एष पुरुषोऽन्नरसमय इत्यादि । परकीयं व्याख्यानं प्रत्याख्याय प्रकृत श्रुतिव्याख्यानम'नुवर्तयति—इत्यधिदैवतमिति ॥ ३ ॥

"चक्षुषो रसत्वं प्रतिज्ञापूर्वकं प्रकटयति—आध्यात्मिकस्येत्यादिना । चक्षुषः सारत्वे शरीरा-

---

मे प्रयोग तो अनुचित है। (सिद्धान्ती उत्तर देता है—) ऐसा कहना भी ठीक नही है। पुरुषशब्द से पक्ष और पुच्छविशिष्ट लिङ्गशरीर का ही बोध होता है, ऐसा देखा गया है। "हम इस प्रकार पृथक् पृथक् रहकर सृष्टि की उत्पत्ति नही कर सकते, अत इन श्रोत्रादि सात पुरुषो को एक कर दे, ऐसा विचार कर उसने सात पुरुषो को एक पुरुष कर दिया" इत्यादि अन्यत्र भी श्रुतिवाक्यो मे भी पुरुषशब्द अन्न-रसमयादि अर्थों का बोधक है। "यह अधिदैवत (देवताओ मे) मूर्तामूर्त विभाग है" ऐसा कह कर जो मन्त्र मे उपसहार किया है, वह अध्यात्मविभाग की उक्ति प्रतिपादन करने के लिए है ॥३॥

---

१ शरीरस्य । २ न मण्डलाधारस्य चेतनत्वमपितु करणात्मत्वमेवेति शेष । ३ देवेषु मूर्तामूर्तयोर्विभाग समाप्त इत्यर्थ । ४, अध्यात्मविभागोक्त्यवधिज्ञप्त्यर्थं । ५ देहे । ६ अध्यात्मम् । ७ स्वस्वविषयग्रहरूप व्यवहारमिति यावत् । ८ लौकिकमपि दर्शनमिति—भेरी स्त्री दुन्दुभि पुमानित्यादावप्यतास्मिन् शब्दादौ पुरुषशब्दप्रयोगदर्शनादिति । ९ अनुसरति । १० गोनकस्य ।

यदन्यत्प्राणाच्च 'वायोर्यश्चायमन्तरभ्यन्तरे आत्मन्ना तस्मन्याकाशः' खं शरीरस्थश्च यः प्राण एतद्द्वयं वर्जयित्वा यदन्यच्छरीरारम्भकं भूतत्रयमेतन्मर्त्यमित्यादि समानमन्यत्पूर्वेण। एतस्य सतो ह्येष रसो यच्चक्षुरिति। आध्यात्मिकस्य शरीरारम्भकस्य 'कार्यस्यैष' रसः सारस्तेन हि सारेण सारवदिदं शरीरं समस्तं यथाऽधिदैवतमादित्यमण्डलेन। प्राथम्याच्च। चक्षुषी एव प्रथमे संभवतः संभवत इति। तेजो रसो निरवर्ततताग्निरिति लिङ्गात्। तैजसं हि चक्षुः। एतत्सारमाध्यात्मिकं भूतत्रयम्। सतो ह्येष रस इति

---

वयवेषु प्राथम्यं हेत्वन्तरमाह—प्राथम्याच्चेति। तत्र प्रमाणमाह—चक्षुषी एवेति। संभवतो जायमानस्य जन्तोश्चक्षुषी एव प्रथमे प्रथमे संभवतो जायेते। शब्दं रेतसः सिक्तस्य चक्षुषी एव प्रथमे संभवत इति हि ब्राह्मणमित्यर्थः। चक्षुषः सारत्वे हेत्वन्तरमाह—तेज इति। शरीरमात्रस्याविशेषेण निष्पादकं तत्र सर्वत्र संनिहितमपि तेजो विशेषतश्चक्षुषि स्थितम्। "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति श्रुतेः। अतस्तेजःशब्दपर्यायरसशब्दस्य चक्षुषि प्रवृत्तिरविरुद्धेति भावः। इतश्च तेजःशब्दपर्यायो रसशब्दश्चक्षुषि संभवतीत्याह—तैजस हीति। प्रतिज्ञार्थमुपसंहरति—एतत्सारमिति। हेतुमवतार्य तस्यार्थमाह—सतो हीति। चक्षुषो मूर्तत्वान्मूर्तभूतत्रयकार्यत्वं युक्तं

---

"अथ" यानी अब अध्यात्म (देह) मे मूर्तामूर्त विभाग का प्रतिपादन किया जाता है। वह अध्यात्म क्या है? "इदमेव मूर्तम्" यानी यह मूर्त ही है। यह क्या है? जो शरीर मे रहने वाली उच्छ्वासात्मक प्राणवायु से भिन्न है, "यश्चायमन्तरात्मन्नाकाशः" अर्थात् जो इस शरीर के भीतर आकाश है, उससे भिन्न आकाश है, शरीरस्थ जो प्राण है; इन दोनों को छोड़ कर जो शरीर के आरम्भक तीन भूत है, वे ही मर्त्य है। अन्य व्याख्यान पूर्वमन्त्र के समान है। यह जो चक्षुगोलक है; वह सत् का ही सार है। आध्यात्मिक शरीरारम्भक भूतत्रय कार्य का यह चक्षुरूप रस ही सार है। उसी सार से यह सारा शरीर सौन्दर्यशाली है, जिस प्रकार अधिदैवत शरीर आदित्यमण्डल से सौन्दर्यशाली है। प्रथम होने के कारण भी चक्षु ही सार है। उत्पन्न होने वाले जीव के पहले नेत्र ही उत्पन्न होते हैं। "प्रजापतितेजरूप रस वाला अग्नि हुआ" यह इसमे प्रमाण भी है। चक्षुगोलक भी तैजस ही है। चक्षु आध्यात्मिक भूतत्रय सारवान् ही है। "सतो ह्येष रस." यह कथन भूतत्रय सत् का चक्षु के

---

१. शरीरस्थादुच्छ्वासात्मकात्। २. शरीरे। ३. तदन्यदिति शेष.। ४. गोलकम्। ५. भूतत्रयस्य। ६. चक्षूरूपः। ७. सौन्दर्यशालीति यावत्। ८. शरीरम्। ९ तेजो रस इति—प्रजापतेस्तेजो रसः तेज एव रसोऽग्निः विराडभिमानी प्रजापतिश्चतुर्मुखब्रह्मशब्दवाच्य. प्रथमशरीरी निरवर्तत उत्पन्न इत्यर्थ.। अत्र हि तेजो रसयो. पर्यायत्व श्रूयते। चक्षुषस्य तैजसत्व प्रसिद्धमतस्तेजः पर्यायस्य रसशब्दस्य चक्षुषि प्रवृत्तिरिति भावः। १०. चक्षुः तद्गोलकं तैजस तेजोरूपस्य चक्षुरिन्द्रियस्याधिकरण हीति प्रसिद्धम्। ११. इति वाक्यभागः चक्षुषो मूर्तत्रयसारत्वे यो हेतुस्तदर्थं इत्यर्थः। १२. प्राथम्ये ब्राह्मणवाक्यात्मकम्। १३. गर्भाशये उत्पद्यमानस्य। १४. अवयवान्तरापेक्षया पूर्वमिति यावत्। १५. सर्वावयवस्य। १६. स्वनिष्पादितेषु शरीरेषु। १७. शरीरारम्भकभूतात्मकम्। १८. प्रकाशरूपेण। १९. तत्तादात्म्यापन्न इति यावत्। २०. तेजसस्तत्र विशेषतोऽवस्थानात्। २१. आध्यात्मिकचक्षुषो भूतत्रयसारत्वरूपम्। २२. सत एव इत्येवशब्देन चक्षुषः परिग्रहे यद्धेतुवाक्यं तदवतार्य।

**अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमे-तद्यदेतत्त्यत्तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः ॥ ५ ॥**

अब अमूर्त का वर्णन किया जाता है। जो यह प्राण और शरीर के भीतर आकाश है, यह अमूर्त है, यह अमृत, है यह अपरिच्छिन्न है और यह त्यत् है। उस अमूर्त का, इस अमृत का, इस यत् का एवं इस त्यत् का यही सारतम रस है। जो इस दक्षिणनेत्र में पुरुष है, यह त्यत् का ही सारतम रस है ॥५॥

---

मूर्तत्रयसारत्वे हेत्वर्थः ॥४॥

अथाधुनाऽमूर्तमुच्यते। यत्परिशेषितं भूतद्वयं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमूर्तम्। अन्यत्पूर्ववत्। एतस्य त्यस्यैष रसः सारो योऽयं दक्षिणेऽक्षन्पुरुषो दक्षिणेऽक्षन्निति विशेषग्रहणं शास्त्रप्रत्यक्षत्वात्। लिङ्गस्य हि दक्षिणेऽक्षिण विशेषतोऽधिष्ठातृत्वं

---

साधर्म्याद्देहावयवेषु प्राधान्याच्च तस्याऽऽध्यात्मिकभूतत्रयसारत्वसिद्धिरित्यर्थः ॥ ४ ॥

कुतो विशेषोक्तिरित्याशङ्कयाऽऽह—दक्षिण इति। शास्त्रस्य तेन वा दक्षिणेऽक्षणि विशेषस्य प्रत्यक्षत्वादित्यर्थः। द्वितीयव्याख्यानमाश्रित्य हेत्वर्थं स्फुटयति—लिङ्गस्येति। हेतुमनूद्य तदर्थं

---

मूर्तत्व और सारत्व में हेतुक है ॥४॥

(आध्यात्मिक कार्यात्मक ब्रह्म के रूप को निरूपण कर) अब अमूर्त का व्याख्यान किया जाता है। अवशिष्ट भूतद्वय प्राण और जो शरीरान्तर्गत आकाश है, वे अमूर्त हैं। अन्य अर्थ तो पूर्वमन्त्र के समान ही समझ लेना चाहिए। इस 'त्यत्' का वह साररूप रस है, जो यह दक्षिण नेत्रवर्ती पुरुष है। मन्त्र में "दक्षिणेऽक्षन्" यानी यह दक्षिण नेत्रवर्ती विशेषग्रहण वेद-उपवेद में ईश्वर की अपरोक्षरूपता सिद्ध करने के लिए है। तदन्त पाती चक्षु-इन्द्रिय की विशेषरूप से दक्षिण नेत्र में प्रतिष्ठा है, शास्त्र (और उसके उपदेश ईश्वर) का प्रत्यक्ष सर्वश्रुतिया द्वारा होना सिद्ध है। मन्त्र में "त्यस्य ह्येष रस"

---

१ हत्वर्थ इति—मूर्तत्वसारत्वे इति हेतुवाक्यस्यार्थद्वयमित्यर्थ। २ आध्यात्मकार्यात्मकस्य ब्रह्मणो रूप निरूप्य करणात्मकस्य तदाह—अथेति। आध्यात्मिक यत्कार्यं तद्ब्रह्मणो रूपमित्येतन्निरूपणानन्तर ताद्दश यत्करण तद्ब्रह्मणो रूपमित्येतदिदानी निरूप्यत इत्यर्थ। ३ तदन्त पातिचक्षुरिन्द्रियस्य। ४. चक्षुर्मूर्त-मयर्योर्मूर्तत्वादिना साधर्म्यात्। ५ शरीरान्त पाति। ६. शास्त्रस्य—वेदोपदेष्टुरीश्वरस्येत्यर्थ। ७ शास्त्रेण वेत्यर्थ.। ८. द्वितीयव्याख्यानमिति—शास्त्रेण प्रत्यक्षत्वादित्यतद्व्याख्यानमित्यर्थ। सर्वश्रुतिषु तथा प्रयोगदर्शनादित्यनेन हि यथोक्तद्वितीयव्याख्यानस्यैव समर्थनादिति भाव। ९ अवरोहणक्रमेण द्वितीय टीकोक्त विग्रह प्रथमोक्त षष्ठीविग्रहमिति यावत्। १०, हेतुवाक्यम्।

**तस्य हैतस्य पुरुषस्य रूपम् । यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तꣳ सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति**

उस इस लिङ्गशरीररूप पुरुष का वासनामय स्वरूप ऐसा है, जैसा हल्दी मे रंगा हुआ वस्त्र, सफेद ऊनी वस्त्र, जैसा बरसाती लाल रग का कीडा, जैसे अग्निज्वाला, जैसा सफेद कमल और जैसी बिजली की चमक होती है। जो ऐसा जानता है, उसकी श्री विद्युत्चमक की भाँति एक साथ सर्वत्र व्याप्त हो जाती है। अब उसके बाद 'नेति नेति' यह ब्रह्म का आदेश बतलाया जाता है। इस आदेश से बढकर

---

शास्त्रस्य प्रत्यक्षं सर्वश्रुतिषु तथा प्रयोगदर्शनात् । त्यस्य ह्येष रस इति पूर्ववद्विशेषतोऽग्रहणादमूर्तत्वसारत्वे हेत्वर्थः ॥५॥

ब्रह्मण उपाधिभूतयोर्मूर्तामूर्तयोः कार्यकरण विभागेनाध्यात्माधिदैवतयोर्विभागो व्याख्यातः सत्यशब्दवाच्ययोः । तथेदानीं तस्य हैतस्य पुरुषस्य करणात्मनो लिङ्गस्य

---

कथयति—त्यस्येति । यथा पूर्वत्र चक्षुषि मूर्तादिचतुष्टय दृष्ट्या तादृग्भूतत्रयसारतोक्ता तथाऽत्रापि लिङ्गात्मन्यमूर्तत्वादिचतुष्टयस्य विशेषेणाग्रहणादमूर्तत्वादिना साधर्म्यात्तथाविधभूतद्वयसारत्वं तस्य शरीरे प्राधान्याच्च तत्सारत्वसिद्धिरित्यर्थः ॥ ५ ॥

तस्य हैत्यादेर्वृत्तानुवादपूर्वकं संबन्धमाह—ब्रह्मण इति । विभागो विशेषः । तस्याधिदैवं प्रकृतस्यैतस्याध्यात्म संनिहितस्यामूर्तरसभूतान्तःकरणस्यैव रागादिवासनेति वक्तुं तस्येत्यादि

---

यानी 'यह त्यत् का सार है' यह व्याख्यान पूर्वमन्त्र के समान विशेषरूप से ग्रहण न होने के कारण (भूतद्वय अमूर्त) अमूर्तत्व और सारत्व हेतुवाक्य के अर्थद्वयसम्पादन के लिए है ॥५॥

सत्यशब्द के वाच्य ब्रह्म के उपाधिभूत अध्यात्म और अधिदैवत मूर्तामूर्त का कार्यकरणरूप से विभाग का व्याख्यान किया गया। अब उस अन्तःकरणरूप इन्द्रियात्मा पुरुष के वासनामय मूर्तामूर्त स्वरूप की वासना नाना रगो के सयोग से बने पट एव दर्पणादि से परावृत प्रकाश के सयोग से चित्रित

---

१ एव यथोक्त हिरण्यगर्भोपवासनारूपमुपास्ते अस्योपासकस्य सकृद्विद्युत्तेव विद्योतनमिव श्री स्यान्निर्मवत्येवेत्यर्थं । २. तदुपदेष्टुरीश्वरस्य । ३ प्रयोगदर्शनादिति—किं च न तत्र केवल शास्त्रादेव विशेष किंतु विमतमतिशयवत् दक्षिणाङ्गत्वात् दक्षिणहस्तादिवदित्यनुमानाच्चेत्यपि द्रष्टव्यम् । ४ हेत्वर्थ इति—अमूर्तसारत्वे इति हेतुवाक्यस्यार्थद्वयमित्यर्थ. । ५ रूपेण । ६ अन्तःकरणस्येति यावत् । ७ अध्यात्मकार्यात्मकस्य ब्रह्मणो रूपनिरूपणपर्याये । ८. दर्शनात् । ९. आध्यात्मिककरणात्मब्रह्मणो रूपनिरूपणपर्याये । १०. चक्षुरिन्द्रिये इति यावत् । ११. विशेषणाग्रहणादिति—धर्मिणोऽप्रत्यक्षत्वेनामूर्तत्वादिचतुष्टयस्य । तत्रानुमेयत्वादिति यावत् । १२. ग्रहणे सति मूर्तत्वं स्यादिति भाव । १३ विशेषणागृहीता मूर्तत्वादिविशेषणचतुष्टयविशिष्टेत्यर्थः । १४. लिङ्गात्मन. ।

'न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयꣳ सत्य-
स्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥६॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये
तृतीयं ब्राह्मणम् ॥ ३ ॥

दूसरा आदेश है ही नहीं। 'सत्य का सत्य' यह उस ब्रह्म का नाम है। प्राण ही सत्य हैं। यह ब्रह्म उनका भी सत्य है (क्योंकि इस ब्रह्म का सत्यत्व ही निखिल प्रपंच के साथ तादात्म्य होकर प्रतीत हो रहा है) ॥ ६ ॥

॥ इति तृतीय ब्राह्मणम् ॥

---

रूपं वक्ष्यामो वासनामयं मूर्तामूर्तवासनाविज्ञानमयसंयोगजनितं विचित्रं 'पटभित्तिचित्रवन्मायेन्द्रजालमृगतृष्णिकोपमं ²सर्वव्यामोहास्पदम्। एतावन्मात्रमेवाऽऽत्मेति विज्ञानवादिनो वैनाशिका यत्र भ्रान्ताः। एतदेव वासनारूपं पटरूपवदात्मनो द्रव्यस्य गुण इति

---

वाक्यमित्यर्थः। कथमिव रूपं ³लिङ्गस्य प्राप्तमिति तदाह—मूर्तेति। मूर्तामूर्तवासनाभि⁴र्विज्ञानमयसंयोगेन च जनितं बुद्धेः रूपमिति यावत्। ⁵नेदमात्मनो रूपं तस्यैकरसस्यानेकरूपत्वानुपपत्तेरिति⁶ विशिनष्टि—विचित्रमिति। ⁷वास्तवत्वशङ्कां वारयति—मायेति। वैचित्र्यमनुसृत्यानेकोदाहरणम्। अन्तःकरणस्यैव रागादिवासनाश्चेत्कथं पुरुषस्तन्मयो दृश्यते तत्राऽऽह—सर्वेति। ⁸तदेव व्याकुर्वन्विज्ञानवादिनां भ्रान्तिमाह—एतावन्मात्रमिति। बुद्धिमात्रमेवाहंवृत्तिविशिष्टं ⁹स्वरसभङ्गुरं रागादिकलुषितमात्मा नान्यः स्थायी क्षणिको वेति ¹⁰यत्र ते भ्रान्तास्तस्य रूपं वक्ष्याम इति सबन्ध। तार्किकाणामपि बौद्धवद्भ्रान्तिमुद्भावयति—एतदेवेति। अन्तःकरणमेवा¹¹हंधीग्राह्यं रागादिधर्मक-

---

दीवार के समान विज्ञानमय को आश्रय करके फैलती है, इसलिए मायिक इन्द्रजाल एवं मृगतृष्णा के समान सर्ववादियों के लिए आत्मा का भ्रमगोचरत्व सिद्ध होता है। विज्ञानवादी वैनाशिकों को ऐसा भ्रम होता है कि (स्वाभावतः नश्वर क्षणिक) इतना ही आत्मा है। (बौद्धों के समान) नैयायिक और वैशेषिक भी ऐसा कहते हैं कि पट के शुक्लत्व गुण के समान यह वासना ही 'आत्मा" नामक द्रव्य का गुण है। सांख्यमतावलम्बियों की भ्रान्ति है कि यह गुणत्रययुक्त स्वतन्त्र एवं प्रधान के आश्रय होने के कारण

नैयायिका वैशेषिकाश्च संप्रतिपन्नाः । इदमात्मार्थं त्रिगुणं स्वतन्त्रं प्रधानाश्रयं पुरुषार्थेन हेतुना प्रवर्तत इति सांख्याः ।

औपनिषदंमन्या अपि केचित्प्रक्रियां रचयन्ति—मूर्तामूर्तराशिरेकः परमात्मराशिरुत्तमस्ताभ्यामन्योऽयं मध्यमः किल तृतीयः कर्ता भोक्ता विज्ञानमयेनाजातशत्रुप्रतिबोधितेन सह विद्याकर्मपूर्वप्रज्ञासमुदायः । प्रयोक्ता कर्मराशिः प्रयोज्यः पूर्वोक्तो मूर्तामूर्तभूतराशिः साधनं चेति ।

मात्मा तस्य वासनामयं रूपं पदस्य शौक्ल्यवद्गुणः स च संसार इति यत्र तार्किका भ्रान्तास्तस्य रूपं वक्ष्याम इति पूर्ववत् । सांख्यानां भ्रान्तिमाह—इदमिति । कथमस्य त्रिगुणत्वादिकं सिध्यति तत्राऽऽह—प्रधानाश्रयमिति । केन प्रकारेणान्तःकरणमात्मार्थमिष्यते तत्राऽऽह—पुरुषार्थेनेति । नान्तःकरणमेवाऽऽत्मा किंत्वन्यः सर्वगतः सर्वविक्रियाशून्यः स्वप्रकाशस्तस्य भोगापवर्गानुगुण्येन प्रधानात्मकमन्तःकरणं तत्सधर्मकं प्रवर्तत इति यत्र कापिला भ्राम्यन्ति तस्य रूपं वक्ष्याम इति संबन्धः ।

यत्र विचित्रा विपश्चितां भ्रान्तिस्तदन्तःकरणं तस्य हेत्यत्रोच्यते नाऽऽत्मेति स्वपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमुत्थापयति—औपनिषदंमन्या इति । कीदृशी प्रक्रियेत्युक्ते राशित्रयकल्पनां तत्राऽऽदावधमं राशिं दर्शयति—मूर्तेति । उत्कृष्टराशिमाचष्टे—परमात्मेति । राश्यन्तरमाह—ताभ्यामिति । तान्येतानि त्रीणि वस्तूनि मूर्तामूर्तमाहारजनादिरूपमात्मतत्त्वमिति परोक्तिमाश्रित्य राशित्रयकल्पनामुक्त्वा मध्यमाधमराश्योर्विशेषमाह—प्रयोक्तेति । उत्पादकत्वं प्रयोक्तृत्वम् । कर्मग्रहणं विद्यापूर्वप्रज्ञयोरुपलक्षणम् । साधनं ज्ञानकर्मकारणं कार्यकरणजातं तदपि प्रयोज्यमित्याह—साधनं चेति । इतिशब्दो राशित्रयकल्पनासमाप्त्यर्थः ।

उसके समान ही त्रिगुणात्मक अन्तःकरण पुरुषार्थ हेतु से आत्मा के लिए प्रवृत्त होता है ।

उसके अभिप्राय को न जानने वाले कोई-कोई औपनिषद (भर्तृप्रपञ्चादि) अपनी उत्प्रेक्षा से ही प्रमाण एवं युक्ति से रहित प्रक्रिया प्रस्तुत करते हैं । एक मूर्तामूर्त राशि है, दूसरी परमात्मसंज्ञक उत्तम राशि है, तीसरी दोनों से भिन्न मध्यम राशि है । (वह आदित्य कौन है ? इस पर कहते हैं—) अजातशत्रु द्वारा जगाये गये कर्ता, भोक्ता और विज्ञानमय से आत्मा के साथ जो विद्या, कर्म और पूर्व-प्रज्ञा का समुदाय है । प्रयोजक कर्मराशि है और उत्पाद्य पूर्वोक्त मूर्तामूर्तभूतराशि एवं (ज्ञानकर्महेतुक कार्यकरणात्मक) साधन है ।

१. तथा च तदाश्रितत्वात्तद्वदेव त्रैगुण्यात्मकम् । २ तत्तात्पर्यानभिज्ञा इति भावः । ३. स्वोत्प्रेक्षावशादेव मानयुक्तिहीना कामपि प्रक्रियाम । ४. तत्कल्पनाया. श्रुतिबाह्यत्वद्योतनाय किलेति । ५. कोऽसावित्यत्राह —कर्त्रेति । ६. आत्मना । ७. उत्पाद्यः । ८. नैयायिकमते आत्मा विचार्यमाणोऽन्तःकरणमेव निष्पद्यते सुखादितद्धर्मवत्तयाभ्युपगमात् । ९. भोगापवर्गानुगुण्येन हेतुना त्रिगुणं प्रधानमिष्टं तदात्मनैव स्थितमन्तःकरणं तत्सधर्मकमिति पाठान्तरम् । १०. प्रधानमित्यर्थः । ११. पृष्टे । १२. मूर्तामूर्तमिति पाठः । १३. मूर्तामूर्तं माहारजनादीनि च तेषां समाहारस्तद्रूपमित्यर्थः । तथा च मूर्तामूर्तरूपमेकं वस्तु, माहारजनादिरूपं द्वितीयमात्मतत्त्वं च तृतीयमित्येतानि त्रीणि वस्तूनीत्यर्थः ।

तत्र च तार्किकैः सह संधिं कुर्वन्ति । लिङ्गाश्रयश्चैष कर्मराशिरित्युक्त्वा पुनस्ततस्त्रस्यन्तः सांख्यत्वभयात्कर्मराशिः पुष्पाश्रय इव गन्धः पुष्पवियोगेऽपि पुटतैलाश्रयो भवति तद्वल्लिङ्गवियोगेऽपि परमात्मैकदेशमाश्रयति । स परमात्मैकदेशः किलान्यत आगतेन गुणेन कर्मणा सगुणो भवति निर्गुणोऽपि स कर्ता भोक्ता बध्यते मुच्यते च विज्ञानात्मेति वैशेषिकचित्तमप्यनुसरन्ति । स च कर्मराशिर्भूतराशेरागन्तुकः स्वतो निर्गुण एव परमात्मैकदेशत्वात् । स्वत उत्थिताऽविद्याऽनागन्तुकाऽप्यूषरवदनात्मधर्म इत्यनया कल्पनया सांख्यचित्तमनुवर्तन्ते ।

---

परकीयकल्पनान्तरमाह—तत्रेति । राशित्रये कल्पिते सतीति यावत् । संधिकरणमेव स्फोरयति—लिङ्गाश्रयश्चेति । तत इत्युक्तिपरामर्शः । सांख्यत्वभयात्त्रस्यन्तो वैशेषिकचित्तमप्यनुसरन्तीति संबन्धः । कथं तच्चित्तानुसरणं तदुपपादयति—कर्मराशिरिति । कथं निर्गुणमात्मानं कर्मराशिराश्रयतीत्याशङ्क्याऽऽह—स परमात्मैकदेश इति । अन्यत इति कार्यकरणात्मकाद्भूतराशेरिति यावत् । यदा भूतराशिनिष्ठं कर्मादि तद्द्वाराऽऽत्मन्यागच्छति तदा स कर्तृत्वादिसंसारमनुभवतीत्याह—स कर्तेति । स्वतस्तस्य कर्मादिसंबन्धेन संसारित्वं स्यादिति चेन्नेत्याह—स चेति । निर्गुण एव विज्ञानात्मेति शेषः । सांख्यचित्तानुसारार्थमेव परेषां प्रक्रियान्तरमाह—स्वत इति । संसर्गिण्यप्यविद्या परस्मादेवाभिव्यक्ता सती तदेकदेशं विकृत्य तस्मिन्नेवान्तःकरणाख्ये तिष्ठतीति वदन्तोऽनात्मधर्मोऽविद्येत्युक्त्या सांख्यचित्तमप्यनुसरन्तीत्यर्थः । अविद्या परस्मादुत्पन्ना चेत्तमेवाऽऽश्रयेत तदेकदेशमित्याशङ्क्याऽऽह—ऊषरवदिति । यथा पृथिव्या जातोऽप्यूषरदेशस्तदेकदेशमाश्रयत्येवमविद्या परस्माज्जाताऽपि तदेकदेशमाश्रयिष्यतीत्यर्थः ।

---

इस पर वे, तर्क से अर्थनिर्णय कर लेने वाले सांख्यादिकों के साथ सन्धि कर लेते हैं। 'यह प्रयोजक कर्मराशि लिङ्गशरीर के आश्रित है' ऐसा कहकर फिर उसके सांख्यसिद्धान्त हो जाने के भय से वैशेषिकों के दर्शन का अनुसरण कर डरते हुए कहने लगते हैं कि जिस प्रकार पुष्प के आश्रय रहने वाला गन्ध पुष्प के न रहने पर भी दोने अथवा तेल के आश्रित रहता है, उसी प्रकार सम्पूर्ण कर्मराशि लिङ्गशरीर के न रहने पर भी, परमात्मा के एकदेश जीव को आश्रय करती है। परमात्मा का एकदेश वह जीव अन्य स्थान से प्राप्त उस गुणरूप कर्म द्वारा निर्गुण होकर भी सगुण हो जाता है तथा वह विज्ञानात्मा कर्ता भोक्ता ही बन्धनयुक्त या मुक्त हो जाता है। वह कर्मराशि भूतराशि के सम्बन्ध से आत्मा में अध्यस्त स्वतः निर्गुण ही है क्योंकि वह परमात्मा का एकदेश है। "परमात्मा से प्रकटीभूता अविद्या अनादिसिद्धा होने पर भी ऊसर के समान अनात्मा का धर्म है" इस कल्पना से वह सांख्यदर्शनानुगामियों के मन की बात कह लेते हैं।

---

१ तर्केणार्थनिर्णायकैः सांख्यादिभिः । २ प्रयोजकः । ३ यथा । ४. पुट पत्रपात्रम् । ५ जीवम् । ६. परेषामेव समतभिदर्शित क्लिष्टाक्ति । ७. भूतराशिसम्बन्धेनात्मन्यध्यस्तः । ८. विनोक्तोपाधिसबन्धम् । ९. परमात्मतः । १०. प्रकटीभूता । ११. अनादिसिद्धा । १२. भूतराश्याद्युपाधिं विना । १३. अनादिसिद्धा । १४. जीवम् । १५. वियोज्य । १६. विज्ञानप्रधाने जीवे । १७. कारणमतिक्रम्य कार्यस्यान्यत्रावृत्तेरिति दोषः । १८. ऊषरदोष इति पाठः ।

सर्वमेतत्तार्किकैः सह सामञ्जस्यकल्पनारमणीयत्वं पश्यन्ति नोपनिषत्सिद्धान्तं सर्वन्यायविरोधं च पश्यन्ति । कथम् । उक्ता एव तावत्सावयवत्वे परमात्मनः संसारित्व-सव्रणत्व-कर्मफलदेशसंसरणानुपपत्त्यादयो दोषाः । नित्यभेदे च विज्ञानात्मनः परेणैकत्वा-नुपपत्तिः । लिङ्गमेवेति चेत्परमात्मन उपचरितदेशत्वेन कल्पितं घटकरकभूछिद्रा-

---

तदेतद्दूषयितुमुपक्रमते—सर्वमेतदिति । तार्किकैः सह संधिकरणादिकमेतत्सर्वमधिकृत्य साम-ञ्जस्येन पूर्वोक्तानां कल्पनानामापातेन रमणीयत्वमनुभवन्तीति यावत् । यथोक्तकल्पनानां श्रुतिन्यायनु-सारित्वाभावात्त्याज्यत्वं सूचयति—नेत्यादिना । कर्मद्वयं प्रत्येकं क्रियापदेन संबध्यते । नञश्चोभयत्रान्वयः । कथं यथोक्तकल्पनानामापातरमणीयत्वेन श्रुतिन्यायबाह्यत्वमिति पृच्छति—कथमिति । प्रवृत्तं परस्यै-कदेशो विज्ञानात्मेति "तत्र तदेकदेशत्वं वास्तवम"वास्तवं वा प्रथमे स परस्मादभिन्नो भिन्नो वेति विकल्प्या"ऽऽद्यं दूषयति—उक्ता एवेति । आदिशब्देन "श्रुतिस्मृतिविरोधो गृह्यते । "कल्पान्तरं प्रत्याह —नित्यभेदे चेति । भेदाभेदयोर्विरुद्धत्वादनुपपत्तिश्चकारार्थः । लिङ्गोपाधिरात्मा परस्यांश इति "कल्पान्तरं शङ्कते—लिङ्गमेवेति । उपचरितत्वं कल्पितत्वम् । लिङ्गोपाधिना कल्पितः परांशो जीवा-

---

तार्किकों के साथ समन्वयस्थापना की कल्पना करके वे मन में बड़े प्रसन्न होते हैं किन्तु औप-निषद सिद्धान्त तथा आने वाले सब प्रकार के न्यायविरोध को नहीं देखते। ऐसा कैसे कहते हो? पूर्वोक्त (प्रथमब्राह्मण के बीसवें मन्त्र के 'अचलस्य' इत्यादि ४६४ पृष्ठ के भाष्य में) परमात्मा के सावयवत्व मान लेने पर उसमें संसारित्व, सच्छिद्रत्व तथा कर्मफल भोग के स्थान में संसरण की अनुपपत्ति आदि दोष बतलाये हैं। अत्यन्तभेद स्वीकार करने पर तो जीवात्मा और परमात्मा का अभेद होना संभव नहीं है (इस प्रकार 'तत्त्वमसि' महावाक्यप्रतिपादक श्रुतियों का विरोध होने लगेगा)। यदि कहो कि घटाकाश, करकाकाश, भूछिद्राकाशादि के समान तदुपाधिक लिङ्गशरीर आत्मा ही परमात्मा के औपचारिक एकदेश में कल्पित है, ऐसा मानने पर तो लिङ्गशरीर जीवात्मा के चले आने पर भी, वासना का

---

१. 'अचलस्येत्यादि' ४६४पृष्ठभाष्ये । २ कर्मफलदेशेति । एकदेशस्यैव देशिव्यतिरेकेणाभावाज्जीवस्य कर्मफलदेशस्वर्गादिषु गत्यनुपपत्तिरन्यथा परस्यापि गतिः स्यान्नहि परावयवेषु चलत्सु परो न चलतीत्याह—संसारित्वमिति । परस्यैकदेशोऽग्निविस्फुलिङ्गवत्स्फुटितो विज्ञानात्मा संसरतीति जीवस्य संसारित्वेऽपि परस्य तथात्वमित्याशङ्क्याऽऽह—सव्रणत्वेति । परस्यावयवस्फुटनेन क्षतप्राप्तिः । अव्रणत्ववाक्यविरोधश्चेति । ३. अत्यन्तभेदः । ४. अनुपपत्तिरिति—तथा च "तत्त्वमस्यादि"श्रुतिविरोध इति भाव । ५. लिङ्गमिति—तदुपाधिरात्मेत्यर्थः । कल्पितमिति व्यस्तपाठे परमात्मन कल्पितदेशत्वेन लिङ्गोपाधिरात्मा परमात्मन एव कल्पि-तोंऽश इति योजना । कल्पितघटेति समस्तपाठे तु कल्पितपदस्य आकाशेऽन्वयः । ६ उद्दिश्य । ७ तार्किकाद्य-विरोधेन । ८. अविचारेण । ९. कर्मद्वयमित्यादि—उपनिषत्सिद्धान्तमित्येतस्य कर्मणो न पश्यन्तीति पूर्व-क्रियया अन्वयः । सर्वन्यायविरोधं च पश्यन्तीत्येव नञनुषङ्गेण द्वितीयकर्मण उत्तरक्रियया सबन्ध इत्यर्थः । अत्र सर्वन्यायविरोधं च पश्यन्तीत्यस्य भिन्नवाक्यत्वेन तत्र नञनुषङ्गोऽस्फुट इति तद्बोधनार्थमेवेतदुक्तम् । उपनिष-त्सिद्धान्तसर्वन्यायविरोधयोर्विशेषणविशेष्यभावभ्रमापोहार्थं वेत्यवधेयम् । १० विज्ञानात्मनि । ११. उपाधि-कृतम् । १२. प्रथमे आद्यम् । १३. "अस्थूलमनणु", "न लिप्यते लोकदुःखेन बाह्यः", "यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते" ॥ १४. प्रथमे द्वितीयम् । १५. द्वितीयमवास्तवपक्षम् ।

काशादिवत् । तथा लिङ्गवियोगेऽपि परमात्मदेशाश्रयणं वासनायाः[1] ।

अविद्यायाश्च [2]स्वत उत्थानमूषरवदित्यादिकल्पनाऽनुपपन्नैव । न च [3]वास्यदेशव्यतिरेकेण वासनाया वस्त्वन्तरसंचरणं मनसाऽपि कल्पयितुं [4]शक्यम् । न च श्रुतयो [5]अनुगच्छन्ति [6]'कामः संकल्पो विचिकित्सा, [7]हृदये ह्येव[8] रूपाणि', [9]'ध्यायतीव लेलायतीव,

रमेत्युक्ते स्वापादौ लिङ्गध्वंसे वासना नाऽऽत्मनि स्याल्लिङ्गाभावे तदधीनजीवाभावात्ततश्च [10]तद्वियोगेऽपि लिङ्गस्था वासना जीवे[11] तिष्ठतीति प्रक्रियाऽनुपपन्नेति दूषयति—तथेति ।

यत्तु परस्मादविद्यायाः समुत्थानमिति तन्निराकरोति—अविद्यायाश्चेति । आदिपदेनानात्मधर्मत्वमविद्याया गृह्यते । परस्मादविद्योत्पत्तौ तस्यैव संसारः स्यात् । [12]तयोरैकाधिकरण्यात् । [13]अतश्चाविद्याया सत्यां न[14] मुक्तिर्न[15] च तस्यां नष्टायां तत्सिद्धिः कारणे स्थिते कार्यस्या[16]त्यन्तनाशायोगा[17]त्कार्याविद्यानाशे तत्कारणपराभव[18]स्तथा च [19]मोक्षिणोऽभावा[20]न्मोक्षासिद्धिः । न चानात्मधर्मोऽविद्या विद्याया अपि तद्धर्मत्वप्रसङ्गात्तयोरेकाश्रयत्वादिति भावः । यत्तु लिङ्गोपरमे तद्गता वासनाऽऽत्मन्यस्तीति तत्राऽऽह—न चेति । पुटकादौ तु पुष्पाद्यवयवानामेवानुवृत्तिरिति भावः । इतश्च वासनाया जीवाश्रयत्वमसंगतमित्याह—न चेति ।

परमात्मा के एकदेश का आश्रयण करना अनुपपन्न हो जायगा ।

ऊसर भूमि के समान अविद्या की उत्पत्ति भी परमात्मा से ही हुई है, ऐसी कल्पना भी अयुक्त ही है। इसके अतिरिक्त अपने आश्रय को छोडकर वासना की, किसी अन्य वस्तु मे सचरण होने की कल्पना तो मन से भी नही की जा सकती। इसके अतिरिक्त श्रुतियाँ भी तात्पर्यविषयक अर्थ मे स्वारस्य अनुगमन करती है—"काम, सकल्प, सशय (आस्तिक्य, श्रद्धा, अश्रद्धा, धृति, अधृति, लज्जा, बुद्धि और भय) यह सब मन ही है", "(क्योकि पुरुष वासनात्मक रूपो का हृदय से ही स्मरण करता है) अतः हृदय मे ही रूप प्रतिष्ठित है", "(वही बुद्धि-वृत्ति के अनुसार) चिन्तन करता हुआ सा और (प्राण-वृत्ति के अनुसार) चेष्टा करता हुआ सा जान पडता है", "जब इसके हृदय मे स्थित समस्त कामनाएँ

१. अनुपपन्नमिति शेषः । २. परमात्मतः । ३. स्वाश्रयव्यतिरेकेण । ४. शक्यमिति—न हि गुणो द्रव्यं हित्वा स्वातन्त्र्येण स्थातुमर्हति पुष्पपुटिकायामपि पुष्पावयवानुवृत्तेर्न धर्मस्य धर्म्यतिक्रमः । ५. अनुगच्छन्तीति—तात्पर्यविषयेऽर्थे स्वारस्येन (शक्त्या) नानुगता भवन्तीत्यर्थः । आत्मनो वासनाश्रयत्वकल्पनायामिति शेषः । अतस्तस्य तदाश्रयत्वकल्पना श्रुतियुक्तिविरुद्धाऽयुक्तेति भावः । आत्मनाऽपि मनोवद्वासनाधर्मित्वमित्याशङ्कायामवधारणश्रुतेश्च न तस्य तद्धर्मित्वमित्याह—हृदय ह्येवेति । तर्हि आत्मनि धर्मप्रतीतिः कथं तत्राऽऽह—ध्यायतीवेति । चित्तस्यैव कामादीत्यत्र वाक्यान्तरमाह—कामा यऽस्येति । आत्मनो नेत्यत्रैव वाक्यान्तरमाह—तीर्णो हीति । तदा सुप्तौ । ६. बृ० उ० १।५।३ । ७. बृ० उ० ३।९।२० । ८. प्रतिष्ठितानि भवन्तीति शेषः । ९. बृ० उ० ४।३।७ । १०. लिङ्गापगमेऽपि । ११. जीवाश्रयत्वं चेत्यपि द्रष्टव्यम् । १२. अविद्यासंसारयोः । १३. अविद्याया परनिष्ठत्वाच्च । १४. परस्येति शेषः । १५. मुक्तिः । १६. समूलनाशायोगात् कारणं हि मूलम् । १७. कार्याविद्यानाश इति—परमात्मकार्यभूताया अविद्याया अत्यन्तनाशेऽभ्युपगम्यमानेऽविद्याकारणस्य परस्याभाव एव स्यात् कार्यात्यन्तनाशस्य समूलोच्छेदरूपत्वादिति । १८. पराभावाभ्युपगमे च । १९. परस्य । २०. मोक्षेति—निरात्मवादप्रसक्तिश्चेत्यपि द्रष्टव्यम् । न च परोत्थाविद्याया जीवाश्रयत्वमिति वाच्यं कारणमतिक्रम्य कार्यस्यान्यत्रावृत्तेरित्युक्तत्वात् ।

'कामा[1] येऽस्य हृदि श्रितास्तीर्णो'[2] हि तदा सर्वाञ्शोकान्हृदयस्येत्याद्याः ।

न चाऽऽसां श्रुतीनां[3] श्रुतादर्थान्तरकल्पना न्याय्या । आत्मनः परब्रह्मत्वोपपादनार्थपरत्वादासामेतावन्मात्रार्थोपक्षयत्वाच्च सर्वोपनिषदाम् । तस्माच्छ्रुत्यर्थकल्पनाऽकुशलाः 'सर्व[4] एवोपनिषदर्थमन्यथा कुर्वन्ति 'तथाऽपि[5] वेदार्थश्चेत्स्यात्कामं 'भवतु[6] न मे द्वेषः ।

न च द्वे 'वाव[7] ब्रह्मणो रूपे इति राशित्रयपक्षे समञ्जसम् । यदा तु मूर्तामूर्ते

---

'ननु[8] जीवे समवायिकारणे मन सयोगादसमवायिकारणात्कामाद्युत्पत्तिरित्युदाहृतश्रुतिषु विवक्ष्यते तत्राऽऽह—न चाऽऽसामिति । 'दृश्यमानससारमौपाधिकमभिधाय[9] जीवस्य ब्रह्मत्वोपपादने तात्पर्यं श्रुतीनामुपक्रमोपसहारैकरूप्यादिभ्यो गम्यते तन्नार्थान्तरकल्पनेत्यर्थ । ''इतश्च[10] यथोक्तश्रुतीना नार्थान्तरकल्पनेत्याह—एतावन्मात्रेति । सर्वासामुपनिषदामेकरसेऽर्थे ''पर्यवसान[11] ''फलवत्वादिलिङ्गेभ्यो[12] गम्यते तत्कथमुक्तश्रुतीनामर्थान्तरकल्पनेत्यर्थ । ननूपनिषदामैं''क्यादर्थान्तरमपि[13] प्रतिपाद्य ''व्याख्यातारो[14] वर्णयन्ति तत्कथमर्थान्तरकल्पनानुपपत्तिरत आह—तस्मादिति । सर्वोपनिषदामैक्यपरत्वप्रतिभासस्तच्छब्दार्थ । ननु परैरुच्यमानोऽपि वेदार्थो भवत्येव किमित्यसौ द्वेषादेव त्यज्यते तत्राऽऽह—तथाऽपीति । न चार्थान्तरस्य वेदार्थत्व ''तत्र[15] तात्पर्यलिङ्गाभावादिति भाव ।

लिङ्गवियोगेऽपि पुसि वासनाऽस्तीत्येतन्निराकृत्य राशित्रयकल्पना निराकरोति—न चेति । कथ सिद्धान्तेऽपि वावशब्दादिसामञ्जस्य तत्राऽऽह—यदेति । राशित्रयपक्षे जीवस्य रूपमध्येऽन्तर्भावे

---

मूल से नष्ट हो जानी है तब वह मरणशील पुरुष अमर हो जाता है और इस वर्तमान शरीर मे ही वह ब्रह्म को प्राप्त कर लेता है", 'उस समय यह पुरुष पुण्य से असबद्ध तथा पाप से भी सम्बन्धरहित हो जाता है ।"

इन श्रुतिवाक्यो मे श्रुतार्थ छोडकर किसी दूसरे अर्थ की कल्पना करनी उचित नही है क्योकि इन (श्रुतिवाक्यो) का प्रयोजन परब्रह्मरूप तात्पर्यबोध कराने मे है और इसी अर्थप्रतिपादन मे सभी उपनिषदो का उपसहार होता है । इसलिए श्रुति के अर्थ की कल्पना करने मे कुशल ये सभी वादी उपनिषत् का अर्थ उलटा कर देते हैं । ब्रह्मात्मैक्यरूप अर्थ से विरुद्ध अर्थ होने पर भी यदि वेद का अर्थ हो, तो रहे, इसमे हमे कोई आपत्ति नही है ।

किन्तु (वेदान्तैकदेशी के मत मे) राशित्रय पक्ष मे 'ये ही ब्रह्म के दो रूप हैं" ऐसा कहना ठीक नही है । जबकि वासनापूर्वक मूर्त और अमूर्त दो रूप हो और रूपी ब्रह्म तीसरा रूप हो, और इसके बीच मे कोई चौथा रूप न हो उसी समय ऐसा निश्चय करना ठीक होगा कि ब्रह्म के दो ही रूप हैं । अन्यथा राशित्रय स्वीकार कर लेन पर ब्रह्म कदेश जीवात्मा के रूप हैं, अथवा जीवात्मा द्वारा

---

१ बृ उ ४।४।७ । २ बृ० उ० ४।३।२२ । ३ अर्थात । ४ सर्वोपनिषदिति पाठ । ५ परोक्तैक्यार्थविरोध्यर्थोऽपि । ६ तिष्ठतु । ७ एव । ८ उक्तश्रुतिस्थमनोहृदयादिशब्दैरात्मैवोच्यतेऽतो मन सयोगादात्मनि कामादितन्मात्रविवक्षितमिति शङ्कते नैयायिको नन्विति । ९ जीवे । १० सर्वासा श्रुतीना प्रतीचो ब्रह्मत्वप्रमितिदीपरत्वाच्च । ११ तात्पर्यम् । १२ फलाख्यलिङ्गेभ्य इति भाव । १३ अर्थात् । १४ नैयायिकादय । १५ अर्थान्तरे ।

'तज्जनितवासनाश्च ।मूर्तामूर्ते एव द्वे रूपे ब्रह्म च रूपि तृतीयं न चान्यत्तुर्यमन्तराले तदेतदनुकूलमवधारणं द्वे एव ब्रह्मणो रूपे इति । 'अन्यथा ब्रह्मैकदेशस्य विज्ञानात्मनो रूपे इति 'कल्प्यं परमात्मनो वा विज्ञानात्मद्वारेणेति । तदा 'च रूपे एवेति द्विवचनम-समञ्जसम्' । रूपाणीति वासनाभिः सह बहुवचनं युक्ततरं स्यात् । द्वे च मूर्तामूर्ते वासनाश्च तृतीयमिति ।'

अथ मूर्तामूर्ते एव परमात्मनो रूपे वासनास्तु 'विज्ञानात्मन इति चेत् । 'तदाऽपि विज्ञानात्मद्वारेण विक्रियमाणस्य परमात्मन इतीय' "वाचोयुक्तिरनर्थिका स्यात् । "वास-नाया अपि विज्ञानात्मद्वारत्वस्या"विशिष्टत्वात् । न च वस्तु वस्त्वन्तरद्वारेण विक्रियत

---

निषेध्यकोटिनिवेशः स्याद्रूपिमध्येऽन्तर्भावे "श्रुतिः शिक्षणीयेत्याह—अन्यथेति । भवत्वेव श्रुतेः शिक्षेति तत्राऽऽह—तदेति । "रूपिमध्ये जीवान्तर्भावकल्पनायामिति यावत् ।

"विषयभेदेनोपक्रमाविरोध" चोदयति—अथेति । इत्थं व्यवस्थायां जीवद्वारा विक्रियमाणस्य परस्य रूपे मूर्तामूर्ते "इत्युक्तिरयुक्ता" वासनाधर्मादेरपि "तद्द्वारा "तत्र संबन्धा"विशेषादिति दूषयति-तदेति । "विज्ञानात्मद्वारा परस्य विक्रियमाणत्वमङ्गीकृत्योक्त" तदेव नास्तीत्याह—न चेति ।

---

परमात्मा के दो रूप हैं, ऐसा श्रुति द्वारा कहना चाहिए। उस समय भी 'रूपे' यह द्विवचनान्त प्रयोग अयुक्त होगा । वासनात्मक तृतीय रूप होने के कारण "रूपाणि" ऐसा बहुवचनान्त प्रयोग करना अधिक उपयुक्त होगा अर्थात् मूर्तामूर्त दो रूप हैं और तीसरा वासनात्मक रूप है।

यदि कहा मूर्त और अमूर्त, ये परमात्मा के दो ही रूप हैं, वासनाएँ तो जीवात्मा की है। इस प्रकार स्वीकार कर लेने पर भी ऐसी वाक्योक्ति कहना कि ये जीवात्मा के द्वारा विकार को प्राप्त हुए परमात्मा के रूप है, व्यर्थ ही होगा क्योंकि जीवात्मा का द्वारत्व मूर्त और अमूर्त के तुल्य होने के कारण (कर्मादि) वासना का भी उपलक्षण है। इसके अतिरिक्त एक वस्तु किसी अन्य वस्तु के द्वारा विकार को प्राप्त होती है, ऐसी कल्पना मुख्यावृत्ति से नहीं की जा सकती। एवं जीवात्मा परमात्मा से कोई भिन्न वस्तु भी नहीं है क्योंकि ऐसी कल्पना करने मे अद्वैतवेदान्त सिद्धान्त मे दोष आता है । अनेक न्यायों से विरोध होने के कारण वेदार्थज्ञान न होने वाले उन पुरुषों को ऐसी मनमानी कल्पना करना अक्षरवाह्य है। अक्षरवाह्य वेदार्थ अथवा वेदार्थ मे उपयोगी नही हो सकता क्योंकि वेद प्रामाण्य-

---

१ तज्जनितेति—यदा तु सवासने मूर्तामूर्ते द्वे एव रूपे इत्यर्थः । २ रानिमयाभ्युपगमे । ३ श्रुत्या वक्तव्यम् । ४ अपि । ५ अयुक्तम् । ६ नसमञ्जसमिति—वासनात्मकतृतीयरूपस्य सत्त्वादिति भाव । तदेवाह—रूपाणीति । ७ जीवस्य । ८ इत्थं व्यवस्थास्वीकारेऽपि । ९ ते । १० वाक्योक्ति । ११ कर्माद्युपलक्षणम् १२ मूर्तामूर्ताभ्यां तुल्यत्वात् । १३ इत्थं त्वया वक्तव्यमासीदिति सा शिक्षणीया स्यात् । १४ ब्रह्मात्मकरूपिमध्ये । १५ रूपवासनयोराश्रयभेदेन । १६ द्विवचनाद्यविरोधमिति पाठ । । १७ त्वदीया । १८ स्यात् । १९ जीवद्वारा । २० परमात्मनि । २१ मूर्तामूर्ताभ्याम् । २२ अस्तु तर्हि जीवात्मना परिणतस्य परस्य वासनामयमपि रूपमित्याशङ्क्याऽऽह—विज्ञानात्मद्वारेति । २३ प्राक्तनमस्मामि ।

इति मुख्यया वृत्त्या शक्यं कल्पयितुम्। न च विज्ञानात्मा परमात्मनो वस्त्वन्तरम्। तथा कल्पनायां सिद्धान्तहानात्। [1]तस्माद्वेदार्थमूढानां स्वचित्तप्रभवा एवमादिकल्पना अक्षरबाह्याः। न ह्यक्षरबाह्यो वेदार्थो वेदार्थोपकारो वा। निरपेक्षत्वाद्वेदस्य प्रामाण्यं प्रति। [2]तस्माद्राशित्रयकल्पनाऽसमञ्जसा।

योऽयं दक्षिणेऽक्षन्पुरुष इति [3]लिङ्गात्मा प्रस्तुतोऽध्यात्मेऽधिदैवे च य एष एतस्मिन्मण्डले पुरुष इति तस्येति प्रकृतोपादानात्स एवोपादीयते योऽसौ त्यस्यामूर्तस्य रसो न तु [6]विज्ञानमयः। ननु विज्ञानमयस्यैवैतानि रूपाणि कस्मान्न भवन्ति विज्ञानमयस्यापि

तथाभूतस्यान्यथाभूतस्य[7] च विक्रियाया [8]दुरुपपादत्वादित्यर्थः। किञ्च जीवस्य ब्रह्मणो वस्त्वन्तरत्वमात्यन्तिकम्[9]नात्यन्तिकं वा नाऽऽद्य इत्याह—न चेति। न द्वितीयो [10]भेदाभेदनिरासादिति द्रष्टव्यम्। परपक्षदूषणमुपसंहरति—तस्मादिति। एवमादिकल्पना राशित्रय जीवस्य कामाद्याश्रयत्वमित्याद्याः। अक्षरबाह्यत्वे फलितमाह—न हीति। वेदार्थोपकारित्वाभावे हेतुमाह—निरपेक्षत्वादिति। वेदार्थत्वाद्यभावे सिद्धमर्थं कथयति—तस्मादिति।

तस्य हेत्वन्तरं परकीयप्रक्रियां प्रत्याख्याय स्वमते तच्छब्दार्थमाह—योऽयमिति। प्रकृतत्वाल्लिङ्गात्मग्रहे जीवस्यापि पाणिपेषवाक्ये *[11]तद्भावात्तस्यैवात्र तच्छब्देन ग्रहः स्यादिति* शङ्कते—नन्विति। प्रकृतत्वेऽपि तस्य निर्विशेषब्रह्मत्वेन ज्ञापयितुमिष्टत्वान्न वासनामयं संसाररूपं[13] तस्वतो

निरपेक्ष है। इसलिए अक्षरबाह्य होने के कारण राशित्रयकल्पना अयुक्त ही है।

"यह जो दायें नेत्र के अन्तर्गत पुरुष है" इस श्रुतिवाक्य द्वारा प्रकृत अध्यात्मप्रकरण में लिङ्गात्मा (अन्तःकरण) का वर्णन किया गया है तथा अधिदेवप्रकरण में "यह जो इस आदित्यमण्डल में पुरुष है" इस प्रकार 'तस्य' पद से लिङ्गात्मा अन्तःकरण का अवलम्बित्व होने के कारण यह अमूर्त 'त्यत्' का सार है, जीव का नहीं, उसी का उपादान किया गया है। (इस पर पूर्ववादी कहता है—) यहाँ तो जीवात्मा का ही प्रकरण है, इसलिए ये जीवात्मा के ही रूप क्यों नहीं होते क्योंकि 'तस्य' इस पद से तो जीव का ही ग्रहण किया गया है? (इस पर सिद्धान्तवादी कहता है—)

१. अनेकन्यायविरोधात्। २ अक्षरबाह्यत्वात्। ३ अन्तःकरणमिति यावत्। ४ अस्य। ५ अवलम्बित्वात्। ६ जीव। ७ "यथापूर्वमवस्थितं विक्रियते चेति व्याहतम्। अन्यथाभूतं विक्रियते तदा नासौ तद्विकार"इति। ८ दुरुपपादत्वादिति—न हि तथाभूतं परिणामत्वे नाभिमतवस्त्वभिन्नं यद्वस्तु तत्तदात्मना परिणमतेऽत्यन्ताभेदे परिणामपरिणामिभावस्य विरुद्धत्वात्। अन्यथाभूतं परिणामत्वेनाभिमतवस्तुभिन्नं वस्त्वपि तदात्मना न परिणमते मृदादेरपि दध्याद्यात्मना परिणत्यापत्त्याऽव्यवस्थापत्तेः। यद्वा तथाभूतं कूटस्थं वस्तु न परिणमते कूटस्थत्वविरोधात्। *अन्यथाभूतमकूटस्थं वस्तु तदपि न परिणमत परिणामस्यापि* परिणामापत्त्या घटाद्घटान्तरं तस्मादपि तदन्तरमित्यनवस्थापत्तेरिति भावः। ९ आत्यन्तिकत्वमभेदव्यधिकरणत्वम्। १०. अभेदसमानाधिकरणत्वं चानात्यन्तिकत्वम्। ११ एकस्यैकत्र भेदाभेदयोर्विरुद्धत्वेन निरस्तत्वादित्यर्थः। १२. प्रकृतत्वात्। १३. तस्य।

प्रकृतत्वात्तस्येति च प्रकृतोपादानात् । नैवम्, विज्ञानमयस्या[1]रूपित्वेन विजिज्ञापयिषित-त्वात् । यदि हि तस्यैव विज्ञानमयस्यैतानि माहारजनादीनि रूपाणि स्युस्तस्यैव नेति [2]नेतीत्यनाख्येयरूपतया[3]ऽऽदेशो न स्यात् ।

नन्वन्यस्यैवासावादेशो[4] न तु विज्ञानमयस्येति । न । षष्ठान्त उपसंहारा[5]द्विज्ञातारमरे केन विजानीयादिति विज्ञानमयं प्रस्तुत्य स एष नेति नेतीति विज्ञपयिष्यामीति च प्रतिज्ञाया अर्थवत्त्वात् । यदि च विज्ञानमयस्यैवा[6]सव्यवहार्यमात्मस्वरूपं [7]ज्ञापयितुमिष्टं स्यात्प्रध्वस्तसर्वोपाधिविशेषं तत इयं प्रतिज्ञाऽर्थवती स्यात् । [8]येनासौ ज्ञापितो जाना-त्यात्मानमेवाह ब्रह्मास्मीति [9]शास्त्रनिष्ठां प्राप्नोति न बिभेति कुतश्चनेति[10] । अथ पुनरन्यो

पुक्तमिति परिहरति—नैवमिति । इतश्च जीवस्य न वासना[1]रूपिता किंतु चित्तस्येत्याह—यदि हीति । निषेध्यकोटिप्रवेशादिति भाव ।

नाथ जीवस्याऽऽदेश[2] किंतु ब्रह्मण[3]स्तटस्थस्येति शङ्कयित्वा दूषयति—नन्वित्यादिना । [11]षष्ठावसाने विज्ञातारमरे केनेत्यात्मानमुपक्रम्य स एष नेति नेत्यात्मेत्वात्मशब्दा[12]त्तस्यैवाऽऽदेशोपसंहा-रादिहापि तस्यैवाऽऽदेशो न तटस्थस्येत्यर्थः । इतश्च प्रत्यगर्थस्यैवायमादेश इत्याह—विज्ञपयिष्यामीति । [13]तदेव समर्थयते—यदीति । कथमेतावता[14] प्रतिज्ञार्थवत्त्वं तदाह—येनेति । ज्ञानफलं कथयति—शास्त्रेति । अन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेन(ण) साधयति—अथेत्यादिना । विपर्यये गृहीते

ऐसा कहना ठीक नहीं है क्योंकि जीवात्मा को (निर्विशेष ब्रह्मरूप से) अरूपी बतलाना इष्ट है । यदि ये माहारजनादि रूप उस जीवात्मा के ही हो, तो उसका 'नेति नेति' इस प्रकार निषेधाधिष्ठानरूप उपदेश नहीं किया जा सकता ।

(इस पर पूर्वपक्षी कहता है—) यह निषेध अवधि द्वारा उपदेश तो किसी दूसरे का ही है, जीवात्मा का तो नहीं है । (सिद्धान्ती उक्त आक्षेप का समाधान करता है—) ऐसा कहना ठीक नहीं क्योंकि "हे मैत्रेयी ! विज्ञाता को किससे जाने" ? इस प्रकार विज्ञानात्मरूप का उपक्रम करके छठे अध्याय के अन्त में "वह आत्मा ऐसा नहीं है, ऐसा भी नहीं है" इस प्रकार निषेधाधिष्ठान मुख से उपसंहार किया है । ऐसा अर्थ स्वीकार कर लेने पर ही "विशेषरूप से ज्ञान कराऊँगा" इस प्रतिज्ञा की सार्थकता भी सिद्ध हो जाती है । यदि यहाँ विज्ञानात्मा के शब्दप्रत्यय से अगोचर सर्वोपाध्यतीत आत्मस्वरूप का ज्ञान करना अभीष्ट होगा, तभी यह प्रतिज्ञा सार्थक कही

१ निर्विशेषब्रह्मरूपत्वेन । २ निषधाधिष्ठानतया । ३ निर्देश उपदेश । ४ निषेधावधितयोपदेश । ५ बृ० उ० ४।५।१५ । ६ शब्दप्रत्ययागोचरम् । ७ हेतुना उक्तात्मस्वरूपेण या विज्ञानात्मा । ८ शास्त्रप्रतिपाद्या स्वरूपावस्थितिम् । ९. इति प्रतिज्ञाया अर्थवत्त्वमिति शेष । १० धर्मिता । ११ जीवभिन्नस्य । १२ यथापूर्वमैत्रेयीब्राह्मणान्ते (बृ० उ० २।४।१४) "यनेद सर्वं विजानाति त केन विजानीयात्" 'विज्ञातारमरे केन विजानीयादिति'नयोर्वाक्ययोरव्यवधान तद्वत् षष्ठान्तेऽपि तयोर्व्याख्यानव्याख्येयभावे-नैकार्थ्यादपक्रमेणाव्यवधानमवाश्रित्याऽऽह—षष्ठावसान इत्यादि । १३ विज्ञानमयस्यैव । १४. प्रतिज्ञाया अर्थवत्त्वमेव । १५ यथोक्तविज्ञानात्मस्वरूपप्रतिपादनमात्रेण ।

विज्ञानमयोऽन्यो नेति नेतीति व्यपदिश्यते तदाऽन्यदसौ[1] ब्रह्मान्योऽहमस्मीति [2]विपर्ययो गृहीतः स्यात् । [3]नाऽऽत्मानमेवावेदह ब्रह्मास्मीति । [4]तस्मात्तस्य हैतस्येति लिङ्गपुरुषस्यैवंतानि रूपाणि ।

[5]सत्यस्य च [6]सत्ये परमात्मस्वरूपे वक्तव्ये [7]निरवशेषं सत्यं वक्तव्यम् । [8]सत्यस्य च विशेषरूपाणि वासनास्तासामिमानि रूपाण्युच्यन्ते । एतस्य पुरुषस्य प्रकृतस्य [9]लिङ्गात्मन

---

ब्रह्मकण्डिकाविरोधं दर्शयति—नाऽऽत्मानमिति । तच्छब्देन जीवपरामर्शासंभवे फलितमाह—तस्मादिति ।

ननु लिङ्गस्य चेदेतानि रूपाणि किमित्युपन्यस्यन्ते परमात्मस्वरूपस्यैव वक्तव्यत्वादत[10] आह—सत्यस्य चेति । [11]इन्द्रगोपोपमानेन कौसुम्भस्य [12]गतत्वान्महारजनं हरिद्रेति व्याख्यातम् । [13]तत्र

---

जायगी । जिस आत्मस्वरूप के ज्ञान से यह विज्ञानात्मा ज्ञान कराये जाने पर अपने को "मैं ब्रह्म हूँ" इस प्रकार शास्त्रप्रतिपाद्य स्वरूपस्थिति को प्राप्त करता है, ऐसा जीव किसी से भी भय को प्राप्त नहीं करता । एवं यदि विज्ञानात्मा कोई अन्य हो तथा 'नेति नेति' इस निषेधाधिष्ठान वाक्य से किसी अन्य का उपदेश किया गया हो तो ऐसी स्थिति में "यह परोक्ष ब्रह्म अन्य है और मैं अन्य हूँ" ऐसे विपरीतप्रत्यय का अभ्युपगम होने लगेगा । ऐसा अभ्युपगम नहीं होगा "अपने को जाना, मैं ही ब्रह्म हूँ" । जीव के ब्रह्म से अभिन्न एवं वासनारूपित्व योग न होने से इस प्रकार आधिदैविक और आध्यात्मिक प्रकृत लिङ्गपुरुष मन के ही रूप हैं ।

षष्ठ्यन्त सत्यशब्द के प्रथमान्त सत्यशब्दित परमात्मा में उपदेश करने पर समस्त द्विविध सत्यों को बतलाना है । षष्ठ्यन्त सत्यशब्दित लिङ्ग के विशेषरूप वासनाएँ हैं उनके ये रूप कहे जाते हैं । ये इस प्रकृत लिङ्गात्मा पुरुष अन्तःकरण के ही रूप हैं । वे रूप कौन-से हैं ? सो बतलाया जाता है ।

---

१ परोक्षम् । २ विपरीतप्रत्ययोऽभ्युपेतः स्यात् । ३ अन्या जीवोऽन्यश्चाऽऽदित्यमार ब्रह्मेति विपर्यये गृहीते तदाऽऽत्मानमेवावेदह ब्रह्मास्मीति ब्रह्मकण्डिकाविरोधं दोषान्तरमाह—नेति । तदुक्तं वार्तिके—"न स्यादात्मानमेवावेदहं ब्रह्मेतिमानता । सम्यग्धीनिर्निमित्ताऽनघानिनी मुक्तिदायिनीति" ॥१५७॥ ४ तस्मादिति—जीवस्य ब्रह्माभिन्नत्वात् वासनारूपित्वायोगाच्चेत्यर्थः । तस्य आधिदैविकस्य । एतस्य आध्यात्मिकस्य प्रकृतस्य लिङ्गपुरुषस्य मनस इत्यर्थः । लिङ्गस्य कर्तृत्वादिवासनारूपित्वे स्वप्नात्मनि तद्भानमिति चेन्न् स्वाभाराभ्रमदोषेणेति गृहाण स्वस्यात्मन आभासो यत्रेत्यविद्यास्तित्तस्त्प्रयुक्तभ्रमदोषेणेत्यर्थः । यद्वा स्वस्य वा वासनावति लिङ्गेऽन्तःकरणे प्रतिबिम्बस्तत्राहत्वभ्रमेणेत्यर्थः । यद्वा सवासनलिङ्गसंनिहिते स्वस्मिन्स्फटिकोपमे यो वासनानामाभासः प्रतिफलनं तत्प्रयुक्तभ्रमेत्यर्थः । तदुक्तम्—"वासना भूरिरूपास्ता लिङ्गस्था लिङ्गवासिनः । कुर्वन्ति बहुरूपत्वं मणेरास्तरणं यथेति" ॥१५६॥ आस्तरणं कुथः । अत्र तु नीलपीताद्युपलक्षणम् । ५ षष्ठ्यन्तसत्यशब्दितस्य । ६ प्रथमान्तसत्यशब्दिते परमात्मनि । ७ निरवशेषम्—निखिलं द्वयमपि सत्यमिति यावत् । ८ षष्ठ्यन्तसत्यशब्दितस्य लिङ्गस्य । ९. अन्तःकरणस्य । १०. वेदान्तैर्मुमुक्षुभ्य इति शेषः । ११. ननु कुसुम्भे तच्छब्दस्य प्रसिद्धत्वात्तस्यात्र ग्रहणं किं न स्यात् । तदुक्तम्—"स्यात्कुसुम्भं वहिशिखं महारजनमित्यपी"त्यमराद्भाष्यहेन्द्रेति । १२ अनयोस्तुल्यरूपत्वादिति भावः । १३ चित्तस्य रञ्जनाकारत्वे ।

एतानि रूपाणि । कानि तानीत्युच्यन्ते—यथा लोके महारजनं हरिद्रा तया रक्तं माहारंजनं यथा वासो लोके । एवं [1]स्त्र्यादिविषयसंयोगे [2]तादृशं वासनारूपं [3]रञ्जनाकारमुत्पद्यते चित्तस्य । [4]येनासौ पुरुषो रक्त इत्युच्यते वस्त्रादिवत् । यथा च लोके पाण्ड्वाविकम् । अवेरिदमाविकमूर्णादि । यथा च तत्[5]पाण्डुरं भवति तथाऽन्यद्वासनारूपम् । यथा च लोक इन्द्रगोपोऽत्यन्तरक्तो भवत्येवमस्य[6] वासनारूपम् । [7]क्वचिद्विषयविशेषापेक्षया रागस्य तारतम्यं क्वचित्पुरुषचित्तवृत्त्यपेक्षया । यथा च लोकेऽग्न्यर्चिर्भास्वरं भवति तथा [8]क्वचि[9]त्कस्यचिद्वासनारूपं भवति [10]। यथा पुण्डरीकं शुक्लं तद्वदपि च वासनारूपं कस्यचिद्भवति । यथा सकृद्विद्युत्तं यथा लोके सकृद्विद्योतनं [11]सर्वतः प्रकाशकं भवति तथा ज्ञानप्रकाश[12]विवृद्धयपेक्षया [13]कस्यचिद्वासनारूपमु[14]पजायते ।

---

लोकप्रसिद्धि दर्शयति—येनेति । ऊर्णादीत्याविपदं कम्बलादिग्रहार्थम् । मनसि वासनार्वचित्र्ये किं कारणमिति तदाह—क्वचिदिति । चित्तवृत्तिशब्देन "सत्त्वा"दिगुणपरिणामो विवक्षितः ।

---

जिस प्रकार लोकव्यवहार में महारजन यानी हल्दी से रँगे हुए वस्त्र को माहारजन वस्त्र कहते हैं, उसी प्रकार स्त्री आदि विषय के संयोग से माहारजन वस्त्र की तरह चित्त की वैसी ही रागात्मक वासनारूप वृत्ति उत्पन्न होती है। जिस रँगने से यह पुरुष भी वस्त्रादि के समान रक्त कहा जाता है। "यथा पाण्ड्वाविकम्" यानी जिस प्रकार लोकव्यवहार में सफेद ऊन होती है। जो भेड़ का विकार हो, उस ऊन आदि को आविक कहते हैं। जिस प्रकार वह (पीति से रहित) शुक्लवर्ण की होती है; उसी प्रकार अन्य वासना का रूप होती है। 'यथेन्द्रगोप" यानी जिस प्रकार लोक में इन्द्रगोप नामक कीट अत्यन्त रक्तवर्ण का होता है उसी प्रकार लिङ्गात्मा अन्त करण का वासनामय रूप है। यहाँ अन्तःकरण में कहीं तो विषय विशेष की अपेक्षा राग का तारतम्य है और कहीं पुरुष की चित्तवृत्ति को लेकर है। "यथाग्न्यर्चि' अथवा जिस प्रकार लोक में अग्नि की शिखा प्रकाशयुक्त रहती है; उसी प्रकार कहीं-कहीं विषयों में मन की वासनाओं का भी रूप होता है। "यथा पुण्डरीकम्" यानी जिस प्रकार पुण्डरीक शुक्लवर्ण का होता है, उसी प्रकार किसी की (मन की) वासनाओं का रूप होता है। "यथा सकृद्विद्युतम्" यानी जिस प्रकार लोकव्यवहार में एकदम बिजली चमकने से सर्वत्र प्रकाश हो जाता है, उसी प्रकार ज्ञानस्वरूप प्रकाशातिशय की अपेक्षा से किसी हिरण्यगर्भादि की वासना का रूप (एक बार ही सब ओर प्रकाशित हो जाने से) उत्पन्न हो जाता है।

वासना के उक्त रूपों के आदि, अन्त, मध्य संख्या अथवा देश, काल या निमित्त निर्धारित नहीं

---

१ निमित्तमाह—स्त्रीति । २. माहारजनवस्त्रोपमम् । ३. रागात्मकम् । ४. रञ्जनेन । ५. पीतिमभिन्नशुक्लम् । ६ लिङ्गस्य । ७. मनसि । ८. विषये । ९. मनस । १०. अत्यन्तभासुरमस्मदीयचक्षुषस्तद्विषये प्रवृत्तिप्रतिबन्धकम् । ११. अतिशयेति भावः । १२. हिरण्यगर्भादि. । १३. सकृदेव सर्वत. प्रद्योतमानमुदगच्छतीत्यर्थ. । १४. सत्त्वादीति । तदुक्त वार्तिके—"रजसः क्वचिदुद्रेकस्तमसः क्वचिदिष्यते । सत्त्वस्यापि मयोत्कर्षः कुतश्चिदुपजायते" ॥१६३॥ इति । क्वचित् मनसि । १५. गुणवैचित्र्यमिति यावत् ।

'व्यक्ति'र्भवतीति तदीयं वासनारूपं हिरण्यगर्भस्य यो वेद तस्य सकृद्विद्युत्तेव। ह वा इत्यवधारणार्थौ। एवमेवास्य श्रीः 'ख्यातिर्भवतीत्यर्थः। यथा हिरण्यगर्भस्यैवमेतद्यथोक्तं वासनारूपमन्त्यं यो वेद।

एवं 'निरवशेषं 'सत्यस्य स्वरूपमभिधाय यत्तत्सत्यस्य सत्यमवोचाम तस्यैव स्वरूपावधारणार्थं ब्रह्मण 'इदमारभ्यते—अथानन्तरं सत्यस्य स्वरूपनिर्देशानन्तरं यत्सत्यस्य सत्यं 'तदेवावशिष्यते यस्मादतस्तस्मात्सत्यस्य' सत्यं 'स्वरूपं निर्देक्ष्यामः। आदेशो "निर्देशो ब्रह्मणः। कः पुनरसौ निर्देश इत्युच्यते—नेति नेतीत्येष निर्देशः।

ननु कथमाभ्यां नेति नेतीति शब्दाभ्यां सत्यस्य "सत्यं निर्दिदिक्षितमिति। उच्यते—सर्वोपाधिविशेषा"पोहेन। यस्मिन्न कश्चिद्विशेषोऽस्ति नाम वा रूपं वा कर्म

---

"तदेव स्फुटयति—यथेत्यादिना।

"वृत्तमनूद्यानन्तरग्रन्थमवतारयति—एवमित्यादिना। तस्यैव ब्रह्मण इति संबन्धः। कस्मादनन्तरमित्युक्ते "तद्रूपयन्नत शब्द" चापेक्षित पूरयन्व्याकरोति—सत्यस्येति।

यथोक्तादेशस्याभाव"पर्यवसायित्वं मन्वानः शङ्कते—नन्विति। "निरवधिकनिषेधासिद्धे"स्तदवधित्वेन सत्यस्य सत्यं ब्रह्म निर्देष्टुमिष्टमिति परिहरति—उच्यत इति। ब्रह्मणो विधिमुखेन निर्देशे सभाव्यमाने किमिति निषेधमुखेन तन्निर्दिश्यते तत्राऽऽह—यस्मिन्निति। तद्विधिमुखेन निर्देष्टुमशक्यमिति

---

यानी ख्याति हिरण्यगर्भ के समान हो जाती है।

इस प्रकार निःशेष उपकरणसहित सत्यशब्द के अर्थ की स्वरूपाभिव्यक्ति कर जिसे पहले 'सत्य का सत्य' कह आये हैं। उसी ब्रह्म के स्वरूप का निर्णय करने के लिए यह आदेशवाक्य प्रारम्भ किया जाता है। "अथ" यानी इसके बाद अर्थात् सत्य के स्वरूप का उपदेश करने के पश्चात् जो 'सत्य का सत्य' है, वही अवशिष्ट रह जाता है। इसलिए षष्ठयन्त अर्थ वाले 'सत्य के सत्य' पारमार्थिक स्वरूप का उपदेश करेंगे। "आदेश" यानी ब्रह्म का उपदेश। पर वह उपदेश क्या है। इस पर बतलाया जाता है—'नेति-नेति'। इस प्रकार किया हुआ उपदेश ही आदेश है।

किन्तु 'नेति-नेति' इन दो शब्दों द्वारा 'सत्य के सत्य' यानी ब्रह्म वस्तु का उपदेश करना किस प्रकार इष्ट है? इस पर बतलाया जाता है। समस्त उपाधिरूप विशेषरूप के निरास के द्वारा

---

१ व्यक्तिरिति—हिरण्यगर्भस्य तद्वासनारूप व्यक्ति। सर्वस्य वस्तुजातस्याश्रयभूत विद्युद्विद्योतनमिव सकृदेवोत्पद्यत इत्यन्वयमुखेनार्थः। २ उत्पद्यते। ३ ख्यातिरिति—दृष्टमुपास्तिफलमिदम्। अदृष्टं तु तथा यथेत्यादि शास्त्रीयमेवेति ध्येयम्। ४ निःशेषम् सोपकरणम्। ५ षष्ठ्यन्तसत्यशब्दार्थस्य। ६ आदेशवाक्यमित्यर्थः। ७ ब्रह्मातिरिक्तो नान्यद्यतो वस्त्ववशिष्यते। ८ षष्ठ्यन्तार्थस्य। ९ पारमार्थिक स्वरूपमित्यर्थः तस्य सत्यमिति यावत्। १० उपदेश। ११ ब्रह्मवस्तु। १२ निरासेन। १३ ख्यातिभवनमेव। १४ आशिशुब्राह्मणादावादेशादिति शेष। १५ आनन्तर्यावधिम्। १६ अनन्तरशब्दव्याख्याने। १७ तत्तात्पर्यवत्त्वम्। १८ निरधिष्ठानत्वेति भाव। १९ निषेधावधित्वेनत्यर्थ।

वा भेदो वा जातिर्वा गुणो वा । तद्द्वारेण हि शब्दप्रवृत्तिर्भवति । न चैषां कश्चिद्विशेषो ब्रह्मण्यस्ति । अतो न निर्देष्टुं शक्यत इदं तदिति । गौरसौ स्पन्दते शुक्लो विषाणीति यथा लोके निर्दिश्यते तथा । अध्यारोपितनामरूपकर्मद्वारेण ब्रह्म निर्दिश्यते विज्ञानमानन्दं

विज्ञानघन एव ब्रह्माऽऽत्मेत्येवमादिशब्दैः । यदा पुनः स्वरूपमेव निर्दिदिक्षितं भवति निरस्तसर्वोपाधिविशेषं तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुम् । तदाऽयमेवाभ्युपायो यदुत प्राप्तनिर्देशप्रतिषेधद्वारेण नेति नेतीति निर्देशः ।

---

शेषः । नामरूपाद्यभावेऽपि ब्रह्मणि शब्दप्रवृत्तिमाशङ्क्याऽऽह—तद्द्वारेणेति । जात्यादीनामन्यतमस्य ब्रह्मण्यपि संभवात्तद्द्वारा तत्र शब्दप्रवृत्तिः स्यादिति चेन्नेत्याह—न चेति । उक्तमर्थं यथान्यं दृष्टान्तेन स्पष्टयति—गौरिति । तथा जात्याद्यभावान्न ब्रह्मणि शब्दप्रवृत्तिरस्ति शेषः । कथं तर्हि क्वचिद्विधिमुखेन ब्रह्मोपदिश्यते तत्राऽऽह—अध्यारोपितेति । विज्ञानानन्दादिवाक्येषु शबले गृहीतशक्तिभिः शब्दैर्लक्ष्यते ब्रह्मेत्यर्थः । ननु लक्षणामुपेक्ष्य साक्षादेव ब्रह्म किमिति न विवक्ष्यते तत्राऽऽह—यदा पुनरिति । निर्देष्टुं लक्षणामुपेक्ष्य साक्षादेव वक्तुमिति यावत् । तत्र शब्दप्रवृत्तिनिमित्तानां जात्यादीनामभावस्योक्तत्वादित्यर्थः । विधिमुखेन निर्देशासंभवे फलितमाह—तदेति । प्राप्तो निर्देशो यस्य विशेषस्य तत्प्रतिषेधमुखेनेति यावत् ।

---

(उपदेश करना) सभव है । जिसमे नाम, रूप, कर्म, सम्बन्ध, जाति और गुणरूप कोई भी विशेषता नही है । क्योकि शब्द की प्रवृत्ति ब्रह्म मे इन्ही के द्वारा होती है । किन्तु इनमे से कोई भी विशेषता ब्रह्म मे नही है । इसलिए "यह वह है" इस प्रकार उसका उपदेश नही किया जा सकता । जिस प्रकार लोकव्यवहार मे "(सास्नादिमान्) यह गो चेष्टा करता है, श्वेत वर्ण वाला है, विषाणयुक्त है" ऐसा कहकर निर्देश किया जाता है, उस प्रकार उस ब्रह्म का उपदेश नही किया जा सकता । कल्पित नाम, रूप और कर्म के द्वारा "ब्रह्म विज्ञानरूप है, आनन्दस्वरूप है" "विज्ञानघन ही परमात्मा है" इत्यादि शब्दो से ब्रह्म का ही उपदेश किया जाता है । किन्तु जिस समय सब प्रकार उपाधिविशेषो से रहित चिन्मात्र का ही उपदेश करना इष्ट होता है, तब तो उसका किसी भी जात्यादिशक्ति से उपदेश करना सभव नही है । विधिमुख से उपदेश करना असभव होने के कारण यह ही एक उपाय शेष रह जाता है कि भ्रान्ति से प्राप्त सम्बन्धप्रतिषेध द्वारा "यह नही है, यह नही है" इस प्रकार उसका निरूपण किया जाय ।

"नेति-नेति" श्रुति मे नकारद्वय का प्रयोग द्विरुक्ति बल से प्राप्त सर्वविषय का निषेध करने के लिए है । जो-जो प्राप्त है, उस-उसका निषेध किया जाता है । विषयत्वरूप से प्राप्त सबका निषेध

---

१. भेद. सभेद सबन्ध इति यावत् । २. मध्ये । ३. उक्तशब्दप्रवृत्तिनिमित्ताभावात् । ४. गौरसावित्यादि गौरित्यनेन गवि नाम्ना सास्नादिमत्त्वेन रूपेण गोत्वजात्या च शब्दप्रवृत्तिर्दर्शिता स्पन्दत इत्यनेन कर्मप्रयुक्ता शुक्ल इत्यनेन गुणप्रयुक्ता विषाणीत्यनेन च भेदप्रयुक्तेति द्रष्टव्यम् । ५. कल्पितेनेत्यर्थ. । ६. चिन्मात्रम् । ७. शक्त्या । ८. जात्यादिना । ९. विधिमुखेन निर्देशासभवदशायाम् । १०. विम्पनर्हत्वे । ११. अन्नत्य तस्व संक्षेपशारीरके । १२. विधिना शक्त्या वा । १३. भ्रान्त्येति शेषः । १४. सबन्ध. । १५. नामादेः ।

इदं च नकारद्वयं वीप्साव्याप्त्यर्थम् । यद्यत्प्राप्तं तत्तन्निषिध्यते । तथा च सत्यनिर्दिष्टाशङ्का ब्रह्मणः परिहृता भवति । अन्यथा हि नकारद्वयेन प्रकृतद्वयप्रतिषेधे यदन्यत्प्रकृतात्प्रतिषिद्धद्वयाद्ब्रह्म तन्न निर्दिष्टं कीदृशं तु खल्वित्याशङ्का न निवर्तिष्यते । तथा चानर्थकश्च स निर्देशः पुरुषस्य विविदिषाया अनिवर्तकत्वात् । ब्रह्म ज्ञपयिष्यामीति च वाक्यम् परिसमाप्तार्थं स्यात् । यदा तु सर्वदिक्काला दिविविदिषा निवर्तिता स्यात्सर्वो-

एव ब्रह्म निर्दिदिक्षितं चेदेकेनैव नञाऽलं कृतं द्वितीयेनेत्याशङ्क्याऽऽह—इदं चेति । वीप्सया व्याप्तिः सर्वविषयसंग्रहस्तदर्थं नकारद्वयमित्युक्तमेव व्यनक्ति—यद्यदिति । विषयत्वेन प्राप्तं सर्वं न ब्रह्मेत्युक्ते सत्यविषयः प्रत्यगात्मा ब्रह्मेत्येकत्वे शास्त्रपर्यवसानान्नैराकाङ्क्ष्यं श्रोतुः सिध्यतीत्याह—तथा चेति । इतिशब्दस्य प्रकृतपरामर्शित्वात्प्रकृतमूर्तामूर्तादेरन्यत्वे ब्रह्मणो नकारपर्यवसानं किमिति नेष्यते तत्राऽऽह—अन्यथेति । आशङ्कानिवृत्त्यभावे दोषमाह—तथा चेति । अनर्थकश्चेति चकारेण समुच्चितं दोषान्तरमाह—ब्रह्मेति । उक्तमर्थमन्वयमुखेन समर्थयते—यदा त्विति । सर्वो-

कर दिये जाने पर 'ब्रह्म का उपदेश नही होता' यह शङ्का निरस्त हो जाती है। द्वित्व के अङ्गीकार न करने पर वाक्यद्वयवर्ती नकारद्वय से प्रकृत मूर्त-अमूर्त रूप निषेध हो जाने पर प्रतिषिद्ध दो भिन्न पदार्थों से अन्य जो ब्रह्म है, उसका उपदेश नही होगा। "वह ज्ञेय या अज्ञेय, कार्य या अकार्य कैसा है" इस आक्षेप की निवृत्ति नही होगी। ब्रह्मोपदेशाभाव से प्रतिषेधद्वयनिर्देश भी अनर्थक हो जायगा

१ नकारद्वयं वीप्सेति—नेतीत्यस्य वीप्सया द्वित्वं नेति नेतीत्यक्रमेव वाक्यं वीप्साबलाच्च प्राप्तस्य सर्वविषयस्य निषेधः । वीप्सानभ्युपगमे तु वाक्यद्वयं भवेत्तथा च मूर्तादिद्वयस्यैव निषेधे तदतिरिक्तमेव किंचित्तत्सजातीयं तदभाव एव वा ब्रह्मावगम्यतेत्यादिदूषणम् । २ विषयत्वेन प्राप्तसर्वनिषेधे सति । ३ अनिर्दिष्टेति—वाङ्मनसविषयस्याशेषस्य नञ्भ्यां निषेधे तदतीतं प्रत्यङ्मात्रं ब्रह्मेत्यर्थादादिष्टम् निरवधिनिषेधायोगात् । तथा च तदनिर्दिष्टत्वाशङ्का निरस्ता भवतीत्यर्थः । ४. वीप्सानङ्गीकारे । ५ वाक्यद्वयघटकेन । ६ मूर्तामूर्तप्रतिषेधे । ७ न निर्दिष्टमिति—प्रतिषिद्धाभ्यां मूर्तामूर्ताभ्यामन्यस्य कस्यचिदुपदेशस्य तदुभयनिषेधस्य वा ब्रह्मत्वबुद्ध्यनिवारणाभावादस्यब्रह्मनिर्देशासंभव इति भावः । अतः कीदृशमित्याशङ्काऽनिवर्तनमिति । ८ भवेत् । ९ ज्ञेयमज्ञेयं वा कार्यमकार्यं वत्येवमादि । १० ब्रह्मनिर्देशाभावेन । ११ प्रतिषेधद्वयनिर्देशः । १२ प्रतिज्ञावाक्यम् । १३ अपरिसमाप्तार्थमिति—परिसमाप्तः प्राप्तो लब्धोऽर्थो यस्य तन्न स्यादित्यर्थः । यद्वा इति वाक्योक्तप्रतिज्ञाया अर्थवत्त्वं न स्यात् यद्वा परि परितः पूर्णतया सम् सम्यक् असंदिग्धविपर्यस्तमाप्तं व्याप्तं ब्रह्म अर्थो यस्य तादृशं वाक्यं न स्यात् तथा च प्रतिज्ञाहानिरूपं निग्रहस्थानमापतेदिति यावत् । १४ आदि—देश । १५ निषेधमुखेनेत्यर्थः । १६ पर्याप्तं सिद्धमिष्टमिति यावत् । १७ कृतमिति न किमपि प्रयोजनमित्यर्थः । १८ व्याप्तुमिच्छया हेतुभूतया । १९ सति अ इति च्छेदः । २० तात्पर्यग्रहादित्यर्थः । २१ वीप्सां विना स्वतन्त्रमेवास्तु वाक्यद्वयमित्यभिप्रेत्य शङ्कते—इतिशब्दस्येत्यादिना । २२ सकाशात् । २३ अन्यथेति—प्रतीकान्तरं ब्रह्मणोऽनिर्दिष्टत्वेन तद्धर्मिकभेदस्य निर्देष्टुमशक्यत्वात् (भेदग्रहे धर्मिग्रहस्य कारणत्वात्) इति भाव इति शेषो द्रष्टव्यः । २४ उक्तमर्थमिति—अन्यथा हीत्यादि भाष्येण व्यतिरेकद्वारोक्तम् । अद्वैतशास्त्रतात्पर्यावधारणपुरःसरं श्रोतुर्नैराकाङ्क्ष्यरूपं नेति नेतीति निर्देशस्य सार्थक्यरूपं प्रतिज्ञावाक्यस्य परिसमाप्तार्थत्वरूपं चार्थमित्यर्थः ।

पाधिनिराकरणद्वारेण तदा सैन्धवघनवदेकरसं प्रज्ञानघनमनन्तरमबाह्यं सत्यस्य सत्यमहं ब्रह्मास्मीति सर्वतो निवर्तते विविदिषाऽऽत्मन्येवावस्थिता प्रज्ञा भवति । तस्माद्वीप्सार्थं नेति नेतीति नकारद्वयम् ।

ननु महता यत्नेन परिकरबन्धं कृत्वा किं युक्तमेव निर्देष्टुं ब्रह्म । बाढम् । कस्मात् । न हि यस्मादिति नेति नेत्येतस्मादितीति व्याप्तव्यप्रकारा नकारद्वयस्य विषया

---

पाधिनिरासेन "तत्र तत्र विषयवेदनेच्छा यदा निवर्तिता तदा यथोक्तं प्रत्यग्ब्रह्माहमिति निश्चित्याकाङ्क्षा "सर्वतो व्यावर्तते "तेन निर्देशस्य सार्थकत्वं यदा चोक्तरीत्या ब्रह्माऽऽत्मेत्येव" प्रज्ञाऽवस्थिता भवति तदा प्रतिज्ञावाक्यमपि 'परिसमाप्तार्थं स्यादिति योजना । "वीप्सापक्षमुपसंहरति—तस्मादिति ।"

"आदेशस्य प्रक्रमाननुगुणत्वमाशङ्क्यानन्तरवाक्येन(ण) परिहरति—नन्वित्यादिना । न हीति प्रतीकोपादानम् । यस्मादित्यस्य हिशब्दार्थस्य तस्मादित्यनेन संबन्धः । व्याप्तव्या संग्राह्या विषयी-

---

क्योंकि (यहाँ तो) पुरुष की जिज्ञासा ही निवृत्त नहीं होगी । 'तुझे मैं ब्रह्म का उपदेश कराऊँगा" इस प्रतिज्ञावाक्य का प्रयोजन भी अधूरा रह जायगा । किन्तु जिस समय सम्पूर्ण दिशा, काल और देश-विषयिणी जिज्ञासा निवृत्त हो जाती है, उस समय समस्त उपाधियों के निरासमुख द्वारा "मैं लवण के ढेले के समान एकरस, प्रज्ञानघन, जातिव्यक्तिरहित और 'सत्य का सत्य' ब्रह्म हूँ" ऐसा ज्ञान होता है, तब सब प्रकार से जिज्ञासा शान्त हो जाती है, बुद्धि आत्मा में ही सम्यक् स्थित हो जाती है । इसलिए 'नेति-नेति' इस श्रुतिवाक्य में नकारद्वय वीप्सा के लिए ही है ।

(इस पर पूर्वपक्षी कहता है—) तो फिर तात्पर्यपूर्वक महान् प्रयत्न परिकर-बन्ध करके क्या ब्रह्म का उपदेश करना उचित है । (सिद्धान्ती कहता है—) बहुत ठीक है । (पूर्ववादी पूछता है—) ऐसा क्यों है ? (सिद्धान्तवादी कहता है—) ऐसा नहीं है क्योंकि "न इति" "न इति" इस प्रकार "इति इति' दो शब्दों के द्वारा विषयीकर्तव्य जितने भी पदार्थ हैं, वे सभी नकारद्वय के विषय होते हुए

---

१ जातिव्यक्तिरहितम् । २ सर्वस्याधिष्ठानम् । ३ वीप्सापक्षोऽभिमतस्य प्रतिज्ञायवादे संभवात् । ४ महतेत्यादे —ब्रह्मोपदेशायाथात इति शब्दाभ्यां महता प्रयत्नेन उपकरणकलापं संपाद्यापि नेति नेतीत्येवमेव ब्रह्मोपदेष्टुं युक्तं किं नैवयुक्तमुपक्रमविरोधादित्यर्थः । प्रयत्नमहत्त्वं तात्पर्यपूर्वकरत्वम् । ५ भृशं युक्तमित्यर्थः । ६ यद्यपि श्रुतौ 'इति न इति सकृदेव पठितं तथापि निषेधद्वयानुवादानुरोधाद् द्विविवक्षितत्वाऽऽह—इति न, इति न, इत्येतस्मादिति । निषेधवाक्यस्थेति शब्दार्थमाह—इतीतीति । [illegible] शब्दाभ्याम् । ८ व्याप्तव्येति —विषयीकर्तव्या यावन्त पदार्थास्ते सर्वे नकारद्वयस्य विषया सन्तो निर्दिश्यन्ते इति कृत्वा नेति नेतीत्यतस्मादादेशादन्यत्परमुत्कृष्टं निर्देशनं हि यस्मान्नास्ति तस्मादयमेव निर्देशो ब्रह्मण इत्यर्थः । ९ प्रकारा इति—प्रक्रियन्त व्याक्रियन्ते ये ते तथा कार्यात्मानोऽखिलपदार्था इत्यर्थः । १० देशकालादौ । ११ सर्वस्मात् अनात्मवर्गात् सर्वथा सर्वात्मना निखिलाकाङ्क्षति वाय । १२ यथोक्ताकाङ्क्षानिवर्तनेन । १३ एवेन व्यपदश्य मूर्तामूर्तपरिणामकार्यकरणसंघातविषया प्रज्ञा व्यवच्छिन्ना । १४ सर्वानुस्यूतब्रह्मायवसितिं यावत् । १५ वार्तिके वीप्सामनाश्रित्यैव वाक्यद्वयत्वस्य शङ्कितत्वं सूचयन्नाह—वीप्सापक्षमिति । १६ आदेशस्येति—नेति नेतीत्यादेशवाक्यस्येत्यर्थः । प्रक्रमेत्यादि—"द्वे वाव ब्रह्मणो रूपे इत्युपक्रमणाननुकूलत्वमित्यर्थः । ब्रह्मातिरिक्तसर्वनिषेधे हि उपक्रमोक्तरूपद्वयस्यापि निषेधादित्यर्थः ।

निर्दिश्यन्ते । यथा ग्रामो ग्रामो रमणीय इत्यन्यत्परं निर्देशनं नास्ति । तस्मादयमेव निर्देशो ब्रह्मणः । यदुक्तं तस्योपनिषत्सत्यस्य सत्यमित्येवंप्रकारेण सत्यस्य सत्यं तत्परं ब्रह्म । ॐअतो युक्तमुक्तं नामधेयं ब्रह्मणो नामैव नामधेयम् । किं तत्सत्यस्य सत्यं प्राणा वै सत्यं तेषामेव सत्यमिति ॥ ६ ॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य
तृतीयं ब्राह्मणम् ॥ ३ ॥

---

कर्तव्या ये 'प्रकारास्ते नकारद्वयस्य विषया सन्तो निर्दिश्यन्त 'इति नेति ने'त्येतस्मादित्यनेन भागेनेति योजना । इतिशब्दाभ्यां 'व्याप्तव्यसर्वप्रकारसंग्रहे दृष्टान्तमाह—यथेति । ग्रामो ग्रामो रमणीय इत्युक्ते राष्ट्रनिविष्टरमणीयसर्वग्रामसंग्रहवत्प्रकृतेऽपीतिशब्दाभ्यां विषयभूत'सर्वप्रकारसंग्रहे नकाराभ्यां तन्निषेधसिद्धिरित्यर्थः । यथोक्तान्निषेधरूपान्निर्देशादन्यन्निर्देशनं यस्माद्ब्रह्मणो 'न परमस्ति तस्मादित्युपसंहारः । अथेत्यादि वाक्यं प्रकृतोपसंहारत्वेन व्याचष्टे—यदुक्तमित्यादिना ॥६॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयाध्यायस्य
तृतीयं ब्राह्मणम् ॥ ३ ॥

---

निर्दिष्ट किए जाते हैं। जिस प्रकार ग्राम-ग्राम रमणीय है, इस द्विरुक्ति द्वारा सभी ग्रामों का निर्देश नहीं है, इसलिए यही ब्रह्म का निर्देश है। और जो कि 'सत्य का सत्य' (ब्रह्म वस्तु) ऐसा कहा है, यह उसकी उपनिषत् है। इस प्रकार से वह परब्रह्म 'सत्य का सत्य' है। इसलिए यह ब्रह्म का उचित ही नामधेय बतलाया जाता है। नाम ही को नामधेय कहा जाता है। वह क्या है? 'सत्य का सत्य' है। प्राण ही सत्य हैं और यह उनका भी सत्य है ॥६॥

इस प्रकार बृहदारण्यक उपनिषत् के द्वितीय अध्याय के मूर्तामूर्तसञ्ज्ञक तृतीय ब्राह्मण में शाङ्करभाष्य का हिन्दीभाषानुवाद पूर्ण हुआ।

---

१ बृ० उ० २।१।२०। २ एवमिति—यन उक्तप्रकारेण परमार्थसत्यं परं ब्रह्मैव अथ अतो युक्तमुक्तं ब्रह्मण उपनिषदिति उपनिषच्छब्दार्थमाह—नामधेयमिति। सत्यस्येति सेश्वरं सजीवं भूतभौतिकं जगत्सर्वं षष्ठ्यन्तसत्यशब्दार्थस्तन्निषेधावधिभूतं परमार्थभूतं सत्यं भाति नेतीत्यवधारितं परं ब्रह्म प्रथमान्तसत्यशब्दार्थ इत्युक्तार्थमेतदिति। ३ पदार्था। ४ श्रुतौ सकृदुक्तमपि विवक्षावशाद्भाष्ये द्विः पठितं योजयति—इति न, इति न इति। ५ इत्येतस्मादिति—यथोक्तार्थनिर्देशो यद्यपि 'इति न' इत्यनेनैव भागेन संभवति तथापि इत्येतस्मादित्यस्य तात्पर्यार्थोऽस्त्वेन तदभिन्नत्वादेव निर्देशत्वमायमन्तर्भाव उक्त इत्यवधेयम्। ६ निर्देशनीय। ७ मूर्तामूर्तादिसकलपदार्थसंग्रह। ८ न परमस्तीति—ननु कथं ब्रह्मणो निर्देशान्तराभावो विधिरूपस्यापि संभवादिति चेन्न यत्परतत्त्वं ब्रह्मणो निर्देष्टुमिष्टं तत्र यावन्तो मूर्तादयो निर्देश्ययोग्यास्तेषां नेति नेतीति निराकरणं विधिमुखं तदवबोधनम्। तथा च वार्तिकम्—"आदिदिक्षितमेतस्य सत्त्वं यद्ब्रह्म परम्। यावन्तस्तत्र निर्देश्यास्तेऽर्थाः सर्वे निवर्तिताः" ॥ २३८ ॥ इति।

---

ॐअथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमिति। अत्र वार्तिका एकादश सन्ति। तथाहि—'मूर्तामूर्तं हि सत्याख्यं प्राणाः सत्यास्तदात्मनः। तत्रशस्तदुपाधित्वात्सत्यमित्यभिधीयते ॥ अनिर्देश्यस्य निर्देश्या ये भेदाः कार्यलक्षणाः। तेषु लब्धास्पदं नाम परस्मिन्नुपचर्यते ॥ मूर्तामूर्तात्मकं सत्यं प्राणादे

( अथ द्वितीयाध्यायस्य चतुर्थं ब्राह्मणम् । )

'आत्मेत्येवोपासीत । तदेवं तस्मिन्नपदनीयमात्मतत्त्वं यस्मात्प्रेयः' पुत्रादेरित्युप-

संबन्धाभिधित्सया वृत्तं कीर्तयति—आत्मेत्येवेति । किमित्यात्मतत्त्वमेव ज्ञातव्यं तत्राऽऽह—तदेवेति । इत्थं सूत्रितस्य विद्याविषयस्य वाक्यस्य व्याख्यानमेव विषयस्तत्र विद्यासाधनं साध्या मुक्तिरिति संबन्धो मुक्तिश्च फलमित्येते तदात्मानमित्यादिना दर्शिते इत्याह—इत्युपन्यस्तस्येति' ।

"आत्मा है, इसी रूप से ही उपासना करे; सभी अनात्मसंघात में यह आत्मतत्त्व ही गवेषणीय है, क्योंकि वह पुत्रादि से भी प्रिय है" इस प्रकार जिसका व्याख्यान किया गया है; उस वाक्य के व्याख्यान में आत्मविद्या के सम्बन्ध और प्रयोजन का "(उत्पत्ति से पहले यह नामरूपात्मक जगत्

१. अनात्मवर्गे संघाते वा । २. सर्वस्मिन् बृ० उ० १।४।७ । ३. गवेषणीयम् । ४. बृ० उ० १।४।६ ।
५. तस्माद्यथोक्तविद्याविषयमात्मतत्त्वमेव ज्ञातव्यमिति शेष. ।

कार्यकल्पिणः । तस्याप्येतत्परं सत्यं यन्नेतीत्यवधारितम् ॥ उक्तवस्त्वतिरेकेण नामीषां सत्यता यतः । न चाप्यसत्यता तस्मात्तेषां सत्य परं पदम् ॥ आत्मवन्तो यथा रज्ज्वा रज्जुसर्पादयस्तथा । आत्मवन्तो निरात्मानः प्राणाद्याः प्रत्यगात्मना ॥ यत एवमतोऽन्वीक्ष्य मूर्तामूर्तादिवर्त्मना । सत्यशब्दाभिधेयार्थं तदा द्वारा परं पदम् ॥ व्यपदिश्य-मानमैकात्म्यं सत्यस्याऽऽत्मानमद्वयम् । द्रष्टव्यमात्मनैवैनं सत्यं पश्येद्यथोदितम् ॥ अतोऽव्याकृतयाथात्म्यं व्याकृतेनोपदिश्यते । सत्यस्य सत्यमिति तन्नान्यथा व्यपदेशभाक् ॥ व्यपदेशाय नार्थस्तत्र एव नामास्य विद्यते । ननु ब्रह्माक्षरमिति व्यपदेशोऽत्र नामभि. ॥ कार्यकारणगे तस्ये नामतत्त्वास्पदं यतः । रूपाभिधेयसंबन्धमरूपा-शब्दमक्षरम् ॥ लक्ष्येणाञ्जसा वक्ति परं ब्रह्म कथंचन । शब्दप्रवृत्तिहेतूनां साक्षाद्ब्रह्मण्यसंभवात् ॥२४४-२५४॥ श्रुतेराद्यौ षष्ठ्यन्तसत्यशब्दार्थमाह—मूर्तेति । तत्र स्वच्छाभवविति श्रुत्यन्तरप्रसिद्धिमुक्तेऽर्थे द्योतयति हिशब्दः । भूतपञ्चकं तत्कार्यं तदुपाधिकं च चैतन्यं सत्यमित्यर्थः ॥ सेश्वरं सजीवं सर्वं जगदस्तु षष्ठ्यर्थस्तथाऽपि न प्रथमार्थो निरुपाधिकं ब्रह्म तत्र शब्दप्रवृत्तिनिरस्तत्वादित्याशङ्क्य लक्षणया तत्र सत्यशब्दोऽस्तीति प्रतिजानीते—अनिर्देश्यस्येति ॥ षष्ठ्यर्थानुवादेन विवक्षितं प्रथमार्थमाह—मूर्तेति । परस्य स्वरूपेण सत्यत्वमनृतानामपि तद्योगात्सत्यमिदं असत्यस्य सत्यमित्याशङ्क्याऽऽह—उक्तेति ॥ ब्रह्मणा तेषां लब्धात्मता न स्वातन्त्र्येणेत्यत्र दृष्टा-न्तेनाऽऽह—आत्मवन्त इति ॥ तत्रैव तेषामात्मवत्त्वे फलितमाह—यत इति । रज्जुसर्पादिरिव सदसत्त्वे ब्रह्मणं-वाऽऽत्मवत्त्वान्मूर्तादिरूपेण षष्ठ्यर्थं सर्वमालोच्य तद्द्वारा प्रथमार्थमनुमीयमानमकार्यकारणमैकात्म्यमादाय तदधाद्य षष्ठ्यर्थस्यापि तत्तत्स्फूर्तिर्दृष्टिरिति ज्ञात्वा दर्शितरूपमनतिक्रम्य स्थितमेन परात्मान प्रथमान्तस्य स्वरूपत्वमेव मुमुक्षुरनुसंदध्यादित्यक्षरार्थं ॥ रज्ज्वा सर्पादिरात्मवत्त्वमन्वयादिसिद्धं ब्रह्मणा सर्वस्याऽऽत्मवत्त्वे किं मानमित्या-शङ्क्य तत्र सत्यशब्दप्रवृत्तिरित्याह—अत इति । व्याकृताव्याकृतयोर्यथावत् ब्रह्मयाथात्म्यमत एव तद्द्वारा सत्यस्य सत्यमिति ब्रह्मोच्यते यदि तयोर्न याथात्म्यं ब्रह्म तदा न तत्र शब्दप्रवृत्तिः स्यात्तद्द्वारं विना साक्षादेव तस्याव्य-पदेश्यत्वादित्यर्थ. ॥ मा तर्हि ब्रह्मणि व्यपदेशो भूदित्याशङ्क्याऽऽह—व्यपदेशायेति । स्वनामभिरेव ब्रह्मणा व्यपदेशमाशङ्क्याऽऽह—न स्वमिति । स्वीयनामासत्त्वमसिद्धमिति शङ्कते—नन्विति । अक्षरं ब्रह्मेति. ॥ कार्यकारणोपाधिके ब्रह्मणि यतो नाम सावकाशमतो नोभयविलक्षणे तत्र शब्दप्रवृत्तिरिति परिहरति—कार्येति । द्वयविलक्षणेऽपि सत्यज्ञानादिशब्दप्रयोगोऽस्तीत्याशङ्क्याऽऽह—रूपेति । सोपाधिके ब्रह्मणि वाच्ये गृहीतसम्बन्धं पदं विरुद्धांशत्यागेन शुद्धं लक्षयति न तु विना लक्षणां ब्रह्मणि शब्दप्रवृत्तिरित्यर्थः । तत्र मुख्यवृत्त्या शब्दाप्रवृत्तौ हेतुमाह—शब्देति । अतो लक्षणयैव निष्प्रपञ्चं प्रत्यग्ब्रह्म वेदान्तप्रमाणकमिति भाव. ।

न्यस्तस्य वाक्यस्य 'व्याख्यानविषये' संबन्धप्रयोजने अभिहिते 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति । एवं प्रत्यगात्मा ब्रह्मविद्याया विषय इत्येतदुपन्यस्तम् । अविद्यायाश्च विषयोऽन्योऽसावन्योऽहमस्मीति न स वेदेत्यारभ्य चातुर्वर्ण्यप्रविभागादिनिमित्तपाङ्क्तकर्मसाध्यसाधनलक्षणो बीजाङ्कुरवद्व्याकृताव्याकृतस्वभावो नामरूपकर्मात्मकः संसारस्त्रयं वा इदं नाम रूपं कर्मेत्युपसंहृतः "शास्त्रीय उत्कर्षलक्षणो "ब्रह्मलोकान्तोऽधोभावश्च स्थावरान्तोऽशास्त्रीयः पूर्वमेव प्रदर्शितो "द्वया हेत्यादिना ।

विद्याविषयमुक्तं निगमयति—एवमिति । उक्तमर्थान्तरं स्मारयति—अविद्यायाश्चेति । अन्योऽसावित्याद्यारभ्याविद्याया विषयश्च संसार उपसंहृतस्त्रयमित्यादिनेति संबन्धः । संसारमेव विशिनष्टि—चातुर्वर्ण्येति । चातुर्वर्ण्यं चातुराश्रम्यमिति प्रविभागादिनिमित्तं "यस्य पाङ्क्तस्य कर्मणस्तस्य साध्यसाधनमित्येवमात्मक इति यावत् । "तस्यानादित्वं दर्शयति—बीजाङ्कुरवदिति । तमेव त्रिधा संक्षिपति—नामेति । "स चोत्कर्षापकर्षाभ्यां द्विधा भिद्यते तत्रा"ऽऽद्यमुदाहरति—शास्त्रीय इति । उत्कृष्टो हि संसार"स्त्र्यन्नात्मभावः शास्त्रीयज्ञानकर्मलभ्य इत्यर्थः । द्वितीयं कथयति—अधोभावश्चेति । निकृष्टः संसारः "स्वाभाविकज्ञानकर्मसाध्य इत्यर्थः ।

ब्रह्मस्वरूप ही था) उसने अपने को ही जाना कि मैं ब्रह्म हूँ, इसी विज्ञान से वह सर्वरूप हो गया" इस श्रुतिवाक्य से निरूपण किया है । इस प्रकार यह प्रदर्शित किया गया है कि प्रत्यगात्मा ब्रह्मविद्या का विषय है और अविद्या का विषय है । "यह आराध्यदेव भिन्न है और मैं उससे भिन्न हूँ, इस प्रकार जो अपने से भिन्न देवता की उपासना करता है" इस श्रुतिवाक्य से उपक्रम करके चातुर्वर्ण्यादि विभाग के निमित्तभूत पाङ्क्तकर्मरूप साध्यसाधनसंज्ञक, बीजाङ्कुर के समान कार्यकरणस्वरूप नामरूपकर्मात्मक संसार का "नाम, रूप और कर्म यह तीन का समुदाय है और यही त्रय है" इस श्रुतिमन्त्र से उपसंहार किया गया है । इसके अतिरिक्त पृथिवी से ब्रह्मलोक पर्यन्त शास्त्रविहित (उपास्त्यादिजन्य) उत्कर्ष और स्थावरपर्यन्त शास्त्रनिषिद्ध उपासनादिजन्य अधोगति का व्याख्यान भी "प्रजापति के देव और असुर—ऐसे दो प्रकार के पुत्र थे" इत्यादि श्रुतिवाक्य द्वारा पहले ही प्रदर्शित कर दिया गया है ।

१. व्याख्याने इति यावत् । २ आत्मविद्याया । ३ तदात्मानमिति—"ब्रह्म वा इदमग्र आसीदि"ति श्रुतिशेष आदौ । अयमर्थः—अग्रे प्राक् प्रबोधादपि इदं शरीरस्थं प्रमात्रादिसाक्षिभूतं त्वंपदलक्ष्यं ब्रह्मैवासीत् तद्ब्रह्माविद्याविशिष्टतयाऽधिकारित्वेन व्यवस्थितं नासि त्वं संसारी सकलधर्मविनिर्मुक्तं चिदानन्दैकरसं ब्रह्मैवासीति दयालुनाचार्येण कथंचिद्बोधितमात्मानमेवाह ब्रह्म प्रमात्रादिसाक्षि अशनायाद्यतीतं नेतिनेत्यस्थूलादिलक्षणमस्मीत्येवमवेद्विज्ञातवत्तस्मादेव विज्ञानात्तद्ब्रह्म सर्वमभवत् । अब्रह्मत्वाध्यारोपणाविद्यापगमात् तत्कार्यस्यासर्वत्वस्य निवृत्तौ स्वाभाविकं सर्वत्वं प्राप्तवदित्यर्थः । ४ बृ० उ० १।४।१० । ५ प्रदर्शितम् । ६. बृ० उ० १।४।१० । ७ आदिना आत्मा जायाप्रजावित्तादिग्रह । ८. कार्यकारणस्वरूप । ९. बृ० उ० १।६।१ । १० शास्त्रविहितोपास्त्यादिजन्य । ११. भूरादि । १२ निषिद्धोपासनादिजन्य । १३. बृ० उ० १।३।१ । १४ यथोक्तकर्मणः साध्यं प्रयोज्यं साधनरूपं प्रयोजकश्च संसार इत्यर्थः । १५. संसारस्य । १६ यथोक्तसंसार । १७. उत्कर्षवन्तम् । १८ मनोवाक्प्राणाख्यो हिरण्यगर्भभावस्त्र्यन्नात्मत्वम् । १९ अशास्त्रीयस्य । निषिद्धेति यावत् ।

[1]एतस्मादविद्या[2]विषयाद्विरक्तस्य प्रत्यगात्मविषयब्रह्मविद्यायामधिकारः कथंचिदपि स्यादिति [3]तृतीयेऽध्याय उपसहृत[4] समस्तोऽविद्याविषयः । [5]चतुर्थे तु ब्रह्मविद्याविषय प्रत्यगात्मान 'ब्रह्म ते ब्रवाणीति ब्रह्म [6]ज्ञपयिष्यामीति' च प्रस्तुत्य तद्ब्रह्म[7]कमद्वयं 'सर्वविशेषशून्य क्रियाकारकफलस्वभावसत्यशब्दवाच्याशेषभूतधर्मप्रतिषेधद्वारेण [8]नेति नेतीति ज्ञापितम् ।

⊛[10]अस्या ब्रह्मविद्याया अङ्गत्वेन सन्यासो विधित्सित[11] । जायापुत्रवित्ता[12]दिलक्षण

किमित्यविद्याविषयो व्याख्यातो न हि [13]स [14]पुरुषस्योपयुज्यते तत्राऽऽह—एतस्मादिति । प्रत्यगात्मव विषयस्तस्मिन्या ब्रह्मेति विद्या तस्यामिति यावत् । [15]तार्तीयमनूद्य चातुर्थिकमर्थं कथयति—चतुर्थे त्विति ।

एव [16]वृत्तमनूद्योत्तरब्राह्मणतात्पर्यमाह—अस्या इति । किमिति सन्यासो विधित्स्यते कर्मणैव

इस अविद्या के काय ससार से विरक्त पुरुष का प्रत्यगात्मविषयक ब्रह्मविद्या म अधिकार किस प्रकार हो, इसलिए ब्राह्मणक्रम से तृतीय अध्याय म ही अविद्या के समस्त विषयो का उपसहार कर लिया गया है । चतुर्थ (उपनिषत्क्रम से प्रकृत द्वितीय) अध्याय मे ब्रह्मविद्या के विषयभूत प्रत्यगात्मा का 'अब मैं तुझ ब्रह्म का व्याख्यान करूँ" तथा 'मैं तुझ ब्रह्म का ज्ञान कराऊँगा इन दोनो श्रुतिवाक्यो से उपक्रम करके क्रियाकारकफलस्वभाव, सत्यशब्दवाच्य समस्त जीवधर्मों के प्रतिषेध मार्ग से निर्धर्मक, एक और अद्वय उस ब्रह्म का 'नेति नेति' इस श्रुतिवाक्य से ज्ञान कराया गया है ।

प्रकृत ब्रह्मविद्या का अङ्गस्वरूप से सन्यास इस ब्राह्मण मे विधान करना इष्ट है । जाया, पुत्र

१ अविद्याकार्यात । २ यथोक्तससारात् । ३ उपनिषदि प्रथमे । ४ बृ० उ० द्वितीये प्रकृते एव । ५ बृ० उ० २।१।१ । ६ बृ० उ० २।१।१५ । ७ वाक्याभ्याम् । ८ निधर्मकम् । ९ बृ० उ० २।३ ६ । १० प्रवृत्ताया ? ११ अत्र ब्राह्मण । १२ आदिना आत्मा शरीरम् । १३ ससार । १४ मुमुक्षोरधिकारिण । १५ अथम् । १६ अतिक्रान्तमथम् ।

⊛अस्या ब्रह्मविद्याया अङ्गत्वेन सन्यासो विधित्सित इति भाष्यम् । एतद्रहस्याविष्करणपराणि वार्तिकानि प्रदर्श्यन्ते । तथाहि— नित्यकर्माद्यनुष्ठानसशुद्धधिषण पुमान् । नि शेषकर्महेतूत्थफलसाध्यधीस्तत ॥ विरक्त आब्रह्मणोऽस्य तत्साध्यसमीक्षणात् । ससारदु खसस्कारस्मृतिभि प्रथमाणधी ॥ उद्भूततज्जिहास सत्साधने साधनस्पृह । त्यक्ताशेषैषण सोऽथ प्रत्यग्याथात्म्यनिश्चय ॥ यस्तु वृत्तात्मसबोधध्वस्तससारकारण । व्याविद्धाशेषससारो विमुक्तो ना विमुच्यते ॥ यावत्किचिदविद्याया कार्यं वैराग्यकारणम् । तत्सन्यासो विरक्तत्वात्स्वत एव न शास्त्रत ॥ ब्रह्मयाथात्म्यविज्ञानसाधनत्व विनाऽऽश्रमात् । सन्यासस्य न विज्ञात तच्छास्त्रेणेह बोध्यते ॥ ब्रह्माविद्यासमुत्थानात्कार्यकारणलक्षणात् । व्युत्थाप्य नेति नेतीति पर ब्रह्म प्रदर्शितम् ॥ तत्रैतच्छङ्क्यते चोद्य ब्रह्मत्वासिद्धिदोषवृत् । निषिद्ध नेति नेतीति मूर्तामूर्तादि वस्तु यत् ॥ किं तदब्रह्मानुग सर्वं किं वा तस्माद्विविच्यत । यदि ब्रह्मानुग ब्रह्म स्यादनात्मक तदा ॥ अभावनिष्ठ तन्नेत्यामुख्य ब्रह्म न सिध्यति । अभावस्य सतोऽन्यत्वादन्वयव्यतिरेकत ॥ नेतीत्यपि निषधोक्तिस्तथा सति विरुध्यते । वेदान्तेषु च प्रयासोऽस्य सव स्यात्तु पवन्डनम् ॥ विविच्यते ब्रह्मणश्चेन्मैव दोषस्तथाऽपि हि । ब्रह्मत्व ब्रह्मणो न स्याद्द्वितीये सति वस्तुनि॥ —

पाङ्क्तं कर्माविद्याविषयं यस्मान्नात्मप्राप्तिसाधनम् । अन्यसाधनं ह्यन्यस्मै फलसाधनाय प्रयुज्यमानं प्रतिकूलं भवति । न हि बुभुक्षापिपासानिवृत्त्यर्थं धावनं गमनं वा साधनम् ।

विद्यालाभादिरित्याशङ्क्याऽऽह—जायेति । अविद्याया [1]विषय एव [2]विषयो यस्येति विग्रहः । तस्मात्संन्यासो विधित्सित इति पूर्वेण संबन्धः । ननु प्रकृतं कर्माविद्याविषयमपि किमित्यात्मज्ञानं [3]तादर्थ्येनानुष्ठीयमानं [4]नोपनयति तत्राऽऽह—अन्येति । [5]तदेव दृष्टान्तेन स्पष्टयति—न हीति । पाङ्क्तस्य

धन और शरीरलक्षण पाङ्क्तकर्म अविद्या का विषय है क्योंकि वह आत्मप्राप्ति का साधन नहीं है। किसी अन्यफल की सिद्धि के लिए किसी अन्य साधन का प्रयोग करना विपरीत ही हो जाता है। भूख और प्यास मिटाने के लिए दौड़ना अथवा चलना साधन नहीं हो सकता। पुत्रादिसाधन मनुष्यलोक,

१ कार्यम् । २ फलम् । ३ आत्मज्ञानार्थमिति यावत् । ४ अनयनीत्यर्थः । ५ प्रतिकूलत्वमेव ।

वृत्तानानुगतं वस्तु ब्रह्मत्वमश्नुते । एतच्च दुर्लभं तस्य द्वितीयं सति लक्षणम् ॥ अथाब्रह्मात्मकं वस्तु जग्ध्वा चेद्ब्रह्म तद्भवेत् । प्रतीचो ब्रह्मणाऽन्तत्वान्न मोक्षो नापि संसृतिः ॥ संसारिणो न चेदस्ति संसारैव प्रसज्यते । नाऽऽप्नोति ब्रह्मता साक्षात्सत्सु संसारिवस्तुषु ॥ संसारे चापि जग्धेऽस्मिन्ब्रह्मणा निखिले सति । ऋतेऽपि ब्रह्मविज्ञानात्सर्वे स्युर्मुक्तबन्धनाः ॥ अन्वयादिनिषेधाय सर्वमात्मेति वाक्यतः । मैत्रेयीत्यादिको ग्रन्थस्तस्मादारभ्यते परः ॥ सर्वाब्रह्मनिषेधेन तदर्थो नेह निश्चितः । तस्य संसिद्धिविषयमैकात्म्यमधुनोच्यते ॥ नेतीति ब्रह्मणोऽन्यत्र मूर्तामूर्तव्यवस्थितौ । प्रसक्ते सांख्यसिद्धान्ते सर्वमात्मेति बोध्यते ॥ सत्यपि ब्रह्मवादित्वे भासत्यक्तैषणो यतिः । मुक्तिभागिति चेहोक्तः संन्यासेन समुच्चयः ॥ निरस्तातिशयज्ञानो याज्ञवल्क्यो यतो गृही । कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम् ॥ त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम्" ॥२-२१॥ "ब्रह्मचर्याद्गृहाच्चैव वनाच्चापि विधीयते । निःशेषकर्मसंन्यासो यतोऽतो मर्णयद्भुता ॥ श्रुत्या जाबालशाखायां तथाचानधिकारिणाम् । संन्यासस्य विधानाच्च कार्योऽतोऽसौ मुमुक्षुभिः ॥ नरलोकादिकामानां सुतोत्पत्त्यादि साधनम् । तेभ्यो व्युत्थितचित्तानां संन्यासस्त्वात्मकामिनाम् ॥ इममर्थं श्रुतिर्वक्ति सर्वकर्मानपेक्षिणी । प्रजादिना करिष्यामः किं तत्फलवितृष्णतः ॥ उत्पत्त्यादिविरुद्धोऽयं लोको येषामकर्मजः । मोहमात्रान्तरायत्वाज्ज्ञानमात्रमपेक्षते ॥ प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ भावितैः करणैश्चाय बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे । तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः । त्रिष्वाश्रमेषु कोऽन्वर्थो भवत्परमभीप्सतः" ॥२७-३४॥ 'मुख्यार्थता वा प्रागुक्ता ब्रह्मत्वस्य सदाशिवा । प्रतीच्यथाऽऽत्मशब्दस्य मुख्यार्थो ब्रह्मणीयत ॥ ततस्तदेतदिति च ब्रह्मात्मपदवाच्ययोः । मधुकाण्डार्थसर्वस्वं वाक्येन प्रतिपाद्यते ॥ प्रत्यग्याथात्म्यविज्ञानजन्मनः श्रुतिः स्वयम् । विविदिषन्तीह संन्यासं मैत्रेयीति प्रवर्तते' ॥३६-३८॥ मुक्तिहेतुत्वेन प्रस्तुतविद्याङ्गतया संन्यासविधानार्थं ब्राह्मणमिति संबन्धः चिरमुक्षूणां मुक्तिसिद्धौ क्रमं वदन्निहामुत्र वाऽनुष्ठितनित्यादिकर्मफलं चित्तशुद्धिरित्याह—नित्येति । शुद्धिफलं संसाराधारतादृष्टिरित्याह—निःशेषेति । सत शुद्धेरिति यावत् ॥ संसारदोषदृष्टिफलमाह—विरक्त इति । वैराग्यफलं संसारजिहासा तज्जं सहेतूक्ति-पूर्वकमाह—संसारेति ॥ उत्पन्नसंसारजिहासाकार्यमाह—तद्धान इति । आत्यन्तिकबन्धध्वस्तौ हेतुं जिज्ञासमानः स्वाध्यायादापातनाऽऽत्मज्ञानं तदुपायं श्रुत्वा तच्छेषत्वेन पुत्राद्येषणात्रयं त्यजतीत्याह—त्यक्त्वेति । विविदिषासंन्यासानन्तरमसकृदनुष्ठितश्रवणादिफलमाह—अथेति ॥ तत्त्वज्ञानफलमाह—वस्त्विति । कारणध्वस्त्या

मनुष्यलोकपितृलोकदेवलोकसाधनत्वेन हि पुत्रादिसाधनानि 'श्रुतानि नाऽऽत्मप्राप्तिसाधनत्वेन । 'विशेषितत्वाच्च । न च ब्रह्मविदो विहितानि' 'काम्यत्वश्रवणादे'तावान्वै' काम'

---

कर्मणोऽन्यसाधनत्वमेव कथमधिगतमित्याशङ्क्याऽऽह—मनुष्येति । 'सोऽयं मनुष्यलोकः पुत्रेणैव जय्यः कर्मणा पितृलोको विद्यया देवलोक इति विशेषितत्वम् । श्रुतत्वमेव विशेषितत्वोक्तिद्वारा स्फुटीकृतमिति चकारेण द्योत्यते । 'ननु ब्रह्मविद्या स्वफले विहितं कर्मापेक्षते श्रौतसाधनत्वा"द्दर्शादिवत्तथाच" समुच्च-

---

पितृलोक और देवलोक की प्राप्ति के साधनरूप से सुने गए हैं, आत्मप्राप्ति के साधनरूप से नही सुने गये । पुत्रादिको का मनुष्यलोकादि फल मे विनियोग हो जाने से ऐसा होता है । विहित कर्मों के काम्यत्वविषयक श्रवण करने पर प्रसिद्ध, जाया, पुत्र, वित्तकर्मसंज्ञक कामना किये जाने वाले विषय

---

१. बृ० उ० १।५।१६ । २. पुत्रादीनां मनुष्यलोकादौ फले विनियुक्तत्वाच्चेत्यर्थः । ३. कर्माणि । ४. कर्मणां कामनाविषयत्वश्रवणात् । ५. प्रसिद्धजायापुत्रवित्तकर्माख्य- । ६ बृ० उ० १।४।१७ । ७. कामयितव्यो विषयः । ८ बृ० उ० १।५।१६ । ९. सन्यासमनिच्छन् समुच्चयवादी शङ्कते—नन्विति । १०. तेषां हि साङ्गानामेव फलजनकत्वमिति तानि प्रयाजादिकमङ्गकर्मापेक्षन्ते । ११. विद्यायाः स्वफलोत्पादने कर्मापेक्षत्वे सति ।

---

कार्यध्वस्तिमाह—व्याविद्धेति । आत्मनः स्वतो मुक्तस्य कुतः सा हेत्वधीनेत्याशङ्क्याज्ञानाद्बन्धवज्ज्ञानाद्बुद्धस्य सकार्याज्ञानध्वस्तौ मोक्षपचर्यते ब्रह्मविदाप्नोतीत्यादावित्याह—विमुक्त इति ॥ ज्ञानाङ्गत्वेनोक्तसन्यासस्य वैराग्यादेव प्राप्तेर्न तद्विध्यर्थं ब्राह्मणमारम्भमित्याशङ्क्य सन्यासस्वरूपे विध्यानर्थक्य तस्य ज्ञानाङ्गत्वे नेति विकल्प्याऽऽद्य-मङ्गी करोति—यावदिति । तस्य तत्कारणत्व दुःखबहुलत्वादवधेयम् ॥ द्वितीयं दूषयति—यद्येति । इहेति वैदिकपक्षोक्तिः ॥ सन्यासस्य ज्ञानसाधनत्वोक्त्यर्थं ब्राह्मणमिति भाष्योक्तमर्थमुक्त्वाऽर्थान्तरं वक्तुमनन्तर-ब्राह्मणोक्तमनुवदति—ब्रह्मविद्येति ॥ उत्तरब्राह्मणापोद्य चोद्यमाह—तत्रेति । तस्य निरस्यतामाह—यद्येति । चोद्यमेव विशदयितु विकल्पविषयमाह—निषिद्धमिति ॥ तत्किं ब्रह्मणोऽभिन्नं किंवाऽभावनिष्ठमथ भिन्नमिति विकल्पयति—किं तदिति । अभेदपक्षमनुभाष्य दूषयति—यदीति ॥ अभावनिष्ठत्वपक्षमनूद्य निरस्यति—अभावेति । कुतो मुख्यब्रह्मसिद्धिस्तत्राऽऽह—अभावस्येति । मूर्तादेरभावनिष्ठत्वे तस्य ब्रह्मणोऽन्यत्वमनन्यत्व वाऽऽयं तस्य तेन सयोगवियोगयोगाद्द्वैतासिद्धेर्मुख्यब्रह्मसिद्धिरित्यर्थः ॥ द्वितीये निषेधोक्तिरप्रमा बोध्यब्रह्मा-भावादित्याह—नैतीत्यपीति । वक्ष्यमाणदोषसमुच्चयार्थोऽपिशब्दः । ब्रह्माभावे सर्वोपनिषदारम्भवैयर्थ्यं दोषान्तरमाह —वैदिकश्चेति ॥ भेदपक्षमनूद्य प्रत्याह—विविच्यत इति । तमेव प्रकटयति—ब्रह्मत्वमिति ॥ सत्यपि द्वितीये तत्किं न स्यादित्याशङ्क्य ब्रह्मलक्षणमाह—अव्यावृत्तेति । द्वितीय सत्यपीद लक्षण ब्रह्मणि किं न स्यात्तत्राऽऽह —एतच्चेति ॥ सदपि द्वितीयमुपसंहृत्य ब्रह्मोक्तलक्षण स्यादित्याऽऽह—अथेति । ब्रह्म द्वितीयमुपसंहरत्तथा जीवमुपसंहरति न वा नाऽऽद्य इत्याह—प्रतीच इति ॥ कल्पान्तरमनुवदति—संसारिण इति । से ब्रह्मणोऽभिन्ना भिन्ना वेति विकल्प्याऽऽद्य निराह—संसारीति । यद्येति दोषः । भेदपक्षं निरस्यति—नाऽऽप्नोतीति । संसारिब्रह्मणो-रभेदेऽपि न ब्रह्मणः संसारस्तस्य तेन ग्रस्तत्वादित्याशङ्क्यातिप्रसङ्गमाह—संसारे चेति ॥ एतदुत्तरत्वेन ब्राह्मणमवतारयति—अन्वयादीति । अन्वयव्यतिरेकाभावपरिहाभ्यां सर्वमात्मेति वाक्यार्थत्वाद्यस्मात्र ब्रह्मादिति वक्तुमुत्तरो ग्रन्थो यस्मादारभ्यते तस्माभोक्तदोषप्रसक्तिरित्यर्थः ॥ चोद्योत्तरत्वेन ब्राह्मणमवतार्यार्थान्तरमाह—सर्वेति । इहेत्यनन्तरब्राह्मणमुक्तम् । मूर्ताद्यनात्मनिरासेन तदर्थो निर्धारितस्तस्य स्वमर्थेनैक्यं मुक्त्यालम्बनमत्र निर्धार्यत इत्यर्थः ॥ प्रकारान्तरेण ब्राह्मणमुत्थापयति—मैत्रेय्यादिना । निषेधोक्तेर्ब्रह्मणोऽन्यत्र द्वैतसंभावनाभा

इति। ब्रह्मविदश्चाऽऽप्तकामत्वादाप्तकामस्य कामानुपपत्तेः। 'येषां नोऽयमात्माऽयं लोक' इति च श्रुतेः।

---

याग्न कर्मसन्यासिसिद्धिरत आह—न चेति। कर्मणा 'काम्यत्वेऽपि ब्रह्मविदस्तानि किं न स्युरित्याशङ्क्याऽऽह—ब्रह्मविदश्चेति। इतश्च तस्य पुत्रादिसाधनानुपपत्तिरित्याह—येषामिति।

---

ब्रह्मवेत्ता के लिए नहीं हैं क्योंकि ब्रह्मवेत्ता आप्तकाम होता है और आप्तकाम को कोई कामना नहीं होती। "(उनका निश्चय था कि हमें प्रजा से क्या लेना है) जिन हम मोक्षाभिलाषियों को, यह स्वयंप्रकाश आत्मलोक प्राप्त करना ही इष्ट है" इत्यादि श्रुतिवाक्य इसमें प्रमाण है।

कुछ दार्शनिक तो ब्रह्मज्ञानी का एषणात्रय से सम्बन्ध होना बतलाते हैं। उन्होंने बृहदारण्यक उपनिषत् नहीं सुना। पुत्रादि एषणाएँ तो अविद्वान् को ही होती है। विद्या के विषय में 'जिन हम

---

१ बृ० उ० ४।४।२२। २ स्वयप्रकाश: ३ फलेच्छा साधनमुपसंक्रामतीति न्यायेन कामनाविषयत्वेऽपि।

---

द्वैतिमतमाशङ्क्य कल्पितस्य सर्वस्याऽऽत्ममात्रत्व वक्तुमनन्तरब्राह्मणमित्यर्थ ॥ तस्यार्थान्तरमाह—सत्यपीति। सन्यासस्य सम्यग्ज्ञानाङ्गत्वस्थापनायाऽऽरम्भ प्रागुक्तोऽधुना ज्ञानस्य तेन समुच्चयविधानायेति भेद ॥ ज्ञाने सत्यपि सन्यासाभावादमुक्तेरदृष्टेर्न मुक्तौ समुच्चयस्तत्राऽऽह—निरस्तेति। अत सन्यासज्ञानयोर्युक्तो मुक्तौ समुच्चय इति शेष ॥ तत्समुच्चितधियो मुक्तिहेतुत्वे न केवल लिङ्गमेव मान किन्तु स्मृतिरपीत्याह—त्याग इति। तर्हि त्यागस्यैव मुक्तिहेतुता न तत्समुच्चितज्ञानस्येत्याशङ्क्याऽऽह—त्यजेति ॥ ऋणापाकरणश्रुतिस्मृतिविरोधात्सन्यासायोगे कुतस्तत्समुच्चयसिद्धिरित्याशङ्क्याऽऽह—ब्रह्मचर्यादिति। न विधिविरोधेऽर्थवादश्रुतिस्मृत्यो स्वार्थे मानतेति सबन्धग्रन्थे साधितमिति भाव। अथ जाबालश्रुतौ कर्मानधिकृतान्धादिविषय सन्यासविधि। यथाऽऽह—'तत्रैव शक्यते यस्तु येऽन्धपङ्ग्वादयो नरा। गृहस्थत्व न शक्यन्ति कर्तुं तेषामय विधि ॥ नैष्ठिक ब्रह्मचर्यं वा परिव्राजकताऽपि वा। तैरवश्य ग्रहीतव्या तेनाऽऽदावतदुच्यते' ॥ इति तत्राऽऽह—तथाचेति। अथ पुनरव्रती वेत्यादिना पृथगनधिकृतानां सन्यासविधानात्पूर्वमधिकृतविषयमेवेति भाव। ऋणश्रुत्याद्यविरोधे फलितमाह—कार्यं इति ॥ ऋणप्रमाणाविरोधेऽपि मोचकज्ञानाङ्गत्वेन सन्यासो न कार्यं सुतादिसाधनात्तत्समुच्चितज्ञानाद्वा तत्सिद्धेरित्याशङ्क्याऽऽह—नरेति ॥ पुत्रादे स्वतन्त्रस्य परतन्त्रस्य वा न मुक्तिहेतुतेत्यत्र श्रुतिमाह—इमर्मिति। पुत्रादिना मनुष्यलोकादिसिद्धेरिष्टत्वादाक्षेपानुपपत्तिरित्याशङ्क्याऽऽह—तत्फलेति ॥ तद्वैतृष्ण्ये हेतुमाह—उत्पत्त्यादीति। ते वय तत्फलवितृष्णत इति सबन्ध। मोक्ष सुताद्यनपेक्षश्चेत्किमपेक्ष्य भवति तत्राऽऽह—मोहेति ॥ पुत्रादेरन्यत्र विनियुक्तत्वात्केवलस्य समुच्चितस्य वा मुक्तिहेतुत्वायोगाज्ज्ञानस्यैव तद्धेतुत्वात्तदङ्गत्वेन सन्यासविधिरित्युक्त सप्रति तस्य ज्ञानहेतुत्वे स्मृतिमाह—प्रवृत्तीति ॥ अमसन्यासविषयमिद वाक्यमित्याशङ्क्याऽऽह—भावितेरिति ॥ ब्रह्मचर्यादेव प्रव्रजितस्यापि पुनरिच्छया गार्हस्थ्यादौ प्रवृत्ति स्यादित्याशङ्क्याऽऽह—तमिति ॥ ज्ञानस्य स्वरूपे फले चोपकारित्वेन सन्यास विधातु ब्राह्मणमित्युक्त्वाऽर्थान्तरविवक्षया पूर्वब्राह्मणार्थमनुवदति—मुख्येति। तदर्थस्य त्वमर्थपर्यन्तता विहितेत्यर्थ। वक्ष्यमाण ब्राह्मणार्थं सक्षिपति—अथेति। त्वमर्थस्य तदर्थपर्यन्तताऽनन्तरमुच्यत इत्यर्थ ॥ ब्राह्मणद्वय पदार्थोपक्षीण चेद्वाक्यार्थस्तर्हि केनोच्यत इत्याशङ्क्य मधुब्राह्मणेनेत्याह—तत इति। तदेतद्ब्रह्मापूर्वमित्यादिना वाक्येनेति सबन्ध। ब्रह्मादिपदवाच्ययोस्तद्द्वारा लक्ष्ययोरिति यावत्। मधुकाण्डार्थंसर्वस्वमैक्यमित्यर्थ ॥ ब्राह्मणार्थमनेकधोक्त्वा सन्यासस्य ज्ञानाङ्गत्वपक्षे ब्राह्मणमवतारयन्मुमुक्षुप्रतिपत्त्यर्थामाख्यायिकामुत्थापयति—प्रत्यगिति। सन्यासस्य ज्ञानाङ्गत्वपरामर्शार्थोऽत्र शब्द। इहेति विरक्ताधिकारोक्ति ॥

केचित्तु ब्रह्मावदाऽप्यवसानसंबन्धं वर्णयन्ति तैर्बृहदारण्यकं न श्रुतम् । पुत्राद्येषणानामविद्वद्विषयत्वम् । विद्याविषये च 'येषां नोऽयमात्माऽयं लोक इत्यतः किं प्रजया करिष्याम इत्येष विभागस्तैर्न श्रुतः, श्रुत्या कृतः । सर्वक्रियाकारकफलोपमर्दस्वरूपायां च विद्यायां सत्यां सह कार्येणाविद्याया अनुपपत्तिलक्षणश्च विरोधस्तैर्न विज्ञातो व्यासवाक्यं च तैर्न श्रुतम् । कर्मविद्यास्वरूपयोर्विद्याविद्यात्मकयोः प्रतिकूलवर्तनं विरोधः ।

"यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
'कां गतिं विद्यया यान्ति कां च 'गच्छन्ति कर्मणा ॥
एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे ।
'एतावन्योन्यवैरूप्ये वर्तेते प्रतिकूलतः" ॥

समुच्चयपक्षमनुभाष्य श्रुतिविरोधेन दूषयति—केचित्त्विति । श्रुतिविरोधमेव स्फोरयति—पुत्रादीति । अविद्वद्विषयत्वं श्रुत 'तत्प्रकरणे 'तेषामुपदेशादिति शेषः । किं प्रजया करिष्याम इत्यत आरभ्य येषां नोऽयमात्माऽयं लोक इति च 'विद्याविषये श्रुतमिति योजना । एष विभागः श्रुत्या कृतस्तैः समुच्चयवादिभिर्न श्रुत इति संबन्धः । न केवलं श्रुतिविरोधादेव समुच्चयासिद्धिः किंतु युक्तिविरोधाच्चेत्याह—सर्वेति । द्वितीयश्चकारोऽवधारणार्थो नञा संबध्यते । स्मृतिविरोधाच्च समुच्चयासिद्धिरित्याह—व्यासेति । 'तत्र प्रथमं पूर्वोक्तं युक्तिविरोधं स्फुटयति—कर्मेति । प्रतिकूलवर्तनं निवर्त्यनिवर्तकभावः । संप्रति स्मृतिविरोधं स्फोरयति—यदिदमिति । प्रसिद्धं वेदवचनं कुरु कर्मेत्यज्ञं प्रति यदिदमुपलभ्यते विवेकिनं प्रति च त्यजेति 'तत्र कां गतिमित्यादिः शिष्यस्य व्यासं प्रति प्रश्नस्तस्य बीजमाह—एताविति । विद्याकर्माख्यावुपायौ परस्परविरुद्धत्वेन वर्तेते साभिमानत्वनिरभिमानत्वादिपुरस्कारेण प्रातिकूल्यात्समुच्चयानुपपत्तेर्यथोक्तस्य प्रश्नस्य सावकाशत्वमित्यर्थः । इत्येवं पृष्टस्य

मोक्षाभिलाषी को यह स्वयंप्रकाश आत्मलोक प्राप्त करना ही अभीष्ट है", इसलिए "हमें प्रजा से क्या लेना है" इत्यादि श्रुतियों द्वारा किया हुआ विभाग उन्होंने नहीं सुना। इसके अतिरिक्त "समस्त क्रिया, कारक और फल का निरास करनेवाली विद्या के होने पर वहाँ कार्यसहित अविद्या का रहना असम्भव है" यह विरोध भी वे लोग नहीं जानते, न ही उन्होंने भगवान् व्यास के (श्रुति-अनुकूल) वचनों को भी सुना है। कर्म और विद्या का स्वरूप अज्ञानात्मक और ज्ञानात्मक होने से उनमें परस्पर विरोध है क्योंकि उनमें विपरीतस्वभाव है।

(अब स्मृतिविरोध का प्रतिपादन करते हैं—) "ऐसे जो वेद के वाक्य है कि कर्म का अनुष्ठान करो और कर्म का त्याग करो तो अधिकारी विद्या से किस फल को प्राप्त करते है और अविद्या के द्वारा ( यानी कर्मानुष्ठान के द्वारा ) किस फल को फल प्राप्त करते हैं ? इसका रहस्य मैं सुनना चाहता हूँ। आप मुझे इसका उपदेश करें क्योंकि कर्मानुष्ठान और ज्ञान (कर्मत्याग) परस्पर विरुद्ध स्वभाव वाले और प्रतिकूल आचरण (फल) वाले है"।

१. बृ० उ० ४।४।२२ । २. किं फलमित्यर्थः । ३. अधिकारिणः । ४. कर्मतत्त्यागादित्यर्थः । ५. अविद्वत्प्रकरणे । ६. पुत्रादीनाम् । ७. विद्याप्रकरणे । ८. युक्तिस्मृतिविरोधयोर्मध्ये । ९. कर्मतत्त्यागरूपाविद्याविद्ययोर्मध्ये ।

इत्येवं पृष्टस्य प्रतिवचनेन—

"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः" ॥

[1]इत्येवमादिविरोधः प्रदर्शितः ।

[2]तस्मान्न [3]साधनान्तरसहिता ब्रह्मविद्या पुरुषार्थसाधनं सर्वविरोधात्साधननिरपेक्षैव पुरुषार्थसाधनमिति[4] पारिव्राज्यं [5]सर्वसाधनसंन्यासलक्षणम्[6]अङ्गत्वेन विधित्स्यते । [7]एतावदेवामृतत्वसाधनमित्यवधारणात्[8]षष्ठसमाप्तौ लिङ्गाच्च कर्मी सन्याज्ञवल्क्यः प्रवव्राजेति ।

भगवतो व्यासस्येति शेष । विरोधो ज्ञानकर्मणोः समुच्चयस्येति वक्तव्यम् ।

समुच्चयानुपपत्तिमुपसहरति—तस्मादिति । कथं तर्हि ब्रह्मविद्या पुरुषार्थसाधनमिति तत्राऽऽह—सर्वविरोधादिति । सर्वस्य क्रियाकारकभेदात्मकस्य द्वैतेन्द्रजालस्य ब्रह्मविद्यया विरोधादिति यावत् । एकाकिनी ब्रह्मविद्या मुक्तिहेतुरिति स्थिते फलितमाह—इति पारिव्राज्यमिति । न केवलं संन्यासस्य श्रवणादिपौष्कल्यदृष्टद्वारेण विद्यापरिपाकाङ्गत्वं श्रुत्यादिवशादवगम्यते किं तु लिङ्गादपीत्याह—एतावदेवेति । तत्रैव लिङ्गान्तरमाह—षष्ठसमाप्ताविति । एतच्चोभयत संबध्यते । यदि कर्मसहितं ज्ञानं मुक्तिहेतुस्तदा किमिति कर्मिणः सतो याज्ञवल्क्यस्य पारिव्राज्यमुच्यते ;तस्मा' त्त्याग-"स्तदङ्गत्वेन विधित्सित इत्यर्थं ।

इस प्रकार किये गये प्रश्न का समाधान देते हुए—

"जीव कर्मानुष्ठान के द्वारा बन्धन मे फँस जाता है और ज्ञान द्वारा मोक्षलाभ करता है । इसलिए तत्वद्रष्टा महात्मा कर्म का अनुष्ठान नही करते" ।

इस प्रकार प्रवृत्तिलक्षण कर्म और निवृत्तिलक्षण ज्ञान मे परस्पर विरोध प्रदर्शित किया है ।

इसलिए (ज्ञान और कर्म का समुच्चय सभव न होने के कारण) कर्मरूप साधनान्तरसहित ब्रह्मविद्या मोक्षरूप पुरुषार्थ का साधन नही हो सकती, बल्कि सबसे विरोध रहने के कारण (ब्रह्मविद्या) साधननिरपेक्ष ही पुरुषार्थसिद्धि सम्पादित करती है, इस कारण से ब्रह्मविद्या के अङ्गत्वरूप से कर्मादि निखिल साधनो के त्यागात्मक सन्यास का विधान करना इष्ट है । (सन्यासपूर्वक "नेति-नेति"रूप परमात्मज्ञान) इतना मात्र ही अमृतत्व का साधन है—ऐसा निश्चय बृहदारण्यक उपनिषत्

१ इत्यवमादिविरोध इत्यत्रेत्यादिशब्देन "प्रवृत्तिलक्षणो योगो ज्ञान सन्यासलक्षणम् । तस्माज्ज्ञान पुरस्कृत्य सन्यसेदिह बुद्धिमान् ॥ भावितै करणैश्चाय बहुससारयोनिषु । आसादयति शुद्धात्मा मोक्ष वै प्रथमाश्रमे ॥ तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चित । त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सत" ॥ वा० ३२-३४ ॥ इत्यादिस्मृतयो गृह्यन्ते । योग कर्मयोग । पुरस्कृत्य उद्दिश्य ॥ भावितै सस्कृतै । मोक्ष सन्यासम् । प्रथमाश्रमे तदवसरे ॥ दृष्टार्थस्य अपरोक्षीकृतात्मतत्त्वस्य । ननु सन्यस्यापि आश्रमान्तराश्रयणं कर्तव्यमित्याशङ्क्याऽऽह —त्रिष्विति । २ ज्ञानकर्मणो समुच्चयासभवात् । ३ कर्माख्यसाधनान्तरेरत्यर्थ । ४ हेतो । ५ कर्माद्यखिलसाधनत्यागात्मकम् । ६ ब्रह्मविद्याङ्गत्वनेत्यर्थ । ७ ससन्यास नेति नेतीत्याद्युक्तरूपमात्मज्ञानमेवेत्यथ । ८ बृ० उ० ४।५।१५ । ९ इति, शेष इति यावत् । १० पारिव्राज्योक्ते । ११. कर्मत्यागेति भाव । १२ ज्ञानाङ्गत्वेन ।

मैत्रेय्यै च कर्मसाधनरहितायै साधनत्वेनामृतत्वस्य ब्रह्मविद्योपदेशाद्वित्तनिन्दावचनाच्च । यदि ह्यमृतत्वसाधनं कर्म स्याद्वित्तसाध्यं पाङ्क्तं कर्मेति तन्निन्दावचनमनिष्टं स्यात् । यदि तु परितित्याजयिषितं कर्म ततो युक्ता तत्साधननिन्दा । कर्माधिकारनिमित्तवर्णाश्रमादिप्रत्ययोपमर्दाच्च ब्रह्म तं परादात्क्षत्त्रं तं परादादित्यादिना । न हि ब्रह्मक्षत्त्राद्यात्मप्रत्ययोपमर्दे ब्राह्मणेनेदं कर्तव्यं क्षत्त्रियेणेदं कर्तव्यमिति विषयाभावादात्मानं लभते विधिः । यस्यैव पुरुषस्योपमर्दितः प्रत्ययो ब्रह्मक्षत्त्राद्यात्मविषयस्तस्य

तत्रैव लिङ्गान्तरमाह—मैत्रेय्यै चेति । न हि मैत्रेयी भर्तरि त्यक्तकर्मणि स्वयं कर्माधिकर्तुमर्हति पतिद्वारमन्तरेण भार्यायास्तदनधिकारात् । तथाच तस्यं कर्मशून्यायं मुक्तेः साधनत्वेन विद्योपदेशात्कर्मत्याग स्तदङ्गत्वेन ध्वनित इत्यर्थः । तत्रैव हेत्वन्तरमाह—वित्तेति । किमहं तेन कुर्यामिति वित्तं निन्द्यते । अतश्च तत्साध्यं कर्म ज्ञानसहायत्वेन मुक्तौ नोपकरोतीत्यर्थः । तदेव विवृणोति—यदि हीति । तन्निन्दावचनमित्यत्र तच्छब्देन वित्तमुच्यते । स्वपक्षे वा कथं निन्दावचनमिति तत्राऽऽह—यदि त्विति । किंच ब्राह्मणोऽहं क्षत्त्रियोऽहमित्याद्यभिमानस्य कर्मानुष्ठाननिमित्तस्य निन्दया सर्वमिदमात्मैवेति प्रत्यये श्रुतेस्तात्पर्यदर्शनाद्विद्याङ्गत्वेन संन्यासो विधित्सित इत्याह—कर्माधिकारेति । ननु जात्यादि विधौ कर्मानुष्ठानमशक्यमपहारयितुमत आह—न हीति । ननु वर्णाश्रमाभिमानवतः संन्यासोऽपीष्यते स कथं तदभावे संभवेत्तत्राऽऽह—यस्यैवेति । अयंप्रागस्येत्य-

षष्ठ अध्याय की समाप्ति मे लिङ्ग होने से स्पष्ट होता है । तभी तो कर्मकाण्डी होते हुए भी याज्ञवल्क्य ने सन्यास ग्रहण कर लिया ।

इसके अतिरिक्त मैत्रेयी के प्रति, जो कर्मात्मक साधन से रहित थी, अमृतत्व के साधनरूप से ब्रह्मविद्या का उपदेश किये जाने से एव वित्तसाध्य कर्मो की निन्दा किये जाने से भी यही स्पष्ट होता है । क्योकि यदि कर्मानुष्ठान ही *अमृतत्व का साधन होता तो वित्त से सम्पन्न होने वाले कर्मों के लिए* उसकी निन्दाज्ञापक श्रुतियाँ व्यर्थ हो जाती । कर्मो मे साध्यभूत वित्त की निन्दा करनी तो तभी उपयुक्त ठहराई जा सकती है जबकि कर्मो का (स्वरूपत) त्याग करना ही अभिमत हो । इसके अतिरिक्त "ब्राह्मणजाति उस पुरुष को *परास्त कर देती है, जो आत्मा से भिन्न ब्राह्मणजाति को* समभता है ", "क्षत्रियजाति उसे परास्त कर देती है, जो क्षत्रियजाति को आत्मा से भिन्न समभता है" इत्यादि श्रुतिवाक्य से कर्माधिकार के निमित्तभूत वर्णाश्रमादिप्रत्यय के प्रतिषेध हो जाने से भी उपरोक्त मत की पुष्टि होती है । ब्रह्मक्षत्रादि मे आत्मत्व अध्यास के निवृत्त हो जाने पर "यह ब्राह्मण

१. कर्मात्मसाधनरहितायै । २ वित्तसाध्यकर्मणि तात्पर्यम् । ३. प्रतिषेधात् । ४. शपत् । ५. बृ० उ० २।४।६ । ६. ब्रह्मक्षत्त्रादिष्वात्मत्वाध्यासनिवृत्तौ । ७ नियोज्याभावात् । ८. ब्रह्मणोऽहमित्यादि. । ९. सन्यासस्य ज्ञानपरिपाकाङ्गत्वे । १० कर्मण्यधिकार लब्धुम् । ११ त विना तस्यान्तनाधिकाराभावे च । १२. तदङ्गत्वेन । तदुक्त वार्तिकसारे—"विज्ञानसाधनत्वेन मैत्रेयी वित्तमत्यजत् । तत्यागे धीसमाधानाज्ज्ञाने स्यादधिकारिता ॥ चतुर्थ आश्रमो नार्या नाऽस्ति चेन्माऽस्त्वथाप्यमौ । ज्ञानाङ्ग सर्वमन्त्यागमर्हत्येवाऽनिषेधनात्" ॥ १२-१३ ॥ इति भावः । १३. निन्दावचनादेव । १४. संग्रहवाक्यमेव । १५. कर्मानुष्ठानस्य ।

**'मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ १ ॥**

अरी मैत्रेयी ! ऐसा याज्ञवल्क्य नामक ऋषि ने अपनी भार्या से कहा—मैं अपने इस गार्हस्थ्य जीवन से ऊपर उठकर सन्यास आश्रम मे जाना चाहता हूँ (अतः इस विषय मे तेरी अनुमति चाहता हूँ) अपनी इस दूसरी भार्या कात्यायनी के साथ तेरा बँटवारा भी कर देता हूँ (तत्पश्चात् मैं चला जाऊँगा) ॥१॥

---

तत्प्रत्ययसंन्यासा'त्तत्कार्याणां कर्मणां कर्मसाधनानां चार्थप्राप्तश्च संन्यासः । 'तस्मादात्म'ज्ञानाङ्गत्वेन संन्यासविधिरसयैवाऽऽख्यायिकेयमारभ्यते ।

मैत्रेयीति होवाच याज्ञवल्क्यो मैत्रेयीं स्वभार्यामा'मन्त्रितवान्याज्ञवल्क्यो नाम ऋषिः । उद्यास्यन्नूर्ध्वं यास्यन्पारिव्राज्याख्यमाश्रमान्तरं वा अर इति संबोधनमहमस्मा-

---

वधारणार्थश्चकारः । 'प्रयोजकज्ञानवतो वैधसंन्यासाभ्युपगमादविरोध इति भावः । आत्मज्ञानाङ्गत्वं संन्यासस्य श्रुतिस्मृतिन्यायसिद्ध चेत्किमर्थमियमाख्यायिका प्रणीयते तत्राऽऽह—तस्मादिति । विध्यपेक्षितार्थवादसिद्ध्यर्थमाख्यायिकेति भावः ।

भार्यामामन्त्र्य किं कृतवानिति तदाह—उद्यास्यन्निति । वैशब्दोऽप्यवधारणार्थः । आश्रमान्तर

---

का कर्तव्य है", "यह क्षत्रिय का कर्तव्य है" इन विधिवाक्यो मे आत्मा से नियोज्य का अभाव होने से विधान की सार्थकता नही रह जाती । जिस पुरुष का भी "मैं ब्राह्मण हूँ, मैं क्षत्रिय हूँ" इत्यादिरूप प्रत्यय निवृत्त हो गया, उसे उस प्रत्यय की निवृत्ति हो जाने से स्वभावत ही उस प्रत्यय के प्रयोज्य कार्य-कर्मों का एव कर्म के साधनो का सन्यास प्राप्त हो जाता है । इसलिए आत्मज्ञान के अङ्गस्वरूप से एव (ज्ञानसन्याससमुच्चय होने के कारण) सन्यास का विधान करने की इच्छा से ही यह आख्यायिका प्रारम्भ की जाती है ।

"मैत्रेयी होवाच याज्ञवल्क्य" अर्थात् याज्ञवल्क्यनामक ऋषि ने अपनी भार्या मैत्रेयी को सबोधित किया । मैं यहाँ से "उद्यास्यन्" अर्थात् ऊपर के पारिव्राज्यसज्ञक आश्रमान्तर मे जाने वाला हूँ ।

---

१. "अपोदित समारोप इत्येव ब्राह्मणत्रये । आत्मेत्येवेति सूत्रार्थो ब्राह्मणेऽस्मिन्नुदीर्यते" ॥वा० सा० २।४।१॥ सूत्रार्थोऽखण्डार्थरूप । २. यथोक्तप्रत्ययप्रयोज्यानाम् । ३. सन्यासज्ञानाङ्गत्वस्य श्रुत्यादिसिद्धत्वात् । ४. ज्ञानसन्याससमुच्चयस्याप्युपलक्षणमिदम् । ५. सबोधितवान् । सति भार्यादौ तदनुमतिपूर्वकमेव क्रमसन्यासस्य श्रुतिविहितत्वाद्युक्तमामन्त्रणम् । श्रुतिश्चेयम्—"मातर पितर भार्या पुत्रान् सुहृदो बन्धूनेताननुमोदयित्वा ये चास्यर्त्विज तान् सर्वान् पूर्ववद्वृणीत्वा वैश्वानरीमिष्टिं कृत्वा सर्वस्व दद्यादिति" कौषीतकिनाम् ॥ ६. प्रयोजकेति—प्रयोजकज्ञानम् आनन्दाद्वयात्मप्रतिपादकवाक्यजन्यमापातज्ञानम् । तत्त्व चाप्रामाण्यशङ्कास्पदत्वम् । सशयाद्यविरोधित्वमिति यावत् । ब्राह्मण प्रव्रजेद्गृहादिति श्रुत्वा ब्राह्मणोऽहमिति प्रयोजकज्ञानवान् विधितः प्रव्रजेत् । गलिताभिमानस्त्वर्थादित्यपि केचित् ।

## सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता

तब उस मैत्रेयी ने कहा—हे भगवन् ! यदि यह धन-धान्य से सम्पन्न सम्पूर्ण पृथिवी मुझे प्राप्त हो जाय तो क्या मैं उससे अमर हो सकती हूँ ? याज्ञवल्क्य ने कहा—नहीं-नहीं । धन से अमृतत्व

---

द्गार्हस्थ्यात्स्थानादाश्रमादूर्ध्वं गन्तुमिच्छन्नस्मि भवामि । 'अतो हन्तानुमतिं प्रार्थयामि ते तव । किंचान्यत्ते तवानया द्वितीयया भार्यया कात्यायन्याऽन्तं विच्छेदं करवाणि । पतिद्वारेण युवयोर्मया संबध्यमानयोर्यः संबन्ध आसीत्तस्य 'संबन्धस्य विच्छेदं करवाणि द्रव्यविभागं कृत्वा 'वित्तेन संविभज्य युवां गमिष्यामि ॥१॥

सैवमुक्ता होवाच यद्यदि न्विति वितर्के मे ममेयं पृथिवी भगो भगवन्सर्वा 'सागर-

---

यास्यन्नेवाहमस्मीति संबन्धः । यथोक्तेच्छानन्तरं भार्यायाः 'कर्तव्यं दर्शयति—अत इति । सति भार्यायो संन्यासस्य तदनुज्ञापूर्वकत्वनियमादिति भावः । कर्तव्यान्तरं कथयति—किंचेति । मावयोर्विच्छेदः स्वाभाविकोऽस्ति किं तत्र कर्तव्यमित्याशङ्क्याऽऽह—पतिद्वारेणेति । त्वयि प्रव्रजिते स्वयमेवाऽऽवयोर्विच्छेदो भविष्यतीत्याशङ्क्याऽऽह—द्रव्येति । 'वित्ते तु न स्त्रीस्वातन्त्र्यमिति भावः ॥ १ ॥

मैत्रेयी मोक्षमेवापेक्षमाणा भर्तारं प्रत्यानुकूल्यमात्मनो दर्शयति—सैवमिति । कर्मसाध्यस्य

---

"अरे" यह पद सम्बोधन के लिए प्रयुक्त है । "अहमस्मात्स्थानात्" यानी मैं इस गृहस्थाश्रम से ऊपर अन्य आश्रम में जाने के लिए इच्छुक "अस्मि" यानी हूँ । अतः (ऊपर जाने की उत्कट इच्छा होने से) "हन्त ते" यानी तेरी अनुमति की प्रार्थना हूँ । इसके सिवा यह भी चाहता हूँ कि "अनया कात्यायन्याऽन्त करवाणीति" अर्थात् अपनी इस दूसरी भार्या के साथ तुम्हारा (द्रव्य) विभाजन भी करवा दूँ । सपत्नीभाव से मुझसे सम्बद्ध हुई तुम दोनों का पतिद्वार से जो सम्बन्ध था, अब द्रव्य विभाजन करके मैं उस सम्बन्ध का विच्छेद कर दूँगा । "अपनी अपनी अनुरूप वृत्ति के अनुसार विभाग करके संन्यास ग्रहण करे" इस शास्त्रोक्ति से (प्रेरित होकर) धन के द्वारा तुम दोनों का विभाजन कर मैं सन्यास मार्ग में प्रवृत्त हो जाऊँगा ॥१॥

इस प्रकार कहे जाने पर वह मैत्रेयी बोली—"यन्नु म इय भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्" यानी यदि सागर से परिवेष्टित तथा धन से पूर्ण सारी पृथिवी मेरी हो जाय, तो भी क्या मैं अमर

---

१. किम् । २. उद्गमनोत्कटेच्छाया सत्त्वात् । ३. सपत्नीत्वरूपस्येत्यर्थं । ४. स्वान् अनुरूपाभिर्वृत्तिभिः सविभज्य संन्यस्येदिति शास्त्रं चात्र नियामकमिति भावः । ५. सागरपरिवेष्टिता । ६. यद्वा पत्या भार्यायां यत्कर्तव्यं तत् सम्मतिप्रदानाख्यम् । ७. नन्वावामेव वित्तं सविभक्ष्यावहे त्वया संन्यस्यतामित्यत्राह—वित्ते त्विति । तदुक्तं वार्तिके—"निस्वा स्त्री स्ववता पुंसा नियुक्ता कर्मसंपदि । मयि प्रव्रजिते तस्माद्युवयोर्नार्यंसगति." ॥ ४३ ॥ इति । "भार्या पुत्रश्च दासश्च त्रयस्ते निर्धनाः स्मृताः । यं ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्" ॥ इति स्मृतेश्च । यमर्थं ते भार्यादयः समधिगच्छन्ति लभन्ते तदपि धनं तस्यैव भवति स्वामिनः यस्यैव ते स्वभूता इत्यर्थः । अथ तर्हि इमा कर्मण्यधिक्रियते तत्राऽऽह—स्ववतेति ॥

**स्यामिति नेति होवाच याज्ञवल्क्यो यथैवो-
पकरणवतां जीवितं तथैव ते जीवितꣳ स्यादमृ-
तत्वस्य तु नाऽऽशाऽस्ति ¹वित्तेनेति ॥ २ ॥**

की आशा नहीं की जा सकती है। उससे तो केवल इतना ही होगा कि जैसे विपुल भोगसामग्री से युक्त पुरुष का जीवन होता है; वैसा ही तेरा भी जीवन होगा ॥२॥

---

परिक्षिप्ता वित्तेन धनेन पूर्णा स्यात्कथं ²न कथंचनेत्याक्षेपार्थः प्रश्नार्थो वा, तेन पृथिवी-पूर्णवित्तसाध्येन कर्मणाऽग्निहोत्रादिनाऽमृता किं स्यामिति व्यवहितेन संबन्धः। प्रत्युवाच याज्ञवल्क्यः। कथमिति यद्याक्षेपार्थं³मनुमोदनं नेति होवाच याज्ञवल्क्य इति। प्रश्नश्चे-त्प्रतिवचनार्थं नैव स्या अमृता किं तर्हि यथैव लोक उपकरणवतां साधनवतां जीवितं सुखोपभोगसंपन्नं तथैव तद्वदेव तव जीवितं स्याद⁴मृतत्वस्य तु नाऽऽशा मनसाऽप्यस्ति वित्तेन वित्तसाध्येन कर्मणेति ॥२॥

---

गृहप्रासादादिवन्नित्यत्वानुपपत्तिराक्षेपनिदानम्। कथंशब्दस्य प्रश्नार्थत्वपक्षे वाक्यं योजयति—तेनेति। कथं तेनेत्यत्र ⁵कथंशब्देन किमहं तेनेत्य⁶त्रयं किंशब्दमु⁷पादाय वाक्यं योजनीयम्। ⁸वित्तसाध्यस्य कर्मणोऽमृतत्वसाधनत्वमात्रासिद्धौ तत्प्रकारप्रश्नस्य निरवकाशत्वादित्यर्थः। मुनिरपि भार्याहृदयाभिज्ञः संतुष्टः सत्याक्षेपं प्रश्नं च प्रतिवदतीत्याह—प्रत्युवाचेति। वित्तेन ममामृतत्वाभावे सर्वकिंचित्करत्वनादे-यमित्याशङ्क्याऽऽह—किं तर्हीति ॥ २ ॥

---

हो सकती हूँ? "नु" वितर्क के अर्थ में अव्यय है, अर्थात् किसी प्रकार भी नहीं हो सकती। इस प्रकार 'कथं'शब्द क्षेपार्थ अथवा प्रश्नार्थ के लिए प्रयुक्त है। इससे सम्पूर्ण पृथिवी के वित्त से साध्य अग्नि-होत्रादि कर्म से क्या मैं अमर हो जाऊँगी, इसका व्यवहित पदों से सम्बन्ध है। इसका उत्तर याज्ञवल्क्य ने निषेध में दिया। यदि मन्त्रस्थ 'कथम' पद को क्षेपार्थक माना जाय तब "न इति" पद से याज्ञवल्क्य ने अनुमोदन किया है और यदि उसे प्रश्नार्थक माना जाय तो यह प्रत्युत्तर के लिए है अर्थात् यदि तू उससे अमर न हो सकी तो क्या होगा। "यथैव" अर्थात् जिस प्रकार लोकव्यवहार में 'उपकरणवताम्" यानी साधनसम्पन्न मनुष्यों का जीवन सुख के साधनभूत भोग में आसक्त रहता है, वैसा ही तेरा जीवन भी हो जायगा। "वित्तेन" अर्थात् धनसाध्य कर्म से अमृतत्व की आशा तो मन से

---

१. वित्तसाध्यकर्मणेत्यभिप्रायः। २ आक्षेपपक्षे कथशब्दस्यार्थमाह—नेति। प्रश्ने तमाह—कथचनेति। ३. सदा न इति अनुमोदनमुवाच याज्ञवल्क्य इत्यन्वयः। ४. अमृतत्वस्य त्विति—अविद्यामात्रविध्वंसाज्ज्ञाना-देवामृत यत. अमृतत्वस्य नाशाऽपि वित्तसाध्येन कर्मणेति पञ्चमीद्वय समानाधिकरणम्। ५. कथशब्देनेति—उत्तरवाक्यानुसारेण कथशब्दस्य स्थाने किंशब्द प्रयुज्येति यावत्। ६. अग्रिमकण्डिकास्थम्। ७. तत्समानार्थकमुपेत्येत्यर्थः। ८. ननु संभवति प्रकारार्थत्वे किमिति कथशब्देन किंशब्द उपादीयते तत्राऽऽह—वित्तसाध्यस्येति।

स होवाच मैत्रेयी येनाहं नामृता स्यां किमहं
तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥३॥
स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती
प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते
व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ४ ॥

तब उस मैत्रेयी ने कहा—जिस धन से मैं अमर नही हो सकती, उसे लेकर मैं क्या करूँगी। भगवान् जो कुछ अमरत्व का साधन जानते हैं, उसी का उपदेश मुझे भी करे ॥३॥

तब यह याज्ञवल्क्य बोले—धन्यवाद, अरी प्रिया ! तू पहले भी हमारी प्रिया रही है और इस समय भी अनुकूल बात ही कह रही है, अत बहुत ठीक है ! आ, यहाँ पर बैठ जा, मैं तुझे अमरत्व के साधन की व्याख्या सुनाऊँगा। तत्पश्चात् व्याख्यान किये हुये वाक्यो के अर्थ का भलीभाँति चिन्तन करना अर्थात् मनन एव निदिध्यासन करना ॥४॥

---

सा होवाच मैत्रेयी । एवमुक्ता प्रत्युवाच मैत्रेयी यद्येवं येनाहं नामृता स्यां किमहं तेन वित्तेन कुर्यां यदेव भगवान्केवलममृतत्वसाधनं वेद तदेवामृतत्वसाधनं मे मह्यं ब्रूहि ॥३॥

स होवाच याज्ञवल्क्यः । एवं वित्तसाध्येऽमृतत्वसाधने प्रत्याख्याते याज्ञवल्क्यः स्वाभिप्रायसंपत्तौ तुष्ट आह । स होवाच प्रियेष्टा बतेत्य[1]नुकम्प्याऽऽह । अरे मैत्रेयि

---

वित्तस्यामृतत्वसाधनत्वाभावमधिगम्य तस्मिन्नास्था त्यक्त्वा मुक्तिसाधनमेवाऽऽत्मज्ञानमात्मार्थं दातुं पति नियुञ्जाना ब्रूते—सा हेति ॥ ३ ॥

भार्यापेक्षितं मोक्षोपायं विवक्षुस्तामादौ [2]स्तौति—स हेत्यादिना । वित्तेन साध्यं कर्म तस्मिन्नमृतत्वसाधने [3]शङ्किते किमहं तेन कुर्यामिति भार्ययाऽपि प्रत्याख्याते सतीति यावत् । स्वाभिप्रायो न कर्म मुक्तिहेतुरिति तस्य भार्याद्वाराऽपि सपत्तौ सत्यामित्यर्थः ॥ ४ ॥

---

भी सभव नही है ॥२॥

"सा होवाच मैत्रेयी" अर्थात् इस प्रकार कहे जाने पर मैत्रेयी ने उत्तर दिया। यदि ऐसा है तो जिस धन से मैं अमृतत्वलाभ नही कर सकती, उसका मैं क्या करूँगी। इसलिए भगवन् ! जो कुछ आप केवल अमृतत्वलाभ का साधन जानते है, वही अमृतत्वप्राप्ति का साधन मेरे प्रति कहिये ॥३॥

"स होवाच याज्ञवल्क्य" अर्थात इस प्रकार वित्तसाधन कर्म अमृतत्वसाधन मे पर्याप्त हैं, इस शङ्का का नकारात्मक उत्तर स्वय भार्या द्वारा दिये जाने पर जो कि उसे भी प्रतिपादित करना इष्ट

---

१. अनुकम्प्येति—ल्यबन्तेन बतशब्दार्थो दर्शित । २. तस्या वैराग्य दृष्ट्वा तुष्टस्य पत्युस्तद्विषयास्तुतिरिष्टेति बोध्यम् । ३ अमृतत्वसाधनत्वेन तस्मिन्शङ्किते सतीत्यर्थ. ।

**स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया**

याज्ञवल्क्य बोले—अरी मैत्रेयी! इसमे कुछ भी सन्देह नही है कि पति के प्रयोजन के लिए पति प्रिय नही होता, किन्तु अपने ही प्रयोजन के लिये स्त्री को पति प्रिय होता है। वैसे ही स्त्री के प्रयोजन के लिये पति को स्त्री प्यारी नही होती, किन्तु अपने ही प्रयोजन के लिए स्त्री प्यारी होती है। पुत्रो के प्रयोजन के लिये पुत्र प्यारे नही होते, किन्तु अपने ही प्रयोजन के लिये पुत्र प्यारे होते हैं। धन के प्रयोजन के लिये धन प्रिय नही होता, अपितु अपने ही प्रयोजन के लिये धन प्रिय होता है।

---

नोऽस्माकं पूर्वमपि प्रिया सती भवन्तीदानीं प्रियमेव चित्तानुकूलं भाषसे। अत एह्यास्स्वोपविश व्याख्यास्यामि यत्ते तवेष्टममृतत्वसाधनमात्मज्ञानं कथयिष्यामि। व्याचक्षाणस्य तु मे मम व्याख्यानं कुर्वतो निदिध्यासस्व वाक्यान्यर्थतो निश्चयेन [1]ध्यातुमिच्छेति ॥४॥

स होवाच याज्ञवल्क्योऽमृतत्वसाधनं [2]वैराग्यमुपदिदिक्षुर्जायापतिपुत्रादिभ्यो [3]विराग-

---

अमृतत्वसाधनमात्मज्ञानं विवक्षितं चेदात्मा वा अरे द्रष्टव्य इत्यादि वक्तव्यं किमित न वा अरे पत्युरित्यादि वाक्यमित्याशङ्क्याऽऽह—जायेति। उवाच जायादीनामा[4]स्मार्थत्वेन प्रियत्वमात्मन-

---

था, याज्ञवल्क्य ने संतुष्ट होकर कहा। मूल श्रुति मे 'बत' शब्द का अर्थ है कि अनुकम्पापूर्वक बोले—हे मैत्रेयी! तू हमारी "प्रिया" यानी इष्टा है। पूर्व (गृहस्थाश्रम) काल मे प्रिय होकर इस समय (प्रव्रजनकाल मे) भी हमारे अनुकूल कर रही है। इसलिए आओ, "आस्स्व" यानी बैठ जाओ। मैं तुम्हारी रुचि के अनुसार अमृतत्वप्राप्ति के साधनस्वरूप आत्मज्ञान का 'व्याख्यास्यामि" यानी उपदेश करूँगा। "व्याचक्षाणस्य तु मे" अर्थात् मेरे द्वारा सुने हुए उपदेश का "निदिध्यासस्व" गम्भीरार्थ होने के कारण उनके अर्थों को निश्चयपूर्वक ध्यान करो ॥४॥

याज्ञवल्क्य ने कहा—उपदेश की इच्छा से जाया, पति एवं पुत्रादि का त्याग करने के लिए वैराग्य उत्पन्न कराया जाता है। मूलमन्त्र "न वा" मे "वै" शब्द प्रसिद्ध अर्थ को स्मरण कराने के लिए है

---

१. गम्भीरार्थत्वात्तेषामिति भाव। २ वैराग्यमित्यधिकम्। ३. विरागमिति—"आब्रह्मणोऽस्मात्संसाराच्छुद्धधीर्न विरज्यते। यावत्तावन्न विद्याया अधिकारी भवेन्नर." ॥ वा. ७२ ॥ इत्युक्ते.॥ शुद्धधी. अन्यार्थधारणनिपुणोऽपीति यावत्। ४. आत्मीयतया आत्मशेषत्वेनेति यावत्।

भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्त्रस्य कामाय क्षत्त्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्त्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु

ब्राह्मण के प्रयोजन के लिये ब्राह्मण प्रिय नही होता, किन्तु अपने ही प्रयोजन के लिये ब्राह्मण प्रिय होता है। क्षत्रिय के प्रयोजन के लिये क्षत्रिय प्रिय नही होता, किन्तु अपने ही प्रयोजन के लिये क्षत्रिय प्रिय होता है। लोको के प्रयोजन के लिये लोक प्रिय नही होते, किन्तु अपने ही प्रयोजन के लिये लोक प्रिय होते है। देवताओ के प्रयोजन के लिये देवता प्रिय नही होते, किन्तु अपने ही प्रयोजन के लिये

---

मुत्पादयति [1]तत्संन्यासाय । न वै । वैशब्दः प्रसिद्धस्मरणार्थः । प्रसिद्धमेवैतल्लोके । पत्युर्भर्तुः कामाय प्रयोजनाय जायायाः पतिः प्रियो न भवति किं तर्ह्यात्मनस्तु कामाय प्रयोजनायैव भार्यायाः पतिः प्रियो भवति । तथा न वा अरे जायाया इत्यादि समानमन्यत् । न वा अरे पुत्राणाम् । न वा अरे वित्तस्य । न वा अरे ब्रह्मणः । न वा अरे क्षत्त्रस्य । न वा अरे लोकानाम् । न वा अरे देवानाम् । न वा अरे भूतानाम् । न वा अरे सर्वस्य । पूर्वं पूर्वं

---

श्वानौपाधिकप्रियत्वेन परमानन्दत्वमिति शेषः । प्रतीकमादाय व्याचष्टे—न वा इति । किं तन्निपातेन स्मार्यते तदाह—प्रसिद्धमिति । यथोक्ते [2]क्रमे नियामकमाह—पूर्वं पूर्वमिति । यद्यदासन्नं प्रीतिसाधनं

---

यानी यह लोकव्यवहार मे प्रसिद्ध ही है। 'पत्यु' यानी भर्ता के 'कामाय" यानी प्रयोजन के लिए "पति." अर्थात् जाया को पति प्रिय नही होता। तो फिर कैसे होता है? "आत्मनस्तु कामाय" अर्थात् अपने ही प्रयोजन के लिए ही भार्या को पति प्रिय होता है। इसी प्रकार आगे मन्त्र मे "न वा अरे जायायै" यानी जाया के प्रयोजन के लिए पति को जाया प्रिय नही होती इत्यादि रूप अर्थ उपरोक्त के समान समझ लेना चाहिए। जैसे कि पुत्रो के प्रयोजन के लिए पुत्र प्रिय नही होते, वित्त के प्रयोजन के लिए वित्त प्रिय नही होता, ब्राह्मण के प्रयोजन के लिए ब्राह्मण प्रिय नही होता, क्षत्रिय के प्रयोजन के लिए क्षत्रिय प्रिय नही होता, लोको के प्रयोजन के लिए लोक प्रिय नही होते, देवताओ के प्रयोजन के लिए देवता प्रिय नही होते, भूतो व सब के प्रयोजन के लिए भूत व सब प्रिय नही होते; जो-जो प्रीति के निकटतम सम्बन्ध मे जुड़े है, उनका क्रम से पूर्व-पूर्व उपदेश किया गया है। यथाक्रम प्रीति के

---

१. तत्त्यागायेत्यर्थः। २. पूर्वं पतिस्ततो जाया इत्येवं वचनक्रम इत्यर्थः।

कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । [१]आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो [२]मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥ ५ ॥

देवता प्रिय होते हैं। भूतों के प्रयोजन के लिये भूत प्रिय नहीं होते, किन्तु अपने ही प्रयोजन के लिये भूत प्रिय होते हैं। किंबहुना सबके प्रयोजन के लिये सब प्रिय नहीं होते, किन्तु अपने ही प्रयोजन के लिये सब प्रिय होते हैं। अरी मैत्रेयी! निःसन्देह यह आत्मा ही दर्शन के योग्य है, इसे (आचार्य तथा शास्त्र द्वारा पहले) श्रवण करना चाहिए, (तत्पश्चात् तर्क द्वारा) मनन करना चाहिये तथा निदिध्यासन करना चाहिये। हे मैत्रेयी! इस आत्मतत्त्व के दर्शन, श्रवण, मनन तथा विज्ञान से ये सभी विज्ञात हो जाते हैं (क्योंकि लोक में अधिष्ठान रज्ज्वादि के ज्ञान से अध्यस्त सर्पादि विज्ञात होते देखे गये हैं) ॥५॥

---

[३]यथासन्ने प्रीतिसाधने वचनम् । तत्र तत्रेष्टतरत्वाद्वैराग्यस्य । सर्वग्रहणमुक्तानुक्तार्थम्, ।

---

तत्सदनतिक्रम्य तस्मिन् विषये पूर्वं पूर्वं वचनमिति योजना । तत्र हेतुमाह—तत्रेति । न वा अरे सर्वस्येत्यपुक्त पत्यादीनामुक्तत्वावशेन पुनरुक्तिप्रसङ्गादित्याशङ्क्याऽऽह—सर्वग्रहणमिति । उक्तवदनु-

---

साधना का त्याग करना ज्यादा अच्छा है। (पत्यादिनिरूपण के बाद) सर्व का ग्रहण इसलिए किया,

---

१ आत्मेति । "अविचारेण पुत्रादौ या प्रीतिस्तां विचारतः । आत्मन्येवोपसंहृत्य चित्तैकाग्र्य विवर्द्धयत् ॥ ऐकाग्र्यमचलं कृत्वा निदिध्यासनकारणम् । आत्मा द्रष्टव्य इत्येतत्सूत्रं व्याख्यातुमाददे ॥ वा० सा० २५-२६ ॥ 'आत्मा प्रत्यक्प्रसिद्धः स्यात्तत्रैवाऽऽत्माऽनुभूतितः । इति प्रमेयनिर्देशो द्रष्टव्य इति तत्प्रमा ॥ आत्मबुद्धिरियं तावत्सर्वेषां जायते स्वतः । अप्राप्ता सम्यगात्मेति सैवातो धीर्विधीयते ॥ वा० ६५ ६६ ॥ "अज्ञातज्ञापनं सर्वप्रत्ययेनाभिधीयते । अप्रवृत्तप्रवृत्तिश्च न्यायाभावान्न युज्यते ॥ अज्ञात आत्मा वेदान्तजन्यज्ञानेन मीयते । इत्ययं धोऽत्र वाक्यार्थो नाऽप्रवृत्तप्रवर्तनम् ॥ वा० सा० २८ २९ ॥ आत्मशब्दार्थमाह—आत्मेति । प्रतीच्यात्मशब्दस्य प्रसिद्धिं साधयति—सर्वेति । वाच्यार्थमुक्त्वा विवक्षितमाह—इतीति । प्रतीच्यात्मनि प्रमेये वैदिकं दर्शनम् (ज्ञानम्) इत्येतदत्र विवक्षितमित्यर्थः ॥ २ हे मैत्रेयि श्रवणेन श्रवणोत्पन्नेन मत्या मननेन विज्ञानेन निदिध्यासनेन च दृष्टेनैतेनात्मनो वै दर्शनेन साक्षात्काररूपेणेदं सर्वं स्थावराद्यात्मकमखिलं विदितमेवेत्यर्थः । अत्र परामर्श (अनुवाद) वाक्ये दर्शनादि स्वशब्देनैवानूदितं निदिध्यासनं च विज्ञानशब्देन । तत्रायमभिप्रायः, यत् श्रवणादिसाधनसहवर्तिनिदिध्यासनं ध्यानं मात्रं हि अपितु ध्यानसहितश्रवणादिफलभूतं वाक्यार्थविज्ञानमिति ध्यानस्य साधनत्वं तु समाहितो भूत्वेत्यादि श्रुतिसिद्धमेवेत्यादि स्पष्टं वार्तिके । ३ यथासन्ने प्रीतिसाधने ।

[1]तस्माल्लोकप्रसिद्धमेतदात्मैव प्रियो नान्यत् । तदेतत्प्रेयः पुत्रादित्युपन्यस्तं तस्यै-[2]तद्वृत्तिस्थानीयं प्रपञ्चनम्[3] । [4]तस्मादात्मप्रीतिसाधनत्वाद्गौण्यन्यत्र प्रीतिरात्मन्येव मुख्या । [5]तस्मादात्मा वा अरे द्रष्टव्यो दर्शनार्हो [6]दर्शनविषयमापादयितव्यः श्रोतव्यः [7]पूर्वमाचार्यत आगमतश्च । पश्चान्मन्तव्यस्तर्कतः । ततो निदिध्यासितव्यो [8]निश्चयेन ध्यातव्यः । एवं

ज्ञानमपि ग्रहणं कर्तव्यं न च सर्वे विशेषतो ग्रहीतुं शक्यन्ते तेन सामान्यार्थं सर्वपदमित्यर्थः । सर्वपर्यायेषु सिद्धमर्थमुपसंहरति—तस्मादिति । ननु तृतीये प्रियत्वमात्मन आख्यातं तदेवात्रापि कथ्यते चेत्पुनरुक्तिः स्यात्तत्राऽऽह—तदेतदिति । प्रयोऽपन्यासविवरणाभ्यां प्रीतिरात्मन्येवेत्ययुक्तं पुत्रादावपि तद्दर्शनादत आह—तस्मादिति । आत्मनो निरतिशयप्रीत्यास्पदत्वेन परमानन्दत्वमभिधायो-त्तरवाक्यमादाय व्याचष्टे—तस्मादित्यादिना । कथं पुनरिदं दर्शनमुत्पद्यते तत्राऽऽह—श्रोतव्य इति । श्रवणादीनामन्यतमेनाऽऽत्मज्ञानलाभात्किमिति सर्वेषाम[?]ध्ययनमित्याशङ्क्याऽऽह—एव- हीति ।

जिससे पत्यादि से अतिरिक्त न कहे हुए प्रिय साधनों का बोध हो जाय । जायादि सभी अनात्म-पदार्थों का आत्मा के प्रयोजन के लिए प्रिय न होने के कारण लोकप्रसिद्ध यह आत्मा ही प्रिय है; दूसरी कोई वस्तु नहीं । (प्रथम अध्याय चतुर्थ ब्राह्मण के आठवें मन्त्र में) पहले कहा गया है कि आत्मतत्त्व पुत्र से बढ़ कर प्रिय है, उसी पूर्वप्रतिपादित संक्षिप्त व्याख्यान को यहाँ विस्तार से बतला दिया । इसलिए (सर्वत्र केवल आत्मप्रयोजन के लिए प्रियता का उल्लेख होने के कारण) आत्म-प्रीति का साधन होने से से अन्यत्र प्रीति गौणी है, आत्मा के प्रयोजन के लिए प्रीति ही मुख्या है । इसलिए (आत्मा के परमा-नन्दस्वरूप होने से) आत्मा ही "द्रष्टव्यः" अर्थात् प्रत्यक्ष करने के अनुरूप है अथवा साक्षात् ही प्राप्त करने योग्य है, "श्रोतव्यः" यानी पहले आचार्यमुख एवं शास्त्रप्रतिपादित ज्ञान से श्रवण करने योग्य है, फिर "मन्तव्यः" यानी तर्क से मनन करने योग्य है । उसके बाद "निदिध्यासितव्यः" निश्चयपूर्वक

१. जायादिसर्वानात्मवर्गस्यात्मार्थत्वेन प्रियत्वात् । २. बृ० उ० १।४।८ । ३. इति तस्य प्रियत्व संक्षेपतो व्याख्यातम् । ४. संक्षेपविस्तराभ्यामात्मन्येव प्रीतेरुक्तत्वात् । ५. अनोपाधिकप्रियत्वे नात्मनः परमानन्द-रूपत्वात् । ६. दर्शनविषयमिति—तथा प्रादर्शि वार्तिके तथाहि—"सर्वमात्मेत्यतः पश्येदात्मानात्मविभागवित् । आत्मा द्रष्टव्य इत्युक्त्या ह्युपायोऽत्राभिधीयते" ॥ २११ ॥ वेदान्तोऽप्यप्रवृत्तप्रवर्तनात्मविषयत्वनुपपत्तेर्विवेकी सर्वमात्मेति निश्चिनुयात् । तत्र वाक्यमवतारयति—आत्मेति । स सर्वस्मादिष्टत्वात्परानन्दो दृष्टव्यहस्त ब्रह्मेति विवेकी पश्यतीत्यर्थोऽस्या श्रुतावनेन वाक्येन भातीत्यर्थः । अर्थान्तरासंभव हेतु कर्तुं हिशब्दः ॥ ७. पाठक्रमेण श्रवणादीनां क्रमं प्रदर्शयति—पूर्वमित्यादिना । ८. नैरन्तर्येण सजातीयप्रत्ययप्रवाहविषयतामापादयितव्य इत्यर्थः । ९. जिज्ञासितपदार्थाः । १०. उपनिषदि प्रथमाध्याये । ११. संक्षेपविस्तराभ्याम् । १२. केनोपायेन प्रकारेण वा । १३. निर्वर्तनम् ।

*श्रोतव्य इत्यादि ध्यातव्य इत्यन्तभाष्यरहस्याविष्करणानि वार्तिकान्युपन्यस्यन्ते । तथाहि—"सर्वमान-प्रसक्तौ च सर्वमानफलाश्रयात् । श्रोतव्य इत्यतः प्राह वेदान्तावरुरुत्सया ॥ दर्शनस्याविधेयत्वात्तदुपायो विधीयते । वेदान्तश्रवणं यत्नादुपायस्तर्क एव च ॥ श्रुतिलिङ्गादिको न्यायः शब्दशक्तिविवक्षया । आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते ॥ वस्तुतत्त्वविवक्षेह मन्तव्य इति शासनात् । योगिदन्त्यादिदृष्टौ हि नैव मन्तव्यतादिविधिः ॥ वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते । वाच्यवाचकसंबन्धनियमे तस्य हेतुना ॥ अपरायत्तबोधोऽत्र निदिध्या-

ह्यसौ दृष्टो भवति श्रवणमनननिदिध्यासनसाधनैर्निर्वर्तितैः । यदैकत्वमेतान्युपगतानि तदा सम्यग्दर्शनं ब्रह्मैकत्वविषयं [१]प्रसीदति नान्यथा श्रवणमात्रेण । यद्ब्रह्मक्षत्रादि [२]कर्म-

विध्यनुसारित्वमेवंशब्दार्थः । श्रुतत्वाविशेषा[३]द्विकल्पहेत्वभावाच्च [४]सर्वैरेवाऽऽत्मज्ञानं जायते चेत्तेषां समप्रधानत्वमा[५]ग्नेयादिवदापतेदित्याशङ्क्याऽऽह—यदेति । श्रवणस्य प्रमाणविचारत्वेन प्रधानत्वादङ्गित्वं मनननिदिध्यासनयोस्तु [६]तत्कार्यप्रतिबन्धप्रध्वंसित्वादङ्गत्वमित्यङ्गाङ्गिभावेन यदा श्रवणादीन्यसकृद-नुष्ठानेन समुच्चितानि तदा सामग्रीपौष्कल्यात्तत्त्वज्ञानं [७]फलशिरस्कं सिध्यति । मननाद्यभावे श्रवणमात्रेण नैव [८]तदुपपद्यते । मननादिना प्रतिबन्धाप्रध्वंसे वाक्यस्य फलवज्ज्ञानजनकत्वायोगादित्यर्थः । [९]परामर्शवाक्यस्य तात्पर्यमाह—यदित्यादिना । कर्मनिमित्त ब्रह्मक्षत्रादि सदेव वर्णाश्रमा-

ध्यान करने योग्य है क्योंकि इस प्रकार श्रवण, मनन, निदिध्यासनरूप साधनों से अनुष्ठित यह आत्मा दर्शन का विषय होती है । जब इन सभी साधनों की समष्टिरूप से एकतापूर्वक प्राप्ति की जाती है, तभी ब्रह्मैकत्व विषयक सम्यक्दर्शन होकर (प्रतिबन्धाख्य मल हटकर) चित्त शुद्ध हो जाता है; नहीं तो केवल श्रवणमात्र से चित्त विमल नहीं होता । आत्मा में अविद्या से अध्यस्त ज्ञान के विषय जो

१ प्रसीदति—प्रतिबन्धाख्यमलराहित्येन विमलीभवति फलावसान सिध्यतीति यावत् । २. कर्मणः प्रयो-जकम् । ३ विकल्पे हेत्वभावाच्चेत्यर्थः । ४ समिलितैः । ५ आग्नेयादीति—अग्नीषोमीय आदिग्राह्यः । यथा ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानम् मन्त्रपाठादादावाग्नेयानुष्ठान ततस्तयो समप्रधानत्वमेवमित्यर्थः । ६. श्रवणकार्यतत्त्वज्ञाने योऽसम्भावनादिप्रतिबन्ध । ७ फलावसान सफलमिति यावत् । ८ तत्—फल-शिरस्क ज्ञानम् । ९. अनन्तरवाक्योक्तदर्शनादिपरामर्शकवाक्यस्य ।

तनमुच्यते । पूर्वयोरवधित्वेन तदुपन्यास इष्यते ॥ श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नत । यावद्यथोक्त विज्ञानमाविर्भवति भास्वरम् ॥ आगमाद्दर्शन पूर्वमागमाचार्यतो मति । त्रयाणामपि संगानाच्छास्त्राचार्यात्मना स्थिरम् ॥ प्रतिपत्ति. पुरा शाब्दी यावन्न मनुते श्रुतम् । श्रुत्वा मत्वाऽथ साक्षादात्मान प्रतिपद्यते ॥ अनन्यायत्तविज्ञाने श्रवणादेरपायत । जाते नापेक्षत किंचित्प्रतीचोऽनुभवात्परम्" ॥ २१२-२२१ ॥ इति । द्रष्टव्यवाक्ये तव्यो न विधायक किन्त्वर्हार्थोऽतश्चाऽऽत्मा दर्शनार्ह इति वाक्यार्थमुक्त्वा श्रोतव्यवाक्यमवतारयति —सर्वेति । प्रत्यक्षादिमानफलभूतदृष्टयवष्टम्भादात्मनि सर्वस्य मानस्य तत्कारणत्वेन प्रसक्तावौपनिषदत्वाभावे शङ्किते तन्निरासार्थं वेदान्तानामेवाऽऽत्मदृष्टिहेतुत्वेन स्वीकारेच्छया श्रोतव्य इत्येतदाह श्रुतिस्तस्मात्तदौपनिषद-त्वसिद्धिरित्यर्थ ॥ श्रोतव्यवाक्यार्थमाह—दर्शनस्येति । विधीयमानश्रवणस्याग्निहोत्रवदसकृदनुष्ठेयत्व यस्मादिति श्राव्यते । मन्तव्यवाक्यमादत्ते—उपाय इति ॥ तयोः श्रवणस्वरूपमाह—श्रुतीति । श्रुत्यादिभि शक्तितात्पर्य-निश्चायकैर्न्यायैर्ब्रह्मात्मनि वेदान्ततात्पर्यनिरूपण श्रवणमित्यर्थ । मननस्वरूपमाह—आगमेति । श्रुत्यादिना ज्ञातस्य तत्त्वस्यासम्भावनादिनिरासेन निश्चयार्थं द्वैतमिथ्यात्वसाधको यस्तर्कस्तदनुसंधान मन्तव्य इत्युच्यत इत्यर्थ ॥ वेदान्ता न वस्तुपरा किं तूपास्तिविधिपरा इति केचित्तान्प्रत्याह—वस्त्विति । कथ वेदान्तेषु वस्तुनि तात्पर्यं मननविधिना ज्ञात तत्राऽऽह—यो हीति । यत्र दृष्टिमात्रमिष्ट न वस्तु तत्र तस्य श्रुतस्य न मन्तव्यादि-विधिरत्र तु तद्विधेर्वस्तुनि तात्पर्यं सिद्धमित्यथ । दृष्टान्ते मननविध्यभावसप्रतिपत्त्यर्थो हिशब्द ॥ मननाख्यतर्कस्य मूलत्वात्तस्य सर्वस्याप्रामाण्ये नैषा तर्केणेत्यादि विरुद्धमित्याशङ्क्याऽऽह—वेदेति । अत्रेति श्रुतार्थनिश्चयोक्ति । नैषेत्यवैदिकतर्कनिन्दा तदनुसारितर्काङ्गीकारेऽविरुद्धेत्यपेरर्थ । वैदिकशब्दस्यैव तत्त्वनिश्चायकत्वात्तर्कस्य शुष्कोप-

निमित्तं वर्णाश्रमादिलक्षणमात्मन्यविद्याध्यारोपितप्रत्ययविषयं क्रियाकारकफलात्मकम- 'विद्याप्रत्ययविषय रज्ज्वामिव सर्वप्रत्ययस्तदुपमर्दनार्थमाह—'आत्मनि खल्वरे मैत्रेयि दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं भवति ॥५॥

'वस्याविरूपमात्मन्यविद्ययाऽध्यारोपितस्य प्रत्ययो मिथ्याज्ञान तस्य विषयतया स्थित क्रियाद्यात्मकं तदुपमर्दनार्थमाहेति सबन्ध. । आविद्याध्यारोपितप्रत्ययविषयमित्येतदेव व्याकरोति—अविद्येति। अविद्याजनितप्रत्ययविषयत्वे दृष्टान्तमाह—रज्ज्वामिति ॥ ५ ॥

ब्राह्मण और क्षत्रियादि वर्णाश्रमसज्ञक कर्म का प्रयोजक है, वह क्रियाकारक और फलरूप है तथा रस्सी मे सर्पप्रतीति के समान अविद्यासम्बन्धी ज्ञान का विषय है। उस अध्यास की निवृत्ति के लिए श्रुति कहती है—हे मैत्रेयी ! आत्मा का साक्षात्कार, श्रवण, मनन और विज्ञान होने पर यह सब विदित हो जाता है ॥५॥

इस पर पूर्ववादी शङ्का करता है कि अन्य वस्तु के ज्ञान हो जाने पर उससे भिन्न अन्य वस्तु का बोध कैसे हो जाता है ? (सिद्धान्तवादी उक्त आक्षेप का परिहार करता है—) ऐसे कहने मे कोई दोष नही है क्योकि आत्मा से पृथक् तो कोई वस्तु है ही नही। यदि पृथक् वस्तु होती तो उसकी प्रतीति

१ आविद्यज्ञानविषयमिति यावत् । २ बृ० उ० ४।५।६ । मैत्रेयीब्राह्मणवाक्यीयप्रतीकग्रहणमिदमनयोरेक- वाक्यतासूचनाय । ३ अवस्थादीति—आदिना वयसो ग्रहणम् । वर्णस्य कर्मनिमित्तत्वे 'ब्राह्मणो बृहस्पतिसवेन यजेते'त्यादि शास्त्रम् । आश्रमस्य तन्निमित्तत्वे "गृहस्थ सदृशी भार्यामुपेयादि"त्यादि । अवस्थाया 'अविचि- कित्सितव्याधेरपा प्रवेशो वे'त्यादि । वयसस्तथात्वे 'जातपुत्र कृष्णकेशोऽग्नीनादधीते"त्यादि शास्त्र प्रमाणम् ।

योगस्तत्राऽऽह—वाच्येति । त्वपदवाच्य न देहादि किंतु तत्साक्षी चिदात्मा तत्पदवाच्यमपि न प्रधानादि किंतु सच्चिदानन्दात्मकमद्वय ब्रह्मेत्येवविधो वाच्यवाचकसबन्धनियमस्तत्र तस्य तर्कस्य विनियोगो यद्यपि शब्दस्तत्त्व- निश्चायकस्तथाऽप्यसभावनादिध्वस्त्या मननाख्यतर्कोऽपीतिकर्तव्यत्वेनोपयुज्यते सेतिकर्तव्यताकस्य करणत्वादित्यर्थ ॥ निदिध्यासनस्वरूपमाह—अपरेति । श्रवणमनने शमादियुक्ते कृत्वा स्थितस्य वाक्यार्थज्ञानान्तरायहीनस्यानायासेन वाक्यीयो वाक्यार्थबोधो निदिध्यासनवाक्ये निदिध्यासनमित्युच्यते । द्रष्टव्यवाक्ये तु विचारप्रयोजकमापातिक ज्ञानमुक्तमेतदेव वा साधन विधातुमनूदितमिति भाव । निदिध्यासनोक्तिफलमाह—पूर्वयोरिति ॥ तस्य शमादिमहितश्रवणाद्यवसानभूमित्वमेव स्फोरयति—श्रवणादीति । इह्रेत्यात्मोक्ति । प्रयत्न शमादिसाहित्य तत्राऽऽवृत्ति सूचयति—यावदिति । भास्वरत्व फलशिरस्कत्वम् ॥ पाठक्रमेण दर्शनादीना क्रममनुक्रामति— आगमादिति । अङ्ग महाधीताद्वेदादादौ विचारप्रयोजक ज्ञान जायते तदन्वागमादाचार्याच्च श्रवण ततो मतिमनन तत शास्त्रादिप्रयुक्तश्रवणस्याऽऽत्मधीहेतुत्वेनाऽऽत्मशब्दितमननस्य च सगानात्पूर्णतयाऽनुष्ठानादसभाव- नादिशून्य स्थिर ब्रह्मज्ञान निदिध्यासनाख्य भवतीत्यर्थं ॥ न श्रौतोऽयं क्रम किंत्वार्थोऽपीत्याह—प्रतिपत्तिरिति । यावन्न श्रुत मनुते तावच्छृणोतीति शेष । विनिष्टस्य श्रवणादे साक्षादात्मप्रतिपत्तौ सामग्रीत्व द्योतयितुमथशब्द ॥ शब्दादुदितामात्मधियं तस्यां श्रवणाद्यपेक्षते चेत्तर्हि ततो जाते विज्ञाने किंचिदपेक्षेत तत्र केवला धीर्मुक्तिहेतुरित्या- शङ्क्याऽऽह—अनन्यति । स्वत सिद्धात्माकारे ज्ञाने ततो लब्धे प्रत्यगपरोक्ष्यस्य लब्धेरनन्तर न किंचिद्विज्ञानपेक्षत आत्मलाभस्मृतिरित्यर्थं ॥

**ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्राऽऽत्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्राऽऽत्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्राऽऽत्मनो देवान्वेद भूतानि तं**

ब्राह्मणजाति उस पुरुष को परास्त कर देती है, जो आत्मा से भिन्न ब्राह्मणजाति को समझता है। क्षत्रियजाति उसे परास्त कर देती है, जो क्षत्रियजाति को आत्मा से भिन्न समझता है। सभी लोक उसे परास्त कर देते हैं, जो लोकों को आत्मा से भिन्न समझता है। देवता उसे परास्त कर देते हैं, जो देवताओं को आत्मा से भिन्न देखता है। उसे सभी भूत परास्त कर देते हैं, जो आत्मा से भिन्न सभी भूतों

---

ननु कथमन्यस्मिन्विदितेऽन्यद्विदितं भवति। नैष दोषः। ❀न ह्यात्मव्यतिरेकेणा-न्यत्किंचिदस्ति। यद्यस्ति न तद्विदितं स्यान्न त्वन्यदस्त्यात्मैव तु सर्वम्। [1]तस्मात्सर्व-

---

आत्मनि विदिते सर्वं विदितमित्युक्तमाक्षिपति—नन्विति। [2]दृष्टिविरोधं निराचष्टे—नैष दोष इति। आत्मनि ज्ञाते ज्ञातमेव सर्वं ततोऽर्थान्तरस्याभावादित्युक्तमेव स्फुटयति—यद्यीत्यादिना।

---

(आत्मज्ञान से ही) न होती। पर अन्य वस्तु तो कुछ भी नहीं है, सब कुछ तो आत्मा ही है। इसलिए (आत्मा में अर्थान्तर का अभाव होने के कारण) आत्मा का ज्ञान होने से सबका ज्ञान हो जाता है।

---

१. आत्मनोऽर्थान्तरस्याभावात्। २ दृष्टीति—ब्रह्म तमित्यादे सर्वं वेदेत्यन्तस्य तात्पर्यं वदन्नित्यादि। न ह्यन्यस्मिन्दृष्टेऽन्यद्भवति दृष्टमिति दृष्टिविरोधः। दृष्टिः प्रत्यक्षम्।

---

❀न हीत्यादेः स्यादित्यन्तस्य भाष्यस्य तात्पर्यमाहुर्वार्तिकाचार्याः। "आत्मधीमात्रगम्यार्थो यस्तदन्योऽवभासते। तद्दर्शननिषेधार्थं ब्रह्मेत्याह परा श्रुतिः॥ समस्तव्यस्तता तस्मान्नैवेह श्रुतिमानतः। अनात्मबुद्धिविषयं यतो यत्नान्निषेधति॥ कार्यात्मा कारणात्मा च द्वावात्मानौ परात्मनः। प्रत्यग्याथात्म्यमोहोत्थौ तन्नाशे नश्यतस्ततः॥ अपूर्वानपरोक्तेर्हि कार्यकारणताऽऽत्मनः। कुतः प्रमाणात्सम्भाव्या कार्यकारणधर्मिणः॥ नैतस्माज्जायते किंचिन्नायं जातः कुतश्चन। आत्मेत्येव श्रुतिर्वक्ति कारणादिनिषेधकृत्॥ ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ यो मामेवमसंमूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मां सर्वभावेन भारत॥ इति वेदात्मनः साक्षाद्वचनं श्रुतिसंमतम्। सर्वान्तर्यामिणः शौरेर्नोपेक्ष्यं तद्बुभूषुभिः॥ तत्रैव सति यो मूढः कार्यकारणदर्शनः। पराङ्मुखः निवर्त्यात्तमात्मा कृत्स्नत्वदर्शनम्" ॥ २४० ४६॥ अनुवादवाक्यतात्पर्यमुक्त्वा ब्रह्म तमित्यादेः सर्वं वेदेत्यन्तस्य तात्पर्यमाह—आत्मेति। स्वप्रकाशादात्मनो योऽन्यस्तादृशोऽर्थो भाति तस्य दर्शनं निषेद्धुं ब्रह्मेत्यादिवाक्यमुत्तरा श्रुतिराहेत्यर्थः॥ अनात्मदृष्टिनिषेधेन स्वयूथ्यकल्पनाऽपि निरस्तेति निषेधफलमाह—समस्तेति। इह आत्मनि। तच्छब्दार्थं स्फुटयति—अनात्मेति। निषेधाभ्यासो यत्नः॥ ननु स तस्मिन्निषेद्धुमशक्यस्तस्य कार्यकारणात्मना भेदादित्याशङ्क्याऽऽह—कार्येति। तयोर्मोहोत्थत्वफलमाह—तन्नाश इति। ततो

**परादाद्योऽन्यत्राऽऽत्मनो भूतानि वेद सर्वं तं**
**परादाद्योऽन्यत्राऽऽत्मनः सर्वं वेदेदं ब्रह्मेदं**
**क्षत्त्रमिमे लोका इमे देवा इमानि भूतानीद७**
**सर्वं यदयमात्मा ॥६॥**

को समझता है। किंबहुना—उसे सभी परास्त कर देते हैं, जो सबको आत्मा से भिन्न देखता है। अतः यह ब्राह्मणजाति, यह क्षत्रियजाति, ये लोक, ये देवता, ये भूत और ये सब जो कुछ हैं; ये सब एकमात्र आत्मतत्त्व ही है (क्योंकि आदि, मध्य और अन्त मे आत्मा को छोड़कर पृथक् इनकी उपलब्धि नही होती है) ॥६॥

---

आत्मनि विदिते विदितं स्यात्। कथं पुनरात्मैव सर्वमित्येतच्छ्रावयति। ब्रह्म ब्राह्मणजातिस्तं पुरुषं परादात्परादध्यात्पराकुर्यात्। कं, योऽन्यत्राऽऽत्मन आत्मस्वरूपव्य-

---

आकाङ्क्षापूर्वकमुत्तरवाक्यमुदाहृत्य व्याचष्टे—कथमित्यादिना। पुरुषं विशेषतो ज्ञातुं प्रश्नमुपन्यस्य प्रतीकं गृहीत्वा व्याकरोति—कमित्यादिना। पराकरणे पुरुषस्यापराधित्वं दर्शयति—अनात्मेति।

---

"सबका आत्मत्व होना किस प्रकार है" इस पर श्रुति सुनाती है। "ब्रह्म" अर्थात् ब्राह्मणजाति उस पुरुष को "परादात्" अर्थात् पुरुषार्थ से भ्रष्ट कर देती है। किसे भ्रष्ट कर देती है? 'अन्यत्राऽऽत्मनो ब्रह्म वेद" अर्थात जो आत्मस्वरूप को छोडकर यानी 'यह ब्राह्मणजाति आत्मा ही नही

---

१ 'अपोदितत्वाद्ब्रह्मादिदर्शनस्यति किं पुनः। द्रष्टव्यमित्यतो वक्ति त्विद ब्रह्मेति न श्रुति" ॥ वा० २६१ ॥ इतिशब्दो ब्रह्मेत्यादिवाक्यपरामर्शार्थं। प्रश्नसमाप्तौ द्वितीय ॥ २ सर्वस्यात्मत्वमित्यर्थं। ३ नात्र ब्रह्मशब्द परविषय क्षत्रसंनिधानादिति भाव। ४ पुमर्थभ्रष्ट कुर्यात्। ५ अवतार्य।

---

वस्त्वैतरम्यगिति शेष ॥ तयोरज्ञानोत्थत्वमसिद्धमित्याशङ्क्याऽऽह—अपूर्वेति। प्रमाणविरुद्धमर्थं न प्रमाणमुपस्थापयत्यविरोधापेक्षितत्वात्प्रमाणत्वस्येति हिशब्दार्थ। अपूर्वादिवाक्योक्त कार्यादिप्रसक्तिहीने केवले ब्रह्मणि न सा प्रामाणिकीत्यत्र न जायते म्रियते वेत्यादि मानमित्याह—नैतस्मादिति ॥ तत्रैव स्मृतिमाह—ज्ञेयमिति। तत्प्रवचनफलमाह—यदिति। किं तज्ज्ञेय तदाह—अनादिमदिति। तस्य मूर्तामूर्तविलक्षण्यमाह—न सदिति। कार्यकारणनिर्मुक्तत्व चानेनोच्यते ॥ तत्रैव वाक्यान्तरमाह—यस्मादिति। स उत्तम, पुरुष इति श्रुतिवेदशब्दार्थं ॥ उक्तोऽर्थो विवक्षितस्तज्ज्ञानस्य फलवत्त्वादित्याह—यो मामिति। उक्तस्मृतिप्रामाण्यमाप्तोक्तत्वेन सूचयति—वेदेति। वेदमूलत्वाच्च तत्प्रामाण्यमित्याह—श्रुतीति। तस्यानुपेक्ष्यत्वे हेतुमाह—सर्वेति। भगवद्वाक्यमपि केचिदुपेक्षन्ते तत्राऽऽह—भवादृशैरिति। वैदिकैरित्यर्थं ॥ ब्रह्मेत्यादेस्तात्पर्यमुक्त्वाऽक्षरार्थं संक्षिप्याऽऽह—तत्रेति। तस्मिन्नात्मन्युक्तरीत्या द्वैतनिर्मुक्त यो विवेकशून्य स्वगतत्वेन कार्यं कारण च मन्यते स भेददर्शिनमज्ञ ब्रह्मक्षत्रादि मिथ्यादृष्ट पुमर्थात्पराकरोतीत्यर्थं ॥ ब्रह्मेत्यादिवाक्यमुपसंहरति—"आत्मान यो यथा वेत्ति सम्यग्वा यदि वाऽन्यथा। यथादर्शनमेवासौ फलमाप्नोति मानव" ॥ २५६ ॥ यथादर्शनफलमि युक्तं व्यनक्ति—"इति ब्रह्म तमित्यादे संक्षेपार्थं समीरित। संसरत्यन्यथाज्ञानात्सम्यग्ज्ञानाद्विमुच्यते" ॥ वा २६० ॥ इति।

**[1]स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दा-**
**ञ्शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दु-**

लोक में जैसे दण्डादि से ताड़ित किये गए नक्कारे के बाह्य शब्दों को कोई पकड़ नहीं सकता, किन्तु नक्कारे या उसके आघात को पकड़ लेने से उसका शब्द भी पकड़ा जाता है; यही आत्मा की

तिरेकेणाऽऽत्मैव न भवतीयं ब्राह्मणजातिरिति तां यो वेद तं परादध्यात्सा ब्राह्मणजाति-रनात्मस्वरूपेण मां पश्यतीति[2]। परमात्मा हि सर्वेषा[3]मात्मा। तथा क्षत्रं क्षत्रियजाति-स्तथा लोका देवा भूतानि सर्वमिदं ब्रह्म[4]ेति [5]यान्यनुक्रान्तानि तानि सर्वाण्यात्मैव [6]यदय-मात्मा योऽयमात्मा द्रष्टव्यः श्रोतव्य इति प्रकृतः। [7]यस्मादात्मनो जायत आत्मन्येव लीयत आत्ममयं च स्थितिकाल आत्मव्यतिरेकेणाग्रहणादात्मैव सर्वम् ॥६॥

कथं पुनरिदानीमिदं[8] सर्वमात्मैवेति ग्रहीतुं शक्यते। चिन्मात्रा[9]नुगमात्सर्वत्र चित्स्व-

परमात्मातिरेकेण दृश्यमानामपि[10] ब्राह्मणजाति "स्वस्वरूपेण पश्यन्कथमपराधी स्यादित्याशङ्क्याऽऽह—परमात्मेति। इदं ब्रह्मे[11]त्युत्तरवाक्या[12]नुवादस्तस्य व्याख्यानं यान्यनुक्रान्तानीत्यादि। आत्मैव सर्वमित्येतत्प्रतिपादयति—यस्मादित्यादिना। स्थितिकाले [13]तिष्ठति [13]तस्मादात्मैव सर्वं तद्व्यतिरेके-णाग्रहणादिति योजना ॥ ६ ॥

स्थित्यवस्थायां सर्वस्याऽऽत्ममात्रत्वं ज्ञातुमशक्यं ज्ञापकाभावादित्याक्षिपति—कथं पुनरिति।

है' इस प्रकार उसे जानता है, उसे वह ब्राह्मणजाति 'यह मुझे अनात्मरूप से देखता है' इस अपराध से भ्रष्ट कर देती है क्योंकि परमात्मा ही सभी का स्वरूप है। उसी प्रकार 'क्षत्रम्' यानी क्षत्रिय-जाति, लोक, देव, भूत और सभी ऐसा करते हैं। जिन ब्राह्मण-क्षत्रियादि का 'यह ब्रह्म है' इस रूप से अनुक्रमण है; वे सभी आत्मा में ही समीभूत हैं। (यह आत्मा क्या है?) "यदयमात्मा" अर्थात् जो यह दर्शन, श्रवण करने योग्य आत्मा प्रकरण से प्राप्त है। जिस कारण से कि सब कुछ आत्मा से ही उत्पन्न होता है, आत्मा में ही समीभूत हो जाता है एवं स्थितिकाल में भी आत्ममय है, इसलिए आत्मा से भिन्न कुछ भी न होने के कारण सब कुछ आत्मा ही है ॥६॥

(इस पर पूर्ववादी आक्षेप करता है—) किन्तु "स्थितिकाल में यह नाम-रूपादि भेद से भिन्न

१. स यथेत्यत्र वार्तिके—"एवं श्रोतव्य आत्माऽत्र समाप्तः श्रवणे विधिः। अथ मन्तव्य इत्यस्य प्रपञ्चः पर उच्यते" ॥ २६३ ॥ श्रवणविधिविचारः शक्तितात्पर्यानुसार्यतिवृत्तः। अथ युक्त्यनुसारी मननविधिविचार आरभ्यत इत्यर्थः ॥ २. अपराधादिति भाव। ३. स्वरूपम्। ४. ब्रह्मक्षत्रादीनि। ५. कोऽसावा-त्माऽत आह—यदयमिति। ६. हेतोः। ७. नामरूपादिभेदभिन्नमखिलं जगत्। ८. अव्यभिचारात्। ९. अपिस्तयादर्शनसंभावकः। १०. जातित्वेन अनात्मत्वेनेति यावत्। ११. प्रतीकादानम्। १२. अय शेषः। १३. अयमध्याहारः।

- भ्याघातस्य वा शब्दो गृहीतः ॥७॥

सर्वरूपता मे दृष्टान्त है ॥७॥

---

रूपतैवेति गम्यते । तत्र दृष्टान्त उच्यते । यत्स्वरूपव्यतिरेकेणाग्रहणं यस्य तस्य तदात्मत्वमेव लोके दृष्टम् । स यथा स इति दृष्टान्तो लोके यथा दुन्दुभेर्भेर्यादेर्हन्यमानस्य ताड्यमानस्य दण्डादिना न बाह्याञ्छब्दान्बहिर्भूताञ्छब्दविशेषान्दुन्दुभिशब्दसामान्यान्निष्कृष्टान्दुन्दुभिशब्दविशेषान्न शक्नुयाद्ग्रहणाय ग्रहीतुम् । दुन्दुभेस्तु ग्रहणेन दुन्दुभिशब्द-

---

घटः स्फुरतीत्यादिप्रत्ययमाश्रित्य परिहरति—चिन्मात्रेति । स यथा दुन्दुभेरित्यादि वाक्यमवतारयति—तत्रेति । सर्वत्र चिदतिरेकेणासत्त्वं समन्वयः । दृष्टान्ते विवक्षितं संक्षिपति—यत्स्वरूपेति । दुन्दुभिदृष्टान्तमावायाक्षराणि व्याचष्टे—स यथेत्यादिना । शब्दविशेषानेव विशदयति—दुन्दुभेरिति । कथं तर्हि दुन्दुभिशब्दविशेषाणां ग्रहणं तदाह—दुन्दुभेस्त्विति । दुन्दुभिशब्दसामान्यस्येति यावत् ।

---

समस्त जगत् आत्मा ही है" ऐसा ग्रहण किस प्रकार किया जा सकता है ? (उक्त आक्षेप का परिहार किया जाता है—) चित् मात्र का व्यभिचार न होने से (आत्मप्रवण बुद्धि से) इस सभी की (अपरोक्ष) चित्स्वरूपता स्वीकार की जाती है। इस प्रसङ्ग मे (श्रुति) दृष्टान्त का प्रतिपादन करती है। जिसका जिस स्वरूप से व्यतिरिक्त ग्रहण नही किया जा सकता, उसकी तदात्मकता लोकव्यवहार में प्रसिद्ध ही है। "स यथा" अर्थात् वह ताडन किये जाते हुए दुन्दुभि आदि दृष्टान्त से यहाँ तात्पर्य है। जिस प्रकार लोकव्यवहार मे "हन्यमानस्य" यानी दण्डादि से बजाये जाते हुए "दुन्दुभेः" अर्थात् भेरी आदि के "बाह्याञ्शब्दान्" अर्थात् बहिर्भूत तार-मन्द्रादि शब्दविशेषों को दुन्दभिशब्दसामान्य से निकले हुए दुन्दुभिशब्दविशेषो को "न शक्नुयाद् ग्रहणाय" ग्रहण नही किया जा सकना। 'दुन्दुभेस्तु ग्रहणेन' अर्थात् दुन्दुभि का शब्दसामान्य जिनका विशेषण है, ऐसे शब्दविशेष से दुन्दुभिलक्षित शब्दसामान्य-भिन्न शब्दविशेष गृहीत हो जाते है क्योकि दुन्दुभि के शब्दसामान्य से पृथक् उनकी सत्ता नही है।

---

१. आत्मप्रवणधियामपरोक्षमिदम् । २. तारमन्द्रादिरूपान् । ३. दुन्दुभिशब्दसामान्यादिति । तथा च वार्तिके—"यथा दुन्दुभिशब्दत्वसामान्याद्गुत्थितान्पृथक् । नाऽऽदातुं शक्नुयात्कश्चिद्विशेषानिति शब्दवत्" ॥ २६७ ॥ दुन्दुभेर्हन्यमानस्येत्यनेन शब्दत्व लक्ष्यते ततो जाता विशेषा बाह्याः शब्दास्तान्निष्कृष्यासिमिव कोशादगृहीतु सुशिक्षितोऽपि नालमतस्ते सामान्ये कल्पिताः सर्पादिरिव रज्ज्वामित्यर्थः ॥ लक्ष्यत इति हन्यमानस्येति विशेषण दुन्दुभेस्तु ग्रहणेनेति वाक्यशेषस्थ लक्षणाया तात्पर्यग्राहकाविति द्रष्टव्य तथाहि दुन्दुभेस्तु ग्रहणेनेति वाक्यशेषे दुन्दुभिशब्दितकाष्ठग्रहाय हि शब्दविशेषग्रह सभवति तयोर्भेदात् तत्र दुन्दुभिशब्देन शब्दस्वसामान्यं लक्षणावत् प्रकृतेऽपि लक्षणेति । हन्यमानस्येति विशेषणाच्च तल्लाभोऽधिगन्तव्य अधिकमधिकार्थमिति न्यायाद् हनने सत्येव शब्दसभवात् । ४. निःसृतान् । ५. दुन्दुभिशब्दसामान्यविशेषणत्वेनेति । दुन्दुभेः शब्दसामान्य विशेषणं येषु (येषा) शब्दविशेषेषु ॥ तथा तेषा भावस्तत्त्व तेन शब्दविशेषागृहीता भवन्तीति सम्बन्धः । ६. दृष्टान्त इति—ननु दृष्टान्ते सामान्यविशेषभावाद् दार्ष्टान्तिकेऽपि स स्यात्तयोस्तुल्यत्वादित्याशङ्क्य तत्रापि तद्भावोऽविवक्षित इत्यभिप्रेत्यत्यादिः । ७. सामर्थ्यमाह । ८. दुन्दुभिशब्दसामान्यस्येति—नन्वत्र दुन्दुभिमात्रश्रुतेः शब्दसामान्यस्येति विशेषण अप्रकाभावादयुक्तमिति चेन्न तस्य तत्र लाक्षणिकत्वात् । न हि दुन्दुभिशब्दितकाष्ठग्राहाच्छब्दविशेषग्रहस्तयोर्भेदादिति भावः ।

**स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्श-
ब्दाञ्शक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्ख-
ध्मस्य वा शब्दो गृहीतः ॥ ८ ॥**

दूसरा दृष्टान्त यह है—जैसे फूंके गये शङ्ख के बाह्य शब्दों को कोई ग्रहण नहीं कर सकता, किन्तु शङ्ख को अथवा शङ्ख के बजाने को ग्रहण करने पर उसका शब्द स्वयं गृहीत हो जाता है ॥८॥

---

सामान्यविशेषत्वेन [1]दुन्दुभिशब्दा एत इति-शब्दविशेषा-गृहीता भवन्ति । दुन्दुभिशब्द-सामान्यव्यतिरेकेणाभावात्तेषाम् । [2]दुन्दुभ्याघातस्य वा दुन्दुभेराहननमाघातो [3]दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य ग्रहणेन [4]तद्गता विशेषा गृहीता भवन्ति । न तु त एव [5]निर्भिद्य ग्रहीतुं शक्यन्ते विशेषरूपेणाभावात्तेषाम् । तथा [6]प्रज्ञानव्यतिरेकेण स्वप्नजागरितयोर्न कश्चि[7]द्वस्तुविशेषो गृह्यते । [8]तस्मात्प्रज्ञानव्यतिरेकेणाभावो युक्तस्तेषाम् ॥७॥

तथा स यथा शङ्खस्य ध्मायमानस्य शब्देन संयोज्यमानस्याऽऽपूर्यमाणस्य न बाह्या-

---

[9]उक्तेऽर्थे दुन्दुभ्याघातस्येत्यादिवाक्यमुत्थाप्य व्याचष्टे—दुन्दुभ्याघातस्येति । वाशब्दार्थमाह—तद्गता विशेषा इति । [10]उक्तमर्थं व्यतिरेकमुखेन(ण) विशदयति—न त्विति । विवक्षितं दार्ष्टान्तिकमाचष्टे—तथेति । [11]तत्रैव वस्तुविशेषग्रहणसंभावनामभिप्रेत्य स्वप्नजागरितयोरित्युक्तम् ॥ ७ ॥

तथा दुन्दुभिदृष्टान्तवदिति यावत् । शङ्खस्य तु ग्रहणेनेत्यादिवाक्यमादिशब्दार्थः । दुन्दुभेस्तु

---

"दुन्दुभ्याघातस्य" पद में दुन्दुभि बजाने का नाम आघात है, दुन्दुभि-आघातविशिष्ट शब्दसामान्य के ग्रहण से सामान्याभेद होने से विशेष का ग्रहण हो जाता है। उनका उससे विभाजन करके ग्रहण नहीं हो सकता क्योंकि विशेषरूप से उनका अभाव है। इसी प्रकार स्वप्न और जागरित किसी भी स्फूर्त होने वाली वस्तुविशेष का स्फुरणात्मक ब्रह्मसामान्यातिरिक्तरूप से ग्रहण नहीं किया सकता। इसलिए (चित से अतिरिक्त चेत्य के अग्रहण से) प्रज्ञान से पृथक् उनका अभाव कहना उचित ही है ॥७॥

इसी (दुन्दुभिदृष्टान्त) के समान ही जिस प्रकार "ध्मायमानस्य" अर्थात् शब्द से संयुक्त किये जाते अथवा फूंके जाते हुए शङ्ख के बाह्य शब्दों को कोई ग्रहण नहीं कर सकता, अवशिष्ट

---

१ तथा तद्विशेषणत्वमेवाभिनयति—दुन्दुभीति । एत शब्दविशेषा दुन्दुभिशब्दा । दुन्दुभिलक्षितशब्दसामान्याभिन्ना इत्येव प्रकारेण शब्दविशेषा गृहीता भवन्तीत्यर्थः । २ न केवलं शब्दसामान्यग्रह एव तद्विशेषग्रहोऽपितु शब्दत्वावान्तरसामान्यग्रहादपि तद्विशेषाणां ग्रह इत्यभिप्रेत्याऽऽह—दुन्दुभ्याघातस्येति । ३. वीरादिनवरसान्यतमरससंयुक्तो दुन्दुभ्यादिहननात्पन्न- सामान्यादिपतो ध्वनिरत्र दुन्दुभ्याघात तद्ग्रहे तद्विशेषग्रहस्तयोस्तादात्म्यादित्यभिप्रेत्याऽऽह—दुन्दुभ्याघातविशिष्टस्येति । ४ शब्दसामान्याभिन्ना इत्यर्थ । सामान्याभेदेनैवेति यावत् । ५ विभज्य । ६ स्फुरणात्मकब्रह्मसामान्यातिरिक्त । ७ स्फोर्यमाण । ८ चिदतिरेकेण चेत्याग्रहात् । ९. शब्दसामान्याग्रहे तद्विशेषाग्रहरूपे । १० विशेषाणां सामान्याभेदेनैव ग्रहणरूपम् । ११ स्वप्नजागरयोरेव ।

**स यथा वीणायै वाद्यमानायै न बाह्याञ्शब्दा-ञ्शक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावा-दस्य वा शब्दो गृहीतः ॥ ९ ॥**

इसमें तीसरा दृष्टान्त यह है—जैसे बजायी गयी वीणा के बाह्य शब्दों को पकड़ने में कोई समर्थ नहीं होता है, किन्तु वीणा या वीणा के स्वर को पकड़ने से वह स्वयं पकड़ा जाता है ॥९॥

---

ञ्छब्दाञ्शक्नुयादित्येवमादि पूर्ववत् ॥८॥

तथा वीणायै वाद्यमानायै वीणाया वाद्यमानायाः । *अनेकदृष्टान्तोपादानमिह सामान्यबहुत्वख्यापनार्थम् । अनेके हि विलक्षणाश्चेतनाचेतनरूपाः [1]सामान्यविशेषाः । तेषां पारम्पर्यगत्या यथैकस्मिन्महासामान्येऽन्तर्भावः प्रज्ञानघने कथं नाम प्रदर्शयितव्य

---

ग्रहणेनेत्यादिवाक्यं दृष्टान्तयति—पूर्ववदिति ॥ ८ ॥

तथेति दृष्टान्तद्वयपरामर्शः । एकेनैव दृष्टान्तेन [2]विवक्षितार्थसिद्धौ किमित्यनेकदृष्टान्तोपादान-मित्याशङ्क्याऽऽह—अनेकेति । इहेति जगदुच्यते श्रुतिर्वा । सामान्यबहुत्वमेव स्फुटयति—अनेके हीति । तेषां स्वस्वसामान्येऽन्तर्भावेऽपि कुतो ब्रह्मणि [3]पर्यवसानमित्याशङ्क्याऽऽह—तेषामिति । कथमित्य-

---

व्याख्या पूर्वोक्त मन्त्र के समान समझ लेनी चाहिये ॥८॥

इसी प्रकार "वीणायै वाद्यमानायै" बजायी हुई वीणा का दृष्टान्त भी समझ लेना चाहिए । पूर्वप्रतिपादित अनेक दृष्टान्तों का ग्रहण सामान्य की बहुलताज्ञापन करने के लिए है। चेतन और अचेतन सामान्य के भेद अनेक और विलक्षण हैं। जिस प्रकार उनका परम्परा से एक प्रज्ञानघन महा-सामान्य में पर्यवसान होता है—यही किसी प्रकार प्रदर्शित करना है । दुन्दुभि, शङ्ख और वीणा के सामान्य और विशेषों का (जिस प्रकार) शब्दत्व में अन्तर्भाव है (उसी प्रकार प्रज्ञानघन में समस्त

---

१. सामान्यभेदाः सामान्यस्य भेदाः सामान्यानि विशेषाश्चेत्यर्थ वा विग्रहः । २. सर्वस्यात्ममात्रत्व विवक्षितो दार्ष्टान्तिकरूपोऽर्थस्तस्यैक्यादेकेनैव दृष्टान्तेन सिद्धिरित्यर्थः । ३. अन्तर्भाव ।

---

*अनेकदृष्टान्तैरयारभ्य दुन्दुभिवाङ्खेत्यतः प्राक्तनभाष्यस्यरहस्याविष्करणपराणि वार्तिकानि प्रदर्श्यन्ते । "दार्ष्टान्तिकार्थासंभित्तेरेकेनैव कृतार्थता । दृष्टान्तेन बहूना तु विमर्शोक्तिरितीर्यते ॥ महासामान्य एकस्मि-न्विशेषाणामशेषतः । विलयः स्यात्कथं नाम व्यावृत्तान्वयरूपिणाम् ॥ महासामान्यदृष्टान्तो दौन्दुभो रव उच्यते । सामान्येतररूपस्य दुन्दुभ्याघात इष्यते ॥ बाह्यानिति तथाचोक्तिर्विशेषाणां तु केवलम् । इत्युक्तार्थप्रसिद्ध्यर्थ-मित्युदाहरणत्रयम् ॥ अन्वयव्यतिरेकाभ्यामभावपुपाऽस्थवा । सद्वीजम्यादिरुग्वस्तु न माननावमीयते ॥ यथा मनि तथा विद्यात्प्रतीच्यनन्यमानके ॥ सामान्यभेदरूपाणां पष्ठघर्यासंभवोऽस्त. स्याद्द्वितीयासंभवात्सतः । मियोभिन्नपदार्थानां सामस्त्यान्नियात्मभि. । विशेषाणामशेषतः । महासामान्य एकत्र भूयसा स्याद्यथा तथा ॥ सूक्ष्मताव्याप्तिते ज्ञेये भूम्यादेरुत्तरोत्तरम् । प्रत्यगात्मावसानेषु स्थूलाद्यनभिसंबन्धे कार्यकारणरूपिणाम् ॥

इति दुन्दुभिशङ्खवीणाशब्दसामान्यविशेषाणां यथा शब्दत्वेऽन्तर्भावः । एवं स्थितिकाले तावत्सामान्यविशेषाव्यतिरेकाद्ब्रह्मैकत्वं शक्यमवगन्तुम् ॥९॥

स्मात्पूर्वं तथेत्यध्याहारः । इति मन्यते श्रुतिरिति शेषः । 'विमतं नाऽऽत्मातिरेकि तदतिरेकेणागृह्यमाणत्वाद्यद्यदतिरेकेणागृह्यमाणं तत्तदतिरेकि न भवति यथा दुन्दुभ्यादिशब्दास्तत्सामान्यातिरेकेणागृह्यमाणास्तव्रतिरेकेण न सन्तीत्यनुमानं विवक्षन्नाह—दुन्दुभीति । शब्दत्वेऽन्तर्भावस्तथा प्रज्ञानघने सर्वं जगदन्तर्भवतीति शेषः । दृष्टान्तत्रयमवष्टभ्य 'निर्दृष्ट्टितमर्थमुपसंहरति—एवमिति ॥ ९ ॥

जगत् का अन्तर्भाव हो जाता है) । इस प्रकार स्थितिकाल में सामान्य और विशेष से ब्रह्म अभिन्न होने के कारण ब्रह्मात्मैक्यज्ञान होना संभव है ॥९॥

इसी प्रकार उत्पत्तिकाल में उत्पत्ति से पूर्व ब्रह्म ही था, ऐसा जानना संभव है। जिस

१. ब्रह्मण । २. अखिल जगत् । ३. साधितम् ।

पूर्वपूर्वप्रहाणत ॥ नामादीनि च तत्त्वानि प्राणान्तानि तथाऽऽत्मनि । पूर्वपूर्वप्रहाणेन यान्त्यस्त केवलाद्वये ॥२८६-२९५॥ अनेकदृष्टान्तोक्तिमाक्षिपति—दार्ष्टान्तिकेति । सर्वस्याऽऽत्ममात्रत्व दार्ष्टान्तिकोऽर्थः । तस्यैक्यादेकेनैव दृष्टान्तेन सिद्धेर्दुन्दुभिशङ्खवीणासु दुन्दुभ्यादिरवो दुन्दुभ्याघाताद्विबाह्यशब्दाश्चेति बहूनामुक्तिरफलेत्यर्थ । तत्फल प्रतिजानीत—ईर्यत इति ॥ तत्प्रकटयति—महासामान्येति । एकस्मिन्ब्रह्मणि महासामान्यस्थानीये विशेषाणा सामान्यस्योभयेषा च क्रमेण लय वक्तु नानादृष्टान्तोक्तिरित्यर्थं ॥ लयक्रम दर्शयितु दृष्टान्तत्रयस्य दार्ष्टान्तिकत्रयेणान्वयमाह—महासामान्येति । दुन्दुभ्यादिप्रयुक्तशब्दसामान्यादि विना तद्विशेषाभाववन्मूलकारणस्याप्यकार्यकारणब्रह्मातिरेकेणाभावान्महासामान्यस्थानीयस्य कारणस्याद्वये ब्रह्मणि लये दृष्टान्तोऽवान्तरसामान्यावसानभूमिर्दुन्दुभ्यादिशब्दमात्रमित्यर्थं । दुन्दुभ्याघातशब्देन तदाहननकृतशब्दत्वव्याप्य सामान्यविशेषो गृह्यते स च शब्दविशेषसमाप्तिदेश सामान्यविशेषात्मकभूतपञ्चकस्य मूलकारणेऽवसानमित्यत्र निदर्शनमित्याह—सामान्यति ॥ अन्त्यकार्याणा भौतिकाना भूतेष्वनुवृत्तव्यावृत्तेष्वेव निष्ठेत्यत्र बाह्याञ्छब्दानित्युक्तिर्दृष्टान्तत्वे हि दुन्दुभ्याघात शब्दत्वावान्तरसामान्यविशेषे लीयन्त इत्याह—बाह्यानिति । तथाचेति महासामान्यादिदृष्टान्तधदित्यथ । कारणन्याद्वय ब्रह्मणि भूताना कारणे भौतिकाना तद्व्यवसानमित्युक्तार्थसिद्धयर्थं दृष्टान्तत्रयमित्युपसहरति—इत्युक्तानि ॥ अनेकदृष्टान्तस्य फलोक्त्या सर्वस्य ब्रह्ममात्रत्वमुक्त्वा तदेव दृष्टान्तान्तरेण साधयितु तदाह—अन्वयति । सद्विशेषाख्य वस्तु तत्सामान्यात्पृथगुच्यमान तेन भेदेनाभेदेन शून्यतया वा मानतो न सिध्यत्यत्यन्तभेदेऽभेदे वा सामान्यविशेषत्वासिद्धे शून्यत्वे च सदद्वैतापत्तेरित्यर्थं ॥ तदद्वयत्वे किं स्यादित्याशङ्क्यानेकव्यवस्थाभाव तदसत्त्वात्सामान्यविशेषत्वासिद्धिरित्याह—षष्ठीति । दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथति । सत्यद्वयत्वमसङ्कीर्ण च यथावत तथा स्वप्रकाशे प्रतीच्यपि तज्ज्ञेयमित्यर्थ ॥ दृष्टान्तमुपसहरति—सामान्यति । सद्विशेषाणा सर्वेषामत्रस्मिन् सत्सामान्य यथाऽवसानमित्यर्थं । दार्ष्टान्तिक विवृणोति—तथेति ॥ उक्तदृष्टान्तानुसारेण नामादिभिर्मिथोभिन्नार्थाना कार्यादीनामस्थूलादिके ब्रह्मणि लयात्प्रत्यगनुभवोऽद्वयोऽभङ्गः स्यादिति योजना ॥ सर्वस्य विकारस्य प्रतीचि क्रमेण लय इत्यत्र भाष्यकारसमतिमाह—सूक्ष्मतेति । पृथिवीमारभ्याऽऽत्मान्तपर्यन्तेषु पूर्वपूर्वभूम्यादित्यागनात्तरोत्तरस्यावादे सौक्ष्म्यादि ज्ञेयमिति योजना ॥ तत्रैव च्छान्दोग्यसमतिमाह—नामादीनीति । तथेति अनन्तरोक्तन्यायवत् ॥

स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि ॥१०॥

इसमें चौथा दृष्टान्त यह है—जैसे गीली लकड़ी के द्वारा आधान किये गये अग्नि से नाना प्रकार धुआँ निकलता है, हे मैत्रेयी ! ऐसे ही ये जो ऋग्वेद, यजुर्वेद, सामवेद, अथर्ववेद, (ये चार प्रकार के मन्त्रसमुदाय) उर्वशी-पुरूरवासवादादि इतिहास-पुराण, देवजनविद्या, उपनिषत्, श्लोक (ब्राह्मणभाग के मन्त्र) सूत्र, मन्त्रविवरण और अर्थवाद हैं। वे सभी इस महद्भूत परमात्मा के निःश्वास हैं अर्थात् श्वास-निःश्वास के समान विना प्रयत्न के ही उस विज्ञानघन से सभी उत्पन्न हुए हैं ॥१०॥

---

एवमुत्पत्तिकाले प्रागुत्पत्तेर्ब्रह्मैवेति शक्यमवगन्तुम् । यथाऽग्नेर्विस्फुलिङ्गधूमाङ्गारार्चिषां प्राग्विभागादग्निरेवेति भवत्यग्न्येकत्वमेवं जगन्नामरूपविकृतं प्रागुत्पत्तेः प्रज्ञानघन एवेति युक्तं ग्रहीतुमित्येतदुच्यते । स यथाऽऽर्द्रैधाग्नेरार्द्रैरेधोभिरिद्धोऽग्निरार्द्र-

---

स यथाऽऽर्द्रैधाग्नेरित्यादिवाक्यस्य तात्पर्यमाह—एवमित्यादिना । स्थितिकालवदित्येवंशब्दार्थः । तत्र वाक्यमवतार्य व्याचष्टे—इत्येतदिति । महतोऽनवच्छिन्नस्य भूतस्य परमार्थस्येति यावत् ।

---

प्रकार अग्नि की चिनगारी, धूम, अङ्गार और ज्वालाओं का जन्म होने से पूर्व धूमादि सब अग्निमय है, इससे अग्नि की एकता सिद्ध होती है, उसी प्रकार नाम-रूपात्मक विकृति को प्राप्त जगत् उत्पत्ति से पूर्व प्रज्ञानघन ही था, ऐसा ग्रहण करना ठीक ही है। इसी से यह अग्रिम मन्त्र कहा जाता है। वह "आर्द्रैधाग्नेः यथा" यानी गीली लकड़ी से चारों ओर प्रज्वलित अग्नि से जिस प्रकार "पृथग्धूमा"

---

१. शक्यमिति—तथा च वार्तिके—"स्थितिकाले यथैकात्म्यं शक्यते ज्ञातुमञ्जसा । यथोक्तन्यायतस्तद्वदुत्पत्तावपि शक्यते" ॥ २१७ ॥ इति ॥ यथोक्तन्यायो दृष्टान्तत्रयम् । २. ननु शब्दसामान्ये तद्विशेषाणामैक्यं दृष्टं यथा न तथा भिन्नजातीयघटादीनां वीरणादावतो नामादिभिन्नस्य जगतो नात्मन्यैक्यं संजात्यादित्याशङ्क्य समाधत्ते—यथेति । ३ विभागोऽत्र जन्म । ४. धूमादयोऽग्निरेवेत्यर्थः । ५. एतदात्मना विकृतम् । ६. उक्ततात्पर्यं स यथेत्यादिवाक्ये नोच्यत इत्यर्थः । ७. तात्पर्यमिति—परस्य कारणत्वे फलेन भाव्यं बुद्धिपूर्वकारिणो विफलप्रवृत्त्ययोगाद्य चासहायस्यायत्नादिमतः कारणतेति साधनमपि किञ्चिद्वाच्यं तथा चाऽस्तशास्त्रवादिहानिरिति केचित्तान्प्रत्येतदेव वाक्यमुत्तरमिति वार्तिकोक्ततात्पर्यान्तरमप्यत्र द्रष्टव्यम् । तथा च वार्तिके—"स्वार्थसाधनयत्नादीननपेक्ष्योत्सृजेद्यथा । धूमादीन्हुतभुक्तद्वत्प्राणादीन्प्रत्यगीश्वरः" ॥ ३०३ ॥ इति । ८. स्वोक्तेऽर्थे ।

इति दुन्दुभिशङ्खवीणाशब्दसामान्यविशेषाणां यथा शब्दत्वेऽन्तर्भावः । एवं स्थितिकाले तावत्सामान्यविशेषाव्यतिरेकाद्ब्रह्मैकत्वं शक्यमवगन्तुम् ॥९॥

स्मात्पूर्वं तथेत्यध्याहारः । इति मन्यते श्रुतिरिति शेषः । ¹विमतं नाऽऽत्मातिरेकि तदतिरेकेणागृह्यमाणत्वाद्यद्यदतिरेकेणागृह्यमाणं तत्तदतिरेकि न भवति यथा दुन्दुभ्यादिशब्दास्तत्सामान्यातिरेकेणागृह्यमाणास्तदतिरेकेण न सन्तीत्यनुमानं विवक्षन्नाह—दुन्दुभीति । शब्दत्वेऽन्तर्भावस्तथा प्रज्ञानघने सर्वं जगदन्तर्भवतीति शेषः । दृष्टान्तत्रयमवष्टभ्य ²निर्धारितमर्थमुपसहरति—एवमिति ॥ ९ ॥

जगत् का अन्तर्भाव हो जाता है) । इस प्रकार स्थितिकाल में सामान्य और विशेष से ब्रह्म अभिन्न होने के कारण ब्रह्मात्मैक्यज्ञान होना सभव है ॥९॥

इसी प्रकार उत्पत्तिकाल मे उत्पत्ति से पूर्व ब्रह्म ही था, ऐसा जानना सभव है । जिस

१ ब्रह्मण । २. अखिल जगत् । ३. साधितम् ।

पूर्वंपूर्वंप्रहाणत ॥ नामादीनि च तत्त्वानि प्राणान्तानि तथाऽऽत्मनि । पूर्वंपूर्वंप्रहाणेन यान्त्यस्त केवलाद्वये ॥२८६-२९५॥ अनकदृष्टान्तोक्तिमाक्षिपति—दार्ष्टान्तिकेति । सर्वस्याऽऽत्ममात्रत्व दार्ष्टान्तिकोऽर्थं । तस्यैकयादेकेनैव दृष्टान्तेन सिद्धदुन्दुभिशङ्खवीणासु दुन्दुभ्यादिरवो दुन्दुभ्याघातादिबाह्यशब्दश्चेति बहूनामुक्तिरफलेत्यर्थं । तत्फल प्रतिजानीत—ईयत इति ॥ तत्प्रकटयति—महासामान्येति । एकस्मिन्ब्रह्मणि महासामान्यस्थानीये विशेषाणा सामान्यस्योभयथा च क्रमेण लय वक्तु नानादृष्टान्तोक्तिरित्यर्थं ॥ लयक्रम दर्शयितु दृष्टान्तत्रयस्य दार्ष्टान्तिकत्रयेणान्वयमाह—महासामान्येति । दुन्दुभ्यादिप्रयुक्तशब्दसामान्यादि विना तद्विशेषाभाववन्मूलकारणस्याप्यकार्यकारणब्रह्मातिरेकेणाभावान्महासामान्यस्थानीयस्य कारणस्याद्वये ब्रह्मणि लये दृष्टान्तोऽवान्तरसामान्यावसानभूमिदुन्दुभ्यादिशब्दमात्रमित्यर्थं । दुन्दुभ्याघातशब्देन तदाहननकृतशब्दत्वव्याप्य· सामान्यविशेषो गृह्यते ॥ च शब्दविशेषसमाप्तिदेश सामान्यविशेषात्मकभूतपञ्चकस्य मूलकारणेऽवसानमित्यत्र निदर्शनमित्याह—सामान्यति ॥ अन्त्यकार्याणा भौतिकाना भूतष्वनुवृत्तव्यावृत्तेष्वेव निष्ठेत्यत्र बाह्यान्शब्दानित्युक्तिर्दृष्टान्तस्ते हि दुन्दुभ्याघात शब्दत्वावान्तरसामान्यविशेषे लीयन्त इत्याह—बाह्यानिति । तथाचेति महासामान्यादिदृष्टान्तवदित्यथ । कारणस्याद्वय ब्रह्मणि भूताना कारणे भौतिकाना तध्ववसानमित्युक्तार्थसिद्धयर्थं दृष्टान्तत्रयमित्युपसहरति—इत्युक्तानि ॥ अनेकदृष्टान्तस्य फलोक्त्या सर्वस्य ब्रह्ममात्रत्वमुक्त्वा तदेव दृष्टान्तान्तरेण साधयितु सदाह—अन्वयति । मद्विशेषास्य वस्तु तत्सामान्यात्पृथगुच्यमान सत् भेदेनाभेदेन शून्यतया वा मानतो न सिध्यत्यत्यन्तभेदऽभेदे वा सामान्यविशेषत्वासिद्धे शून्यत्वे च सदद्वैतापत्तेरित्यर्थं ॥ तदद्वयत्वे किं स्यादित्याशङ्क्यानेकव्यवस्थभाव तदसम्बन्धात्सामान्यविशेषत्वासिद्धिरित्याह—षष्ठीति । दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति । सत्यद्वयत्वमसङ्गत्व च यथावत तथा स्वप्रकाशे प्रतीच्यपि तज्ज्ञेयमित्यर्थं ॥ दृष्टान्तमुपसहरति—सामान्येति । सद्विशेषाणा सर्वेषामस्मिन् सत्सामान्य यथाऽवसानमित्यर्थं । दार्ष्टान्तिक विवृणोति—तथेति ॥ उक्तदृष्टान्तानुसारेण नामादिभिर्मिथोभिन्नार्थाना कार्यादीनामस्थूलादिके ब्रह्मणि लयात्प्रत्यगनुभवोऽद्वयोऽसङ्ग स्यादिति योजना ॥ सर्वस्य विकारस्य प्रतीचि क्रमेण लय इत्यत्र भाष्यकारसम्मतिमाह—सूक्ष्मतेति । पृथिवीमारभ्याऽऽत्मान्तपर्यन्तेषु पूर्वपूर्वंभूम्यादित्यागनात्तरोत्तरस्यावादे सौक्ष्म्यादि ज्ञेयमिति योजना ॥ तत्रैव च्छान्दोग्यसमतिमाह—नामादीनीति । तथेति अनन्तरोक्त यायवत् ॥

**स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि ॥१०॥**

इसमे चौथा दृष्टान्त यह है—जैसे गीली लकडी के द्वारा आधान किये गये अग्नि से नाना प्रकार का धुआँ निकलता है, हे मैत्रेयी! ऐसे ही ये जो ऋग्वेद, यजुर्वेद, सामवेद, अथर्ववेद, (ये चार प्रकार के मन्त्रसमुदाय) उर्वशी-पुरूरवासंवादादि इतिहास-पुराण, देवजनविद्या, उपनिषत्, श्लोक (ब्राह्मणभाग के मन्त्र) सूत्र, मन्त्रविवरण और अर्थवाद है। वे सभी इस महद्भूत परमात्मा के निःश्वास हैं अर्थात् श्वास-निःश्वास के समान बिना प्रयत्न के ही उस विज्ञानघन से सभी उत्पन्न हुए हैं ॥१०॥

---

एवमुत्पत्तिकाले प्रागुत्पत्तेर्ब्रह्मैवेति [1]शक्यमवगन्तुम्। यथाऽग्नेर्विस्फुलिङ्गधूमाङ्गारार्चिषां [2]प्राग्विभागा[3]दग्निरेवेति भवत्यग्न्येकत्वमेवं जगन्नामरूप[4]विकृतं [5]प्रागुत्पत्तेः प्रज्ञानघन एवेति युक्तं ग्रहीतुमि[6]त्येतदुच्यते। स यथाऽऽर्द्रैधाग्नेरार्द्रैरेधोभिरिद्धोऽग्निरार्द्रै-

---

स यथाऽऽर्द्रैधाग्नेरित्यादिवाक्यस्य [7]तात्पर्यमाह—एवमित्यादिना। स्थितिकालवदित्येवशब्दार्थः। [8]तत्र वाक्यमवतार्य व्याचष्टे—इत्येतदिति। महतोऽनवच्छिन्नस्य भूतस्य परमार्थस्येति यावत्।

---

प्रकार अग्नि की चिनगारी धूम, अङ्गार और ज्वालाओ का जन्म होने से पूर्व धूमादि सब अग्निमय है, इससे अग्नि की एकता सिद्ध होती है, उसी प्रकार नाम रूपात्मक विकृति को प्राप्त जगत् उत्पत्ति मे पूर्व प्रज्ञानघन ही था, ऐसा ग्रहण करना ठीक ही है। इसी से यह अग्रिम मन्त्र कहा जाता है। वह 'आर्द्रैधाग्ने यथा'' यानी गीली लकडी से चारो ओर प्रज्वलित अग्नि से जिस प्रकार "पृथग्धूमा"

---

१ शक्यमिति—तथा च वार्तिके—"स्थितिकाले यथैकात्म्य शक्यते ज्ञातुमञ्जसा। यथोक्तन्यायतस्तद्वदुत्पत्तावपि शक्यते" ॥ २९७ ॥ इति ॥ यथोक्तन्यायो दृष्टान्तत्रयम्। २ ननु शब्दसामान्ये तद्विशेषाणामैक्य दृष्ट यथा न तथा भिन्नजातीयघटादीनां वीरणादावतो नामादिभिन्नस्य जगतो नात्मन्यैक्य वैजात्यादित्याशङ्क्य समाधत्ते—यथेति। ३ विभागोऽत्र जन्म। ४ धूमादयोऽग्निरेवेत्यर्थः। ५ एतदात्मना विकृतम्। ६ उक्ततात्पर्यं स यथेत्यादिवाक्ये नोच्यत इत्यर्थः। ७ तात्पर्यमिति—परस्य कारणत्वे यत्नेन भाव्य बुद्धिपूर्वकारिणो विफलप्रवृत्त्ययोगाच्च चासहायस्याप्यत्नादिमत कारणतेति ज्ञापनमपि विञ्चिद्वाच्य तथा चाऽप्तकाम-त्वादिहानिरिति वैचित्ता प्रत्यतदेव वाक्यमुत्तरमिति वार्तिकोक्ततात्पर्यान्तरमप्यत्र द्रष्टव्यम्। तथा च वार्तिके—"स्वार्थसाधनयत्नादीननपेक्ष्योत्सृजेद्यथा। धूमादी हुतभुक्तद्वत्प्राणादी प्रत्यगीश्वर" ॥ ३०३ ॥ इति। ८ श्लोकेऽर्थे।

धाग्निस्तस्माद'भ्याहितात्पृथग्धूमाः पृथग्नानाप्रकारं धूमग्रहणं विस्फुलिङ्गादिप्रदर्शनार्थं धूमविस्फुलिङ्गादयो विनिश्चरन्ति विनिर्गच्छन्ति । एवं यथाऽयं दृष्टान्तः । अरे मैत्रेय्यस्य परमात्मनः प्रकृतस्य महतो भूतस्य निश्वसितमेतन्निश्वसितमिव निश्वसितम् । यथाऽप्रयत्नेनैव पुरुषनिश्वासो भवत्येवं वा अरे । किं तन्निश्वसितमिव ततो जातमित्युच्यते । यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसश्चतुर्विधं मन्त्रजातमितिहास इत्युर्वशीपुरूरवसोः संवादादिरुर्वशी हाप्सरा इत्यादि ब्राह्मणमेव । पुराणमसद्वा इदमग्र आसीदित्यादि । विद्या 'देवजनविद्या वेदः सोऽयमित्याद्या । 'उपनिषदः 'प्रियमित्येतदुपासीतेत्याद्याः । श्लोका 'ब्राह्मणप्रभवा मन्त्रास्तदेते श्लोका इत्यादयः । सूत्राणि 'वस्तुसंग्रहवाक्यानि(णि) वेदे यथाऽऽत्मेत्येवोपासीतेत्यादीनि । अनुव्याख्यानानि 'मन्त्रविवरणानि । व्याख्यानान्यर्थवादाः ।

---

निश्वसितमिवेत्युक्तं व्यनक्ति—यथेति । अरे मैत्रेयि ततो जातमिति संबन्धः । 'तदेवाऽऽकाङ्क्षापूर्वकं विशदयति—किं तदित्यादिना । इतिहास इति ब्राह्मणमेवेति संबन्धः । संवादादिरित्यादिपदेन प्राणसंवादादिग्रहणम् । असद्वा इदमग्र आसीदित्यादीत्यत्राऽऽदिशब्देनासदेवेदमग्र आसीदिति गृह्यते । देवजनविद्या नृत्यगीतादिशास्त्रम् । वेदः "सोऽयं वेदाद्धहिर्न भवतीत्यर्थः । इत्याद्या विद्येति संबन्धः । आदिशब्दः शिल्पशास्त्रसंग्रहार्थः । प्रियमित्येतदुपासीतेत्याद्या इत्यत्राऽऽदिशब्दः सत्यस्य सत्यमित्युपनिषत्संग्रहार्थः । तदेते श्लोका इत्यादय इत्यत्राऽऽदिशब्देन तदप्येष श्लोको भवति । असन्नेव स भवतीत्यादि गृह्यते । इत्यादीनीत्यादिपदमथ योऽन्यां देवतामुपास्ते ब्रह्मविदाप्नोति परमित्यादि

---

अर्थात् नाना प्रकार का धूम निकलता है । मन्त्र मे धूमग्रहण विस्फुलिङ्ग आदि के प्रदर्शन के लिये है । धूम और चिनगारी आदि "विनिश्चरन्ति" अर्थात् निकलती हैं । इसी प्रकार जैसे यह दृष्टान्त है । अरी मैत्रयी ! इस परमात्मा के प्रकृत महद्भूत का "निश्वसितम्" यानी निःश्वास के समान निःश्वास है । जिस प्रकार विना प्रयत्न के श्वास आता जाता है, उसी प्रकार प्रज्ञानघन से जगत् उत्पन्न हुआ है । जो यह ऋग्वेद, यजुर्वेद, सामवेद और अथर्वाङ्गिरस चार प्रकार का मन्त्रसमुदाय है तथा उर्वशी-पुरूरवा का सवादरूप जो इतिहास है । ब्राह्मणग्रन्थो मे कहा है—उर्वशी अप्सराएँ थी । "सृष्टि के पहले यह नामरूपात्मक जगत् अव्याकृत ब्रह्मरूप ही था" इत्यादिरूप पुराण है । "वह यह वेद है" इत्यादि नृत्यगीतादिशास्त्र विद्या है । "उसकी उपासना प्रियरूप से करनी चाहिए (क्योंकि 'प्रिय' यह उसका चतुर्थपाद है)" इत्यादि अभिधायकशब्दरूप उपनिषत् है । "स्वयज्योतिष्ट्वादि अर्थ को प्रतिपादन करने वाले ये मन्त्र हैं" इत्यादि ब्राह्मणभागमात्रस्थ श्लोक ही मन्त्र है । विद्यादि वस्तु को सक्षेप मे प्रतिपादन करनेवाले वेद मे वाक्य हैं—जिस प्रकार "आत्मा है, इस रूप से उसकी उपासना करे" इत्यादि । ("क्योंकि उस सृष्टिकर्ता ने मेधा व तप के द्वारा उत्पत्ति की" इत्यादि) मन्त्रविवरणात्मक

---

१ अभित प्रज्वलितात् । २ अथर्वणा अङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरस । ३. "उदकुम्भं निधाय दास्योर्जालीय परिनृत्यन्तीत्यादि" वा. । ४. अभिधायकशब्दरूपा । ५. बृ० उ० ४।१।३ । ६. ब्राह्मणभागमात्रस्था न तु मन्त्रभागस्थाः । ७ विद्यादिवस्तुसक्षेपप्रतिपादकानि । ८ "मेधया हि तपसाऽजनयत्पिते"त्येवमादीनि । ९. ततो जातमेव । १०. नृत्यादिप्रतिपादकशास्त्रमित्यर्थः ।

अथवा 'वस्तुसंग्रहवाक्यविवरणान्यनुव्याख्यानानि । 'यथा 'चतुर्थाध्याय आत्मेत्येवोपासीतेत्यस्य यथा वाऽन्योऽसावन्योऽहमस्मीति न स वेद यथा 'पशुरेवमित्यस्यायमेवाध्यायशेषः । मन्त्रविवरणानि व्याख्यानानि । 'एवमष्टविधं ब्राह्मणम् ।

⊛'एवं मन्त्रब्राह्मणयोरेव ग्रहणम् । नियतरचनावतो विद्यमानस्यैव वेदस्या'भिव्यक्तिः

---

ग्रहीतुम् । अर्थवादेषु व्याख्यानपदप्रवृत्तौ हेत्वभावं शङ्कित्वा पक्षान्तरमाह—अथवेति । इतिहासादिशब्दव्याख्यानमुपसंहरति—एवमिति । ब्राह्मणमितिहासादिपदवेदनीयमिति शेषः ।

ऋगादिशब्दानामितिहासादिशब्दानां च 'प्रसिद्धार्थत्यागे को हेतुरित्याशङ्क्य 'निश्वसितश्रुतिरितिहासादिशब्दानां प्रसिद्धार्थत्यागे हेतुः "परिशेषस्त्वन्यत्रेत्यभिप्रेत्याऽऽह—एवं मन्त्रेति । ननु प्रथमे काण्डे वेदस्य नित्यत्वेन प्रामाण्यं स्थापितं "तदनित्यत्वे तद्धानिरित्यत आह—नियतेति । नियतेत्यादौ वेदो विशेष्यते । "कल्पान्तेऽन्तर्हितान्वेदानित्यादिवाक्यान्नियतरचनावत्त्वं वेदस्य गम्यते ।

---

ही अनुव्याख्यान है । व्याख्यान अर्थवाद हुआ करते हैं । अथवा वस्तुसंग्रहवाक्य विवरण अनुव्याख्यान है । जिस प्रकार वक्ष्यमाण चतुर्थाध्याय में "आत्मा है, इस रूप उपासना करे" इस श्रुतिवाक्य की व्याख्या है अथवा "यह आराध्यदेव भिन्न है और मैं उससे भिन्न हूँ, इस प्रकार जो अपने से भिन्न देवता की उपासना करता है; वह अज्ञानी परमार्थतत्व को नहीं जानता, जैसे लोक में भारवाही पशु होता है, वैसे ही वह भेदवादी देवताओं का पशु है" । इसी प्रथम अध्याय का शेष व्याख्यान है । मन्त्रविवरण ही व्याख्यान है । उपरोक्त प्रकार से ब्राह्मणभाग अष्टविध है ।

उपरोक्त दिशा से मन्त्र और ब्राह्मण का ग्रहण करना चाहिये । पुरुष के श्वास के समान

---

१. "यथा प्राणा वै सत्यमि"त्येवमादीना शिशुमूर्तामूर्तब्राह्मणे । २. उदाहरणान्तरमाह—यथेति । ३. वक्ष्यमाणश्चतुर्थाध्यायः । उच्यमानः भाष्ये चतुर्थाध्यायो द्वितीयाध्याय इति यावत् । ४ प्रथमाध्यायशेष इत्यर्थः । ५. उक्तदिशा । ६ यथोक्तदिशा । ७. कूपाकाशदिवत्परस्मादप्रयत्नेनाभिव्यक्ति । ८. प्रसिद्धार्थेति । ऋग्वेदादिशब्दाना प्रसिद्धोऽर्थो मन्त्रब्राह्मणोभयात्मकः । इतिहासो भारतादि । पुराण ब्राह्मादि । विद्या आन्वीक्षिक्याद्या । उपनिषद्रहस्यम् । श्लोका अनुष्टुबादयः । सूत्राणि जैमिन्यादिमहर्षिप्रणीतानि । अनुव्याख्यानानि भाष्यादीनि । व्याख्यानानि वार्तिकादीनीतीतिहासादे प्रसिद्धोऽर्थ । ९. निश्वसितश्रुतिरिति—तया ह्यृगादीनामितिहासादीना च प्रकृतात्परमात्मन उत्पत्तिः श्राव्यते । न च प्रसिद्धाना तेषा तत उत्पत्तिस्तत्कर्त्रन्तरस्मृतिविरोधादिति भावः । १०. मन्त्रब्राह्मणयोरपि निःश्वसितत्वाविशेषादाह—परिशेषस्त्वन्यत्रेति । इति । ११. तस्य वेदस्येश्वरकृतत्वेन बुद्धाद्युक्तिवदनित्यत्वेऽनपेक्षमानत्वायोगादित्यर्थः । १२. युगान्त इति पाठः । "सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवेति" व्याससमृतिषेष । प्रसक्तप्रतिषेधेऽन्यत्राप्रसक्तौ शिष्यमाणे सम्प्रत्ययः परिशेषः । ऋगादिशब्दाना मन्त्रमात्रपरत्वे परिशेषो हेतुरित्यर्थः ।

---

⊛एव मन्त्रब्राह्मणयोरेव ग्रहणमिति । तथाचाहु—"ऋग्वेदादिगिरोच्यन्ते ऋग्यजु सामलक्षणाः । अथर्वाङ्गिरसस्तद्वन्मन्त्राः स्युर्ब्राह्मणोद्धृताः ॥ इतिहासादिसभेदभिन्न ब्राह्मणमेव तु । ब्राह्मणत्र प्रसिद्धस्तु नेतिहासादिरिष्यते" ॥वा० ३१३-३१४॥ "मन्त्रब्राह्मणयोर्वेदनामधेयत्वकारणात् । ऋग्वेदादिगिरा तस्मान्मन्त्रब्राह्मणयोर्ग्रहः ॥ लोकप्रसिद्धिमुल्लङ्घ्य यतोऽन्याभ्योऽन्यथाग्रहः ॥ इतिहासपुराणाभ्यां यथासिद्धमितिहासपुराणाद्यपि गृह्यते । इतिहासपुराणादेर्वेदमूलत्वकारणात् । प्रामाण्य वेद समुपबृंहयेत् । इत्यादिमनुनाऽप्युक्त कथं तत्त्यागमर्हति ॥

पुरुषनिश्वासवन्न च पुरुषबुद्धिप्रयत्नपूर्वकः' । 'अतः प्रमाणं निरपेक्ष एव स्वार्थे । 'तस्माद्य'त्तेनोक्तं तत्तथैव प्रतिपत्तव्यमात्मनः श्रेय इच्छद्भिर्ज्ञानं वा कर्म वेति ।

---

'अनादिनिधनान्नित्येत्यादेश्च सदातनत्वं तस्य निश्चीयते । न च 'कृतकत्वादप्रामाण्यं प्रत्यक्षादौ 'व्यभिचारात् । 'न च पौरुषेयत्वादनपेक्षत्वहेत्वभावादप्रामाण्यम् । 'बुद्धिपूर्वप्रणीतत्वाभावेन तत्सिद्धे । ''न चोन्मत्तवाक्यसादृश्यमबाधितार्थत्वादिति भाव । सिद्धे वेदस्य प्रामाण्ये फलितमाह—तस्मादिति ।

---

नियतरचनावान् (कृपाकाशादि के समान) विद्यमान वेद की ही अभिव्यक्ति हुई है, पुरुष की बुद्धि के प्रयत्न से (वेदों की) रचना नहीं हुई है। इसलिए (चिदात्मा से नित्य होने के कारण) प्रमाण स्वार्थ मे निरपेक्ष ही है। इसलिए (वेद के प्रामाण्य होने से) ज्ञेयत्व अथवा अनुष्ठेयत्वरूप से ज्ञान या कर्म द्वारा जिसका जैसा निरूपण किया है, श्रेयस्कामियों को वैसे ही आत्मप्राप्ति कर लेनी चाहिये। न्य

---

१ वेद इति शेष । २ चिदात्मना नित्यत्वात् । ३ वेदस्य प्रामाण्यात् । ४ ज्ञेयत्वनानुष्ठेयत्वेन वेति शेष । ५ "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यत सर्वा प्रवृत्तय" ॥ इति पूर्णा स्मृति । उत्सृष्टत्वोक्त्या पौरुषेयत्वमाशङ्कयोक्त भगवत्पादैः । उत्सर्गोऽप्यय वाच सम्प्रदायप्रवर्तनात्मको द्रष्टव्य । अनादिनिधनाया अन्याहृशस्योत्सर्गस्यासम्भवादिति । सम्प्रदायो गुरुशिष्यपरम्पराध्ययनम् । रूपमर्गो-त्प्राथम्यमादिशब्दार्थं । सम्प्रदायातिरेकेणाप्राप्तिर्दिव्यत्वम् । अस्त्वेव शब्दसृष्टिस्तथापि कथ तत्पूर्वोऽर्थसृष्टि-स्तत्राह—यत इति । ६ अभिव्यक्तत्वमेवात्र कृतकत्व तेनानित्यत्वेनानपेक्ष प्रामाण्य घटादिवत् । ७ व्यभिचारादिति—तत्र तत्सत्त्वेऽपि प्रामाण्यसत्त्वादित्यर्थं । अयमाशय न हि नित्यत्व प्रामाण्ये हेतु आकाशादौ तदभावात् नाप्यनित्यत्वमप्रामाण्ये हेतुश्चक्षुरादेरपि प्रामाण्यादतोऽज्ञातार्थपरिच्छेदिनो वेदस्यानपेक्षप्रामाण्य-सिद्धिरिति । ८ न च पौरुषेयत्वादिति—शब्दार्थसम्बन्धस्य साङ्केतिकत्वाद्वेदस्य स्वशक्त्या चक्षुरादिवद्बो-धकत्वात् सकेतयितृपुरुषबुद्ध्यपेक्षत्वादप्रामाण्यमिति शङ्कितुराशय । ९ बुद्धिपूर्वेति—न हि वेदो धीपूर्वक-स्तदर्थमानान्तरायोगात् ऐशज्ञान तत्र भवदपि न वेदरचनायामुपयुज्यते निःश्वसितश्रुतेरतो वेदवत्तदर्थसब्धोऽपि शक्तिरूपश्चक्षुरादेरिव विद्यमान एव परस्माद्व्यज्यते न साङ्केतिकस्तस्माद्वस्त्वनुसारी वेदोऽध्यक्षादिवन्मानमिति समाधातुराशय । अनित्यत्वादौ स्थित सति बुद्धादिवाक्योत्थधीवत् वेदाप्रामाण्यमित्युक्तमयुक्त च द्रष्टव्यम् । वेद स्वार्थे मानमज्ञातज्ञापकत्वात्परेष्टेश्वरधीवदित्यपि बोध्यम् । १० ननु सिद्धान्तेऽपि निःश्वसितश्रुत्या वेदस्याधीपूर्वकत्वोपगमे प्रामाण्यविरोधो बालोन्मत्ताद्युक्तिवदित्याशङ्क्याऽऽह—न चोन्मत्तेति । विप्रलम्भकाद्युक्ति-समो वेद इत्यस्यायुक्तावसंदिग्धाऽबाधिताऽज्ञातधीहेतु सन् न तत्सम इति वक्तु शक्यत्वादित्याशय ।

---

नान्यथा तस्य प्रामाण्यमुपपद्यते ॥ प्रत्यक्षवदवचनविरुद्ध तेषु यद्भव । बुद्धवाक्यादिवत्तादृक्त्याज्य श्रुतिविरोधत ॥ न चेश्वरातिरेकेण कश्चित्स्रष्टाऽभ्युपेयत । इतिहासपुराणादेस्तदन्यस्यह कायत ॥ कारणत्व प्रमाणन यस्य साक्षाद्विनिश्चितम् । अपि तत्नायकर्तृत्वे तदेवाभ्युपगम्यत ॥ बीजमेवाङ्कुरादीना यथा कारणमिष्यत । अङ्कुराद्यात्मना तद्वद्बीजमेव तु कारणम् ॥ आद्यन्तयोयता बीज प्रत्यक्षणावसीयत । तस्मात्त मध्यकार्येषु बीजमेवास्तु कारणम् । न च वेदोक्तितो वेद श्रद्धयाय इहष्यते । किन्त्वमानत्वहेतूना वदवाक्यध्वसभवात् ॥ प्रामाण्य वेदवाक्याना न च माना तराश्रयात् । अक्षादरपि मानत्व यथोक्तादव कारणात् ॥ वा ३१६-३२६ ॥ अपौनरुक्त्यर्थं ब्राह्मणोद्धृता इत्युक्तम् ॥ अत्रेति प्रकृतवाक्यग्रहणम् । प्रसिद्धतिहासादिग्रह निदर्शितश्रुतिप्राति-कूल्यमभिप्रत्याऽऽह—प्रसिद्धैरिति ॥ भाष्यानुसारेण यदृग्वेद इत्यादि व्याख्यायाथान्तरमाह—मन्त्रेति । इतिहासा-दिशब्दैस्तर्हि कथमप्येवविध ब्राह्मण भाष्ये गृहीतमित्याशङ्क्य दूषयति—लोकेति । बाधकाभाव वृद्धप्रसिद्धि-

'नामप्रकाशवशा हि रूपस्य विक्रियावस्था । नामरूपयोरेव हि परमात्मोपाधिभूतयोर्व्याक्रियमाणयोः सलिलफेनवत्तत्त्वान्यत्वेना'निर्वक्तव्ययोः सर्वावस्थयोः संसारत्वमित्यतो नाम्न एव निश्वसितत्वमुक्तम् । तद्वचनेनेवे'तरस्य निश्वसितत्वसिद्धेः । अथवा

नामप्रपञ्चसृष्टिरेवात्रोपदिष्टा न रूपप्रपञ्चसृष्टि सा चोपदेष्टव्या सृष्टिपरिपूर्तेरन्यथाऽनुपपत्तेरित्याशङ्क्याऽऽह—नामेति' । यद्यपि नामतन्त्रा रूपसृष्टिरिति नामसृष्टिवचनेन रूपसृष्टिरर्थादुक्ता तथाऽपि सर्वसंसारसृष्टिर्नोक्ता नामरूपयोरेव संसारत्वे प्रागुक्तसृष्टे संसारो न स्यादित्याशङ्क्याऽऽह—नामरूपयोरिति । सर्वावस्थयोर्व्यक्ताव्यक्तावस्थयोरिति यावत् । नामप्रपञ्चस्यैवात्र सर्गोक्तिमुपपादितामुपसंहरति—इतीति । अत शब्दार्थं स्फुटयति—तद्वचनेनेति । निश्वसितश्रुतिं विधान्तरेणावतारयति—

की विकार व्यवस्था नामसंज्ञक प्रकाशक के अधीन है । जल और फेन के समान जिसका भेद या अभेदादि के द्वारा जिसका निर्वचन नहीं हो सकता, उन परमात्मा के उपाधिभूत विकार को प्राप्त हुए समग्र अवस्थाओं में स्थित नाम और रूप को ही संसार कहते हैं । इसलिए नाम के ही श्वासयुक्त होने का प्रतिपादन किया गया है क्योंकि उसके निर्वचन से ही रूप का निर्वचन सिद्ध होता है । अथवा यूँ कहो कि "ब्राह्मण जाति उसे भ्रष्ट कर देती है", 'यह जो कुछ भी है, सब आत्मा ही है"

१ नामाख्यप्रकाशकाधीना । २ भेदाभेदादिनाऽनिर्वाच्ययोः । ३ रूपस्य । ४ तथा च साम्यथादुक्तैवति बोध्यमिति भाव ।

नातिक्रमणीयेति भाव ॥ ऋगादिसंनिहितेतिहासादिशब्देनापि प्रसिद्धग्रहे स्मार्तं लिङ्गमाह—इतिहासेति । 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यती'ति भागान्तरम् । आदिमनुना शुद्धमनुनेति यावत् । अभिणाऽधीत्यपेरय ॥ इतिहासादिना वेदार्थनिरूपणं चेत्तदपेक्षया तत्प्रामाण्यादलपक्षप्रामाण्यक्षतिरित्याशङ्क्य वैपरीत्यान्मैवमित्याह—इतिहासेति । न हि व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायाद्व्याख्यातृवाक्याद्वेदार्थनिर्णय तदपेक्षया वेदोऽनपेक्षप्रामाण्यं जहातीति भाव ॥ इतिहासादेरपि वेदवत्प्रामाण्यं कुतस्तदपेक्षा स्वत एव तथोगादित्याशङ्क्याऽऽह—प्रत्यक्षेति ॥ कथमत्र प्रसिद्धेतिहासादिग्रहे कल्पान्तरस्मृतिरीश्वरस्यात्र कर्तृत्वश्रुतेरित्याशङ्क्याऽऽह—न चेति । इहेति च सिद्धान्तोक्तिः ॥ परस्यैव व्यासादिरूपेण पुराणादिकारणत्वं साधयति—कारणत्वमिति । परस्याज्ञानद्वारा सर्वकारणताया श्रुत्यादिसिद्धत्वात्तत्कार्यव्यासादेरितिहासादौ कर्तृत्वस्मृतेरपि तदेव ब्रह्म तत्र तत्र तद्रूपेण कारणं को ह्यन्य पुण्डरीकाक्षान्महाभारतकृद्भवेदित्युक्तेरित्यर्थ ॥ ब्रह्मैव व्यासाद्यात्मना तत्तत्कारणमित्यत्र दृष्टान्तमाऽऽह—बीजमिति । आद्यबीजस्याङ्कुरादिहेतुत्वं पत्रपुष्पादिहेतुत्वमङ्कुरादरस्येत्याशङ्क्याऽऽह—अङ्कुरादीति । तदात्मना बीजमेव कारणं पत्रपुष्पादरपीति शेष । तथा ब्रह्मैव तत्तदात्मना तत्र तत्र कारणमित्याह—तद्वदिति ॥ बीजस्यैवाङ्कुराद्यात्मना पत्रादिहेतुत्वमत्र नियामकापेक्षाया दृष्टान्तं प्रपञ्चयति—आद्यन्तयोरिति । कल्पान्तरस्मृत्यविरोधेऽपि नेतिहासादेः सापेक्षं प्रामाण्यं निश्वसितश्रुतेर्वेदवद्बुद्धिपूर्वकत्वादित्याशङ्क्याऽऽह—न चेति । अस्यार्थ —निश्वसितमिति वेदवचनेनाधीपूर्वोक्त्या वेदोऽनपेक्षप्रमाणं नेष्यते, किन्तु मानान्तरदृष्टार्थत्वादीनामप्रामाण्यहेतूनां तत्राभावादितिहासादेस्तु वेदोपबृंहकत्वात्तद्दृष्टार्थस्य मानपदता न चेतिहासादिविषयं निश्वसितश्रुतिविरोध परस्माद्व्यासादिरूपादनायामेन तदुत्पत्तिविषयत्वादिति ॥ लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायाद्वेदस्य मानान्तरादृष्टार्थत्वमसिद्धमित्याशङ्क्याऽऽह—प्रामाण्यमिति । पदानां शक्तिधियो मानान्तरापेक्षत्वेऽपि न वाक्यप्रामाण्यं तदपेक्षं तस्याज्ञातार्थत्वनियमादित्यर्थ । अज्ञातार्थत्व प्रामाण्यप्रयोजकमिति कथं निश्चीयते प्रसिद्धप्रमाणेषु तथादृष्टेरित्याह—अक्षादेरिति ॥

**स यथा सर्वासामपाᳫ समुद्र एकायनमेवᳫ सर्वेषाᳫ स्पर्शानां त्वगेकायनमेवᳫ सर्वेषां गन्धानां नासिके एकायनमेवᳫ सर्वेषाᳫ रसानां जिह्वैकायनमेवᳫ सर्वेषाᳫ रूपाणां चक्षुरेकायनमेवᳫ सर्वेषाᳫ शब्दानाᳫ**

आत्मा की सर्वरूपता मे दृष्टान्त यह है कि जैसे सम्पूर्ण नदी-सरोवरादि के जलो का समुद्र ही एकमात्र प्राप्तव्यस्थान (अभेदप्राप्ति का स्थल) है, वैसे ही सम्पूर्ण स्पर्शो का प्रलयस्थान त्वचा है। इसी प्रकार सम्पूर्ण गन्धो का एकायन दोनो नासिका है। ऐसे ही सम्पूर्ण रसो का एकायन जिह्वा है। ऐसे

---

सर्वस्य द्वैतजातस्याविद्या'विषयत्वमुक्त ब्रह्म तं परादादिदं सर्वं यदयमात्मेति' 'तेन वेदस्याप्रामाण्यमाशङ्क्यते। तदाशङ्कानिवृत्त्यर्थमिदमुक्तं पुरुषनिश्वासवदप्रयत्नोत्थित-त्वात्प्रमाण वेदो न यथाऽन्यो ग्रन्थ इति ॥१०॥

किंचा'न्यन्न केवलं स्थित्युत्पत्तिकालयोरेव प्रज्ञानव्यतिरेकेणाभावाज्जगतो ब्रह्मत्वं

---

प्रथवेत्यादिना। 'मिथ्यात्वेऽपि प्रतिबिम्बवत्प्रामाण्यसंभवादु'न्मत्तादिवाक्यानां च 'मिथ्याज्ञानाधीन-प्रयत्नजन्यत्वेनामानत्वाद्वेदस्य तदभावाद्विषयाव्यभिचाराच्च नाप्रामाण्यमित्याह—तदाशङ्केति। अन्यो ग्रन्थो बुद्धादिप्रणीतः स्वर्गकाम'श्चैत्य वन्देतेत्यादिः ॥ १० ॥

स यथा सर्वासामपामित्यादिसमनन्तरग्रन्थमुत्थापयति—किंचा'न्यदिति। 'तदेव व्याकरोति

---

इन श्रुतिवाक्यो द्वारा सम्पूर्ण द्वैतप्रपञ्च को अविद्या का कार्य कहा गया है। इन श्रुतिवाक्यो से वेद के अप्रामाण्य होने की शङ्का उपस्थित होती है। उसी आशङ्का के निरास के लिए कहा गया है—पुरुष के निःश्वास के समान निष्प्रयत्न उत्पन्न हुआ होने के कारण वेदो का प्रामाण्य सिद्ध होता है, यह बुद्धादि-प्रणीत) ग्रन्थान्तर की तरह नही है ॥१०॥

इसके अतिरिक्त दूसरी बात कही जाती है। प्रज्ञानघन से व्यतिरिक्त जगत् का अभाव रहने से उसका ब्रह्मत्व केवल स्थिति और उत्पत्ति के समय ही नही है, बल्कि प्रलयावस्था मे भी जगत् का ब्रह्मत्व सिद्ध है। जिस प्रकार जल, बुद्बुद और फेनादि की सत्ता जल को छोडकर नही है, उसी प्रकार

---

१ नायत्वम्। २ अनन वाक्यन। ३ तन वेदस्य प्रामाण्यमाशङ्क्यत इति। "इद सर्वं यदयमात्मे त्यादि-वाक्यन सवस्य द्वैतजातस्याविद्याविषयत्वकथनन सर्वस्य मिथ्यात्वमुक्त न हि मिथ्यात्व विनाऽविद्याविषयत्व सवस्य सभवति परस्यापि तद्विषयत्वापत्ते तन्मिथ्यात्व तदन्त स्थवेदस्यापि तद्भावाद्धूमाभासवदमानत्वमित्यर्थं। ४ अयदुच्यत इति भाव। ५ मिथ्यात्वेऽपीति—न हि मिथ्यात्वममानत्व हेतु प्रतिबिम्बादौ व्यभिचारात् (प्रतिबिम्बस्य मिथ्यात्वेऽपि सत्यबिम्बानुमापकत्वात्) किन्तु अनुत्पत्त्यादि (ज्ञानानुत्पादकत्वादि) तथा (मिथ्यात्वहेतु) तदत्र नास्ति श्रुतवाक्यस्य बुद्धयुत्पादकत्वात् सशयादश्चाभावादिति भाव। ६ निःश्वसित-श्रुत्या वेदस्याधीपूर्वकत्वाभ्युपगमात्प्रामाण्यविरोध उन्मत्तादुक्तिवदित्याशङ्क्याऽऽह—उन्मत्तादीति। ७ भ्रान्तिज्ञानवित यावत्। ८ चैत्यम्—बुद्धम्। ९. अन्यदेव।

'श्रोत्रमेकायनमेवँ सर्वेषाँ संकल्पानां मन एकायनमेवँ सर्वासां विद्यानाँ हृदयमेकायनमेवँ सर्वेषां कर्मणाँ हस्तावेकायनमेवँ सर्वेषामानन्दानामुपस्थ एकायनमेवँ सर्वेषां विसर्गाणां पायुरेकायनमेवँ सर्वेषामध्वनां पादावेकायनमेवँ सर्वेषां वेदानां वागेकायनम् ॥ ११ ॥

ही सम्पूर्ण शब्दो का एकायन श्रोत्र है। ऐसे ही सभी सकल्पो का एकायन मन है। ऐसे ही सभी विद्याओ का एकायन हृदय है। ऐसे ही समस्त कर्मों का एकायन हाथ है। ऐसे ही समस्त आनन्दो का एकायन उपस्थ है और इसी प्रकार समस्त विसर्गो का एकायन पायु है। ऐसे ही समस्त मार्गों का एकायन पाद है, इसी प्रकार समस्त वेदो का एकायन वाक् है (इस प्रकार विषयो के प्रलय से इन्द्रियो का प्रलय स्वय ही सिद्ध हो जाता है) ॥११॥

---

प्रलयकाले च, जलबुद्बुदफेनादीनामिव' सलिलव्यतिरेकेणाभावः । एवं प्रज्ञानव्यतिरेकेण तत्कार्याणां नामरूपकर्मणां तस्मिन्नेव लीयमानानामभावः । तस्मादेकमेव ब्रह्म प्रज्ञानघनमे'करसं प्रतिपत्तव्यमित्यत आह । प्रलयप्रदर्शनाय दृष्टान्तः स इति यथा येन प्रकारेण

---

—न केवलमिति । प्रलयकाले च प्रज्ञानव्यतिरेकेणाभायाज्जगतो ब्रह्मत्वमिति सम्बन्धः । उक्तमर्थं दृष्टान्तेन स्पष्टयति—जलेति । 'तथाऽपि प्रज्ञानमेवैकमेव' स्यान्न ब्रह्मेत्याशङ्क्याऽऽह —तस्मादिति । सत्यज्ञानाविवाक्याद्ब्रह्मण'स्तन्मात्रत्वादित्यर्थः । यथोक्त ब्रह्म चेत्प्रतिपत्तव्यं 'किमिति तर्हि स यथेत्यादि वाक्यमित्याशङ्क्य 'तच्छेषत्वेन प्रलयं दर्शयितुं दृष्टान्तवचनमेतदित्याह—'अत आहेति । प्रलीयतेऽस्मि-

---

प्रज्ञानघन से भिन्न उसके कार्य और उसी मे लीन होने वाले नाम, रूप और कर्मों का भी अभाव है, इसलिए प्रज्ञानघन, एकरूप और अद्वितीयब्रह्म है—ऐसा जानना चाहिए। इसी बात को श्रुति प्रतिपादित करती है। प्रलयप्रदर्शन का यह दृष्टान्त है, मन्त्र मे "स यथा" से लेकर दृष्टान्त है। "यथा" यानी

---

१ श्रोत्रमेकायनमित्यन्तर्गमित्य मूलग्रन्थो योज्य । तथाहि एतान्यपि विषयविशेषसामान्यानि मनोविषयसकल्पविशेषेषु प्रलीयन्ते तेषा सकल्पविशेषपूर्वकत्वात् । एव सर्वेषा सकल्पाना सकल्पविशेषाणा मन तद्विषयसामान्य सकल्पमात्रमेकायनम् आश्रय । तस्य सकल्पमात्रस्याध्यवसायपारतन्त्र्यदर्शनादबुद्धिविषयविशेषेषु विद्यानाम्दिनेष्वध्यवसायेष्वन्तर्भाव. । एवमासा सर्वासा विद्याना हृदय बुद्धिसामान्य विज्ञानमात्रमेकायन तदपि कारणभूत प्रज्ञानघने ब्रह्मणि प्रलीयत इति । २. यथा । ३. एकरूपम् । ४ उत्तरस्यामवस्थायामु प्रज्ञानव्यतिरेकेण जगतोऽभावेऽपि । ५ उक्तरीत्या । ६. प्रज्ञानेति बोध्यम् । ७ निर्मयम् । ८. यथोक्तब्रह्मप्रतिपत्तिशेषत्वेन । ९. प्रलयप्रदर्शनार्थं दृष्टान्तस्यापेक्षितत्वात् ।

'सर्वासां नदीवापीतडागादिगतानामपां' समुद्रोऽद्धिरेकायनमेकगमनमेकप्रलयोऽविभाग-प्राप्तिरित्यर्थः । यथाऽयं दृष्टान्त एवं सर्वेषां 'स्पर्शानां मृदुकर्कशकठिनपिच्छिलादीनां वायोरा'त्मभूतानां त्वगेकायनं त्वगिति त्वग्विषयं स्पर्शसामान्यमात्रं तस्मिन्प्रविष्टाः स्पर्शविशेषा आप इव समुद्रं तद्व्यतिरेकेणाभावभूता भवन्ति । तस्यैव हि ते संस्थान-मात्रा आसन् ।

'तथा तदपि स्पर्शसामान्यमात्रं त्वक्शब्दवाच्यं मनः 'संकल्पे मनोविषयसामान्यमात्रे

---

न्निति प्रलय एकश्चासौ प्रलयश्चेत्येकप्रलयः । तडागादिगतानामपां कुतः समुद्रे लयो न हि तासां तेन संततिरित्याशङ्क्याऽऽह—अविभागेति । 'अत्र हि समुद्रशब्देन जलसामान्यमुच्यते तद्व्यतिरेकेण च जलविशेषाणामभावो विवक्षितस्तेषां "तत्संस्थानमात्रत्वाद"तश्चाऽऽमामस्मिन्नविभागस्य प्राप्तिरिति समुद्रेऽविभागप्राप्तिरित्यर्थः । पिच्छिलादीनामित्यादिशब्देनानुक्तस्पर्शविशेषाः सर्वे गृह्यन्ते । विषयाणा-मिन्द्रियकार्यत्वाभावात्कुतः स्पर्शानां त्वचि विलयः स्यादित्याशङ्क्याऽऽह—त्वगितीति । स्पर्शविशेषाणां स्पर्शसामान्येऽन्तर्भावं प्रपञ्चयति—तस्मिन्निति ।

"तथाऽपि समस्तस्य जगतो ब्रह्मव्यतिरेकेणाभावाद्ब्रह्मत्वमित्येतत्कथं प्रतिज्ञातमित्याशङ्क्य परम्परया ब्रह्मणि सर्वप्रविलयं दर्शयितुं" क्रमम"नुक्रामति—तथेति । मनसि सति विषयविषयिभावस्य

---

जिस प्रकार "सर्वासामपाम्" अर्थात् समस्त नदी वापी और तालाब आदि के विभिन्न रूपों का जल "एकायनम्" अभिन्न नामरूपैक समुद्र को ही प्राप्त हो जाता है अर्थात् वही एक प्रलयस्थान एवं अविभागप्राप्ति का स्थल है । जिस प्रकार यह दृष्टान्त है, उसी प्रकार वायु के स्वरूपभूत मृदु, कर्कश, कठोर और पिच्छिल आदि सभी वायुविशेषों का त्वगिन्द्रिय ही प्रलयस्थान है । त्वक् से त्वचासम्बन्धी स्पर्शसामान्यमात्र समझना चाहिए उसी में सागर में जल के समान स्पर्शविशेष प्रविष्ट हो जाते हैं । उसके बिना वे अभावयुक्त हो जाते हैं क्योंकि वे उसी के संस्थानमात्र ही थे ।

---

१ विभिन्नरूपाणाम् । २ अभिन्ननामरूपैक । ३ एकप्राप्य । ४. अविभागस्य प्राप्तिर्यत्र । ५. स्पर्शानामिति । तज्ज्ञानानामित्यपि द्रष्टव्यम् । तत्र मृदुस्पर्शो वायोः । कर्कश—उष्ण स्पर्शस्तेजसः । कठिन कठोर पृथिव्याः । पिच्छिल—स्निग्ध । आदिना शीतो गृह्यते स च जलस्येति विवेक । ६ स्वरूपभूताना वायुविशेषाणामिति यावत् । अत्रास्य रहस्यमनुपदमेव स्फुटीभविष्यति । ७ तथेति—स्पर्शविशेषाणां तत्सामान्येऽन्तर्भाववदित्यर्थः ॥ स्पर्शानामित्यादि प्रलीयत इत्यन्तभाष्यतात्पर्यसंग्राहकाणि वार्तिकानि कथ्यन्ते—"स्पर्शादिज्ञानभेदानां त्वगाद्येकायनं तथा । स्वान्ते त्वगादयस्तद्वद्बुद्धौ च मनसस्तथा ॥ कर्मक्षयात्तथा बुद्धि कारणत्वेन तिष्ठति । एष साधारणस्तावत्प्रलयोऽबुद्धिपूर्वक ॥ प्रत्यग्याथात्म्यविज्ञानाद्वस्तुवृत्तानुरोधतः । प्रलयोऽज्ञानविध्वसाद्यस्त्वसौ बुद्धिपूर्वकः" ॥३२९-३३१॥ "पृथिव्यंशस्य बाहुल्यात्कठिन स्पर्श उच्यते । शीतश्च पिच्छिलश्चापां बाहुल्यात्स्पर्श इष्यते ॥ भूयस्त्वात्तेजसश्चोष्णः सुकुमारस्तथा मरुत् । बाहुल्यादिति विज्ञेयो यथोक्तगुणसंश्रयात्" ॥३३८-३३९॥ इति । अत्र साधारणो लय स्वापादौ ज्ञेय. । यथोक्तगुणास्तन्मात्राणि । ८. संकल्पात्मके मनसि । ९. प्रकृतवाक्य । १०. अवस्थाविशेष । ११ समुद्रशब्देन जलसामान्य-विवक्षात । १२ जलविशेषाणां जलसामान्य इव स्पर्शविशेषाणां स्पर्शसामान्येऽन्तर्भावेऽपि । १३. लयस्य । १४ दर्शयति ।

त्वग्विषय इव स्पर्शविशेषाः प्रविष्टं तद्व्यतिरेकेणाभावभूतं भवति । एवं मनोविषयोऽपि बुद्धिविषयसामान्यमात्रे प्रविष्टस्तद्व्यतिरेकेणाभावभूतो भवति । [1]विज्ञानमात्रमेव भूत्वा प्रज्ञानघने परे ब्रह्मण्याप इव समुद्रे प्रलीयते । एवं परम्पराक्रमेण शब्दादौ सह ग्राहकेण करणेन प्रलीने प्रज्ञानघने, उपाध्यभावात्सैन्धवघनवत्प्रज्ञानघनमेकरसमनन्तमपारं निरन्तरं ब्रह्म व्यवतिष्ठते । [2]तस्मादात्मैवैकमद्वयमिति प्रतिपत्तव्यम् ।

*तथा सर्वेषां गन्धानां पृथिवीविशेषाणां नासिके घ्राणविषयसामान्यम् । तथा

---

दर्शनादसति चादर्शना[1]न्मनःस्पन्दितमात्रं विषयजातमिति[2] [3]तस्य [4]तद्विषयमात्रे प्रविष्टस्य तदतिरेकेणासत्त्वमित्यर्थः । संकल्पविकल्पात्मकमनः[5]स्पन्दितद्वैतस्य संकल्पात्मके मनस्यन्तर्भावा[6]त्तस्य च संकल्पस्याध्यवसायपारतन्त्र्यदर्शनादध्यवसायात्मिकायां च बुद्धौ [7]तद्विषयस्य पूर्ववदनुप्रवेशान्मनोविषयसामान्यस्य बुद्धिविषयसामान्ये प्रविष्टस्य तद्व्यतिरेकेणासत्त्वमित्याह—एवमिति । सर्वं जगदुक्तेन न्यायेन [8]"बुद्धिमात्रं भूत्वा तद्व्यच्छेच्छान्त आत्मनीति श्रुत्या ब्रह्मणि [9]"पर्यवस्यतीत्याह—विज्ञानमात्रमिति । ननु जगदिदं विलीयमानं [10]"शक्तिशेषमेव विलीयते । तत्त्वज्ञानादृते तस्य निःशेषनाशानाश्रयणात् । [11]"तथा च कुतो ब्रह्मैकरसस्य प्रतिपत्तिरत आह—एवमिति । शक्तिशेषलयेऽपि [12]"तस्या दुर्निरूपत्वाद्वस्त्वैकरस्यधीरविरुद्धेति भावः । एकायनप्रक्रियातात्पर्यमुपसंहरति—तस्मादिति । घ्राणविषयसामान्यमित्यादावेकायनमिति सर्वत्र संबन्धः ।

कथं पुनरत्र[13] प्रतिपर्यायं ब्रह्मणि पर्यवसानं तत्राऽऽह—तथेति । यथा सर्वेषु पर्यायेषु ब्रह्मणि

---

(स्पर्शविशेषों का स्पर्शसामान्य में अन्तर्भाव होने के कारण) इसी प्रकार वह त्वक्शब्द-वाच्य स्पर्शसामान्य, त्वचा के विषय में स्पर्शविशेष के समान, मनोविषय सामान्यमात्ररूप सकल्पात्मक मन में प्रविष्ट होकर उससे पृथक् अभावयुक्त हो जाता है। तथा बुद्धिमात्र ही होकर समुद्र में जल के समान प्रज्ञानघन परब्रह्म में लीन हो जाता है। इस प्रकार परम्पराप्राप्त क्रम से ग्राहक इन्द्रियों सहित शब्दादि के प्रज्ञानघन में प्रलीन हो जाने पर उपाधि के अभाव होने से सैन्धव लवण के खण्ड के समान प्रज्ञानघन, एकरस, अनन्त, अपार, अखण्ड ब्रह्म ही अवशिष्ट रह जाता है। उक्तरीति से (समस्त उपाधियों के विलीन हो जाने पर) एकमात्र अद्वितीय ही है—ऐसा समझ लेना चाहिए।

इसी प्रकार पृथिवी के विशेषरूप सभी गन्धों की नासिकाएँ घ्राणसम्बन्धी विषयसामान्य है।

---

१. बुद्धिमात्रम् । २ उक्तरीत्या निखिलोपाधिविलये तदतिरेकिणोऽभावात् । ३. सकल्पमात्रम् । ४. हेतोः । ५. त्वक्शब्दवाच्यस्पर्शसामान्यस्य । ६ मनोविषयसामान्ये । ७. कल्पितद्वैतस्य । ८. मन शब्दितस्य । ९ मनोविषयसामान्यस्य । १० धीसामान्यम् । ११. अन्तर्भवति । १२. कारणात्मनाऽवस्थान यथा स्यात्तथा । १३. शक्तिशेषविलये च । १४. कारणाध्यवसाने । १५. एकायन-प्रक्रियायाम् ।

---

*तथा सर्वेषां गन्धानामित्यादि परस्मिन्प्रज्ञानघने प्रलीयते इत्यन्तभाष्यतात्पर्यसंग्राहकं वार्तिकद्वयम् । "गन्धादि-संहतिः पृथ्वी रसान्ताना तथा जलम् । तेजस्त्रयाणां वायुस्तु द्वयोरेकात्मकं नभः ॥ एवं लक्षणतः पञ्च भूतान्येतानि निर्दिशेत् । मूर्तामूर्तविपर्करणं गुणाविष्कृतिरिष्यते" ॥ ३३४-३३५ ॥ इति । अत्रार्थानामिन्द्रियेषु तेषां मनसि तस्य बुद्धौ तस्याः कारणे लयं विवक्षता तेषां तद्धियामिन्द्रियाणां च क्रमेण कारणात्मा लय उक्तः ।

सर्वेषां रसानामब्विशेषाणां जिह्वेन्द्रियविषयसामान्यम् । तथा सर्वेषां रूपाणां तेजोविशेषाणां चक्षुश्चक्षुर्विषयसामान्यम् । तथा शब्दानां श्रोत्रविषयसामान्यं पूर्ववत् । तथा श्रोत्रादिविषयसामान्यानां मनो विषयसामान्ये संकल्पे । मनोविषयसामान्यस्यापि बुद्धिविषयसामान्ये विज्ञानमात्रे। विज्ञानमात्रं भूत्वा परस्मिन्प्रज्ञानघने प्रलीयते । तथा कर्मेन्द्रियाणां विषया वदनादानगमनविसर्गानन्दविशेषास्तत्तत्क्रियासामान्येष्वेव प्रविष्टा न विभागयोग्या भवन्ति समुद्र इवाब्विशेषाः । तानि च सामान्यानि प्राणमात्रं प्राणश्च प्रज्ञानमात्रमेव । "यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः" इति कौषीतकिनोऽधीयते ।

ननु सर्वत्र विषयस्यैव प्रलयोऽभिहितो न तु करणस्य 'तत्र कोऽभिप्राय' इति ।

---

पर्यवसानं तथोच्यत इति यावत् । पूर्ववदिति स्वस्वविषयसामान्यवदित्यर्थः । संकल्पे लय इति शेषः । विज्ञानमात्र इत्यत्रापि तथैव । एवं सर्वेषां कर्मणामित्यादेरर्थमाह—तथा कर्मेन्द्रियाणामिति । क्रियासामान्यानां सूत्रात्मसंस्थानभेदत्वमभ्युपेत्याऽऽह—तानि चेति । क्रियाज्ञानशक्त्योश्चिदुपाधिभूतयोश्चिदभेदादभेदमभिप्रेत्य प्राणश्चेत्यादि भाष्यम् । तत्र तयोरन्योन्याभेदे मानमाह—यो वा इति ।

श्रुतिमुखात्करणलयो न प्रतिभाति स्वयं च व्याख्यायते तत्र को हेतुरिति पृच्छति—नन्विति ।

---

इसी प्रकार जल के विशेषरूप सभी रसो का रसनेन्द्रिय सम्बन्धी विषयसामान्य है । इसी प्रकार तेज के विशेषस्वरूप सभी रूपो का चक्षु अर्थात् चक्षुसम्बन्धी विषयसामान्य है । उसी प्रकार आकाश के सभी विशेषरूप शब्दो का पूर्वप्रतिपादित की तरह श्रोत्रसम्बन्धी विषयसामान्य है । इसी प्रकार श्रोत्रादि विषयसामान्यो का मन के विषयसामान्य सकल्प मे है, मन के विषयसामान्य का भी विषयसामान्यरूप विज्ञानमात्र मे है, पुन विज्ञानमात्र होकर प्रज्ञानघन परब्रह्म मे प्रलीन हो जाता है । इसी प्रकार कर्मेन्द्रियो के भाषण, आदान, गमन, विसर्ग और आनन्दरूप विशेष विषय उन-उन क्रियासामान्यो मे प्रविष्ट होकर समुद्र मे प्रविष्ट जल विशेष की तरह विभाग के योग्य नही रहते । उन सभी सामान्यो का प्राणमात्र मे लय हो जाता है और प्राण का (कारणात्मक ब्रह्म) प्रज्ञानमात्र मे लय हो जाता है । कौषीतकि शाखा वालो से ऐसा पाठ सुना जाता है—"जो प्राण है, वही प्रज्ञा है; जो प्रज्ञा है, वही प्राण है" ।

(इस पर पूर्वपक्षी शङ्का करता है—) किन्तु सभी जगह तो विषय की प्रलीनता ही उपपादित

---

१ आकाशविशेषाणाम् । २ तानि चेति—यथा बुद्धीन्द्रियाणा तदर्थाना च तत्सामान्येषु स्पर्शादिषु पञ्चसु लयस्तथा कर्मेन्द्रियाणा तदर्थाना च वदनादिसामान्येषु लयस्तेषा च प्राणे तस्यापि कारणात्मनि ब्रह्मणीति तात्पर्यम् । ३. करणलयानुक्तौ । ४. श्रुते. । ५. चित सकाशादभेदात् । ६. तयोश्चिदभेदेऽपि । ७ ज्ञानक्रियाशक्त्यो । ८. इत्योऽभीतिशेष ।

---

इदानी भूतलयार्थं तथा प्राणवस्थामाह—गन्धादीति ॥ भूतान्येव प्रसिद्धानि न तेषामुक्तरूपतेत्याशङ्क्य व्याख्यानतो विशेषयोरित्याह—एवमिति । गन्धादिशब्दान्तपञ्चगुणानामुपचयापचयस्थिताना सघातो भूतपञ्चकमित्यप्रसिद्ध किमिति व्याख्यायते तत्राऽऽह—भूतेति । या यथोक्तगन्धादीना कारणाद्व्यक्ति सैव मूर्तामूर्ताख्यभूतपञ्चकस्य स्वकारणादुत्पत्तिर्गुणलयश्च भूतलयश्च हेताविति लघीयस्या रीत्या व्युत्पादयितुमित्य व्याख्येयथ ॥

बाढम् । किंतु विषयसमानजातीयं करणं मन्यते श्रुतिर्न तु जात्यन्तरम् । विषयस्यैव [1]स्वात्मग्राहकत्वेन संस्थानान्तरं करणं नाम यथा रूपविशेषस्यैव संस्थानं प्रदीपः करणं सर्वरूपप्रकाशन एवं सर्वविषयविशेषाणामेव स्वात्मविशेषप्रकाशकत्वेन संस्थानान्तराणि करणानि प्रदीपवत् । [2]तस्मान्न करणानां पृथक्प्रलये यत्नः कार्यो विषयसामान्या-

श्रुत्या करणलयस्यानुक्तत्वमङ्गी करोति—बाढमिति । पृष्टमभिप्रायं प्रकटयति—किंत्विति । करणस्य विषयसाजात्यं विवृणोति— विषयस्यैवेति । किमत्र प्रमाणमित्याशङ्क्यानुमानमिति सूचयति—प्रदीप-वदिति । ❀चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैव व्यञ्जक[3]त्वव्यत्वा[4]त्सप्रतिपन्नवदित्यादीन्यनुमाना-न्यस्मत्कृत[5]शास्त्रप्रकाशिकायामधिगन्तव्यानि । करणानां विषयसाजात्ये फलितमाह—तस्मादिति ।

की गई है, इन्द्रियो की प्रलीनता नही कही गयी है, इसमे श्रुति का क्या अभिप्राय है ? (इस पर सिद्धान्ती कहता है—) हम आपकी बात को ठीक समझते है किन्तु श्रुति इन्द्रिय को विषय की समान-जातीय समझती है; दूसरी जाति वाली नही । विषय का ही विषयस्वरूप प्रकाशक भाव से जो दूसरी सस्थिति है, वह इन्द्रिय है, जिस प्रकार रूपविशेष का ही सस्थान प्रदीप सब प्रकार के रूपो को प्रकाशित करने का साधन है, इसी प्रकार प्रदीप की तरह समस्त विषय-विशेषो के विषयस्वरूप के प्रकाशकरूप से इन्द्रियाँ उन्ही की दूसरी सस्थिति मात्र है । इसलिए (विषयसाजात्य होने के कारण) सभी इन्द्रियो के पृथक् प्रलय करने मे प्रयत्न नही करना चाहिए । विषय सामान्यरूप होने से विषयो की प्रलीनता से ही इन्द्रियो की प्रलीनता सिद्ध हो जाती है ॥११॥

इसी ब्राह्मण के षष्ठ मन्त्र मे प्रतिज्ञा की है कि "यह जो कुछ है, सभी आत्मा है" । वहाँ प्रति-

१. विषयस्वरूपप्रकाशकत्वेन । २. करणाना विषयसाजात्यात् । ३ चक्षु सनिकर्षं व्यावर्तयितु व्यत्वोक्ति । ४. प्रदीपवत् । ५ वार्तिकामृतटीकायाम् ।

❀चक्षुस्तैजस रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वात् सप्रतिपन्नवदित्यादीन्यनुमानानीति । तथा च वार्तिकम्—"स्वग्राह्यार्थसजातीयमिन्द्रिय स्यात्प्रदीपवत् । रूपस्यैवावभासित्वाच्च चेत्स्याच्छ्रोत्ररूपवत्" ॥ ३६४ ॥ चक्षुषो ग्राह्यरूपासाजात्ये श्रोत्रेण रूपाग्रहवत्तेनापि तन्न गृह्येतेति बाधकमाह—न चेदिति ॥ इत्यादीत्यादिना विमत घ्राण पार्थिव गन्धादिषु गन्धस्यैव व्यञ्जकत्वात्कुङ्कुमगन्धाभिव्यञ्जकघृतवद्विमतमाप्य रसादिषु रसस्यैव व्यञ्जकत्वादास्योदकवद्विमत वायवीय स्पर्शादिषु स्पर्शस्यैव व्यञ्जकत्वाद्व्यजनवायुवत् । विमत श्रोत्रम् नाभस शब्दादिषु शब्दस्यैव व्यञ्जकत्वाद्वेणुविवरवदेतान्यनुमानानि गृह्यन्ते तदप्याह —"असाधारणगन्धादिग्राहकत्वा-नुमानत । ग्राह्यभूतप्रधानत्व घ्राणादिष्वपि निर्दिशेत्" ॥३६३॥ "न चेदर्थसजातीय सर्वार्थग्रहण भवेत् । एकैकस्येन्द्रियस्येह मनोबुद्ध्योर्यथा तथा ॥ सर्वभूतात्मकत्वात्तु सर्वार्थग्रहण तयो । मनोबुद्ध्योरिति ज्ञेयमन्यथा तदसभवात् ॥ त्वगादिज्ञानशक्तीना बुद्धि सामान्यमुच्यते । प्राण एव क्रियाशक्तिसामान्य तद्वदुच्यते" ॥३६५-६७॥ "योग्येन्द्रियस्य या यस्य ततोऽन्यत्रापि लक्षिता । वृत्तिस्तस्यैव सा ज्ञेया न स्वभावविपर्यय." ॥३७०॥ इति । गन्धादीना घ्राणाद्यारम्भकत्वमाह—असाधारणेति । अनुमानतो लिङ्गादिति यावत् । प्रधानत्व सारत्व कार्यत्वमित्यर्थ । दृष्टान्तार्थोऽपिशब्द ॥ उक्तानुमानेषु विपक्षे बाधकमाह—नेत्यादिना । इहेति व्यवहारभूमि-रुक्ता ॥ तयोरपि सर्वार्थग्रहण कथमित्याशङ्क्य भूतपञ्चकारब्धत्वादित्याह—सर्वेति । विमत भूतपञ्चक-जातीय तद्ग्राहकत्वाद्यद्ग्राहक तत्तथा यथा रूपग्राहको दीपस्तज्जातीयो न च हेत्वसिद्धिर्मनोबुद्ध्योरगोचर-

त्मकत्वाद्विषयप्रलयेनैव प्रलयः सिद्धो भवति करणानामिति ॥११॥

तत्रेदं सर्वं यदयमात्मेति [1]प्रतिज्ञातं [2]तत्र [3]हेतुरभिहित [4]आत्मसामान्यत्वमात्मजत्वमात्मप्रलयत्वं च । [5]तस्मादुत्पत्तिस्थितिप्रलयकालेषु प्रज्ञानव्यतिरेकेणाभावात्प्रज्ञानं ब्रह्म वाऽऽत्मैवेदं सर्वमिति प्रतिज्ञातं यत्त[6]त्तर्कतः साधितम् । [7]स्वाभाविकोऽयं[8] प्रलय इति

पृथग्विषयप्रलयादिति शेषः। एकायनप्रक्रियासमाप्ताविति शब्दः ॥११॥

स यथा सैन्धवखिल्य इत्यादे[9] संबन्धं वक्तुं वृत्तं कीर्तयति—तत्रेत्यादिना । पूर्व[10]संदर्भस्तत्रेत्युच्यते । प्रतिज्ञातेऽर्थे पूर्वोक्त हेतुमनूद्य साध्यसिद्धि फलं दर्शयति—तस्मादिति । उक्तहेतोर्यथोक्तं ब्रह्मैव सर्वमिदं जगदिति यत्प्रतिज्ञातमिदं सर्वं यदयमात्मेति" तत्पूर्वोक्त"[11]दृष्टान्तप्रबन्धरूपतर्कवशात्साधितमिति योजना । [12]उत्तरवाक्यस्य [13]विषयपरिशेषार्थमुक्तप्रलये पौराणिकसमतिमाह—स्वाभाविक

ज्ञात अर्थ में आत्मसामान्यत्व, आत्मजनितत्व और आत्मप्रलयत्व ये कारण बतलाये गये हैं। इसलिए (सामान्यविशेषात्मक सम्पूर्णजगत् के आत्मसामान्यत्व, आत्मजत्व एव आत्मप्रलयत्व होने के कारण) उत्पत्ति, स्थिति और प्रलयकाल मे प्रज्ञानघन को छोडकर किसी की सत्ता न होने के कारण जो ऐसी प्रतिज्ञा की थी कि "प्रज्ञान ब्रह्म है", "यह सब आत्मा ही है", उसे तर्क से भी सिद्ध कर दिया। पौराणिको के मत से ब्रह्म मे लयात्मक प्रलय स्वाभाविक हुआ करता है । और जो ब्रह्मज्ञानियो का

१ षष्ठकण्डिकायाम् । २ प्रतिज्ञातार्थे । ३ नामरूपादिविभिन्नार्थाना महासामान्यस्थानीयात्मनि स्थितिकालेऽपि विचारे क्रियमाणेऽन्तर्भावात्तदात्मकत्वमिति यावत् । एतच्च नवमकण्डिकाव्याख्यावसरे प्रत्यपादि । ४ आत्मा सामान्य यस्य तत्त्वम् । ५ सर्वस्य सामान्यविशेषात्मकस्य जगत आत्मसामान्यत्वादात्मजत्वादात्मप्रलयत्वाच्चेत्यर्थ । ६ मननात्मात् । ७ स्वाभाविक इति—नैमित्तिकस्वाभाविकात्यन्तिकभेदात्त्रिविधो लय । उक्त हि—"सर्वेषामेव भूताना त्रिविध प्रतिसचर । नैमित्तिक प्राकृतिकस्तथैवाऽऽत्यन्तिको लय इति" ॥ तत्राऽऽद्यो ब्रह्मकर्तृकोऽवान्तरलय । यथाऽऽह—ब्राह्मो नैमित्तिकस्तेषा कल्पान्त प्रतिसचर इति । द्वितीयस्तु कार्याणा प्रकृताववसानम् । आत्यन्तिको ज्ञानाधीनो मोक्ष इत्याह—बुद्धिपूर्वक इति भाष्ये । उक्त च "आत्यन्तिकश्च मोक्षाख्य प्राकृतो द्विपरार्धिक" इति । स्वाभाविकलयस्य धीपूर्वकलयाद्विशेषो वार्तिके दर्शित । तथाहि—"शक्तिमात्रात्मना स्थान कार्याणा यत्स्वकारणे । इत्यनात्यन्तिकलयो भूयोजन्मकृतक्षण" इति ॥ स्वाभाविके लये कार्याणा कारणे शक्त्यात्मनाऽवस्थानमिति यस्मादास्थित तस्मादसावनात्यन्तिक इति योजना । अनात्यन्तिकत्व विशदयति—भूय इति । पुनरपि जन्मार्थं कृतावकाशत्वात्प्राकृतोऽयमित्यर्थ ॥ ८, ब्रह्मणि लयात्मक । ९ पूर्वग्रन्थेन सह । १० वाक्येन । ११ दुन्दुभ्यादिदृष्टान्तग्रन्थरूप । १२ अखण्डार्थधीप्रकटनार्थस्य । १३. पूर्वग्रन्थविपर्यासाकार्याय ।

स्यानात्मनोऽसत्त्वात्साजात्य च द्रव्यत्वावान्तरजात्येष्टमिति न सिद्धसाध्यता तद्ग्राहकत्व च तत्कारणतति नादृष्टादौ व्यभिचार इति भाव. । अनुभवसिद्धहेत्वनुपपत्ति विपक्षे बाधकत्वेनाऽऽह—अन्यथेति ॥ त्वगादीना भौतिकत्वमुक्त्वा प्रकाशाख्य साधारण रूपमाह—त्वगादीति । ज्ञानेन्द्रियाणा तच्छक्तियुक्ताना प्रकाश साधारण रूपमित्यर्थ । कर्मेन्द्रियाणामितरवद्भौतिकत्व मत्वा साधारण रूपमाह—प्राण इति । अस्यार्थ —वाङ्नभोविकारो विवरप्राधान्ये सति शब्दव्यञ्जकत्वाच्छ्रोत्रवद्धस्तौ वायवीयौ नियमेनाऽऽकाशानपेक्षस्पर्शवद्ग्राहकासाधारणकरणत्वात्त्वग्वदायुरूपस्य बलस्य तत्र दृष्टेश्च प्राणो वै बलमिति हि श्रुति । पादौ तेजसौ प्रायेणाप्णस्पर्शत्वाद्दीपवत् ।

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्यात् । यतो यतस्त्वाददीत लवणमेवैव वा अर इदं [1]महद्[2]भूतम[3]नन्तम[4]पारं**

इस विषय मे यह दृष्टान्त है, जैसे—जल मे डाला हुआ नमक का डला जल मे ही विलीन हो जाता है । उसे जल से पृथक् करने मे कोई समर्थ नही होता, पर जहाँ-जहाँ से जल ग्रहण किया जाता है, वहाँ वहाँ वह नमकीन ही प्रतीत होता है । हे मैत्रेयी ! वैसे ही यह महद्भूत परमात्मा अनन्त, अपार

---

पौराणिका वदन्ति । य स्तु बुद्धिपूर्वकः प्रलयो ब्रह्मविदां ब्रह्मविद्यानिमित्तोऽयमात्यन्तिक इत्याचक्षते । अविद्यानिरोधद्वारेण यो भवति तदर्थोऽयं विशेषारम्भः—

[1]तत्र दृष्टान्त उपादीयते स यथेति । ❀सैन्धवखिल्यः सिन्धोर्विकारः सैन्धवः

---

इति । कार्याणां प्रकृतावाश्रितत्व स्वाभाविकत्वम् । [2]प्रलयान्तरेऽपि तेषा संमतिं सगिरते—यस्त्विति । [3]द्वितीयप्रलयमधिकृत्यानन्तरग्रन्थमवतारयति—अविद्येति । तत्रैवात्यन्तिकप्रलयोक्तिः । उदकं

---

ब्रह्मविद्या के निमित्त बुद्धिपूर्वक लय है, उसे (मोक्षाख्य) आत्यन्तिक कहते है । जो प्रलय अविद्या की निवृत्ति द्वारा होता है, उसी के प्रतिपादन के लिए यह विशेष प्रारम्भ किया जाता है ।

(कार्यकारण प्रपञ्च का ज्ञान द्वारा उससे विलक्षण ब्रह्म मे विलय होने पर) यहाँ दृष्टान्त का उपपादन किया जाता है । "सैन्धवखिल्य" पद मे सिन्धु के विकार का नाम सैन्धव है, सिन्धु शब्द से

---

१ अनवच्छिन्नम् । २ कूटस्थम् । ३ अकारणकम् । ४ अकार्यकम् । ५ प्रलय । ६. तत्प्रदर्शनार्थोऽज्ञाननिवर्तकधीप्रदर्शनार्थोत्तरग्रन्थारम्भ इत्यर्थ । ७ कार्यकारणप्रपञ्चस्य तद्विलक्षणे ब्रह्मणि ज्ञानाद्विलये । ८ आत्यन्तिके । ९ त्रैकाल्यजन्मादिहत्वज्ञानध्वस्तिर्हि बुद्धिपूर्वको ध्वसस्तमुपादायेत्यर्थ ।

---

पायुराप्य स्निग्धत्वात्समतवदुपस्थ पार्थिवो गन्धवत्त्वात्समतवत् । एव भौतिकानामेषा क्रियाशक्तिमता साधारणं रूप त्वगादीना प्रकाशवत्क्रियति । तेजोमयी वागित्यादिश्रुतेर्वाक्तैजसी हस्तो पूर्ववद्वायवीयावव पायु पार्थिवो गन्धवत्त्वादुपस्थिरेव रयिरित्यादिश्रुते प्रजननमाप्य परिशेषात्पादौ नाभसाविति वार्त्य ॥ यत्तु शब्दव्यञ्जकत्वेन श्रोत्रादेराकाशविकारत्व तदयुक्त तैजसे चक्षुष्यपि तद्व्यञ्जकत्वदृष्टेश्चक्षु श्रवा सर्प इति हि प्रसिद्धि । यच्च हस्तत्वचो स्पर्शवदादानसाधनत्वाद्वायवीयत्व तदसत्पादादौ व्यभिचाराच्च चासति प्रतिबन्धे विशिष्टस्पर्शत्वा-त्पादादेस्तैजसत्व हस्तादावपि तद्भावाच्च च स्निग्धत्वात्पाय्वादेराप्यत्व घृतादौ व्यभिचाराच्च च गन्धवत्त्वादुपस्थादि पार्थिव पाय्वादावपि तद्भावादतो नेन्द्रियाणा कार्यव्यवस्थया भौतिकत्वमित्यत आह—यार्थेति । यस्य श्रोत्रादेर्या योग्या श्रवणाद्या वृत्ति सा चक्षुरादौ दृष्टाऽपि तस्यैव श्रोत्रादर्जया स्वभाववैपरीत्यायोगात्स्थानभेदाभावेऽपीन्द्रियभेदस्य कार्यभेदगम्यस्य दुरपह्नवत्वादित्यर्थ ॥

❀सैन्धवखिल्य इत्यादीत्युच्यते एतदन्तभाष्यतात्पर्योद्घाटकानि वार्तिकानि तथाहि—"सामुद्रमम्भ खिल्यत्व याति भानुविपाकत । सिन्धारायात स यतस्तस्मात्सैन्धव उच्यते ॥ असभिन्नस्वावयव खिल्य सोऽत्र निगद्यते । सोऽय सैन्धवखिल्योऽस्तो यथैवेह महोदधौ ॥ तेजो विरोधिनी प्राप्य प्रकृतिं विजहात्यथ । तेजोवियोगात्काठिन्य

'विज्ञानघन एव। एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१२॥

और विज्ञानघन है। यह इन देहादि उपाधियों के साथ मानो सत्यशब्दवाच्य भूतों में प्रकट होकर उनके नाश के पीछे नष्ट हो जाता है। देह-इन्द्रियभाव से मुक्त होने पर (मैं अमुक हूँ, अमुक का पुत्र हूँ, यह मेरा परिवार है—ऐसी कोई) विशेषसंज्ञा इसकी नहीं रह जाती। हे मैत्रेयि! ऐसा मैं तुमसे कहता हूँ। इस प्रकार याज्ञवल्क्य ने अपनी प्रिया भार्या मैत्रेयी के प्रति परमार्थदृष्टि का निरूपण किया ॥१२॥

---

'सिन्धुशब्देनोदकमभिधीयते स्यन्दनात्सिन्धुरुदकं तद्विकारस्तत्र भवो वा' सैन्धवः सैन्धवश्चासौ खिल्यश्चेति सैन्धवखिल्यः 'खिल एव 'खिल्यः स्वार्थे यत्प्रत्यय उदके सिन्धौ स्वयोनौ प्रास्तः 'प्रक्षिप्त उदकमेव विलीयमानमनुविलीयेत। यत्तद्भौमतेजसः संपर्कात्काठि-

---

विलीयमानमित्ययुक्तं काठिन्यविलयेऽपि तल्लयादर्शनादित्याशङ्क्याऽऽह—यत्तदिति। न हेति प्रतीक-

---

जल का ग्रहण होता है। बहने के कारण जल ही सिन्धु है उसका विकार अथवा उसमें जो आगत हो, उसे सैन्धव कहा जाता है, जो सैन्धव हो और शकल हो, उसका नाम सैन्धवखिल्य है। खिल यानी

---

१ विशुद्धप्रज्ञप्तिमात्रैकरस। २ अचलोद्भूतमेव लवण सैन्धवमभिहित न तु सामुद्रं तस्य पाषाणाकारता-ऽभावात् खिल्यशब्देन चात्र तस्याविवक्षितत्वादित्यभिप्रेत्य सिन्धुशब्दार्थमाह—सिन्धुशब्देनेति। ३. शत आयात इत्यपि द्रष्टव्यम्। ४. शकलम्। ५ स्वावयवाना मिथ समृष्टतया दार्ढ्यं खिल्यत्वम्। ६. प्रक्षिप्त सन् खिल्यारम्भकत्वेन तदवयवभूतमुदक विलीयमानमनु पश्चाद्विलीयेतैव उदकभावमापद्यत एवेत्यर्थः।

---

ध्वस्तौ भवति तद्वनम् ॥ काठिन्यकारणध्वस्तौ खिल्यस्येह महोदधौ। कठिनोदकविध्वंसमनु खिल्यो विलीयते ॥ यदेवाकृत्रिम रूप तदेवास्यावशिष्यते। तेजोवयवमवष्टम्भमुर्वं विनिवर्तते ॥ तेज आपोऽभिसवन्ध कारणं खिल्यरूपिण। तद्भावभावतस्तस्य तद्ध्वस्तौ ध्वसतस्तथा" ॥४०४-४०६॥ इति। दृष्टान्तवाक्यार्थं सक्षिप्य प्रपञ्चयन्खिल्यत्वे निमित्तमाह—सामुद्रमिति। सैन्धवशब्दार्थमाह—सिन्धोरिति ॥ खिल्यपदार्थमाह—असभिन्नेति। स्वावयवानाममभिन्नत्व मिथ ससृष्टतया दार्ढ्यम। अयेति स्वयोनावुदके प्रक्षेपात्प्राप्तस्यावस्थामित्यर्थः। पदयोरर्थमुक्त्वा वाक्यार्थमाह—सोऽयमिति। यन्निमित्तमुदक खिल्यरूपेण परिणत तद्विरोधिनी प्रकृति प्राप्य तदेव खिल्यरूप तजो जहातीत्यर्थ। अथशब्दो विरोधिप्राप्तस्तेजसस्त्यागहेतुत्वद्योतनार्थः ॥ पाचके तेजसि त्यक्तेऽपि खिल्यरूपस्थितिमाशङ्क्याऽऽह—तेज इति ॥ एतदेव स्फुटयति—काठिन्येति। खिल्यस्य महोदधौ क्षिप्तस्य काठिन्यहेतुतेज सपर्कध्वस्तौ कठिनोदकध्वंसद्वारा खिल्यस्यापि ध्वस्तिरित्यर्थ ॥ अवशिष्टमर्थमाह—यदेवेति। अस्य खिल्यस्येति यावत्। तच्चोदकमात्रम। अकृत्रिमत्व काठिन्येऽपि तुल्यमित्याशङ्क्याऽऽह—तेज इति ॥ तर्हि तद्योगमात्र खिल्यताहेतुरिति व्यर्थ पृथिव्यादीत्याशङ्क्याऽऽह—तेज आदीति। तेजोवत्पृथिव्यादेरपि तद्धेतुत्वे हेतुमाह—तद्भावेति। अन्वयव्यतिरेकाभ्यां हि कारण कल्पते तौ च तेजसीव पृथिव्यादावपि तुल्यौ तेनाविशिष्ट कारणत्वमित्यर्थः।

न्यप्राप्तिः खिल्यस्य स्वयोनिसंपर्कादपगच्छति तदुदकस्य विलयनं 'तदनु' सैन्धवखिल्यो विलीयत इत्युच्यते । 'तदेतदाहोदकमेवानुविलीयेतेति । न ह नैवास्य 'खिल्यस्योद्ग्रहणायो'द्धृत्य 'पूर्ववदग्रहणाय ग्रहीतुं नैव समर्थः कश्चित्स्यात्सुनिपुणोऽपि । इवशब्दोऽनर्थकः । ग्रहणाय नैव समर्थः कस्मात् । यतो यतो यस्माद्यस्माद्देशात्तदुदकमाददीत गृहीत्वा 'स्वादयेल्लवणास्वादमेव तदुदकं न तु खिल्यभावः' ।

यथाऽयं दृष्टान्त एवं वा अरे मैत्रेयीदं परमात्माख्यं महद्भूतम् । यस्मान्महतो 'भूतादविद्यया परिच्छिन्ना सती त्वं कार्यकरणोपाधिसंबन्धा'त्खिल्यभावमापन्नाऽसि मर्त्या जन्ममरणाशनायापिपासादिसंसारधर्मवत्यसि नामरूपकार्यात्मिका'ऽमुष्यान्वयाऽहमिति स

---

मादाय व्याचष्टे—नैवेति । अन्वयप्रदर्शनार्थं नैवेति पुनरुक्तम् ।

महद्भूतमेकमद्वैतमित्युत्तरत्र संबन्धः । "अस्यार्थस्य सर्वोपनिषत्प्रसिद्धत्वप्रदर्शनार्थो वैशब्दः । इदं महद्भूतमित्यत्रेदंशब्दार्थं विशदयति—यस्मादित्यादिना । तदिदं परमात्माख्यं महद्भूतमिति पूर्वेण संबन्धः । खिल्यभावापत्तिकार्यं कथयति—मर्त्येत्यादिना । कोऽसौ खिल्यभावोऽभिप्रेतस्तत्राऽऽह —नामरूपेति । कार्यकरणसंघाते तादात्म्याभिमानद्वारा जात्याद्यभिमानोऽत्र खिल्यभाव इत्यर्थः । इतिशब्देनाभिमानो लक्ष्यते । यथोक्ते खिल्यभावे सति कुतो "भूतस्य "महत्त्वमित्याशङ्क्याऽऽह—

---

शकल ही खिल्य है । इसमें स्वार्थ मे 'यत्' प्रत्यय हुआ है । उदकमय सिन्धुरूप अपने उत्पत्तिस्थान में "प्रास्त" अर्थात् डाले जाने के कारण "उदकमेवानुविलीयेत" अर्थात् जल में विलीन होकर जलभाव को प्राप्त हो जाता है । पार्थिव तैजस सम्पर्क से जो उस डले मे ठोसपन आ गया था, वह अपने कारण का सम्पर्क पा जाने से मिट जाता है । यही जल का विलयन होना है । उसके साथ सैन्धवशकल भी विलीन हो जाता है, यह कहा जाता है । इसी से (उदकविलयन को तात्पर्य करके) कहा गया है, वह जल के साथ विलीन हो जाता है । "अस्य" अर्थात् इस विलीन शकल के "उद्ग्रहणाय" अर्थात् जल से निकाल कर उदकप्रक्षेप से पूर्व के समान ग्रहण करने मे कोई परम निष्णात पुरुष भी समर्थ नही होता । 'इव' शब्द (अलङ्काररूप होने से) निरर्थक ही है । उसे ग्रहण करने के लिए समर्थ नही ही होता । क्यों समर्थ नही होता ? क्योंकि "यतो यतो" यानी जिस-जिस देश से उस उदक को "आददीत" ग्रहण करके स्वाद लेता है; वह जल लवण के स्वाद वाला होता है, उसमे ठोसपन नही होता ।

जिस प्रकार यह दृष्टान्त है, इसी प्रकार अरी मैत्रेयी ! यह परब्रह्मसंज्ञक अनवच्छिन्न महद्भूत है । जिस महान् परमार्थरूप से तू अविद्या के द्वारा परिच्छिन्न होकर कार्यकरणरूप उपाधि के सम्बन्ध से परिच्छिन्नाभिमान को प्राप्त हुई है, तथा मरणधर्मा जन्म, मरण क्षुधा और पिपासा आदि सांसारिक

---

१. यथात्तकाठिन्यापगमात्मकादवसथानन्तरम् । २. यथोक्तमुदकविलयनमभिप्रेत्याहेत्यर्थः । ३. विलीनस्य । ४. अङ्कुर इति शेषः । ५. उदकप्रक्षेपात्प्रागिव । ६. खिल्यग्रहणाभिलाषी । ७. यहीनु मयद इति शेष. । ८. परमार्थरूपात् । ९. परिच्छिन्नाभिमानम् । १०. अमुकवर्चोग यावत् । ११ ब्रह्मणो महत्त्वादिरूपस्य । १२. महातत्त्वस्य । १३. एकस्यावयवस्य खिल्यभावे न विच्छिन्नत्वान्महत्त्वादिच्युतिरित्यभिप्राय ।

खिल्यभावस्तव' कार्यकरणभूतोपाधिसंपर्कभ्रान्तिजनितो महति भूते स्वयोनौ महासमुद्रस्थानीये परमात्मन्यजरेऽमरेऽभये शुद्धे सैन्धवघनवदेकरसे प्रज्ञानघनेऽनन्तेऽपारे 'निरन्तरेऽविद्याजनितभ्रान्तिभेदवर्जिते प्रवेशितः । 'तस्मिन्प्रविष्टे 'स्वयोनिग्रस्ते खिल्यभावेऽविद्याकृते भेदभावे 'प्रणाशित इदमेकमद्वैतं महद्भूतं महच्च तद्भूतं च महद्भूतं सर्वमहत्तरत्वादाकाशादिकारणत्वाच्च भूतं त्रिष्वपि कालेषु स्वरूपाव्यभिचारात्सर्वदैव परिनिष्पन्नमिति त्रैकालिको निष्ठाप्रत्ययः ।

अथवा भूतशब्दः परमार्थवाची महच्च तत्पारमार्थिकं चेत्यर्थः । लौकिकं तु यद्यपि महद्भवति स्वप्नमायाकृतं हिमवदादिपर्वतोपमं न परमार्थवस्तु । अतो विशिनष्टीदं

---

स खिल्यभाव इति । खिल्यभावः स्वशब्दार्थः । परस्य परिशुद्धत्वार्थमजरादिविशेषणानि । केन रूपेणैकरस्यं तदाह—प्रज्ञानेति । तस्यापरिच्छिन्नत्वमाह—अनन्त इति । 'तस्य सापेक्षत्वं वारयति—अपार इति । प्रतिभासमाने भेदे कथं यथोक्तं तत्त्वमित्याशङ्क्याऽऽह—प्रविष्टे इति । भवतु यथोक्ते तत्त्वे खिल्यभावस्य प्रवेशस्तथाऽपि किं स्यादित्यत आह—तस्मिन्निति । महत्त्वं साधयति—सर्वेति । भूतत्वमुपपादयति—त्रिष्वपीति ।

महदित्युक्ते पारमार्थिकं चेति विशेषणं किमर्थमित्याशङ्क्याऽऽह—लौकिकमिति । जाग्रत्कालीन

---

धर्मों वाली स्थिति को प्राप्त हुई है कि मैं नामरूपकार्यात्मिका अमुकवस्था हूँ । देहेन्द्रियभूत उपाधि के तादात्म्य से भ्रान्तिजनित तेरा यह स्वरूपभूत महान् भूत मे खिल्यभाव स्वकारण महासमुद्रस्थानीय अजर, अमर, अभय, शुद्ध, सैन्धवखण्ड के समान अछिद्र, एकरस, प्रज्ञानघन, अनन्त, अपार, अव्यवहितस्वरूप, अविद्याजनित भ्रान्ति भेद से विवर्जित, परब्रह्म में प्रविष्ट हो गया है। यथोक्त ब्रह्मतत्त्व मे प्रविष्ट हो जाने पर उस खिल्यभाव के अपने कारण द्वारा लीन कर दिये जाने पर अविद्याकृत द्वैतभाव का ('तत्त्वमसि' महावाक्य अर्थ के ऐक्यबोध से) नाश हो जाने से यह एक अद्वैत महद्भूत (परब्रह्म) ही अवशिष्ट रह जाता है । महान् और भूत होने से वह महद्भूत कहा जाता है । इसके अतिरिक्त वह आकाशादि (भूतो) का कारण होने से सबसे महान है । तीनो ही कालो में उसके स्वरूप का व्यभिचार न होने से वह ज्यो का त्यो सर्वदा बना रहता है, इस से 'भूत' नाम पड़ा । "भूत" शब्द में "क्त" यह निष्ठाप्रत्यय त्रैकालिक है ।

अथवा "भूत" शब्द परमार्थवाची है। जो महान् और पारमार्थिक हो; वह महद्भूत है, यह अर्थ है । यद्यपि हिमवान् आदि पर्वतो के समान लौकिक वस्तु, जो स्वप्न-मायाकृत होती है, वह भी महान् होती है, किन्तु वह परमार्थ वस्तु नही है । इसी से यह महान् भी है और भूत भी है, ऐसा विशेषण श्रुति प्रतिपादित करती है । "अनन्तम्" अर्थात् जिसका कार्य विद्यमान नही होता, वह (अकारणक) अनन्त है । कदाचित् आनन्त्य अपेक्षित हो, इसलिये 'अपारम्' यानी अकारणक विशेषण

---

१ स्वरूपभूत महति भूत इत्यन्वय । २. तादात्म्येति भाव. । ३. अछिद्ररूपे । ४. अव्यवहितस्वरूप इति यावत् । ५ यथोक्ते ब्रह्मतत्त्वे । ६. प्रविष्ट इत्यतदेव विवृणोति—स्वेति । ७. वाक्यात्तत्त्वमर्थयोरैक्यबोधेन प्रणाशित इत्यर्थः । ८. आनन्त्यस्य ।

तु महच्च तद्भूतं चेति । 'अनन्तं नास्यान्तो' विद्यत इत्य'नन्तम् । कदाचिदापेक्षिकं स्यादित्यतो विशिनष्ट्य'पारमिति । विज्ञप्तिर्विज्ञानं विज्ञानं च तद्घनश्चेति विज्ञानघनः । घनशब्दो जात्यन्तर'प्रतिषेधार्थः । यथा सुवर्णघनोऽयोघन इति । एवशब्दोऽवधारणार्थः । नान्य'ज्जात्यन्तरमन्तराले विद्यत इत्यर्थः ।

यदी'दमेकमद्वैतं 'परमार्थतः स्वच्छं संसारदुःखासंपृक्तम् । किंनिमित्तोऽयं खिल्यभाव

परिदृश्यमानं हिमवदादि महद्यद्यपि भवति तथाऽपि स्वप्नमाया'दिसमत्वान्न तत्परमार्थवस्तु । "न हि दृश्य जडमिन्द्रजालादेर्विशिष्यतेऽसौ लौकिकान्महतो ब्रह्म व्यावर्तयितुं विशेषणमित्यर्थः । आपेक्षिकं स्यादा"नन्त्यमिति शेषः । अवधारणरूपमर्थमेव स्फोरयति—नान्यदिति ।

एतेभ्यो भूतेभ्यः समुत्थायेत्यादिसमनन्तरवाक्यव्यावर्त्यामाशङ्कामाह—यदीदमिति । वस्तुतः शुद्धत्वे किं सिध्यति तदाह—संसारेति । "तर्हि "तस्मिन्निमित्ताभावान्न तस्य खिल्यत्वमिति मत्वाऽऽह

लगाया है । (विशुद्धप्रज्ञप्तिमात्र एकरस) विज्ञप्ति ही विज्ञान है, जो विज्ञान हो और घन हो; उसे विज्ञानघन कहा है । यहाँ घनशब्द विज्ञप्तिजाति का अर्थान्तरप्रतिषेध करने के लिए है, जिस प्रकार सुवर्णघन, लोहघन इत्यादि । 'एव' शब्द निर्धारणार्थक है । इसके भीतर कोई दूसरी कार्यकारणात्मक जाति नहीं है, यह इसका भाव है ।

यदि यह ब्रह्मात्मतत्त्व एक, अद्वैत, परमार्थत' शुद्ध (आगन्तुक शुद्धिरहित), सांसारिक दुःख

१. अनन्तमित्याद्यपारमित्यन्तभाष्यरहस्योद्घाटकं सार्थवार्तिकम् । तथाहि—"कारणस्य निषेधोक्तिरनन्तमिति यद्वचः । अपारमितिकार्यस्य पारः कार्यस्य कारणम् ॥ कारणस्य तथा कार्यमन्तोऽनादेः प्रसिद्धितः" ॥४१३-४१४॥ इति कथमपारशब्देन परस्य कार्यत्वं निरस्यते तत्राऽऽह—पार इति । अपूर्वमिति कारणनिषिद्धे कार्यत्वमस्य निरसितुं सुशकमित्यर्थः ॥ तथाऽपि कथमनन्तपदेन कारणत्वमस्य निषिध्यते तत्राऽऽह—कारणस्येति । अनादि हि कारणमन्यथाऽनन्वयादनवस्थानाच्च तस्य कार्यमन्तस्तस्यान्तत्वप्रसिद्धेर्न हि मृदादि घटादिभावापन्नं शरावादि करोति ततोऽनपरमिति कार्यनिरासात्कारणत्वं परस्य निषेद्धुं शक्यमित्यर्थः । अत्राऽन्यथाऽनन्वयादिति—कारणनिरपेक्षसादित्वाभ्युपगमे तदाकस्मिकत्वापातादित्यर्थः । तत्सापेक्षत्वे चानवस्थानादिति । पक्षाऽन्त्यमात्—कारणत्वानुपपत्तेः । सादिनः कार्यत्वेन कारणत्वायोगात्तयोर्विरोधात् । ननु मृदं प्रति कार्यस्य घटं प्रति कारणत्वं कपालस्येत्यविरोध इति चेन्न यन्निष्पत्त्यर्थं कारणं व्याप्रियते तदेव कार्यमवान्तरपरिणामस्तु कारणमेव भवतीति घट एव कार्यं कारणमेव कपालमिति । २. अन्त'—कार्यम् । ३. कारणत्वानधिकरणमिति यावत् । ४. पारः कारणम् । ५. विज्ञप्तेरर्थान्तरप्रतिषेधार्थः । तथा च विज्ञप्तिमात्रमिति यावत् । ६. जात्यन्तरमिति—कार्यकारणत्वादिरूपमित्यर्थः । तत्त्वमस्यादिवाक्याज्जीवेश्वरयोरैक्यज्ञानात्कार्यकारणाख्यं जगन्निवर्तते एवं सर्वंकरस्यमेव पर्यवस्यतीति भावः । ७. ब्रह्मात्मतत्त्वम् । ८. नत्वागन्तुकशुद्धिमदित्यर्थः । ९. आदिः—गन्धर्वनगरम् । १०. ननु कथमर्थक्रियाक्षमस्याबाध्यस्य च लौकिकस्येन्द्रजालादितौल्यमित्याशङ्क्य दृश्यत्वादिहेतुनोभयत्रापि मिथ्यात्वाविशेषादित्याह—न हीति । न हि तात्त्विकत्वमर्थक्रियाप्रयोजकमतात्त्विकेऽपि रूप्यादौ दर्शनात्तात्त्विकेऽपि ब्रह्मण्यदर्शनाच्च बाधश्च श्रुत्यनुभवसिद्ध एवेति भावः । ११. अस्य चापेक्षिकत्वं कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताऽनाश्रयत्वरूपत्वम् । कार्यत्वावच्छिन्नकार्यतानिरूपितकारणतानाश्रयत्वरूपत्वं च निरपेक्षत्वम् । १२. ब्रह्मतत्त्वस्य निरुक्तस्वरूपत्वे । १३. खिल्यभावे ।

आत्मनो जातो मृतः सुखी दुःख्यहं ममेत्येवमादिलक्षणोऽनेकसंसारधर्मोपद्रुत इति । उच्यते । ॐएतेभ्यो भूतेभ्यो यान्येतानि 'कार्यकरणविषयाकारपरिणतानि नामरूपात्मकानि सलिलफेनबुद्बुदोपमानि' स्वच्छस्य परमात्मनः' सलिलोपमस्य । येषां 'विषयपर्यन्तानां प्रज्ञानघने ब्रह्मणि परमार्थविवेकज्ञानेन प्रविलापनमुक्त 'नदीसमुद्रवत् । एतेभ्यो हेतुभूतेभ्यो

—किंनिमित्त इति । खिल्यभावमेव विशिनष्टि—जात इति । अनेक. संसाररूपो धर्मोऽशनायापिपासा-दिस्तेनोपद्रुतो दूषित इति यावत् । खिल्यभावे निमित्त दर्शयन्नुत्तरमाह—उच्यत इति । 'एतच्छब्दार्थं व्याकरोति—यानीति । स्वच्छस्य परमात्मन' कार्यकरणविषयाकारपरिणतानीति संबन्धः । तानि व्यवहारसिद्ध्यर्थं विशिनष्टि—नामरूपात्मकानीति । तेषामतिदुर्बलत्वं सूचयति—सलिलेति । स्वच्छत्वे दृष्टान्तमाह—सलिलोपमस्येति । तेषां प्रत्यक्षत्वेऽपि प्रकृतत्वाभावे कथमेतच्छब्देन परामर्शः स्यादित्या-शङ्क्याऽऽह—येषामिति । उक्तमेकायनप्रक्रियायामिति शेष । ब्रह्मणि प्रज्ञानघने भूताना प्रलये दृष्टान्तमाह—नदीति । हेतौ पञ्चमीति दर्शयति—हेतुभूतेभ्य इति । पूर्वस्मिन्ब्राह्मणे षष्ठ्यन्तसत्यशब्दवाच्यतया

से असंश्लिष्ट है, तो आत्मा का यह खिल्यभाव जन्म, मरण, सुखित्व, दुःखित्व, अहं, मम इत्यादि लक्षण वाले अनेक सांसारिक धर्मों से दूषित किस कारण से है ? इस पर कहा जाता है—"एतेभ्यो भूतेभ्यो" यानी इन 'सत्य'शब्दवाच्य हेतुभूत भूतों से, जो कि स्थूलसूक्ष्मशब्दाकार में परिणत जल के फेन और बुद्बुद उपमारूप पृथिवी आदि भूत, स्वच्छ सलिल की उपमा वाले परमात्मा के नाम-रूपात्मक (उपाधिभूत) हैं और जिनके कार्य से लेकर विषयपर्यन्त समुद्र में नदियों के समान पारमार्थिक

१ स्थूलसूक्ष्मशब्दाद्याकारपरिणतानि । २ पृथिव्यादिभूतानीति शेष । ३ उपाधिभूतानीति शेष• । ४ निरुक्तकार्यादारभ्य विषयपर्यन्तानाम् । ५ समुद्रे नदीनामिवेत्यर्थं । ६ प्रत्यक्षत्वप्रकृतत्वादिरूप-मित्यर्थं । ७ उपाधिभूतानीति शेष । ८ क्षणभङ्गुरत्वमित्यर्थं ।

ॐएतेभ्यो भूतेभ्य इत्यादि वार्तिकायामस्त्वेतेभ्यो भूतेभ्य इत्यादेरर्थान्तरमाहुस्तथाहि—"तज सवन्धमासाद्य यथाऽम्भ खिल्यतामगात् । तथैवाज्ञानभूतेभ्य परः क्षेत्रज्ञता ययौ ॥ कार्यात्माऽपचय गच्छन्यत्र निष्ठा निगच्छति । तानि भूतान्यविद्यति प्राहुस्त्रय्यन्तनिष्ठिता ॥ पर. कारणकार्येभ्य आत्मा पूर्णस्वकारणात् । एतेभ्योऽविद्याभूतेभ्य कार्यकारणतामगात् ॥ यतोऽविद्यैव तद्धेतुस्तदुच्छित्तावतो न सन् । कार्यकारणभेदोऽस्य ब्रह्मास्मीतिप्रबाधत. ॥ तस्मिन्प्रध्वस्तेऽस्य सबाधात्केवलैकात्म्यदायत । विशेषसंज्ञा नास्त्यस्य पूर्णप्रज्ञप्तिमात्रत ॥ अविचारितसिद्धीनि यान्यविद्यस्य वादिषम् । एतेभ्यो हेतुभूतेभ्यो भूतेभ्योऽकार्यकारण ॥ कार्यकारणवद्रूप समुत्थायति शब्द्यत । अविद्यासगतस्य जायतेऽनेकरूपवान् ॥ चेतनाचेतनाभास आत्मनात्मत्वलक्षण । कार्यकारणरूपेण मिथ्यापेक्षाश्रय तम ॥ कार्यकारणता यात आत्माऽप्येव तमोवशात् । स्वाभासैबहुतामेति मनाबुद्ध्याद्युपाधिभि ॥ तमोहेतु समुत्थान न वेदमीत्यप्रहात्मकम् । मिथ्याज्ञान तम कुर्वदोहमेव करोति तत् ॥ अविद्याकार्यबुद्ध्यादिप्रत्यगाभासरूप-वत् । बोद्धृत्वादिसमुत्थान भण्यते परमात्मन ॥ श्रोता स्प्रष्टेतिरूप स्यात्तत्तदिन्द्रियवृत्तिभि । दुःखी गौरो द्विजश्चेति शरीरोत्थानत पर ॥ धनी गोमान्दरिद्रो वा धनाद्यर्थाभिसगत ॥ ॐतद्वानपि समोहाद्यथोक्तात्मकता-मगात् ॥ ४१७-४२६ ॥ इति । एतेभ्य इत्याद्यवतारयति—तेज इति ॥ भूतशब्दस्य महाभूतेषु रूढत्वात्तेभ्य परस्य क्षेत्रज्ञत्वमज्ञानरूपभूतेभ्योऽभिधीयत तत्राऽऽह—कार्यात्मेति । यत्र सर्वं कार्यं लीयते तन्मूलकारणमविद्या-भूतशब्देनोच्यते यदाहाऽऽचार्यवाचस्पतिर्नामरूपबीजशक्तिभूतमव्याकृत भूतसूक्ष्ममिति प्रसिद्धभूताना क्षेत्रज्ञोत्थापक-

भूतेभ्यः सत्यशब्दवाच्येभ्यः समुत्थाय सैन्धवखिल्यवत् । यथाऽद्भ्यः । सूर्यचन्द्रादिप्रतिबिम्बो यथा वा स्वच्छस्य स्फटिकस्यालक्तकाद्युपाधिभ्यो रक्तादिभाव एवं कार्यकरणभूतभूतोपाधिभ्यो 'विशेषात्मखिल्यभावेन 'समुत्थाय सम्यगुत्थाय येभ्यो 'भूतेभ्य 'उत्थितस्तानि यदा कार्यकरणविषयाकारपरिणतानि भूतान्यात्मनो विशेषात्मखिल्यहेतुभूतानि शास्त्राचार्योपदेशेन ब्रह्मविद्यया नदीसमुद्रवत्प्रविलापितानि विनश्यन्ति ।

---

तेषां प्रकृतत्वमाह—सत्येति । यथा 'सैन्धवः सन्खिल्यः 'सिन्धोस्तेजःसंबन्धमपेक्ष्योद्गच्छति तथा 'भूतेभ्यः खिल्यभावो भवतीत्याह—सैन्धवेति । समुत्थानमेव विवृणोति—यथेत्यादिना । तान्येवेत्यादि व्याचष्टे—येभ्य इति । खिल्यहेतुभूतानि "तत्र हेतुत्वोपेतानीति यावत् । ब्रह्मविद्योत्पत्तौ हेतुमाह—शास्त्रेति । "तत्फलं सदृष्टान्तमाचष्टे—नदीति । यथा सलिले फेनादयो विनश्यन्ति तथा तेषु भूतेषु

---

विवेकज्ञान से प्रज्ञानघन ब्रह्म में समुत्थित होकर सैन्धवशकल के समान लय होना बतलाया गया है । जिस प्रकार (उपाधिभूत) जल में सूर्य और चन्द्रमा आदि का प्रतिबिम्ब अथवा लाक्षादि उपाधि से स्वच्छ स्फटिक का रक्तादि भाव हो जाता है इसी प्रकार कार्यकारणस्वरूप भूतों की उपाधि के कारण विशेषस्वरूप से भिन्न खिल्यभाव से परिच्छिन्न जीवरूप से "समुत्थाय" यानी क्षेत्रज्ञता की प्राप्ति करके जिन अविद्याशब्दित भूतों से खिल्यभाव को प्राप्त हुआ है, वे देह और इन्द्रिय के विषयाकार में विकार

---

१. उपाधिभूतेभ्यः । २. लाक्षाद्युपाधिभ्य इति यावत् । ३. विशेषस्वरूपाभिन्नखिल्यभावेन परिच्छिन्नजीवरूपेण । ४. सम्यगुत्थाय क्षेत्रज्ञता प्राप्येति यावत् । ५ भूतेभ्य इति—अविद्याशब्दितेभ्य इति वार्तिकानुसारी पन्था । ६. खिल्यभाव । ७. सिन्धुविकारः । ८. सलिलात् । ९. कार्यकरणाद्यात्मना परिणतेभ्यः । १० खिल्यत्वे । ११. विद्याफलम् ।

---

त्वानुपपत्तेरित्यर्थः ॥ तर्हि तदुत्थापकानि कार्यकारणान्येवात्र भूतानीत्याशङ्क्याऽऽह—पर इति । आत्मा पूर्णत्वादपरिच्छिन्नकारणादिविलक्षणः सोऽविद्यात्मकभूतवशात्तद्भावं गतो मूलाविद्याऽत्र भूतादिभूता भूतशब्देत्यर्थः ॥ सर्वस्यानात्मनोऽविद्याजत्वे फलितमाह—यत इति ॥ केचित्तु कार्यनिवृत्तिं शून्यतासमापिनीमाहुस्तान्निवर्तयन्भेदनिवृत्तिफलमाह—तस्मिन्निति । ऐक्यसबोधस्याऽविद्याबन्धध्वंसे हेतुत्वसमर्थनार्थोऽपिशब्दः । मज्ञाभावे कैवल्यस्यापुमर्थत्वमाशङ्क्योक्तम्—अस्येति ॥ भूतशब्दार्थमनूद्य समुत्थानस्यार्थमाह—अविद्यारितेति । मोक्षार्थधारणः परस्तस्य यथोक्तभूतेभ्यो भयस्तद्विशिष्टरूपमुत्थायेत्यत्र समुत्थानमित्यर्थः । तत्प्रागन्वयप्रारमनोऽविद्ययाऽनेकाकारावाप्तिमाह—अविद्येति ॥ अनेकरूपवन्तं स्वभावं विजदीकुर्वाणश्चिदाभासवैशिष्ट्यं तस्याऽऽचष्टे—चेतनेति । अविद्यायामेवमनेकरूपत्वेऽपि प्रतीचि किमायातमित्याशङ्क्याऽऽह—कार्येति । न केवलमात्माऽज्ञानवशात्कार्यकारणता गतः किंतु स्वाभासविशिष्टाविद्याकृतबुद्ध्याद्युपाधिवशान्मातृत्वादिभावं चाऽऽप्तवानित्याह—स्वाभासैरिति ॥ समुत्थानमित्यमुक्त्वा तत्र क्रममाह—तम इति । सर्वमात्मनः समुत्थानमज्ञानमित्यत्र न विवादस्तच्च तमोऽज्ञानमादौ न वेद्मि मूढोऽस्मीत्याग्रहात्मकं मिथ्याज्ञानं कुर्वदेव तन्मद्गतमिथ्याज्ञानान्तरं करोतीत्यर्थः ॥ अविद्यामात्रनिमित्तमुत्थानमुक्त्वा तत्कार्यबुद्ध्यादिकृतं तदाह—अविवेकेति । इन्द्रियनिमित्तमुत्थानमाह—श्रोत्रेति । इन्द्रियाण्येव वा तद्द्वारिका या आदिशब्देन भोक्तृत्वाद्युक्तिः ॥ स्थूलदेहकृतं तदाह—दृशीति ॥ देहवतो धनादिसंबन्धकृतं तदाह—धनीति । वृत्तयस्ताभिरिति यावत् । आत्मशब्दो देहविषयः । आत्मनो मिथ्याभूतमुत्थानमुपसंहरति—मतद्वानिति ॥

सलिलफेनबुद्बुदादिवत्तेषु विनश्यत्स्वन्वेवं विशेषात्मखिल्यभावो विनश्यति। यथोदकालक्तकादिहेत्वपनये सूर्यचन्द्रस्फटिकादिप्रतिबिम्बो विनश्यति चन्द्रादिस्वरूपमेव परमार्थतो व्यवतिष्ठते। तद्वत्प्रज्ञानघनमनन्तमपारं स्वच्छं व्यवतिष्ठते।

न तत्र प्रेत्य विशेषसंज्ञाऽस्ति कार्यकरणसंघातेभ्यो विमुक्तस्येत्येवमरे मैत्रेयि ब्रवीमि नास्ति विशेषसंज्ञेत्यहमसावमुष्य पुत्रो ममेदं क्षेत्रं धनं सुखी दुःखीत्येवमादिलक्षणाऽविद्याकृतत्वात्तस्या अविद्यायाश्च ब्रह्मविद्यया निरन्वयतो नाशितत्वात्कुतो विशेषसंज्ञासंभवो ब्रह्मविदश्चैतन्यस्वभावावस्थितस्य। शरीरावस्थितस्यापि विशेषसंज्ञा नोपपद्यते किमुत कार्यकरणविमुक्तस्य सर्वत इति होवाचोक्तवान्किल परमार्थदर्शनं मैत्रेय्यै भार्यायै याज्ञवल्क्यः ॥१२॥

---

विनश्यत्सु सत्स्वनु पश्चात्खिल्यभावो नश्यतीत्याह—सलिलेति। किं पुनर्भूतानां खिल्यभावस्य च विनाशे सत्यवशिष्यते तत्राऽऽह—यथेति।

तत्रेति कैवल्योक्तिः। उक्तमेव वाक्यार्थं स्फुटयति—नास्तीति। ब्रह्मविदोऽशरीरस्य विशेषसंज्ञाभावं कैमुतिकन्यायेन कथयति—शरीरावस्थितस्येति। सुषुप्तस्येति यावत्। सर्वतः कार्यकरणविमुक्तस्येति संबन्धः ॥ १२ ॥

---

को धारण करते हुए आत्मा के खिल्यभावरूप विशेष के हेतुस्वरूप भूत जिस समय शास्त्र और आचार्य द्वारा ब्रह्मज्ञान के उपदेश से समुद्र मे नदियो के समान लीन होते हुए नाश को प्राप्त होते हैं; जल मे फेन और बुद्बुदो के समान "अनुविनश्यति" अर्थात् निश्चय ही विशेषात्म खिल्यभाव विनष्ट हो जाता है। जिस प्रकार जल और लाक्षा के हेतु को हटा देने पर सूर्य, चन्द्र और स्फटिक आदि का प्रतिबिम्ब नष्ट हो जाता है, केवल चन्द्रादि का पारमार्थिक स्वरूप ही अवशिष्ट रह जाता है, उसी प्रकार प्रज्ञानघन, अकारणक, अकार्यक, स्वच्छ ब्रह्म ही शेष रह जाता है।

न ही वहाँ विमोक के अनन्तर "अहम् असौ" अर्थात् मैं वह हूँ इस प्रकार क्षेत्रज्ञ और ईश्वर इत्यादिरूपा विशेषसज्ञा कार्यकरणसघात से विमुक्त विद्वान् की रहती है। इसीलिए हे मैत्रेयी! मैं तुम्हे बताता हूँ—"मैं अमुक हूँ, अमुक का पुत्र हूँ, यह मेरा खेत है, धन है, मैं सुखी हूँ, दुःखी हूँ" इत्यादि प्रकारक विशेषसञ्ज्ञा नही रहती, क्योकि वह अविद्यानिमित्तक है और अविद्या का ब्रह्मविद्या द्वारा निःशेष नाश हो जाने के कारण चैतन्यस्वरूप मे स्थित ब्रह्मवेत्ता की विशेषसञ्ज्ञा की कैसे सम्भावना हो सकती है? उसका तो शरीर मे स्थित रहते हुए भी विशेषसज्ञा नही होती, फिर कार्यरूप देह एव करणस्वरूप इन्द्रियो के सर्वथा विमुक्त रहने पर कैसे रह सकती है? 'इति होवाच याज्ञवल्क्य.' यानी इस प्रकार याज्ञवल्क्य ने अपनी भार्या मैत्रेयी को परमार्थदर्शन का उपदेश किया ॥१२॥

इस प्रकार प्रतिबोध कराये जाने पर "सा होवाच" यानी वह मैत्रेयी बोली—"अत्रैव" मानो

---

१. अन्वय—नश्यतीवेति वाक्यपाठान्वयो ज्ञेय। २ ब्रह्मेति शेष। ३. विमोकानन्तरम्। ४ अहमसावित्यादि क्षेत्रज्ञ ईश्वर इत्यादिरूपा च। ५. विदुष। ६ निःशेषमिति यावत्। ७ सर्वथा।

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञाऽस्तीति स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥१३॥**

उस मैत्रेयी ने कहा कि देहपात के बाद कोई सज्ञा नही रहती, ऐसा कहकर आपने मुझे मोह मे डाल दिया (सज्ञा के अभाव मे भला विज्ञानघन की सत्ता कैसे मानी जा सकती है)। याज्ञवल्क्य ने कहा—हे मैत्रेयी ! मैं तुझे मोह का उपदेश नही कर रहा हूँ, किन्तु अरी प्रिया ! यह तो महद्भूत परमात्मा का बोध कराने के लिए पर्याप्त है (अविद्याजन्य उपाधि के कारण उस विज्ञान मे खिल्यभाव है, वह खिल्यभाव देहपात के अनन्तर या उपाधियो के अभाव हो जाने पर नही रह जाता) ॥१३॥

---

एव प्रतिबोधिता सा ह किलोवाचोक्तवती मैत्रेयी। अत्रैवतस्मिन्नेवैकस्मिन्वस्तुनि ब्रह्मणि विरुद्धधर्मवत्त्वमाचक्षाणेन भगवता मम मोहः कृतस्तदाह। अत्रैव मा भगवान्पूजावानमूमुहन्मोह कृतवान्। कथ तेन विरुद्धधर्मवत्त्वमुक्तमित्युच्यते पूर्वं विज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य सज्ञाऽस्तीति। कथ विज्ञानघन एव कथं वा न प्रेत्य संज्ञाऽस्तीति। न ह्युष्णः शीतश्चाग्निरेवैको भवति। 'अतो मूढाऽस्म्यत्र'। स होवाच याज्ञवल्क्यो न वा अरे मैत्रेय्यह मोह ब्रवीमि मोहन वाक्य न ब्रवीमीत्यर्थः। ननु कथं

---

उक्त परमार्थदर्शनमेव व्यक्तीकर्तुं योजयति—एवमिति। तेन याज्ञवल्क्येनेति यावत्। इति वदता *विरुद्धधर्मवत्त्वमुक्तमिति शेष। एव वदनेऽपि कुतो विरुद्धधर्मवत्त्वोक्तिस्तत्राऽऽह—कथमिति।* एकस्यैव विज्ञानघनत्वे सज्ञाराहित्ये च कुतो विरोधधीरित्याशङ्क्याऽऽह—न हीति। विरोधबुद्धिफलमाह—अत इति। अत्रेत्युक्तविषयपरामर्शः। न वा इति प्रतीक गृहीत्वा व्याकरोति—अर इति। मोहनं वाक्य ब्रवीत्येव भवानिति शङ्कते—नन्विति। समाधत्ते—न मयेति। कथं तर्हि ममैकस्मिन्नेव

---

एक ही वस्तु ब्रह्म म विरुद्ध धर्मो का वतला देने स आपने मरे मन मे मोह उत्पन्न कर दिया है। उसी को श्रुति कहती है—"भगवान्" पूज्यनीय आपने इसी एक वस्तु मे मुझ "अमूमुहन्" भटका दिया है। याज्ञवल्क्य ने किस प्रकार विरुद्ध धर्मो का प्रतिपादन किया ? इस पर कहा जाता है—पहले "वह परब्रह्म विज्ञानघन है" इस प्रकार प्रतिपादन कर फिर "देहविमोक के अनन्तर कोई सज्ञा नही रहती", ऐसा कहा। एक ही अग्नि शीतस्वभाव एव उष्णस्वभाव वाला भी हो, ऐसा नही हुआ करता। आप द्वारा परस्पर विरुद्ध कथन-श्रवण के कारण मुझे इस ब्रह्म मे मूढता प्राप्त हो गयी है। याज्ञवल्क्य बोले—हे मैत्रेयी ! मैं तुझे "न मोह ब्रवीमि" अर्थात् मोह मे डालने वाली बात का उपदेश नही कर रहा हूँ। तो फिर वह विज्ञानघन है और सज्ञाभाव वाला भी है, ऐसे पारस्परिक विरुद्ध धर्म आप क्यो वतला रहे हो ? (मैत्रेयी की इस शङ्का का उत्तर देते हैं—) मैंने एक धर्म वाली वस्तु मे विरुद्ध धर्म

---

१ उक्तेऽर्थे वाक्य योजयति—सेदाहेति। मोहाख्य वस्तु श्रुतिराहेत्यर्थः। २ याज्ञवल्क्येन। ३ भवदीयमिथो विरुद्धोक्तिश्रवणात्। ४ एकत्र ब्रह्मवस्तुनि। ५ त्वया तदनुक्तौ।

विरुद्धधर्मत्वमवोचो विज्ञानघनं संज्ञाभावं च । न मयेदमेकस्मिन्धर्मिण्यभिहितम् । त्वयैवेद विरुद्धधर्मत्वेनैकं वस्तु परिगृहीतं भ्रान्त्या न तु मयोक्तम् । मया त्विदमुक्तं यस्त्वविद्याप्रत्युपस्थापित. कार्यकरणसबन्ध्यात्मनः खिल्यभावस्तस्मिन्विद्यया नाशिते तन्निमित्ता या विशेषसञ्ज्ञा शरीरादिसबन्धिन्यन्यत्वदर्शनलक्षणा सा कार्यकरणसंघातोपाधौ प्रविलापिते नश्यति हेत्वभावादुदकाद्याधारनाशादिव चन्द्रादिप्रतिबिम्बस्तन्निमित्तश्च प्रकाशादिः । न पुनः परमार्थचन्द्रादित्यस्वरूपानाशवदससारिब्रह्मस्वरूपस्य नाश । तद्विज्ञानघन इत्युक्तं स आत्मा सर्वस्य जगतः परमार्थतो भूतनाशान्न विनाशी । विनाशी त्वविद्याकृतखिल्यभावो वाचारम्भणं विकारो नामधेयमिति श्रुत्यन्तरात् । अय

वस्तुनि विरुद्धधर्मवत्त्वबुद्धिरित्याशङ्क्याऽऽह—त्वयैवेति । त्वया तर्हि किमुक्तमिति तत्राऽऽह—मया त्विति । खिल्यभावस्य विनाशे प्रत्यगात्मस्वरूपमेव विनश्यतीत्याशङ्क्याऽऽह—न पुनरिति । ब्रह्मस्वरूपस्यानाशे विज्ञानघनस्य किमायातमित्याशङ्क्याऽऽह—तदिति । विज्ञानघनस्य प्रत्यक्त्व दर्शयति—स आत्मेति । कथ तर्हि तान्येवानुविनश्यतीति तत्राऽऽह—भूतनाशेति । खिल्यभावस्याविद्याकृतत्वे प्रमाणमाह वाचारम्भणमिति । खिल्यभाववत्प्रत्यगात्मनोऽपि विनाशित्वं स्यादिति चेन्नेत्याह

नही बतलाये है । तूने ही ये विरुद्ध धर्म भ्रान्ति मे एक वस्तु मे समझ लिये हैं, मैंने (वास्तव मे) ऐसा उपदेश नही किया है। मैंने तो इतना मात्र कहा है कि आत्मा का जो अविद्या के द्वारा परिकल्पित कार्यकरणनिमित्तक परिच्छिन्न खिल्यभाव है, उसका विद्या के द्वारा नाश कर दिये जाने पर उसकी निमित्तक शरीरादिसम्बन्धी भेदज्ञान निरूपण करने वाली दर्शनरूपा विशेषसञ्ज्ञा कार्यकरणसघातरूप उपाधि मे प्रलीन होने पर आधार के अभाव मे उसी तरह नष्ट हो जाती है, जिस प्रकार जलादि आधार के नष्ट हो जाने पर चन्द्रादि के निमित्तक प्रकाशादि नष्ट हो जाते हैं । किन्तु जिस प्रकार परमार्थत चन्द्र और आदित्य के स्वरूप का नाश नही होता, उसी प्रकार असंसारी ब्रह्म के स्वरूप का नाश नही होता । वही ब्रह्म विज्ञानघन है" इस प्रकार कहा गया है, वह विज्ञानघन सर्वजगत् का आत्मा है, समस्त भूतो के नष्ट हो जाने पर भी परमार्थत उसका नाश नही होता । विनाशी तो अविद्याकृत खिल्यभाव ही है । श्रुत्यन्तर (छान्दोग्यश्रुति) से यही प्रतिपादित किया है "(हे सोम्य ! लोक मे जिस प्रकार मृत्तिका के एक पिण्ड द्वारा सम्पूर्ण मृत्तिका के कार्यसमूह का ज्ञान हो जाता है कि) विकार केवल वाणी का आधार नाममात्र ही है (वस्तुत सत्य तो केवल मृत्तिका ही है)", किन्तु यह तो पारमार्थिक है और 'हे मैत्रयी ! वह आत्मा तो विक्रियारहित है", इसलिए "अलं वा अर इद विज्ञानाय' अर्थात जिस प्रकार इस महद्भूत, अनन्त, अपार को जानने के लिए उपदेश किया गया है, वह बहुत ही आसान है । "(उस सुषुप्तावस्था मे वह जो जानता है, वह वस्तुत जानता हुआ भी

१ विरुद्धधर्मवत्त्वम् । २ 'विज्ञानैकघनोवस्याऽऽह कृत्स्नैकात्म्य स्वाभवम् । सज्ञानाशेन चाविद्याहतूत्यापहृ्ति तयेति ।। वा० ४४८ ।। ३ अविद्यया प्रदर्शित तत्कल्पित इति यावत् । ४ एतन्निमित्तक । ५ यद्वा समस्त पदम् । ६ परिच्छिन्नत्वम् । ७ प्रथमान्तमिदम् । ८ भेदज्ञाननिरूप्या । ९ प्रतिबिम्बनिमित्तप्रकाशादिरिव । १० ब्रह्म । ११ विज्ञानघन । १२ प्रतीच कथमनाश सिद्ध इति यावत् । १३ तस्य सर्वजगत परमार्थस्वरूपत्वे ।

***यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते**

जिस अविद्या अवस्था में (परमार्थतः अद्वैत ब्रह्म में) द्वैत सा प्रतीत होता है; वहाँ पर ही अन्य अन्य को सूंघता है, अन्य अन्य को देखता है, अन्य अन्य को सुनता है, अन्य अन्य का अभिवादन करता है, अन्य अन्य का मनन करता है तथा अन्य अन्य को जानता है। इसके अतिरिक्त जहाँ पर सब

---

तु पारमार्थिकोऽविनाशी वा अरेऽयमात्मा । अतोऽलं पर्याप्तं वा अर इव महद्भूतमनन्तमपारं यथाव्याख्यातं विज्ञानार्य विज्ञातुम् । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वादिति हि वक्ष्यति ॥१३॥

कथं तर्हि प्रेत्य संज्ञा नास्तीत्युच्यते । शृणु । यत्र यस्मिन्नविद्याकल्पिते कार्य-

---

—मय त्विति । पारमार्थिकत्वे प्रमाणमाह—अविनाशीति । अविनाशित्वफलमाह—अत इति । पर्याप्तं विज्ञातुमिति संबन्धः । इवमित्यादिपदानां गतार्थत्वाद्व्याख्येयत्वं सूचयति—यथेति । विज्ञानघन एवेत्यत्र वाक्यशेषं प्रमाणयति—न हीति ॥ १३ ॥

आत्मनो विज्ञानघनत्वं प्रामाणिकं चेत्तर्हि निषेधवाक्यमयुक्तमिति शङ्कते—कथमिति । अविद्याकृतविशेषविज्ञानाभावाभिप्रायेण निषेधवाक्योपपत्तिरित्युत्तरमाह—शृण्विति । यस्मिन्नुक्तलक्षणे

---

नहीं जानता) विज्ञाता की विज्ञानशक्ति का सर्वथा लोप नहीं होता क्योंकि वह तो नित्य है, हाँ उस समय उससे भिन्न कोई वस्तु नहीं रह जाती, जिसे कि वह विशेषरूप से जाने"; इस पर श्रुति आगे इसी बात का समर्थन करेगी ॥१३॥

शरीर विमोक के बाद उसकी संज्ञा किस प्रकार नहीं रहती, इस पर श्रुति कहती है। सुनो ! क्योंकि "यत्र" अर्थात् जिस अविद्या उपादानक कार्यकरणसंघातरूप उपाधि निमित्तक विशेषात्मरूप

---

१. उक्तमेव विशेषविज्ञानाभावमन्वयव्यतिरेकाभ्यां दृढीकुर्वन्नाऽऽह—यत्र हीति । २. बृ० उ० ४.५.१४ । ३ अस्य प्रतीचोऽविनाशित्वात् । ४. सुतरां बहुतरमिति वाथ. । ५ बृ उ० ४ ३-३० । ६. ऽतदुपादानकं । ७ भाष्योक्तविशेषणके ।

---

*यत्र हि द्वैतमिव भवतीति अस्याः श्रुतेस्तात्पर्यमाहुर्वार्तिककाराचार्यास्तथाहि—"यथाज्ञातात्मतत्त्वात्माऽविद्या-सवीतधीर्मुषिः । तत्र मिथ्याग्रहग्रस्तो द्रष्टृदृश्यादिभेदधीः ॥ यत्राज्ञातात्मयाथात्म्यस्तत्तमोपिहितक्षणः । तत्राविद्योत्थबुद्ध्यादिगुणभूतात्मविभ्रमः ॥ अविद्यामात्रशबलं जगत् प्राणवादिवम् । मतोऽविद्या कार्यमिदं हीति इतावत् पदम् ॥ सतोऽभिव्यञ्जकं मानं स्वभावोऽस्य मितमंवत् । अविद्यायाः स्वभावोऽस्य यदसत्त्वेन मृषा ॥ उक्तहेत्वर्थदीप्त्यर्थं हीति तस्य निपातनं । द्वीत द्विधेतमेकं सत्तद्भावो द्वैतमुच्यते ॥ उपमार्थं इवस्तद्भवतीति क्रियापदम् । तत्रैवाविद्यावस्थायां सञ्ज्ञेयं युज्यते मृषा ॥ ननु द्वैतमिवेत्येनदुपमानं कथं भवेत् । द्वैतं वस्तु न चेदस्ति सर्वस्यैकात्म्यमाश्रन ॥ नैष दोषो यतो दृष्ट एकस्मिन्नपि वस्तुनि । उपमेयोपमाभावो दिग्धीरिव

**तदितर इतरं विजानाति यत्र वा अस्य सर्व-मात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्त-त्केन कꣳ शृणुयात्तत्केन कमभिवदेत्तत्केन कं**

आत्मा ही हो गया, वहाँ किससे किसको सूँघे, किससे किसको देखे, किससे किसको सुने, किससे किसका अभिवादन करे, किससे किसका मनन करे, किससे किसको जाने? वस्तुतः जिससे इन सभी को

---

करणसंघातोपाधिजनिते विशेषात्मनि खिल्यभावे हि यस्माद्द्वैतमिव परमार्थतोऽद्वैते ब्रह्मणि द्वैतमिव भिन्नमिव वस्त्वन्तरमात्मन उपलक्ष्यते। ननु द्वैतेनोपमीयमानत्वाद्द्वैतस्य

---

खिल्यभावे सति यस्माद्यथोक्ते ब्रह्मणि द्वैतमिव द्वैतमुपलक्ष्यते तस्मात्तस्मिन्सतीतर इतरं जिघ्रतीति सबन्ध । द्वैतमिवेत्युक्तमनूद्य व्याचष्टे—भिन्नमिवेति । इवशब्दस्योपमार्थत्वमुपेत्य शङ्कते—नन्विति । द्वैतेन द्वैतस्योपमीयमानत्वाद्दृष्टान्तस्य दार्ष्टान्तिकस्य च तस्य वस्तुत्वं स्यादुपमानोपमेययोश्चन्द्रमुखयो-

---

खिल्यभाव मे 'द्वैतमिव" अर्थात् परमार्थत अद्वितीय ब्रह्म मे द्वैत या भिन्न आत्मवस्तु से पृथक् के समान भासता है। (यहाँ पूर्वपक्षी आक्षेप करता है—) किन्तु द्वैत से उपमा दिये जाने पर तो द्वैत की भी पारमार्थिकता सिद्ध होने लगती है। (इसका परिहार करते हैं—) ऐसा कहना ठीक नही है। "विकार

---

१ एतावता—एतेभ्यो भूतेभ्य इत्यत्र सूचितो भूतविशेषोपाधिक ससारो व्याख्यात। इदानी महद्भूतमनन्तमपारमित्यादि सूचित ब्रह्मात्मदर्शन व्याख्यास्यन् भूतोपाध्यभावेन विशेषविज्ञानलक्षणससाराभाव इति व्यतिरेकमाह—यत्र वा इति। २ एतन्निमित्तके। ३ पञ्चम्यन्तम्। ४ भाष्योक्तविशेषणके। ५ द्वैतस्य।

---

विहायसि ॥ रामरावणयोर्युद्ध रामरावणयोरिव। यथा प्रसिद्धो जगति तथैवेहापि गम्यताम् ॥ अद्वैतात्परमार्थाद्वा मायाद्वैतमपीष्यते। तेनोपमार्थसंसिद्धेर्यथा स्वप्नेन्द्रजालयो ॥ मिथ्येव भाति सत्योऽपीत्यपि लोकेऽभिधीयते। मिथ्याभावो न नास्तीति वक्तु कश्चिदपि क्षम ॥ समस्तव्यस्तताख्य यो वक्तीहाऽऽत्मन श्रुते। तत्पक्षस्य निषेधोऽस्य यत्र हीत्यादिनोच्यते" ॥४५३-४६४॥ इति। यत्र हीत्यादेस्तात्पर्यमाह—यत्रेति। अज्ञातात्मक तत्त्वमेवाऽऽत्मा यस्य स तथा ॥ यदा स्वरूपमविद्योपहतधीरात्मा न वद तदा स द्वैतदर्शीत्युक्त प्रपञ्चयति—यत्रेत्यादिना ॥ तात्पर्यमुक्त्वाऽक्षराणि व्याचक्षाणो हिशब्दार्थमाह—अविद्येति। प्रागिति अव्याकृतविचारादावित्यर्थ। उक्तेऽर्थे हेतुमन्वयव्यतिरेकाख्यमाख्याति—नेति। अविद्यामात्र द्वैतमिति पूर्वोक्तस्यैव प्रतिपादके हेतो हीति पदमतस्तद्युक्तमित्याह—हीतीति। ननु प्रपञ्चोऽस्ति न वाऽऽद्ये नाविद्योपयोगो द्वितीयेऽपि कथमसन्तमविद्याऽपि दर्शयितुमलमित्याशङ्क्य दृष्टान्तेनाऽऽह—सत इति। द्वैतस्याऽऽविद्यत्वेऽपि तद्धेतुद्योतित्व हिशब्दस्य कथमित्याशङ्क्याऽऽह—उक्तेति। दृश्यत्वादिहेतुतो जगतो रजतादिवदविद्यामात्रत्वात्तद्धेतुद्योतक हीत्येतत्पदमित्यर्थं। हिशब्दस्य यथोक्तहेतुवाचित्वमेव किं न स्यादत आह—दस्यति। निपातानां द्योतकत्वमेवेति हि वैयाकरणसमय। द्वैतमित्यादि व्याकरोति—द्वैतमिति ॥ इवशब्दार्थसमर्थनार्थं यत्र हीत्यादिवाक्यस्य पर्यवसितमर्थमाह—तत्रेति ॥ द्वैतमस्ति न वा नाऽऽद्य ऐकात्म्यविरोधात्त द्वितीय एकत्रोपमानोपमेयत्वायोगादिवशब्दासिद्धिरिति शङ्कते—नन्विति ॥ आत्मेतरद्वैताभावेऽपीवशब्दस्य नोपमार्थत्वासिद्धिरुपमानोपमेयभावस्यैकत्रापि दृष्टेरित्याह—

मन्वीत तत्केन कं विजानीयात्, यत्रत्वस्य सर्वं, विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१४॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

जानता है, उसे किससे जाने ? हे मैत्रेयी ! (भला बतलाओ तो सही) विज्ञाता को किसने जाने ॥१४॥

॥ इति चतुर्थं ब्राह्मणम् ॥

पारमार्थिकत्वमिति । न । [1]वाचारम्भणं विकारो नामधेयमिति श्रुत्यन्तरादेकमेवाद्वितीय-

वस्तुत्वोपलम्भादित्यर्थः । द्वैतप्रपञ्चस्य मिथ्यात्ववादिश्रुतिविरोधाश्च तस्य सत्यतेति परिहरति—

केवल वाणी का विकार नाममात्र ही है वस्तुत सत्य तो केवल मृत्तिका ही है" इस प्रकार ऐसी अन्य (छान्दोग्य) श्रुति भी प्रतिपादित करती है। "हे सोम्य ! उत्पत्ति से पूर्व यह दीखने वाला नाम-रूपात्मक जगत् (सजातीय-विजातीय-स्वगतभेदशून्य) एकमात्र अद्वितीय सत् था", "(विशेष क्या

१ वाचारम्भणमिति। ननु द्वैतप्रपञ्चस्य मिथ्यात्वे (अभावे) आत्मनि एकत्रोपमानोपमेयत्वायोगादिवशब्दासिद्धिरिति चेन्न। उपमानोपमेयभावस्य रामरावणयोर्युद्धमित्यादावेकत्रापि दृष्टत्वात्। नात्रोपमानोपमेयविवक्षा युद्धमनयोरनुपममित्यभिन्नार्थे तात्पर्यादिति चेदुदाहरणान्तरं शृणु नाऽऽकाशादर्थान्तरं दिगस्ति मानाभावात्तथाऽपि दिगिव तद्भातीति सादृश्यधीराकाशे दृश्यते तथाऽऽत्मनः सकाशादन्यद्वैताभावेऽपि द्वैतमिव स आत्मा भवतीत्युक्तिसिद्धिः। यथा च स्वप्ने महेन्द्रजाले च स्वप्नदृङ् मायावी च स्वकृतद्वैतवद्भवति तथाऽऽत्मा स्वाविद्योत्थकर्त्रादिद्वैतरूपो भातीति कल्पितद्वैतेनोपमासिद्धिः स्पष्टैवेति ध्येयम्।

नेत्यादिना। दृष्टिमेव व्याचष्टे—दिग्धीरिति। नाऽऽकाशादर्थान्तरं दिगस्ति मानाभावात्तथाऽपि दिगिव तद्भातीति सादृश्यधीराकाशे दृश्यते तथाऽऽत्मान्यद्वैताभावेऽपि द्वैतमिव स भवतीत्युक्तिसिद्धिरित्यर्थः ॥ एकस्मिन्नुपमानोपमेयत्वासंभवमुदाहरणान्तरेणाऽऽह—रामेति ॥ नात्रोपमानोपमेयविवक्षा युद्धमनयोरनुपममित्यस्मिन्नर्थे तात्पर्यादित्याशङ्क्य विधान्तरेणोपमानं समर्थयते—अद्वैतादिति। इवशब्दः समयतीति दोषः। कल्पितद्वैतेनोपमासिद्धिं स्फुटयति—यथेति। स्वप्ने महेन्द्रजाले च स्वप्नदृशा मायाविना च कृतद्वैतवदात्मा स्वाविद्योत्थकर्त्रादिद्वैतरूपो भातीत्यर्थः ॥ मिथ्यास्वप्नादिद्वैतस्य कथं सत्यात्मदृष्टान्ततेत्याशङ्क्याऽऽह—मिथ्येति। यथा मिथ्यार्थं सत्यवद्भाति तथा वदतु प्रथमोऽपिशब्दः। द्वितीयस्तु वाक्यसमुच्चयार्थः। यद्दृश्यं तत्सत्यमिति व्याप्तेर्मिथ्यापदार्थस्यैवासत्त्वे कुतस्तस्य दृष्टान्ततेत्याशङ्क्याऽऽह—मिथ्याभाव इति। भ्रान्तिबाधप्रसिद्धिविरोधादिति भावः ॥ यत्र हीत्यादेस्तात्पर्यमविद्यादशायामेव द्वैतदर्शनं नान्यदेत्युक्त्वा तत्त्वमाह—समस्तेति। एष हि द्रष्टेत्यादिवाक्यमिदं सर्वं यदयमात्मेत्यादि च श्रुतिभिरुच्यते। परीक्षकनिर्धारणार्थमिहेत्युक्तम्। आत्मनस्तथाविधं रूपमवास्तवं चेदविरुद्धं वास्तवं चेदविद्यावस्थायामेव द्वैतदर्शनवादिनी श्रुतिर्विरुध्येतेति भावः।

मात्मैवेदं सर्वमिति च। तत्र यस्माद्द्वैतमिव तस्मादेवेतरोऽसौ परमात्मनः खिल्यभूत आत्माऽपरमार्थश्चन्द्रादेरिवोदकचन्द्रादिप्रतिबिम्बं इतरो घ्रातेतरेण, घ्राणेनेतरं घ्रातव्यं जिघ्रति। इतर इतरमिति कारकप्रदर्शनार्थं जिघ्रतीति क्रियाफलयोरभिधानम्। यथा छिनत्तीति यथोद्यम्योद्यम्य निपातनं छेद्यस्य च द्वैधीभाव उभयं छिनत्तीत्येकेनैव शब्देनाभिधीयते क्रियायाः फलावसानत्वात्क्रियाव्यतिरेकेण च तत्फलस्यानुपलम्भात्। इतरो घ्रातेतरेण घ्राणेनेतरं घ्रातव्यं जिघ्रति तथा। सर्वं पूर्ववत्। इयमविद्यावदवस्था।

---

न वाचारम्भणमिति। तत्र तस्मिन्खिल्यभावे सतीति यावत्। स्वप्नादिद्वैतमिव जागरितेऽपि द्वैतं यस्मादालक्ष्यते तस्मात्परमात्मनः सकाशादितरोऽसावात्मा खिल्यभूतोऽपरमार्थः सन्नितरं जिघ्रतीति योजना। परस्मादितरस्मिन्नात्मन्यपरमार्थे खिल्यभूते दृष्टान्तमाह—चन्द्रादेरिवेति। इतरशब्दमनूद्य तस्यार्थमाह—इतरो घ्रातेति। अविद्यादशायां सर्वाण्यपि कारकाणि सन्ति कर्तृकर्मनिर्देशस्य सर्वकारकोपलक्षणत्वादित्याह—इतर इति। क्रियाफलयोरेकशब्दत्वे दृष्टान्तं विवृणोति—यथेति। दृष्टान्तेऽपि विप्रतिपत्तिमाशङ्क्यानन्तरोक्त हेतुमेव स्पष्टयति—क्रियेति। अतश्च जिघ्रतीत्यत्रापि क्रियाफलयोरेकशब्दत्वमविरुद्धमिति शेषः। उक्तं वाक्यार्थमनूद्य वाक्यान्तरेष्वतिदिशति—इतर इति। तथेतरो द्रष्टेतरेण चक्षुषेतरं द्रष्टव्यं पश्यतीत्यादि द्रष्टव्यमिति शेषः। उत्तरेष्वपि वाक्येषु पूर्ववाक्यवत्कर्तृकर्मनिर्देशस्य सर्वकारकोपलक्षणत्वं क्रियापदस्य च क्रियातत्फलाभिधायित्वं तुल्यमित्याह—सर्वमिति। यत्र हीत्यादिवाक्यार्थमुपसंहरति—इयमिति।

---

कहें) यह सब कुछ आत्मा ही है" ऐसा भी श्रुतिवाक्यों में कहा गया है। इसलिये उस अवस्था में क्योंकि द्वैत सा रहता है, इसीलिए परमात्मा का खिल्यभाव अपारमार्थिक आत्मा उससे "इतरः" अर्थात् चन्द्रादि के जल में पड़े हुए चन्द्रादि प्रतिबिम्ब के समान भिन्न है, (जो कि) "इतरः" यानी परमात्मा से भिन्न सूंघनेवाला, भिन्न घ्राणेन्द्रिय से, "इतरम्" यानी भिन्न सूंघने योग्य पदार्थों को सूंघता है। श्रुति में "इतर इतरम्" यह पदद्वय कारकान्तर उपलक्षण के लिए हैं तथा "जिघ्रति" पद क्रिया के ज्ञान का अभिवाचक है। जिस प्रकार "छिनत्ति" (लकड़ी काटता है) इस क्रियापद में कुल्हाड़ी उठा-उठाकर मारना, काटने योग्य (लकड़ी) के दो टुकड़े करना यह दोनों ही "छिनत्ति" इस एक ही क्रियाशब्द से कहे जाते हैं क्योंकि उसी में क्रिया के फल का तात्पर्य अर्थ है और क्रिया से भिन्न उस क्रिया के फल की उत्पत्ति भी नहीं होती। अतः "इतर" यानी भिन्न सूंघने वाला भिन्न घ्राणेन्द्रिय द्वारा "इतरम्" अर्थात् अन्य घ्रातव्य पदार्थों को सूंघता है। इस प्रकार "यत्र हि—" इत्यादि श्रुतिवाक्य में अविद्यावस्था (त्रिपुटीभानात्मक) के समान सब पूर्ववत् व्याख्या समझ लेनी चाहिये।

और जहाँ (विद्यावस्था में) ब्रह्मविद्या के द्वारा अविद्या नष्ट हो गई है, वहाँ आत्मा से पृथक्

---

१. तदित्यादि व्याचष्टे—तत्रेति। तदुक्तं वार्तिके—"तस्यामविद्यावस्थायां स्वप्नावस्थां गतो यथा। घ्रातेतरः सन्नितरं गन्ध घ्राणेन जिघ्रति" ॥४६५॥ इति। २. कारकान्तरोपलक्षणार्थम्। ३. फलमत्र ज्ञानम्। ४. क्रियाफलस्येति भाव। ५ यत्रेत्य त्रिपुटीभान सेयमित्यर्थः। ६ आदीन्द्रवागुरा। ७. एकशब्दवाच्यत्वे। ८. उक्तमिति शेष.। ९. क्रियाया. फलावसानत्वादित्येतम्। १०. उक्तदृष्टान्तानुरोधादेव।

'यत्र तु ब्रह्मविद्ययाऽविद्या नाशमुपगमिता तत्राऽऽत्मव्यतिरेकेणान्यस्याभावः । यत्र वा अस्य ब्रह्मविदः सर्वं नामरूपाद्यात्मन्येव प्रविलापितमात्मैव संवृत्तं 'यत्रैवमात्मैवाभूत्तत्र केन करणेन कं घ्रातव्यं को जिघ्रेत्तथा पश्येद्विजानीयात् । 'सर्वत्र हि कारकसाध्या क्रिया । अतः कारकाभावेऽनुपपत्तिः क्रियायाः । क्रियाभावे च फलाभावः । 'तस्मादविद्यायामेव सत्यां क्रियाकारकफलव्यवहारो न ब्रह्मविदः । आत्मत्वादेव सर्वस्य नाऽऽत्मव्यतिरेकेण कारकं क्रियाफलं वाऽस्ति । न चानात्मा सन्सर्वमात्मैव भवति कस्यचित् । 'तस्मादविद्ययैवानात्मत्वं परिकल्पितं न तु परमार्थत आत्मव्यतिरेकेणास्ति किंचित् । तस्मात्परमार्थात्मैकत्वप्रत्यये क्रियाकारकफलप्रत्ययानुपपत्तिः । अतो विरोधा-

---

यत्र वा अस्येत्यादिवाक्यस्य तात्पर्यमाह—यत्र त्विति । उक्तेऽर्थे वाक्याक्षराणि व्याचष्टे—यत्रेति । तमेवार्थं संक्षिपति—यत्रैवमिति । सर्वं कर्तृकरणादीति शेषः । तत्केनेत्यादि व्याकरोति—तत्रेति । किंशब्दस्याऽऽक्षेपार्थं कथयति—सर्वत्र हीति । ब्रह्मविदोऽपि कारकद्वारा क्रियादि स्वीक्रियतामित्याशङ्क्याऽऽह—आत्मत्वादिति । सर्वस्याऽऽत्मत्वासिद्धिमाशङ्क्य सर्वमात्मैवाभूदिति श्रुत्या समाधत्ते—न चेति । कथं तर्हि सर्वमात्मव्यतिरेकेण भातीत्याशङ्क्याऽऽह—तस्मादिति । भेदभानस्याविद्याकृतत्वे फलितमाह—तस्मात्परमार्थेति । तद्धेतोरज्ञानस्यापनीतत्वादिति शेषः । एकत्वप्रत्ययादज्ञाननिवृत्तिद्वारा क्रियादिप्रत्यये निवृत्तेऽपि क्रियादि स्यान्नेत्याह—अत इति । "करण-

---

अन्य वस्तु का अभाव हो जाता है । अथवा जहाँ इस ब्रह्मविज्ञानी के सम्पूर्ण नाम-रूपादि आत्मा में ही लीन किये जाने पर आत्मस्वरूप ही हो गये हैं जहाँ उक्तरीति से सब कुछ आत्मा ही हो गया है, तब किस इन्द्रिय से किसको सूँघा जाय, कौन घ्राता सूंघे, इस प्रकार किसको देखे, कौन देखे, किसको जाने, कौन जाने इत्यादि अर्थ कर लेना चाहिये । क्रिया कारकसाध्या हुआ करती है, ऐसा लोक और वेद में प्रसिद्ध है । इसलिए कारक के अभाव होने पर तो क्रिया की सिद्धि होना संभव नहीं है । और जब क्रिया ही नहीं होगी तो फल भी नहीं होगा । इसलिए (क्रियाकारकफलरूपात्मक सभी व्यवहार अविद्याविषयक होने के कारण) अविद्या के रहते हुए ही क्रियाकारकफलरूप व्यवहार संभव है । ब्रह्मतत्त्ववेत्ता को ऐसा कुछ भी नहीं होता क्योंकि यह सभी कर्तृकरणादि तो आत्मा ही है आत्मा से पृथक् तो कारक अथवा क्रियाफल की सिद्धि संभव नहीं है । और ऐसा भी नहीं होता कि किसी के लिए अनात्मा रहते हुए भी सब कुछ आत्मा ही हो जाता है । इसलिए (सब कुछ आत्मस्वरूप होने के कारण) अविद्या के द्वारा ही अनात्मभाव परिकल्पित है, परमार्थतः तो आत्मा से भिन्न कुछ भी नहीं है । इसलिए परमार्थतः आत्मैकत्वज्ञान होने पर क्रिया कारक और फल की प्रतीति होना संभव नहीं है । इसलिए (यथोक्त अविद्या-क्रियादि प्रतीति का एकत्वप्रतीति कार्य से) विरोध होने के कारण ब्रह्मतत्त्वदर्शी के लिए क्रिया और उनके साधनों की आत्यन्तिक निवृत्ति हो जाती है ।

---

१ विद्यावस्थायाम् । २ उक्तरीत्या । ३ घ्राता । ४ लोकवेदयो । ५ प्रसिद्धम् । ६ क्रियाकारकफलव्यवहारस्याविद्यकत्वात् । ७ कर्तृकरणादे । ८ सर्वस्यात्मत्वात् । ९ सर्वस्यात्मत्वे । १० यथोक्तयोरविद्याक्रियादिप्रत्यययोर्हेतुप्रमाणभूतयोरिति यावत् ।

द्ब्रह्मविदः क्रियाणां तत्साधनानां चात्यन्तमेव निवृत्तिः । केन किमिति [1]क्षेपार्थं वचनं प्रकारान्तरानुपपत्तिप्रदर्शनार्थम् । केनचिदपि प्रकारेण क्रियाकरणादिकारकानुपपत्तेः । केनचित्कंचित्कश्चित्कथंचिन्न जिघ्रेदेवेत्यर्थः ।

यत्राप्यविद्यावस्थायामन्योऽन्यं पश्यति तत्रापि [2]येनेदं सर्वं विजानाति तं [3]केन विजानीयाद्येन विजानाति तस्य करणस्य विज्ञेये विनियुक्तत्वात् । ज्ञातुश्च ज्ञेय एव हि जिज्ञासा नाऽऽत्मनि । न चाग्नेरिवाऽऽत्माऽऽत्मनो विषयो न चाविषये ज्ञातुर्ज्ञानमुपपद्यते । [4]तस्माद्येनेदं सर्वं विजानाति तं विज्ञातारं केन करणेन को वाऽन्यो विजानीयात् ।

---

प्रमाणयोरभावे कार्यस्य विरुद्धत्वादिति यावत् । ननु किंशब्दे प्रश्नार्थं प्रतीयमाने कथं क्रियातत्साधनयोरत्यन्तनिवृत्तिर्विदुषो विवक्ष्यते तत्राऽऽह—केनेति । किंशब्दस्य प्रागेवाऽऽक्षेपार्थत्वमुक्तं[5] तन्नाक्षेपार्थं वचो विदुषः सर्वप्रकारक्रियाकारकाद्यसंभवप्रदर्शनार्थमित्यत्यन्तमेव क्रियादिनिवृत्तिर्विदुषो युक्तेत्यर्थः । सर्वप्रकारानुपपत्तिमेवाभिनयति—केनचिदिति ।

कैवल्यावस्थामास्थाय संज्ञाभाववचनमित्युक्त्वा [6]तत्रैव [7]किं पुनर्न्यायं वक्तुमविद्यावस्थायामपि साक्षिणो ज्ञानविषयत्वमाह—यत्रापीति । येन कूटस्थबोधेन व्याप्तो [8]लोकः सर्वं जानाति तं साक्षिणं केन करणेन को वा ज्ञाता जानीयादित्यत्र हेतुमाह—येनेति । येन चक्षुरादिना लोको जानाति तस्य [9]विषयग्रहणेनैवोपक्षीणत्वान्न साक्षिणि प्रवृत्तिरित्यर्थः । आत्मनो[10]ऽसंदिग्ध[11]भावत्वाच्च प्रमेयत्वासिद्धिरित्याह—ज्ञातुश्चेति । किंचाऽऽत्मा स्वेनैव ज्ञायते ज्ञात्रन्तरेण वा नाऽऽद्य इत्याह—न चेति । न द्वितीय इत्याह— न चाविषय इति । ज्ञात्रन्तरस्याभावात्तस्याविषयोऽयमात्मा कुतस्तेन ज्ञातुं शक्यते । न हि ज्ञात्रन्तरमस्ति नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतेरित्यर्थः । आत्मनि [12]प्रमातृप्रमाणयोरभावे

---

मन्त्र में "केन, कम्" (किससे, किसको) इत्यादि निषेधार्थक वचन प्रकारान्तर से असिद्धिप्रदर्शन के लिए है। किसी भी प्रकार से क्रिया-करणादि कारकों की सिद्धि सम्भव नहीं है। अर्थात् किसी के द्वारा किसी विषय को कोई किसी भी प्रकार नहीं सूंघ सकता ।

इसके अतिरिक्त अविद्यावस्था में भी जहाँ इतर इतर को देखता है, वहाँ भी जिसके द्वारा यह सब जानता है, उसको किसके द्वारा जाने क्योंकि जिसके द्वारा वह जानता है, उस इन्द्रिय का तो विषय में विनियोग हुआ है। तथा ज्ञाता की जिज्ञासा ज्ञेय में ही होती है, आत्मा में नहीं होती । अग्नि के समान आत्मा अपना ही विषय नहीं हो सकता और जो विषय ही नहीं है, उसका ज्ञान ज्ञाता को नहीं हो सकता। इसलिए (आत्मा में प्रमाता और प्रमाण की प्रवृत्ति का अभाव होने के कारण) जिसके

---

१ निषेधार्थमित्यर्थः। २. येनेत्यादे श्रुत्यंशस्य तात्पर्यमाहुर्वार्तिके—"ज्ञानोत्पत्तौ न संज्ञाऽस्तीत्यास्तां तावदिहाऽऽत्मनः। अपि सत्यामविद्यायां न संज्ञाऽस्त्यात्मनीदृशीति" ॥ ईदृशी ग्राहकादिविभागोद्ग्राहिणीत्यर्थः ॥ ३. अविद्यावस्थायामपि सर्वसाक्षी स्वप्रकाशेनान्यापेक्ष. किं पुनर्विद्यावस्थायामित्यर्थ. । ४. आत्मनि प्रमातृप्रमाणयो प्रवृत्त्यभावात्। ५. बृ. उ. ६२३ पृष्ठे सर्वत्र हीत्यादिभाष्येण। ६. कैवल्ये संज्ञाभाववचन एव । ७. किं पुनर्न्यायम्—कैमुतिकन्यायम् । ८. सघात. । ९ स्वस्वनियतशब्दादिविषयेत्यर्थ.। १०. असदिग्धभावाच्चेत्येव युक्तः पाठ । असदिग्धत्वाच्चेत्यर्थः । ११. पदार्थत्वात्। १२. अनयोः प्रवृत्तेरिति यावत् ।

'यदा तु पुनः 'परमार्थविवेकिनो ब्रह्मविदो' विज्ञातैव केवलोऽद्वयो वर्तते तं विज्ञातारमरे केन विजानीयादिति ॥१४॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

अथ द्वितीयाध्यायस्य पञ्चमं ब्राह्मणम् ।

यत्केवलं कर्मनिरपेक्षममृतत्वसाधनं तद्वक्तव्यमिति मैत्रेयीब्राह्मणमारब्धम् । तच्चाऽऽत्मज्ञानं सर्वसंन्यासाङ्गविशिष्टम् । आत्मनि च विज्ञाते सर्वमिदं विज्ञातं भवति । आत्मा च प्रियः सर्वस्मात् । तस्मादात्मा द्रष्टव्यः स च श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति च दर्शनप्रकारा उक्ताः । तत्र श्रोतव्य आचार्यागमाभ्याम् । मन्तव्यस्तर्कतः ।

ज्ञानाविषयत्वं फलतीत्याह—तस्मादिति । विज्ञातारमित्यादिवाक्यस्यार्थं प्रपञ्चयति—यदा त्विति । तदेवं स्वरूपापेक्षं विज्ञानघनत्वं विशेषविज्ञानापेक्षं तु संज्ञाभाववचनमित्यविरोध इति ॥ १४ ॥

इति बृहदारण्यकभाष्यटीकायां द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

पूर्वोत्तरब्राह्मणयोः संगतिं वक्तुं वृत्तं कीर्तयति—'यत्केवलमिति । कैवल्यं व्याचष्टे—कर्मनिरपेक्षमिति । तच्चाऽऽत्मज्ञानमुक्तमिति संबन्धः । ततो 'निराकाङ्क्षत्वं सिद्धमिति चकारार्थः । आत्मज्ञानं सन्यासिनामेवेति नियन्तुं विशिनष्टि—सर्वेति । ननु कुतस्ततो नैराकाङ्क्ष्यं सत्यपि तस्मिन्विज्ञेयान्तरसंभवादत आह—आत्मनि चेति । न वा अरे पत्युरित्यादावुक्तं स्मारयति—आत्मा चेति । तस्य निरतिशयप्रमास्पदत्वेन परमानन्दत्वे" फलितमाह—तस्मादिति । स चेद्दर्शनार्हस्तर्हि तद्दर्शने कानि साधनानीत्याशङ्क्याऽऽह—स चेति । दर्शनप्रकारा दर्शनस्योपायभेदाः । श्रवणमननयोः

द्वारा यह सब जानता है, उस विज्ञाता को किस इन्द्रिय के द्वारा जाने, कौन दूसरा जाने (जबकि आत्मा अद्वितीय है) । (विद्यावस्था में) जब (अखण्डार्थ का पर्यालोचन करने वाले) परमार्थतत्त्वद्रष्टा ब्रह्मवेत्ता की दृष्टि में केवल अद्वितीय विज्ञाता ही रह जाता है, तो हे मैत्रयी ! उस विज्ञाता को वह किसके द्वारा जाने ॥१४॥

इस प्रकार बृहदारण्यक उपनिषत् द्वितीयाध्याय के चतुर्थ मैत्रेयी ब्राह्मण में शाङ्करभाष्य का हिन्दीभाषानुवाद पूर्ण हुआ ॥४॥

जो केवल कर्मनिरपेक्ष, अमृतत्वसाधन है, उसी का वर्णन करना चाहिए, इसी से मैत्रेयी ब्राह्मण आरम्भ किया गया था और वह सर्वसन्यासरूप अङ्ग से विशिष्ट आत्मज्ञान ही है । आत्मा का ज्ञान हो जाने पर यह सब ज्ञात हो जाता है । आत्मा ही सबसे प्रिय है । इसलिए (आत्मा के परमानन्दस्वरूप होने से) आत्मा का दर्शन करना चाहिये, एवं उसी का श्रवण, मनन व निदिध्यासन करना चाहिये, ये उसके दर्शन के प्रकार प्रतिपादित किये गये हैं । उन (श्रवण और मनन) में श्रवण को

१. विद्यावस्थायाम् । २. अखण्डार्थं पर्यालोचयत । ३ दृष्टया । ४ आत्मनः परमानन्दत्वात् । ५. श्रवणमननयोर्मध्ये । ६. उक्ता इत्येतत्पदे लिङ्गवचनाभ्यां विपरिणमय्य संबन्ध । ७. तत —निरपेक्षामृतत्वसाधनस्यात्मज्ञानस्योक्तत्वादित्यर्थः । ८. निराकाङ्क्षत्वं विदुष इति शेष । ९. सन्यासविशिष्टात्मज्ञानात् । १० आत्मज्ञाने । ११. सिद्धे सति ।

तत्र च तर्क उक्त आत्मैवेदं सर्वमिति प्रतिज्ञातस्य हेतुवचनमात्मैकसामान्यत्वमात्मैकोद्भवत्वमात्मैकप्रलयत्वं च। तत्रायं हेतुरसिद्ध इत्याशङ्क्यत आत्मैकसामान्योद्भवप्रलयाख्यस्तदाशङ्कानिवृत्त्यर्थमेतद्ब्राह्मणमारभ्यते।

यस्मात्परस्परोपकार्योपकारकभूतं जगत्सर्वं पृथिव्यादि। यच्च लोके परस्परोपकार्योपकारकभूतं तदेककारणपूर्वकमेकसामान्यात्मकमेकप्रलयं च दृष्टम्। तस्मादिदमपि पृथिव्यादिलक्षणं जगत्परस्परोपकार्योपकारकत्वात्तथाभूतं भवितुमर्हति। 'एष ह्यर्थो-

स्वरूपविशेषं दर्शयति—तत्रेति। कोऽसौ तर्को येनाऽऽत्मा मन्तव्यो भवति तत्राऽऽह—तत्र चेति। हुन्दुभ्यादिग्रन्थः समन्वयार्थः। उक्तमेव तर्कं संगृह्णाति—आत्मैवेति। प्रधानादिवादमादाय हेत्वसिद्धिशङ्कायां तन्निराकरणार्थमिदं ब्राह्मणमिति संगतिं संगिरते—तत्रायमिति।

कथं हेत्वसिद्धिशङ्कोद्ध्रियते तत्राऽऽह—यस्मादिति। तस्मात्तथाभूतं भवितुमर्हतीत्युत्तरत्र संबन्धः। अन्योन्योपकार्योपकारकभूतं जगदेकचैतन्यानुविद्धमेकप्रकृतिकं चेत्यत्र व्याप्तिमाह—यच्चेति। दृष्टं स्वप्नादीति शेषः। दृष्टान्ते सिद्धमर्थं दार्ष्टान्तिके योजयति—तस्मादिति। तच्छब्दार्थं स्फुटयति—परस्परेति। तथाभूतमित्येककारणपूर्वकादि गृह्यते। विमतमेककारणकं परस्परोपकार्योपकारकभूतत्वात्स्वप्नवदित्ययुक्तं हेत्वसिद्धेः न हि सर्वं जगत्परस्परोपकार्योपकारकभूतमित्याशङ्क्याऽऽह

आचार्य और शास्त्र द्वारा करना चाहिए। युक्ति के द्वारा मनन करना चाहिये। उसमें तर्क का स्वरूप बतलाया गया है कि जहाँ "यह जो कुछ भी है, सब आत्मा ही है" इस प्रकार प्रतिज्ञावाक्य से "आत्मा का सबमें समानभाव से विद्यमान रहना, आत्मा से ही सबकी उत्पत्ति होना तथा आत्मा में ही सबका प्रलय होना" यह फलितार्थ कथन है। प्रतिज्ञात अर्थ में शङ्का की जाती है कि आत्मा का सबमें विद्यमान रहना, उसी से उत्पन्न होना तथा उसी में प्रलय होना रूप हेतु असिद्ध है, इस आक्षेप की निवृत्ति के लिए द्वितीय अध्याय का पाँचवा ब्राह्मण प्रारम्भ किया जाता है।

क्योंकि यह पृथिवी आदि समस्त जगत् परस्पर उपकार्य और उपकारक स्वरूप है। लोक में जो भी पदार्थ परस्पर उपकार्य-उपकारकरूप होते हैं, वे एककारणपूर्वक, एकचैतन्यानुविद्ध और एकप्रलयस्थान वाले देखे जाते हैं। इसलिए यह पृथिवी आदि रूप जगत भी परस्पर उपकार्य-उपकारकरूप

१. इदं सर्वं यदयमात्मेत्येतदेव तु प्रतिज्ञावाक्यं तस्यैव फलितार्थकथनमिदम्। २. आत्मैवेदं सर्वमिति प्रतिज्ञातार्थे। ३ आशङ्क्यत इति—जगत स्थितिकाले चित्सामान्यस्य यदुक्तं तन्न सिध्यति चितो निःसामान्यविशेषत्वात् तथा चिदुत्पत्तिलयाख्यहेत्वंशोऽपि सांख्यादीन् प्रति न सिध्यति। ते हि प्रधानाद जगज्जन्मलयाविच्छन्ति न च स्वयाऽपि चितो जगज्जन्मलयाऽऽश्रेष्टुं शक्यौ कूटस्थासङ्गाद्वयत्वोपगमादित्याशङ्का द्रष्टव्या। ४ आरभ्यत इति—चित्सामान्यादिरूपो हेतुर्वस्तुतो नास्ति, यथाकथंचिद्भवति विकल्प्याऽऽद्ये इष्टापत्तिः। तदुक्तं वार्तिके—'ऐकात्म्यवस्तुतात्पर्यं हेत्वादिच्छद्मनोच्यते। वेदे यतो न हेत्वादि लाघवस्याद्विवक्षितम्" ॥७॥ न द्वितीयोऽज्ञात ब्रह्मणि चित्सामान्यादिसंभवात्तद्वदमित्यादौ तत्साधितमपि अभ्युपेत्याप्यसिद्धत्व तत्सिद्धत्वाभिधित्सया मधुब्राह्मणमारब्धमिति भाव। ५. एकचैतन्यानुविद्धम्। ६. सर्वस्य परस्परोपकार्योपकारकत्वरूप। ७. संक्षेपतः कथयति। ८ प्रधानादिवादे हि प्रधानादावेव जगदुद्भवादि न ब्रह्मणीति हेत्वसिद्धि। ९. आक्षेपात्मिकाम्। १०. अनुक्तम्। ११. एकोपादानकम्।

ऽस्मिन्ब्राह्मणे प्रकाश्यते । अथवाऽऽत्मैवेदं सर्वमिति [1]प्रतिज्ञातस्याऽऽत्मोत्पत्तिस्थितिलयत्वं हेतुमुक्त्वा पुनरागमप्रधानेन मधुब्राह्मणेन प्रतिज्ञातस्यार्थस्य [2]निगमनं क्रियते । तथाहि नैयायिकैरुक्तं [3]हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति[4] । अन्यैर्व्याख्यातमा दुन्दुभिदृष्टान्ताच्छ्रोतव्यार्थमागमवचनं प्राङ्मधुब्राह्मणान्मन्तव्यार्थमुपपत्तिप्रदर्शनेन मधुब्राह्मणेन तु निदिध्यासनविधिरुच्यत इति । सर्वथाऽपि तु यथाऽऽगमेनावधारितं तर्कतस्तथैव मन्तव्यम् । यथा तर्कतो मतस्य तर्कागमाभ्यां निश्चितस्य तथैव निदिध्यासनं क्रियत इति पृथङ्निदिध्यासनविधिरनर्थक एव । [5]तस्मात्पृथक्प्रकरणविभागोऽनर्थक इत्यस्मदभिप्रायः

---

एष हारीति । हेत्वसिद्धिशङ्कां परिहर्तुं ब्राह्मणमिति संगतिमुक्त्वा प्रकारान्तरेण तामाह—अथवेति । प्रतिज्ञाहेतू क्रमेणोक्त्वा हेतुसहितस्य [6]प्रतिज्ञार्थस्य पुनर्वचनं निगमनमित्यत्र तार्किकसंमतिमाह—तथा हीति । भर्तृप्रपञ्चानां ब्राह्मणारम्भप्रकारमनुवदति—अन्यैरिति । द्रष्टव्यादिवाक्यादारभ्याऽऽदुन्दुभि[7]दृष्टान्तादागमवचनं श्रोतव्य इत्युक्तश्रवणनिरूपणार्थम् । दुन्दुभिदृष्टान्तादारभ्य मधुब्राह्मणात्प्रागुपपत्तिप्रदर्शनेन मन्तव्य इत्युक्तमनननिरूपणार्थमागमवचनम् । निदिध्यासनं व्याख्यातुं पुनरेतद्ब्राह्मणमित्यर्थः । एतद्दूषयति—सर्वथाऽपीति । श्रवणादेर्विधेयत्वे[8]ऽविधेयत्वेऽपीति यावत् । [9]अन्वयव्यतिरेकाभ्यां श्रवणे प्रवृत्तस्य "तत्पौष्कल्ये सत्य"र्थलब्धं मननं न विधिमपेक्षते । यथा तर्कतो मतं तत्त्वं तथा तस्य तर्कागमाभ्यां निश्चितस्योभयसामर्थ्यादेव निदिध्यासनसिद्धौ तदपि विध्यनपेक्षमेवेत्यर्थः । त्रयाणां विध्यनपेक्षत्वे फलितमाह—तस्मादिति । इति परकीयव्याख्यानमयुक्तमिति शेषः । सिद्धान्तेऽपि

---

होने के कारण वैसा ही होना चाहिये । यही अर्थ इस ब्राह्मण में प्रकाशित किया जाता है । अथवा "यह जो कुछ है—सब आत्मा ही है" इस प्रतिज्ञात ऐकात्म्य का आत्मा से उत्पत्ति, स्थिति, लय होना रूप हेतु बतलाकर अब फिर आगमप्रधान मधुब्राह्मण से प्रतिज्ञातार्थ का पुनः कथन किया जाता है । इसी बात को नैयायिकों ने प्रतिपादित किया है कि "हेतुसम्बन्ध से प्रतिज्ञातार्थ का पुनः कथन निगमन है" इत्यादि । (भर्तृप्रपञ्चादि) अन्य दार्शनिकों ने इस प्रकार व्याख्या की है कि दुन्दुभि दृष्टान्त के पूर्व जो श्रुतिवचन हैं, वह "श्रोतव्यः" इस विधिवाक्य से प्रारम्भ किये हैं, फिर मधुब्राह्मण से पूर्व का शास्त्र है; वह युक्ति दिखलाते हुए "मन्तव्यः" इस वाक्य में मनन के निरूपण के लिए है । तथा मधुब्राह्मण के द्वारा निदिध्यासन की विधि बतलायी गयी है । किन्तु (श्रवणादि के क्रियारूपत्व पक्ष में विधेयत्व और ज्ञानरूप पक्ष में अविधेयत्व) सभी प्रकार से जैसा श्रुति ने निश्चित किया है, तर्क से वैसा ही मनन करना चाहिये । जिस तर्क से मनन किया हो और तर्क और श्रुति के द्वारा निश्चित अर्थ का उसी प्रकार निदिध्यासन किया जाता है । इसलिए निदिध्यासन के पृथक् विधान करने का कोई

---

१. ऐकात्म्यस्य । २. निगमनम्—पुनः कथनम् तस्यापि साधना(अनुमाना)ङ्गतायां वादिभिरिष्टत्वादस्य वक्तव्यत्वात्तदुच्यते । ३. हेत्वपदेशादिति—हेतुसबन्धात् प्रतिज्ञायाः प्रतिज्ञातार्थस्य पुनः कथनमित्यक्षरार्थः । हेतोः व्याप्तिविशिष्टपक्षधर्मस्य कथनात् प्रतिज्ञातार्थस्य साध्यविशिष्टपक्षस्य प्रदर्शनमिति यावत् । व्याप्तिविशिष्टपक्षधर्म (हेतु)कथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शको न्यायावयवो निगमनमिति । ४. गौ० सू० १।१।३९ । ५. त्रयाणां विध्यनपेक्षत्वात् । ६. प्रतिज्ञातार्थस्य । ७ इत प्रागित्यर्थः । ८. श्रवणादेः क्रियारूपत्वपक्षे विधेयत्वं ज्ञानरूपत्वपक्षे त्वविधेयत्वम् । ९. सति श्रवणादौ ज्ञानं दृश्यते—नान्यथेत्यन्वयव्यतिरेकौ । १०. श्रवणादिसम्पूर्णौ । ११. विधिमन्तरेव ।

**इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ**

यह प्रसिद्ध पृथिवी (ब्रह्मा से लेकर स्तम्बपर्यन्त) समस्त भूतों का मधु है (जैसे अनेक मधुकर मधु के छत्ते को बनाते हैं, ऐसे ही समस्त भूतों ने इसे बनाया है) और ऐसे ही समस्त भूत इस पृथिवी के मधु हैं। इस पृथिवी में जो यह चिन्मात्र प्रकाशमय और अमृतमय पुरुष है तथा जो यह अध्यात्म

---

श्रवणमनननिदिध्यासनानामिति। सर्वथाऽपि त्वध्यायद्वयस्यार्थोऽस्मिन्ब्राह्मण उपसंह्रियते।

इयं पृथिवी [2]प्रसिद्धा सर्वेषां भूतानां मधु सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानां प्राणिनां मधु कार्यं मध्विव मधु। यथैको मध्वपूपोऽनेकैर्मधुकरैर्निर्वर्तित एवमियं पृथिवी सर्वभूतै[3]र्निर्वर्तिता। तथा सर्वाणि भूतानि पृथिव्यै [4]पृथिव्या अस्या मधुकार्यम्। [5]किं च यश्चायं [6]पुरुषोऽस्यां [7]पृथिव्यां तेजोमयश्चिन्मात्रप्रकाश[8]मयोऽमृतमयो[9]ऽमरणधर्मा पुरुषो

---

श्रवणादिविध्यभ्युपगमात्कथं परकीयं प्रस्थानं प्रत्याख्यातमित्याशङ्क्याऽऽह—सर्वथाऽपि त्विति। तद्विध्यभ्युपगमेऽपीति यावत्।

एवं सगतिं ब्राह्मणस्योक्त्वा तदक्षराणि व्याकरोति—इयमित्यादिना। यदुक्तं मध्विव मध्विति तद्विवृणोति—यथेति। न केवलमुक्तं मधुद्वयमेव किंतु मध्वन्तरं चास्तीत्याह—किं चेति। पुरुषशब्दस्य

---

औचित्य ही दिखाई नहीं देता। इसलिए (तीनों का विधि-अनपेक्ष होने से) श्रवण-मनन-निदिध्यासन के प्रकरणों का पृथक् विभाग करना वृथा है—ऐसा हमारा विचार है। सब प्रकार से ही इस अध्यायद्वय में इस ब्रह्म में प्रपञ्चमिथ्यात्वरूप अर्थ का उपसंहार किया जाता है।

"इयम्" अर्थात् प्रसिद्ध यह पृथिवी सभी भूतों का मधु है, "सर्वेषाम्" अर्थात् ब्रह्मादि से लेकर स्तम्ब-पर्यन्त सभी "भूतानाम्" अर्थात् प्राणियों का मधु यानी कार्य है। यह मधु के समान होने से मधु है। जिस प्रकार एक मधु का छत्ता अनेक भौंरों द्वारा तैयार किया हुआ होता है, उसी प्रकार इस पृथिवी की भी सब भूतों द्वारा (क्रियाफल के उपभोगार्थ) सृष्टि की गई है। तथा समस्त जन्तु इस "पृथिव्यै" यानी पृथिवी के "मधु" अर्थात् कार्य हैं। इसके अतिरिक्त इस अधिदैव पृथिवी में जो भी यह लिङ्ग-शरीररूप "तेजोमय" यानी चिन्मात्र प्रकाशमय तथा "अमृतमय" यानी स्थूलदेह के समान आशु

---

१ प्रपञ्चमिथ्यात्वरूप। २ इदं शब्दार्थोऽयम्। ३ निर्वर्तितेति—"क्रियाफलोपभोगार्थं सर्वैरेव स्वकर्मभिः। जन्तुभिः पृथिवी सृष्टा मधु तथा ततो मही" ॥वा० १८॥ ४ पृथिव्या भूतानि मधु इति। पृथिव्या हि स्वकर्मैकभोगार्थं भूतानि सृष्टानि। भूतानां पार्थिवत्वात्तत्सृष्टत्वमिति ध्येयम्। ५ किं चेति—पृथिव्या भूतानां च स्थूलदेहरूपं भागं कर्तृत्वकार्यत्वभोक्तृत्वभोग्यत्वरूपेण चतुर्धा विभज्य तस्मिन्नेव स्थूले पदार्थे लिङ्गशरीरं तस्य चतुर्धा विभागायेदं वाक्यमित्यर्थः। ६ लिङ्गशरीररूपः। ७ अधिदैवम्। ८. प्राचुर्ये मयट्। ९. स्थूलदेहवन्नाशुविनाशी।

**शारीरस्तेजोमयोऽमृतमयः पुरुषो*ऽयमेव स**
**[1]योऽयमात्मे[2]दममृतमिदं ब्रह्मे द७ सर्वम् ॥ १ ॥**

शारीर तेजोमय ग्रमरणधर्मा पुरुष है, यही वह है। जो कि "यह ग्रात्मा है" (इस वाक्य से बतलाया गया है)। यह ग्रमृत है, यह ब्रह्म है ग्रौर यह सर्वरूप है (क्योंकि ब्रह्म का ज्ञान होने पर वह तत्त्ववेत्ता सर्वरूप हो जाता है) ॥ १ ॥

---

यश्चायम[3]ध्यात्मं शारीरः शरीर भवः पूर्ववत्तेजोमयोऽमृतमयः पुरुषः। स च [4]लिङ्गाभिमानी। स च सर्वेषां भूतानामुपकारकत्वेन मधु। सर्वाणि च भूतान्यस्य[5] मधु। चशब्दसामर्थ्यात्।

---

क्षेत्रज्ञविषयत्वं वारयति—स चेति। तस्य पृथिवीवन्मधुत्वमाह—स च सर्वेषामिति। सर्वेषां च भूतानां प्रति मधुत्वं दर्शयति—सर्वाणि चेति। नन्वाद्यमेव मधुद्वयं श्रुतमश्रुतं तु मधुद्वयमशक्यं कल्पयितुं कल्प-

---

विनाशी धर्म से रहित पुरुष एव जो इस शरीर मे रहने वाला ग्रात्मा को शरीर के ग्राश्रित रखने वाला पूर्ववत् चिन्मात्रप्रकाशमय एव ग्रमरणधर्मा पुरुष है, वह लिङ्गदेहरूप पृथिवी ग्रश का ग्रभिमानी है। वह सर्व भूतो का उपकारक होने के कारण मधु है ग्रौर समस्त जन्तु उस लिङ्गात्मा के मधु है। "यश्चायमध्यात्मम्" मन्त्र मे 'च' शब्द के सामर्थ्य से यह सिद्ध होता है। इसी प्रकार इन चारो मे एक मधु ही सर्व प्राणियो का कार्य है ग्रौर सभी भूत इस पृथिवी ग्रादि के कार्य हैं। इसलिये इस समस्त

---

१ योऽयमिति—योऽयं पूर्वं मैत्रेय्या इदं सर्वं यदयमात्मेति प्रतिज्ञात स एवात्मा अयमुक्तचतुर्विधमध्यात्मन तदधिष्ठानात्मकः तेषां तद्विवर्ततया तदात्मकत्वात्) नान्य इत्यर्थं। २. इदममृतमिति। इदम् चतुष्टयकल्पनाधिष्ठानब्रह्मविषय विज्ञानम् अमृतम् अमृतत्वसाधनम्। इद ब्रह्मेति—इदमेवात्मतत्त्वमुक्तचतुष्टयकल्पनाधिष्ठान ब्रह्म ते ब्रवाणीत्यध्यायादौ प्रकृत ब्रह्म। इद सर्वमिति—इदमेवात्मज्ञान सर्वं सर्वभावापत्तिसाधनमित्यर्थं। ३. आत्मान शरीरमाश्रित्य वर्तमान। ४ लिङ्गदेहरूप पृथिव्यंशस्याभिमानीति यावत्। अभिमानस्य चेतनधर्मत्वेऽपि तस्य तत्प्रायत्वात् स इति ध्येयम्। ५ लिङ्गात्मन।

---

*अयमेव ॥ योऽयमात्मेति अस्या श्रुतेरुद्व्याख्यार्थमाहुर्वार्तिकाचार्या—"कार्यकारणरूपेण भोग्यभोक्तृतयोदितम्। चतुष्टय पृथिव्यादि तस्य तत्त्वमथोच्यत ॥ चतुष्टयविभागेन स्वार्थोऽध्यात्मा विभज्यते। अविभागोऽपि तादर्थ्याद्भोक्ताऽत्र. सोऽत्र गृह्यत ॥ प्रत्यक्तया य प्रथते चतुष्टयविलक्षण। प्रात्यक्ष्यात्सोऽयमित्येव प्रत्यक्त्माद्यभिधीयत ॥ पृथिव्यादिषु ॥ पूर्वं व्याख्यातोऽन्तरबाह्यत। आत्मैव स इति श्रेयस्तदबोधप्रसूतित ॥ अयमित्यस्य चैव स्वार्थोऽयमित्यादिव पर.। अयमेव स इत्युक्त्या सामानाधिकरण्यत। प्रत्यङ्मात्रैकयाथात्म्य चतुर्धोक्तस्य बोध्यते ॥ अव्यावृत्ताननुगतध्वस्ताविद्याएवेत्यवधृतावतत्ससर्गप्रतिषेधकृत् ॥ तत्त्व चतुष्टयस्यास्य प्रत्यगात्मैव केवल। तदुद्भव:" ॥३१-३७॥ इति। अध्यात्मादिविभागोक्तचतुष्टयमनूद्यायमित्यादिवाक्यतात्पर्यमाह—कार्येति ॥ कथमात्मा चतुष्टयस्य स्वरूपमात्मन स्वार्थत्वादविभागत्वाच्च तद्वैलक्षण्यादित्याशङ्क्याऽऽह—चतुष्टयेति। आत्मन स्वाविद्यया चतुष्टयात्मनाऽवस्थानाद्विभागसिद्धिरित्यर्थ। आत्माविद्याविवर्तत्वेनाऽऽत्मार्थत्वाच्चतुष्टयस्यात्र चतुष्टये स भोक्ताऽऽत्मा तत्त्व गृह्यत इति फलितमाह—तादर्थ्यादिति ॥ अयशब्दार्थमाह—प्रत्यक्तयेति। य सशब्दार्थाच्चतुष्टयाद्विलक्षण सम्प्रत्ययभावेन भाति स साक्षी प्रत्यगात्मा प्रात्यक्ष्यादयमित्येवमुच्यत इति सबन्ध ॥ सामानाधिकरण्यार्थमाह—अयमेवेति। चतुर्धेति भोक्तृभोग्यकर्तृकार्यत्वेनाध्यात्माधिदैवयो प्रत्येकमाधाराधेयत्वेन

एवमेतच्चतुष्टयं तावदेकं 'सर्वभूतकार्यं सर्वाणि च भूतान्यस्य कार्यम्। 'अतोऽस्यैककारणपूर्वकता'। यस्मादेकस्मात्कारणादेतज्जातं तदेवैकं परमार्थतो ब्रह्मेतरत्कार्यं वाचारम्भणं विकारो नामधेयमात्रमित्येष मधुपर्यायाणां सर्वेषामर्थः संक्षेपतः। अयमेव स योऽयं प्रतिज्ञात 'इदं सर्वं यदयमात्मेति। इदममृतं यन्मैत्रेय्या' अमृतत्वसाधनमुक्तमात्मविज्ञानमिदं तदमृतम्। इदं ब्रह्म यद्ब्रह्म ते ब्रवाणि ज्ञपयिष्यामीत्यध्यायादौ प्रकृतं यद्विषया च विद्या

---

काभावादस आह—चशब्देति। प्रथमपर्यायार्थमुपसंहरति—एवमिति। पृथिवी सर्वाणि 'भूतानि 'पार्थिवः पुरुषः शारीरश्चेति चतुष्टयमेकं मध्विति शेषः। मधुशब्दार्थमाह—सर्वेति। अस्येति पृथिव्यादेरिति यावत्। 'परस्परमुपकार्योपकारकभावे फलितमाह—अत इति। अस्येति सर्वं जगदुच्यते। 'उक्तं च यस्मात्परस्परोपकार्योपकारकभूतमित्यादि। भवत्वनेन "न्यायेन मधुपर्यायेषु सर्वेषु "कारणोपदेशो ब्रह्मोपदेशस्तु कथमित्याशङ्क्याऽऽह—यस्मादिति। स "प्रकृत आत्मैवायं "चतुर्थोक्तो भेद इति योजना। इदमिति चतुष्टयकल्पनाधिष्ठानविषयं ज्ञानं परामृशति। इदं ब्रह्मेत्यत्र चतुष्टयाधिष्ठानमिदंशब्दार्थः। "तृतीये च तस्य प्रकृतत्वं दर्शयति—यद्विषयेति। इदं सर्वमित्यत्र ब्रह्मज्ञानमिदमित्युक्तम्। सर्वं सर्वात्मि-

---

जगत् की एककारणपूर्वकता है (उसका स्वप्न दृष्टान्त से अनुसधान करना चाहिये)। जिस एक कारण से यह जगत् उत्पन्न हुआ, वही एक तत्त्व परमार्थत. ब्रह्म है। उससे भिन्न कार्य "विकार तो केवल वाणी का विकार नाम मात्र ही है" इस प्रकार मधु के पर्यायो से यह अर्थ संक्षेपतः किया गया है। "यह जो कुछ है, सभी आत्मा ही है" इस प्रकार जो यह प्रतिज्ञा की गई थी, यह वही है। "इदममृतम्" अर्थात् मैत्रेयी को जिस अमृतत्व-विज्ञान का साधन उपदेश किया गया था, वह यह आत्मविज्ञान अमृत है। यह ब्रह्म है। "मैं तुझे ब्रह्म का उपदेश करूँगा", "ब्रह्मज्ञान कराऊँगा" इस प्रकार जिस ब्रह्म का अध्याय के आरम्भ मे उपक्रम किया है, उस ब्रह्मविषयिका विद्या को ब्रह्मविद्या कहा जाता है। यह ब्रह्मविद्या ही सब कुछ है क्योकि ब्रह्मात्मैक्यज्ञान होने से सब कुछ आत्मा है, ऐसा ज्ञान हो जाता है ॥१॥

---

१. सर्वप्राणिकार्यम्। कार्यत्वमेव मधुत्वमिति भावः। २. सर्वस्य जगत. परस्परमुपकार्योपकारकत्वात्। ३ स्वप्नाऽत्र दृष्टान्तोऽनुसंधेय.। ४ बृ. उ. २-४-६। ५. चतुर्थ्यन्तमिदम्। ६. बपृ पि। ७. पार्थिवाधेयलिङ्गात्मा। ८. परस्पर कार्यकारणत्वमेवोपकार्योपकारकत्वम्। ९. बृ. उ. ६२६पृष्ठभाष्ये। १० मुख्या। ११. एककारणकत्वसाधनत्व कारणोपदेशः। १२ मैत्रेयीब्राह्मणे द्रष्टव्यत्वोदना प्रवृत्तः। १३. एतच्चतुष्टयाधिष्ठानमिति यावत्। १४. उपनिषदि प्रथमाध्याय।

---

वेत्यर्थ.॥ सशब्दार्थं वदन्वाक्यार्थं प्रपञ्चयति—पृथिव्यादिष्विति। अन्तरमाधेयादि बाह्यमाधारादि। चतुष्टयस्याऽऽत्ममात्रत्वे हेतुमाह—तदवोधेति॥ योऽयमात्मेतिशेषस्यायशब्देन पुनरुक्तिमाशङ्क्याऽऽह—अयमित्यस्येति। अयमित्युक्त आकाङ्क्षा स्यात्तन्निवृत्त्यर्थं विशेषण योऽयमित्यादि। सामानाधिकरण्यस्य नीलोत्पलवदखण्डार्थत्व विना ससर्गमात्रविषयत्वेनोपपत्तेर्न चतुष्टयस्य प्रत्यङ्मात्रत्वेत्याशङ्क्याऽऽह—एवेतीति॥ कथमवधारण चतुष्टयस्याऽऽत्मनि समर्गनिषेधक, ससर्गपक्षेऽप्ययोगव्यवच्छेदित्वेनोपपत्तेस्तत्राऽऽह—तत्त्वमिति। केवलशब्दार्थं स्फुटयति—अव्यावृत्तेति। अयोगव्यवच्छेदे तु चतुष्टयस्याऽऽत्मनो व्यावृत्ततया निःस्वरूपस्य ससर्गानुपपत्तिरिति भाव.॥

इमा आपः सर्वेषां भूतानां मध्वासामपाꣳ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ २ ॥

अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृत-

ऐसे ही ये जल समस्त भूतों के मधु हैं और समस्त भूत इन जलों के मधु हैं। इन जलों में जो चिन्मय अमरणधर्मा पुरुष है तथा यह जो अध्यात्म रैतस तेजोमय, अमृतमय पुरुष है, यही वह है। जो कि "यह आत्मा है" (इस प्रतिज्ञावाक्य से बतलाया है), यह अमृत है, यह ब्रह्म है और यह सर्वरूप है ॥ २ ॥

यह अग्नि समस्त भूतों का मधु है और समस्त भूत इस अग्नि के मधु हैं। इस अग्नि में जो

---

ब्रह्मविद्येत्युच्यत[1] इदं सर्वं यस्माद्ब्रह्मणो विज्ञाना[2]त्सर्वं भवति ॥ १ ॥

तथाऽऽपः। [3]अध्यात्मं रेतस्यपां विशेषतोऽवस्थानम् ॥ २ ॥

तथाऽग्निः। वाच्यग्नेर्विशेषतोऽवस्थानम् ॥ ३ ॥

---

साधनमिति यावत्। तदेव स्पष्टयति—यस्मादिति ॥१॥

यथा पृथिवी मधुत्वेन व्याख्याता तथाऽऽपोऽपि व्याख्येया इत्याह—तथेति। रैतस इति विशेषणस्यार्थमाह—अध्यात्ममिति। 'आपो रेतो भूत्वा शिश्नं प्राविशन्' इति हि श्रुत्यन्तरम् ॥२॥

पृथिव्यामप्सु चोक्तं न्यायमग्नावतिदिशति—तथेति। वाङ्मय इत्यस्यार्थमाह—वाचीति।

---

इसी प्रकार जल मधु हैं। ('आपो रेतो भूत्वा' यानी जल ही रेतस् होकर—इत्यादि श्रुति से) अध्यात्म रेतस् में जल का विशेषरूप से अवस्थान होने से रेतस् ही जल के मध्य अध्यात्मरूप है (इसलिए अध्यात्म पुरुष का रेतस् यह विशेषण कहना ठीक ही है) ॥२॥

उसी प्रकार अग्नि है। ('अग्नि होकर मुख में उस पुरुष ने प्रवेश किया' इस वाक्य से) वाणी में अग्नि का आवास है ॥३॥

---

१. बृ० उ. १.४.९-१०। २. सर्वं भवतीति। आधिदैवाध्यात्मयोः स्थूलद्वयं सूक्ष्मद्वयं चेति चतुष्टयं सर्वविशेषाभावोपलक्षितात्ममात्रमिति द्रष्टव्यमित्युपसंहारोऽत्रानुसंधेयः। तथा च वार्तिके—"पृथिवी पार्थिवं घोरं शरीरं साधिदैवतम्। जानीयात्सर्वमात्मेति नेति नेत्युपलक्षणमिति" ॥ ३. अध्यात्मं रेतसीति—आपो रेतो भूत्वेति श्रुतेरध्यात्मं रेतसि जलानां विशेषतोऽवस्थानाद्रेत एवापामध्यात्मरूपमतोऽध्यात्मपुरुषस्य रैतस इति विशेषणं युक्तमिति भावः। एवमग्रेऽपि बोध्यम्।

मयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजो-
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेद-
ममृतमिदं ब्रह्मेद७ सर्वम् ॥ ३ ॥
अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः
सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजो-
मयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्ते-
जोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमा-
त्मेदममृतमिदं ब्रह्मेद७ सर्वम् ॥४ ॥

तेजोमय अमरणधर्मा पुरुष है और जो यह अध्यात्म वाङ्मय तेजोमय, अमृतमय पुरुष है, यही वह है। जो कि 'यह आत्मा है" (इस प्रतिज्ञावाक्य से कहा गया है) यह अमृत है, यह ब्रह्म है, यही सर्वरूप है ॥३॥

इसी प्रकार यह वायु समस्त भूतो का मधु है और समस्त भूत इस वायु के मधु हैं। इस वायु मे जो तेजोमय, अमृतमय पुरुष है तथा जो यह अध्यात्म प्राणरूप तेजोमय अमरणधर्मा पुरुष है, यही वह है। जो कि "यह आत्मा है" (इस प्रतिज्ञावाक्य स कहा गया है) यह अमृत है, यह ब्रह्म है, यही सर्वरूप है ॥४॥

---

तथा वायु । अध्यात्म प्राणो[1] भूताना[2] शरीरारम्भकत्वेनोपकारान्मधुत्वं तदन्तर्गताना तेजोमयादीना[3] करणत्वेनोपकारान्मधुत्वम् । तथा चोक्त[4] "तस्यै वाचः पृथिवी शरीरं

---

अग्निर्वाग्भूत्वा मुख प्राविशदिति हि श्रूयते ॥३॥

अग्नावुक्त न्याय वायौ योजयति—तथेति । 'वायु प्राणो भूत्वा नासिके प्राविशद्' इति श्रुत्यन्तरमाश्रित्याऽऽह—अध्यात्ममिति । पृथिव्यादीना तदन्तर्वर्तिना च पुरुषाणामेकवाक्योपात्तानामेकरूप मधुत्वमिति शङ्का परिहरन्नवान्तरविभागमाह—भूतानामिति । पृथिव्यादीना कार्यत्वं तेजोमयादीनां करणत्वमित्यत्र सप्तम्यधिकारसमतिमाह—तथा चोक्तमिति ॥४॥

---

इसी प्रकार वायु मधु है। अध्यात्म मधु ही (वायुवृत्ति से सहकृत घ्राणेंद्रिय यहां) प्राण है। (पृथिवी आदि) भूतो का शरीराम्भकसामर्थ्य तथा उनका उपकारक होने के कारण यह मधु है। उसके अन्तगत तेजोमयादि पुरुषों का करणत्व रूप से उपकारक होने के कारण मधुत्व है। इसी से (बृहदारण्यक के प्रथम अध्याय में) कहा गया है कि "(प्रजापति के अन्नरूप से प्रस्तुत हुए) उस वाक् का

---

१ वायुवृत्तिसहकृत घ्राणेन्द्रियमत्र प्राण । २ पृथिव्यादीनाम् । ३ पुरुषाणाम् । ४ तस्यै वाच इति—तस्यैतस्या प्रजापतेरन्नत्वेन प्रस्तुताया आधिदैविक्या वाच । पृथिवी शरीरम् आधार', ज्योतीरूप प्रकाशात्मक करणभूतमाधेयरूपम् । अय पार्थिवोऽग्निरित्यर्थ । ५ घ्राणम् ।

अयमादित्यः सर्वेषां भूतानां मध्वस्याऽऽदि-
त्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्ना-
दित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं
चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे-
दममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ५ ॥

इमा दिशः सर्वेषां भूतानां मध्वासां दिशाꣳ
सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजो-
मयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः

यह आदित्य समस्त भूतो का मधु है और समस्त भूत इस आदित्य के मधु हैं। यह जो इस आदित्य मे चिन्मय प्रकाशस्वरूप अमरणधर्मा पुरुष है एव जो यह अध्यात्म चाक्षुष तेजोमय अमृतमय पुरुष है, यही वह है। जो कि "यह आत्मा है" (इस वाक्य से बतलाया गया है) यह अमृत है, यह ब्रह्म है और यही सर्वरूप है ॥५॥

तथा ये दिशाएँ समस्त भूतो की मधु हैं और समस्त भूत इन दिशाओ के मधु हैं। यह जो उन दिशाओ मे तेजोमय अमृतमय पुरुष है और जो यह अध्यात्म श्रौत्र पुरुष प्रातिश्रुत्क (प्रत्येक श्रवण वेला

---

ज्योतीरूपमयमग्निः[1]" इति ॥ ४ ॥

तथा ऽऽदित्यो मधु। चाक्षुषोऽध्यात्मम् ॥ ५ ॥

तथा दिशो मधु। दिशां यद्यपि श्रोत्रमध्यात्मं रूपं [2]शब्दप्रतिश्रवणवेलायां तु

---

यद्यप्यादित्यस्तृतीये 'भूतेऽन्तर्भवति तथाऽपि देवताभेदमाश्रित्याग्न्यायुक्तं न्यायं तस्मिन्नति-
विशति—तथेति। 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इति श्रुतिमाश्रित्याऽऽह—चाक्षुष इति ॥५॥
आदित्यगतं न्यायं दिक्षु संपादयति—तथेति। 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' इति 'श्रुतेः
श्रोत्रमेव दिशामध्यात्मं रूपं [5]तथा चाध्यात्मं श्रौत्र '[6]इत्येव वक्तव्ये कथं प्रातिश्रुत्क इति विशेषण-
मित्याशङ्क्याऽऽह—दिशामिति। तथाऽपीत्यस्मिन्नर्थे तुशब्दः ॥ ६ ॥

---

पृथिवी बाह्य आधार और पृथिवी का आधेयस्वरूप यह पार्थिव अग्नि ज्योतिरूप प्रकाशात्मक करण
है" ॥४॥
इसी प्रकार आदित्य मधु है। ("आदित्य ही चक्षु होकर नेत्रगोलको मे प्रविष्ट हुआ" इस
श्रुतिवाक्य से) चाक्षुष पुरुष ही अध्यात्म मधु है ॥५॥
इसी प्रकार दिशाएँ मधु हैं। यद्यपि श्रोत्र दिशाओ का अध्यात्मरूप है, तब भी प्रत्युत्तर श्रवण

---

१. बृ. उ. १. ५. ११। २. प्रत्युत्तरश्रवणवेलायाम्। ३. तजसि। ४. श्रुतरिति—अध्यात्मश्रोत्रं दिशा
विशेषतोऽवस्थानादिति शेषः। ५ तथा चेति—श्रोत्रस्यैव दिशामध्यात्मरूपत्वे चेत्यर्थः। ६ इत्यव—
[illegible] श्रौत्र इत्येतावन्मात्रे विशेषणे वक्तव्ये।

तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १० ॥

अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य

इस आकाश में चिन्मात्र प्रकाशमय अमरणधर्मा पुरुष है, एवं जो यह अध्यात्म हृदयाकाशरूप तेजोमय अमृतमय पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस प्रतिज्ञा वाक्य से बतलाया गया है) यह अमृत है, यह ब्रह्म है और यही सब कुछ है ॥१०॥

यह धर्म समस्त भूतो का मधु है और समस्त भूत इस धर्म के मधु हैं (परोक्ष होते हुए भी

---

तथाऽऽकाशः। अध्यात्मं हृद्याकाशः ॥ १० ॥

आकाशान्ताः पृथिव्यादयो भूतगणा देवतागणाश्च, कार्यकरणसंघातात्मान उपकुर्वन्तो मधु भवन्ति प्रति शरीरिणमित्युक्तम्। येन ते प्रयुक्ताः शरीरिभिः संबध्यमाना मधुत्वेनोपकुर्वन्ति तद्वक्तव्यमितीदमारभ्यते—

---

स्तनयित्नावुक्तं न्यायमाकाशेऽतिदिशति—तथेति ॥१०॥

पर्यायान्तरं वृत्तमनूद्योत्थापयति—आकाशान्ता इति। प्रति शरीरिणं सर्वेषां शरीरिणां प्रत्येक-

---

इसी प्रकार आकाश मधु है। अध्यात्म पुरुष का विशेषण हृदयाकाश है ॥१०॥

पृथिवी से लेकर आकाशपर्यन्त कार्यकरणसंघातरूप भूतगण और देवतागण उपकारक होने के कारण सभी प्राणियो के मधु होते हैं—ऐसा पहले ही कहा जा चुका है। अब जिस धर्म से प्रयुक्त हुए शरीरधारियों से सम्बद्ध होकर मधुरूप से उनका उपकार करते है, उस धर्म के स्वरूप का वर्णन करना है। इसके लिए अग्रिम ग्रन्थ का प्रारम्भ किया जाता है।

---

१. अयं धर्म इति—अस्मिन्पर्याये बहवो धर्मशब्दा वर्तन्ते तत्र यश्चायमस्मिन्धर्मे इत्यत्र साधारणः पृथिव्यादिकारी धर्मोऽभिधीयते। यश्चायमध्यात्मं धार्म इत्यत्राऽऽत्मनो देहाद्यारम्भकः प्रत्यात्ममसाधारणो धर्म उच्यते। अयं धर्म इत्यत्र तु तदुभयात्मकमपूर्वमुच्यत इति विवेकः। किं तदुभयात्मकमपूर्वमित्याशङ्क्य समाहितं वार्तिके—"प्राजापत्यमपूर्वं यत्सर्वभूतप्रयोजकम्। अध्यात्मं पिण्डकृद्यच्च सोऽय धर्मोऽभिधोदित." ॥४६॥ इति ॥ तस्य (धर्मस्य) साधारणाकारं दर्शयति—यदिति। तस्यासाधारण रूपमाह—अध्यात्ममिति। प्राथमिकधर्मशब्दार्थं निगमयति—सोऽयमिति ॥ २. अध्यात्मपुरुषविशेषण हृद्याकाश इति। ३. पृथिवीलिङ्गशरीरलिङ्गरूपाः। ४ कार्यं भूतगणाः करणं देवतागणाः। ५. इत्युक्तमिति। तथा च वार्तिके—"पृथिव्यादीनि भूतानि तदंशाश्च समीरिताः। हिरण्यगर्भलिङ्गांशास्तथा पूर्वोक्तमूर्तय." ॥४३॥ इति। भूतानि पञ्चोक्तानि तेषामंशाश्च शरीरादयः सूत्रांशाश्च भूतशरीराधाराः। भूतानि शरीराणि चाऽऽधाराः येषां ते तथा तेजोमयादिविशेषणकाः करणात्मानो लिङ्गशरीरभूता. भूतशरीरयोराधेयरूपा इति यावत्। तथा सूत्रांशा. भूतशरीराधारास्तथैव भूतानां शरीराणां च पूर्वोक्ताना मूर्तयः स्वरूपभूता अपीत्यर्थः। ६. धर्मेण। ७. धर्मस्वरूपम्।

सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजो-
-मयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्ते-
-जोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे-
दममृतमिदं ब्रह्मेदं सर्वम् ॥ ११ ॥

"अय धर्म" इस प्रकार धर्म को इसलिये कहा गया है क्योकि उसका कार्य सुखादि प्रत्यक्ष है) इस धर्म मे जो यह तेजोमय अमृतमय पुरुष है एव जो यह अध्यात्म धर्मसम्बन्धी तेजोमय अमरणधर्मा पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस वाक्य से बतलाया गया है) यह अमृत है, यह ब्रह्म है और यही सर्वरूप है ॥११॥

---

अयं धर्मोऽयमित्यप्रत्यक्षोऽपि धर्मः कार्येण तत्प्रयुक्तेन प्रत्यक्षेण व्यपदिश्यतेऽयं धर्म इति प्रत्यक्षवत् । धर्मश्च व्याख्यातः 'श्रुतिस्मृतिलक्षणः क्षत्रादीनामपि नियन्ता जगतो वैचित्र्यकृत्पृथिव्यादीनां परिणामहेतुत्वात्प्राणिभिर'नुष्ठीयमानरूपश्च । तेन चायं धर्म

---

मिति यावत् । धर्मस्य शास्त्रैकगम्यत्वेन परोक्षत्वादयमितिनिर्देशानर्हत्वमाशङ्क्याऽऽह—अयमितीति । यद्यपि धर्मोऽप्रत्यक्षोऽयमितिनिर्देशानर्हस्तथाऽपि 'पृथिव्यादिधर्मकार्यस्य प्रत्यक्षत्वात्तेन कारणस्याभेदमौपचारिकमादाय प्रत्यक्षघटादिवदयं धर्म इतिव्यपदेशोपपत्तिरित्यर्थः । कोऽसौ धर्मो यस्य प्रत्यक्षत्वेन व्यपदेशस्तत्राऽऽह—धर्मश्चेति । व्याख्यात'स्तच्छ्रेयोरूपमत्यसृजत' धर्ममित्यादाविति शेषः । 'तर्हि तस्य प्रत्यक्षत्वाच्च 'चोदनालक्षणत्वमित्याशङ्क्य 'गौणत्वमुख्यत्वाभ्यामविरोधमभिप्रेत्याऽऽह—श्रुतीति । 'तत्रैवा'नुमानान्तरं विवक्षित्वोक्तम्—'तस्मिन्नेव कार्यलिङ्गकम'नुमानं सूचयति—क्षत्रादीनामिति । धर्मस्य प्रत्यक्षेण व्यपदेशे हेत्वन्तरमाह—जगत इति । जगद्वैचित्र्यकारित्वे हेतुमाह—पृथिव्यादीनामिति । धर्मस्य प्रत्यक्षेण व्यपदेशो हेत्वन्तरमाह—प्राणिभिरिति । तेनानुष्ठीयमानाधारेण प्रत्यक्षेण धर्मस्य "लक्ष्यमाणत्वेनेति यावत् । ननु "तृतीयेऽध्याये

---

उक्त श्रुतिमन्त्र मे "अय धर्म." पदो मे 'अय' पद प्रत्यक्ष न होते हुए भी तत्प्रयुक्त प्रत्यक्ष कार्य के द्वारा निरूपित होता है, इसी से यह धर्म मधु है। श्रुति-स्मृति प्रमाणक धर्म की व्याख्या तो की ही

---

१. श्रुतिस्मृतिप्रमाणक । २. अनुष्ठीयमानरूपश्चेति—रूप्यते निरूप्यते आरभ्यते कार्यमनेनेति रूपम् आधाराख्य कारण तद् अनुष्ठीयमानम् यस्येति विग्रह । ३ पृथिव्यादीति—पृथिव्यादिरूपस्य धर्मकार्यस्य । पृथिव्यादीह सामान्य विशेष. 'आदिना पिण्डग्रह । तथा चोक्तम्—'तस्य कार्यं द्विधेहोक्त सामान्यात्मविशेषत. । पृथिव्यादीह सामान्य विशेष. पिण्डमात्रकम्" ॥ वा० ४५ ॥ इहेति—शास्त्रे । इह—धर्मादौ ॥ ४ सृष्ट्वा प्रश्न । ५ बृ० उ० १-४-१४ । ६. अयमिति निर्देशार्हत्वे । ७ वेदप्रमाणकत्वम् । ८ धर्मस्य प्रत्यक्षत्वं गौण शाब्दत्व च मुख्यम् । ९. धर्मे । १० अनुमानमिति—क्षत्रादीनां नियता प्रवृत्ति नियन्तृपूर्विका नियतप्रवृत्तित्वात् राजपुरुषादिप्रवृत्तिवदित्याकारम् । ११. धर्मे । १२. अनुमानान्तरमिति—जगद्वैचित्र्य कारणवैचित्र्यप्रयुक्त वैचित्र्यत्वात् पटादिवैचित्र्यवदित्येवमाकारम् । १३ लक्ष्यमाणत्वेनेति—प्रतीयमानत्वेनेति यावत् । तथा चानुमानम् अनुष्ठीयमानोऽप्रतिबद्ध आधार सफलः कारणत्वात् सम्प्रतिपन्नकारणवत् सति प्रतिबन्धे फलाजननादप्रतिबद्ध इति पक्षविशेषणम् । १४. बृ० उ० १-४-१४ ।

इदꣳ सत्यꣳ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्ते-

यह (अनुष्ठीयमान धर्म सत्यपद वाच्य) सत्य समस्त भूतो का मधु है और सम्पूर्ण भूत इस सत्य के मधु हैं। (धर्म के समान सत्य आचार भी दो प्रकार का है, वह सामान्यरूप से पृथिव्यादि से सम्बद्ध

---

इति प्रत्यक्षेण व्यपदेशः। सत्यधर्मयोश्चाभेदेन निर्देशः [1]कृतः [2]शास्त्राचारलक्षणयोरिह तु भेदेन व्यपदेश' एकत्वे सत्यपि। दृष्टादृष्टभेदरूपेण कार्यारम्भकत्वात्। यस्त्व[3]दृष्टोऽपूर्वाख्यो धर्मः स [4]सामान्यविशेषात्मनाऽदृष्टेन रूपेण कार्यमारभते सामान्यरूपेण पृथिव्यादीनां [5]प्रयोक्ता भवति विशेषरूपेण चाध्यात्मं कार्यकरणसंघातस्य। [6]तत्र पृथिव्यादीनां प्रयोक्तरि यश्चायमस्मिन्धर्मे तेजोमयस्तथाऽध्यात्म कार्यकरणसंघातकर्तरि धर्मे भवो धार्मः ॥ ११ ॥

---

यो वै स धर्मः सत्यं वै तदिति सत्यधर्मयोरभेदवचनात्तयोर्भेदेनात्र पर्यायद्वयोपादानमनुपपन्नमत आह—सत्येति। कथमेकत्वे सति भेदेनोक्तिरित्याशङ्क्याऽऽह—दृष्टेति। अदृष्टेन रूपेण कार्यारम्भकत्वं प्रकटयति—यस्त्विति। सामान्यात्मनाऽऽरम्भकत्वमुदाहरति—सामान्यरूपेणेति। विशेषात्मना कार्यारम्भकत्वं व्यनक्ति—विशेषेति। धर्मस्य [7]द्वौ भेदावुक्तौ तयोर्मध्ये [8]प्रथममधिकृत्य यश्चेत्यादि वाक्यमित्याह—तत्रेति। [9]द्वितीयं विषयीकृत्य यश्चायमध्यात्ममित्यादि प्रवृत्तमित्याह—तथेति ॥११॥

---

जा चुकी है। यह क्षत्रियादि जाति का नियन्ता है, पृथिवी आदि भूतो के परिणाम का हेतु होने से जगत् की विचित्रता करने वाला है और प्राणियो द्वारा आचाराख्य कारण जिसका अनुष्ठीयमान रूप है, इसी से यह धर्म (समस्त भूतो का मधु) है, यह प्रत्यक्ष व्यपदेश है। (प्रथम अध्याय मे) शास्त्र और आचार प्रमाणकद्वय स्वरूप सत्य और धर्म का अभेदरूप से निर्देश किया गया है, किन्तु एकत्वरूप होने पर भी यहाँ भेदरूप से प्रतिपादन किया गया है क्योंकि दृष्ट और अदृष्टरूप से वह कार्य का आरम्भक है। उनमें जो अपूर्वसंज्ञक परोक्ष धर्म है, वह अपने समष्टि और व्यष्टिरूप से परोक्षतया कार्य आरम्भ करता है। वह समष्टिरूप से पृथिवी आदि का कर्ता होता है, एवं व्यष्टिरूप से कार्यकरणसंघात अध्यात्म का कर्ता होता है। (समष्टिव्यष्टिरूप) सामान्य और विशेष के मध्य में पृथिवी आदि प्रेरक के लिए "यह जो इस सत्य मे तेजोमय अमृतमय पुरुष है" यह श्रुतिवाक्य है, एवं कार्यकरणसंघात के कर्ता के लिए "यह जो अध्यात्म सत्य सम्बन्धी तेजोमय अमरणधर्मा पुरुष है; यही वह है" इत्यादि श्रुतिवाक्य है। जो धर्म मे रहता है, उसे "धार्म" कहते हैं ॥११॥

---

१. प्रथमाध्याये। २. एतद्द्वयप्रमाणकयो। ३ कृतः। ४ परोक्ष.। ५. समष्टिव्यष्टिरूपेण। ६. कर्ता। ७ सामान्यविशेषयोर्मध्ये। ८. पुनरुक्तमित्यर्थ। ९. सामान्यविशेषणात्मानो। १०. सामान्यम्। ११. विशेषात्मानम्।

**जोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे-दममृतमिदं ब्रह्म दꣳ सर्वम् ॥ १२ ॥**

है और विशेषरूप से देहादि संघात से सम्बन्ध रखता है) यह जो इस सत्य में तेजोमय अमृतमय पुरुष है, जो यह अध्यात्म सत्यसम्बन्धी तेजोमय अमरणधर्मा पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस वाक्य से कहा गया है) यह अमर है, यह ब्रह्म है और यही सत्य है ॥१२॥

---

[1]तथा दृष्टेनानुष्ठीयमानेनाऽऽचाररूपेण सत्याख्यो भवति स एव धर्मः [2]सोऽपि द्विप्रकार एव सामान्यविशेषात्मरूपेण । सामान्यरूपः [3]पृथिव्यादिसमवेतो विशेषरूपः कार्यकरणसंघातसमवेतः । [4]तत्र पृथिव्यादिसमवेते [5]वर्तमानक्रियारूपे सत्ये तथाऽध्यात्मं कार्यकरणसंघातसमवेते सत्ये भवः सात्यः । [6]सत्येन वायुरावातीति श्रुत्यन्तरात् ॥ १२ ॥

---

एवं सत्यमित्यस्मिन्पर्याये सत्यशब्दार्थमाह—तथा दृष्टेनेति । सोऽपीत्यपिशब्दो धर्मोदाहरणार्थः । द्वयोरपि प्रकारयोर्विनियोगं विभजते—सामान्यरूप इति । उभयत्र समवेतशब्दस्तत्र तत्र कारणत्वेनानुगत्यर्थः । यश्चायमस्मिन्नित्यादिवाक्यस्य विषयमाह—तत्रेति । सत्ये, यश्चेत्यादि वाक्यमिति शेषः । यश्चायमध्यात्ममित्यादिवाक्यस्य विषयमाह—तथाऽध्यात्ममिति । सत्यस्य पृथिव्यादौ कार्यकरणसंघाते च कारणत्वे प्रमाणमाह—सत्येनेति ॥१२॥

---

इसी प्रकार वही धर्म परोक्षरूप से अनुष्ठीयमान आचाररूप से सत्य संज्ञा वाला होता है। वह सत्यशब्दवाच्य धर्म होने पर भी समष्टि और व्यष्टिरूप से दो प्रकार का ही है। सामान्य (समष्टि) रूप से पृथिवी आदि में कारणस्वरूप से अनुगत है, विशेष (व्यष्टि) रूप से कार्यकरणसंघात से अनुगत है। वहाँ पृथिवी आदि में अनुगत अनुष्ठीयमान आचाररूप सत्य तथा अध्यात्म या कार्यकरणसंघात में अनुगत सत्य, इन दोनों में (वह आत्मा) है। सत्य में जो होता है, इसलिए 'सात्य' नाम पड़ा। इसी को अन्य श्रुति में "सत्य से वायु चलता है" इस वाक्य से प्रतिपादित किया गया है ॥ १२ ॥

---

१. तथा दृष्टेनेति । तथा च वार्तिके—"तथैवाऽऽचाररूपेण प्रत्यक्षेण यदीक्ष्यते । स एव धर्मः सत्य स्यात्तद्रूप-वस्याप्रयोजकम्" ॥५०॥ इति । यथा हैरण्यगर्भमपूर्वं जगदारम्भक तथा तदेव प्रत्यक्षदृष्टेनानुष्ठीयमानाचारेण सत्प्रतीयते स एवाऽपूर्वशब्दार्थो धर्मः सत्यमित्युच्यते लोके हि वर्णाश्रमव्यवस्थापक सत्यमिति प्रसिद्धमित्यर्थः । अत्र सत्यमित्युच्यत इति तथा चैकमेव प्राजापत्यमपूर्वमपरोक्षत्वेन कारणत्वेन अनुष्ठीयमानत्वेन वा रूपेण सत्यशब्देनाभिलप्यते तद्विपरीतरूपेण च धर्मशब्देनाभिधीयत इत्यवच्छेदकभेदेन सत्यधर्मयोर्भेदाभावेनात्र पर्याय-द्वयोपादानमनुपपन्नमिति भाव. । चतुर्थपादार्थमाह—लोके हीति । २. अत्रापि पर्याये बहुवः सत्यशब्दाभ्यनुपपन्न-... साधारणविशेषाभ्यां धर्मवत्तदपि द्विधा । साधारण-पामर्थं भेत्तु तद्द्वैविध्यमाह—सोऽपीति । तदुक्त वार्तिके—"साधारणविशेषाभ्यां धर्मवत्तदपि द्विधा । साधारण-विशेषार्थव्यवस्थाकारणत्वत " ॥ ५१ ॥ द्वैविध्ये हेतुमाह—साधारणविशेषार्थेति । यश्चायमस्मिन्सत्य इत्यत्र सामान्यरूप यश्चायमध्यात्म सात्य इत्यत्र विशेषरूपमिदं सत्यमित्यत्र मिलितं ग्राह्यमिति भेद ॥ ३. सत्यशब्द-वाच्यो धर्मोऽपि । ४. पृथिव्यादौ कारणत्वेनानुगत । ५. द्वयोर्मध्ये । ६ अनुष्ठीयमानाचाररूपे । ७. बृहदारण्यकोपनिषदि ब. ७६ । ८. कारणत्वेन सबन्धम् । ९. पृथिव्यादौ संघाते च ।

**इदं मानुषꣳ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १३ ॥**

यह मनुष्यादि जाति सभी भूतों का मधु है और समस्त भूत इस मनुष्यादि जाति के मधु हैं। यह जो मनुष्य जाति में तेजोमय अमरणधर्मा पुरुष है और यह अध्यात्म मनुष्यादि सम्बन्धी तेजोमय अमृतमय पुरुष है, यही वह है। जो कि "यह आत्मा है" (इस श्रुतिवाक्य से कहा गया है) यह अमृत है, यह ब्रह्म है और यही सर्वरूप है ॥१३॥

---

[1]धर्मसत्याभ्यां [2]प्रयुक्तोऽयं कार्यकरणसंघातविशेषः। स येन जातिविशेषेण संयुक्तो भवति स जातिविशेषो मानुषादिः। तत्र मानुषादिजातिविशिष्टा एव सर्वे प्राणि[3]निकायाः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते। अतो मानुषादिजातिरपि सर्वेषां भूतानां मधु। तत्र मानुषादिजातिरपि बाह्याऽऽध्यात्मिकी चेत्युभयथा निर्देशभाग्भवति ॥१३॥

---

इद मानुषमित्यत्र मानुषग्रहणं सर्वजात्युपलक्षणमित्यभिप्रेत्याऽऽह—धर्मसत्याभ्यामिति। कथं पुनरेषा जातिः सर्वेषां भूतानां मधु भवति। तत्राऽऽह—तत्रेति। भोगभूमि सप्तम्यर्थः। यश्चायमस्मिन्नित्यादिवाक्यद्वयस्य विषयभेदं दर्शयति—तत्रेति। व्यवहारभूमाविति यावत्। धर्मादिवदित्यपेरर्थः। [4]निर्देष्टु स्वशरीरनिष्ठा जातिराध्यात्मिकी शरीरान्तराश्रिता तु बाह्येति तु भेदः। वस्तुतस्तु [5]तत्र नोभयथात्वमित्यभिप्रेत्य निर्देशभागित्युक्तम् ॥१३॥

---

यह कार्यकरणसंघातविशेष अपूर्वरूप धर्म और आचाररूप सत्य द्वारा प्रेरित है। यह जिस जातिविशेष से संयुक्त होता है, वह जातिविशेष मनुष्यादि है। वहाँ सम्पूर्ण प्राणीसमूह मनुष्यादि जातिविशिष्ट हो कर ही परस्पर उपकार्य-उपकारकभाव से विद्यमान देखे जाते हैं। इसलिये मनुष्य-जाति भी समस्त भूतों का मधु है। वह मनुष्यजाति भी बाह्य और आध्यात्मिक भेद से दो प्रकार की निर्देश वाली होती है। ॥ १३ ॥

---

१ अपूर्वाचाराभ्याम्। २ प्रयुक्त इति—धर्मादिप्रयुक्तं सूत्रविराट्छब्दितम्। शरीरद्वयं यज्जातिविशिष्टं सर्वव्यवहारक्षमं सा सर्वा जातिर्मानुषशब्दितेत्याह—स येनेति। तदुक्तं वार्तिके—"सत्यधर्मप्रयुक्तोऽयं लिङ्गपिण्ड-स्वलक्षणः। विराड्ढिरण्यगर्भश्च सर्वजातिसमन्वितः" ॥५२॥ इति। स्वलक्षणम् स्वरूपम्॥ इदं मानुषमिति विशेषणान्न सर्वजातिसमन्वितमित्याशङ्क्य समाहितं वार्तिके—"मनुष्यजातेर्ग्रहणं सर्वजात्युपलक्षणम्। इदं मानुषमित्येषा व्याख्या तस्यास्तु पूर्ववत्" ॥५३॥ इति। इदं मानुषमित्यत्र मनुष्यजातेर्ग्रहणमिति संबन्धः। साऽपि बाह्याध्यात्मिकभेदेन द्विधा निर्दिश्यते धर्मादिवत्तेनेदं मानुषमिति मिलितसर्वजातेर्यश्चायमस्मिन्निति बाह्यभेदस्य यश्चायमध्यात्ममित्याध्यात्मिकभेदस्योक्तिरित्याह—व्याख्येति॥ ३ समूहाः। ४ अहममुकजातिरित्येव निर्देष्टुः पुंसः। ५ जातौ।

**अयमात्मा सर्वेषां भूतानां मध्वस्याऽऽत्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १४ ॥**

यह देह समस्त भूतों का कार्य होने से मधु है और समस्त भूत इस देह के मधु हैं। यह जो इस देह में तेजोमय अमरणधर्मा पुरुष है एवं जो यह आत्मा तेजोमय अमृतमय पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस प्रतिज्ञावाक्य से कहा गया है) यह अविनाशी है, यह ब्रह्म है और यही सर्वरूप है ॥१४॥

---

यस्तु [1]कार्यकरणसंघातो मानुषादिजातिविशिष्टः सोऽयमात्मा सर्वेषां भूतानां मधु। नन्वयं[2] शारीरशब्देन निर्दिष्टः पृथिवीपर्याय एव। न। [3]पार्थिवांशस्यैव तत्र ग्रहणात्। [4]इह तु [5]सर्वात्मा [6]प्रत्यस्तमिताध्यात्माधिभूतादिसर्वविशेषः [7]सर्वभूतदेवतागणविशिष्टः कार्य-

---

अन्तिम पर्यायमवतारयति—यस्त्विति। आत्मन [8]शारीरेण गतत्वात्पुनरुक्तिरनुपपन्नेति शङ्कते—नन्विति। [9]अवयवावयविविषयत्वेन पर्यायद्वयमपुनरुक्तमिति परिहरति—नेत्यादिना। परमात्मानं व्यावर्तयति—सर्वभूतेति। [10]चेतन व्यवच्छिनत्ति—कार्येति। यश्चायमस्मिन्नित्यादिवाक्यस्य

---

जो भी (समष्टि स्थूलसूक्ष्म समुदाय विराड्हिरण्यगर्भ उपाधिरूप) देहेन्द्रियसंघात मानुषादि-जातिविशिष्ट है, वह यह आत्मा समस्त भूतों का मधु है। (पूर्वपक्षी शङ्का करता है—) किन्तु यह उक्त आत्मशब्दार्थ शारीरशब्द से बतलाया हुआ पृथिवी का पर्याय ही है। (आक्षेप का परिहार किया जाता है—) ऐसा कहना ठीक नहीं है क्योंकि वहाँ पृथिवी के अंशाभिमानी लिङ्गात्मा का ही ग्रहण है। इस पर्याय में जो सर्वात्मा है, जिसमें अध्यात्म, अधिभूत और अधिदैवादि सब प्रकार के विशेष को निरस्त कर दिया है, जो कार्यकरणसमुदायात्मक समष्टि समस्त भूत और देवगण से विशिष्ट है,

---

१ समष्टिस्थूलसूक्ष्मसमुदायो विराड्हिरण्यगर्भोपाधि। २ उक्त आत्मशब्दार्थ। ३ पृथिव्यंशाभिमानि-लिङ्गात्मन। ४ पर्याये। ५ सर्वात्मेति। वार्तिके यथा—"पृथिवी शारीर इत्यत्र सप्तदशो य पुरोदित। विराड्हिरण्यगर्भश्चेत्ययमात्मेति तद्वच ॥ हिरण्यगर्भमदानां भूतानां च पृथक्पृथक्। उक्त मधुत्व येनातस्तत्साम-स्त्यमथोच्यते" ॥५४-५५॥ इय पृथिवीत्यारभ्य मानुषपर्यायपर्यन्तेन सदर्भेण विराट्सूत्रमित्युच्यमानावयविन पृथिवी शारीर इत्यनेन क्रमेणावयवशो विभाग उक्तस्तद्वताऽवयविनो निर्देशोऽयमात्मेत्यादिना क्रियत इत्यर्थः ॥ ६ निरस्तति भाव। ७ कार्यकरणसमुदायात्मा समष्टि ॥ ८ आद्ये पर्याये शारीरशब्देनैवास्यात्मन उक्तत्वात्। ९ पूर्वोक्तो हि व्यष्टितयाऽवयव समष्टितया चायमवयवी। १० जीवम्।

**स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाᳪं राजा *तद्यथा रथनाभौ च**

वह यह विज्ञानमय आत्मा सम्पूर्ण भूतों का अधिपति एवं सम्पूर्ण भूतों का राजा है। इसमें दृष्टान्त यह है—जैसे रथ की नाभि और रथ की नेमि में सभी अरे लगे रहते है, ऐसे ही इस सर्वात्मा में

---

करणसंघातः सोऽयमात्मेत्युच्यते। तस्मिन्नस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषोऽमूर्तरसः सर्वात्मको निर्दिश्यते। एकदेशेन तु पृथिव्यादिषु निर्दिष्टोऽत्राध्यात्मविशेषाभावात्स न निर्दिश्यते। यस्तु परिशिष्टो विज्ञानमयो यदर्थोऽयं देहलिङ्गसंघात आत्मा स यश्चायमात्मेत्युच्यते ॥ १४॥

यस्मिन्नात्मनि परिशिष्टो विज्ञानमयोऽन्त्ये पर्याये प्रवेशितः सोऽयमात्मा। तस्मि-

---

विषयमाह—तस्मिन्निति। यश्चायमध्यात्ममिति किमिति नोक्तमित्याशङ्क्याऽऽह—एकदेशेनेति। अत्रेत्यन्त्यपर्यायोक्तिः। यश्चायमात्मेत्यस्यार्थमाह—यस्त्विति ॥१४॥

स वा अयमात्मेत्यस्यार्थमाह—यस्मिन्निति। परिशिष्टः पूर्वपर्यायेष्वनुपदिष्टोऽन्त्ये च पर्याये

---

वही यहाँ "यह आत्मा है" ऐसा कहा गया है। उस इस विराड् आत्मा को तेजोमय, अमृतमय पुरुष अमूर्त सूत्रात्मा, सर्वात्मक बतलाया गया है। अवयवरूप एकदेश से पृथिवी आदि पर्यायों में निर्देश किया गया है। किन्तु यहाँ कोई अध्यात्मविशेष न होने के कारण अध्यात्मविशेष का निर्देश नहीं किया गया है। एवं जो पूर्वपर्यायों मे अनुपदिष्ट बुद्धिप्रधान जीवात्मा ही शेष रह जाता है, जिसके

---

१. अन्त्यपर्यायोक्तात्मन. स्वरूपमाह—स वा इति। वार्तिके हि—"अपूर्वानपरामध्यप्रत्यग्याथात्म्यविवित्सये। स वा इत्यादिको ग्रन्थः सदृष्टान्तोऽभिधीयते" ॥६२॥ इति। २. सोऽयमिति। वार्तिके यथा—"अयमात्मेति निर्देशो विराजः प्रथमो मतः। सप्तम्यन्तेन तत्प्रत्यङ्लिङ्गात्माऽतो विधीयते" ॥५६॥ इति। विराजः सूत्रस्य च यन्मिलितं रूपं तस्यायमात्मेत्यत्राऽऽत्मशब्दः प्रथमान्तो वाचकः। यश्चायमस्मिन्नात्मनीत्यत्र सप्तम्यन्तात्म-शब्देन विराज एवोक्तिरित्याह—सप्तम्यन्तेनेति। निर्देशो विराज इति पूर्वेणान्वय.। विराजोऽभ्यन्तरो लिङ्गात्मा तेजोमयादिशब्देनोच्यत इत्याह—तत्प्रत्यङ्ङिति। अतस्तेजोमयादिशब्दादित्यर्थः॥ ३. विराजि। ४. सूत्रात्मा। ५. एकदेशेनेति—पृथिव्यादिपर्यायेषु कार्यकारणसंघातस्य व्यष्ट्यात्मनाऽभिधानादवशिष्यते (भिद्यते) शरीरमिति तत्राध्यात्ममित्युक्तम्। अत्र च समष्ट्यात्मना तस्याभिधानाभावादिशष्यते शरीरमिति तथोक्तिरित्यर्थः। ६. अवयवरूपेण। ७. पर्यायेषु। ८. अध्यात्मविशेषः। ९. पूर्वपर्यायेष्वनुपदिष्टः। १०. धीप्रधानो जीवात्मा। ११. यच्छेषः। १२. यश्चायमिति। वार्तिके हि—"कार्यात्मा कारणात्मा च यदर्थौ भवतः सदा। यश्चायमात्मेत्यत्रोक्तो विज्ञानात्मेति य विदुः" ॥५७॥ इति। यश्चायमात्मेत्याऽऽत्मशब्दस्य चैतन्याभासजीववाचित्वमाह—कार्येति। सोऽत्रात्मशब्देनोक्तः शेषोऽति शेषः। शेषिणोऽप्रसिद्धिं निरस्यति—विज्ञानात्मेति। १३. स वा इति वाक्यस्थात्मशब्दस्य।

---

* तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता इति॥ "व्याचक्षतेऽन्यथैवेमं दृष्टान्तं केचिदात्मनः। समस्तादिप्रतिज्ञार्थसिद्धये ब्रह्मवादिनः॥ एकीकृत्य स्वमात्मानमक्षरे परमात्मनि। चक्रनाभिवदात्मानं कल्पयित्वा

**रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥ १५ ॥**

सभी भूत, सभी देव, सभी लोक सभी प्राण और ये अविद्याकल्पित सभी जीवात्मा समर्पित हैं ॥१५॥

**अविद्याकृतकार्यकरणसंघातोपाधिविशिष्टे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते स एव-**

पश्चायमात्मेत्युक्तो 'विज्ञानमयो 'यस्मिन्नात्मनि 'खिल्यदृष्टान्तवचसा प्रवेशितस्तेन' परेणाऽऽत्मना तादात्म्यं गतो 'विद्वानात्माऽऽत्मशब्दार्थं । उक्तमात्मशब्दार्थमनूद्य सर्वेषामित्यादि व्याचष्टे—तस्मिन्निति । अविद्यया कृतं कार्यकरणसंघात एवोपाधिस्तेन विशिष्टे जीवे तस्मिन्परमार्थात्मनि ब्रह्मणि ब्रह्मविद्यया प्रवेशिते सति स एवायमात्मा 'यथोक्तविशेषणः सर्वैरुपास्यः सर्वेषां भूतानामधि-

लिए यह देहेन्द्रियसंघातरूप आत्मा है, वही "जो यह आत्मा है" इस श्रुतिवाक्य से कह कर बतलाया गया है ॥१४॥

जिसका पूर्वोक्त पर्यायों में उपदेश नहीं हुआ, उस परिशिष्ट विज्ञानमय (जीवात्मा) का अन्तिम पर्याय में जिस आत्मा में प्रवेश कराया गया है, उसका 'यह आत्मा है' इस प्रकार प्रतिपादन किया गया है। अविद्याकृत कार्यकरणसंघात उपाधि से विशिष्ट उस परमार्थ आत्मा में ब्रह्मविद्या के द्वारा प्रवेश कराये जाने पर उसके अनन्तर और अबाह्य, पूर्ण प्रज्ञानघनस्वरूप, सब भूतों का आत्मा इस प्रकार

१ जीवः । २ अविद्यातत्कार्यहीने स्वस्वरूपे । ३ खिल्यदृष्टान्तेत्यादे —यथा सैन्धवखिल्य इत्यादि दृष्टान्तपूर्वकादेव वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन इत्यादिवाक्यात् प्रवेशितः ऐक्येन बोधित इत्यर्थः । ४ प्रवेशित इत्यस्यैवार्थमाह—तेनेत्यादिना । ५ आत्मशब्दार्थ इति । [illegible] वा अयमितिपदत्रयार्थमाहुर्वार्तिके—"योऽसावविद्यया देही संसारीवाऽप्यभूत्पुरा । साऽयं साक्षात्परं ब्रह्म विद्यया वततेऽधुनेति ॥६०॥ ६ अनन्तरत्वादिविशेषणकः ।

विलक्षण ॥ शरीरं नेमिवच्चैतद्वत्ताद्यरवज्जगत् । कल्पयित्वा निदिध्यासेत्तद्भावाविष्टधीः सदा ॥ अनेन ध्यानमार्गेण ध्यायमानस्य सर्वदा । तप्तलोहवदेकत्व अवस्थावृत्तिदुर्लभम् ॥ एतामवस्थामापन्नः ध्यातृत्वाद्विनिवर्तते । अविद्यातिमिरातीतं धाम ध्येयत्वमधिगच्छति ॥ निश्चित्याचिन्त्यमेतद्धि योगिनां निलयं परम् । यं प्राप्य न निवर्तन्ते निर्वाणं परमं गताः ॥ प्रत्येकं प्राणिनां ह्येतद्ब्रह्मचक्रमवस्थितम् । असंबाधात्तु तं सर्वे प्राणिभिर्नानुभूयते ॥ वैश्वानरत्वरात्केचिदेव व्याचक्षते स्फुटम् । अक्षरान्वयसंत्याज्या व्याख्येयं साध्वपीदृशी ॥ सामर्थ्यादपि संप्राप्ता न चेदक्षरपूर्वकः । तादृङ्नोपास्य एवेति प्राहुरात्मवेदिनः ॥ प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः ॥ यथोक्तचक्रविन्यासो न श्रुताक्षरपूर्वकः । न चाप्युपासनपदं कृत्स्नेऽपि ब्राह्मणे श्रुतम् ॥ नाभिनेमिद्वयस्थानं दृष्टान्तत्वेन संमते । दार्ष्टान्तिकात्मत्वमेव यत्र श्रामादिह श्रुतं ॥ समर्पितत्वं प्राणादेः श्रूयते प्रत्यगात्मनि । भूतेषु देवतादेस्तदश्रुतं गृह्यते कथम् ॥ बहिरन्तर्विभागोऽस्य कार्यकारणता तथा । तदेतदिति वाक्येन प्रतीचाऽत्रैव बाध्यते ॥ अथ योऽन्यामिति तथा भेददृष्टिर्निराकृता । उपास्योपासनविधिर्न सम्यगिति मे मतिः । अज्ञानमात्रव्यपवर्धेर्ब्रह्मैकात्म्यफलस्य च । ब्रह्मविद्यातिरेकेण तत्राप्तौ नापरा क्रिया ॥ यद्वाचाऽनभ्युदितं मनुतं मनसा न यत् । तदेव ब्रह्म विद्धि त्वं [illegible] त्विदं यदुपासते [illegible] उपासि-

मुक्तोऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनभूतः सर्वेषां भूतानामयमात्मा सर्वैरुपास्यः सर्वेषां भूतानामधिपतिः सर्वभूतानां [1]स्वतन्त्रो न [3]कुमारामात्यवर्तिक तर्हि सर्वेषां भूतानां [4]राजा ।

पतिरिति सबन्ध. । [5]व्याख्येयं पदमादाय [6]तस्य [7]वाच्यमर्थमाह—सर्वेषामिति । तस्यैव विवक्षितोऽर्थः सर्वैरुपास्य इत्युक्तः । स्वातन्त्र्य व्यतिरेकद्वारा स्फोरयति—नेत्यादिना । सर्वेषां भूतानां राजेत्येतावतैव

कहे जाने पर वह सब के द्वारा उपास्य, सभी भूतों का अधिपति, सभी भूतों का [2]शेषी है, न राजकुमार

१. स्वतन्त्र इति—अनन्यशेष इति यावत् । वार्तिके यथा—"तथाऽधिपतिशब्देन स्वातन्त्र्यमभिधीयते । स्वार्थं प्रत्यक्तदर्थत्वात्सहेतोर्जगदात्मन." ॥६४॥ राजशब्देन राजनवदित्यर्थः. । स्वातन्त्र्यमुपपादयति—स्वार्थं इति । आत्मा स्वरूप वस्तुन इति शेष । २ शेषी । ३ राजकुमार. । ४ राजेति—अविलुप्तात्मदर्शनादधपणीय इत्यर्थः । वार्तिके यथा—ब्रह्मास्मीतिपरिज्ञानध्वस्तध्वान्तस्वकारणात् । राजेति राजनात्स्वदविलुप्तात्मदर्शनात्" ॥ ६३ ॥ इति । ज्ञानादज्ञाननिरासादप्रतिबन्धस्वरूपस्फुरणेन भानाद्ब्रह्मविद्राजेत्युक्तिमर्हतीत्यर्थः ॥ ५ पद पदसमुदायवाक्य मिति यावत् यद्वा अधिपतिपद वाक्यान्तर्भावेणादायेत्यर्थ. । ६ अधिपतिपदस्य । ७ विवक्षितार्थस्योक्तत्वाद्वाच्यमिति ।

क्रियया व्याप्तिरब्रह्मत्वस्य लक्षणम् । श्रुत्याऽकारि यतस्तादृक्कथ ब्रह्म ह्युपास्यते ॥ दृश्यत त्वग्र्यया बुद्ध्या मनसैवेति यच्च । तदात्मविद्याविध्यर्थं नोपासनविधायकम् ॥ रजस्तमोनुविद्धेन यतो न ब्रह्म गम्यते । शुद्धचेतस्तया तस्माद्विद्यादब्रह्मान्तरात्मनि ॥ यद्वाऽऽत्माभिसबन्धात्पूर्वमैकात्म्यनिष्ठिता । सर्वप्राणभृता बुद्धिरित्यर्थो वचसो भवेत् ॥ एषोऽर्थो वचसस्तस्य न तूपासाविधिर्भवेत् । प्रध्वस्तभेद ऐकात्म्ये नोपासनविधिर्यत ॥ चक्रक्लृप्तिरतोऽसाध्वी श्रुत्यादिमितिबाहृत । तदेतदितिवाक्यार्थो ग्राह्योऽत्र सभवान्मिते ॥ तदाहुरिति वाक्येन ब्रह्मविद्याप्रयोजनम् । साक्षेप प्रागुपन्यस्त तस्याय निर्णय कृत " ॥ वा० ६७-९० ॥ इति । तद्यथेत्यादिवाक्यस्य भर्तृप्रपञ्चव्याख्यामुत्थापयति—व्याचक्षत इति । दृष्टान्तग्रहण दार्ष्टान्तिकोपलक्षणम् । अन्यथाव्याख्यानफल सूचयति—आत्मन इति । सप्रपञ्चोऽयमात्मेति प्रतिज्ञेद सर्वं यदयमात्मेत्यत्र स्थिता तदर्थसिद्ध्यर्थमन्यथाव्याख्यानमित्यर्थः ॥ तदेव स्फुटयति—एकीकृत्येति । न तावदात्मा परस्माद्भिद्यत ऐक्यमश्नुते स च चक्रनाभिस्थानीयो देह पञ्चभूतात्मक चक्रनेमिस्थानीय देवतादि जगदरवदात्मनि भूतेषु चार्पित कल्पयित्वा तत्रैव कल्पितेऽर्थे स्थिरबुद्धि सदा ध्यान कुर्यादित्यर्थः ॥ किमनेन ध्यानेनेत्याशङ्क्याऽऽह—अनेनेति । सदातनमेकत्व न ध्यानफलमित्याशङ्क्य बन्धध्वस्तिस्तस्येति मत्वा विशिनष्टि—आवृत्तीति ॥ एकत्वमापन्नोऽपि ध्यानमातनुयादिति चेन्नेत्याह—एतामिति । न केवलमैक्यफल ध्यातृत्वनिवृत्ति किंतु ध्येयत्वाप्तिरपीत्याह—अविद्येति ॥ ध्येयस्वरूप निरूपयति—निश्चित्येति । य ज्ञात्वा मुक्ता सन्तो न पुन ससरन्ति ॥ प्रकृताचिन्त्य परमात्मान ज्ञानिनामयन प्रत्यक्तया निश्चित्य य स्थित स ध्येयत्वमज्ञानप्रत्याप्नातीत्यर्थः ॥ चक्रक्लृप्तिध्यान तत्फल चेति परेषा प्रक्रिया प्रदर्श्य तेषामेव प्रक्रियान्तरमाह—प्रत्यक्मिति । ब्रह्मण सर्वप्राणिहृदयसनिधानमशेषश्रुतिस्मृतिप्रसिद्धमिति हिशब्दार्थ । यदि ब्रह्माख्य चक्र सर्वप्राणिना हृदि सर्वदा स्थित किमिति तर्हि सर्वैर्नानुभूयते तत्राऽऽह—असबोधादिति ॥ पूर्वपक्षमुपसहरति—वैश्वानरेति । आपातरमणीयाऽपीय व्याख्या न स्वीकार्या श्रुत्यक्षरबाह्यत्वादित्याह—अक्षरेति । ईदृशी यथोक्तप्रक्रियाविशिष्टेति यावत् ॥ दृष्टान्तसामर्थ्यादात्मनो नानारसत्वदृष्टेरस्मदिष्टोऽर्थो न श्रुतिबाह्य इत्याशङ्क्याऽऽह—सामर्थ्यादिति । यद्यपि दृष्टान्तसामर्थ्यात्त्वदिष्टोऽर्थो भाति तथाऽपि नासौ श्रौतोऽस्मिन्प्रकरणे तद्वाचकपदाभावादपूर्वादिवाक्यविरोधाच्चातो नाऽऽत्मनोऽनेकरूपत्वाय दृष्टान्तस्तथाचाऽर्थिकोऽप्यर्थो नाऽऽदेयो यश्चार्थादर्थो न स चोदनार्थं इति स्थितरन्यथा चातिप्रसक्तिरित्यर्थः ॥ किंच

राजत्वविशेषणमधिपतिरिति भवति [1]कश्चिद्राजोचितवृत्तिमाश्रित्य राजा न त्वधिपति[2]रतो विशिनष्ट्यधिपतिरिति । एवं सर्वभूतात्मा विद्वान्ब्रह्मविन्मुक्तो भवति । यदुक्तं ब्रह्म-

[3]यथोक्तार्थसिद्धौ किमित्यधिपतिरिति विशेषणमित्याशङ्क्याऽऽह—राजत्वेति । राजत्वजात्यनाक्रान्तोऽपि कश्चित्तदुचितपरिपालनादिव्यवहारवानित्युपलब्धं न पुनस्तस्य स्वातन्त्र्यं राजपरतन्त्रत्वा[4]त्तस्मा[5]त्ततो [6]व्यवच्छेदार्थमधिपतिरिति विशेषणमित्यर्थः । राजाऽधिपतिरित्युभयोरपि मिथो विशेषणविशेष्यत्वमभिप्रेत्य वाक्यार्थं निगमयति—एवमिति । उक्तस्य विद्याफलस्य [7]तृतीयेनैकवाक्यत्व-

है, न मन्त्री के समान ही है; तो वह क्या है ? वह (अविलुप्त आत्मदर्शन से अधर्षनीय होने से) सब भूतों का राजा है। श्रुति मे "अधिपतिः" यह पद राजा का विशेषण है; कोई राजा न होते हुए भी राजोचित व्यवहार (ऐश्वर्य) का आश्रय लेकर राजा हो जाता है, परन्तु वह अधिपति (स्वतन्त्र) नही होता, इसलिए 'अधिपति' यह विशेषण दिया गया है। इस प्रकार आत्मा का सर्वभूतात्मक स्वरूप

१. कश्चित्—अराजाऽपीत्यर्थः । २. स्वतन्त्रः । ३. यथोक्तोऽर्थः स्वातन्त्र्यम् । ४. तस्मादिति—राजपरतन्त्रेऽपि यथोक्ते जने राजेतिव्यवहारोपलम्भादित्यर्थं । ५. ततः यथोक्तात्पुंसः राज्ञः । ६. व्यावृत्त्यर्थः । ७. प्रथमाध्यायोक्तविद्याफलेनैक्यमिति यावत् ।

ब्रह्मणोऽन्यदपि न नानारस कल्पकाभावादन्यथाऽतिप्रसङ्गादित्याह—प्रमाणवन्तीति ॥ ननु न ब्रह्म समस्तादिरूपं कल्प्यते किंतु चक्रविन्यास श्रुत्यैव श्राव्यते नेत्याह—यथोक्तेति । यत्तु निदिध्यासेदिति तत्राऽऽह—न चेति ॥ किञ्च दृष्टान्तस्यस्य न सर्वस्य दार्ष्टान्तिकेऽन्वयस्तद्भावविरोधादतो न ब्रह्म समस्तादिरूपमित्याह—नाभीति ॥ यत्तु चक्रनाभिस्थानीये प्रतीचि चक्रनेमिस्थानीयदेहात्मकभूतेषु च देवतादि अपदस्वर्पितमिति तत्राऽऽह—समर्पितत्वमिति ॥ प्रधानवाक्यविरोधाच्च न समस्तादिरूप ब्रह्मेत्याह—बहिरिति ॥ इतश्च ब्रह्म न समस्तादिरूपमित्याह—अथेति । ननु देवतान्तरे दृष्टिर्निन्दितत्वान्नेष्टा ब्रह्मदृष्टिस्त्वनिन्दितोपपद्यते तत्तस्मिन्नुपास्तिविधिप्रवृत्ते सप्रपञ्चत्व न हि निष्प्रपञ्चमुपास्यते तत्राऽऽह—उपास्येति । न हि भेद विनोपास्यादिप्रकारसंभवः प्रकृते च भेददृष्टिरपोद्यते तन्नात्रोपास्तिविधिरित्यर्थ ॥ ब्रह्म सप्रपञ्चमुपास्यत्वात्प्राणवदित्यत्रासिद्धिमुक्त्वा तदुपास्तिरात्मनो ब्रह्मत्वाय फलान्तराय वेति विकल्प्याऽऽद्य दूषयति—अज्ञानेति । न द्वितीय फलान्तराभावान्न हि जीवस्याविद्याध्वस्तौ ब्रह्माप्ति विनाऽन्यदिष्ट ज्ञानादेव च तत्सिद्धेर्व्यर्था तदुपासेति चार्थं ॥ उपास्यत्वहेतोरुपास्तिप्रयुक्तफलवत्त्वोपाधिना व्याप्यत्वासिद्धिमुक्त्वा श्रुतिविरोधमाह—यदिति ॥ नन्वसंस्कृतवागाद्यगोचरत्वेनोपास्यत्वनिषेधेऽपि ब्रह्मणि संस्कृततद्गम्यत्वेनोपास्यत्वमविरुद्धमित्याशङ्क्य श्रुत्यर्थमाह—उपासीति । तादृगित्युपासिक्रियाव्याप्तमिति यावत् । उपास्यतेऽनुष्ठीयतेऽङ्गी क्रियत इत्यर्थं ॥ ननु ब्रह्मोपास्तिविधिरपि क्वचिदस्ति तथा च श्रुत्यैव श्रुतेरुपसारितत्वादुपास्य ब्रह्मेति तत्राऽऽह—दृश्यते त्विति ॥ विद्याविधानस्य प्रागपहस्तितत्वात्कथमस्य तदर्थतेत्याशङ्क्याऽऽह—रज इति । ब्रह्मविद्यार्थं बुद्धिशुद्धिविध्यर्थं यथोक्त वाक्यमित्यर्थ ॥ यथोक्ते वाक्ये शुद्धिविधिवाचकाभावात्कथ तदर्थतेत्याह—यद्वेति । विषयानुषङ्गात्प्रागेव सर्वथा धीर्जन्ममात्रेण चिदाकारेत्येषोऽर्थो वाक्यस्येष्यतेऽथयेतिविशेषणानुगुण्यादित्यर्थं ॥ ब्रह्मोपास्तिविधायकत्वेन शङ्कितश्रुतेर्गत्यन्तरमुपसहरति—एष इति ॥ ब्रह्मण. समस्तादिरूपत्वे मानाभावात्तद्विरोधान्चायुक्ता भर्तृप्रपञ्चव्याख्येति निगमयति—चक्रेति । परपक्षस्योपेक्ष्यत्वमुक्त्वा स्वपक्षस्याऽऽदेयत्वमाह—तदिति । तदेतद्ब्रह्मापूर्वमित्यादिवाक्यस्यार्थस्तद्यथेत्यादिवाक्ये विवक्षितो ग्राह्यः पक्षान्तरायोगोक्तेरैकरस्यावेदकायमभावाच्चेत्यर्थः ॥ तस्मात्तत्सर्वमभवदिति विद्याफलमुक्त तृतीये तदत्रोपसंह्रियत इति पक्षान्तरमाह—तदिति ॥

विद्यया[1] सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदितीदं तद्व्याख्यातम्। एवमात्मानमेव सर्वात्मत्वेनाऽऽचार्यागमाभ्यां श्रुत्वा मत्वा तर्कतो विज्ञाय साक्षादेवं यथा मधुब्राह्मणे दर्शितं तथा। तस्माद्ब्रह्मविज्ञानादेवंलक्षणात्पूर्वमपि ब्रह्मैव सदविद्ययाऽब्रह्माऽऽसीत्सर्वमेव च सदसर्वमासीत्तां[2] त्वविद्यामस्माद्विज्ञानात्तिरस्कृत्य ब्रह्मविद्ब्रह्मैव सन्ब्रह्माभवत्सर्वः सन् सर्वमभवत्।

परिसमाप्तः शास्त्रार्थो यदर्थः प्रस्तुतः। तस्मिन्नेतस्मिन्सर्वात्मभूते ब्रह्मविदि सर्वात्मनि सर्वं जग[3]त्समर्पितमित्येतस्मिन्नर्थे दृष्टान्त उपादीयते—तद्यथा रथनाभौ च रथनेमौ

साह—यदुक्तमिति। तदेव [4]व्याख्यातं स्फोरयति—एवमिति। मैत्रेयीब्राह्मणोक्तक्रमेणेति[5] यावत्। एवमित्यस्यार्थं कथयति—यथेति। मधुब्राह्मणे [6]पूर्वब्राह्मणे चोक्तक्रमेणाऽऽत्मनि श्रवणादित्रयं संपाद्य विद्वान्ब्रह्माभवदिति संबन्धः। ननु मोक्षावस्थायामेव विदुषो ब्रह्मत्वमपरिच्छिन्नत्वं च न प्राच्यामविद्यादशायामित्याशङ्क्याऽऽह—तस्मादिति। समानाधिकरणे पञ्चमीत्रयम्। एवंलक्षणादहं[7] ब्रह्मास्मीति [8]श्रवणादिकृतात्तत्त्वसाक्षात्कारादिति यावत्। अब्रह्मत्वादिधीध्वस्तिस्तर्हि[9] कथमित्याशङ्क्याऽऽह—तां त्विति।

वृत्तमनूद्योत्तरग्रन्थमवतारयति—परिसमाप्त इति। यस्य [10]शास्त्रस्यार्थो [11]विषयप्रयोजनाख्यो [12]ब्रह्मकण्डिकाया [13]चतुर्थादौ च प्रस्तुतस्तस्यार्थो [14]यथोक्तन्यायेन निर्धारित इत्यनुवादार्थः। सर्वात्मभूतस्य सर्पादिवत्कल्पितानां सर्वेषामात्म[15]भावेन स्थितत्वम्। सर्वं ब्रह्म सद्रूपत्वं सर्वात्मत्वम्। सर्वं एत

जानने वाला ब्रह्मवेत्ता विद्वान् मोक्ष का प्राप्त कर लेता है। तथा जो यह कहा गया है "(उनके विषय मे ब्रह्म की जिज्ञासा करने वाले ब्राह्मणो ने यह कहा है कि) ब्रह्मविद्या के द्वारा मनुष्य हम सर्वरूप हो जायगे ऐसा मानते हैं (उनके विषय मे यह प्रश्न होता है कि) उस ब्रह्म ने क्या जाना, जिस ब्रह्म से वह सर्वरूप हो गया" उसी का यह व्याख्यान किया गया है। इस प्रकार आचार्य और शास्त्र से आत्मा का सर्वभूतात्मकभाव सुनकर तर्क के द्वारा मनन कर, उसका अपरोक्ष विज्ञान वैसे ही कर लेता है जैसा कि मधुब्राह्मण मे प्रतिपादित किया गया है। इसलिये उक्त लक्षण वाले ब्रह्मविज्ञान से (साक्षात् जानकर) जो पूर्व मे ही ब्रह्म होते हुए अब्रह्म था एव सर्वस्वरूप होते हुए भी असर्व था, उस (अब्रह्मत्वादि की प्रयोजिका) अविद्या को इस ब्रह्मात्मैक्य विज्ञान से तिरस्कृत करके वह ब्रह्मवेत्ता ब्रह्म होते हुए भी ब्रह्म एव सर्व होते हुए भी सर्व हुआ है।

जिसके लिए इस प्रकरण का प्रारम्भ हुआ था, शास्त्र का वह प्रयोजन तो प्रस्तुत कर दिया। सबके आत्मभूत सर्वात्मस्वरूप उसी ब्रह्मवेत्ता मे समस्त जगत् कल्पित है, इसी प्रयोजन के लिए दृष्टान्त का उपपादन किया जाता है। श्रुतिमन्त्र का—"जैसे रथ की नाभि और रथ की नेमि मे सभी अरे लगे

१ बृ० उ० १-४-९। २. अब्रह्मत्वादिप्रयोजिकाम्। ३ कल्पितम्। ४. व्याख्यानम्। ५. मैत्रेयीब्राह्मणे। ६. अन्त्यपञ्चम्यथ। ७. आद्यतदर्थं। ८ मध्यमतदय। ९. सत्यामविद्यायां यद्वाऽब्रह्मत्वादिधीसत्त्वे। १० शास्त्रस्य "आत्मेत्येवोपासीत" ति विद्यासूत्राख्यस्य। ११. विषयप्रयोजने—ब्रह्मात्मैक्यसर्वात्मभावापत्ती। १२ बृ० उ० १-४-१०। १३. द्वितीयाध्यादौ। १४. निरुक्तयुक्तिकलापेन। १५ अधिष्ठानतया।

चाराः सर्वे समर्पिता इति प्रसिद्धोऽर्थः । एवमेवास्मिन्नात्मनि परमात्मभूते ब्रह्मविदि सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वे देवा अग्न्यादयः सर्वे लोका भूरादयः सर्वे प्राणा वागादयः सर्व एत आत्मानो जलचन्द्रवत्प्रतिशरीरानुप्रवेशिनोऽविद्याकल्पिताः । सर्वं जगदस्मिन्समर्पितम् । यदुक्तं ब्रह्मविद्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति । स एष सर्वात्मभावो व्याख्यातः । स एष विद्वान्ब्रह्मवित्सर्वोपाधिः सर्वात्मा सर्वो भवति । निरुपाधिर्निरुपाख्योऽनन्तरोऽबाह्यः कृत्स्नः, प्रज्ञानघनोऽजोऽजरोऽमृतोऽभयोऽचलो नेति नेत्यस्थूलोऽनणुरित्येवविशेषणो भवति ।

---

आत्मान इति कुतो भेदोक्तिरात्मैक्यस्य शास्त्रीयत्वादित्याशङ्क्याऽऽह—जलचन्द्रवदिति । दार्ष्टान्तिकभागस्य संपिण्डितमर्थमाह—सर्वमिति । उक्तस्य सर्वात्मभावस्य तृतीयेऽर्थवाक्यस्थत्वं निर्दिशति—यदुक्तमिति । सर्वात्मभावे विदुषः सप्रपञ्चत्वं स्यादित्याशङ्क्याऽऽह—स एष इति । सर्वेण कल्पितेन द्वैतेन सहितमधिष्ठानभूतं ब्रह्म प्रत्यग्भावेन पश्यन्विद्वान्सर्वोपाधिस्तत्तद्रूपेण स्थितः सर्वो भवति । तदेव कल्पितं सप्रपञ्चत्वमविद्वद्दृष्ट्या विदुषोऽभीष्टमित्यर्थः । विद्वद्दृष्ट्या तस्य निष्प्रपञ्चत्वं दर्शयति—निरुपाधिरिति । निरुपाख्यत्वं शब्दप्रत्ययागोचरत्वं ब्रह्मणः सप्रपञ्चत्वमविद्याकृतं निष्प्रपञ्चत्वं तात्त्विकमित्यागमार्थाविरोध उक्तः ।

---

रहते हैं" यह अर्थ तो प्रसिद्ध ही है । "एवमेवास्मिन्नात्मनि" अर्थात् इसी प्रकार परमात्मभूत ब्रह्मवेत्ता में 'सर्वाणि भूतानि" यानी ब्रह्मा से लेकर स्तम्बपर्यन्त सभी भूत, "सर्वे देवा" यानी अग्न्यादि सभी देवता, "सर्वे लोका" यानी पृथिवी आदि सभी लोक "सर्वे प्राणा" यानी वागादि सभी प्राण, "सर्व एत आत्मानः समर्पिताः" अर्थात् यह सभी आत्मा जल में प्रतिबिम्बित चन्द्रमा के समान प्रत्येक शरीर में प्रवेश करने वाले अविद्याकल्पित हैं । सभी (कार्यकरणप्रपञ्चात्मक) जगत् इसमें समर्पित है । और जो कहा कि ब्रह्मवित् वामदेव ने उस तत्त्व को आत्मभाव से देखते हुए ही जाना "मैं ही मनु और सूर्य भी हुआ था", इस श्रुति वाक्य से इस सर्वात्मभाव की व्याख्या हुई है । वह यह विद्वान् ब्रह्मवेत्ता सकलोपहित, ब्रह्मात्मस्वरूप एवं सर्वस्वरूप हो जाता है । तथा निरुपाधिक, अनिर्वचनीय, अनन्तर, अबाह्य, पूर्ण अजन्मा, जरारहित, अमृत, अभय, अचल निषेधात्मक, अस्थूल अनणु—इस प्रकार के विशेषणों से युक्त हो जाता है ।

इस अविरोधरूप अर्थ को नहीं जानने वाले कुछ तार्किक और अपने को पण्डित मानने वाले मीमांसक शास्त्र के (औपनिषद ब्रह्म) अर्थ का इससे विपरीत मानते हुए बहुत से विकल्पों को करते

---

१ सर्वमिति—कार्यकारणप्रपञ्चस्य ब्रह्ममात्रेण पर्यवसानमाविष्कर्तुमिच्छन्तो य श्रुतिर्दृष्टा तद्द्वारा प्रवृत्तेति भावः । तथा च वार्तिके— प्रत्यग्विज्ञप्तिमात्रेण समाप्तिं जगदात्मनः । आविविक्षत्कीपु साक्षान्तरतद्यथेति परा श्रुतिः" ॥६५॥ इति । २ यदुक्तमिति—अनेन तृतीयोक्त तस्मात्तत्सर्वमभवदिति विद्याफलोपसंहारोऽत्र क्रियत इति सूचयति । वार्तिके यथा—"उदाहृतिरिति वाक्येन ब्रह्मविद्याप्रयोजनम् । साक्षेपं प्रागुपन्यस्तं तस्यायं निर्णयः कृतः" ॥९०॥ इति । ३ बृ० उ० १-४-१० । ४ सकलोपहित । ५ सर्वं ब्रह्म आत्मा यस्य । ६ बहुत्वोक्ति । ७ सिद्धान्तत्वात् । ८ निष्कृष्टमयम् । ९ स्वदृष्ट्या । १० आगमाः परस्परविरुद्धार्थतया प्रतीयमाना अनुपदमेव भाष्ये वक्ष्यमाणाः ।

'तमेतमर्थमजानन्त'स्तार्किकाः केचित्पण्डितंमन्याश्चा'ऽऽगमविदः 'शास्त्रार्थं विरुद्धं मन्यमाना विकल्पयन्तो मोहमगाधमुपयान्ति । तमे'तमर्थमेतौ मन्त्रावनुवदतः—"अनेजदेकं मनसो जवीयस्तदेजति तन्नैजति" इति । तथा च तैत्तिरीयके—"यस्मात्परं नापरमस्ति किंचित् । एतत्साम गायन्नास्ते । अहमन्नमहमन्नमहमन्नम्" इत्यादि । तथाच छान्दोग्ये "जक्षत्क्रीडन्रममाणः । 'स यदि पितृलोककामः । 'सर्वगन्धः सर्वरसः सर्वज्ञः सर्ववित्" इत्यादि । आथर्वणे च "दूरात्सुदूरे तदिहान्तिके च" । कठवल्लीष्वपि "अणोरणीयान्महतो

कथं 'तर्हि "तार्किका मीमांसकाश्च शास्त्रार्थं "विरुद्धं पश्यन्तो "ब्रह्मास्ति "नास्तीत्यादि "विकल्पयन्तो मोमुह्यन्ते तत्राऽऽह—तमेतमिति । आदिव्यामोहस्याज्ञानं मूलमुक्त्वा प्रकृते ब्रह्मणो "द्वैरूप्ये प्रमाणमाह—तमित्यादिना । तैत्तिरीयश्रुतावादिशब्देनाहमन्नमन्नमदन्तमद्मीत्यादि गृह्यते । 'छान्दोग्यश्रुतावादिशब्देन "सत्यकामः सत्यसंकल्पो विजरो विमृत्युरित्यादि गृहीतम् । श्रुतिसिद्धे द्वैरूप्ये स्मृति-

हुए अगाध मोह को प्राप्त होते हैं। इस अविरुद्ध एवं द्वैरूप्यात्मक अर्थ का ये दो श्रुतिमन्त्र अनुवाद करते हैं। (पहला मन्त्र है—) "वह आत्मतत्त्व अपने स्वरूप से विचलित न होने वाला सभी भूतों में एक तथा मन से भी तीव्र गति वाला है", (और दूसरा मन्त्र इस प्रकार है—) "वह आत्मतत्त्व (सोपाधिकरूप से) चलता है और (निरुपाधिकरूप से) नहीं भी चलता"। इसको तैत्तिरीयक उपनिषत् में भी कहा गया है—"जिससे पर और अपर कुछ भी नहीं है", "(इस विज्ञानमय आत्मा को प्राप्त कर तथा इस आनन्दमय आत्मा के प्रति सङ्क्रमण कर इन लोकों में यथेच्छ भोगों को भोगता हुआ इच्छानुसार रूप धारण कर विचरता हुआ) इस साम का गान करता है, विशुद्ध होता हुआ भी मैं भोग्य हूँ, मैं अन्न हूँ मैं अन्न हूँ" इत्यादि। इसी प्रकार छान्दोग्य उपनिषत् में कहा गया है—"(अपने स्वरूप में स्थित हो जाने पर वह) हँसता, क्रीडा करता, स्त्री, यान अथवा सम्बन्धियों के साथ रमण करता हुआ (अपने साथ उत्पन्न हुए इस शरीर को स्मरण न करता हुआ सभी ओर) घूमता रहता है", "मरने के बाद यदि वह पितृलोक को चाहता है (तो उसके सङ्कल्प से पितृगण वहाँ उपस्थित हो जाते हैं, उस पितृलोक से सम्पन्न हो अपनी महिमा का अनुभव करता है)", "(सर्वव्यापकत्व, सूक्ष्मत्वरूपादि हीनत्वादि आकाश के तुल्य होने से) वह सुखप्रद सम्पूर्ण गन्धवाला, सम्पूर्ण रस वाला, सर्वज्ञ और सर्ववित् है (सबको सामान्यरूप से जानता है, इसीलिये सर्वज्ञ है और विशेषरूप से जानने के कारण सर्ववित् कहा जाता है)"। अथर्ववेदीय मुण्डक उपनिषत् में यही बात कही गयी है—"वह अविवेकियों के लिए दूर से भी दूर तथा विवेकियों के लिए अत्यन्त समीप, इसी देह में विद्यमान है"। इसीप्रकार कठोपनिषत् के वचन हैं—"यह जीवात्मा सूक्ष्म से भी सूक्ष्मतर तथा महान् से भी महत्तर इस जीव की हृदयरूपी गुफा में अन्तरात्मरूप से स्थित है", "वह हर्ष से युक्त और हर्ष से रहित भी है (उस देव को मेरे अतिरिक्त और कौन जान

१. अविरोधरूपम् । २. अपक्षपातचरणीयाः । ३. मीमांसका. । ४. औपनिषदं ब्रह्म । ५. अविरुद्धद्वैरूप्यात्मकम् । ६. छा० उ० ८-१२-३ । ७ छा० उ० ८-२-२ । ८. छा० उ० ३.१४.२-४ । ९. सत्यागमार्थाविरोधे । १० निर्मूलोत्प्रेक्षामात्रेणैवार्थनिर्णयपरायण । ११. सप्रपञ्चं ब्रह्मनिष्प्रपञ्चं चेत्येवम् । १२. प्रतीचोऽन्यत् । १३ कपिलजैमिनीया. ।' १४. विकल्पविषयतामापादयन्तः । १५. सप्रपञ्चनिष्प्रपञ्चत्वरूपे । १६. छा० उ० ८-१-५ ।

महीयान्" "कस्तं मदामदं देवम्" "तद्धावतोऽन्यानत्येति तिष्ठत्" इति च । तथा गीतासु "अहं क्रतुरहं यज्ञः" "पिताऽहमस्य जगतः" "नाऽऽदत्ते कस्यचित्पापम्" "समं सर्वेषु भूतेषु" "अविभक्तं विभक्तेषु", "ग्रसिष्णु प्रभविष्णु च" इत्येवमाद्यागमार्थं विरुद्धमिव प्रतिभान्तं मन्यमानाः 'स्वचित्तसामर्थ्यादर्थनिर्णयाय विकल्पयन्तोऽस्त्यात्मा नास्त्यात्मा कर्ताऽकर्ता मुक्तो बद्धः क्षणिको विज्ञानमात्रं शून्यं चेत्येवं विकल्पयन्तो न पारमधिगच्छन्त्यविद्याया विरुद्धधर्मदर्शित्वात्सर्वत्र । 'तस्मात्तत्र' य एव श्रुत्याचार्यदर्शितमार्गानुसारिणस्त एवा-विद्यायाः पारमधिगच्छन्ति । त एव चास्मान्मोहसमुद्रादगाधादुत्तरिष्यन्ति नेतरे स्वबुद्धि-कौशलानुसारिणः ॥ १५ ॥

---

मपि संवादयति—तथेति । 'पूर्वोक्तप्रकारेणाऽऽगमार्थविरोधसमाधाने विद्यमानेऽपि 'तदज्ञानाद्वावि-विश्रान्तिरित्युपसंहरति—इत्येवमादीति । विकल्पमेव स्फुटयति—अस्तीति । सर्वत्र श्रुतिस्मृतिष्वा-त्मनीति यावत् । के 'तर्हि पारमविद्यायाः समधिगच्छन्ति तत्राऽऽह—तस्मादिति । ब्रह्मज्ञानफलमाह—त एवेति ॥ १५ ॥

---

सकता है ?)", ईशावास्योपनिषत् के वचन भी इसमे प्रमाण है—"वह स्थिर होता हुआ भी अन्य दौड़ने वाले गतिशील पदार्थों को अतिक्रमण कर जाता है"। इसी प्रकार गीता मे भी श्रीमुखवचन से प्रति-पादित किया है—"मैं श्रौतकर्मरूप क्रतु हूँ एव पञ्चमहायज्ञादि स्मार्तकर्मरूप यज्ञ हूँ", "मैं चराचर प्राणियो सहित समस्त विश्व का महाकारण होने से पिता हूँ", "सर्वव्यापी परमेश्वर भी न किसी के पापकर्म को और न किसी के शुभकर्म को ही ग्रहण करता है", "(जो पुरुष नष्ट होते हुए) सब चरा-चर भूतो मे परमेश्वर को नाशरहित और समभाव से देखता है (वही यथार्थ देखता है)", (जिस ज्ञान से) मनुष्य भिन्न भिन्न मानने वाले समस्त प्राणियो को अविनाशी परब्रह्म से अभिन्न देखता है", "(जो परब्रह्म अभिन्न होते हुए भी समस्त प्राणियो मे विभक्त सा स्थित हुआ प्रतीत होता है) उसे ही तू सम्पूर्ण जगत् का संहार करने वाला 'ग्रसिष्णु' एव सब की उत्पत्ति करने वाला 'प्रभविष्णु' जान"। इस प्रकार के श्रुति एव स्मृतिवाक्य शास्त्र के तात्पर्य को विरुद्ध सा भासने वाला मानकर अपनी बुद्धिस्थ निर्णय के अनुकूल शक्ति के अभिनिवेश से अर्थनिर्णय करने के लिए भाँति-भाँति की कल्पना करते हैं। एव आत्मा है, आत्मा नहीं है, कर्ता है और अकर्ता है, मुक्त, बद्ध, क्षणिकविज्ञानमात्र शून्य है—इस प्रकार कल्पना करते हुए अविद्या का अन्त नहीं पाते क्योकि उन्हें सर्वत्र विरुद्ध धर्म ही प्रतीत होता है। उक्त सभी के पारगामी न होने के कारण उन अधिकारियो मे जो भी श्रुति एव आचार्य द्वारा उपदिष्ट मार्ग का अनुसरण करते हैं, वे ही अविद्या का पार पा लेते हैं। वे ही इस मोहरूप अगाध समुद्र को तैर कर पार हो जाते हैं; जो अपनी बुद्धिकौशल के बल पर रहते हैं, वे मझधार मे ही रह जाते हैं ॥१५॥

---

१. स्वबुद्धिस्थनिर्णयानुकूलशक्त्यभिनिवेशात् । २ यथोक्तानां पारगत्वाभावात् । ३. अधिकारिणां मध्ये । ४. ६४६पृष्ठटीकायाम् । ५. समाधानाज्ञानात् । ६. स्वबुद्धिकौशलानुसारिणां तार्किकादीनामविद्यापार-गन्तृत्वाभावे ।

'परिसमाप्ता ब्रह्मविद्याऽमृतत्वसाधनभूता । यां मैत्रेयी पृष्टवती भर्तारं यदेव भगवानमृतत्वसाधनं वेद तदेव मे ब्रूहीति । एतस्या ब्रह्मविद्यायाः स्तुत्यर्थेयमाख्यायिकाऽऽनीता' । तस्या आख्यायिकायाः सक्षेपतोऽर्थप्रकाशनार्थावेतौ मन्त्रौ भवतः । 'एवं 'हि मन्त्रब्राह्मणाभ्या स्तुतत्वादमृतत्वसर्वप्राप्तिसाधनत्वं ब्रह्मविद्यायाः प्रकटीकृतं' राजमार्ग'मुपनीतं भवति । यथाऽऽदित्य उद्यञ्शार्वरं तमोऽपनयतीति तद्वत् । 'अपि चैवं स्तुता ब्रह्मविद्या 'यैन्द्रराजरक्षिता सा दुष्प्रापा देवैरपि । यस्मादश्विभ्यामपिदेव भिषग्भ्यामिन्द्र-

तद्यथेत्याविवाक्यार्थं विस्तरेणोक्त्वा वृत्त कीर्तयति—परिसमाप्तेति । ब्रह्मविद्या परिसमाप्ता चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—एतस्या इति । इयमिति 'प्रवर्ग्यप्रकरणस्थामाख्यायिका परामृशति । प्रानोतेव वै तन्मध्वित्याविना ब्राह्मणेनेति शेष. । "तदेतद्वषिरित्यादेस्तात्पर्यमाह—तस्या इति । "तद्वां नरेत्याविरेको मन्त्र. । "आथर्वणायेत्यादिरपरः । "मन्त्रब्राह्मणाभ्या वक्ष्यमाणरीत्या ब्रह्मविद्यायाः स्तुतत्वे किं सिध्यतीत्याशङ्क्याऽऽह—एव हीति । तस्या मुक्तिसाधनत्व दृष्टान्तेन स्फुटयति—यथेति । केन प्रकारेण ब्रह्मविद्यायाः स्तुतत्व तदाह—अपि चेति । अपिशब्द' स्तावकब्राह्मणसंभावनार्थः । मन्त्रद्वयसमुच्चयार्थश्चशब्द. । एवशब्दसूचित स्तुतिप्रकारमेव प्रकटयति—येन्द्रेति । तस्या दुष्प्रापत्वे हेतुमाह—यस्मादिति । महान्तमायास स्फुटयति—ब्राह्मणस्येति । "कृतार्थेनापीन्द्रेण रक्षितत्वे विद्याया

अमृतत्व की साधनभूत ब्रह्मविद्या का व्याख्यान हो चुका । (ब्रह्मविद्या का तो भी स्पष्टीकरण नही हुआ) जिसको मैत्रेयी ने अपने पति से इस प्रकार पूछा था—"भगवान् जो कुछ अमरत्व का साधन जानते है, उसी का उपदेश मुझे भी करें ।" इसी ब्रह्मविद्या की स्तुति के लिए यह आख्यायिका उपस्थापित की गई है । उसी आख्यायिका का अर्थ सक्षेप से प्रकाशित करने के लिए ये दोनो मन्त्र हैं क्योकि वक्ष्यमाण रीति से मन्त्र और ब्राह्मण दोनो के द्वारा स्तुत होने के कारण ब्रह्मविद्या की अमृतत्व और सर्वप्राप्ति का साधन प्रकट होने से उसी प्रकार राजमार्ग को स्फुटीकृत किया गया है, जिस प्रकार सूर्य उदय होकर रात्रि के अन्धकार को भगा देता है । इसके अतिरिक्त उस ब्रह्मविद्या की इस प्रकार भी स्तुति की गई है कि वह इन्द्र और अन्य राजाओ के द्वारा गोपनीय रखी गयी हैं एव वह ब्रह्मविद्या देवताओ के लिए भी अप्राप्त हो चुकी थी क्योंकि इन्द्र के द्वारा गोपनीय रखी गई वह विद्या देवताओ के चिकित्सक दोनो अश्विनीकुमारो को बडे प्रयत्न से प्राप्त हुई थी । उन्होने ब्राह्मण का शिर

१ परिसमाप्तेति—आरमेत्येवेति तृतीय प्रस्तुतविद्यासूत्रस्य व्याख्याऽतीतब्राह्मणपञ्चकेन श्रुत्या सम्यक्कृता । सा च ब्रह्मात्मैकत्वसाक्षात्कारहेतुरिति द्रष्टव्यम् । ननु व्याख्यातापि विद्यासूत्रे ब्रह्मविद्या नाद्यापि स्पष्टीकृतेत्याशङ्क्याऽऽह—परिसमाप्तेति । २ उपस्थापिता । ३ वक्ष्यमाणरीत्या । ४ तस्या मुक्तिसाधनत्वज्ञाने स्तुति पुष्कलो हेतुरिति हिशब्दो द्योतयति । ५ सत् । ६ स्फुटतरीकृतम् । ७ अपि चैवमिति—स्तावकब्राह्मणेन मन्त्राभ्याम् । वक्ष्यमाणप्रकारेणेति तृतीयार्थं । ८ इन्द्रेणान्यैश्च राजभिर्गोपिता । ९ माध्यवृदव्याख्यातमाद्य बृहदारण्यकाध्यायद्वय प्रकरणस्थामिति । १० बृ० उ० २।५।१६ । ११ बृ० उ० २।५।१६ । १२ बृ० उ० २।५।१७ । १३ मन्त्रपौरस्त्यब्राह्मणाभ्याम् । १४ कृतो लब्धोऽर्थो विद्याप्रयोजन यन तन लौकिक हीनरत्नतोपयोग वस्तु त्यज्यते जनैर्नैषा तु तथेति स्तुति ।

क्षिता विद्या महताऽऽयासेन प्राप्ता। ब्राह्मणस्य शिरश्छित्त्वाऽश्व्यं शिरः 'प्रतिसंधाय तस्मिन्निन्द्रेण छिन्ने पुनः स्वशिर एव प्रतिसंधाय तेन ब्राह्मणस्य स्वशिरसैवोक्ता'ऽशेषा ब्रह्मविद्या श्रुता । 'तस्मात्ततः परतरं किंचित्पुरुषार्थसाधनं न भूतं न भावि वा कुत एव वर्तमानमिति नातः परा स्तुतिरस्ति ।

अपि चैवं स्तूयते ब्रह्मविद्या । 'सर्वपुरुषार्थानां कर्म हि साधनमिति लोके प्रसिद्धम् । तच्च कर्म 'वित्तसाध्यं तेनाऽऽशाऽपि नास्त्यमृतत्वस्य । 'तदिदममृतत्वं केवलयाऽऽत्मविद्यया कर्मनिरपेक्षया प्राप्यते । यस्मात्कर्मप्रकरणे वक्तुं प्राप्ताऽपि सती 'प्रवर्ग्यप्रकरणे कर्मप्रकरणादुत्तीर्य कर्मणा विरुद्धत्वात्केवलसंन्याससहिताऽभिहिताऽमृतत्वसाधनाय । 'तस्मान्नातः परं पुरुषार्थसाधनमस्ति । अपि चैवं स्तुता ब्रह्मविद्या । सर्वो हि "लोको "द्वंद्वारामः । "स

---

दोर्लभ्ये च फलितमाह—तस्मादिति ।

न केवलमुक्तेनैव प्रकारेण विद्या स्तूयते किंतु प्रकारान्तरेणापीत्याह—अपि चेति । तदेव प्रकारान्तरं प्रकटयति—सर्वेति । केवलयेत्यस्य व्याख्यानं कर्मनिरपेक्षयेति । "तत्र हेतुमाह—यस्मादिति । किमिति कर्मप्रकरणे प्राप्ताऽपि प्रकरणान्तरे कथ्यते तत्राऽऽह—कर्मणेति । प्रसिद्धं पुमर्थोपाय "कर्म त्यक्त्वा विद्यायामेवाऽऽदरे तदधिकता" समधिगतेति फलितमाह—तस्मादिति । प्रकारान्तरेण ब्रह्मविद्यायाः स्तुतिं दर्शयति—अपि चेति । अनात्मरतिं व्यवस्थाऽऽत्मन्येव रतिहेतुत्वान्महतीयं विद्ये-

---

उस अश्व के शिर को जब इन्द्र ने काट कर अलग कर दिया काट कर उस पर अश्व का शिर लगाया, तो (ब्राह्मण के शरीर में लगे हुए अश्व का शिर कट जाने पर) उस शिर को पुनः अपने में जोड़ कर फिर ब्राह्मण के अपने शिर से कहे जाने पर अवशिष्ट ब्रह्मविद्या का श्रवण किया। इसलिए उस ब्रह्मविद्या से बढ़कर अन्य पुरुषार्थ का साधन न कभी हुआ है, न कभी होगा ही, फिर वर्तमान में तो हो ही कैसे सकता है ? इससे बढ़कर उसकी स्तुति क्या हो सकती है ?

इसके अतिरिक्त ब्रह्मविद्या की इस प्रकार भी स्तुति की जाती है। लोकव्यवहार में यह प्रसिद्ध है कि पुरुषों के द्वारा प्रार्थ्यमान फलों का साधन कर्म है। वह कर्म वित्त द्वारा साध्य है, वित्त अथवा वित्तसाध्य कर्म से अमृतत्व की आशा लेशमात्र भी संभव नहीं है। कर्म से इसकी प्राप्ति असंभव होने के कारण यह अमृतत्व कर्मनिरपेक्ष, केवल आत्मविद्या के द्वारा ही प्राप्त होता है क्योंकि कर्मप्रकरण में कहने का अवसर प्राप्त होने पर भी (कर्मप्रकरण के व्याख्यानस्वरूप) प्रवर्ग्यप्रकरण में कर्मसिद्धान्त से विरुद्ध होने के कारण उसे कर्मप्रकरण से निकाल कर अमृतत्वसाधन के लिए पारमहंसाख्य संन्यास के साथ वर्णन किया गया है। इसलिए इससे बढ़कर पुरुषार्थ का साधन नहीं है। इसके अतिरिक्त ब्रह्मविद्या

---

१. प्रतिसंधायेति—तेनाश्वशिरसा विद्या सामि शुश्रुवतुरिति शेषः । २ अशेषेति—अवशिष्टेति यावत् । ३. टीकोक्तार्थकम् । ४ पुंभिरर्थ्यमानफलानाम् । ५ वित्तेन तत्साध्यकर्मणा वा । ६ कर्मासंभाविनप्राप्तिकम् । ७ कर्मप्रकरणे इत्युक्तस्यैव व्याख्यानमिदम् । ८ पारमहंस्याश्रममहिम्ना, इतरत्र कर्मलेशसंभवात् । ९. आदरात् । १० अज्ञजनः । ११ द्वन्द्वं स्त्रीपुंसमिथुनम् । १२ नैरपेक्ष्ये । १३ प्रदर्श्यमाने सति । १४. कर्मापेक्ष उत्कर्षः ।

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच ।
[1]तदेतदृषिः पश्यन्नवोचत् । [2]तद्वां नरा सनये
दँ͡सः उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।

उस इस मधुविज्ञान को दध्यङ्ङाथर्वण ऋषि ने अश्विनीकुमारों को बतलाया था। इसी मधु को देखते हुए मन्त्र ने कहा था—मेघ जिस प्रकार वृष्टि करता है, हे नराकृति अश्विनीकुमारो ! वैसे ही ब्रह्मविद्या की प्राप्तिरूप लाभ के लिये किये हुए तुम दोनों का यह उग्रदंस कर्म मैं प्रकट कर

---

वै नैव रेमे तस्मादेकाकी न रमते" [3]इति श्रुतेः। याज्ञवल्क्यो [4]लोकसाधारणोऽपि सन्नात्मज्ञानबलाद्भार्यापुत्रवित्तादिसंसाररतिं परित्यज्य प्रज्ञानतृप्त आत्मरतिर्बभूव। अपि चैवं स्तुता ब्रह्मविद्या। यस्माद्याज्ञवल्क्येन संसारमार्गाद्व्युत्तिष्ठताऽपि प्रियायै भार्यायै [5]प्रीत्यर्थमेवाभिहिता। [6]प्रियं भाषस एह्यास्स्वेति लिङ्गात्।

तत्रेयं स्तुत्यर्थाऽऽख्यायिकेत्यवोचाम। का पुनः साऽऽख्यायिकेति। उच्यते—

---

त्यर्थः। विधान्तरेण तस्याः स्तुतिमाह—अपि चैवमिति। कथं ब्रह्मविद्या भार्यायै प्रीत्यर्थमेवोक्तेति गम्यते तत्राऽऽह—प्रियमिति।

आख्यायिकायाः स्तुत्यर्थत्वं प्रतिपाद्य वृत्तमनूद्याऽऽकाङ्क्षापूर्वकं [7]तामवतार्य व्याकरोति—तत्रे-

---

की इस प्रकार भी स्तुति की गई है। सभी अज्ञानी लोग स्त्री-पुरुष मिथुन में रमण करने वाले हैं। "उस प्रजापति ने आनन्द का अनुभव नहीं किया, इसी से आज भी एकाकी पुरुष रति का अनुभव नहीं करता (इष्ट वस्तु के संयोग से होने वाली क्रीडा का नाम ही रति है, ऐसी रति के लिए और अरति की निवृत्ति के लिए) उस प्रजापति ने दूसरी वस्तु अर्थात् स्त्री की अभिलाषा की।" याज्ञवल्क्य मनुष्यत्वादि से इतरजन सदृश न होते हुए भी आत्मज्ञान के प्रभाव से भार्या, पुत्र एवं वित्तादिरूप संसार की रति को त्याग कर प्रज्ञानब्रह्म में ही तृप्त हुए आत्मरति वाले हो गये। इसके अतिरिक्त ब्रह्मविद्या की इस प्रकार भी स्तुति की गई है। क्योंकि याज्ञवल्क्य ने संसार मार्ग से उपराम होकर भी अपनी प्रिया पत्नी को (उसके मोह के लिए नहीं, बल्कि) आनन्द के लिए ही इस का उपदेश किया था। "हे मैत्रेयी ! तू चित्त के अनुकूल (अमृतत्व के साधन की) बात पूछ रही है, आ बैठ जा (तुझे तेरे अभीष्ट अमृतत्वसाधन आत्मज्ञान का उपदेश करता हूँ)" ऐसा अर्थप्रकाशनसामर्थ्य से जाना जाता है।

---

१ तत्—तत्र वृत्तम्। एतत्—दृष्टिदृष्टम्। ऋषिर्मन्त्रस्तद्द्रष्टा वा। २ तद्वामित्यादि—मन्त्रवर्णयोजनेत्थम् तथाहि—हे नराकारावश्विनौ भवद्भ्यां लुब्धप्राकृतजनवत् सनये लाभाय यद्दँ͡सः कर्म उग्रं क्रूरं कृतं रहसि, वां युवयोस्तद् दँ͡सः कर्म आविष्कृणोमि प्रकटं करोमि, क इव कामिव तन्यतुः पर्जन्यो वृष्टिं न वृष्टिमिव यत् कक्ष्यत्वेन वक्ष्यमाणमात्मज्ञानाख्यं मधु दध्यङ्नामाऽऽथर्वणो वां युवाभ्यामश्वस्य शीर्ष्णा शिरसा प्रयदीमुवाच प्र यद् ईम् इति च्छेदः। यत्प्रोवाच तदप्याविष्कृणोमीति सबन्धः। ह ईम् अनर्थकौ निपातौ॥ ३. बृ० उ० १।४।३। ४. मनुष्यत्वादिनेतरजनसदृशोऽपि। ५. आनन्दार्थं न तु तस्या मोहवत्तया। ६. बृ० उ० २।४।४। ७. आख्यायिकाम्।

दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा
प्र यदीमुवाचेति ॥ १६ ॥

देता हूँ। जिस मधुविज्ञान को दध्यङ्ङाथर्वण ऋषि ने तुम अश्विनीकुमारों के प्रति घोड़े के शिर से प्रतिपादन किया था (मेघगर्जन के समान मन्त्र ने अश्विनीकुमारों के इस दुर्धर्ष कर्म की घोषणा कर दी है, जो वैदिक इतिहास में प्रसिद्ध है) ॥१६॥

---

इदमित्यनन्तरनिर्दिष्टं व्यपदिशति बुद्धौ संनिहितत्वात्। वैशब्दः स्मारणार्थः। तदित्याख्यायिकानिर्वृत्तं [1]प्रकरणान्तराभिहितं परोक्षं वैशब्देन स्मारयन्निह व्यपदिशति। यत्तत्प्रवर्ग्यप्रकरणे सूचितं नाऽऽविष्कृतं मधु तदिदं मद्वि[2]हानन्तरं निर्दिष्टमियं[3] पृथिवीत्यादिना। कथं [4]तत्र [5]प्रकरणान्तरे सूचितं दध्यङ् [6]ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच।

तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति। स होवाचेन्द्रेण वा उक्तोऽस्म्येत-

---

त्यादिना। ब्रह्मविद्या सतम्यर्थः। पदार्थमुक्त्वा वाक्यार्थमाह—यदिति। दध्यङ्ङित्यादि व्याकुर्वंस्ता-काङ्क्षापूर्वकं प्रवर्ग्यप्रकरणस्थामाख्यायिकामनुकीर्तयति—कथमित्यादिना। आभ्यामश्विभ्यामिति यावत्।

केन कारणेनोवाचेत्यपेक्षायामाह—तदेनयोरिति। एनयोरश्विनोस्तन्मधु प्रीत्यास्पदमासीत्तद्-ज्ञात्ताभ्यां प्रार्थितो ब्राह्मणस्तदुवाचेत्यर्थः। यदश्विभ्यां मधु प्रार्थितं तदेतेन वक्ष्यमाणेन प्रकारेण प्रयच्छन्नेवैनयोरश्विनोराचार्यत्वेन ब्राह्मणः समीपगमनं कृतवानित्याह—तदेवेति। [8]आचार्यत्वानन्तरं

---

यहाँ यह आख्यायिका आत्मज्ञान की स्तुति के लिये है—ऐसा हम कह आये हैं। तो फिर वह आख्यायिका क्या है? इसे अब श्रुति बतलाती है—मन्त्र में "इदं" पद अनन्तर निर्दिष्ट का बोधक है क्योंकि उसका बुद्धि में सन्निहित होना सिद्ध है। "वै" शब्द स्मरण कराने के लिए है। "तत्" यह पद आख्यायिका में आने वाले एवं प्रकरणान्तर(प्रवर्ग्य)में कहे हुए परोक्ष मधु का "वै" शब्द से स्मरण दिलाकर व्याख्यान करता है। जिस मधु को आविष्कृत न कर प्रवर्ग्यप्रकरण में केवल सूचित ही किया है; उसी इस मधु को यहाँ विद्याप्रकरण में "इयं पृथिवी" आदि मन्त्र से अनन्तर निर्दिष्ट किया है। प्रवर्ग्याख्य कर्मप्रकरण में इसकी सूचना किस प्रकार दी गई है? दध्यङ् आथर्वण ऋषि ने (उन्हीं वाक्यों के अनुवाद के रूप में) उन दोनों अश्विनीकुमारों को इस मधुब्राह्मण का उपदेश किया।

"यह इन दोनों का प्रिय धाम है" इसी अग्रिम ग्रन्थ के प्रतिपादित विषय को हृदय में रखकर इन दोनों के पास ब्राह्मण आचार्यत्व रूप से जाता है। वह दध्यङ् आथर्वण बोला कि इन्द्र के द्वारा

---

१. प्रवर्ग्यप्रकरणान्तरेति यावत्। २. विद्याप्रकरणे। ३. बृ० उ० २।५।१। ४. प्रवर्ग्याख्ये। ५. कर्मप्रकरणे। ६. तत्रत्यवाक्यानुवादोऽयम्। ७. तद्विषयतज्जिज्ञासोत्कर्षादिति यावत्। ८. आचार्यत्वस्वीकारानन्तरम्।

च्चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति । तस्माद्वै बिभेमि यद्वै मे स शिरो न च्छिन्द्यात्तद्वामुपनेष्य इति । तौ होचतुरावां त्वा तस्मात्त्रास्यावहे इति । 'कथं मा त्रास्येथे इति । 'यदा नावुपनेष्यसे । अथ ते शिरश्छित्त्वाऽन्यत्राऽऽहृत्योपनिधास्यावः । 'अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावः । तेन 'नावनुवक्ष्यसि । ''स यदा नावनुवक्ष्यसि'' । ''अथ ते ''तदिन्द्रः शिरश्छेत्स्यति । अथ ते स्वं शिर आहृत्य ''तत्ते प्रतिधास्याव इति । ''तथेति तौ होपनिन्ये । तौ यदोपनिन्ये । ''अथास्य'' शिरश्छित्त्वाऽन्यत्रोपनिदधतुः । अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः । 'तेन हाऽऽभ्यामनूवाच । स यदाऽऽभ्यामनूवाचाथास्य

---

ब्राह्मणस्य वचन दर्शयति—स होवाचेति । एतच्छब्दो ''मध्वनुभवविषयः । यद्यर्थो यच्छब्दः । तच्छब्द-स्तर्हीत्यर्थं । वा युवामुपनेष्ये शिष्यत्वेन स्वी करिष्यामीति यावत् । तौ देवभिषजावश्विनौ, शिरश्छे-दनिमित्त मरण पञ्चम्यर्थः । नावावामुपनेष्यसे शिष्यत्वेन स्वी करिष्यसि यदेति यावत् । अथशब्द-स्तदेत्यर्थ. । ब्राह्मणस्यानुज्ञानन्तर्यमथेत्युक्तम् । मधुप्रवचनानन्तर्यं तृतीयस्याथशब्दार्थ । यदश्वस्य

---

मुझे (अच्छी तरह) समझा दिया गया है कि यदि मैं इस ब्रह्मविद्या का उपदेश किसी दूसरे के लिए करूँगा तो फौरन मेरा शिर धड से अलग कर दिया जायगा । इसी से मुझे भय लगता है । यदि वह मेरा शिर धड से अलग न करे, तो मैं तुम्हे (ब्रह्मविद्या हेतु) सन्निधि के लिए वरण करता हूँ । उन दोनो अश्विनीकुमारो ने कहा—(ठीक है) हम दोनो तुम्हारी (उस इन्द्र के त्रास से) रक्षा करेंगे । दध्यङ् आथर्वण बोला—मेरी रक्षा आखिर करोगे कैसे ? (उन दोनो ने कहा—)जिस समय आप सन्निधि के लिए हमारा वरण करेंगे, उस समय आपका शिर धड से निकाल कर, हाथो से अश्व के शिर को निकाल कर, वहाँ उस मे (शल्यचिकित्सा द्वारा) लगा देंगे । इस प्रकार आप का शिर अश्व मे सस्थापित कर के अश्व के शिर को लाकर (शल्यचिकित्सा द्वारा ही) तुम्हारे धड के ऊपर जोड देंगे । आप अश्व के शिर द्वारा हमे उपदेश करेंगे । जिस समय आप हम मधुब्राह्मण का उपदेश करेगे, तब आपका अश्व-वाला शिर इन्द्र धड से अलग कर देगा । इसके बाद अश्व के धड मे सस्थापित हुआ आपका अपना शिर लाकर हम आपमे प्रतिस्थापित कर देंगे । "तथास्तु" कहकर दध्यङ् आथर्वण ने दोनो अश्विनीकुमारो का वरण किया । जब उन दोनो का सन्निधि मे वरण किया तो उनके ब्राह्मण का शिर निकाल कर उसे अश्व मे बठा दिया और अश्व का शिर लाकर उसमे प्रतिस्थापित कर दिया । उन्होने अश्वशिर से (हृदय मे प्रतिष्ठित ब्रह्मविद्या का) उन अश्विनीकुमारो को उपदेश किया । जब उन्होने उपदेश दिया तो इन्द्र ने उस अश्व के शिर को धड से अलग कर दिया । इसके पश्चात् उन्होंने इन (दध्यङ् आथर्वण)

---

१ ब्राह्मण आह—वर्यमिति । २ तावाहतुर्यदेति । ३ अश्वे । ४ उद्धृत्य हस्ताभ्याम् । ५ त्वच्छिरोऽश्वे सस्थाप्य । ६ स्कन्धे । ७ तयोश्चाय । ८ अश्वशिरसा । ९ आवाभ्यामुपदेक्ष्यसि । १० त्वम् । ११ मधु । १२ मधुप्रवचनानन्तरम् । १३ अश्व्यम् । १४ तत्ते इति—अश्व्य शिर आहृत्याश्वकबन्धे प्रतिधास्यावस्तव च स्व शिरस्त वकबन्ध प्रतिधास्याव इति योजना । १५ तथास्त्वित्युक्त्वा । १६ ब्राह्मणानुज्ञानान्तरम् । १७ ब्राह्मणस्य । १८ अश्वे । १९ अश्वशिरसा । २०. मधुविद्या-विषयक इत्यर्थ ।

तदिन्द्रः शिरश्छिच्छेद । अथास्य स्वं शिर आहृत्य तद्वास्य प्रतिदधतुरिति । यावत्तु प्रवर्ग्यकर्माङ्गभूतं मधु तावदेव 'तत्राभिहितं न तु कक्ष्यमात्मज्ञानाख्यम् । 'तत्र याऽऽख्यायिकाऽभिहिता सेह स्तुत्यर्था प्रदर्शिता । 'इदं वै तन्मधु दध्यङ्ङाथर्वणोऽनेन प्रपञ्चेनाश्विभ्यामुवाच ।

तदेतदृषिस्तदेतत्कर्म ऋषिर्मन्त्रस्तद्द्रष्टा वा पश्यन्नुपलभमानोऽवोचदुक्तवान् । कथम् । तद्दंस इति व्यवहितेन संबन्धः । दंस इति कर्मणो नामधेयम् । तच्च दंसः किंविशिष्टम् । उग्रं क्रूरम् । वा युवयोः । हे नरा नराकारावश्विनौ । तच्च कर्म किंनिमित्तम् । सनये लाभाय । लाभलुब्धो हि लोकेऽपि क्रूरं कर्माऽऽचरति तथैवैतावुपलभ्येते यथा लोके तदाविः प्रकाशं कृणोमि यद्रहसि भवद्भ्यां कृतम् । 'किमिवेत्युच्यते । तन्यतुः पर्जन्यो

---

शिरो ब्राह्मणे निबद्धं तस्य च्छेदनानन्तर्यं चतुर्थस्याथशब्दस्यार्थः । 'तर्हि समस्तमपि मधु प्रवर्ग्यप्रकरणे प्रदर्शितमेवेति कृतमनेन ब्राह्मणेनेत्याशङ्क्याऽऽह—यावत्त्विति । प्रवर्ग्यप्रकरणे स्थिताऽऽख्यायिका किमर्थम् आऽऽनीतेत्याशङ्क्य तस्या ब्रह्मविद्यायाः स्तुत्यर्थमाख्यायिकेत्यत्रोक्तमुपसंहरति—तत्रेति । ब्राह्मणभागव्याख्यां निगमयति—इदमिति ।

तद्वामित्यादिमन्त्रमुत्थाप्य व्याचष्टे—तदेतदिति । कथं लाभायापि क्रूरकर्मानुष्ठानमत आह—

---

का अपना शिर लाकर उनके धड मे पुन जोड दिया । किन्तु जितना भी प्रवर्ग्यकर्म का अङ्गभूत उपासनारूप यहाँ मधु है, उसी को ही यहाँ (प्रथम अध्याय मे) कहा गया है । आत्मज्ञानसंज्ञक गोप्य मधुविद्या का व्याख्यान नही किया गया । प्रवर्ग्य प्रकरण मे जो आख्यायिका कही गयी थी, उसी को यहाँ स्तुति के लिए प्रदर्शित किया जाता है । यह वही मधुविद्या है जिसका दध्यङ् आथर्वण ब्राह्मण ने अनन्तरनिर्दिष्ट विस्तार पूर्वक दोनो अश्विनीकुमारो को उपदेश किया था ।

"तदेतत" अर्थात् इस कर्म को "ऋषि" अर्थात मन्त्र या मन्त्रद्रष्टा ने "पश्यन्" उपलब्ध करते हुए "अवोचत" अर्थात् कहा । उक्त श्रुतिवाक्य में दोनो पदो 'तद् दंस' का इकट्ठा सम्बन्ध है । 'दंस' यह कर्म का नाम है । उस दंस नामक कर्म की विशिष्टता क्या है ? (दंस कर्म) "उग्रम्" अर्थात् क्रूर है, 'वा नरा' अर्थात् तुम दोनो नराकार अश्विनीकुमारो को वह कर्म किसलिये कहता है ? "सनये" अर्थात् लाभ के लिए । लोकव्यवहार मे भी देखा जाता है कि किसी उपलब्धिविशेष के लोभ मे आया हुआ व्यक्ति क्रूरकर्म का आचरण करता है । जिस प्रकार लोकव्यवहार मे होता है, उसी प्रकार ये दोनो (मधुविद्यालाभ के लिए प्रवृत्त) देखे जाते हैं । उस रहस्य का मैं "आविः कृणोमि" यानी उद्घाटन करता हूँ, जिसको एकान्त मे मैंने तुम दोनो को संकेत किया था । क्या अथवा किस के सदृश वह रहस्य है ?

---

१. उपासनरूपम् । २ प्रथमाध्याय । ३ गोप्यम् । ४ प्रवर्ग्यप्रकरणे । ५ इद वा इति । मदात्मज्ञानसाधनं मधुब्राह्मणं ब्राह्मणोऽश्विभ्यां प्रवर्ग्यसन्निपातव्यक्तमुक्तवान् तद् एतदेव यद् इयं पृथिवीत्यादिनाऽत्र स्फुटमुक्तमित्यर्थः । अनेन अनन्तरनिर्दिष्टेन विस्तरेणेत्यर्थ । ६ क कामिवत्यर्थं । ७ मधुप्रवचने मधोस्तत्कारणे स्थिते सति । ८. ब्रह्मविद्याप्रकरणे । ९. ६२०पृष्ठभाष्ये ।

नेव । नकारस्तू[1]परिष्टादुपचार[2] -उपमार्थीयो वेदे न प्रतिषेधार्थः । यथाऽश्वं न । अश्वमिवेति यद्वत् । तन्यतुरिव वृष्टि-यथा [4]पर्जन्यो वृष्टिं [5]प्रकाशयति स्तनयित्न्वादिशब्दैस्तद्वदहं युवयोः क्रूरं कर्माऽऽविष्कृणोमीति संबन्धः । नन्वश्विनोः स्तुत्यर्थौ कथमिमौ मन्त्रौ स्यातां निन्दावचनौ हीमौ । नैष दोषः । स्तुतिरेवैषा न निन्दावचनौ । यस्मादीदृशमप्यतिक्रूरं कर्म कुर्वतोर्युवयोर्न लोम च हीयत इति । न चान्यत्किंचिद्धीयत एवेति स्तुतावेतौ[6] भवतः । निन्दां प्रशंसां हि [7]लौकिकाः स्मरन्ति । तथा प्रशंसारूपा च निन्दा लोके

लाभेति । ननु प्रतिषेधे मुख्यो नकारः कथमिवार्थे व्याख्यायते तत्राऽऽह—नकारस्त्विति । वेदे [8]पदादुपरिष्टाद्यो नकारः श्रुतः स खलूपचारः सन्नुपमार्थोऽपि संभवति न निषेधार्थं एवेत्यर्थः । तत्रोदाहरणमाह—यथेति । अश्वं न गूढमश्विनेत्यत्र नकारो यथोपमार्थीयस्तथा प्रकृतेऽपीत्यर्थः । [9]तदेव [10]स्पष्टयति —अश्वमिवेति यद्वदिति । उपमार्थीये नकारे सति वाक्यस्वरूपमनूद्य तदर्थं कथयति—तन्यतुरित्यादिना । [11]विद्यास्तुतिद्वारा तद्वन्तावश्विनावत्र न स्तूयेते किं तु क्रूरकर्मकारित्वेन निन्द्येते तथा चाऽऽख्यायिका विद्यास्तुत्यर्थेत्ययुक्तमिति शङ्कते—नन्विति । आख्यायिकाया विद्यास्तुत्यर्थत्वमविरुद्धमिति परिहरति—नैष इति । लोममात्रमपि न हीयत इति यस्मात्तस्मा[12]द्विद्यास्तुत्या तद्वतोः स्तुतिरेवात्र विवक्षितेति योजना । यद्यपि क्रूरकर्मकारिणोरश्विनोर्न दृष्टहानिस्तथाऽप्यदृष्टहानिः स्यादेवेत्याशङ्क्य कैमुतिकन्यायेनाऽऽह—न चेति । कथं पुनर्निन्दायां दृश्यमानायां स्तुतिरिष्यते, तत्राऽऽह—निन्दामिति । न हि निन्दा निन्द्यं निन्दितुमपि तु विधेयं स्तोतुमिति न्यायादित्यर्थः । यथा निन्दा न निन्द्यं निन्दितुमेव तथा स्तुतिरपि स्तुत्यं स्तोतुमेव न भवति किंतु निन्दितुमपि [13]तया च [14]नयोर्व्य[15]वस्थितत्वमित्याह—तथेति । तद्वामित्यादिमन्त्रस्य पूर्वार्धं व्याख्यायाऽऽख्यायिकायाः स्तुत्यर्थत्वविरोधं

"तन्यतुर्न" अर्थात् पर्जन्य के समान है । यह नकार का प्रयोग वेद मे अनन्तर रहने के कारण उपचारमात्र मे उपमा के लिए होता है, प्रतिषेध अर्थ मे प्रयुक्त नही होता । जिस प्रकार "अश्व न" का अर्थ अश्व के समान है, इसी प्रकार यहाँ अर्थ है । पर्जन्य के समान वृष्टि को यानी जिस प्रकार मेघ[4] गर्जनादि शब्दो के द्वारा वृष्टि को ज्ञापन करता है, उसी प्रकार मैं भी तुम दोनो के क्रूर कर्मों को प्रकाशित करता हूँ—ऐसा इसका सम्बन्ध है । इस पर पूर्ववादी आक्षेप करता है—ये दो मन्त्र अश्विनीकुमारो की स्तुति के लिए कैसे हो सकते हैं, ये तो उनकी निन्दा को बतला रहे हैं । इस पर सिद्धान्ती समाधान देता है—ऐसा कहने मे कोई दोष नही है । यह तो स्तुति ही है, निन्दापरक वचन नही है, क्योंकि ऐसा क्रूरकर्म करने पर भी तुम्हारा रोममात्र भी बिगड़ नही सकता, न हो कोई दूसरी क्षति ही हो सकती है, इस-

१. न इवेति च्छेदः । २. अनन्तरम् । ३. गौणः । ४. मेघः । ५. ज्ञापयति । ६. एताविति—अश्विनौ, मन्त्राविति वार्थः । आद्ये स्तुताविति प्रथमा चरमे सप्तमीति । ७. लोकख्याताः । ८. अन्वयवाक्ये न पदादुपरिष्टात्पठ्यते—यथात्र वृष्टिं नेति । ९. अश्व नेति वाक्यमेव । १०. विवृणोति । ११. विद्यास्तुतिद्वारेति—यदि हि विद्यास्तुत्या स्यात्तदा तद्वन्तावेतावपि स्तुत्यावेव भवेताम् न हि स्तुत्यविद्याशालिनौ निन्दास्पदं भवतः । इमौ तु स्पष्टं निन्द्येते, तथा च विद्यास्तुत्यर्थमाख्यायिकेति किं तेन सङ्गतमिति भावः । १२. विद्यास्तुतिद्वारेत्यर्थः । १३. न्यायतोल्योः । १४. स्तुतिनिन्दयोः । १५ स्तुत्यादावेव नियतत्वम् ।

[1]इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । आथर्वणायाश्विना[2] दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतम् । स वां मधु [3]प्रवोचदृताय[4]न्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥ १७ ॥

उस इस मधुविज्ञान को दध्यङ्ङाथर्वण ऋषि ने अश्विनीकुमारों से कहा था। इसे देखते हुए मन्त्रद्रष्टा ऋषि ने कहा—हे अश्विनीकुमारो! तुम दोनों ने दध्यङ्ङाथर्वण के लिए अश्व का शिर शिर लाया और उस ऋषि ने सत्य का पालन करते हुए तुम्हें सूर्यसंबन्धी मधु का विज्ञान कराया एवं हे शत्रु-हिंसक! जो आत्मज्ञानसंबन्धी गोपनीय मधुविज्ञान था (वह भी तुम्हें ऋषि ने बतला दिया था) ॥१७॥

प्रसिद्धा। दध्यङ्नामाऽऽथर्वणः। हेत्यनर्थको निपातः। यन्मधु [5]कक्ष्यमात्मज्ञानलक्षणमाथर्वणो वा युवाभ्यामश्वस्य शीर्ष्णा शिरसा प्रयदीमुवाच यत्प्रोवाच मधु। ईमित्यनर्थको निपातः ॥ १६ ॥

[7]इदं वै तन्मधिवत्यादि पूर्ववन्मन्त्रान्तर[8]प्रदर्शनार्थम्। [9]तथाऽन्यो मन्त्रस्तामेवाऽऽख्या-

चोद्धृत्योत्तरार्धं व्याचष्टे—दध्यङ्नामेति। यत्कक्ष्य ज्ञानाख्य मधु तदाथर्वणो युवाभ्यामश्वस्य शिरसा प्रोवाच। यत्त्वासौ मधु युवाभ्यामुक्तवांस्तदहमाविष्कृणोमीति सबन्ध ॥१६॥

[9]समानार्थत्वे किमिति पुनरुच्यते तत्राऽऽह—मन्त्रान्तरेति। तुल्यार्थस्य ब्राह्मणस्य तात्पर्यमाह

लिये ये दोनों मन्त्र स्तुतिपरक ही हैं। क्योंकि कहीं-कहीं लोकरूपात पुरुष प्रशंसा को निन्दा के रूप में देखते हैं और इस प्रकार प्रशंसारूपा निन्दा भी लोक में प्रसिद्ध है। "दध्यङ् आथर्वण" का अर्थ है, दध्यङ् नाम वाला आथर्वण। 'ह' यह (वाक्यालंकार के लिए) निरर्थक निपात है। "यन्मधु" अर्थात् जिस आत्मज्ञानरूप गोप्य मधुविद्या का "वाम्" अर्थात् तुम दोनों को "अश्वस्य शीर्ष्णा" अर्थात् अश्व के शिर से "प्र यदीमुवाच" अर्थात् उपदेश किया था। मन्त्र में "ईम्" यह निरर्थक निपात है ॥१६॥

"इदं वै तन्मधु" इत्यादि श्रुतिमन्त्र भी पूर्ववत् दूसरे मन्त्र के प्रस्ताव के लिए है। पूर्वमन्त्र की तरह दूसरे मन्त्र ने भी उसी आख्यायिका का अनुसरण किया। आथर्वण दध्यङ् नामा है, आथर्वण तो

१ इदं वा इति। यत्प्रवर्ग्यप्रकरणे सूचित नाविष्कृत तदेवेद मधु, इह इयं पृथिवीत्यादि नाऽनन्तरनिर्दिष्ट दध्यङ्नामाऽथर्वणो योऽत्रापत्यमाथर्वणोऽश्विभ्या देवभिषग्भ्यामुवाचोक्तवानित्यर्थः। तत्—वृत्त कर्म। एतत्—हविर्हृदष्टम्। ऋषिर्मन्त्रस्तद्द्रष्टा वा पश्यन् उपलभमानोऽवोचत् प्रत्यायामासेत्यर्थः। २ हे अश्विनौ। ३ अश्वशिरसेति शेषम्। ४ सत्यभाव आर्षं। ५ गोप्यम्। ६ आविष्कृणोमीति प्रतिज्ञाते क्रूरकर्म मधुनी, के त इत्याकाङ्क्षायामिद वै त मध्वित्याद्युक्तार्थब्राह्मणानुवादपूर्वकं मन्त्रमाह—इदमिति। ७ प्रस्तावार्थम्। ८ पूर्वमन्त्रवत्। ९ पूर्वब्राह्मणेनैतद्ब्राह्मणस्य तुल्यार्थत्वे।

यिकामनुसरति स्म । 'आथर्वणो' दध्यङ्नामाऽऽथर्वणोऽन्यो विद्यत इत्यतो विशिनष्टि दध्यङ्नामाऽऽथर्वणस्तस्मै दधीच आथर्वणाय हेऽश्विनाविति मन्त्रदृशो वचनम् । अश्व्यमश्वस्य स्वभूतं शिरो ब्राह्मणस्य शिरसि च्छिन्नेऽश्वस्य शिरश्छित्त्वे'दृशमतिक्रूर कर्म कृत्वाऽश्व्यं शिरो ब्राह्मणं प्रत्यैरयतं गमितवन्तौ युवाम् । स चाऽऽथर्वणो वा युवाभ्यां तन्मधु प्रवोचद्यत्पूर्वं प्रतिज्ञातं वक्ष्यामीति । स किमर्थमेव जीवितसंदेहमारुह्य प्रावोचदित्युच्यते । ऋतायन्यत्पूर्वं प्रतिज्ञातं सत्यं तत्परिपालयितुमिच्छन् । जीवितादपि हि सत्यधर्मपरिपालना गुरुतरेत्येतस्य' लिङ्गमेतत्' । किं तन्मधु प्रावोचदित्युच्यते । त्वाष्ट्रं त्वष्टाऽऽदित्यस्तस्य 'सबन्धि 'यज्ञस्य शिरश्छिन्नं त्वष्टाऽभव''त्तत्प्रतिसंधानार्थं प्रवर्ग्यं कर्म । ''तत्र प्रवर्ग्यकर्माङ्गभूतं यद्विज्ञानं'' तत्त्वाष्ट्रं मधु यज्ञस्य शिरश्छेदनप्रतिसंधानादिविषयं ''दर्शन

—तयेति । विशेषणकृत्यं दर्शयन्व्याकरोति—दध्यङनामेति । प्रथममश्व्यमित्यादि'', पदार्थं''वचनमश्वस्येत्यादौ'' छित्त्वेत्यस्य'' कर्मोक्तिरश्व्यं शिर इत्यत्र त्वन्वयार्थमुक्तमिति विभाग । ''प्रेक्षापूर्वकारिणामीदृशी प्रवृत्तिरयुक्तेति शङ्कित्वा समाधत्ते—स किमर्थमिति । ऋतायन्नित्यत्रार्थसिद्ध''मर्थं कथयति जीवितादपीति । ''यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रतिधत्तम्'' इत्यादिश्रुत्यन्तरमाश्रित्याऽऽह—यज्ञस्येत्यादिना । प्रवर्ग्यकर्मण्येव प्रवृत्तेऽपि प्रकृते ''विज्ञाने किमायातं तदाह—तत्रेति । उक्तमेव संगृह्णाति—यज्ञस्येति । यद्ययोक्तं दर्शनं तत्त्वाष्ट्रं मधु यच्च

दूसरा भी हो जाता है इसलिए आथर्वण के साथ दध्यङ् विशेषण लगाया जाता है। उस दधीच आथर्वण के लिए 'हे अश्विनौ'' यह मन्त्रद्रष्टा का सम्बोधन है। 'अश्व्यम्'' अर्थात् अश्व के निजी शिर को, ब्राह्मण के शिर में, एवं ब्राह्मण के शिर को अलगकर अश्व के शिर में, इस प्रकार (दो शिर छेदनरूप) अति क्रूरकर्म करके अश्व के शिर से 'प्रत्यैरयतम्'' यानी ब्राह्मण के पास तुम दोनों ने पहुँचाया। एवं ''स'' अर्थात् उस आथर्वण ने ''वा'' यानी तुम दोनों को 'मधु प्रवोचत' (अश्व के शिर से) उसी मधुविद्या का उपदेश दिया, जिसको कहने की पहल प्रतिज्ञा की थी। उसने इस प्रकार प्राणों को खतरे में डालकर उसका उपदेश क्यों किया? इस पर श्रुति कहती है—''ऋतायन्'' अर्थात् पूर्वप्रतिज्ञात सत्य को पालन करने के लिए। इससे यह अर्थ प्रकाशित होता है कि सत्यधर्म का पालन प्राणों से श्रेष्ठ है। यह मधु क्या है, जिसका उपदेश दिया? इस पर कहा जाता है—'त्वाष्ट्रम्'' तद्धितान्त शब्द में त्वष्टा आदित्य का नाम है। आदित्यविषयक उपासना से यज्ञपुरुष का अलग किया हुआ शिर ही त्वष्टा हो गया, उस त्वष्टारूप शिर को प्रतिस्थापित करने के लिए प्रवर्ग्यकर्म है। वहाँ प्रवर्ग्यकर्माङ्गभूत जो

१ अथर्वण इति पाठ । २ आथर्वण इति—दध्यङनामाऽऽथर्वण एक तदन्योऽपि कश्चिदाथर्वणोऽस्तीति तद्व्यवच्छेदाय विशिनष्टि—दध्यङ्नामेति योजना । ३ द्वि शिरश्छेदलक्षणम् । ४ प्राणसन्देहमापद्य सन् । ५ अश्वस्य । ६ प्रापकम् । ७ ऋतायन्निति वाक्यम् । ८ आदित्यविषयकं विज्ञानमुपासनमिति यावत् । ९ यज्ञपुरुषस्य 'यज्ञो वै विष्णुः' । १० त्वष्टृरूपशिर प्रतिसंधानार्थमिति भाव । ११ अवतरणोक्तार्थमेतत् । १२ उपासनम् । १३ उपास्ति । १४ इत्यादिवाक्यघटक शिर पदमिति यावत् । १५ कथनम् । १६ वाक्ये । १७ शिर इति । १८ धी । १९ आर्थिकम् । २० त्वाष्ट्रमधुनि ।

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः**

उस इस मधुविज्ञान को दध्यङ्ङार्वण ने अश्विनीकुमारो से कहा था। इसे देखते हुए ऋषि से कहा है—परमात्मा ने दो पैरो वाले और चार पैरो वाले शरीर बनाये। पहले वह पुरुष पक्षी (लिङ्ग-शरीर) होकर स्थूल शरीरो मे प्रविष्ट हो गया। इसलिये वह यह परमेश्वर सभी शरीरो मे निवास

---

त्वाष्ट्रं यन्मधु। हे दस्रौ दस्राविति परबलानामुपक्षपयितारौ शत्रूणा वा[1] हिसितारौ। अपि च न केवलं त्वाष्ट्रमेव मधु कर्मसंबन्धि युवाभ्यामवोचदपि च कक्ष्यं गोप्यं रहस्यं परमात्मसबन्धि [2]यद्विज्ञानं मधु मधुब्राह्मणेनोक्तमध्यायद्वयप्रकाशित तच्च वां युवाभ्या अवोचदित्यनुवर्तते ॥ १७ ॥

इद वै तन्मध्विति पूर्ववत्। उक्तौ द्वौ मन्त्रौ प्रवर्ग्यसंबन्ध्याख्यायिकोपसंहर्तारौ। ब्रह्म-द्वयोः प्रवर्ग्यकर्मार्थयोरध्याययोरर्थ[?] आख्यायिकाभूताभ्या मन्त्राभ्या प्रकाशितः। ब्रह्म-

---

तन्मधु तत्प्रवोचविति सबन्ध । अध्यायद्वयप्रकाशित तृतीयचतुर्थाभ्यामध्यायाभ्या प्रकटितमिति यावत् ॥१७॥

उक्तमन्त्राभ्या वक्ष्यमाणमन्त्र्योर[?]पुनरुक्तस्वाथवत्त्व वक्तु वृत्त कीर्तयति—उक्ताविति । [?]आख्यायिकाविशेषणप्राप्त [?]सकोच परिहरति—द्वयोरिति । उत्तरमन्त्रद्वयप्रवृत्ति प्रतिजानीते—

---

उपासना है, वही त्वाष्ट्र मधु है। यज्ञपुरुष के शिरच्छेदन और प्रतिस्थापनादिविषयक जो उपासना है, वही त्वाष्ट्र मधु है। दस्रौ अर्थात् हे दस्युओ! यहाँ दस्रौ से तात्पर्य है—परपक्ष के शत्रुओ के बल को क्षीण करने वाले हे हिंसको! इसके अतिरिक्त उन्होने केवल कर्मसम्बन्धी त्वाष्ट्र मधु का ही उपदेश नही किया, अपितु 'कक्ष्यम्' यानी जो परब्रह्मविषयक गोपनीय रहस्यमय प्रत्यग्याथात्म्यदर्शन मधुविद्या है, उसी का मधु ब्राह्मण द्वारा उक्त दो अध्यायो मे प्रकाशित किया गया, उसी का "वाम्" अर्थात् तुम दोनो का उपदेश किया। वा के पश्चात् 'प्रवोचत्' क्रिया की अनुवृत्ति इसी श्रुतिवाक्य से ग्रहण हो जाती है ॥१७॥

"इद वै तन्मधु" इस श्रुति का अर्थ पूर्वमन्त्रप्रतिपादित भाष्य के अनुसार समझ लेना चाहिये। उपरोक्त दो श्रुतिमन्त्र प्रवर्ग्यसम्बन्धी आख्यायिकाभूत मन्त्रो का उपसहार करने वाले हैं। ब्रह्मविद्या-सम्बन्धी तृतीय और चतुर्थ दो अध्यायो का अर्थ आगे के दो श्रुतिमन्त्रो द्वारा प्रकाशित करना, है इस-

---

१ यदाना वेत्यपि द्रष्टव्यम् । २ प्रत्यग्याथात्म्यदर्शनम् । ३ त्वाष्ट्रमध्वाख्य । ४ अपुनरुक्तत्वेन सार्थक्यम् । ५ आख्यायिकारूपविशेषणमिति यावत् । ६ आख्यायिकामात्रोपसहारकत्वरूपम् ।

पुरुष आविशदिति । स वा अयं पुरुषः सर्वासु पूर्षु पूरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृतम् ॥ १८ ॥

करने के कारण पुरुष कहलाता है। संसार में ऐसा कुछ भी नहीं है जो उस पुरुष से आच्छादित न हो तथा ऐसा भी कुछ नहीं है जिसमें परमेश्वर का प्रवेश न हुआ हो, इससे परमात्मा की सर्वव्यापकता स्पष्ट हो जाती है ॥१८॥

---

विद्यार्थयोस्त्व[1]ध्याययोरर्थं उत्तराभ्यामृग्भ्यां प्रकाशयितव्य इत्यतः [2]प्रवर्तते । [3]यत्कक्ष्यं च मधूक्तवानाथर्वणो युवाभ्यामित्युक्तम् । किं पुनस्तन्मध्वित्युच्यते । पुरश्चक्रे पुरः पुराणि शरीराणि यत इयमव्याकृतव्याकरणप्रक्रिया [4]स परमेश्वरो नामरूपे अव्याकृते व्याकुर्वाणः प्रथमं[5] भूरादींल्लोकान्सृष्ट्वा चक्रे कृतवान्द्विपदो द्विपादुपलक्षितानि मनुष्यशरीराणि पक्षिशरीराणि । तथा पुरः शरीराणि चक्रे चतुष्पदश्चतुष्पादुपलक्षितानि पशुशरीराणि । पुरः पुरस्तात्स ईश्वरः पक्षी लिङ्गशरीरं भूत्वा पुरः शरीराणि पुरुष [6]आविशदित्यस्यार्थ-[7]माचष्टे श्रुतिः । स वा अयं पुरुषः सर्वासु पूर्षु सर्वशरीरेषु पुरिशयः पुरि शेत इति

---

ब्रह्मे[8]ति । सप्रत्य[9]वान्तरसगतिमाह—यत्कक्ष्य चेति । हिरण्यकर्तृकं शरीरनिर्माणमत्र नोच्यते किंतु प्रकरणबलादीश्वरकर्तृकमित्याह—यत इति । शरीरसृष्ट्यपेक्षया लोकसृष्टिप्राथम्यम् । पुरस्तादेहसृष्ट्यनन्तर प्रवेशात्पूर्वमिति यावत् । [10]स हि सर्वेषु शरीरेषु वर्तमानः पुरि शेत इति व्युत्पत्त्या पुरिशयः

---

लिए "इद वै—" यहाँ से श्रुति मन्त्रद्वय का प्रतिपादन करती है। यह तो कह ही चुके हैं कि आथर्वण ने तुम दोनो से त्वाष्ट्र ज्ञान (मधुविद्या) को गोपनीय ज्ञान के प्रति हेतुत्व सम्पादन किया था। तो फिर वह मधुविद्या क्या है ? इस पर कहा जाता है। "पुरश्चक्रे" में पुर शब्द शरीरवाचक है क्योंकि यह अव्याकृत ब्रह्म के व्याकृत होने की प्रक्रिया है। इसलिये उस परमेश्वर ने, अव्याकृत नाम-रूपों को व्याकृत करते हुए शरीर की सृष्टि से पूर्व (भूतोत्पत्ति क्रम से) पृथिवी आदि लोकों को उत्पन्न करके "द्विपद" अर्थात् दो पैरों से उपलक्षित मनुष्य और पक्षी शरीरों को "चक्रे" अर्थात् उत्पन्न किया। उसके बाद उसने "चतुष्पद" अर्थात् चार पैरों से उपलक्षित पशु के शरीरों को रचा। "पुर" अर्थात् पहले वह ईश्वर पक्षी लिङ्गशरीर होकर "पुर" यानी शरीरों में पुरुष-रूप से प्रविष्ट हो गया। इसी वाक्य का अर्थ श्रुति स्पष्ट करती है। वह यह पुरुष "सर्वासु पूर्षु" सब शरीरों में पुरिशय है, इसलिए पुरुष कहा जाता है। 'पुरि' यानी शरीरों में शयन करने से पुरिशय नाम

---

१. तृतीयचतुर्थयो । २ प्रवर्तत इति—इद वा इत्याद्युक्तार्थब्राह्मणपूर्वक मन्त्रद्वयमिति शेष । ३. यत्कक्ष्य चेति—त्वाष्ट्रज्ञानस्य कक्ष्यज्ञान प्रति हेतुत्व द्योतयितु चकारस्तथा च हेतुहेतुमद्भावस्तयोरवान्तरसङ्गतिरिति ध्वनितम् । ४ अत । ५ शरीरसृष्टे. प्राक् भूतोत्पत्तिक्रमेणेति बोध्यम् । ६ जलचन्द्रवत् । ७ कथमीश्वरस्य पुरुषत्वमित्यपेक्षायाम् । ८. प्राच्याभ्यामुदीच्यमन्त्रयो. । ९. परमात्मा ।

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच ।
तदेतदृषिः पश्यन्नवोचत् । रूपꣳ रूपं
प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।

उस इस मधु को दध्यङ्ङाथर्वण ने अश्विनीकुमारो से कहा। यह देखते हुए मन्त्रद्रष्टा ऋषि ने कहा—वह परमात्मा रूप रूप के प्रतिरूप हो गया। अपना वह रूप अभिव्यक्त करने के लिए वही परमेश्वर माया से अनेक रूप वाला दीखता है। शरीररूप रथ में इसके इन्द्रिय घोडे सौ और दश हैं।

पुरिशयः सन्पुरुष इत्युच्यते। नैनेनानेन[1] किंचन [2]किंचिदप्यनावृतमनाच्छादितम् । तथा नैनेन किञ्चनासंवृतमन्तर[3]ननुप्रवेशितं बाह्यभूतेना[4]न्तर्भूतेन च नानावृतम्[5]। [6]एवं स [7]एव नामरूपात्मनाऽन्तर्बहिर्भावेन कार्यकरणरूपेण [8]व्यवस्थितः। पुरश्चक्र इत्यादिमन्त्रः संक्षेपत आत्मैकत्वमाचष्ट [9]इत्यर्थः ॥१८॥

इदं वै तन्मध्वित्यादि पूर्ववत्। रूपं रूपं प्रतिरूपो बभूव । रूपं रूपं प्रति प्रति-

सन्पुरुषो भवतीत्युक्त्वा "प्रकारान्तरेण" पुरुषत्वं व्युत्पादयति—नेत्यादिना। वाक्यद्वयस्यैकार्थत्वमाशङ्क्य सर्वं जगदोतप्रोतत्वेनाऽऽत्मव्याप्तमित्यर्थविशेषमाश्रित्याऽऽह—बाह्यभूतेनेति। "पूर्णत्वे मत्यात्मनः 'दिव्यो ह्यमूर्तः'" इत्यादिश्रुतिमाश्रित्य फलितमाह—एवमिति । मन्त्रब्राह्मणयोर"र्थवैमत्यमाशङ्क्याऽऽह—पुर इति ॥ १८ ॥

"प्राचीनमेव ब्राह्मणमनूद्य मन्त्रान्तरमवतारयति—इदमिति । प्रतिशब्द"स्तन्त्रेणोच्चरित ।

पडा। "नैनेन किंचनासंवृतम्" "नैनेन किंचनानावृत" यानी इस आत्मा से कुछ भी वस्तु अव्याप्त नहीं है। यानी इस से भिन्न कोई वस्तु नहीं है, जो बाह्यभूत और अन्तर्भूत आत्मा के द्वारा अनुप्रवेशित न हो और व्याप्त न हो। उक्त रीति से (आत्मा की पूर्णता सिद्ध होने पर) वह आत्मा ही नामरूपात्मक अन्तर्बाह्य भाव से कार्य कारणरूप से स्थित है (उससे भिन्न अणुमात्र भी नहीं है)। "पुरश्चक्रे" इत्यादिमन्त्र आत्मैकत्व को संक्षेप से निरूपण करता है। इस प्रकार पुरुषशब्द का अर्थ वर्णित किया गया ॥१८॥

"इद वै तन्मधु" इत्यादि श्रुतिवाक्य का अर्थ पूर्वमन्त्र के अर्थ समान है। "रूप रूप प्रतिरूपो

१ आत्मना । २. वस्तु अव्याप्तम् ओततन्तुभिरिव वस्त्रम् । ३ प्रोतैरिव वास । ४. आत्मना । ५. अव्याप्तम् । ६ एवमिति—उक्तरीत्याऽऽत्मन पूर्णत्वे सतीत्यर्थ । ७ आत्मैव । ८ व्यवस्थित इति—न ततोऽन्यदणुमात्रमप्यस्तीति न द्वैतापत्तिशङ्कालुकोऽपीति भावः । ९ इति पुरुषशब्दार्थो वर्णित इत्यर्थ. । १०. आधाराधेयनिर्देशाद्द्वैतापत्तिमाशङ्क्य प्रकारान्तरानुसरणम् । ११. प्रकारान्तरेणेति—पूर्वाणि सर्वं स्वात्मनेति व्युत्पत्त्येत्यर्थ । तथा च वार्तिके—"पूर्णत्वात्पुरुष सोऽयं ब्रह्मैक पुरुषस्तत." ॥१२२॥ इति । ब्रह्म पूर्णं अथ पुरुषस्य तत्त्वमत आह—ब्रह्मेति । १२. एतद्वाक्यद्वयेन । १३. पुरुष "स बाह्याभ्यन्तरो ह्यज"। १४. विरोध विसवाद वैलक्षण्यमिति वा । १५. त्रिपूर्वमुक्तमिद वा इत्यादि बा० । १६. अनेकार्थतात्पर्येण ।

इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति । अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च [1]तदेतद्ब्रह्मा-[2]पूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म [3]सर्वा-नुभूरि[4]त्यनुशासनम् ॥ १९ ॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये

पञ्चमं ब्राह्मणम् ॥ ५ ॥

यह परमात्मा ही इन्द्रियरूप अश्व भी यही दश सहस्र, अनेक एव अनन्त हैं। वह यह ब्रह्म कारणरहित, कार्यरहित, विजातीय द्रव्य, ससर्गशून्य और अबाह्य है। यह आत्मा ही सबका अनुभव करने वाला परमात्मा है। बस यही सम्पूर्ण वेदान्तो का उपदेश है ॥१९॥

॥ इति पञ्चम ब्राह्मणम् ॥

रूपो रूपान्तरं बभूवेत्यर्थः । प्रतिरूपो[5]ऽनुरूपो वा यादृक्[6]संस्थानौ मातापितरौ तत्संस्थानस्तदनुरूप एव पुत्रो जायते । न हि चतुष्पदो द्विपाज्जायते द्विपदो वा चतुष्पाद् । स एव हि परमेश्वरो नामरूपे व्याकुर्वाणो रूपं रूपं प्रतिरूपो बभूव । किमर्थं पुनः [7]प्रतिरूपमा-

रूप रूपमु[8]पाधिभेदं प्रति प्रतिरूपो रूपान्तरं प्रतिबिम्बं बभूवेत्येतत्प्रतिरूपो बभूवेत्यत्र विवक्षितमिति योजना । अनुरूपो वेत्युक्तं विवृणोति—यादृगित्यादिना । उक्तमर्थमनुभवारूढं करोति—न हीति । रूपान्तरभवने कर्त्रन्तरं वारयति—स एव हीति । प्रतिख्यापनाय शास्त्राचार्यादिभेदेन तत्त्वप्रकाशना-

बभूव" अर्थात् देह-देह के प्रति (यानी उपाधिभेद के प्रति प्रतिबिम्ब) रूपान्तर हो गया। (अवच्छेद पक्ष को प्रदर्शित किया जाता है—) "प्रतिरूप." यानी अनुरूप हो गया। (लोकव्यवहार मे) जिस प्रकार की आकृति वाले माता-पिता होते है, उसी आकृति के अनुरूप ही पुत्र उत्पन्न होता है। ऐसा नही हुआ करता कि चतुष्पाद उपलक्षित पशुशरीरो से द्विपाद उपलक्षित मनुष्यशरीरो की उत्पत्ति हो जाय अथवा मनुष्यो से पशुओ की उत्पत्ति हो जाय। वह परमेश्वर ही नाम-रूप से व्याकृत होकर

१ इदानीमात्मन पारमार्थिक स्वरूपमाह—तदेतदिति । अपूर्वादिरूप यद्ब्रह्म तदेवैतद् समस्त जगत् न तद्व्यतिरेकेणास्तीत्यर्थ । २ किं तद्ब्रह्म आत्मनोऽर्थान्तर नेत्याह—अयमिति । अय प्रत्यगात्मैव ब्रह्मेति न ब्रह्म परोक्ष ब्रह्माभेदाच्च न प्रतीच ससारित्वमित्यभिप्राय । ३. कोऽसौ प्रत्यगात्मा तत्राऽऽह—सर्वानुभूरिति । सर्वरूपाऽनुभवरूपश्चेत्यर्थ । तदुक्त वार्तिके—"सर्वोऽनुभव एवायमत सर्वानुभू पर । कार्त्स्न्यात्सर्वो भवेदेष चिन्मात्रत्वात्तथाऽनुभू" ॥१४५॥ इति । कार्त्स्न्यं पूर्णत्वम् । ४ इत्यनुशासनमिति—"इतीत्युक्तपरामर्शो वेदाज्ञा चानुशासनम् । कर्तव्यमेतद्विज्ञानमिति वेदानुशासनम् ॥ अस्यातिलङ्घने दोष ससारानर्थसङ्कुलि । कुर्वतश्च महाँल्लाभ आत्मन कृतकृत्यतेति" ॥१४६-१४७॥ ५ अवच्छेदपक्ष दर्शयति—अन्विति । ६ सस्थानमाकृति. । ७ प्रत्युपाधिरूपमिति यावत् । ८ देह देह प्रतीति यावत् ।

गमनं तस्येत्युच्यते । तदस्याऽऽत्मनो रूपं प्रतिचक्षणाय प्रतिख्यापनाय । यदि हि नाम-रूपे न व्याक्रियेते तदाऽस्याऽऽत्मनो निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत । यदा पुनः कार्यकरणात्मना नामरूपे व्याकृते भवतस्तदाऽस्य रूपं प्रतिख्यायेत । इन्द्रः परमेश्वरो मायाभिः प्रज्ञाभिर्नामरूपकृतमिथ्याभिमानैर्वा न तु परमार्थतः पुरुरूपो बहुरूप ईयते गम्यते एकरूप एव प्रज्ञानघनः सन्नविद्याप्रज्ञाभिः । कस्मात्पुनः कारणात्" । युक्ता रथ इव वाजिनः स्वविषयप्रकाशनाय हि यस्मादस्य" हरयो हरणादिन्द्रियाणि शता "शतानि

---

येत्यर्थः । "तदेव व्यतिरेकेणान्वयेन च स्फुटयति—यदि हीत्यादिना । मायाभिः प्रज्ञाभिरिति "परपक्ष-मुक्त्वा स्वपक्षमाह—मायाभिरिति । मिथ्याधीहेतुभूतानाद्यनिर्वाच्य"दण्डायमानाज्ञानवशादेव बहुरूपो भाति । प्रकारभेदात्तु "बहूक्तिरिति । वाक्यार्थमाह—एकरूप एवेति । अविद्याप्रज्ञाभिर्बहुरूपो गम्यत इति पूर्वेण संबन्धः । परस्य बहुरूपत्वे निमित्तं प्रश्नपूर्वकं निवेदयति—कस्मादित्यादिना । यथा रथे युक्ता वाजिनो रथिनं "स्वगोचरं देशं प्रापयितुं प्रवर्तन्ते तथाऽस्य "प्रतीचो रथस्थानीये शरीरे युक्ता "हरयः स्वविषयप्रकाशनाय यस्मात्प्रवर्तन्ते तस्मादिन्द्रियाणां तद्विषयाणां च बहुलत्वा"त्तत्तद्रूपैरेव बहुरूपो भातीति योजना । हरिशब्दस्येन्द्रियेषु प्रवृत्तौ निमित्तमाह—हरणादिति । प्रतीचो विषया-

---

रूप-रूप के अनुरूप हो गया । उसमें प्रत्युपाधि का आगम किसलिये हुआ, उसे बतलाया जाता है "तदस्य" अर्थात् उस प्रतिबिम्बात्मक आत्मा के रूप को "प्रतिचक्षणाय" यानी शास्त्र-आचार्यादि द्वारा प्रख्यापन करने के लिए (उसका आगम हुआ) । क्योंकि यदि नाम और रूपों की व्याकृति न होती, तब इस आत्मा का प्रज्ञानघनाख्य निरुपाधिकरूप प्रकाशित न हो पाता । किन्तु जिस समय कार्यकरणभाव से नामरूप व्याकृत होते है, तभी इस का रूप प्रकाशित होता है । "इन्द्र" यानी (नाना रूपों का उपादान असङ्गात्मा) परमेश्वर "मायाभिः" अर्थात् उपाधिभूत प्रज्ञा या नाम-रूप कृत मिथ्याभिमान से 'पुरुरूपः' बहुत रूपों वाला 'ईयते' प्रतीत होता है; परमार्थतः ऐसा नही होता । अर्थात् प्रज्ञानघन एकरूप होता हुआ भी अनृतबुद्धियों के द्वारा बहुत रूपों वाला जाना जाता है । परन्तु आखिर पुरुषों का बहुत्व किस-लिये होता है । "हि" अर्थात् क्योंकि, अपने विषय को प्रकाशन करने के लिए रथ मे जुते हुए घोड़ों के समान इस शरीर मे 'शता' अर्थात् सैकड़ो हजारो "दश च" अर्थात् प्राणिभेद बाहुल्य से अनन्त इन्द्रियाँ है । इन्द्रियों का नाम 'हरि' क्यों पड़ा ? क्योंकि वे विषयों की ओर चित्त हर लेती हैं । इसलिए इन्द्रियों के विषय की बहुलता होने के कारण अपने विषयों को प्रकाशित करने मे ही इन्द्रियाँ प्रवृत्त हैं, आत्मा को

---

१. प्रतिबिम्बात्मकम् । २. तदस्येत्यादि—अन्यथाऽविद्यापटलावृतस्य स्वरूप(याथात्म्य)प्रकाशानुपपत्तेरिति भावः तद्रूपमित्यन्वयः । ३. शास्त्राचार्यादिना प्रख्यापनाय । ४. प्रकाश्येत । ५. असङ्गात्मनो बहुभवनोपादानमाचष्टे—इन्द्र इति । ६. प्रज्ञाभिरिति—उपाधिभूताभ्यो धीभ्य इत्यर्थः । ७. इतोऽनन्तरम् मायाभिरिति स्खलितः पाठो द्रष्टव्यः । ८. ज्ञायते प्रतीयते । ९. अविद्यानृतबुद्धिभिः । १०. पुरो बहुत्वम् । ११. शरीरे । १२. दशविंशतिः शतानि सहस्राणीत्येवमसङ्ख्यत्वे तात्पर्यम् । १३. उक्तप्रकारादनमेव । १४. मतृं प्रवञ्चपक्षम् । १५. लम्बायमाना—अविवेकिजनयारम्पर्येणानुभूयमाना । १६. मायाया एकत्वेऽपि तच्छक्तिरूपाणां विक्षेपाणां बाहुल्यात्तत्र बहूत्वोक्तिः । १७. स्वगन्तव्यम् । १८. रथिस्थानीयस्य । १९. इन्द्रियाणि । २०. तत्तत्तादात्म्यापत्त्येति यावत् ।

